# अथाव्ययीभावसमासप्रकरणम् । १७ ।

६४७ समर्थः पदविधिः । ( २-१-१ ) पदसंबन्धी यो विधिः स

अथ समासाः । तदेवं विभक्त्यर्थं निरूप्य तदाश्रितसमासान्निरूपयिष्यन् तदुपोद्घातत्वेनाह—समर्थः पदविधिः । विधीयते इति विधिः—कार्यम् । पदस्य विधिः पदविधिरिति शेषषष्ठ्या समासः । तदाह—पदसंबन्धी यो विधिरिति । समर्थाश्रित इति । सूत्रे समर्थशब्दः समर्थाश्रिते लाक्षणिक इति भावः । सामर्थ्यं द्विविधम्—व्यपेक्षालक्षणम् एकार्थीभावलक्षणं च न.। तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परान्वयः तद् व्यपेक्षाभिधं सामर्थ्यम्, विशिष्टा अपेक्षा व्यपेक्षेति व्युत्पत्तेः, संबद्धार्थः समर्थ इति व्युत्पत्तेश्च । इदं च राज्ञः पुरुष इत्यादिवाक्य एव भवति । तत्र च एकैकस्य शब्दस्य यो यः संनिहितो योग्यश्च तेन अन्वयो भवति । यथा राज्ञः पुरुषोऽश्वश्चेति, राज्ञो देवदत्तस्य च पुरुष इति, ऋद्ध-

समर्थः पदविधिः । सामर्थ्यं च द्विविध व्यपेक्षालक्षणमेकार्थीभावलक्षणं चेति । तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परसंबन्धः सा व्यपेक्षा । इव वाक्ये राज्ञः पुरुष इत्यादौ । तत्र ह्यपेक्षायां सत्यां यो यः संनिहितो योग्यश्च तेन तेन संबन्धोऽभ्युपेयते । यथा राज्ञः पुरुषोऽश्वश्च । राज्ञो देवदत्तस्य च पुरुष इति । एकार्थीभावस्तु राजपुरुष इत्यादिवृत्तावेव । स च प्रक्रियादशायां पृथगर्थत्वेन प्रथमप्रतीतस्य विशिष्टैकार्थत्वरूपः । अत एव राजपुरुष इत्यत्र राज्ञि ऋद्धस्येति विशेषणं नान्वेति पदार्थैकदेशत्वात् । न चैवं देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः, तत्रापि देवदत्तोत्तरषष्ठ्यर्थस्य गुरुणान्वयादिति वाच्यम्, देवदत्तस्य प्रधानभूतकुलेनैवान्वयात् । संबन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः, न तु तदितरः । उक्तं च 'समुदायेन संबन्धो येषां गुरुकुलादिना । संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह' इति । यद्वा-सबन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः । उक्तं च—'संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते' इति । नन्वेवं राज्ञोऽपि नित्यसापेक्षत्वादेकदेशत्वेऽपि ऋद्धस्येति विशेषणेनान्वयोऽस्तु । मैवम्, राज्ञ ईशितुरीशितव्यं प्रति साकाङ्क्षत्वेऽपि ऋद्धं प्रत्यनाकाङ्क्षत्वात् । ननु वाक्ये क्लृप्तावयवशक्त्योपपत्तौ विशिष्टार्थविषयकशक्त्यन्तरमेव मास्तु । सत्यम्—'बहूनां वृत्तिधर्माणां वचनैरेव साधने । स्यान्महद्गौरवं तस्मादेकार्थीभाव आस्थितः ।। चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम । कर्तव्यं ते, न्यायसिद्धं त्वस्माकं तदिति स्थितम् । तेहि—धवखदिराविति वस्त्यैव क्रोडीकृतार्थत्वाच्चकारो न प्रयुज्यते, तथा चित्रग्वादौ मत्पदम् । त्वया तु वचनं कर्तव्यम् । निरूढथलक्षणा तु शक्तितो नातीव भिद्यते । किंच प्राप्तमुदकं यमिति व्यस्ते समीचीनमुदकमिति विशेषणवत्समस्तेऽपि उदकविशेषणयोगः समासघटकपदार्थानां प्राप्तः, स च 'वृत्तस्य विशेषणयोगो न' इति वचनेनैव ...ीयः । 'नामार्थयोरभेदान्वयः' प्रत्ययार्थः प्रधानम्' इति ...

स्य राज्ञः पुरुष इति च। एकार्थीभावलक्षणसामर्थ्यं तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकतारूपम् । संगतार्थः समर्थः, संसृष्टार्थः समर्थ इति व्युत्पत्तेः। संगतिः संसर्गश्च एकीभाव एव । यथा-संगतं घृतं तैलेनेति एकीभूतमिति गम्यते, यथा वा संसृष्टोऽग्निरिति एकीभूत इति गम्यत इति भाष्याच्च । इदं च सामर्थ्यं राजपुरुष इत्यादिवृत्तावेव । अत एव ऋद्धस्य राजपुरुष इत्येवं राज्ञि पुरुषविशेषणे ऋद्धत्वविशेषणं नान्वेति, विशिष्टस्य एकपदार्थतया राज्ञः पदार्थैकदेशत्वात् । देवदत्तस्य गुरुकुलमित्यत्र तु उपसर्जनस्य नित्यसापेक्षत्वात् समासः । यद्वा गुरुवद्देवदत्तोऽपि विशेष्ये प्रधाने कुल एवान्वेति, तत्र गुरुणा कुलस्य उत्पाद्यत्वसंबन्धेनान्वयः । देवदत्तेन तु कुलस्य तदीयगुरूत्पाद्यतयाऽन्वयो गुरुगर्भः । उक्तं च हरिणा—

"संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ॥" इति
"समुदायेन संबन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥" इति च ।

एतेन 'अयश्शूल–' इति सूत्रे भाष्ये 'शिवस्य भगवतो भक्तः' इत्यर्थे शिवभागवत इत्यादि व्याख्यातम् । एकार्थीभावश्चायमलौकिकविग्रहवाक्ये कल्प्यते, यथा लादेशभूतशतृशानचोः अप्रथमासामानाधिकरण्यं कल्प्यते, तद्वत् । अत एव 'लस्य अप्रथमासमानाधिकरणेनार्थेनायोगादादेशानुपपत्तिः, तस्य क्वापि प्रयोगाभावादित्याक्षिप्य आदेशे सामानाधिकरण्यं दृष्ट्वा अनुमानाद् गन्तव्यं प्रकृतेरपि तद्भवति' इति 'लटश्शतृशानचौ–' इति सूत्रभाष्ये समाहितम् । 'सिद्धानां शब्दानामन्वाख्यानात् पचन्तं देवदत्तं पश्येत्यादिप्रयोगदर्शनात् स्थानिनोऽपि लस्य प्रक्रियार्थं कल्पितस्य अप्रथमासामानाधिकरण्यमनुमीयते' इति कैयटः । अत्र प्रक्रियार्थं कल्पितस्येत्युक्त्या अन्यस्यापि प्रक्रियार्थं कल्पितस्य बोधकत्वकल्पना सूचिता । अलौकिकविग्रहवाक्ये श्रूयमाणानां च शब्दानां क्लृप्तशक्तित्यागे मानाभावात् प्रत्येकशक्तिसहकृतया समुदायशक्त्या विशिष्टोपस्थितिः । ततश्च अयमेकार्थीभावः अजहत्स्वार्था वृत्तिरिष्यते । वृत्तिविषये पदानां प्रत्येकमनर्थकत्वमाश्रित्य जहत्स्वार्था वृत्तिस्तु नाश्रयितुं युक्ता, महाबाहुः, सुपन्था इत्यादौ आत्वाद्यनापत्तेः, वृत्तौ महदादिशब्दानामनर्थकत्वाद् अर्थवद्ग्रहणसंभवे अनर्थकस्य 'आन्महतः–' इत्यादौ ग्रहणायोगात् । तदुक्तम्—

'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।' इति

दक इत्यादौ उदककर्तृकप्राप्तिकर्मेत्याद्यर्थाभ्युपगमात् । एकार्थीभावे तु लाघवमित्यादिक् । पदग्रहणं किम्, वर्णविधौ समर्थपरिभाषा मा भूत् । तिष्ठतु दध्यानय तक्रम् इह स्यादेव यण् । विधिग्रहणं तु पदस्य विधिः पदयोर्विधिः पदानां विधिरित्यनेक विभक्त्यन्तसमासलाभार्थम् । पदस्येत्युक्तौ तु 'उपपदमतिङ्' इत्यादावेवास्योपस्थितिः स्यादित्याहुः । सूत्रे समर्थशब्दो लाक्षणिक इति ध्वनयन्नाह—समर्थाश्रित इति समर्थेति किम्, पश्यति कृष्णं श्रितो देवदत्तमित्यादौ कृष्णश्रित इत्यादि समासो मा

समर्थाश्रितो बोध्यः । ६४८ प्राक्कडारात्समासः । (२-१-३) 'कडाराः कर्मधारये' (सू ७५१) इत्यतः प्राक् समास इत्यधिक्रियते । ६४९ सह सुपा । (२-१-४) 'सह' इति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते । योगविभागस्येष्टसिद्ध्यर्थत्वात्कतिपयतिङन्तोत्तरपदोऽयं समासः । स च छन्दस्येव ।

अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः । यथा अश्वकर्णमण्डपादौ । विस्तरस्तु शब्देन्दुशेखरे मञ्जूषायां चानुसंधेयः । समर्थः किम्? पश्य कृष्णं श्रितो राममित्रम् । अत्र कृष्णश्रितयोः परस्परान्वयाभावाद्विशिष्टैकार्थोपस्थित्यजनकत्वान्न सामर्थ्यम् । प्राक्कडारात् । 'आकडारात्' इत्येव प्रागिति सिद्धे प्राग्ग्रहणमेकसंज्ञाधिकारेऽपि अव्ययीभावादिसंज्ञासमुच्चयार्थमिति भाष्ये स्पष्टम् । संपूर्वकस्य अस्यतेरेकीकरणात्मकः संश्लेषोऽर्थः । समस्यते इति अनेकं पदमिति समासः । 'अकर्तरि च कारके संज्ञायाम्' इति कर्मणि घञ् । अत एव मूले समस्यत इति वक्ष्यते । तथा । च अन्वर्थेयं संज्ञा । सह सुपा । 'सुबामन्त्रिते' इत्यतः सुबित्यनुवर्तते । सुबन्तं सुबन्तेन सहोच्चारितं समाससंज्ञं भवतीति फलति । एवं सति पर्यभूषयदित्यादौ सुबन्तस्य तिङन्तेन समासो न स्यात्, तत्राह—सहेति योगो विभज्यत इति । समाससंज्ञाया अन्वर्थत्वादेकस्याप्रसङ्गात् सुपेत्येतावतैव सहेति सिद्धे तद्ग्रहणं योगविभागार्थमिति भावः । सहेत्यत्र 'सुबामन्त्रिते–' इत्यतः सुबित्यनुवर्तते । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । 'समर्थः पदविधिः' इत्यतः समर्थग्रहणमनुवृत्तं तृतीयया विपरिणम्यते तदाह—सुबन्तमित्यादिना । समस्यत इति । एकीक्रियते प्रयोक्तृभिरित्यर्थः । समाससंज्ञां लभत इति यावत् । केचित्तु सुबन्तं कर्तृ समर्थेन समस्यते–एकीभवतीत्यर्थः । कर्तरि लट् । 'उपसर्गादस्यत्यूह्योः' इत्यात्मनेपदम् । समासशब्दोऽपि कर्तरि बाहुलकाद्घञन्त एव, कर्मणि घञन्तो वा । तथा सति समस्यत इति कर्तरि तिङन्तं फलितार्थकथनपरमित्याहुः । ननु घटो भवतीत्यत्र समासे घटभवतीत्यपि लोके प्रयोगः

भूत् । तथा वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र 'तस्यापत्यम्' इत्युपगुशब्दादण् मा भूदिति । क्वचित्तु सापेक्षत्वेऽपि भाष्यप्रामाण्याद् वृत्तिरङ्गीक्रियते । तद्यथा—किमोदनं शालीनाम् । केषां शालीनामोदनमित्यर्थः । सक्त्वाढकमापणीयानाम् । आपणीयानां सक्तूनामाढकमित्यर्थः । कुतो भवान् पाटलिपुत्रकः । द्वे पाटलिपुत्रे, तत्र कस्मात्पाटलिपुत्राद्भवानागत इत्यर्थः । 'रोपधेतोः प्राचाम्' इति वुञ् । प्राक्कडारात्समासः । प्राग्ग्रहणमावर्तते, तेन पूर्वं समाससंज्ञा ततः संज्ञान्तरमपीति लभ्यते । तेनाव्ययीभावादिभिः समावेशः सिद्ध्यति । अन्यथा पर्यायः स्यात् । समसनं समासः, भावे घञ् । अनेकस्य पदस्य एकपदीभवनमित्यर्थ इत्येके । वस्तुतस्तु—'अकर्तरि च कारके–' इति कर्मणि घञ् । अन्यथा सुबन्तं समस्यत इत्युत्तरग्रन्थो न संगच्छते । ननु अन्वर्थत्वात्समाससंज्ञायाः प्रत्येकमप्रसङ्गात्सहग्रहणं व्यर्थमित्याशङ्क्याह—योगो विभज्यत इति । 'सुबामन्त्रिते–' इत्यतः सुबित्यनुवर्तते तदाह—सुबन्तमिति । समस्यत इति । संपूर्वादस्यतेः कर्मणि तङ । आचार्येणेति शेषः । समर्थेनेति तु सहयोगे तृतीया । समसनक्रियां प्रति सुबन्तं कर्म, न तु कर्तृ । यद्यपि सुबन्तस्य कर्तृत्वमप्युपसर्ग-

स्य राज्ञः पुरुष इति च। एकार्थीभावलक्षणसामर्थ्यं तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकतारूपम् । संगतार्थः समर्थः, संसृष्टार्थः समर्थ इति व्युत्पत्तेः। संगतिः संसर्गश्च एकीभाव एव । यथा-संगतं घृतं तैलेनेति एकीभूतमिति गम्यते, यथा वा संसृष्टोऽग्निरिति एकीभूत इति गम्यत इति भाष्याच्च। इदं च सामर्थ्यं राजपुरुष इत्यादिवृत्तावेव। अत एव ऋद्धस्य राजपुरुष इत्येवं राज्ञि पुरुषविशेषणे ऋद्धत्वविशेषणं नान्वेति, विशिष्टस्य एकपदार्थतया राज्ञः पदार्थैकदेशत्वात्। देवदत्तस्य गुरुकुलमित्यत्र तु उपसर्जनस्य नित्यसापेक्षत्वात् समासः। यद्वा गुरुवद्देवदत्तोऽपि विशेष्ये प्रधाने कुल एवान्वेति, तत्र गुरुणा कुलस्य उत्पाद्यत्वसंबन्धेनान्वयः। देवदत्तेन तु कुलस्य तदीयगुरूत्पाद्यतयाऽन्वयो गुरुगर्भः। उक्तं च हरिणा—

"संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते।<br>
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते॥" इति<br>
"समुदायेन संबन्धो येषां गुरुकुलादिना।<br>
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह॥" इति च।

एतेन 'अयश्शूल–' इति सूत्रे भाष्ये 'शिवस्य भगवतो भक्तः' इत्यर्थे शिवभागवत इत्यादि व्याख्यातम् । एकार्थीभावश्चायमलौकिकविग्रहवाक्ये कल्प्यते, यथा लादेशभूतशतृशानचोः अप्रथमासामानाधिकरण्यं कल्प्यते, तद्वत्। अत एव 'लस्य अप्रथमासमानाधिकरणेनार्थेनायोगादादेशानुपपत्तिः, तस्य क्वापि प्रयोगाभावादित्याक्षिप्य आदेशे सामानाधिकरण्यं दृष्ट्वा अनुमानाद् गन्तव्यं प्रकृतेरपि तद्भवति' इति 'लटश्शतृशानचौ–' इति सूत्रभाष्ये समाहितम्। 'सिद्धानां शब्दानामन्वाख्यानात् पचन्तं देवदत्तं पश्येत्यादिप्रयोगदर्शनात् स्थानिनोऽपि लस्य प्रक्रियार्थं कल्पितस्य अप्रथमासामानाधिकरण्यमनुमीयते' इति कैयटः। अत्र प्रक्रियार्थं कल्पितस्येत्युक्त्या अन्यस्यापि प्रक्रियार्थं कल्पितस्य बोधकत्वकल्पना सूचिता। अलौकिकविग्रहवाक्ये श्रूयमाणानां च शब्दानां क्लृप्तशक्तित्यागे मानाभावात् प्रत्येकशक्तिसहकृतया समुदायशक्त्या विशिष्टोपस्थितिः। ततश्च अयमेकार्थीभावः अजहत्स्वार्था वृत्तिरिष्यते। वृत्तिविषये पदानां प्रत्येकमनर्थकत्वमाश्रित्य जहत्स्वार्था वृत्तिस्तु नाश्रयितुं युक्ता, महाबाहुः, सुपन्था इत्यादौ आत्वाद्यनपात्तेः, वृत्तौ महदादिशब्दानामनर्थकत्वाद् अर्थवद्ग्रहणसंभवे अनर्थकस्य 'आन्महतः–' इत्यादौ ग्रहणायोगात्। तदुक्तम्—

'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी।' इति

दक इत्यादौ उदककर्तृकप्राप्तिकर्मेत्याद्यर्थाभ्युपगमात् । एकार्थीभावे तु लाघवमिति दिक्। पदग्रहणं किम्, वर्णविधौ समर्थपरिभाषा मा भूत्। तिष्ठतु दध्यानय तक्रम्, इह स्यादेव यण्। विधिग्रहणं तु पदस्य विधिः पदयोर्विधिः पदानां विधिरित्यनेकविभक्त्यन्तसमासलाभार्थम्। पदस्येत्युक्तौ तु 'उपपदमतिङ्' इत्यादावेवास्योपस्थितिः स्यादित्याहुः। सूत्रे समर्थशब्दो लाक्षणिक इति ध्वनयन्नाह—समर्थाश्रित इति। समर्थेति किम्, पश्यति कृष्णं श्रितो देवदत्तमित्यादौ कृष्णश्रित इत्यादि समासो मा

प्रमर्थाश्रितो बोध्यः । ६४८ प्राक्कडारात्समासः । (२-१-३) 'कडाराः कर्मधारये' (सू ७५१) इत्यतः प्राक् समास इत्यधिक्रियते । ६४९ सह सुपा । (२-१-४) 'सह' इति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते । योगविभागस्येष्टसिद्धचर्थत्वात्कतिपयतिङन्तोत्तरपदोऽयं समासः । स च छन्दस्येव ।

---

अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः । यथा अश्वकर्णमण्डपादौ । विस्तरस्तु शब्देन्दुशेखरे मञ्जूषायां चानुसंधेयः । समर्थः किम्? पश्य कृष्णं श्रितो राममित्रम् । अत्र कृष्णश्रितयोः परस्परान्वयाभावाद्विशिष्टैकार्थोपस्थित्यजनकत्वान्न सामर्थ्यम् । प्राक्कडारात् । 'आकडारात्' इत्येव प्रागिति सिद्धे प्राग्ग्रहणमेकसंज्ञाधिकारेऽपि अव्ययीभावादिसंज्ञासमुच्चयार्थमिति भाष्ये स्पष्टम् । संपूर्वकस्य अस्यतेरेकीकरणात्मकः संश्लेषोऽर्थः । समस्यते इति अनेकं पदमिति समासः । 'अकर्तरि च कारके संज्ञायाम्' इति कर्मणि घञ् । अत एव मूले समस्यत इति वक्ष्यते । तथा । च अन्वर्थेयं संज्ञा । सह सुपा । 'सुबामन्त्रिते' इत्यतः सुबित्यनुवर्तते । सुबन्तं सुबन्तेन सहोच्चारितं समाससंज्ञं भवतीति फलति । एवं सति पर्यभूषयदित्यादौ सुबन्तस्य तिङन्तेन समासो न स्यात्, तत्राह—सहेति योगो विभज्यत इति । समाससंज्ञाया अन्वर्थत्वादेकस्याप्रसङ्गात् सुपेत्येतावतैव सहेति सिद्धे तद्ग्रहणं योगाविभागार्थमिति भावः । सहेत्यत्र 'सुबामन्त्रिते–' इत्यतः सुबित्यनुवर्तते । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । 'समर्थः पदविधिः' इत्यतः समर्थग्रहणमनुवृत्तं तृतीयया विपरिणम्यते तदाह—सुबन्तमित्यादिना । समस्यत इति । एकीक्रियते प्रयोक्तृभिरित्यर्थः । समाससंज्ञां लभत इति यावत् । केचित्तु सुबन्तं कर्तृ समर्थेन समस्यते—एकीभवतीत्यर्थः । कर्तरि लट् । 'उपसर्गादस्यत्यूह्योः' इत्यात्मनेपदम् । समासशब्दोऽपि कर्तरि बाहुलकाद्धञन्त एव, कर्मणि घञन्तो वा । तथा सति समस्यत इति कर्तरि तिङन्तं फलितार्थकथनपरमित्याहुः । ननु घटो भवतीत्यत्र समासे घटभवतीत्यपि लोके प्रयोगः

---

भूत् । तथा वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र 'तस्यापत्यम्' इत्युपगुशब्दादण् मा भूदिति । क्वचित्तु सापेक्षत्वेऽपि भाष्यप्रामाण्याद् वृत्तिरङ्गीक्रियते । तद्यथा—किमोदनं शालीनाम् । केषां शालीनामोदनमित्यर्थः । सक्त्वाढकमापणीयानाम् । आपणीयानां सक्तूनामाढकमित्यर्थः । कुतो भवान् पाटलिपुत्रकः । द्वे पाटलिपुत्रे, तत्र कस्मात्पाटलिपुत्राद्भवानागत इत्यर्थः । 'रोपधेतोः प्राचाम्' इति वुञ् । प्राक्कडारात्समासः । प्राग्ग्रहणमावर्तते, तेन पूर्वं समाससंज्ञा ततः संज्ञान्तरमपीति लभ्यते । तेनाव्ययीभावादिभिः समावेशः सिद्धचति । अन्यथा पर्यायः स्यात् । समसनं समासः, भावे घञ् । अनेकस्य पदस्य एकपदीभवनमित्यर्थ इत्येके । वस्तुतस्तु—'अकर्तरि च कारके–' इति कर्मणि घञ् । अन्यथा सुबन्तं समस्यत इत्युत्तरग्रन्थो न संगच्छते । ननु अन्वर्थत्वात्समाससंज्ञायाः प्रत्येकमप्रसङ्गात्सहग्रहणं व्यर्थमित्याशङ्क्याह—योगो विभज्यत इति । 'सुबामन्त्रिते–' इत्यतः सुबित्यनुवर्तते तदाह—सुबन्तमिति । समस्यत इति । संपूर्वादस्यतेः कर्मणि तङ । आचार्येणेति शेषः । समर्थेनेति तु सहयोगे तृतीया । समसनक्रियां प्रति सुबन्तं कर्म, न तु कर्तृ, ... सुबन्तस्य कर्तृत्वासंभवेन ... उपसर्गा-

पर्यभूषयत् । अनुव्यचलत् । 'सुपा' । सुप्सुपा सह समस्यते । समासत्वात्प्रातिपदिकत्वम् । ६५० सुपो धातुप्रातिपदिकयोः (२—४—७१) एतयोरवयवस्य सुपो लुक्स्यात् । 'भूतपूर्वे चरट्' (सू १९९९) इति निर्देशाद् भूतशब्दस्य

---

स्यादित्यत आह—**योगविभागस्येति** । **कतिपयेति** । कतिपयानि तिङन्तानि उत्तरपदानि यस्येति विग्रहः । **पर्यभूषयदिति** । समासान्तोदात्तत्वे शेषनिघात इति 'कुगति–' इति सूत्रे कैयटः । देवो देवान् ऋतुना पर्यभूषयदित्यत्र तु स्वरव्यत्ययो बोध्यः । **अनुव्यचलदिति** । अचलदित्यनेन वेः पूर्वं समासे सति तेन अनोः समासः । न त्वनुव्योर्युगपत्समासः, सुबित्येकत्वस्य विवक्षितत्वात् । अत एव महिष्या अजायाश्च क्षीरमित्यत्र क्षीरशब्देन सुबन्तयोर्न समास इति कैयटः । **सुपा** । 'सुबामन्त्रिते–' इत्यतः सुबित्यनुवर्तते, समास इत्यधिकृतम्, तदाह—**सुप्सुपेति** । सुबन्तं सुबन्तेनेत्यर्थः । ततश्च पूर्वं भूत इति विग्रहे समाससंज्ञा स्थिता । **समासत्वात् प्रातिपदिकसंज्ञेति** । 'कृत्तद्धितसमासाश्च' इत्यनेनेति शेषः । **सुपो धातु** । धातुप्रातिपदिकयोरित्यवयवषष्ठीत्याह—**एतयोरवयवस्येति** । **लुक् स्यादिति** । 'ण्यक्षत्रियार्षञितो यूनि लुक्' इत्यतस्तदनुवृत्तेरिति भावः । न च सुप इत्यनेन सप्तमीबहुवचनस्यैव ग्रहणं किं न स्यादिति वाच्यम्, 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुग्विधानात् सुप्प्रत्याहारस्यैवात्र ग्रहणमिति ज्ञापनात् । न चैवमपि पूर्वं भूत इति लौकिकविग्रहवाक्ये परिनिष्ठितसंधिकार्ययोः सुबन्तयोः समासे सति पूर्वंभूत इत्यत्र अमि पूर्वरूपस्य एकादेशस्य परादिवत्वमाश्रित्य अमो लुकि समासदशायां वकारादकारो न श्रूयेत । पूर्वान्तत्वे तु परिशिष्टस्य मकारस्य सुप्त्वाभावात् कथं लुगिति वाच्यम्, 'सुपो धातु–' इति लुग्विषये 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इत्याश्रित्य संधिकार्यप्रवृत्तेः प्रागेवालौकिकविग्रहवाक्ये समासप्रवृत्तिरिति 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्ये स्थितम् । 'कृत्तद्धितसमासाश्च' इत्यत्र प्रौढमनोरमायामपि परिष्कृतमिदम् । 'भस्त्रैषा–' इति सूत्रव्याख्यावसरे प्रपञ्चितं चास्माभिः । एवं च पूर्व अम् भूत स् इत्यलौकिकविग्रहदशायामेव अमो लुक्प्रवृत्तेर्नोक्तदोषः । तथा च सुपो लुकि भूतपूर्वेति स्थितम् । ननु 'सुबन्तं सुबन्तेन समस्यते' इति समासशास्त्रे सुबन्तं प्रथमानिर्दिष्टम् । सुबन्तत्वं च द्वयोरप्यविशिष्टम् । ततश्च 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति वक्ष्यमाणोपसर्जन-

---

दस्यत्यूह्योः' इति वार्तिकेन समस्यत इत्यत्रात्मनेपदं लभ्यते, तथापि समास इति व्याख्येयग्रन्थे कर्तरि घञ् दुर्लभः । बाहुलकं तु अगतिकगतिरिति कर्मत्वाभ्युपगम एव ज्यायान् । स चेति । एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते । **छन्दस्येवेति** । यदि लोकेऽपि स्यात्तर्हि यत्प्रकुरुते इत्यादौ स्वाद्युत्पत्तिः स्यात् । लिङ्गसर्वनामतामभ्युपेत्य 'स्वमोर्नपुंसकात्' इति लुकि कृतेऽपि 'ह्रस्वो नपुंसके–' इति ह्रस्वः स्यादित्यादि दूषणं 'कर्मणो यमभिप्रैति–' इति सूत्रेऽस्माभिरुद्भावितम् । **अनुव्यचलदिति** । सुबित्येकत्वस्य विवक्षितत्वात्पर्यायेण समासो बोध्यः । समासान्तोदात्तत्वे शेषनिघात इति 'कुगति–' इति सूत्रे कैयटः । **सुपो धातु** । सुप् इति प्रत्याहारस्य ग्रहणं 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्समासविधानाज्ज्ञायते । [illegible] प्रथमा-

पूर्वनिपातः। पूर्वं भूतो भूतपूर्वः। 'इवेन समासो विभक्त्यलोपश्च' (वा १२३६, १३४१)। जीमूतस्येव। **६५१ अव्ययीभावः** । (२–१–५) अधिकारोऽयम्। **६५२ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु** । (२–१–६) 'अव्ययम्' इति योगो विभज्यते। अव्ययं समर्थेन सह समस्यते, सोऽव्ययीभावः। **६५३ प्रथमानिर्दिष्टं समास उपसर्जनम्** ।

---

त्वस्य द्वयोरप्यविशिष्टत्वाद् 'उपसर्जनं पूर्वम्' इत्यन्यतरस्य पूर्वनिपाते विनिगमनाविरह इत्यत आह—भूतपूर्वे चरडिति। पूर्वं भूत इति। लौकिकविग्रहोऽयम्। पूर्वमिति क्रियाविशेषणम्। भूतपूर्व इति। समासत्वेन प्रातिपदिकत्वात् समुदायात् पुनर्यथायथं सुबुत्पत्तिरिति भावः। इवेनेति। इवेत्यव्ययेन सुबन्तस्य समासः। 'सुपो धातु–' इति लुगभावः। पूर्वपदस्य प्रकृतिसिद्धस्वरश्च भवति, न तु समासस्वर इति वक्तव्यमित्यर्थः। 'सह सुपा' इति सिद्धे समासविधानमिवशब्दस्य पूर्वनिपातनिवृत्त्यर्थम्। अन्यथा अत्र इवशब्दस्यापि सुबन्तत्वाविशेषात् समासशास्त्रे प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् पूर्वनिपातः स्यात्। जीमूतस्येवेति। अत्र जीमूतशब्दस्य पूर्वपदस्य फिट्स्वरेणान्तोदात्तत्वमेव, न तु समासस्येत्यन्तोदात्तत्वम्। अत्र यथार्थत्वप्रयुक्तोऽव्ययीभावस्तु न, 'तत्र तस्येव' इति निर्देशात्। क्वाचित्कश्चायं समासः। अत एव बह्वृचा एव पदपाठे अवगृह्णन्ति, याजुषास्तु भिन्ने एव पदे पठन्ति, 'उद्बाहुरिव वामनः' इत्यादिव्यस्तप्रयोगाश्च संगच्छन्ते। 'हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम्।' इत्यत्र तु मातरमिवेति भवितव्यम्। 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति वार्तिकस्वारस्येन प्रथमायाः कारकविभक्तित्वोचितपरभाष्येण च क्रियायोग एव प्रथमायाः प्रवृत्त्या मातेति प्रथमायाः मातृसदृशीमित्यर्थे आसाधुत्वादित्यास्तां तावत्। अव्ययीभावः। अधिकारोऽयमिति। एकसंज्ञाधिकारेऽपि अनया संज्ञया समाससंज्ञा न बाध्यत इति 'प्राक्कडारात्–' इत्यत्रोक्तम्। अव्ययं विभक्ति। विभक्त्यर्थाद्यभावेऽप्यपदिशमित्यादि साधयितुमाह—अव्ययमिति योगो विभज्यत इति। अत्र 'समर्थः पदविधिः' इत्यतः समर्थग्रहणमनुवृत्तं तृतीयान्ततया विपरिणम्यते। समास इति अव्ययीभाव इति चाधिकृतम्। तदाह—अव्ययं समर्थेनेति। सोऽव्ययीभाव इति। स समासः अव्ययीभावसंज्ञः स्यादित्यर्थः। तथा च दिशयोर्मध्यमित्यस्वपदविग्रहे मध्यार्थकस्य अपेत्यव्ययस्य दिशयोरित्यनेन समाससंज्ञा। तस्य समासस्याव्ययीभावसंज्ञा च सिद्धा। तथा च समासत्वात् प्रातिपदिकत्वे 'सुपो धातु–' इति सुब्लुकि सति दिशा अप इति स्थितम्। अत्र उपसर्जनकार्यं वक्ष्यन्नुपसर्जनसंज्ञामाह—प्रथमानिर्दिष्टम्। ननु समासे प्रथमानिर्दिष्टमुपसर्जनम् इति व्याख्याने असंभवः, समासे

---

निर्दिष्टत्वाविशेषेऽपि उपसर्जनसंज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः॥ इवेनेति। अयमपि समासः पूर्ववत् क्वाचित्क एव। तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः। 'उद्बाहुरिव वामनः' इत्यादौ व्यस्तप्रयोगश्च संगच्छत इति मनोरमायां स्थितम्। विभक्त्यलोपश्चेति। समासावयवस्य सुपोऽलुग्विधानेऽपि समासादुत्पन्नस्य सोः 'अव्ययात्–' इति लुग् भवत्येव, अनुपसर्जने तद्धितेऽप्यव्ययत्वा

(१-२-४३) समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्। ६५४ उपसर्जनं पूर्वम्। (२-२-३०) समासे उपसर्जनं प्राक्प्रयोज्यम् । ६५५ एकविभक्ति चापूर्वनिपाते । (१-२-४४) विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यात्, न तु तस्य पूर्वनिपातः । ६५६ गोस्त्रियोरुपसर्जनस्य । (१-२-४८) उप-

---

सति 'सुपो धातु–' इति प्रथमाया लुप्तत्वात् । समासे चिकीर्षिते प्रथमानिर्दिष्टम् इति व्याख्याने तु कृष्णं श्रितः कृष्णश्रित इत्यत्र विग्रहे कृष्णशब्दस्य द्वितीयानिर्दिष्टत्वादुपसर्जनत्वं न स्यात् । श्रितशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वं स्यात् । अतो व्याचष्टे-समासशास्त्र इति । समासपदं समासविधायकशास्त्रपरमिति भावः । एवं च 'द्वितीया श्रित–' इति समासविधायकशास्त्रे द्वितीयान्तस्यैव कृष्णशब्दस्य द्वितीयेति प्रथमानिर्दिष्टत्वादुपसर्जनत्वम् । एवं च 'अव्ययम्–' इति समासविधावपेत्यस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वं स्थितम् । उपसर्जनं पूर्वम् । प्राक्कडारात् समास इत्यधिकृतम् । समास इति प्रथमान्तं योग्यतया सप्तम्यन्तं विपरिणम्यते, तदाह—समासे उपसर्जनं प्राक् प्रयोज्यमिति । पूर्वमित्यस्य पूर्वं प्रयोज्यमित्यर्थ इति भावः । एवं च प्रकृते अपेत्यस्य पूर्वं प्रयोगनियमः सिद्धः । अपदिशा इति स्थितम् । अत्र दिशाशब्दस्यापि उपसर्जनत्वमाह—एकविभक्ति । 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यतः समास इति उपसर्जनमिति चानुवर्तते । समास इत्यनेन विग्रहवाक्यं लक्ष्यते । एका विभक्तिर्यस्य तदेकविभक्ति, नियतविभक्तिकमिति यावत् । एवं च विग्रहे यन्नियतविभक्तिकं तत्पूर्वनिपातभिन्नकार्ये कर्तव्य उपसर्जनं स्यादित्यर्थः । फलितमाह—विग्रहे यन्नियतेति । निष्कौशाम्बिशब्द उदाहरणम् । तत्र कौशाम्ब्या निष्क्रान्तो निष्क्रान्तं निष्क्रान्तेन निष्क्रान्ताय निष्क्रान्ताद् निष्क्रान्तस्य निष्क्रान्ते इति विग्रहेषु 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासे निष्कौशाम्बिः निष्कौशाम्बिं निष्कौशाम्बिना इत्यादि इति स्थितिः । अत्र कौशाम्बीशब्द एव विग्रहे नियतविभक्तिक इति तस्योपसर्जनत्वमनेन भवति । समासशास्त्रे कौशाम्बीशब्दस्य पञ्चमीनिर्दिष्टत्वमेव, न तु प्रथमानिर्दिष्टत्वमिति 'प्रथमानिर्दिष्टम्–' इत्यनेनोपसर्जनत्वाप्राप्तौ वचनम् । तत्र कौशाम्बीशब्दस्य अनेन उपसर्जनत्वेऽपि न पूर्वनिपातः । तत्तद्विभक्त्यन्तैरेव समास इत्यत्र इदमेव सूत्रं प्रमाणम् । 'तुल्यार्थैः–' इति सूत्रे भाष्ये स्पष्टमिदम् । प्रथमान्तपदेनैव समास इति 'अनेकम्–' इति सूत्रे भाष्ये स्थितम् । प्रकृते च दिशयोर्मध्यः मध्यं मध्येनेत्यादिविग्रहवाक्येषु दिशाशब्दस्य नियतविभक्तिकत्वात् समासविधौ प्रथमानिर्दिष्टत्वाभावेऽपि अनेनोपसर्जनत्वं भवति । पूर्वनिपातस्तु न भवतीति स्थितम् । गोस्त्रियोः । 'ह्रस्व-

---

दिति बाध्यम् । अव्ययं विभक्ति । विभक्तिरिह कारकशक्तिः । विभज्यते अनया प्रातिपदिकार्थ इति व्युत्पत्तेः । अत एव वक्ष्यति—विभक्त्यर्थादिषु विद्यमानमव्ययमिति । प्रथमानिर्दिष्टम् । अत्र समासपदं तद्विधायके लाक्षणिकम् । अन्यथा चिकीर्षिते समासे यत्प्रथमान्तमिति व्याख्यानप्रसक्त्या कृष्णश्रित इत्यादौ श्रितादिष्वतिप्रसङ्ग इत्याशयेनाह—समासशास्त्र इति । विग्रह इति । अनुवर्तमानेन समासग्रहणेन विग्रहो लक्ष्यत इति भावः । न तु तस्येति । 'अनेकम्–' इति न्यायात्

सर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। 'अव्ययीभावश्च' (सू ४५१) इत्यव्ययत्वम् । ६५७ नाव्ययीभावादतोऽम्त्वपञ्चम्याः। (२-४-८३) अदन्तादव्ययीभावात्सुपो न लुक्, तस्य तु पञ्चमीं विना अमादेशश्च स्यात्। दिशयोर्मध्येऽपदिशम्। 'क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्।' इत्यमरः। ६५८ तृतीया सप्तम्योर्बहुलम् । (२—४—८४) अद-

---

नपुंसके प्रातिपदिकस्य' इत्यतो ह्रस्व इति प्रातिपदिकस्येति चानुवर्तते। उपसर्जनस्येति गोस्त्रियोर्विशेषणम् । प्रत्येकाभिप्रायमेकवचनम् । स्त्रीशब्देन स्त्रीप्रत्ययो गृह्यते । प्रत्ययग्रहणपरिभाषया तदन्तविधिः । उपसर्जनभूतस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य चेति लभ्यते । तदुभयं प्रातिपदिकस्य विशेषणम् । तदन्तविधिः तदाह—उपसर्जनमित्यादिना । अत्र च शास्त्रीयमेवोपसर्जनं गृह्यते, न त्वप्रधानमात्रम्, कुमारीमिच्छन् कुमारीवाचरन्वा ब्रह्मणः कुमारीत्यत्रातिप्रसङ्गात् । अव्ययीभावश्चेत्यव्ययत्वमिति । तथा च अव्ययीभावसमासादुत्पन्नानां सुपाम् 'अव्ययादाप्सुपः' इति लुक् स्यादिति शङ्कायामाह—नाव्ययीभावात् । अम् तु अपञ्चम्या इति छेदः। 'नाव्ययीभावादतः' इत्येकं वाक्यम्। 'ण्यक्षत्रियार्ष–' इत्यतो लुगित्यनुवर्तते। 'अव्ययादाप्सुपः' इत्यतः सुप इति च। अता अव्ययीभावो विशेष्यते, तदन्तविधिः, तदाह—अदन्तादव्ययीभावात् सुपो न लुगिति । अम् तु अपञ्चम्या इति वाक्यान्तरम्। पञ्चमीभिन्नस्य तु सुपः अमादेशः स्यात्। पञ्चम्यास्तु अम् न भवतीति लभ्यते। तदाह—तस्य पञ्चमीं विना अमादेश इति । अत्रापञ्चम्या इति प्रतिषेधोऽयम् अनन्तरत्वादम एव भवति, न तु लुङ्निषेधस्यापि । एवं चादन्तादव्ययीभावात् परस्य सुपो न लुक्, किंत्वामादेशः। पञ्चम्यास्तु लुग् अमादेशश्च न भवतीति स्थितिः। सूत्रे एतत्सूचनार्थमेव तुशब्दः। 'अव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्येत्रोक्तौ तु अदन्तादव्ययीभावात् परस्य पञ्चमीभिन्नस्य सुपो लुकोऽपवादः अमादेशः स्यादित्येव लभ्येत। एवं सति पञ्चम्या अमोऽभावे 'अव्ययादाप्सुपः' इति लुक् स्यात्। अतो

---

सूत्रेण विहितस्य पूर्वनिपातत्वं न निषिध्यते। तेन कुमारीश्रित इत्यादौ न दोषः। गोस्त्रियोः। उपसर्जनस्येति गोस्त्रियोर्विशेषणम् । एकवचनं तु प्रत्येकाभिप्रायेण। गोस्त्रीभ्यां तु प्रातिपदिकं विशेष्यते। विशेषणेन तदन्तविधिरित्याशयेनाह—उपसर्जनं य इति। उपसर्जनमिह शास्त्रीयं गृह्यते, न त्वप्रधानलक्षणम् । तेन कुमारीवाचरन्ब्राह्मणः कुमारीत्यत्र न दोष इत्युक्तम्। स्त्रीप्रत्ययान्तमिति। स्त्र्यधिकारोक्तटाबाद्यन्तमित्यर्थः। तेनातिलक्ष्मीरित्यादौ नातिप्रसङ्गः। नन्वेवमपि राजकुमारीपुत्र इत्यादावतिप्रसङ्ग इति चेत्, अत्राहुः—उपसर्जनस्य ससंबन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति यद्युत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावस्तदव ह्रस्वत्वमिति भाष्यादावुक्तत्वान्न दोषः। भाष्यादावपि उत्तरपदभतयोरित्यर्थलाभस्तु 'कृत्तद्धित–' इत्यतः समासपदानुवर्तनादिति बोध्यमिति। नाव्ययी। अत्र 'अपञ्चम्याः' इति प्रतिषेधोऽनन्तरत्वादम एव, न तु व्यवहितस्यालुकोऽपि। अममेवार्थं द्योतयितुं सूत्रे तुशब्दः। तस्य पञ्चमीं विनेति। एवं चादन्तादव्ययीभावात्परस्य पञ्चमीभिन्नस्य सुपो

न्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अपदिशम्, अपदिशे
अपदिशम्, अपदिशे । बहुलग्रहणात् सुमद्रम् उन्मत्तगङ्गम् इत्यादौ सप्तम्या नित्य-
मम्भावः । 'विभक्ति—' इत्यादेरयमर्थः—विभक्त्यर्थादिषु वर्तमानमव्ययं सुब-
न्तेन सह समस्यते, सोऽव्ययीभावः । विभक्तौ तावत्—हरौ इत्यधिहरि
सप्तम्यर्थस्यैवात्र द्योतकोऽधिः । हरि ङि अधि इत्यलौकिकं विग्रहवाक्यम् । अ-

---

लुङ् निषिध्यत इत्यास्तां तावत् । अपदिशमिति । पञ्चमीभिन्नविभक्तीनामुदाहरणम्।
पञ्चम्यास्तु अपदिशादित्युदाहार्यम् । यद्यपि नपुंसकह्रस्वत्वेनाप्येतत् सिध्यति, 'अव्य-
यीभावश्च' इति नपुंसकत्वस्य वक्ष्यमाणत्वात् । तथापि 'गोस्त्रियोः—'इति सूत्रं चित्रगु
अतिखट्व इत्याद्यर्थमावश्यकमिति इहापि न्याय्यत्वादुपन्यस्तम् । तदेवमव्ययमिति
भाष्यादृष्टेनापि योगविभागेन अपदिशमिति रूपसाधनं वृद्धसंमतमित्याह—क्लीबाव्यय-
मिति । तृतीया । 'नाव्ययीभावात्—' इत्यस्माद् अत इत्यनुवर्तते, तदाह—अदन्ता-
दिति । अमादेशाभावे तु 'नाव्ययीभावात्—' इत्यलुक् । ननु वेति सिद्धे किं बहुलग्रहणे-
नेत्यत आह—बहुलग्रहणादिति । तदेवमव्ययमिति योगं विभज्य व्याख्याया तदुत्तर-
खण्डं व्याख्यातुमुपक्रमते—विभक्तीत्यादेरयमर्थ इति । विभक्तीत्यनेन विभक्त्यर्थ-
विवक्षितः । उच्यन्त इति वचनाः । कर्मणि ल्युट् । विभक्ति, समीप, समृद्धि, व्यृद्धि,
अर्थाभाव, अत्यय, असंप्रति, शब्दप्रादुर्भाव, पश्चात् यथा, आनुपूर्व्य, यौगपद्य,
सादृश्य, संपत्ति, साकल्य, अन्त एतेषां षोडशानां द्वन्द्वः । ते च वचनाश्च इति
विग्रहः । विभक्त्यर्थादिषु वाच्येष्वित्यर्थः । अव्ययीभावः समास इति चाधिकृतम्,
तदाह—विभक्त्यर्थादिष्विति । विभक्तौ तावदिति । विभक्त्यर्थे प्रथममुदा-
ह्रियत इत्यर्थः । हरौ इत्यधिहरीति । हरौ इति लौकिकविग्रहः । तेन यावदव-
गम्यते तावदेवाधिहरीति समासेनाप्युच्यत इत्यर्थः । अधिशब्दस्य हरावित्यनेन अव्य-
यीभावसमासे सुब्लुकि समासविधावव्ययमिति प्रथमानिर्दिष्टत्वाद् अधेः पूर्वनिपाते
समासादुत्पन्नस्य सुपः 'अव्ययादाप्सुपः' इति लुगिति भावः । ननु लौकिकविग्रहे समस्य-
मानः अधिशब्दः कुतो नोपात्त इत्यत आह—सप्तम्यर्थस्यैवात्र द्योतकोऽधि-
रिति । तथा चाधिद्योत्यार्थस्य अधिकरणत्वस्य सप्तम्यैव उक्तत्वाद अधिशब्दो न
पृथगुपात्तः, नित्यसमासतया वक्ष्यमाणत्वेन स्वपदविग्रहानौचित्यादिति भावः । न-
हरौ इति परिनिष्ठितसंधिकार्यस्य समासे सति औ इत्यस्य सुपो लुकि समासे रेफादि-

---

लुङ् न, पञ्चम्यास्तु लुगादेशावुभावपि न भवत इति स्थितम् । अतः किम्, अधि
हरि । दिशयोरिति । दिशोरिति हलन्ते विग्रहेऽपि एतदेव रूपम् । दिश्शब्दस्य
शरदादिषु पाठाट्टच् । अपदिशमिति । पञ्चमीव्यतिरिक्तविभक्तीनामुदाहरणमिदम्।
पञ्चम्यास्तु अपदिशादित्युदाहार्यम् । विभक्तौ तावदिति । तावच्छब्दः क्रमार्थः
लौकिकं विग्रहवाक्यं प्रदर्शयति—हराविति । प्राचा तु हरौ अधिकृत्येति विगृही-
तम् । तदसत्, अधिहरीत्यत्र अधिकृत्येत्यर्थस्याप्रतीतेः । हरि ङीति । अलौकिके
ङिशब्दस्यैव प्रवेश उचितः 'अन्तरङ्गानपि—' इति न्यायात् । अन्यथा ङेरौत्वे कृते
अधिहरीति समासे हरिशब्देकारो दुर्लभः स्यादिति भावः । इह हरावधीति स्थित-

निपातेनाभिहितेऽप्यधिकरणे वचनसामर्थ्यात्सप्तमी । ६५९ अव्ययीभावश्च । (२-४-१८) अयं नपुंसकं स्यात् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (सू ३१८) । गोपायतीति गाः पातीति वा गोपाः, तस्मिन्नित्यधिगोपम् । समीपे—कृष्णस्य समी-

---

कारः कुतः श्रूयेतेत्यत आह—हरि ङि इति । सधिकार्यात् प्रागलौकिकंविग्रहवाक्य एव समासप्रवृत्तेः 'प्रत्ययोत्तरपदयोश्च' इति भाष्यसंमतत्वादिति भावः । यथा चैतत् तथा भुतपूर्व इत्यत्रानुपमेवोक्तम् । नन्वधिना निपातेनाधिकरणत्वस्योक्तत्वात् कथं हराविति सप्तमीत्यत आह—अत्र निपातेनेति । वचनेति । सुपेत्यनुवर्त्य सुबन्ते-नात्र समाविविसामर्थ्यात् सप्तमी स्यादेवेति भावः । वस्तुतस्तु अनभिहितसूत्रभाष्ये तिङ्कृत्तद्धितसमासैरित्येव परिगणनं दृष्टम् । अतो निपातेनाधिना अभिहितेऽप्यधि-करणत्वे सप्तमी निर्वाधा । 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इत्यत्र तु एष्टव्य इत्यध्याहार्यम् । कृताऽभिधानाद् विषवृक्षाद् द्वितीया न भवति । न च कृत्तद्धित-समासैरिति परिगणनं भाष्ये प्रत्याख्यातमिति वाच्यम्, 'कटं करोति भीष्ममुदारं दर्श-नीयम्' इत्यत्र परिगणनफलस्यान्यथासिद्धेरेव तत्रोक्तत्वादित्यास्तां तावत् । अव्ययी-भावश्च । अयं नपुंसकं स्यादिति । 'स नपुंसकम्' इत्यतः तदनुवृत्तेरिति भावः । नपुंसकत्वस्य फलमाह—ह्रस्वो नपुंसक इति । गोपायतीति । रक्षतीत्यर्थः । 'गुपू रक्षणे' विच् । 'आयादय आर्धधातुके वा' इत्यायप्रत्ययः । 'लोपो व्योः—' इति यलोपः । 'वेरपृक्तस्य' इति वकारलोपः । गोपाशब्द आकारान्तः । गाः पातीति । पातेर्विचि उपपदसमासे गोपाशब्द इति भावः । अधिगोपमिति । विभक्त्यर्थे-ऽव्ययीभावसमासे सुब्लुकि नपुंसकत्वे ह्रस्वत्वे सति 'नाव्ययीभावात्—' इत्यमि पूर्वरूप-

---

इति प्राचोक्तमुपेक्षितम् । नित्यसमासेषु अस्वपदविग्रहस्यैवोचितत्वात् । अभिहितेऽपीति । द्योतितेऽपीत्यर्थः । वचनसामर्थ्यादिति । सुपेत्यनुवर्त्य सुबन्तेन समास-विधानसामर्थ्यात्सप्तमी स्यादेवेति भावः । नन्वभिहितेऽधिकरणे 'प्रातिपदिकार्थमात्र—' इति प्रथमैव स्यान्न तु सप्तमीति चेत्, अत्राहुः—अधीत्यस्य सुबन्तेन समासस्यावश्य-कत्वेऽधिशब्दद्योत्याधिकरणार्थवाचकविभक्तेरेवेह स्वीकर्तुमुचितत्वादिति । यत्तु प्रसाद-कृता व्याख्यातम्—तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाभिहितेऽपि सप्तमी स्यादेवेति । तन्न, परिगणनस्याकरे प्रत्याख्यातत्वात् 'कर्मणि द्वितीया' इति सूत्रे स्वय-मपि तथैवोक्तत्वात् । 'क्रमादमुं नारद इत्यबोधि सः' इति प्रयोगविरोधाच्च । अत्र व्याचक्षते—'वचनग्रहणं विभक्त्यादिभिः प्रत्येकं संबध्यते' 'साकल्यान्तेषु' इत्येव वक्तव्ये वचनग्रहणात् । एवं च तत्सामर्थ्याद्विभक्त्यर्थमात्रवृत्तेरव्ययस्येह ग्रहणम् । तेन वृक्ष-स्योपरि, वृक्षस्य पुर इत्यत्र समासो न भवति । उपर्यादयो हि दिग्देशकालेष्वपि वर्तन्ते न तु विभक्त्यर्थमात्रे । अत एव 'क्रमादमुं नारद इत्यबोधि सः' इत्यादौ नातिप्रसङ्गः, इति शब्दस्य सर्वनामवत्प्रकृतपरामर्शकत्वेन कर्मत्वमात्रानभिधायकत्वात् । एवं च विभक्तिशब्दः सप्तम्यां पर्यवस्यति । अत एव परिशिष्टे—'अधिकरणे' इत्येव सूत्रितम् । पाणिनिस्तु मात्रालाघवमभिप्रेत्य विभक्तिशब्दं प्रायुङ्क्त' इति । अन्ये तु—'लाघवात् दिक्समीपसमृद्धि—' इति वक्तव्ये विभक्तिग्रहणाद्विभक्तिशब्दो न सप्तम्यां पर्यवस्यति ।

पमुपकृष्णम् । समया ग्रामम्, निकषा लङ्काम्, आराद्वनादित्यत्र तु नाव्ययं
भावः, 'अभितःपरितः—' ( वा १४४२ ) 'अन्यारात्—' ( सू ५९५ ) इ
द्वितीयापञ्चम्योर्विधानसामर्थ्यात् । मद्राणां समृद्धिः 'संमद्रम्' । यवनानां व्यृ
र्दुर्यवनम् । विगता ऋद्धिर्व्यृद्धिः । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्या

---

मिति भावः । 'गोस्त्रियोः—' इति तु नात्र प्रसज्यते, स्त्रीप्रत्ययान्तत्वाभावात् । समी
इति । समीपार्थकाव्ययस्य समासे उदाहरणं वक्ष्यत इत्यर्थः । कृष्णस्य समी
मिति । लौकिकविग्रहवाक्यमेतत् । अत्र समस्यमानस्य उपशब्दस्य स्थाने समी
मिति प्रयुक्तम् । कृष्णस्य उप इति तु न विग्रहः, नित्यसमासत्वेनास्वपदविग्रहौचित्यात्
ननु समया ग्रामम्, निकषा लङ्काम्, आराद्वनात्, इत्यत्रापि समयाद्यव्ययानां समीपार्थ
त्वाद् अव्ययीभावः स्यात्, ततश्च 'ग्रामं समया, ग्रामं निकषा, वनादारात्' इति प्रयो
न स्यात् । अव्ययीभावसमासे अव्ययस्य पूर्वनिपातनियमादित्यत आह—**समयेति**
**विधानसामर्थ्यादिति** । 'समया ग्रामम्, निकषा लङ्काम्, आराद्वनात्' इत्यत्र शे
षष्ठ्यां सत्यामपि अव्ययीभावसमासे सति प्रातिपदिकावयवत्वाद् उपपदविभक्त्योः द्वित
यापञ्चम्योः षष्ठ्या वा लुकि समासात् प्रातिपदिकार्थादिविवक्षायां सर्वासु विभक्ति
जातासु यथायथम् अम्भावे तद्विकल्पे च 'समयाग्रामम्, निकषालङ्कम्, आराद्वनम्, समय
ग्रामेण, निकषालङ्केन, आराद्वनेन, समयाग्रामे, निकषालङ्के, आराद्वने' इति स्यादेव
ततश्च द्वितीयापञ्चम्योर्विधिर्व्यर्थः स्यात्, षष्ठ्यैव गतार्थत्वात् । न च समासा
पुनरुपपदविभक्ती द्वितीयापञ्चम्यौ शङ्क्ये, सकृत्प्रवृत्तयोः पुनःप्रवृत्त्ययोगात् । वस्तुतः
मध्यार्थकसमयाशब्दयोगे द्वितीयाविधानस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधान
चरितार्थत्वाद् इदमयुक्तम् । न चैवं सति 'समया ग्रामम्' इत्यादौ अव्ययीभावः शङ्क्
अब्भक्ष इत्यादाविव विभक्त्यर्थसमीपादिमात्रवृत्त्यव्ययस्यैव ग्रहणात् समयानिक
ऽऽराच्छब्दानां चाधिकरणशक्तिप्रधानतया समीपमात्रवृत्तित्वाभावात् । ग्रामस्य सम
इति हि तेषामर्थः । उपशब्दस्तु तन्मात्रवाची । उपकृष्णं भक्ता इत्यत्र कृष्णसामीप
वन्त इति बोधात् । **मद्राणां समृद्धिरिति** । समित्यव्ययपर्यायः समृद्धिश
विग्रहवाक्ये ज्ञेयः एतत्सूत्रविहितसमासस्य नित्यतया अस्वपदविग्रहः । एवमग्रे
ज्ञेयम् । **संमद्रमिति** । सर्वत्र सुब्लुगादि पूर्ववज् ज्ञेयम् । समृद्धा मद्राः सं
इत्यादौ तु नाव्ययीभावः, वचनग्रणसामर्थ्येनाव्ययार्थप्राधान्य एव तत्प्रवृत्तेरिति भा
स्पष्टम् । **यवनानां व्यृद्धिर्दुर्यवनमिति** । दुर्शब्दार्थको व्यृद्धिशब्दो वि
ज्ञेयः । **विगतेति** । अभावप्रतियोगिनीत्यर्थः । ऋद्धेरभावो व्यृद्धिरिति याव
न चार्थाभावेऽयमिति भ्रमितव्यम्, समस्यमानपदार्थाभावस्यैव तत्र विवक्षितत्वा
इह च यवनाभावस्याप्रतीतेः । यवनीयवृद्ध्यभावस्यैव प्रतीतेः । तद् ध्वनयन् अ

---

ततश्च कर्मत्वमात्रद्योतकतायाम् 'इति नारदम्' मति समासो भवत्येव' इत्याहुः ।
सक्तं स्यादिति । एतच्च 'स नपुंसकम्' इत्यतो लभ्यते । **समीप इति** । अव्य
भाव इत्यन्वर्थसंज्ञाश्रयणात्सप्तमीरूपाव्ययार्थप्राधान्य एवायं समासः । समीपवर्तिप्रा

---

१ अथ पाठो बालमनोरमानुरोधी । इत्थत्र तु 'सुमद्रम्' इति पाठः ।

योऽतिहिमम् । अत्ययो ध्वंसः । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरि-

---

भाव उदाहरति—मक्षिकाणामभावो निर्मक्षिकमिति । विग्रहे निशब्दसमानार्थ-कमभावपदमिति भावः । घटः पटो नेत्यत्र तु नाव्ययीभावः, अर्थग्रहणसामर्थ्येना-त्यन्ताभावस्यैव विवक्षितत्वात् । हिमस्यात्ययोऽतिहिममिति । अतीत्यव्यय-पर्यायः अत्ययशब्दो विग्रहे ज्ञेयः । अर्थाभावेत्यनेन पौनरुक्त्यं निरस्यति—अत्ययो ध्वंस इति । अर्थाभावशब्देनात्यन्ताभाव एव विवक्षितः । तेन पटस्य प्रागभावो निष्पटमिति न भवतीति भावः । सूत्रे असंप्रतीत्यस्य संप्रति न युज्यत इत्यर्थः । 'एतर्हि संप्रतीदानीम्' इत्यमरः । युजिक्रियान्तर्भावेण एकार्थीभावान्नञ्समासः । तदाह—निद्रा संप्रति न युज्यत इत्यतिनिद्रमिति । अतीत्यव्ययस्यासप्रत्यर्थकस्य स्थाने 'संप्रति न युज्यते' इति विग्रहवाक्यं ज्ञेयम् । सूत्रे शब्दप्रादुर्भाव इत्यनेन शब्दस्य

---

तु 'संख्ययाव्ययासन्ना–' इति बहुव्रीहिर्वक्ष्यति 'उपदशाः' इति यथा । विधानसामर्थ्या-दिति । ननु समयाग्राममित्यादौ द्वितीयाविधानसामर्थ्यान्मास्त्वव्ययीभावः, आराद्व-नादित्यत्र तु भवेदेव, 'अन्यारात्—' इति इति पञ्चमीविधानस्य दूरार्थकाराच्छब्दयोगे सावकाशत्वादिति चेत्, अत्र केचिदुत्प्रेक्षयन्ति—'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति षष्ठीपञ्चम्योः प्राप्तयोस्तदपवादतया पञ्चम्येव तेन विधीयते । तथा चान्तिकार्थकाराच्छ-ब्दयोगे षष्ठ्यपवादतया पञ्चमीविधानं निरवकाशमेवेति तत्सामर्थ्यादव्ययीभावो नेत्युक्तिः सम्यगेवेति । तदपरे न क्षमन्ते । 'अन्तिकार्थाराच्छब्दयोगे विशिष्य पञ्चमीविधाना-भावात्, 'अन्यारात्–' इति सूत्रस्य त्वन्यत्र कृतार्थत्वाच्च, सामीप्ये आराद्वनमित्यव्ययी-भावो दुर्वार एवेति । एवं हि व्याकुर्वतां 'पदस्येत्यपकर्षाभावे भृशार्थे सावकाशोऽयं यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्येत' इति 'नित्यवीप्सयोः' इति सूत्रस्थमनोरमाग्रन्थो-ऽनुकूल इति दिक् । सुमद्रमिति । उत्तरपदार्थप्राधान्ये तु 'कुगति–' इति तत्पुरुषः । समृद्धा मद्राः सुमद्राः । दुर्यवनमिति । न चार्थाभावेनेह सिद्धिः, येन समस्यते तदीयार्थाभावेऽत्र समासस्वीकारात् । न चेह यवनानामभावः, येनार्थाभावे समासः स्यात्, किं तु तदीयाया ऋद्धेरभाव इति । निर्मक्षिकमिति । संसर्गाभावेऽयं समासो न त्वन्योन्याभावेऽपि । अर्थग्रहणसामर्थ्येन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधिन एवाभावस्य ग्रहणात् । अन्योन्याभावस्य तु प्रतियोगितावच्छेदकेनैव विरोधात्तस्य च प्रकारत्वेऽप्यविशेष्यत्वात् । ये तु वदन्ति—'घटः पटो नेत्यत्रापि पटत्वात्यन्ताभाव एवार्थः, आकृत्यधिकरणन्यायेन जातेः पदार्थत्वादिति, तेषामपि मते अर्थग्रहणसामर्थ्या-देवाक्षिप्तधर्म्यभावे अयं समासो न तु धर्माभाव इति न दोषः । अत्यय इति । स्पष्टार्थमेतत्, अर्थाभावेन गतार्थत्वात् । अर्थाभावेन संसर्गाभावो विवक्षितो न त्वन्यो-न्याभावः । घटः पटो नेत्यत्रातिप्रसङ्गादिति निष्कर्षात् । संप्रति नेति । संप्रतीत्यव्य-यमिदानीमित्यर्थे । 'एतर्हि संप्रतीदानीम्' इत्यमरोक्तेः । तच्चाधिकरणशक्तिप्रधानत्वा-त्क्रियापदेनैवान्वयार्हम् । निषेधोऽपि क्रियाया एवोचितः, तदेतदाह—युज्यत इति । असंप्रतीति सौत्रप्रयोगे तु युजिक्रियान्तर्भावेण नञ्समास इति बोध्यम् । यत्तु प्रसाद-कृतोक्तम्—'असंप्रति संप्रत्यभाव इत्यर्थः । अनेन उपभोग्यवस्तुनो यो वर्तमानः कालः

शब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । पश्चाच्छब्दस्य तु नक्ष्य समासः, 'ततः पश्चात्स्रंस्यते ध्वंस्यते' इति भाष्यप्रयोगात् । योग्यतावीप्साप॰द॰ र्थानतिवृत्तिसादृश्यानि यथार्थाः । अनुरूपम्, रूपस्य योग्यमित्यर्थः । अर्थंनु प्रति प्रत्यर्थम् । प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्वने द्वितीयागर्भं वाक्यमपि । शक्तिमनतिक्रम्य यथाशक्ति । हरेः सादृश्यं सहरि

प्रकाशनं विवक्षितम्, तदाह—हरिशब्दस्य प्रकाश इतिहरि इति । इति व्ययं शब्दप्रकाशे वर्तते । तस्य हरिशब्देन स्वरूपपरेण षष्ठयन्तेन समास इति भावः विष्णोः पश्चादनुविष्णु इति । अनु इत्यव्ययं पश्चादर्थे वर्तत इत्यर्थः । भाष्येति 'अचः परस्मिन्–' इति सूत्रभाष्य इत्यर्थः । 'ततः पश्चात्' इत्यत्राव्ययीभावे तु पश्चा च्छब्दस्य पूर्वनिपातः स्यादिति भावः । एतद्भाष्यप्रयोगादेव एतत् सूत्रे तत्तदर्थबोधक पदघटकतया गृहीताव्ययेन तत्तदर्थकेनायं समासो नेति विज्ञायते । अत एव 'यद्वी ऽसादृश्ये' इति सूत्रे सादृश्यसंपत्तीति प्राप्नोतीत्येवोक्तं भाष्ये । यथाशब्देन तु भवत्नु समासः, उत्तरसूत्रारम्भात् । सूत्रे यथाशब्देन तदर्थो लक्ष्यते । यथार्थे विद्यमा मव्ययं समस्यत इति लभ्यत इत्यभिप्रेत्याह—योग्यतेति । अनुरूपमिति । अत्र इत्यव्ययं योग्यतायाम्, अतो यथार्थे वर्तत इति भावः । अर्थमर्थं प्रतीति लौकिकविग्रहवाक्यम् । अत्र वीप्सायां द्विर्वचनम् । 'लक्षणेत्थंभूताख्यान–' इति वीप्सा द्योत्यायां प्रतेः कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । समासे तु द्विर्वचनं न, समा वीप्साया द्योतितत्वाद् इति 'हयवरट्' इति सूत्रे कैयटः । प्रतिना तस्योक्तत्वादि तु तत्त्वम् । नन्वर्थमर्थं प्रतीति लौकिकविग्रहप्रदर्शनं न संभवति । नित्यसमासत्व दित्यत आह—प्रतिशब्दस्येति । सामर्थ्यादिति । अव्ययीभावसमासस्य नित्य त्वं तु शेषषष्ठ्यामपि अव्ययीभावे सुब्लुकि समासात् सर्वविभक्तीनामम्भावे तद्विक च प्रत्यर्थं प्रत्यर्थेनेत्यादिसिद्धे द्वितीयाफलकं प्रतेः कर्मप्रवचनीयत्वविधानमनर्थकं स्या दिति भावः । वस्तुतस्तु प्रतिस्थानमित्यादौ 'उपसर्गात्सुनोति–' इति षत्वाभावसंपाद कर्मप्रवचनीयत्वं चरितार्थमेव । 'अर्थमर्थं प्रति प्रत्यर्थम्' इति 'सरूपाणाम्–' इति भाष्ये प्रयोगदर्शनाद् इह वैकल्पिकसमास इति तत्त्वम् । शक्तिमनतिक्रम्य य शक्नोति । 'परावरयोगे च' इति क्त्वाप्रत्ययः । परावरत्वं च बोद्धम् । अत्र यथे

स निषिध्यते' इति । तन्न, अधिकरणशक्तिप्रधानस्य क्रिययैवान्वयार्हस्य 'निषेध प्रतियोगित्वेनान्वयस्यायुक्तत्वात्[१] । न हि भूतले घटो नास्तीत्यनेन भूतलं निषिध्यत कश्चिदभ्युपैति, येनात्र वर्तमानकालनिषेधो युक्त्यर्हः स्यात् । इतिहरीति । स्व परे षष्ठयन्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः । ततः पश्चादि सति चात्राव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपातः स्यादिति भावः । भाष्यप्रयो दिति । 'अनेकमन्यपदार्थे' इति सूत्रे 'सर्वपश्चात्' इति भाष्यप्रयोगाच्चेत्यपि बोध्यम् प्रत्यर्थमिति । वृत्तौ वीप्सान्तर्भावान्न द्विर्वचनम् । प्रतिशब्दस्येति । यत्त्वाहुः 'ग्रामस्य वृक्षं वृक्षं प्रतीत्यत्र सापेक्षत्वेन समासाभावे द्वितीयाविधानं सावकाशमिति



१ 'निषेधप्रतियोगित्वेन' इति क्वचित् पाठः ।

वक्ष्यमाणेन सहस्य सः। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्। चक्रेण युगपदिति विग्रहे—

९६० अव्ययीभावे चाकाले। (६-३-८१) सहस्य सः स्यादव्ययीभावे, न तु काले। सचक्रम्। काले तु सहपूर्वाह्णम्। सदृशः सख्या ससखि। यथार्थ-त्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम्। क्षत्राणां संपत्तिः सक्षत्रम्। ऋद्धेराधिक्यं समृद्धिः, अनुरूप आत्मभावः संपत्ति-रिति भेदः। तृणमप्यपरित्यज्य सतृणमत्ति। साकल्येनेत्यर्थः। न त्वत्र तृणभक्षणे

---

व्ययं पदार्थानतिक्रमे वर्तत इत्यर्थः। हरेः सादृश्यं सहरीति। अत्र सहेत्यव्ययं सादृश्ये वर्तत इति भावः। वक्ष्यमाणेनेति। 'अव्ययीभावे चाकाले' इत्यनेनेत्यर्थः। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठमिति। कार्यं कृतमिति शेषः। तत्तद्विभक्त्या विग्रह इति पक्षाभिप्रायेणेदम्। पूर्वस्य क्रमेण इत्यनुपूर्वम्, ततः स्वार्थे ष्यञ्। 'यद्यपि एतत्सूत्र-गृहीताव्ययेन समासो नेत्यनुपदमेवोक्तम्, तथापि सूत्रगृहीतानुनाप्यनुज्येष्ठमिति समासः, अनुपूर्वेति निर्देशात्। सूत्रे युगपच्छब्दात् स्वार्थे ष्यञ् यौगपद्यशब्दः। तद् ध्वनय-न्नाह—चक्रेण युगपदिति। युगपत्पर्यायस्य सहशब्दस्य चक्रेण इत्यनेन समासे कृते सतीत्यर्थः। युगपच्छब्देन तु न समासः, सूत्रे गृहीतत्वादिति भावः। अव्ययी-भावे। सहस्य सः स्यादिति। 'सहस्य सः संज्ञायाम्' इत्यतः तदनुवृत्तेरिति भावः। न तु काल इति। कालवाचके परे सहस्य सो नेत्यर्थः। सचक्रमिति। चक्रेण युगपत्प्रयुक्तमित्यर्थः। सहपूर्वाह्णमिति। समीपादौ अव्ययीभावः। सूत्रे सादृश्येति स्वार्थे ष्यञ्। तद् ध्वनयन्नाह—सदृशः सख्या ससखीति। सहेत्य-व्ययं सदृशार्थकमिति भावः। गुणभूतेऽपीति। वचनग्रहणसामर्थ्येनाव्ययार्थप्राधान्य-नियमे समासप्रवृत्तेः गुणीभूतसादृश्ये अप्राप्त्या तद्ग्रहणमिति भावः। क्षत्राणां संपत्तिः सक्षत्रमिति। क्षत्रियाणामनुरूपं कर्मेत्यर्थः। सहेत्यव्ययमत्र संपत्तौ वर्तत इति भावः। संपत्तिसमृद्धिशब्दयोः पौनरुक्त्यं परिहरति—ऋद्धेरिति। धनधान्यादेरित्यर्थः। अनुरूप इति। अनुरूपो योग्य आत्मभावः, स्वोचितं कर्मेति यावत्। तृणमप्य-परित्यज्य सतृणमत्तीति। 'परावरयोगे च' इति क्त्वा। परावरत्वं बौद्धमेव। सहशब्दोऽत्रापरिवर्जने वर्तते। न तु तृणसहभावेऽपीति भावः। नन्वेवं सति साकल्ये-

---

ऽर्थे, नित्यसमासेषु 'सविशेषणानां वृत्तिर्न' इत्यस्याप्रवृत्तेः। आनुपूर्व्येणेति। अनु-पूर्वस्य भाव आनुपूर्व्यम्, ब्राह्मणादित्वात् ष्यञ्। चक्रेण युगपदिति। अत्र केचित्—युगपच्चक्रमिति समासेनैव भवितव्यम्, युगपच्छब्दस्याप्यव्ययत्वात्, किं तु 'चक्रेणैककाले' इत्यादि विग्रहीतुमुचितमित्याहुः। सहपूर्वाह्णमिति। साकल्येऽव्ययीभावः। गुण-भूतेऽपीति। यदि सादृश्य इति नोच्यते, तर्हि यत्र सादृश्यं प्रधानमवगम्यते तत्रैव स्यात्, अव्ययार्थप्राधान्यस्याव्ययीभावे औत्सर्गिकत्वादिति भावः। अन्त इति। इदानी-मियान् प्रदेशोऽध्येतव्य इति यावतो ग्रन्थप्रदेशस्य परिग्रहः कृतस्तदपेक्षा समाप्तिरि-त्यन्तशब्देन विवक्षिता, सा चासकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते।

---

१ यद्यपि 'यद्यपि' इति क्वचिदपि नास्ति तथापि उत्तरत्र 'तथापि' इति दर्श-नात् अस्माभिर्निवेशितम्।

तात्पर्यम् । अन्ते—अग्निग्रन्थपर्यन्तमधीते साग्नि । ६६१ यथाऽसादृश्ये (२-१-७) असादृश्य एव यथाशब्दः समस्यते । तेनेह न—यथा हरिस्त हरः । हरेरुपमानत्वं यथाशब्दो द्योतयति । तेन 'सादृश्य' इति वा 'यथार्थं' इ वा प्राप्तं निषिध्यते । ६६२ यावदवधारणे । (२—१—८) यावन्तः श्लोकास्त

कथमिदमुदाहरणं स्यादित्यत आह—साकल्येनेत्यर्थ इति । पात्रे परिविष्टं सक भक्षयतीति यावत् । न त्वत्रेति । तृणभक्षणस्याप्रसक्तेरिति भावः । अन्त इति उदाहरणं वक्ष्यत इति शेषः । सूत्रे अन्तशब्देन अन्तावयवसाहित्यं विवक्षितमित्य प्रेत्योदाहरति—अग्निग्रन्थपर्यन्तमधीते साग्नीति । अग्निशब्देन अग्निच प्रतिपादको ग्रन्थो विवक्षितः । तेनान्तावयवेन सहितं ग्रन्थमिति विग्रहः । अग्निग्र पर्यन्तमिति बहुव्रीहिः । ग्रन्थमिति अन्यपदार्थाध्याहारः । अधीत इति तु न समा प्रविष्टम् । अन्तावयवेन अग्निग्रन्थेन सहितं वेदकल्पसूत्रादिभागमधीत इत्यर्थः । कृत्स्नस्यानध्येतव्यत्वाद् अग्निग्रन्थपर्यन्ताध्ययने तत्कात्स्न्र्यानिवगमात् साकल्यात्पृथगु यथाऽसादृश्ये । असादृश्य इति छेदः, व्याख्यानात् । असादृश्ये योग्यतावीप्स पदार्थानतिवृत्तिरूपे वर्तमानं यथेत्यव्यय समस्यत इत्यर्थस्य यथार्थत्वादेव सिद्धेः नि मार्थमिदमित्याह—असादृश्य एवेति । ननु 'प्रकारवचने थाल्' इति विहि थाल्प्रत्ययान्तस्य कथं सादृश्ये वृत्तिरित्यत आह—हरेरिति । सामान्यस्य भेदको यो विशे स प्रकारः, तस्मिन् प्रकारे थालिति 'प्रकारवचने थाल्' इत्यस्यार्थः । ततश्च यद्विशे धर्मवान् हरिः तद्विशेषधर्मवान् हर इति बोधे सति यत्तच्छब्दाभ्यां तयोः प्रकार अभेदावगमाद् उपमानत्वप्रतीतिरिति भावः । तेनेति । प्राप्तमित्यत्रान्वयः । सादृश्या कत्वेनेत्यर्थः । सादृश्य इति वेति । 'अव्ययं विभक्ति–' इति सूत्रगतेन सादृश्य व मानमव्ययं समस्यत इत्यंशेन वा यथार्थे विद्यमानमव्ययं समस्यत इत्यंशेन वा प्रा मव्ययीभावसमासकार्यं निषिध्यत इति भावः । भाष्ये तु प्रकारवचने यथाशब्दः सादृश्येत्यनेनैव प्राप्तिरुक्ता, न तु यथार्थत्वेन प्राप्तिरुक्ता । यथाशब्दस्य सूत्रगृहीत तद्योगे यथार्थेत्यप्रवृत्तेरिति तदाशय इति शब्देन्दुशेखरे विस्तरः । यावदवधारण

साग्नीति । अग्निशब्दस्तत्प्रतिपादकग्रन्थे वर्तते, स च तृयान्तो नित्यं समस्यते न चैवमग्निना सहेति प्रयोगो दुर्लभ इति वाच्यम्, साहित्यमात्रस्य विवक्षायां तत्प्र गस्योपपत्तेः । अन्तत्वविवक्षायां तु समासस्य नित्यत्वादग्निग्रन्थपर्यन्तमित्यस्वपदवि दर्शितः । यत्तु केचित्-अग्निरन्तोऽस्येति प्रथमान्तेनाग्नेरन्तत्वमिति षष्ठयन्तेन वा विग्र समासोऽपि प्रथमान्तेन षष्ठयन्तेन वेत्याहुः, तन्न, सहशब्दस्यान्तवाचकत्वाभावाद त्वस्य तु सुतरामलाभात्, सहयुक्ते तृतीयाया न्याय्यत्वाच्च सतृणमत्तीत्यत्र साकल्यस्वे साग्नीत्यत्रान्तत्वस्यापि साहित्यद्योत्यतया तत्र तृतीयान्तेन समासं स्वीकृत्य इह तत्प त्यागस्य निष्प्रमाणत्वाच्च । अत्रेदं बोध्यम्–'तदधीते–' इत्यध्येतृप्रत्ययस्य वैकल्पि कत्वात्साग्नीत्यत्राण् नोक्तः । कृतेऽप्यध्येत्र णि सर्वादिः सादेश्च लुग्वक्तव्यः' इति वक्ष माणत्वात्साग्नीत्येव रूपमिति । यथाऽसा । निःसंदेहाय 'सादृश्ये यथा' इत्येव वक्तव विपरीतोच्चारणं नञः श्लेषलाभार्थमिति व्याचष्टे—असादृश्य इति । यावा

वन्तोऽच्युतप्रणामा यावच्छ्लोकम् । ६६३ सुप्प्रतिना मात्रार्थे । (२—१—९) शाकस्य लेशः शाकप्रति । मात्रार्थे किम्—वृक्षं वृक्षं प्रति विद्योतते विद्युत् । ६६४

---

इयत्तापरिच्छेद गम्ये यावदित्यव्ययं समस्यते । सोऽव्ययीभाव इत्यर्थः । यावन्त इति । यत् परिमाणे येषामिति विग्रहे 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुप्प्रत्ययः । यावदित्यव्ययमेव समस्यते, विग्रहस्तु तद्धितान्तेनैव, नित्यसमासत्वेन अस्वपदविग्रहौचित्यात् । अवधारणे किम् । यावद्दत्तं तावद्भुक्तम् । इयद् भुक्तमिति नावधारयतीत्यर्थः । सुप्प्रतिना मात्रार्थे । सुबिति छेदः । मात्रा लेशः । तस्मिन्नर्थे विद्यमानेन प्रतिना सुबन्तं समस्यत इत्यर्थः । सुबित्यनुवर्तमाने पुनः सुब्ग्रहणं संनिहितस्याव्ययमित्यस्याननुवृत्त्यर्थम् । तद् ध्वनयन्नुदाहरति—शाकस्य लेशः शाकप्रतीति । अत्र प्रतीत्यव्ययं मात्रार्थकम् । अतस्तेन शाकस्येति सुबन्तस्य समासः । समासविधौ सुबन्तस्य प्रथमानिर्दिष्टत्वेन उपसर्जनत्वात्पूर्वनिपातः, न तु प्रतेः, तस्य समासविधौ तृतीयानिर्दिष्टत्वात् । वृक्षं वृक्षं प्रतीति । अत्र प्रतेः मात्रार्थकत्वाभावाद् न तेन समासः । न च 'लक्षणेत्थम्–' इति कर्मप्रवचनीयत्वविधानसामर्थ्यादेवात्र समासो न भविष्यति, प्रति समासे द्वितीयायाः षष्ठ्या वा लुकि अविशेषात्, सकृत्प्रवृत्ततया समासात्तद्विभक्त्यनुत्पत्तेरिति वाच्यम्, वृक्षं प्रति सिञ्चति इत्यादौ 'उपसर्गात् सुनोति–' इति षत्व-

---

इति । यत्परिमाणमेषां ते । 'यत्तदेतेभ्यः–' इति वतुप् । यावच्छ्लोकमिति । यावदित्यव्ययं समस्यते, विग्रहस्तु तद्धितान्तेनेत्यस्वपदविग्रहत्वमस्त्येव । अवधारणे किम्, यावद्दत्तं तावद्भुक्तम्, कियद् भुक्तं वा नावधारयतीत्यर्थः । सुप्प्रतिना । सुबित्यनुवर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थमिति ध्वनयन्नुदाहरति—शाकप्रतीति । नन्वारम्भसामर्थ्यादव्ययभिन्नमेव सुप्समस्यत इति चेत्, अत्राहुः—पुनः सुब्ग्रहणाभावे दोषामन्यमहः, दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाव्ययान्येव मा[illegible]र्थे प्रतिना समस्येरन्, तथा च दिवसस्य लेशो दिवाप्रति दोषाप्रतीत्यादीनामेवोदाहरणत्वं संभाव्येतेति । वृक्षं प्रतीति । ननु लक्षणादौ प्रतेः कर्मप्रवचनीसंज्ञाविधानसामर्थ्याद् द्वितीयागर्भं वाक्यमेव स्यात्, न तु समासः, तस्य लेशार्थे सावकाशत्वादिति चेत् । मैवम्, वृक्षं प्रति सिञ्चन्तीत्यादौ षत्वनिवारकत्वेन कर्मप्रवचनीयसंज्ञाविधानस्य चरितार्थत्वान्मात्रार्थग्रहणाभावे लक्षणादावप्यनेन समासप्रसङ्गात् । वीप्सायामव्ययीभावे तु प्रत्यादेः पूर्वनिपातत्वे प्रत्यर्थं सिञ्चन्तीत्यादौ षत्वाप्रसक्त्या कर्मप्रवचनीयविधानस्याचरितार्थतया तत्सामर्थ्याद् द्वितीयागर्भं वाक्यमपीत्युक्तं मूलकृता 'अव्ययं विभक्ति–' इति सूत्रे । अत्र नव्याः—प्रत्यर्थमित्यव्ययीभावे वीप्सायां द्योतकत्वेन विद्यमानमव्ययं समस्यते । वीप्साद्योतकस्य यदि कर्मप्रवचनीयसंज्ञाविधिः स्वीक्रियते, तदापि प्रतिस्तवनं प्रतिस्थानमित्यादौ षत्वनिवारणाय प्रतीत्यस्य कर्मप्रवचनीसंज्ञा चरितार्थैव । वस्तुतस्तु वीप्सायां विषयभूतायां प्रत्यादेः कर्मप्रवचनीयसंज्ञा, न तु वीप्साद्योतकस्यैव । अन्यथा वृक्षं वृक्षं प्रति सिचन्तीत्यत्र 'द्विर्वचनेनैव वीप्सा द्योत्यते । प्रतिशब्दस्तु क्रियया संबध्यते । कर्मणि द्वितीया । कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न' इत्यादिमनोरमाग्रन्थो 'लक्षणेत्थंभूता–' इति सूत्रस्थो दत्तजलाञ्जलिः

अक्षशलाकासंख्याः परिणा। (२—१—१०) द्यूतव्यवहारे पराजय एवा समासः। अक्षेण विपरीतं वृत्तमक्षपरि। शलाकापरि। एकपरि। ६६५ विभाषा। (२—१—११) अधिकारोऽयम्। एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम्। 'सुप्सुपा' इति तु न नित्यसमासः। अव्ययम् इत्यादिसमासविधानाज्ज्ञापकात्।

निवृत्त्या कर्मप्रवचनीयत्वस्य चरितार्थत्वादित्यन्यत्र विस्तरः। अक्षशलाका। समस्यन्ते सोऽव्ययीभाव इति शेषः। द्यूतव्यवहार इति। वार्तिकमिदम्। इदं द्यूतं ताव पञ्चभिः अक्षैः शलाकाभिर्वा भवति। यदि अक्षाः शलाका वा कृत्स्ना उत्ताना अवा ञ्चो वा पतन्ति, तदा पातयिता जयति। अन्यथा पराजयत इति स्थितिः। अक्षेणेति। कर्तरि तृतीया। विपरीतं वृत्तमित्यत्र वृतेर्भावे क्तः। विपरीतमिति क्रियाविशेषणम् जये यथा परिवर्तितव्यं न तथा परिवृत्तमित्यर्थः। शलाकापरीति। शलाकया विपरीतं वृत्तमिति भावः। एकपरीति। एकेन विपरीतं वृत्तमित्यर्थः। एवं द्विपरि त्रिपरि इत्यादि। विभाषा। अधिकारोऽयमिति। ततश्च उत्तरत्र समासविधि एतदनुवर्तत इति लभ्यते। ननु 'प्राक्कडारात् समासः' इत्यत ऊर्ध्वं 'सह सुपा' इत्यत प्रागेव कुतो विभाषाधिकारो न कृत इत्यत आह—एतत्सामर्थ्यादिति। मध्ये विभाषाधिकारपाठसामर्थ्यादेवेतः प्राचीनानां नित्यसमासत्वं गम्यत इत्यर्थः। यद्यपीत प्राचीनानां विकल्पे प्रमाणाभावादेव नित्यत्वं सिद्धम्। तथापि तस्यैव लिङ्गेन दृढीकरण मिति बोध्यम्। नन्वेवं सति 'सुप्सुपा' इत्यपि नित्यसमासः स्यात्। ततश्च पूर्वं भूत इति लौकिकविग्रहवाक्यमनुपपन्नं स्यात्। 'सुप्सुपा' इति विषये विस्पष्टं पटुः विस्पष्ट पटुरिति विग्रहप्रदर्शनपरम् 'आ कडारात्—' इति सूत्रस्थभाष्यमपि विरुध्येतेत्यत आह सुप्सुपेति तु न नित्यसमास इति। कुत इत्यत आह—अव्ययमित्यादीति 'आ कडारात्' इत्येव सिद्धे 'प्राक्कडारात्' इति प्राग्ग्रहणं समाससंज्ञाया अव्ययीभावादि संज्ञासमावेशार्थम्। अन्यथा एकसंज्ञाधिकारात् पर्यायः स्यादिति 'आ कडारात्—' इति सूत्रे भाष्ये स्थितम्। तत्र 'अव्ययं विभक्ति—' इत्याद्यव्ययीभावादिविधिषु 'सुप्सुपा' इति

स्यात्। ततश्च संज्ञाविधानसामर्थ्यस्योपक्षाणत्वाद् अर्थमर्थं प्रतीत्यादिभाव्यप्रयोगा देव द्वितीयागर्भं वाक्यमपि भवत्वीत्येवं व्याख्येयमित्याहुः। पराजयं द्योतयितुमाह— विपरीतं वृत्तमिति। पूर्वं जये यथा वृत्तं तथा न वृत्तमित्यर्थः। एकपरीति एकेन विपरीतं वृत्तमित्यर्थः। एवं द्विपरीत्यादि—'विभाषाऽपपरिबहिर्—' इति यो विभज्य व्याचष्टे—विभाषेति। इतः प्राचीनानां समासानां टिघुभादिसंज्ञानामि वाग्रहणाभावान्नित्यत्वं न्यायत एव सिद्धम्, तच्च लिङ्गेनापि द्रढयति—एतदिति। नन्वे 'सुप्सुपा' इत्यपि नित्यं स्यात्, इष्टापत्तौ तु 'पूर्वं भूतो भूतपूर्वः, सुप्सुपेति समासः' इति वृत्तिग्रन्थो विरुध्येत। तथा शाकलसूत्रे 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इत्य 'नित्यग्रहणेन नार्थः, इदमपि सिद्धं भवति वाप्यामश्वो वाप्यश्वः' इति भाष्यं कैयट व्याख्यत्—'वाप्यश्व इति 'सुप्सुपा' इति समासः, 'संज्ञायाम्' इति सप्तमीसमास तु नित्यत्वात्सिद्धः प्रतिषेध इति, सोऽपि ग्रन्थो विरुध्येतेत्याशङ्कायामाह—सुप्सुपे त्विति। नन्वत्र किं प्रमाणमित्यत आह—अव्ययमित्यादीति। सुप्सुपेत्यनेन

## अथाव्ययीभावसमासप्रकरणम् । १७ ।

६४७ **समर्थः पदविधिः ।** ( २-१-१ ) पदसंबन्धी यो विधिः स

---

**अथ समासाः ।** तदेवं विभक्त्यर्थं निरूप्य तदाश्रितसमासान्निरूपयिष्यन् तदुपोद्घातत्वेनाह—**समर्थः पदविधिः ।** विधीयते इति विधिः—कार्यम् । पदस्य विधिः पदविधिरिति शेषषष्ठ्या समासः । तदाह—**पदसंबन्धी यो विधिरिति । समर्थाश्रित इति ।** सूत्रे समर्थशब्दः समर्थाश्रिते लाक्षणिक इति भावः । सामर्थ्यं द्विविधम्—व्यपेक्षालक्षणम् एकार्थीभावलक्षणं च न । तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परान्वयः तद् व्यपेक्षाभिधं सामर्थ्यम्, विशिष्टा अपेक्षा व्यपेक्षेति व्युत्पत्तेः, संबद्धार्थः समर्थ इति व्युत्पत्तेश्च । इदं च राज्ञः पुरुष इत्यादिवाक्य एव भवति । तत्र च एकैकस्य शब्दस्य यो यः संनिहितो योग्यश्च तेन तेनान्वयो भवति । यथा राज्ञः पुरुषोऽश्वश्चेति, राज्ञो देवदत्तस्य च पुरुष इति, ऋद्ध-

---

' **समर्थः पदविधिः ।** सामर्थ्यं च द्विविध व्यपेक्षालक्षणमेकार्थीभावलक्षणं चेति । तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परसंबन्धः सा व्यपेक्षा । सैव वाक्ये राज्ञः पुरुष इत्यादौ । तत्र ह्यपेक्षायां सत्यां यो यः संनिहितो योग्यश्च तेन तेन संबन्धोऽभ्युपेयते । यथा राज्ञः पुरुषोऽश्वश्च । राज्ञो देवदत्तस्य च पुरुष इति । एकार्थीभावस्तु राजपुरुष इत्यादिवृत्तावेव । स च प्रक्रियादशायां पृथगर्थत्वेन प्रथम-गृहीतस्य विशिष्टैकार्थत्वरूपः । अत एव राजपुरुष इत्यत्र राज्ञि ऋद्धस्येति विशेषणं नान्वेति पदार्थैकदेशत्वात् । न चैवं देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः, तत्रापि देवदत्तोत्तरषष्ठ्यर्थस्य गुरुणान्वयादिति वाच्यम्, देवदत्तस्य प्रधानभूतकुलेनैवान्व-यात् । संबन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः, न तु तदितरः । उक्तं च 'समुदायेन संबन्धो येषां गुरुकुलादिना । संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह' इति । यद्वा-ऽसंबन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः । उक्तं च—'संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते' इति । नन्वेवं राज्ञोऽपि नित्यसापेक्षत्वादेकदेशत्वेऽपि ऋद्धस्येति विशेषणेनान्वयोऽस्तु । मैवम्, राज्ञ ईशितुरीशितव्यं प्रति साकाङ्क्षत्वेऽपि ऋद्धं प्रत्यनाकाङ्क्षत्वात् । ननु वाक्ये क्लृप्ते-नैवावयवशक्त्योपपत्तौ विशिष्टार्थविषयकशक्त्यन्तरमेव मास्तु । सत्यम्—'बहूनां वृत्ति-धर्माणां वचनैरेव साधने । स्यान्महद्गौरवं तस्मादेकार्थीभाव आस्थितः ॥ चकारादि निषेधोऽथ बहुव्युत्पत्तिभञ्जनम । कर्तव्यं ते, न्यायसिद्धं त्वस्माकं तदिति स्थिम् । तथाहि—धवखदिराविति वृत्त्यैव क्रोडीकृतार्थत्वाच्चकारो न प्रयुज्यते, तथा चित्रग्वादौ ऽत्पदम् । त्वया तु वचनं कर्तव्यम् । निरूढथलक्षणा तु शक्तितो नातीव भिद्यते । किंच प्राप्तमुदकं यमिति व्यस्ते समीचीनमुदकमिति विशेषणवत्समस्तेऽपि उदकविशेषण-योगः समासघटकपदार्थानां प्राप्तः, स च 'वृत्तस्य विशेषणयोगो न' इति वचनेनैव



वारणीयः । नामार्थयोरभेदान्वयः प्रत्ययार्थः प्रधानम् इति व्युत्पत्तित्यागश्च, प्राप्तो-

स्य राज्ञः पुरुष इति च। एकार्थीभावलक्षणसामर्थ्यं तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वे पृथग् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकतारूपम् । संगतार्थं समर्थः, संसृष्टार्थः समर्थ इति व्युत्पत्तेः। संगतिः संसर्गश्च एकीभाव एव । यथा संगतं घृतं तैलेनेति एकीभूतमिति गम्यते, यथा वा संसृष्टोऽग्निरिति एकीभूत इति गम्यत इति भाष्याच्च । इदं च सामर्थ्यं राजपुरुष इत्यादिवृत्तावेव । अत एव ऋद्धस्य राजपुरुष इत्येवं राज्ञि पुरुषविशेषणे ऋद्धत्वविशेषणं नान्वेति, विशिष्टस्य एकपदार्थतया राज्ञः पदार्थैकदेशत्वात् । देवदत्तस्य गुरुकुलमित्यत्र तु उपसर्जनस्य नित्यसापेक्षत्वात् समासः। यद्वा गुरुवद्देवदत्तोऽपि विशेष्ये प्रधाने कुल एवान्वेति, तत्र गुरोः कुलस्य उत्पाद्यत्वसंबन्धेनान्वयः । देवदत्तेन तु कुलस्य तदीयगुरूत्पाद्यतयाऽन्वयः गुरुगर्भः। उक्तं च हरिणा—

> "संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
> वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ॥" इति
> "समुदायेन संबन्धो येषां गुरुकुलादिना ।
> संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥" इति च ।

एतेन 'अयश्शूल-' इति सूत्रे भाष्ये 'शिवस्य भगवतो भक्तः' इत्यर्थे शिवभागवत इत्यादि व्याख्यातम् । एकार्थीभावश्चायमलौकिकविग्रहवाक्ये कल्प्यते यथा लादेशभूतशतृशानचोः अप्रथमासामानाधिकरण्यं कल्प्यते, तद्वत्। अत एव 'लस्य अप्रथमासमानाधिकरणेनार्थेनायोगादादेशानुपपत्तिः, तस्य क्वापि प्रयोगाभावादित्याक्षिप्य आदेशे सामानाधिकरण्यं दृष्ट्वा अनुमानाद् गन्तव्यं प्रकृतेरपि तद्भवति' इति 'लटश्शतृशानचौ-' इति सूत्रभाष्ये समाहितम्। 'सिद्धानां शब्दानामन्वाख्यानात् पचन् देवदत्तं पश्येत्यादिप्रयोगदर्शनात् स्थानिनोऽपि लस्य प्रक्रियार्थं कल्पितस्य अप्रथमासामानाधिकरण्यमनुमीयते' इति कैयटः। अत्र प्रक्रियार्थं कल्पितस्येत्युक्त्या अन्यस्यापि प्रक्रियार्थं कल्पितस्य बोधकत्वकल्पना सूचिता । अलौकिकविग्रहवाक्ये श्रूयमाणानां शब्दानां क्लृप्तशक्तित्यागे मानाभावात् प्रत्येकशक्तिसहकृतया समुदायशक्त्या विशिष्टोपस्थितिः। ततश्च अयमेकार्थीभावः अजहत्स्वार्था वृत्तिरिष्यते। वृत्तिविषये पदानां प्रत्येकमनर्थकत्वमाश्रित्य जहत्स्वार्था वृत्तिस्तु नाश्रयितुं युक्ता, महाबाहुः, सुपन्थ इत्यादौ आत्वाद्यनापत्तेः, वृत्तौ महदादिशब्दानामनर्थकत्वाद् अर्थवद्ग्रहणसंभवे अनर्थकस्य 'आन्महतः-' इत्यादौ ग्रहणायोगात् । तदुक्तम्—

> 'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।' इति

---

दक इत्यादौ उदककर्तृकप्राप्तिकर्मेत्याद्यर्थाभ्युपगमात् । एकार्थीभावे तु लाघवमिति दिक् । पदग्रहणं किम्, वर्णविधौ समर्थपरिभाषा मा भूत् । तिष्ठतु दध्यानय तक्रम् इह स्यादेव यण् । विधिग्रहणं तु पदस्य विधिः पदयोर्विधिः पदानां विधिरित्यनेकविभक्त्यन्तसमासलाभार्थम् । पदस्येत्युक्तौ तु 'उपपदमतिङ्' इत्यादावेवास्योपस्थितिः स्यादित्याहुः । सूत्रे समर्थशब्दो लाक्षणिक इति ध्वनयन्नाह—समर्थाश्रित इति समर्थेति किम्, पश्यति कृष्णं श्रितो देवदत्तमित्यादौ कृष्णश्रित इत्यादि समासो मा

समर्थाश्रितो बोध्यः । ६४८ प्राक्कडारात्समासः । (२-१-३) 'कडाराः कर्मधारये' (सू ७५१) इत्यतः प्राक् समास इत्यधिक्रियते । ६४९ सह सुपा । (२-१-४) 'सह' इति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते । योगविभागस्येष्टसिद्ध्यर्थत्वात्कतिपयतिङन्तोत्तरपदोऽयं समासः । स च छन्दस्येव ।

अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः । यथा अश्वकर्णमण्डपादौ । विस्तरस्तु शब्देन्दुशेखरे मञ्जूषायां चानुसंधेयः । समर्थः किम्? पश्य कृष्णं श्रितो राममित्रम् । अत्र कृष्णश्रितयोः परस्परान्वयाभावाद्विशिष्टैकार्थोपस्थित्यजनकत्वान्न सामर्थ्यम् । प्राक्कडारात् । 'आकडारात्' इत्येव प्रागिति सिद्धे प्राग्ग्रहणमेकसंज्ञाधिकारेऽपि अव्ययीभावादिसंज्ञासमुच्चयार्थमिति भाष्ये स्पष्टम् । संपूर्वकस्य अस्यतेरेकीकरणात्मकः संश्लेषोऽर्थः । समस्यते इति अनेकं पदमिति समासः । 'अकर्तरि च कारके संज्ञायाम्' इति कर्मणि घञ् । अत एव मूले समस्यत इति वक्ष्यते । तथा । च अन्वर्थेयं संज्ञा । सह सुपा । 'सुवामन्त्रिते' इत्यतः सुवित्यनुवर्तते । सुबन्तं सुबन्तेन सहोच्चारितं समाससंज्ञं भवतीति फलति । एवं सति पर्यभूषयदित्यादौ सुबन्तस्य तिङन्तेन समासो न स्यात्, तत्राह—सहेति योगो विभज्यत इति । समाससंज्ञाया अन्वर्थत्वादेकस्याप्रसङ्गात् सुपेत्येतावतैव सहेति सिद्धे तद्ग्रहणं योगविभागार्थमिति भावः । सहेत्यत्र 'सुवामन्त्रिते–' इत्यतः सुवित्यनुवर्तते । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । 'समर्थः पदविधिः' इत्यतः समर्थग्रहणमनुवृत्तं तृतीयया विपरिणम्यते तदाह—सुबन्तमित्यादिना । समस्यत इति । एकीक्रियते प्रयोक्तृभिरित्यर्थः । समाससंज्ञां लभत इति यावत् । केचित्तु सुबन्तं कर्तृ समर्थेन समस्यते–एकीभवतीत्यर्थः । कर्तरि लट् । 'उपसर्गादस्यत्यूह्योः' इत्यात्मनेपदम् । समासशब्दोऽपि कर्तरि बाहुलकाद्घञन्त एव, कर्मणि घञन्तो वा । तथा सति समस्यत इति कर्तरि तिङन्तं फलितार्थकथनपरमित्याहुः । ननु घटो भवतीत्यत्र समासे घटभवतीत्यपि लोके प्रयोगः

भूत् । तथा वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र 'तस्यापत्यम्' इत्युपगुशब्दादण् मा भूदिति । क्वचित्तु सापेक्षत्वेऽपि भाष्यप्रामाण्याद् वृत्तिरङ्गीक्रियते । तद्यथा—किमोदनं शालीनाम् । केषां शालीनामोदनमित्यर्थः । सक्त्वाढकमापणीयानाम् । आपणीयानां सक्तूनामाढकमित्यर्थः । कुतो भवान् पाटलिपुत्रकः । क्व पाटलिपुत्रे, तत्र कस्मात्पाटलिपुत्राद्भवानागत इत्यर्थः । 'रोपधेतोः प्राचाम्' इति वुञ् । प्राक्कडारात्समासः । प्राग्ग्रहणमावर्तते, तेन पूर्वं समाससंज्ञा ततः संज्ञान्तरमपीति लभ्यते । तेनाव्ययीभावादिभिः समावेशः सिद्ध्यति । अन्यथा पर्यायः स्यात् । समसनं समासः, भावे घञ् । अनेकस्य पदस्य एकपदीभवनमित्यर्थ इत्येके । वस्तुतस्तु—'अकर्तरि च कारके–' इति कर्मणि घञ् । अन्यथा सुबन्तं समस्यत इत्युत्तरग्रन्थो न संगच्छते । ननु अन्वर्थत्वात्समासंज्ञायाः प्रत्येकमप्रसङ्गात्सहग्रहणं व्यर्थमित्याशङ्क्याह—योगो विभज्यत इति । 'सुबामन्त्रिते–' इत्यतः सुवित्यनुवर्तते तदाह—सुबन्तमिति । समस्यत इति । संपूर्वादस्यतेः कर्मणि तङ् । आचार्येणेति शेषः । समर्थेनेति तु सहयोगे तृतीया । समसनक्रियां प्रति सुबन्तं कर्म, न तु कर्तृ । यद्यपि सुबन्तस्य कर्तृत्वाभ्युपगमेऽपि 'उपसर्गा-

पर्यभूषयत् । अनुव्यचलत् । 'सुपा' । सुप्सुपा सह समस्यते । समासत्वात्प्रातिपदिकत्वम् । ६५० सुपो धातुप्रातिपदिकयोः (२—४—७१) एतयोरवयवस्य सुपो लुक्स्यात् । 'भूतपूर्वे चरट्' (सू १९९९) इति निर्देशाद् भूतशब्दस्य

---

स्यादित्यत आह—योगविभागस्येति । कतिपयेति । कतिपयानि तिङन्तानि उत्तरपदानि यस्येति विग्रहः । पर्यभूषयदिति । समासान्तोदात्तत्वे शेषनिघात इति 'कुगति–' इति सूत्रे कैयटः । देवो देवान् क्रतुना पर्यभूषयदित्यत्र तु स्वरव्यत्ययो बोध्यः । अनुव्यचलदिति । अचलदित्यनेन वेः पूर्वं समासे सति तेन अनोः समासः । न त्वनुव्योर्युगपत्समासः, सुबित्येकत्वस्य विवक्षितत्वात् । अत एव महिष्या अजायाश्च क्षीरमित्यत्र क्षीरशब्देन सुबन्तयोर्न समास इति कैयटः । सुपा । 'सुवामन्त्रिते–' इत्यतः सुवित्यनुवर्तते, समास इत्यधिकृतम्, तदाह—सुप्सुपेति । सुबन्तं सुबन्तेनेत्यर्थः । ततश्च पूर्वं भूत इति विग्रहे समाससंज्ञा स्थिता । समासत्वात् प्रातिपदिकसंज्ञेति । 'कृत्तद्धितसमासाश्च' इत्यनेनेति शेषः । सुपो धातु । धातुप्रातिपदिकयोरित्यवयवषष्ठीत्याह—एतयोरवयवस्येति । लुक् स्यादिति । 'ण्यक्षत्रियार्षञितो यूनि लुक्' इत्यतस्तदनुवृत्तेरिति भावः । न च सुप इत्यनेन सप्तमीबहुवचनस्यैव ग्रहणं किं न स्यादिति वाच्यम्, 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुग्विधानात् सुप्प्रत्याहारस्यैवात्र ग्रहणमिति ज्ञापनात् । न चैवमपि पूर्वं भूत इति लौकिकविग्रहवाक्ये परिनिष्ठितसंधिकार्ययोः सुबन्तयोः समासे सति पूर्वमित्यत्र अमि पूर्वरूपस्य एकादेशस्य परादित्वमाश्रित्य अमो लुकि समासदशायां वकारादकारो न श्रूयेत । पूर्वान्तत्वे तु परिशिष्टस्य मकारस्य सुप्त्वाभावात् कथं लुगिति वाच्यम्, 'सुपो धातु–' इति लुग्विषये 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इत्याश्रित्य संधिकार्यप्रवृत्तेः प्रागेवालौकिकविग्रहवाक्ये समासप्रवृत्तिरिति 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्ये स्थितम् । 'कृत्तद्धितसमासाश्च' इत्यत्र प्रौढमनोरमायामपि परिष्कृतमिदम् । 'भस्त्रैषा–' इति सूत्रव्याख्यावसरे प्रपञ्चितं चास्माभिः । एवं च पूर्व अम् भूत स् इत्यलौकिकविग्रहदशायामेव अमो लुक्प्रवृत्तेर्नोक्तदोषः । तथा च सुपो लुकि भूतपूर्वेति स्थितम् । ननु 'सुबन्तं सुबन्तेन समस्यते' इति समासशास्त्रे सुबन्तं प्रथमानिर्दिष्टम् । सुबन्तत्वं च द्वयोरप्यविशिष्टम् । ततश्च 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति वक्ष्यमाणोपसर्जन-

---

दस्यत्यूह्योः' इति वार्तिकेन समस्यत इत्यत्रात्मनेपदं लभ्यते, तथापि समास इति व्याख्येयग्रन्थे कर्तरि घञ् दुर्लभः । बाहुलकं तु अगतिकगतिरिति कर्मत्वाभ्युपगम एव ज्यायान् । स चेति । एतदपि योगविभागस्येष्टसिद्धयर्थत्वादेव लभ्यते । छन्दस्येवेति । यदि लोकेऽपि स्यात्तर्हि यत्प्रकुरुते इत्यादौ स्वाद्युत्पतिः स्यात् । लिङ्गसर्वनामतामभ्युपेत्य 'स्वमोर्नपुंसकात्' इति लुकि कृतेऽपि 'ह्रस्वो नपुंसके–' इति ह्रस्वः स्यादित्यादि दूषणं 'कर्मणो यमभिप्रैति–' इति सूत्रेऽस्माभिरुद्भावितम् । अनुव्यचलदिति । सुबित्येकत्वस्य विवक्षितत्वात्पर्यायेण समासो बोध्यः । समासान्तोदात्तत्वे शेषनिघात इति 'कुगति–' इति सूत्रे कैयटः । सुपो धातु । सुप इति प्रत्याहारस्य ग्रहणं 'पञ्चम्याः स्तोकादिभ्यः' इत्याद्यलुक्समासविधानाज्ज्ञापकात् । निर्देशादिति । अन्यथा हि प्रथमा-

पूर्वनिपातः। पूर्वं भूतो भूतपूर्वः। 'इवेन समासो विभक्त्यलोपश्च' (वा १२३६, १३४१)। जीमूतस्येव। ६५१ अव्ययीभावः। (२-१-५) अधिकारोऽयम्। ६५२ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु। (२-१-६) 'अव्ययम्' इति योगो विभज्यते। अव्ययं समर्थेन सह समस्यते, सोऽव्ययीभावः। ६५३ प्रथमानिर्दिष्टं समास उपसर्जनम्।

---

त्वस्य द्वयोरप्यविशिष्टत्वाद् 'उपसर्जनं पूर्वम्' इत्यन्यतरस्य पूर्वनिपाते विनिगमनाविरह इत्यत आह—भूतपूर्वे चरडिति। पूर्वं भूत इति। लौकिकविग्रहोऽयम्। पूर्वमिति क्रियाविशेषणम्। भूतपूर्व इति। समासत्वेन प्रातिपदिकत्वात् समुदायात् पुनर्यथायथं सुबुत्पत्तिरिति भावः। इवेनेति। इवेत्यव्ययेन सुबन्तस्य समासः। 'सुपो धातु—' इति लुगभावः। पूर्वपदस्य प्रकृतिसिद्धस्वरश्च भवति, न तु समासस्वर इति वक्तव्यमित्यर्थः। 'सह सुपा' इति सिद्धे समासविधानमिवशब्दस्य पूर्वनिपातनिवृत्त्यर्थम्। अन्यथा अत्र इवशब्दस्यापि सुबन्तत्वाविशेषात् समासशास्त्रे प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् पूर्वनिपातः स्यात्। जीमूतस्येवेति। अत्र जीमूतशब्दस्य पूर्वपदस्य फिट्स्वरेणान्तोदात्तत्वमेव, न तु समासस्येत्यन्तोदात्तत्वम्। अत्र यथार्थत्वप्रयुक्तोऽव्ययीभावस्तु न, 'तत्र तस्येव' इति निर्देशात्। क्वाचित्कश्चायं समासः। अत एव बह्वृचा एव पदपाठे अवगृह्णन्ति, याजुषास्तु भिन्ने एव पदे पठन्ति, 'उद्वाहुरिव वामनः' इत्यादिव्यस्तप्रयोगाश्च संगच्छन्ते। 'हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम्।' इत्यत्र तु मातरमिवेति भवितव्यम्। 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति वार्तिकस्वारस्येन प्रथमायाः कारकविभक्तित्वोचितपरभाष्येण च क्रियायोग एव प्रथमायाः प्रवृत्त्या मातेति प्रथमायाः मातृसदृशीमित्यर्थे आसाधुत्वादित्यास्तां तावत्। अव्ययीभावः। अधिकारोऽयमिति। एकसंज्ञाधिकारेऽपि अनया संज्ञया समाससंज्ञा न बाध्यत इति 'प्राक्कडारात्—' इत्यत्रोक्तम्। अव्ययं विभक्ति। विभक्त्यर्थाद्यभावेऽप्यपदिशमित्यादि साधयितुमाह—अव्ययमिति योगो विभज्यत इति। अत्र 'समर्थः पदविधिः' इत्यतः समर्थग्रहणमनुवृत्तं तृतीयान्ततया विपरिणम्यते। समास इति अव्ययीभाव इति चाधिकृतम्। तदाह—अव्ययं समर्थेनेति। सोऽव्ययीभाव इति। स समासः अव्ययीभावसंज्ञः स्यादित्यर्थः। तथा च दिशयोर्मध्यमित्यस्वपदविग्रहे मध्यार्थकस्य अपेत्यव्ययस्य दिशयोरित्यनेन समाससंज्ञा। तस्य समासस्याव्ययीभावसंज्ञा च सिद्धा। तथा च समासत्वात् प्रातिपदिकत्वे 'सुपो धातु—' इति सुब्लुकि सति दिशा अप इति स्थितम्। अत्र उपसर्जनकार्यं वक्ष्यन्नुपसर्जनसंज्ञामाह—प्रथमानिर्दिष्टम्। ननु समासे प्रथमानिर्दिष्टमुपसर्जनम् इति व्याख्याने असंभवः, समासे

---

निर्दिष्टत्वाविशेषेऽपि उपसर्जनसंज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः॥ इवेनेति। अयमपि समासः पूर्ववत् क्वाचित्क एव। तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः। 'उद्वाहुरिव वामनः' इत्यादौ व्यस्तप्रयोगश्च संगच्छत इति मनोरमायां स्थितम्। विभक्त्यलोपश्चेति। समासावयवस्य सुपोऽलुग्विधानेऽपि समासादुत्पन्नस्य सोः 'अव्ययात्—' इति लुग् भवत्येव, अनुपसर्जने तदन्तस्याप्यव्ययत्वा-

(१-२-४३) समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्। ६५४ उपसर्जनं पूर्वम्। (२-२-३०) समासे उपसर्जनं प्राक्प्रयोज्यम्। ६५५ एकविभक्ति चापूर्वनिपाते। (१-२-४४) विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यात्, न तु तस्य पूर्वनिपातः। ६५६ गोस्त्रियोरुपसर्जनस्य। (१-२-४८) उप-

---

'सति 'सुपो धातु–' इति प्रथमाया लुप्तत्वात्। समासे चिकीर्षिते प्रथमानिर्दिष्टम् इति व्याख्याने तु कृष्णं श्रितः कृष्णश्रित इत्यत्र विग्रहे कृष्णशब्दस्य द्वितीयानिर्दिष्टत्वादु- पसर्जनत्वं न स्यात्। श्रितशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वं स्यात्। अतो व्याचष्टे- समासशास्त्र इति। समासपदं समासविधायकशास्त्रपरमिति भावः। एवं च 'द्वितीया श्रित–' इति समासविधायकशास्त्रे द्वितीयान्तस्यैव कृष्णशब्दस्य द्वितीया- प्रथमानिर्दिष्टत्वादुपसर्जनत्वम्। एवं च 'अव्ययम्–' इति समासविधावपेत्यस्य प्रथमा- निर्दिष्टत्वादुपसर्जनत्वं स्थितम्। उपसर्जनं पूर्वम्। प्राक्कडारात् समास इत्यधिकृतम् समास इति प्रथमान्तं योग्यतया सप्तम्यन्तं विपरिणम्यते, तदाह—समासे उप- सर्जनं प्राक् प्रयोज्यमिति। पूर्वमित्यस्य पूर्वं प्रयोज्यमित्यर्थ इति भावः। एवं च प्रकृते अपेत्यस्य पूर्वं प्रयोगनियमः सिद्धः। अपदिशा इति स्थितम्। अत्र दिशाशब्द- स्यापि उपसर्जनत्वमाह—एकविभक्ति। 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यत समास इति उपसर्जनमिति चानुवर्तते। समास इत्यनेन विग्रहवाक्यं लक्ष्यते। एका विभक्तिर्यस्य तदेकविभक्ति, नियतविभक्तिकमिति यावत्। एवं च विग्रहे यन्नियत- विभक्तिकं तत्पूर्वनिपातभिन्नकार्ये कर्तव्य उपसर्जनं स्यादित्यर्थः। फलितमाह—विग्र- यन्नियतेति। निष्कौशाम्बिशब्द उदाहरणम्। तत्र कौशाम्ब्या निष्क्रान्तो निष्क्रान्- निष्क्रान्तेन निष्क्रान्ताय निष्क्रान्ताद् निष्क्रान्तस्य निष्क्रान्ते इति विग्रहेषु 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासे निष्कौशाम्बिः निष्कौशाम्बिं निष्कौशाम्बिना इत्यादि इति स्थितिः। अत्र कौशाम्बीशब्द एव विग्रहे नियतविभक्तिक इति तस्योपसर्जनत्व- मनेन भवति। समासशास्त्रे कौशाम्बीशब्दस्य पञ्चमीनिर्दिष्टत्वमेव, न तु प्रथमानिर्दिष्ट- त्वमिति 'प्रथमानिर्दिष्टम्–' इत्यनेनोपसर्जनत्वाप्राप्तौ वचनम्। तत्र कौशाम्बीशब्दस्य अनेन उपसर्जनत्वेऽपि न पूर्वनिपातः। तत्तद्विभक्त्यन्तैरेव समास इत्यत्र इदमेव सू- प्रमाणम्। 'तुल्यार्थैः–' इति सूत्रे भाष्ये स्पष्टमिदम्। प्रथमान्तपदेनैव समास इ- 'अनेकम्–' इति सूत्रे भाष्ये स्थितम्। प्रकृते च दिशयोर्मध्यः मध्यं मध्येनेत्यादिवि- ग्रहवाक्येषु दिशाशब्दस्य नियतविभक्तिकत्वात् समासविधौ प्रथमानिर्दिष्टत्वाभावेऽ- अनेनोपसर्जनत्वं भवति। पूर्वनिपातस्तु न भवतीति स्थितम्। गोस्त्रियोः। 'ह्रस्-

---

दिति बोध्यम्। अव्ययं विभक्ति। विभक्तिरिह कारकशक्तिः। विभज्यते अनया प्रातिपदिकार्थ इति व्युत्पत्तेः। अत एव वक्ष्यति—विभक्त्यर्थादिषु विद्यमानमव्यय- मिति। प्रथमानिर्दिष्टम्। अत्र समासपदं तद्विधायके लाक्षणिकम्। अन्यथा चिकी- र्षिते समासे यत्प्रथमान्तमिति व्याख्यानप्रसक्त्या कृष्णश्रित इत्यादौ श्रितादिष्वति- प्रसङ्ग इत्याशयेनाह—समासशास्त्र इति। विग्रह इति। अनुवर्तमानेन समास- ग्रहणेन विग्रहो लक्ष्यत इति भावः। न तु तस्येति। 'अनन्तरस्य–' इति न्यायात्।

सर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। 'अव्ययीभावश्च' (सू ४५१) इत्यव्ययत्वम्। ६५७ नाव्ययीभावादतोऽम्त्वपञ्चम्याः। (२–४–८३) अदन्तादव्ययीभावात्सुपो न लुक्, तस्य तु पञ्चमीं विना अमादेशश्च स्यात्। दिशयोर्मध्येऽपदिशम्। 'क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्।' इत्यमरः। ६५८ तृतीया सप्तम्योर्बहुलम्। (२–४–८४) अद-

नपुंसके प्रातिपदिकस्य' इत्यतो ह्रस्व इति प्रातिपदिकस्येति चानुवर्तते। उपसर्जनस्येति गोस्त्रियोर्विशेषणम्। प्रत्येकाभिप्रायमेकवचनम्। स्त्रीशब्देन स्त्रीप्रत्ययो गृह्यते। प्रत्ययग्रहणपरिभाषया तदन्तविधिः। उपसर्जनभूतस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य चेति लभ्यते। तदुभयं प्रातिपदिकस्य विशेषणम्। तदन्तविधिः तदाह—उपसर्जनमित्यादिना। अत्र च शास्त्रीयमेवोपसर्जनं गृह्यते, न त्वप्रधानमात्रम्, कुमारीमिच्छन् कुमारीवाचरन्वा ब्राह्मणः कुमारीत्यत्रातिप्रसङ्गात्। अव्ययीभावश्चेत्यव्ययत्वमिति। तथा च अव्ययीभावसमासादुत्पन्नानां सुपाम् 'अव्ययादाप्सुपः' इति लुक् स्यादिति शङ्कायामाह—नाव्ययीभावात्। अम् तु अपञ्चम्या इति छेदः। 'नाव्ययीभावादतः' इत्येकं वाक्यम्। 'ण्यक्षत्रियार्ष–' इत्यतो लुगित्यनुवर्तते। 'अव्ययादाप्सुपः' इत्यतः सुप इति च। अता अव्ययीभावो विशेष्यते, तदन्तविधिः, तदाह–अदन्तादव्ययीभावात् सुपो न लुगिति। अम् तु अपञ्चम्या इति वाक्यान्तरम्। पञ्चमीभिन्नस्य तु सुपः अमादेशः स्यात्। पञ्चम्यास्तु अम् न भवतीति लभ्यते। तदाह—तस्य पञ्चमीं विना अमादेश इति। अत्रापञ्चम्या इति प्रतिषेधोऽयम् अनन्तरत्वादम एव भवति, न तु लुङ्निषेधस्यापि। एवं चादन्तादव्ययीभावात् परस्य सुपो न लुक्, किन्त्वामादेशः। पञ्चम्यास्तु लुग् अमादेशश्च न भवतीति स्थितिः। सूत्रे एतत्सूचनार्थमेव तुशब्दः। 'अव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्येवोक्तौ तु अदन्तादव्ययीभावात् परस्य पञ्चमीभिन्नस्य सुपो लुकोऽपवादः अमादेशः स्यादित्येव लभ्येत। एवं सति पञ्चम्या अमोऽभावे 'अव्ययादाप्सुपः' इति लुक् स्यात्। अतो

सूत्रेण विहितस्य पूर्वनिपातत्वं न निषिध्यते। तेन कुमारीश्रित इत्यादो न दोषः। गोस्त्रियोः। उपसर्जनस्येति गोस्त्रियोर्विशेषणम्। एकवचनं तु प्रत्येकाभिप्रायेण। गोस्त्रीभ्यां तु प्रातिपदिकं विशेष्यते। विशेषणेन तदन्तविधिरित्याशयेनाह–उपसर्जनं य इति। उपसर्जनमिह शास्त्रीयं गृह्यते, न त्वप्रधानलक्षणम्। तेन कुमारीवाचरन्ब्राह्मणः कुमारीत्यत्र न दोष इत्युक्तम्। स्त्रीप्रत्ययान्तमिति। स्त्र्यधिकारोक्तटावाद्यन्तमित्यर्थः। तेनातिलक्ष्मीरित्यादौ नातिप्रसङ्गः। नन्वेवमपि राजकुमारीपुत्र इत्यादावतिप्रसङ्ग इति चेत्, अत्राहुः—उपसर्जनस्य ससंबन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति यद्युत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावस्तदव ह्रस्वत्वमिति भाष्यादावुक्तत्वान्न दोषः। भाष्यादावपि उत्तरपदभतयोरित्यर्थलाभस्तु 'कृत्तद्धित–' इत्यतः समासपदानुवर्तनादिति बोध्यमिति। नाव्ययी। अत्र 'अपञ्चम्याः' इति प्रतिषेधोऽनन्तरत्वादम एव, न तु व्यवहितस्यालुकोऽपि। अममेवार्थं द्योतयितुं सूत्रे तुशब्दः।



तस्य पञ्चमीं विनेति। एवं चादन्तादव्ययीभावात्परस्य पञ्चमीभिन्नस्य सुपो

न्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अपदिशम्, अपदिशे
अपदिशम्, अपदिशे । बहुलग्रहणात् सुमद्रम् उन्मत्तगङ्गम् इत्यादौ सप्तम्या नित्य
मम्भावः । 'विभक्ति—' इत्यादेरयमर्थः—विभक्त्यर्थादिषु वर्तमानमव्ययं सु
न्तेन सह समस्यते, सोऽव्ययीभावः । विभक्तौ तावत्—हरौ इत्यधिहरि
सप्तम्यर्थस्यैवात्र द्योतकोऽधिः । हरि ङि अधि इत्यलौकिकं विग्रहवाक्यम् । अ

---

लुङ् निषिध्यत इत्यास्तां तावत् । अपदिशमिति । पञ्चमीभिन्नविभक्तीनामुदाहरणम्
पञ्चम्यास्तु अपदिशादित्युदाहार्यम् । यद्यपि नपुंसकह्रस्वत्वेनाप्येतत् सिध्यति, 'अव्य
यीभावश्च' इति नपुंसकत्वस्य वक्ष्यमाणत्वात् । तथापि 'गोस्त्रियोः—'इति सूत्रं चित्र
अतिखट्व इत्याद्यर्थमावश्यकमिति इहापि न्याय्यत्वादुपन्यस्तम् । तदेवमव्ययमि
भाष्यादृष्टेनापि योगविभागेन अपदिशमिति रूपसाधनं वृद्धसंमतमित्याह—वलीबाव्य
मिति । तृतीया । 'नाव्ययीभावात्—' इत्यस्माद् अत इत्यनुवर्तते, तदाह—अदन्त
दिति । अमादेशाभावे तु 'नाव्ययीभावात्—' इत्यलुक् । ननु वेति सिद्धे किं बहुलग्रह
नेत्यत आह—बहुलग्रहणादिति । तदेवमव्ययमिति योगं विभज्य व्याख्याया तदुत्त
खण्डं व्याख्यातुमुपक्रमते—विभक्तीत्यादेरयमर्थं इति । विभक्तीत्यनेन विभक्त्य
विवक्षितः । उच्यन्त इति वचनाः । कर्मणि ल्युट् । विभक्ति, समीप, समृद्धि, व्यृ
अर्थाभाव, अत्यय, असंप्रति, शब्दप्रादुर्भाव, पश्चात् यथा, आनुपूर्व्य, यौगप
सादृश्य, संपत्ति, साकल्य, अन्त एतेषां षोडशानां द्वन्द्वः । ते च वचनाश्च इ
विग्रहः । विभक्त्यर्थादिषु वाच्येष्वित्यर्थः । अव्ययीभावः समास इति चाधिकृतम्
तदाह—विभक्त्यर्थादिष्विति । विभक्तौ तावदिति । विभक्त्यर्थे प्रथममु
ह्रियत इत्यर्थः । हरौ इत्यधिहरीति । हरौ इति लौकिकविग्रहः । तेन यावद
गम्यते तावदेवाधिहरीति समासेनाप्युच्यत इत्यर्थः । अधिशब्दस्य हरावित्यनेन अव्य
यीभावसमासे सुब्लुकि समासविधावव्ययमिति प्रथमानिर्दिष्टत्वाद् अधेः पूर्वनिपा
समासादुत्पन्नस्य सुपः 'अव्ययादाप्सुपः' इति लुगिति भावः । ननु लौकिकविग्रहे समस्य
मानः अधिशब्दः कुतो नोपात्त इत्यत आह—सप्तम्यर्थस्यैवात्र द्योतकोऽधि
रिति । तथा चाधिद्योत्यार्थस्य अधिकरणत्वस्य सप्तम्यैव उक्तत्वाद अधिशब्दो
पृथगुपात्तः, नित्यसमासतया वक्ष्यमाणत्वेन स्वपदविग्रहानौचित्यादिति भावः । न
हरौ इति परिनिष्ठतसंधिकार्यस्य समासे सति औ इत्यस्य सुपो लुकि समासे रेफा

---

लुङ् न, पञ्चम्यास्तु लुगादेशावुभावपि न भवत इति स्थितम् । अतः किम्, अ
हरि । दिशयोरिति । दिशोरिति हलन्ते विग्रहेऽपि एतदेव रूपम् । दिश्शब्द
शरदादिषु पाठाट्टच् । अपदिशमिति । पञ्चमीव्यतिरिक्तविभक्तीनामुदाहरणमिदम्
पञ्चम्यास्तु अपदिशादित्युदाहार्यम् । विभक्तौ तावदिति । तावच्छब्दः क्रमार्थः
लौकिकं विग्रहवाक्यं प्रदर्शयति—हराविति । प्राचा तु हरौ अधिकृत्येति विगृ
तम् । तदसत्, अधिहरीत्यत्र अधिकृत्येत्यर्थस्याप्रतीतेः । हरि ङीति । अलौकि
ङिशब्दस्यैव प्रवेश उचितः 'अन्तरङ्गानपि—' इति न्यायात् । अन्यथा ङेरौत्वे
अधिहरीति समासे हरिशब्देकारो दुर्लभः स्यादिति भावः । इह हरावधीति स्थि

निपातेनाभिहितेऽप्यधिकरणे वचनसामर्थ्यात्सप्तमी । ६५९ अव्ययीभावश्च । (२-४-१८) अयं नपुंसकं स्यात् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (सू ३१८) । गोपायतीति गाः पातीति वा गोपाः, तस्मिन्नित्यधिगोपम् । समीपे—कृष्णस्य समी-

---

कारः कुतः श्रूयेतेत्यत आह—हरि ङि इति । सधिकार्यात् प्रागलौकिकविग्रहवाक्य एव समासप्रवृत्तेः 'प्रत्ययोत्तरपदयोश्च' इति भाष्यसंमतत्वादिति भावः । यथा चैतत् तथा भूतपूर्वं इत्यत्रानुपमेवोक्तम् । नन्वधिना निपातेनाधिकरणत्वस्योक्तत्वात् कथं हराविति सप्तमीत्यत आह—अत्र निपातेनेति । वचनेति । सुपेत्यनुवर्त्य सुबन्ते-नात्र समाविधिसामर्थ्यात् सप्तमी स्यादेवेति भावः । वस्तुतस्तु अनभिहितसूत्रभाष्ये तिङ्कृत्तद्धितसमासैरित्येव परिगणनं दृष्टम् । अतो निपातेनाधिना अभिहितेऽप्यधि-करणत्वे सप्तमी निर्बाधा । 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इत्यत्र तु एष्टव्य इत्यध्याहार्यम् । कृताऽभिधानाद् विषवृक्षाद् द्वितीया न भवति । न च कृत्तद्धित-समासैरिति परिगणनं भाष्ये प्रत्याख्यातमिति वाच्यम्, 'कटं करोति भीष्ममुदारं दर्श-नीयम्' इत्यत्र परिगणनफलस्यान्यथासिद्धेरेव तत्रोक्तत्वादित्यास्तां तावत् । अव्ययी-भावश्च । अयं नपुंसकं स्यादिति । 'स नपुंसकम्' इत्यतः तदनुवृत्तेरिति भावः । नपुंसकत्वस्य फलमाह—ह्रस्वो नपुंसक इति । गोपायतीति । रक्षतीत्यर्थः । 'गुपू रक्षणे' विच् । 'आयादय आर्धधातुके वा' इत्यायप्रत्ययः । 'लोपो व्योः—' इति यलोपः । 'वेरपृक्तस्य' इति वकारलोपः । गोपाशब्द आकारान्तः । गाः पातीति । पातेर्विचि उपपदसमासे गोपाशब्द इति भावः । अधिगोपमिति । विभक्त्यर्थे-ऽव्ययीभावसमासे सुब्लुकि नपुंसकत्वे ह्रस्वत्वे सति 'नाव्ययीभावात्—' इत्यमि पूर्वरूप-

---

इति प्राचोक्तमुपेक्षितम् । नित्यसमासेषु अस्वपदविग्रहस्यैवोचितत्वात् । अभिहितेऽ-पीति । द्योतितेऽपीत्यर्थः । वचनसामर्थ्यादिति । सुपेत्यनुवर्त्य सुबन्तेन समास-विधानसामर्थ्यात्सप्तमी स्यादेवेति भावः । नन्वभिहितेऽधिकरणे 'प्रातिपदिकार्थमात्र—' इति प्रथमैव स्यान्न तु सप्तमीति चेत्, अत्राहुः—अधीत्यस्य सुबन्तेन समासस्यावश्य-कत्वेऽधिशब्दद्योत्याधिकरणार्थवाचकविभक्तेरेवेह स्वीकर्तुमुचितत्वादिति । यत्तु प्रसाद-कृता व्याख्यातम्—तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाभिहितेऽपि सप्तमी स्यादेवेति । तन्न, परिगणनस्याकरे प्रत्याख्यातत्वात् 'कर्मणि द्वितीया' इति सूत्रे स्वय-मपि तथैवोक्तत्वात् । 'क्रमादमुं नारद इत्यबोधि सः' इति प्रयोगविरोधाच्च । अत्र व्याचक्षते—'वचनग्रहणं विभक्त्यादिभिः प्रत्येकं संबध्यते' 'साकल्यान्तेषु' इत्येव वक्तव्ये वचनग्रहणात् । एवं च तत्सामर्थ्याद्विभक्त्यर्थमात्रवृत्तेरव्ययस्येह ग्रहणम् । तेन वृक्ष-स्योपरि, वृक्षस्य पुर इत्यत्र समासो न भवति । उपर्यादयो हि दिग्देशकालेष्वपि वर्तन्ते न तु विभक्त्यर्थमात्रे । अत एव 'क्रमादमुं नारद इत्यबोधि सः' इत्यादौ नातिप्रसङ्गः, इति शब्दस्य सर्वनामवत्प्रकृतपरामर्शकत्वेन कर्मत्वमात्रानभिधायकत्वात् । एवं च विभक्तिशब्दः सप्तम्यां पर्यवस्यति । अत एव परिशिष्टे—'अधिकरणे' इत्येव सूत्रितम् । पाणिनिस्तु मात्रालाघवमभिप्रेत्य विभक्तिशब्दं प्रायुङ्क्त' इति । अन्ये तु—'लाघवात् 'ङिसमीपसमृद्धि—' इति वक्तव्ये विभक्तिग्रहणाद्विभक्तिशब्दो न सप्तम्यां पर्यवस्यति ।

पमुपकृष्णम् । समया ग्रामम्, निकषा लङ्काम्, आराद्वनादित्यत्र तु नाव्ययी
भावः, 'अभितःपरितः—' ( वा १४४२ ) 'अन्यारात्—' ( सू ५९५) इ
द्वितीयापञ्चम्योर्विधानसामर्थ्यात् । मद्राणां समृद्धिः 'संमद्रम् । यवनानां व्यृ
र्दुर्यवनम् । विगता ऋद्धिर्व्यृद्धिः । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्या

---

मिति भावः । 'गोस्त्रियोः—' इति तु नात्र प्रसज्यते, स्त्रीप्रत्ययान्तत्वाभावात् । समी
इति । समीपार्थकाव्ययस्य समासे उदाहरणं वक्ष्यत इत्यर्थः । कृष्णस्य समी
पमिति । लौकिकविग्रहवाक्यमेतत् । अत्र समस्यमानस्य उपशब्दस्य स्थाने समी
पमिति प्रयुक्तम् । कृष्णस्य उप इति तु न विग्रहः, नित्यसमासत्वेनास्वपदविग्रहौचित्यात्
ननु समया ग्रामम्, निकषा लङ्काम्, आराद्वनात्, इत्यत्रापि समयाद्यव्ययानां समीपार्थ
त्वाद् अव्ययीभावः स्यात्, ततश्च 'ग्रामं समया, ग्रामं निकषा, वनादारात्' इति प्रयो
न स्यात् । अव्ययीभावसमासे अव्यस्य पूर्वनिपातनियमादित्यत आह—समयेति
विधानसामर्थ्यादिति । 'समया ग्रामम्, निकषा लङ्काम्, आराद्वनात्' इत्यत्र शे
षष्ठ्यां सत्यामपि अव्ययीभावसमासे सति प्रातिपदिकावयवत्वाद् उपपदविभक्त्योः द्विती
यापञ्चम्योः षष्ठ्या वा लुकि समासात् प्रातिपदिकार्थादिविवक्षायां सर्वासु विभक्ति
जातासु यथायथम् अम्भावे तद्विकल्पे च 'समयाग्रामम्, निकषालङ्कम्, आराद्वनम्, समय
ग्रामेण, निकषालङ्केन, आराद्वनेन, समयाग्रामे, निकषालङ्के, आराद्वने' इति स्यादेव
ततश्च द्वितीयापञ्चम्योर्विधिर्व्यर्थः स्यात्, षष्ठ्यैव गतार्थत्वात् । न च समासा
पुनरुपपदविभक्ती द्वितीयापञ्चम्यौ शङ्क्ये, सकृत्प्रवृत्तयोः पुनःप्रवृत्त्ययोगात् । वस्तुत
मध्यार्थकसमयाशब्दयोगे द्वितीयाविधानस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधान
चरितार्थत्वाद् इदमयुक्तम् । न चैवं सति 'समया ग्रामम्' इत्यादौ अव्ययीभावः शङ्क्य
अभक्ष इत्यादाविव विभक्त्यर्थसमीपादिमात्रवृत्त्यव्ययस्यैव ग्रहणात् समयानिक
ऽऽराच्छब्दानां चाधिकरणशक्तिप्रधानतया समीपमात्रवृत्तित्वाभावात् । ग्रामस्य समी
इति हि तेषामर्थः । उपशब्दस्तु तन्मात्रवाची । उपकृष्णं भक्ता इत्यत्र कृष्णसामीप
वन्त इति बोधात् । मद्राणां समृद्धिरिति । समित्यव्ययपर्यायः समृद्धिश
विग्रहवाक्ये ज्ञेयः एतत्सूत्रविहितसमासस्य नित्यतया अस्वपदविग्रहः । एवमग्रे
ज्ञेयम् । संमद्रमिति । सर्वत्र सुब्लुगादि पूर्ववज् ज्ञेयम् । समृद्धा मद्राः सं
इत्यादौ तु नाव्ययीभावः, वचनग्रणसामर्थ्येनाव्ययार्थप्राधान्य एव तत्प्रवृत्तेरिति भा
स्पष्टम् । यवनानां व्यृद्धिर्दुर्यवनमिति । दुर्शब्दार्थको व्यृद्धिशब्दो वि
ज्ञेयः । विगतेति । अभावप्रतियोगिनीत्यर्थः । ऋद्धेरभावो व्यृद्धिरिति याव
न चार्थाभावेऽयमिति भ्रमितव्यम्, समस्यमानपदार्थाभावस्यैव तत्र विवक्षितत्वा
इह च यवनाभावस्याप्रतीतेः । यवनीयवृद्ध्यभावस्यैव प्रतीतेः । तद् ध्वनयन् अ

---

ततश्च कर्मत्वमात्रद्योतकतायाम् 'इति नारदम्' मति समासो भवत्येव' इत्याहुः ।
सक्तं स्यादिति । एतच्च 'स नपुंसकम्' इत्यतो लभ्यते । समीप इति । अव्य
भात्र इत्यन्वर्थसंज्ञाश्रयणात्सप्तमीरूपाव्ययार्थप्राधान्य एवायं समासः । समीपवर्तिप्रा

---

१ अयं पाठो बालमनोरमानुरोधी । इतरत्र तु 'सुमद्रम्' इति पाठः ।

योऽतिहिमम् । अत्ययो ध्वंसः । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरि-

भाव उदाहरति—**मक्षिकाणामभावो निर्मक्षिकमिति** । विग्रहे निशब्दसमानार्थकमभावपदमिति भावः । घटः पटो नेत्यत्र तु नाव्ययीभावः, अर्थग्रहणसामर्थ्येनात्यन्ताभावस्यैव विवक्षितत्वात् । **हिमस्यात्ययोऽतिहिममिति** । अतीत्यव्ययपर्यायः अत्ययशब्दो विग्रहे ज्ञेयः । अर्थाभावेत्यनेन पौनरुक्त्यं निरस्यति—**अत्ययो ध्वंस इति** । अर्थाभावशब्देनात्यन्ताभाव एव विवक्षितः । तेन पटस्य प्रागभावो निष्पटमिति न भवतीति भावः । सूत्रे असंप्रतीत्यस्य संप्रति न युज्यत इत्यर्थः । 'एतर्हि संप्रतीदानीम्' इत्यमरः । युजिक्रियान्तर्भावेण एकार्थीभावान्नञ्समासः । तदाह—**निद्रा संप्रति न युज्यत इत्यतिनिद्रमिति** । अतीत्यव्ययस्यासप्रत्यर्थकस्य स्थाने 'संप्रति न युज्यते' इति विग्रहवाक्यं ज्ञेयम् । सूत्रे शब्दप्रादुर्भाव इत्यनेन शब्दस्य

तु 'संख्ययाव्ययासन्ना—' इति बहुव्रीहिर्वक्ष्यति 'उपदशाः' इति यथा । विधानसामर्थ्यादिति । ननु समयाग्राममित्यादौ द्वितीयाविधानसामर्थ्यान्मास्त्वव्ययीभावः, आराद्वनादित्यत्र तु भवेदेव, 'अन्यारात्—' इति इति पञ्चमीविधानस्य दूरार्थकाराच्छब्दयोगे सावकाशत्वादिति चेत्, अत्र केचिदुत्प्रेक्षयन्ति—'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति षष्ठीपञ्चम्योः प्राप्तयोस्तदपवादतया पञ्चम्येव तेन विधीयते । तथा चान्तिकार्थकाराच्छब्दयोगे षष्ठ्यपवादतया पञ्चमीविधानं निरवकाशमेवेति तत्सामर्थ्यादव्ययीभावो नेत्युक्तिः सम्यगेवेति । तदपरे न क्षमन्ते । 'अन्तिकार्थाराच्छब्दयोगे विशिष्य पञ्चमीविधानाभावात्, 'अन्यारात्—' इति सूत्रस्य त्वन्यत्र कृतार्थत्वाच्च, सामीप्ये आराद्वनमित्यव्ययीभावो दुर्वार एवेति । एवं हि व्याकुर्वतां 'पदस्येत्यपकर्षाभावे भृशार्थे सावकाशोऽयं यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्येत' इति 'नित्यवीप्सयोः' इति सूत्रस्थमनोरमाग्रन्थोऽनुकूल इति दिक् । **सुमद्रमिति** । उत्तरपदार्थप्राधान्ये तु 'कुगति—' इति तत्पुरुषः । समृद्धा मद्राः सुमद्राः । **दुर्यवनमिति** । न चार्थाभावेनेह सिद्धिः, येन समस्यते तदीयार्थाभावेऽत्र समासस्वीकारात् । न चेह यवनानामभावः, येनार्थाभावे समासः स्यात्, किं तु तदीयाया ऋद्धेरभाव इति । **निर्मक्षिकमिति** । संसर्गाभावेऽयं समासो न त्वन्योन्याभावेऽपि । अर्थग्रहणसामर्थ्येन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधिन एवाभावस्य ग्रहणात् । अन्योन्याभावस्य तु प्रतियोगितावच्छेदकेनैव विरोधात्तस्य च प्रकारत्वेऽप्यविशेष्यत्वात् । ये तु वदन्ति—'घटः पटो नेत्यत्रापि पटत्वात्यन्ताभाव एवार्थः, आकृत्यधिकरणन्यायेन जातेः पदार्थत्वादिति, तेषामपि मते अर्थग्रहणसामर्थ्याद्देवाक्षिप्तधर्म्यभावे अयं समासो न तु धर्माभाव इति न दोषः । **अत्यय इति** । स्पष्टार्थमेतत्, अर्थाभावेन गतार्थत्वात् । अर्थाभावेन संसर्गाभावो विवक्षितो न त्वन्योन्याभावः । घटः पटो नेत्यत्रातिप्रसङ्गादिति निष्कर्षात् । **संप्रति नेति** । संप्रतीत्यव्ययमिदानीमित्यर्थे । 'एतर्हि संप्रतीदानीम्' इत्यमरोक्तेः । तच्चाधिकरणशक्तिप्रधानत्वात्क्रियापदेनैवान्वयार्हम् । निषेधोऽपि क्रियाया एवोचितः, तदेतदाह—**युज्यत इति** । असंप्रतीति सौत्रप्रयोगे तु युजिक्रियान्तर्भावेण नञ्समास इति बोध्यम् । यत्तु प्रसादकृतोक्तम्—असंप्रति संप्रत्यभाव इत्यर्थः । अनेन उपभोग्यवस्तुनो यो वर्तमानः कालः

शब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । पश्चाच्छब्दस्य तु न
समासः, 'ततः पश्चात्स्रंस्यते ध्वंस्यते' इति भाष्यप्रयोगात् । योग्यतावीप्सा
र्थानतिवृत्तिसादृश्यानि यथार्थाः । अनुरूपम्, रूपस्य योग्यमित्यर्थः । अर्थम
प्रति प्रत्यर्थम् । प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्त
द्वितीयागर्भं वाक्यमपि । शक्तिमनतिक्रम्य यथाशक्ति । हरेः सादृश्यं सह

प्रकाशनं विवक्षितम्, तदाह—हरिशब्दस्य प्रकाश इतिहरि इति । इति
व्ययं शब्दप्रकाशे वर्तते । तस्य हरिशब्देन स्वरूपपरेण षष्ठ्यन्तेन समास इति भाव
विष्णोः पश्चादनुविष्णु इति । अनु इत्यव्ययं पश्चादर्थे वर्तत इत्यर्थः । भाष्ये
'अचः परस्मिन्—' इति सूत्रभाष्य इत्यर्थः । 'ततः पश्चात्' इत्यत्राव्ययीभावे तु प
च्छब्दस्य पूर्वनिपातः स्यादिति भावः । एतद्भाष्यप्रयोगादेव एतत् सूत्रे तत्तदर्थबोध
पदघटकतया गृहीताव्ययेन तत्तदर्थकेनायं समासो नेति विज्ञायते । अत एव 'य
ऽसादृश्ये' इति सूत्रे सादृश्यसंपत्तीति प्राप्नोतीत्येवोक्तं भाष्ये । यथाशब्देन तु भव
समासः, उत्तरसूत्रारम्भात् । सूत्रे यथाशब्देन तदर्थो लक्ष्यते । यथार्थे विद्यमा
मव्ययं समस्यत इति लभ्यत इत्यभिप्रेत्याह—योग्यतेति । अनुरूपमिति । अत्र
इत्यव्ययं योग्यतायाम्, अतो यथार्थे वर्तत इति भावः । अर्थमर्थं प्रतीति
लौकिकविग्रहवाक्यम् । अत्र वीप्सायां द्विर्वचनम् । 'लक्षणेत्थंभूताख्यान—' इति वीप्सा
द्योत्यायां प्रतेः कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । समासे तु द्विर्वचनं न, समा
वीप्साया द्योतितत्वाद् इति 'हयवट्' इति सूत्रे कैयटः । प्रतिना तस्योक्तत्वा
तु तत्त्वम् । नन्वर्थमर्थं प्रतीति लौकिकविग्रहप्रदर्शनं न संभवति । नित्यसमास
दित्यत आह—प्रतिशब्दस्येति । सामर्थ्यादिति । अव्ययीभावसमासस्य नि
त्वं तु शेषषष्ठ्यामपि अव्ययीभावे सुब्लुकि समासात् सर्वविभक्तीनामभावे तद्विक
च प्रत्यर्थं प्रत्यर्थेनेत्यादिसिद्धे द्वितीयाफलकं प्रतेः कर्मप्रवचनीयत्वविधानमनर्थकं स्या
दिति भावः । वस्तुतस्तु प्रतिस्थानमित्यादौ 'उपसर्गात्सुनोति—'इति षत्वाभावसंपाद
कर्मप्रवचनीयत्वं चरितार्थमेव । 'अर्थमर्थं प्रति प्रत्यर्थम्' इति 'सरूपाणाम्—'इति
भाष्ये प्रयोगदर्शनाद् इह वैकल्पिकसमास इति तत्त्वम् । शक्तिमनतिक्रम्य य
शक्नोति । 'परावरयोगे च' इति क्त्वाप्रत्ययः । परावरत्वं च बौद्धम् । अत्र यथे

स निषिध्यते' इति । तन्न, अधिकरणशक्तिप्रधानस्य क्रिययैवान्वयाहस्य 'निषेध
प्रतियोगित्वेनान्वयस्यायुक्तत्वात्[1] । न हि भूतले घटो नास्तीत्यनेन भूतलं निषिध्यत इ
कश्चिदभ्युपैति, येनात्र वर्तमानकालनिषेधो युक्त्यर्हः स्यात् । इतिहरीति । स्वरू
परे षष्ठ्यन्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः । ततः पश्चादिति
सति चात्राव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपातः स्यादिति भावः । भाष्यप्रयो
दिति । 'अनेकमन्यपदार्थे' इति सूत्रे 'सर्वपश्चात्' इति भाष्यप्रयोगाच्चेत्यपि बोध्यम्
प्रत्यर्थमिति । वृत्तौ वीप्सान्तर्भावान्न द्विर्वचनम् । प्रतिशब्दस्येति । यत्त्वाहुः—
'ग्रामस्य वृक्षं वृक्षं प्रतीत्यत्र सापेक्षत्वेन समासाभावे द्वितीयाविधानं सावकाशमिति

१ 'निषेधप्रतियोगित्वेन' इति क्वचित् पाठः ।

वक्ष्यमाणेन सहस्य सः । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपदिति विग्रहे—

९६० अव्ययीभावे चाकाले । (६-३-८१) सहस्य सः स्यादव्ययीभावे, न तु काले । सचक्रम् । काले तु सहपूर्वाह्णम् । सदृशः सख्या ससखि । यथार्थ-त्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम् । क्षत्राणां संपत्तिः सक्षत्रम् । ऋद्धेराधिक्यं समृद्धिः, अनुरूप आत्मभावः संपत्तिरिति भेदः । तृणमप्यपरित्यज्य सतृणमत्ति । साकल्येनेत्यर्थः । न त्वत्र तृणभक्षणे

व्ययं पदार्थानतिक्रमे वर्तत इत्यर्थः । हरेः सादृश्यं सहरीति । अत्र सहेत्यव्ययं सादृश्ये वर्तत इति भावः । वक्ष्यमाणेनेति । 'अव्ययीभावे चाकाले' इत्यनेनेत्यर्थः । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठमिति । कार्यं कृतमिति शेषः । तत्तद्विभक्त्या विग्रह इति पक्षाभिप्रायेणेदम् । पूर्वस्य क्रमेण इत्यनुपूर्वम्, ततः स्वार्थे ष्यञ् । [1]यद्यपि एतत्सूत्र-गृहीताव्ययेन समासो नेत्यनुपदमेवोक्तम्, तथापि सूत्रगृहीतानुनाप्यनुज्येष्ठमिति समासः, आनुपूर्वेति निर्देशात् । सूत्रे युगपच्छब्दात् स्वार्थे ष्यञ् यौगपद्यशब्दः । तद् ध्वनय-न्नाह—चक्रेण युगपदिति । युगपत्पर्यायस्य सहशब्दस्य चक्रेण इत्यनेन समासे कृते सतीत्यर्थः । युगपच्छब्देन तु न समासः, सूत्रे गृहीतत्वादिति भावः । अव्ययी-भावे । सहस्य सः स्यादिति । 'सहस्य सः संज्ञायाम्' इत्यतः तदनुवृत्तेरिति भावः । न तु काल इति । कालवाचके परे सहस्य सो नेत्यर्थः । सचक्रमिति । चक्रेण युगपत्प्रयुक्तमित्यर्थः । सहपूर्वाह्णमिति । समीपादौ अव्ययीभावः । सूत्रे सादृश्येति स्वार्थे ष्यञ् । तद् ध्वनयन्नाह—सदृशः सख्या ससखीति । सहेत्य-व्ययं सदृशार्थकमिति भावः । गुणभूतेऽपीति । वचनग्रहणसामर्थ्येनाव्ययार्थप्राधान्य-कृत समासप्रवृत्तेः गुणीभूतसादृश्ये अप्राप्त्या तद्ग्रहणमिति भावः । क्षत्राणां संपत्तिः सक्षत्रमिति । क्षत्रियाणामनुरूपं कर्मेत्यर्थः । सहेत्यव्ययमत्र संपत्तौ वर्तत इति भावः । संपत्तिसमृद्धिशब्दयोः पौनरुक्त्यं परिहरति—ऋद्धेरिति । धनधान्यादेरित्यर्थः । अनुरूप इति । अनुरूपो योग्य आत्मभावः, स्वोचितं कर्मेति यावत् । तृणमप्य-परित्यज्य सतृणमत्तीति । 'परावरयोगे च' इति क्त्वा । परावरत्वं बौद्धमेव । सहशब्दोऽत्रापरिवर्जने वर्तते । न तु तृणसहभावेऽपीति भावः । नन्वेवं सति साकल्ये

न, नित्यसमासेषु 'सविशेषणानां वृत्तिर्न' इत्यस्याप्रवृत्तेः । आनुपूर्व्येणेति । अनु-पूर्वस्य भाव आनुपूर्व्यम्, ब्राह्मणादित्वात् ष्यञ् । चक्रेण युगपदिति । अत्र केचित्—युगपच्चक्रमिति समासेनैव भवितव्यम्, युगपच्छब्दस्याप्यव्ययत्वात्, किं तु 'चक्रेणैककाले' इत्यादि विग्रहीतुमुचितमित्याहुः । सहपूर्वाह्णमिति । साकल्येऽव्ययीभावः । गुण-भूतेऽपीति । यदि सादृश्य इति नोच्यते, तर्हि यत्र सादृश्यं प्रधानमवगम्यते तत्रैव स्यात्, अव्ययार्थप्राधान्यस्याव्ययीभावे औत्सर्गिकत्वादिति भावः । अन्त इति । इदानी-मियान् प्रदेशोऽध्येतव्य इति यावतो ग्रन्थप्रदेशस्य परिग्रहः कृतस्तदपेक्षा समाप्तिरि-त्यन्तशब्देन विवक्षिता, सा चासकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते ।

[1] यद्यपि 'यद्यपि' इति क्वचिदपि नास्ति तथापि उत्तरत्र 'तथापि' इति दर्श-नादस्माभिर्निवेशितम् ।

तात्पर्यम् । अन्ते—अग्निग्रन्थपर्यन्तमधीते साग्नि । ६६१ यथाऽसादृश्ये (२-१-७) असादृश्य एव यथाशब्दः समस्यते । तेनेह न—यथा हरिस्त हरः । हरेरुपमानत्वं यथाशब्दो द्योतयति । तेन 'सादृश्य' इति वा 'यथार्थं' इ वा प्राप्तं निषिध्यते । ६६२ यावदवधारणे । (२—१—८) यावन्तः श्लोकास्त

---

कथमिदमुदाहरणं स्यादित्यत आह—साकल्येनेत्यर्थं इति । पात्रे परिविष्टं सक भक्षयतीति यावत् । न त्वत्रेति । तृणभक्षणस्याप्रसक्तेरिति भावः । अन्त इति उदाहरणं वक्ष्यत इति शेषः । सूत्रे अन्तशब्देन अन्तावयवसाहित्यं विवक्षितमित्य प्रेत्योदाहरति—अग्निग्रन्थपर्यन्तमधीते साग्नीति । अग्निशब्देन अग्निच प्रतिपादको ग्रन्थो विवक्षितः । तेनान्तावयवेन सहितं ग्रन्थमिति विग्रहः । अग्निग्र पर्यन्तमिति बहुव्रीहिः । ग्रन्थमिति अन्यपदार्थाध्याहारः । अधीत इति तु न समा प्रविष्टम् । अन्तावयवेन अग्निग्रन्थेन सहितं वेदकल्पसूत्रादिभागमधीत इत्यर्थः । कृत्स्नस्यानध्येतव्यत्वाद्अग्निग्रन्थपर्यन्ताध्ययने तत्कात्स्न्यानवगमात् साकल्यात्पृथगु यथाऽसादृश्ये । असादृश्य इति छेदः, व्याख्यानात् । असादृश्ये योग्यतावीप्स पदार्थानतिवृत्तिरूपे वर्तमानं यथेत्यव्यय समस्यत इत्यर्थस्य यथार्थत्वादेव सिद्धेः नि मार्थमिदमित्याह—असादृश्य एवेति । ननु 'प्रकारवचने थाल्' इति विहि थाल्प्रत्ययान्तस्य कथं सादृश्ये वृत्तिरित्यत आह—हरेरिति । सामान्यस्य भेदको यो विशे स प्रकारः, तस्मिन् प्रकारे थालिति 'प्रकारवचने थाल्' इत्यस्यार्थः । ततश्च यद्विशे धर्मवान् हरिः तद्विशेषधर्मवान् हर इति बोधे सति यत्तच्छब्दाभ्यां तयोः प्रकार अभेदावगमाद् उपमानत्वप्रतीतिरिति भावः । तेनेति । प्राप्तमित्यत्रान्वयः । सादृश्या कत्वेनेत्यर्थः । सादृश्य इति वेति । 'अव्ययं विभक्ति—' इति सूत्रगतेन सादृश्य मानमव्ययं समस्यत इत्यंशेन वा यथार्थे विद्यमानमव्ययं समस्यत इत्यंशेन वा प्रा मव्ययीभावसमासकार्यं निषिध्यत इति भावः । भाष्ये तु प्रकारवचने यथाशब्द सादृश्येत्यनेनैव प्राप्तिरुक्ता, न तु यथार्थत्वेन प्राप्तिरुक्ता । यथाशब्दस्य सूत्रगृहीत तद्योगे यथार्थेत्यप्रवृत्तेरिति तदाशय इति शब्देन्दुशेखरे विस्तरः । यावदवधार

---

साग्नीति । अग्निशब्दस्तत्प्रतिपादकग्रन्थे वर्तते, स च तृयान्तो नित्यं समस्यते न चैवमग्निना सहेति प्रयोगो दुर्लभ इति वाच्यम्, साहित्यमात्रस्य विवक्षायां तत्प्र गस्योपपत्तेः । अन्तत्वविवक्षायां तु समासस्य नित्यत्वादग्निग्रन्थपर्यन्तमित्यस्वपदवि दर्शितः । यत्तु केचित्-अग्निरन्तोऽस्येति प्रथमान्तेनाग्नेरन्तत्वमिति षष्ठयन्तेन वा वि समासोऽपि प्रथमान्तेन षष्ठयन्तेन वेत्याहुः, तन्न, सहशब्दस्यान्तवाचकत्वाभावा त्वस्य तु सुतरामलाभात्, सहयुक्ते तृतीयाया न्याय्यत्वाच्च सतृणमत्तीत्यत्र साकल्य साग्नीत्यत्रान्तत्वस्यापि साहित्यद्योत्यतया तत्र तृतीयान्तेन समासं स्वीकृत्य इह तत्प त्यागस्य निष्प्रमाणत्वाच्च । अत्रेदं बोध्यम्—'तदधीते—' इत्यध्येतृप्रत्ययस्य वैकल्पि कत्वात्साग्नीत्यत्राण् नोक्तः । कृतेऽप्यध्येत्रणि सर्वादेः सादेश्च लुग्वक्तव्यः' इति व माणत्वात्साग्नीत्येव रूपमिति । यथाऽसा । निःसंदेहाय 'सादृश्ये यथा' इत्येव वक्त विपरीतोच्चारणं नञः श्लेषलाभार्थमिति व्याचष्टे—असादृश्य इति । याव

वन्तोऽच्युतप्रणामा यावच्छ्लोकम्। ६६३ सुप्प्रतिना मात्रार्थे। (२—१—९) शाकस्य लेशः शाकप्रति। मात्रार्थे किम्—वृक्षं वृक्षं प्रति विद्योतते विद्युत्। ६६४

---

इयत्तापरिच्छेद गम्ये यावदित्यव्ययं समस्यते। सोऽव्ययीभाव इत्यर्थः। यावन्त इति। यत् परिमाणे येषामिति विग्रहे 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुप्प्रत्ययः। यावदित्यव्ययमेव समस्यतें, विग्रहस्तु तद्धितान्तेनैव, नित्यसमासत्वेन अस्वपदविग्रहौ-चित्यात्। अवधारणे किम्। यावद्दत्तं तावद्भुक्तम्। इयद् भुक्तमिति नावधारयतीत्यर्थः। सुप्प्रतिना मात्रार्थे। सुबिति छेदः। मात्रा लेशः। तस्मिन्नर्थे विद्यमानेन प्रतिना सुबन्तं समस्यत इत्यर्थः। सुबित्यनुवर्तमाने पुनः सुब्ग्रहणं संनिहितस्याव्य-यमित्यस्याननुवृत्त्यर्थम्। तद् ध्वनयन्नुदाहरति—शाकस्य लेशः शाकप्रतीति। अत्र प्रतीत्यव्ययं मात्रार्थकम्। अतस्तेन शाकस्येति सुबन्तस्य समासः। समासविधौ सुबन्तस्य प्रथमानिर्दिष्टत्वेन उपसर्जनत्वात्पूर्वनिपातः, न तु प्रतेः, तस्य समासविधौ तृतीयानिर्दिष्टत्वात्। वृक्षं वृक्षं प्रतीति। अत्र प्रतेः मात्रार्थकत्वाभावाद् न तेन समासः। न च 'लक्षणेत्थम्—' इति कर्मप्रवचनीयत्वविधानसामर्थ्यादेवात्र समासो न भविष्यति, प्रति समासे द्वितीयायाः षष्ठ्या वा लुकि अविशेषात्, सकृत्प्रवृत्ततया समासात्तद्विभक्त्य-नुत्पत्तेरिति वाच्यम्, वृक्षं प्रति सिञ्चति इत्यादौ 'उपसर्गात् सुनोति—' इति षत्व-

---

इति। यत्परिमाणमेषां ते। 'यत्तदेतेभ्यः—' इति वतुप्। यावच्छ्लोकमिति। याव-दित्यव्ययं समस्यते, विग्रहस्तु तद्धितान्तेनेत्यस्वपदविग्रहत्वमस्त्येव। अवधारणे किम्, यावद्दत्तं तावद्भुक्तम्, कियद् भुक्तं वा नावधारयतीत्यर्थः। सुप्प्रतिना। सुबित्यनु-वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थमिति ध्वनयन्नुदाहरति—शाकप्रतीति। नन्वारम्भसामर्थ्यादव्ययभिन्नमेव सुप्समस्यत इति चेत्, अत्राहुः—पुनः सुब्ग्रहणा-भावे दोषामन्यमहः, दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाव्यया-न्येव मात्रार्थे प्रतिना समस्येरन्, तथा च दिवसस्य लेशो दिवाप्रति दोषाप्रतीत्यादी-नामेवोदाहरणत्वं संभाव्येतेति। वृक्षं प्रतीति। ननु लक्षणादौ प्रतेः कर्मप्रवचनी-यसंज्ञाविधानसामर्थ्याद् द्वितीयागर्भं वाक्यमेव स्यात्, न तु समासः, तस्य लेशार्थे सावकाशत्वादिति चेत्। मैवम्, वृक्षं प्रति सिञ्चन्तीत्यादौ षत्वनिवारकत्वेन कर्मप्रवच-नीयसंज्ञाविधानस्य चरितार्थत्वान्मात्रार्थग्रहणाभावे लक्षणादावप्यनेन समासप्रसङ्गात्। वीप्सायामव्ययीभावे तु प्रत्यादेः पूर्वनिपातत्वे प्रत्यर्थं सिञ्चन्तीत्यादौ षत्वाप्रसक्त्या कर्म-प्रवचनीयविधानस्याचरितार्थतया तत्सामर्थ्याद् द्वितीयागर्भं वाक्यमपीत्युक्तं मूलकृता 'अव्ययं विभक्ति—' इति सूत्रे। अत्र नव्याः—प्रत्यर्थमित्यव्ययीभावे वीप्सायां द्योतक-त्वेन विद्यमानमव्ययं समस्यते। वीप्साद्योतकस्य यदि कर्मप्रवचनीयसंज्ञाविधिः स्वी-क्रियते, तदापि प्रतिस्तवनं प्रतिस्थानमित्यादौ षत्वनिवारणाय प्रतीत्यस्य कर्मप्रवचनी-यसंज्ञा चरितार्थैव। वस्तुतस्तु वीप्सायां विषयभूतायां प्रत्यादेः कर्मप्रवचनीयसंज्ञा, न तु वीप्साद्योतकस्यैव। अन्यथा वृक्षं वृक्षं प्रति सिचन्तीत्यत्र 'द्विर्वचनेनैव वीप्सा द्योत्यते। प्रतिशब्दस्तु क्रियया संबध्यते। कर्मणि द्वितीया। कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न' इत्यादिमनोरमाग्रन्थो 'लक्षणेत्थंभूता—' इति सूत्रस्थो दत्तजलाञ्जलिः

अक्षशलाकासंख्याः परिणा । (२—१—१०) द्यूतव्यवहारे पराजय एवा समासः । अक्षेण विपरीतं वृत्तमक्षपरि । शलाकापरि । एकपरि । ६६५ विभाषा । (२—१—११) अधिकारोऽयम् । एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम् । 'सुप्सुपा' इति तु न नित्यसमासः । अव्ययम् इत्यादिसमासविधानाज्ज्ञापकात् ।

निवृत्त्या कर्मप्रवचनीयत्वस्य चरितार्थत्वादित्यन्यत्र विस्तरः । अक्षशलाका । समस्यन्ते सोऽव्ययीभाव इति शेषः । द्यूतव्यवहार इति । वार्तिकमिदम् । इदं द्यूतं तावत् पञ्चभिः अक्षैः शलाकाभिर्वा भवति । यदि अक्षाः शलाका वा कृत्स्ना उत्ताना अवाञ्चो वा पतन्ति, तदा पातयिता जयति । अन्यथा पराजयत इति स्थितिः । अक्षेणेति । कर्तरि तृतीया । विपरीतं वृत्तमित्यत्र वृतेर्भावे क्तः । विपरीतमिति क्रियाविशेषणम् । जये यथा परिवर्तितव्यं न तथा परिवृत्तमित्यर्थः । शलाकापरीति । शलाकया विपरीतं वृत्तमिति भावः । एकपरीति । एकेन विपरीतं वृत्तमित्यर्थः । एवं द्विपरि त्रिपरि इत्यादि । विभाषा । अधिकारोऽयमिति । ततश्च उत्तरत्र समासविधिषु एतदनुवर्तत इति लभ्यते । ननु 'प्राक्कडारात् समासः' इत्यत ऊर्ध्वं 'सह सुपा' इत्यतः प्रागेव कुतो विभाषाधिकारो न कृत इत्यत आह—एतत्सामर्थ्यादिति । मध्ये विभाषाधिकारपाठसामर्थ्यदिवेतः प्राचीनानां नित्यसमासत्वं गम्यत इत्यर्थः । यद्यपीतः प्राचीनानां विकल्पे प्रमाणाभावादेव नित्यत्वं सिद्धम् । तथापि तस्यैव लिङ्गेन दृढीकरणमिति बोध्यम् । नन्वेवं सति 'सुप्सुपा' इत्यपि नित्यसमासः स्यात् । ततश्च पूर्वं भूत इति लौकिकविग्रहवाक्यमनुपपन्नं स्यात् । 'सुप्सुपा' इति विषये विस्पष्टं पटुः विस्पष्टपटुरिति विग्रहप्रदर्शनपरम् 'आ कडारात्–' इति सूत्रस्थभाष्यमपि विरुध्येतेत्यत आह— सुप्सुपेति तु न नित्यसमास इति । कुत इत्यत आह—अव्ययमित्यादीति । 'आ कडारात्' इत्येव सिद्धे 'प्राक्कडारात्' इति प्राग्ग्रहणं समाससंज्ञाया अव्ययीभावादिसंज्ञासमावेशार्थम् । अन्यथा एकसंज्ञाधिकारात् पर्यायः स्यादिति 'आ कडारात्–' इति सूत्रे भाष्ये स्थितम् । तत्र 'अव्ययं विभक्ति–' इत्याद्यव्ययीभावादिविधिषु 'सुप्सुपा' इति

स्यात् । ततश्च संज्ञाविधानसामर्थ्यस्योपक्षाणत्वाद् अर्थमर्थं प्रतीत्यादिभाव्यप्रयोगा देव द्वितीयागर्भं वाक्यमपि भवतीत्येवं व्याख्येयमित्याहुः । पराजयं द्योतयितुमाह— विपरीतं वृत्तमिति । पूर्वं जये यथा वृत्तं तथा न वृत्तमित्यर्थः । एकपरीति एकेन विपरीतं वृत्तमित्यर्थः । एवं द्विपरीत्यादि—'विभाषाऽपपरिबहिर्–' इति योग विभज्य व्याचष्टे—विभाषेति । इतः प्राचीनानां समासानां टिवुभादिसंज्ञानामिव वाग्रहणाभावान्नित्यत्वं न्यायत एव सिद्धम्, तच्च लिङ्गेनापि द्रढयति—एतदिति । नन्वेवं 'सुप्सुपा' इत्यपि नित्यं स्यात्, इष्टापत्तौ तु 'पूर्वं भूतो भूतपूर्वः, सुप्सुपेति समासः' इति वृत्तिग्रन्थो विरुध्येत । तथा शाकलसूत्रे 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इत्यत्र 'नित्यग्रहणेन नार्थः, इदमपि सिद्धं भवति वाप्यामश्वो वाप्यश्वः' इति भाष्यं कैयटो व्याख्यत्—'वाप्यश्व इति 'सुप्सुपा' इति समासः, 'संज्ञायाम्' इति सप्तमीसमासस्तु नित्यत्वात्सिद्धः प्रतिषेध इति, सोऽपि ग्रन्थो विरुध्येतेत्याशङ्कायामाह—सुप्सुपेति त्विति । नन्वत्र किं प्रमाणमित्यत आह—अव्ययमित्यादीति । सुप्सुपेत्यनेन

# अथाव्ययीभावसमासप्रकरणम् । १७ ।

६४७ समर्थः पदविधिः । ( २-१-१ ) पदसंबन्धी यो विधिः स

अथ समासाः । तदेवं विभक्त्यर्थं निरूप्य तदाश्रितसमासान्निरूपयिष्यन् तदुपोद्घातत्वेनाह— समर्थः पदविधिः । विधीयते इति विधिः—कार्यम् । पदस्य विधिः पदविधिरिति शेषषष्ठ्या समासः । तदाह—पदसंबन्धी यो विधिरिति । समर्थाश्रित इति । सूत्रे समर्थशब्दः समर्थाश्रिते लाक्षणिक इति भावः । सामर्थ्यं द्विविधम्—व्यपेक्षालक्षणम् एकार्थीभावलक्षणं च न । तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परान्वयः तद् व्यपेक्षाभिधं सामर्थ्यम्, विशिष्टा अपेक्षा व्यपेक्षेति व्युत्पत्तेः, संबद्धार्थः समर्थ इति व्युत्पत्तेश्च । इदं च राज्ञः पुरुष इत्यादिवाक्य एव भवति । तत्र च एकैकस्य शब्दस्य यो यः संनिहितो योग्यश्च तेन तेनान्वयो भवति । यथा राज्ञः पुरुषोऽश्वश्चेति, राज्ञो देवदत्तस्य च पुरुष इति, ऋद्ध-

समर्थः पदविधिः । सामर्थ्यं च द्विविध व्यपेक्षालक्षणमेकार्थीभावलक्षणं चेति । तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परसंबन्धः सा व्यपेक्षा । सैव वाक्ये राज्ञः पुरुष इत्यादौ । तत्र ह्यपेक्षायां सत्यां यो यः संनिहितो योग्यश्च तेन तेन संबन्धोऽभ्युपेयते । यथा राज्ञः पुरुषोऽश्वश्च । राज्ञो देवदत्तस्य च पुरुष इति । एकार्थीभावस्तु राजपुरुष इत्यादिवृत्तावेव । स च प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वरूपः । अत एव राजपुरुष इत्यत्र राज्ञि ऋद्धस्येति विशेषणं नान्वेति पदार्थैकदेशत्वात् । न चैवं देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः, तत्रापि देवदत्तोत्तरषष्ठ्यर्थस्य गुरुणान्वयादिति वाच्यम्, देवदत्तस्य प्रधानभूतकुलेनैवान्वयात् । संबन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः, न तु तदितरः । उक्तं च 'समुदायेन संबन्धो येषां गुरुकुलादिना । संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह' इति । यद्वा-ससंबन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः । उक्तं च—'संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते' इति । नन्वेवं राज्ञोऽपि नित्यसापेक्षत्वादेकदेशत्वेऽपि ऋद्धस्येति विशेषणेनान्वयोऽस्तु । मैवम्, राज्ञ ईशितुरीशितव्यं प्रति साकाङ्क्षत्वेऽपि ऋद्धं प्रत्यनाकाङ्क्षत्वात् । ननु वाक्ये क्लृप्तैवावयवशक्त्योपपत्तौ विशिष्टार्थविषयकशक्त्यन्तरमेव मास्तु । सत्यम्—'बहूनां वृत्तिधर्माणां वचनैरेव साधने । स्यान्महद्गौरवं तस्मादेकार्थीभाव आस्थितः ॥ चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम । कर्तव्यं ते, न्यायसिद्धं त्वस्माकं तदिति स्थितम् । तथाहि—धवखदिराविति वृत्त्यैव क्रोडीकृतार्थत्वाच्चकारो न प्रयुज्यते, तथा चित्रग्वादौ तत्पदम् । त्वया तु वचनं कर्तव्यम् । निरूढलक्षणा तु शक्तितो नातीव भिद्यते । किंच प्राप्तमुदकं यमिति व्यस्ते समीचीनमुदकमिति विशेषणवत्समस्तेऽपि उदकविशेषणयोगः समासघटकपदार्थानां प्राप्तः, स च 'वृत्तस्य विशेषणयोगो न' इति वचनेनैव वारणीयः । नामार्थयोरभेदान्वयः प्रत्ययार्थः प्रधानम् इति व्युत्पत्तित्यागश्च, प्राप्तो-

स्य राज्ञः पुरुष इति च। एकार्थीभावलक्षणसामर्थ्यं तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वे पृथग् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकतारूपम् । संगतार्थं समर्थः, संसृष्टार्थः समर्थं इति व्युत्पत्तेः। संगतिः संसर्गश्च एकीभाव एव । यथा संगतं घृतं तैलेनेति एकीभूतमिति गम्यते, यथा वा संसृष्टोऽग्निरिति एकीभूत इति गम्यत इति भाष्याच्च। इदं च सामर्थ्यं राजपुरुष इत्यादिवृत्तावेव। अत एव ऋद्धस्य राजपुरुष इत्येवं राज्ञि पुरुषविशेषणे ऋद्धत्वविशेषणं नान्वेति, विशिष्टस्य एकपदार्थतया राज्ञः पदार्थैकदेशत्वात् । देवदत्तस्य गुरुकुलमित्यत्र तु उपसर्जनस्य नित्यसापेक्षत्वात् समासः। यद्वा गुरुवद्देवदत्तोऽपि विशेष्ये प्रधाने कुल एवान्वेति, तत्र गुरुः कुलस्य उत्पाद्यत्वसंबन्धेनान्वयः। देवदत्तेन तु कुलस्य तदीयगुरूत्पाद्यतयाऽन्वयः गुरुगर्भः। उक्तं च हरिणा—

"संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ॥" इति
"समुदायेन संबन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥" इति च ।

एतेन 'अयस्शूल–' इति सूत्रे भाष्ये 'शिवस्य भगवतो भक्तः' इत्यर्थे शिवभागवत इत्यादि व्याख्यातम् । एकार्थीभावश्चायमलौकिकविग्रहवाक्ये कल्प्यते यथा लादेशभूतशतृशानचोः अप्रथमासामानाधिकरण्यं कल्प्यते, तद्वत् । अत एव 'लस्य अप्रथमासमानाधिकरणेनार्थेनायोगादादेशानुपपत्तिः, तस्य क्वापि प्रयोगाभावादित्याक्षिप्य आदेशे सामानाधिकरण्यं दृष्ट्वा अनुमानाद् गन्तव्यं प्रकृतेरपि तद्भवति' इति 'लटश्शतृशानचौ–' इति सूत्रभाष्ये समाहितम्। 'सिद्धानां शब्दानामन्वाख्यानात् पचन्तं देवदत्तं पश्येत्यादिप्रयोगदर्शनात् स्थानिनोऽपि लस्य प्रक्रियार्थं कल्पितस्य अप्रथमासामानाधिकरण्यमनुमीयते' इति कैयटः। अत्र प्रक्रियार्थं कल्पितस्येत्युक्त्या अन्यस्यापि प्रक्रियार्थं कल्पितस्य बोधकत्वकल्पना सूचिता। अलौकिकविग्रहवाक्ये श्रूयमाणानां शब्दानां क्लृप्तशक्तित्यागे मानाभावात् प्रत्येकशक्तिसहकृतया समुदायशक्त्या विशिष्टोपस्थितिः। ततश्च अयमेकार्थीभावः अजहत्स्वार्था वृत्तिरिष्यते। वृत्तिविषये पदानां प्रत्येकमनर्थकत्वमाश्रित्य जहत्स्वार्था वृत्तिस्तु नाश्रयितुं युक्ता, महाबाहुः, सुपन्थ इत्यादौ आत्त्वाद्यनपात्तेः, वृत्तौ महदादिशब्दानामनर्थकत्वाद् अर्थवद्ग्रहणसंभवे अनर्थकस्य 'आन्महतः–' इत्यादौ ग्रहणायोगात् । तदुक्तम्—

'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।' इति

---

दक इत्यादौ उदककर्तृकप्राप्तिकर्मेत्याद्यर्थाभ्युपगमात् । एकार्थीभावे तु लाघवमिति दिक्। पदग्रहणं किम्, वर्णविधौ समर्थपरिभाषा मा भूत् । तिष्ठतु दध्यानय तक्रम् इह स्यादेव यण् । विधिग्रहणं तु पदस्य विधिः पदयोर्विधिः पदानां विधिरित्यनेकविभक्त्यन्तसमासलाभार्थम् । पदस्येत्युक्तौ तु 'उपपदमतिङ्' इत्यादावेवास्योपस्थितिः स्यादित्याहुः । सूत्रे समर्थशब्दो लाक्षणिक इति ध्वनयन्नाह—समर्थाश्रित इति समर्थेति किम्, पश्यति कृष्णं श्रितो देवदत्तमित्यादौ कृष्णश्रित इत्यादि समासो मा

समर्थाश्रितो बोध्यः । ६४८ प्राक्कडारात्समासः । (२-१-३) 'कडाराः कर्मधारये' (सू ७५१) इत्यतः प्राक् समास इत्यधिक्रियते । ६४९ सह सुपा । (२-१-४) 'सह' इति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते । योगविभागस्येष्टसिद्ध्यर्थत्वात्कतिपयतिङन्तोत्तरपदोऽयं समासः । स च छन्दस्येव ।

---

अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः । यथा अश्वकर्णमण्डपादौ । विस्तरस्तु शब्देन्दुशेखरे मञ्जूषायां चानुसंधेयः । समर्थः किम्? पश्य कृष्णं श्रितो राममित्रम् । अत्र कृष्णश्रितयोः परस्परान्वयाभावाद्विशिष्टैकार्थोपस्थित्यजनकत्वान्न सामर्थ्यम् । प्राक्कडारात् । 'आकडारात्' इत्येव प्रागिति सिद्धे प्राग्ग्रहणमेकसंज्ञाधिकारेऽपि अव्ययीभावादिसंज्ञासमुच्चयार्थमिति भाष्ये स्पष्टम् । संपूर्वकस्य अस्यतेरेकीकरणात्मकः संश्लेषोऽर्थः । समस्यते इति अनेकं पदमिति समासः । 'अकर्तरि च कारके संज्ञायाम्' इति कर्मणि घञ् । अत एव मूले समस्यत इति वक्ष्यते । तथा । च अन्वर्थेयं संज्ञा । सह सुपा । 'सुबामन्त्रिते' इत्यतः सुवित्यनुवर्तते । सुबन्तं सुबन्तेन सहोच्चारितं समाससंज्ञं भवतीति फलति । एवं सति पर्यभूषयदित्यादौ सुबन्तस्य तिङन्तेन समासो न स्यात्, तत्राह—सहेति योगो विभज्यत इति । समाससंज्ञाया अन्वर्थत्वादेकस्याप्रसङ्गात् सुपेत्येतावतैव सहेति सिद्धे तद्ग्रहणं योगविभागार्थमिति भावः । सहेत्यत्र 'सुबामन्त्रिते–' इत्यतः सुवित्यनुवर्तते । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । 'समर्थः पदविधिः' इत्यतः समर्थग्रहणमनुवृत्तं तृतीयया विपरिणम्यते तदाह—सुबन्तमित्यादिना । समस्यत इति । एकीक्रियते प्रयोक्तृभिरित्यर्थः । समाससंज्ञां लभत इति यावत् । केचित्तु सुबन्तं कर्तृ समर्थेन समस्यते–एकीभवतीत्यर्थः । कर्तरि लट् । 'उपसर्गादस्यत्यूह्योः' इत्यात्मनेपदम् । समासशब्दोऽपि कर्तरि बाहुलकाद्घञन्त एव, कर्मणि घञन्तो वा । तथा सति समस्यत इति कर्तरि तिङन्तं फलितार्थकथनपरमित्याहुः । ननु घटो भवतीत्यत्र समासे घटभवतीत्यपि लोके प्रयोगः

---

भूत् । तथा वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र 'तस्यापत्यम्' इत्युपगुशब्दादण् मा भूदिति । क्वचित्तु सापेक्षत्वेऽपि भाष्यप्रामाण्याद् वृत्तिरङ्गीक्रियते । तद्यथा—किमोदनं शालीनाम् । केषां शालीनामोदनमित्यर्थः । सक्त्वाढकमापणीयानाम् । आपणीयानां सक्तूनामाढकमित्यर्थः । कुतो भवान् पाटलिपुत्रकः । द्वे पाटलिपुत्रे, तत्र कस्मात्पाटलिपुत्राद्भवानागत इत्यर्थः । 'रोपधेतोः प्राचाम्' इति वुञ् । प्राक्कडारात्समासः । प्राग्ग्रहणमावर्तते, तेन पूर्व समाससंज्ञा ततः संज्ञान्तरमपीति लभ्यते । तेनाव्ययीभावादिभिः समावेशः सिद्धचति । अन्यथा पर्यायः स्यात् । समसनं समासः, भावे घञ् । अनेकस्य पदस्य एकपदीभवनमित्यर्थ इत्येके । वस्तुतस्तु—'अकर्तरि च कारके–' इति कर्मणि घञ् । अन्यथा सुबन्तं समस्यत इत्युत्तरग्रन्थो न संगच्छते । ननु अन्वर्थत्वात्समाससंज्ञायाः प्रत्येकमप्रसङ्गात्सहग्रहणं व्यर्थमित्याशङ्क्याह—योगो विभज्यत इति । 'सुबामन्त्रिते–' इत्यतः सुवित्यनुवर्तते तदाह—सुबन्तमिति । समस्यत इति । संपूर्वादस्यतेः कर्मणि तङ । आचार्येणेति शेषः । समर्थेनेति तु सहयोगे तृतीया । समसनक्रिया प्रति सुबन्तं कर्म, न तु कर्तृ । यद्यपि सुबन्तस्य कर्तृत्वाभ्युपगमेऽपि 'उपसर्गा-

पर्यभूषयत् । अनुव्यचलत् । 'सुपा' । सुप्सुपा सह समस्यते । समासत्वात्प्रातिपदिकत्वम् । ६५० सुपो धातुप्रातिपदिकयोः (२—४—७१) एतयोरवयवस्य सुपो लुक्स्यात् । 'भूतपूर्वे चरट्' (सू १९९९) इति निर्देशाद् भूतशब्दस्य

---

स्यादित्यत आह—योगविभागस्येति । कतिपयेति । कतिपयानि तिङन्तानि उत्तरपदानि यस्येति विग्रहः । पर्यभूषयदिति । समासान्तोदात्तत्वे शेषनिघात इति 'कुगति–' इति सूत्रे कैयटः । देवो देवान् क्रतुना पर्यभूषयदित्यत्र तु स्वरव्यत्ययो बोध्यः । अनुव्यचलदिति । अचलदित्यनेन वेः पूर्वं समासे सति तेन अनोः समासः । न त्वनुव्योर्युगपत्समासः, सुबित्येकत्वस्य विवक्षितत्वात् । अत एव महिष्या अजायाश्च क्षीरमित्यत्र क्षीरशब्देन सुबन्तयोर्न समास इति कैयटः । सुपा । 'सुवामन्त्रिते–' इत्यतः सुबित्यनुवर्तते, समास इत्यधिकृतम्, तदाह—सुप्सुपेति । सुबन्तं सुबन्तेनेत्यर्थः । ततश्च पूर्वं भूत इति विग्रहे समाससंज्ञा स्थिता । समासत्वात् प्रातिपदिकसंज्ञेति । 'कृत्तद्धितसमासाश्च' इत्यनेनेति शेषः । सुपो धातु । धातुप्रातिपदिकयोरित्यवयवषष्ठीत्याह—एतयोरवयवस्येति । लुक् स्यादिति । 'ण्यक्षत्रियार्षञितो यूनि लुक्' इत्यतस्तदनुवृत्तेरिति भावः । न च सुप इत्यनेन सप्तमीबहुवचनस्यैव ग्रहणं किं न स्यादिति वाच्यम्, 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुग्विधानात् सुप्प्रत्याहारस्यैवात्र ग्रहणमिति ज्ञापनात् । न चैवमपि पूर्वं भूत इति लौकिकविग्रहवाक्ये परिनिष्ठितसंधिकार्ययोः सुबन्तयोः समासे सति पूर्वमित्यत्र अमि पूर्वरूपस्य एकादेशस्य परादित्वमाश्रित्य अमो लुकि समासदशायां वकारादकारो न श्रूयेत । पूर्वान्तत्वे तु परिशिष्टस्य मकारस्य सुप्त्वाभावात् कथं लुगिति वाच्यम्, 'सुपो धातु–' इति लुग्विषये 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इत्याश्रित्य संधिकार्यप्रवृत्तेः प्रागेवालौकिकविग्रहवाक्ये समासप्रवृत्तिरिति 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्ये स्थितम् । 'कृत्तद्धितसमासाश्च' इत्यत्र प्रौढमनोरमायामपि परिष्कृतमिदम् । 'भस्त्रैषा–' इति सूत्रव्याख्यावसरे प्रपञ्चितं चास्माभिः । एवं च पूर्व अम् भूत स् इत्यलौकिकविग्रहदशायामेव अमो लुक्प्रवृत्तेर्नोक्तदोषः । तथा च सुपो लुकि भूतपूर्वेति स्थितम् । ननु 'सुबन्तं सुबन्तेन समस्यते' इति समासशास्त्रे सुबन्तं प्रथमानिर्दिष्टम् । सुबन्तत्वं च द्वयोरप्यविशिष्टम् । ततश्च 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति वक्ष्यमाणोपसर्जन-

---

दस्यत्यूह्योः' इति वार्तिकेन समस्यत इत्यत्रात्मनेपदं लभ्यते, तथापि समास इति व्याख्येयग्रन्थे कर्तरि घञ् दुर्लभः । बाहुलकं तु अगतिकगतिरिति कर्मत्वाभ्युपगम एव ज्यायान् । स चेति । एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते । छन्दस्येवेति । यदि लोकेऽपि स्यात्तर्हि यत्प्रकुरुते इत्यादौ स्वाद्युत्पत्तिः स्यात् । लिङ्गसर्वनामतामभ्युपेत्य 'स्वमोर्नपुंसकात्' इति लुकि कृतेऽपि 'ह्रस्वो नपुंसके–' इति ह्रस्वः स्यादित्यादि दूषणं 'कर्मणो यमभिप्रैति–' इति सूत्रेऽस्माभिरुद्भावितम् । अनुव्यचलदिति । सुबित्येकत्वस्य विवक्षितत्वात्पर्यायेण समासो बोध्यः । समासान्तोदात्तत्वे शेषनिघात इति 'कुगति–' इति सूत्रे कैयटः । सुपो धातु । सुप इति प्रत्याहारस्य ग्रहणं 'पञ्चम्याः स्तोकादिभ्यः' इत्याद्यलुक्समासविधानाज्ज्ञापकात् । निर्देशादिति । अन्यथा हि प्रथमा-

पूर्वनिपातः। पूर्वं भूतो भूतपूर्वः। 'इवेन समासो विभक्त्यलोपश्च' (वा १२३६, १३४१)। जीमूतस्येव। ६५१ अव्ययीभावः। (२-१-५) अधिकारोऽयम्। ६५२ **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्धयर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु।** (२-१-६) 'अव्ययम्' इति योगो विभज्यते। अव्ययं समर्थेन सह समस्यते, सोऽव्ययीभावः। ६५३ **प्रथमानिर्दिष्टं समास उपसर्जनम्।**

---

त्वस्य द्वयोरप्यविशिष्टत्वाद् 'उपसर्जनं पूर्वम्' इत्यन्यतरस्य पूर्वनिपाते विनिगमनाविरह इत्यत आह—भूतपूर्वे चरडिति। पूर्वं भूत इति। लौकिकविग्रहोऽयम्। पूर्वमिति क्रियाविशेषणम्। भूतपूर्व इति। समासत्वेन प्रातिपदिकत्वात् समुदायात् पुनर्यथायथं सुबुत्पत्तिरिति भावः। इवेनेति। इवेत्यव्ययेन सुबन्तस्य समासः। 'सुपो धातु–' इति लुगभावः। पूर्वपदस्य प्रकृतिसिद्धस्वरश्च भवति, न तु समासस्वर इति वक्तव्यमित्यर्थः। 'सह सुपा' इति सिद्धे समासविधानमिवशब्दस्य पूर्वनिपातनिवृत्त्यर्थम्। अन्यथा अत्र इवशब्दस्यापि सुबन्तत्वाविशेषात् समासशास्त्रे प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् पूर्वनिपातः स्यात्। जीमूतस्येवेति। अत्र जीमूतशब्दस्य पूर्वपदस्य फिट्स्वरेणान्तोदात्तत्वमेव, न तु समासस्येत्यन्तोदात्तत्वम्। अत्र यथार्थत्वप्रयुक्तोऽव्ययीभावस्तु न, 'तत्र तस्येव' इति निर्देशात्। क्वाचित्कश्चायं समासः। अत एव बह्वृचा एव पदपाठे अवगृह्णन्ति, याजुषास्तु भिन्ने एव पदे पठन्ति, 'उद्बाहुरिव वामनः' इत्यादिव्यस्तप्रयोगाश्च संगच्छन्ते। 'हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम्।' इत्यत्र तु मातरमिवेति भवितव्यम्। 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति वार्तिकस्वारस्येन प्रथमायाः कारकविभक्तित्वोक्तिपरभाष्येण च क्रियायोग एव प्रथमायाः प्रवृत्त्या मातेति प्रथमायाः मातृसदृशीमित्यर्थे आसाधुत्वादित्यास्तां तावत्। अव्ययीभावः। अधिकारोऽयमिति। एकसंज्ञाधिकारेऽपि अनया संज्ञया समाससंज्ञा न बाध्यत इति 'प्राक्कडारात्–' इत्यत्रोक्तम्। अव्ययं विभक्ति। विभक्त्यर्थाद्यभावेऽप्यपदिशमित्यादि साधयितुमाह—अव्ययमिति योगो विभज्यत इति। अत्र 'समर्थः पदविधिः' इत्यतः समर्थग्रहणमनुवृत्तं तृतीयान्ततया विपरिणम्यते। समास इति अव्ययीभाव इति चाधिकृतम्। तदाह—अव्ययं समर्थनेति। सोऽव्ययीभाव इति। स समासः अव्ययीभावसंज्ञः स्यादित्यर्थः। तथा च दिशयोर्मध्यमित्यस्वपदविग्रहे मध्यार्थकस्य अपेत्यव्ययस्य दिशयोरित्यनेन समाससंज्ञा। तस्य समासस्याव्ययीभावसंज्ञा च सिद्धा। तथा च समासत्वात् प्रातिपदिकत्वे 'सुपो धातु–' इति सुब्लुकि सति दिशा अप इति स्थितम्। अत्र उपसर्जनकार्यं वक्ष्यन्नुपसर्जनसंज्ञामाह—प्रथमानिर्दिष्टम्। ननु समासे प्रथमानिर्दिष्टमुपसर्जनम् इति व्याख्याने असंभवः, समासे

---

निर्दिष्टत्वाविशेषेऽपि उपसर्जनसंज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः॥ इवेनेति। अयमपि समासः पूर्ववत् क्वाचित्क एव। तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः। 'उद्बाहुरिव वामनः' इत्यादौ व्यस्तप्रयोगश्च संगच्छत इति मनोरमायां स्थितम्। विभक्त्यलोपश्चेति। समासावयवस्य सुपोऽलुग्विधानेऽपि समासादुत्पन्नस्य सोः 'अव्ययात्–' इति लुग् भवत्येव, अनुपसर्जने तदन्तस्याप्यव्ययत्वा...

(१-२-४३) समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्। ६५४ उपसर्जनं पूर्वम्। (२-२-३०) समासे उपसर्जनं प्राक्प्रयोज्यम्। ६५५ एकविभक्ति चापूर्व निपाते। (१-२-४४) विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यात्, न तु तस्य पूर्वनिपातः। ६५६ गोस्त्रियोरुपसर्जनस्य। (१-२-४८) उप

---

'सति 'सुपो धातु–' इति प्रथमाया लुप्तत्वात्। समासे चिकीर्षिते प्रथमानिर्दिष्टम् इति व्याख्याने तु कृष्णं श्रितः कृष्णश्रित इत्यत्र विग्रहे कृष्णशब्दस्य द्वितीयानिर्दिष्टत्वादुपसर्जनत्वं न स्यात्। श्रितशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वं स्यात्। अतो व्याचष्टे-समासशास्त्र इति। समासपदं समासविधायकशास्त्रपरमिति भावः। एवं च 'द्वितीया श्रित–' इति समासविधायकशास्त्रे द्वितीयान्तस्यैव कृष्णशब्दस्य द्वितीयो प्रथमानिर्दिष्टत्वादुपसर्जनत्वम्। एवं च 'अव्ययम्–' इति समासविधावपेत्यस्य प्रथमा निर्दिष्टत्वादुपसर्जनत्वं स्थितम्। उपसर्जनं पूर्वम्। प्राक्कडारात् समास इत्यधिकृतम् समास इति प्रथमान्तं योग्यतया सप्तम्यन्तं विपरिणम्यते, तदाह—समासे उपसर्जनं प्राक् प्रयोज्यमिति। पूर्वमित्यस्य पूर्वं प्रयोज्यमित्यर्थ इति भावः। एवं प्रकृते अपेत्यस्य पूर्वं प्रयोगनियमः सिद्धः। अपदिशा इति स्थितम्। अत्र दिशाशब्दस्यापि उपसजनत्वमाह—एकविभक्ति। 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यत समास इति उपसर्जनमिति चानुवर्तते। समास इत्यनेन विग्रहवाक्यं लक्ष्यते। एका विभक्तिर्यस्य तदेकविभक्ति, नियतविभक्तिकमिति यावत्। एवं च विग्रहे यन्नियत विभक्तिकं तत्पूर्वनिपातभिन्नकार्ये कर्तव्य उपसर्जनं स्यादित्यर्थः। फलितमाह—विग्र यन्नियतेति। निष्कौशाम्बिशब्द उदाहरणम्। तत्र कौशाम्ब्या निष्क्रान्तो निष्क्रान्त निष्क्रान्तेन निष्क्रान्ताय निष्क्रान्ताद् निष्क्रान्तस्य निष्क्रान्ते इति विग्रहेषु 'निरादय क्रान्ताद्यर्थे पञ्चम्या' इति समासे निष्कौशाम्बिः निष्कौशाम्बिं निष्कौशाम्बिना इत्यादि इति स्थितिः। अत्र कौशाम्बीशब्द एव विग्रहे नियतविभक्तिक इति तस्योपसर्जनत्व मनेन भवति। समासशास्त्रे कौशाम्बीशब्दस्य पञ्चमीनिर्दिष्टत्वमेव, न तु प्रथमानिर्दिष्ट त्वमिति 'प्रथमानिर्दिष्टम्–' इत्यनेनोपसर्जनत्वाप्राप्तौ वचनम्। तत्र कौशाम्बीशब्दस्य अनेन उपसर्जनत्वेऽपि न पूर्वनिपातः। तत्तद्विभक्त्यन्तैरेव समास इत्यत्र इदमेव सू प्रमाणम्। 'तुल्यार्थैः–' इति सूत्रे भाष्ये स्पष्टमिदम्। प्रथमान्तपदेनैव समास इ 'अनेकम्–' इति सूत्रे भाष्ये स्थितम्। प्रकृते च दिशयोर्मध्यः मध्यं मध्येनेत्यादिवि ग्रहवाक्येषु दिशाशब्दस्य नियतविभक्तिकत्वात् समासविधौ प्रथमानिर्दिष्टत्वाभावेऽ अनेनोपसर्जनत्वं भवति। पूर्वनिपातस्तु न भवतीति स्थितम्। गोस्त्रियोः। 'ह्रस्व

---

दिति बोध्यम्। अव्ययं विभक्ति। विभक्तिरिह कारकशक्तिः। विभज्यते अन प्रातिपदिकार्थ इति व्युत्पत्तेः। अत एव वक्ष्यति—विभक्त्यर्थादिषु विद्यमानमव्यय मिति। प्रथमानिर्दिष्टम्। अत्र समासपदं तद्विधायके लाक्षणिकम्। अन्यथा चिकी र्षिते समासे यत्प्रथमान्तमिति व्याख्यानप्रसक्त्या कृष्णश्रित इत्यादौ श्रितादिष्वति प्रसङ्ग इत्याशयेनाह—समासशास्त्र इति। विग्रह इति। अनुवर्तमानेन समास ग्रहणेन विग्रहो लक्ष्यत इति भावः। न तु तस्येति। 'अनन्तरस्य–' इति न्यायात्

सर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। 'अव्ययीभावश्च' (सू ४५१) इत्यव्ययत्वम्। ६५७ **नाव्ययीभावादतोऽम्त्वपञ्चम्याः।** (२-४-८३) अदन्तादव्ययीभावात्सुपो न लुक्, तस्य तु पञ्चमीं विना अमादेशश्च स्यात्। दिशयोर्मध्येऽपदिशम्। 'क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्।' इत्यमरः। ६५८ **तृतीया सप्तम्योर्बहुलम्।** (२—४—८४) अद-

---

नपुंसके प्रातिपदिकस्य' इत्यतो ह्रस्व इति प्रातिपदिकस्येति चानुवर्तते। उपसर्जनस्येति गोस्त्रियोर्विशेषणम्। प्रत्येकाभिप्रायमेकवचनम्। स्त्रीशब्देन स्त्रीप्रत्ययो गृह्यते। प्रत्ययग्रहणपरिभाषया तदन्तविधिः। उपसर्जनभूतस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य चेति लभ्यते। तदुभयं प्रातिपदिकस्य विशेषणम्। तदन्तविधिः तदाह—**उपसर्जनमित्यादिना।** अत्र च शास्त्रीयमेवोपसर्जनं गृह्यते, न त्वप्रधानमात्रम्, कुमारीमिच्छन् कुमारीवाचरन्वा ब्रह्मणः कुमारीत्यत्रातिप्रसङ्गात्। **अव्ययीभावश्चेत्यव्ययत्वमिति।** तथा च अव्ययीभावसमासादुत्पन्नानां सुपाम् 'अव्ययादाप्सुपः' इति लुक् स्यादिति शङ्कायामाह—**नाव्ययीभावात्।** अम् तु अपञ्चम्या इति छेदः। 'नाव्ययीभावादतः' इत्येकं वाक्यम्। 'ण्यक्षत्रियार्ष–' इत्यतो लुगित्यनुवर्तते। 'अव्ययादाप्सुपः' इत्यतः सुप इति च। अता अव्ययीभावो विशेष्यते, तदन्तविधिः, तदाह—**अदन्तादव्ययीभावात् सुपो न लुगिति।** अम् तु अपञ्चम्या इति वाक्यान्तरम्। पञ्चमीभिन्नस्य तु सुपः अमादेशः स्यात्। पञ्चम्यास्तु अम् न भवतीति लभ्यते। तदाह—**तस्य पञ्चमीं विना अमादेश इति।** अत्रापञ्चम्या इति प्रतिषेधोऽयम् अनन्तरत्वादम एव भवति, न तु लुङ्निषेधस्यापि। एवं चादन्तादव्ययीभावात् परस्य सुपो न लुक्, किंत्वामादेशः। पञ्चम्यास्तु लुग् अमादेशश्च न भवतीति स्थितिः। सूत्रे एतत्सूचनार्थमेव तुशब्दः। 'अव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्येवोक्तौ तु अदन्तादव्ययीभावात् परस्य पञ्चमीभिन्नस्य सुपो लुकोऽपवादः अमादेशः स्यादित्येव लभ्येत। एवं सति पञ्चम्या अमोऽभावे 'अव्ययादाप्सुपः' इति लुक् स्यात्। अतो

---

सूत्रेण विहितस्य पूर्वनिपातत्वं न निषिध्यते। तेन कुमारीश्रित इत्यादौ न दोषः। **गोस्त्रियोः।** उपसर्जनस्येति गोस्त्रियोर्विशेषणम्। एकवचनं तु प्रत्येकाभिप्रायेण। गोस्त्रीभ्यां तु प्रातिपदिकं विशेष्यते। विशेषणेन तदन्तविधिरित्याशयेनाह—**उपसर्जनं य इति।** उपसर्जनमिह शास्त्रीयं गृह्यते, न त्वप्रधानलक्षणम्। तेन कुमारीवाचरन्ब्राह्मणः कुमारीत्यत्र न दोष इत्युक्तम्। **स्त्रीप्रत्ययान्तमिति।** स्त्र्यधिकारोक्तटाबाद्यन्तमित्यर्थः। तेनातिलक्ष्मीरित्यादौ नातिप्रसङ्गः। नन्वेवमपि राजकुमारीपुत्र इत्यादावतिप्रसङ्ग इति चेत्, अत्राहुः—उपसर्जनस्य ससंबन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति यद्युत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावस्तदव ह्रस्वत्वमिति भाष्यादावुक्तत्वान्न दोषः। भाष्यादावपि उत्तरपदभतयोरित्यर्थलाभस्तु 'कृत्तद्धित–' इत्यतः समासपदानुवर्तनादिति बोध्यमिति। **नाव्ययी।** अत्र 'अपञ्चम्याः' इति प्रतिषेधोऽनन्तरत्वादम एव, न तु व्यवहितस्यालुकोऽपि। अममेवार्थं द्योतयितुं सूत्रे तुशब्दः। तस्य पञ्चमीं विनेति। एवं चादन्तादव्ययीभावात्परस्य पञ्चमीभिन्नस्य सुपो

न्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अपदिशम्, अपदिशे
अपदिशम्, अपदिशे । बहुलग्रहणात् सुमद्रम् उन्मत्तगङ्गम् इत्यादौ सप्तम्या नित्य
मम्भावः । 'विभक्ति—' इत्यादेरयमर्थः—विभक्त्यर्थादिषु वर्तमानमव्ययं सु
न्तेन सह समस्यते, सोऽव्ययीभावः । विभक्तौ तावत्—हरौ इत्यधिहरि—
सप्तम्यर्थस्यैवात्र द्योतकोऽधिः । हरि ङि अधि इत्यलौकिकं विग्रहवाक्यम् । अ

---

लुङ् निषिध्यत इत्यास्तां तावत् । अपदिशमिति । पञ्चमीभिन्नविभक्तीनामुदाहरणम्
पञ्चम्यास्तु अपदिशादित्युदाहार्यम् । यद्यपि नपुंसकह्रस्वत्वेनाप्येतत् सिध्यति, 'अव्य
यीभावश्च' इति नपुंसकत्वस्य वक्ष्यमाणत्वात् । तथापि 'गोस्त्रियोः–'इति सूत्रं चित्र
अतिखट्व इत्याद्यर्थमावश्यकमिति इहापि न्याय्यत्वादुपन्यस्तम् । तदेवमव्ययमि
भाष्यादृष्टेनापि योगविभागेन अपदिशमिति रूपसाधनं वृद्धसंमतमित्याह—क्लीबाव्य
मिति । तृतीया । 'नाव्ययीभावात्–' इत्यस्माद् अत इत्यनुवर्तते, तदाह—अदन्त
दिति । अमादेशाभावे तु 'नाव्ययीभावात्–' इत्यलुक् । ननु वेति सिद्धे किं बहुलग्रह
नेत्यत आह—बहुलग्रहणादिति । तदेवमव्ययमिति योगं विभज्य व्याख्याया तदुत्त
खण्डं व्याख्यातुमुपक्रमते—विभक्तीत्यादेरयमर्थ इति । विभक्तीत्यनेन विभक्त्य
विवक्षितः । उच्यन्त इति वचनाः । कर्मणि ल्युट् । विभक्ति, समीप, समृद्धि, व्यृ
अर्थाभाव, अत्यय, असंप्रति, शब्दप्रादुर्भाव, पश्चात् यथा, आनुपूर्व्य, यौगप
सादृश्य, संपत्ति, साकल्य, अन्त एतेषां षोडशानां द्वन्द्वः । ते च वचनाश्च इ
विग्रहः । विभक्त्यर्थादिषु वाच्येष्वित्यर्थः । अव्ययीभावः समास इति चाधिकृतम्
तदाह—विभक्त्यर्थादिष्विति । विभक्तौ तावदिति । विभक्त्यर्थे प्रथममुद
ह्रियत इत्यर्थः । हरौ इत्यधिहरीति । हरौ इति लौकिकविग्रहः । तेन यावद
गम्यते तावदेवाधिहरीति समासेनाप्युच्यत इत्यर्थः । अधिशब्दस्य हरावित्यनेन अव्य
यीभावसमासे सुब्लुकि समासविधावव्ययमिति प्रथमानिर्दिष्टत्वाद् अधेः पूर्वनिपा
समासादुत्पन्नस्य सुपः 'अव्ययादाप्सुपः' इति लुगिति भावः । ननु लौकिकविग्रहे समस्य
मानः अधिशब्दः कुतो नोपात्त इत्यत आह—सप्तम्यर्थस्यैवात्र द्योतकोऽधि
रिति । तथा चाधिद्योत्यार्थस्य अधिकरणत्वस्य सप्तम्यैव उक्तत्वाद अधिशब्दो
पृथगुपात्तः, नित्यसमासतायां वक्ष्यमाणत्वेन स्वपदविग्रहानौचित्यादिति भावः । न
हरौ इति परिनिष्ठतसंधिकार्यस्य समासे सति औ इत्यस्य सुपो लुकि समासे रेफा

---

लुङ् न, पञ्चम्यास्तु लुगादेशावुभावपि न भवत इति स्थितम् । अतः किम्, अ
हरि । दिशयोरिति । दिशोरिति हलन्ते विग्रहेऽपि एतदेव रूपम् । दिश्शब्द
शरदादिषु पाठाट्टच् । अपदिशमिति । पञ्चमीव्यतिरिक्तविभक्तीनामुदाहरणमिदम्
पञ्चम्यास्तु अपदिशादित्युदाहर्यम् । विभक्तौ तावदिति । तावच्छब्दः क्रमार्थः
लौकिकं विग्रहवाक्यं प्रदर्शयति—हराविति । प्राचा तु हरौ अधिकृत्येति विग्र
तम् । तदसत्, अधिहरीत्यत्र अधिकृत्येत्यर्थस्याप्रतीतेः । हरि ङीति । अलौकि
ङिशब्दस्यैव प्रवेश उचितः 'अन्तरङ्गानपि–' इति न्यायात् । अन्यथा ङेरौत्वे कृ
अधिहरीति समासे हरिशब्देकारो दुर्लभः स्यादिति भावः । इह हरावधीति स्थि

निपातेनाभिहितेऽप्यधिकरणे वचनसामर्थ्यात्सप्तमी । ६५९ अव्ययीभावश्च । (२-४-१८) अयं नपुंसकं स्यात् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (सू ३१८) । गोपायतीति गाः पातीति वा गोपाः, तस्मिन्नित्यधिगोपम् । समीपे—कृष्णस्य समी-

---

कारः कुतः श्रूयेतेत्यत आह—हरि ङि इति । संधिकार्यात् प्रागलौकिकविग्रहवाक्य एव समासप्रवृत्तेः 'प्रत्ययोत्तरपदयोश्च' इति भाष्यसंमतत्वादिति भावः । यथा चैतत् तथा भुतपूर्व इत्यत्रानुपमेवोक्तम् । नन्वधिना निपातेनाधिकरणत्वस्योक्तत्वात् कथं हराविति सप्तमीत्यत आह—अत्र निपातेनेति । वचनेति । सुपेत्यनुवर्त्य सुबन्ते- नात्र समाविधिसामर्थ्यात् सप्तमी स्यादेवेति भावः । वस्तुतस्तु अनभिहितसूत्रभाष्ये तिङ्कृत्तद्धितसमासैरित्येव परिगणनं दृष्टम् । अतो निपातेनाधिना अभिहितेऽप्यधि- करणत्वे सप्तमी निर्बाधा । 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इत्यत्र तु एष्टव्य इत्यध्याहार्यम् । कृताऽभिधानाद् विषवृक्षाद् द्वितीया न भवति । न च कृत्तद्धित- समासैरिति परिगणनं भाष्ये प्रत्याख्यातमिति वाच्यम्, 'कटं करोति भीष्ममुदारं दर्श- नीयम्' इत्यत्र परिगणनफलस्यान्यथासिद्धेरेव तत्रोक्तत्वादित्यास्तां तावत् । अव्ययी- भावश्च । अयं नपुंसकं स्यादिति । 'स नपुंसकम्' इत्यतः तदनुवृत्तेरिति भावः । नपुंसकत्वस्य फलमाह—ह्रस्वो नपुंसक इति । गोपायतीति । रक्षतीत्यर्थः । 'गुपू रक्षणे' विच् । 'आयादय आर्धधातुके वा' इत्यायप्रत्ययः । 'लोपो व्योः—' इति यलोपः । 'वेरपृक्तस्य' इति वकारलोपः । गोपाशब्द आकारान्तः । गाः पातीति । पातेर्विचि उपपदसमासे गोपाशब्द इति भावः । अधिगोपमिति । विभक्त्यर्थे- ऽव्ययीभावसमासे सुब्लुकि नपुंसकत्वे ह्रस्वत्वे सति 'नाव्ययीभावात्—' इत्यमि पूर्वरूप-

---

इति प्राचाक्तमुपक्षितम् । नित्यसमासेषु अस्वपदविग्रहस्यैवोचितत्वात् । अभिहितेऽ- पीति । द्योतितेऽपीत्यर्थः । वचनसामर्थ्यादिति । सुपेत्यनुवर्त्य सुबन्तेन समास- विधानसामर्थ्यात्सप्तमी स्यादेवेति भावः । नन्वभिहितेऽधिकरणे 'प्रातिपदिकार्थमात्र—' इति प्रथमैव स्यान्न तु सप्तमीति चेत्, अत्राहुः—अधीत्यस्य सुबन्तेन समासस्यावश्य- कत्वेऽधिशब्दद्योत्याधिकरणार्थवाचकविभक्तेरेवेह स्वीकर्तुमुचितत्वादिति । यत्तु प्रसाद- कृता व्याख्यातम्—तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाभिहितेऽपि सप्तमी स्यादेवेति । तन्न, परिगणनस्याकरे प्रत्याख्यातत्वात् 'कर्मणि द्वितीया' इति सूत्रे स्वय- मपि तथैवोक्तत्वात् । 'क्रमादमुं नारद इत्यबोधि सः' इति प्रयोगविरोधाच्च । अत्र व्याचक्षते—'वचनग्रहणं विभक्त्यादिभिः प्रत्येकं संबध्यते' 'साकल्यान्तेषु' इत्येव वक्तव्ये वचनग्रहणात् । एवं च तत्सामर्थ्याद्विभक्त्यर्थमात्रवृत्तेरव्ययस्येह ग्रहणम् । तेन वृक्ष- स्योपरि, वृक्षस्य पुर इत्यत्र समासो न भवति । उपर्यादयो हि दिग्देशकालेष्वपि वर्तन्ते न तु विभक्त्यर्थमात्रे । अत एव 'क्रमादमुं नारद इत्यबोधि सः' इत्यादौ नातिप्रसङ्गः, इति शब्दस्य सर्वनामवत्प्रकृतपरामर्शकत्वेन कर्मत्वमात्रानभिधायकत्वात् । एवं च विभक्तिशब्दः सप्तम्यां पर्यवस्यति । अत एव परिशिष्टे—'अधिकरणे' इत्येव सूत्रितम् । पाणिनिस्तु मात्रालाघवमभिप्रेत्य विभक्तिशब्दं प्रायुङ्क्त' इति । अन्ये तु—'लाघवात् 'ङिसमीपसमृद्धि—' इति वक्तव्ये विभक्तिग्रहणाद्विभक्तिशब्दो न सप्तम्यां पर्यवस्यति ।

पमुपकृष्णम् । समया ग्रामम्, निकषा लङ्काम्, आराद्वनादित्यत्र तु नाव्य
भावः, 'अभितःपरितः—' ( वा १४४२ ) 'अन्यारात्—' ( सू ५९५ ) इ
द्वितीयापञ्चम्योर्विधानसामर्थ्यात् । मद्राणां समृद्धिः 'संमद्रम्[1] । यवनानां व्यृ
र्दुर्यवनम् । विगता ऋद्धिर्व्यृद्धिः । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्या

मिति भावः । 'गोस्त्रियोः—' इति तु नात्र प्रसज्यते, स्त्रीप्रत्ययान्तत्वाभावात् । सम
इति । समीपार्थकाव्ययस्य समासे उदाहरणं वक्ष्यत इत्यर्थः । कृष्णस्य समी
मिति । लौकिकविग्रहवाक्यमेतत् । अत्र समस्यमानस्य उपशब्दस्य स्थाने समी
मिति प्रयुक्तम् । कृष्णस्य उप इति तु न विग्रहः, नित्यसमासत्वेनास्वपदविग्रहौचित्या
ननु समया ग्रामम्, निकषा लङ्काम्, आराद्वनात्, इत्यत्रापि समयाद्यव्ययानां समीपार्थ
त्वाद् अव्ययीभावः स्यात्, ततश्च 'ग्रामं समया, ग्रामं निकषा, वनादारात्' इति प्रयो
न स्यात् । अव्ययीभावसमासे अव्यस्य पूर्वनिपातनियमादित्यत आह—समये
विधानसामर्थ्यादिति । 'समया ग्रामम्, निकषा लङ्काम्, आराद्वनात्' इत्यत्र
षष्ठ्यां सत्यामपि अव्ययीभावसमासे सति प्रातिपदिकावयवत्वाद् उपपदविभक्त्योः द्वि
यापञ्चम्योः षष्ठ्या वा लुकि समासात् प्रातिपदिकार्थादिविवक्षायां सर्वासु विभक्ति
जातासु यथायथम् अम्भावे तद्विकल्पे च 'समयाग्रामम्, निकषालङ्कम्, आराद्वनम्, समय
ग्रामेण, निकषालङ्केन, आराद्वनेन, समयाग्रामे, निकषालङ्के, आराद्वने' इति स्यादे
ततश्च द्वितीयापञ्चम्योर्विधिर्व्यर्थः स्यात्, षष्ठ्यैव गतार्थत्वात् । न च समास
पुनरुपपदविभक्ती द्वितीयापञ्चम्यौ शङ्क्ये, सकृत्प्रवृत्तयोः पुनःप्रवृत्त्ययोगात् । वस्तुत
मध्यार्थकसमयाशब्दयोगे द्वितीयाविधानस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधान
चरितार्थत्वाद् इदमयुक्तम् । न चैवं सति 'समया ग्रामम्' इत्यादौ अव्ययीभावः शङ्क्य
अव्भक्ष इत्यादाविव विभक्त्यर्थसमीपादिमात्रवृत्त्यव्ययस्यैव ग्रहणात् समयानिक
ऽऽराच्छब्दानां चाधिकरणशक्तिप्रधानतया समीपमात्रवृत्तित्वाभावात् । ग्रामस्य सम
इति हि तेषामर्थः । उपशब्दस्तु तन्मात्रवाची । उपकृष्णं भक्ता इत्यत्र कृष्णसामीप
वन्त इति बोधात् । मद्राणां समृद्धिरिति । समित्यव्ययपर्यायः समृद्धिश
विग्रहवाक्ये ज्ञेयः एतत्सूत्रविहितसमासस्य नित्यतया अस्वपदविग्रहः । एवमग्रे
ज्ञेयम् । संमद्रमिति । सर्वत्र सुब्लुगादि पूर्ववज् ज्ञेयम् । समृद्धा मद्राः सं
इत्यादौ तु नाव्ययीभावः, वचनग्रणसामर्थ्येनाव्ययार्थप्राधान्य एव तत्प्रवृत्तेरिति भा
स्पष्टम् । यवनानां व्यृद्धिर्दुर्यवनमिति । दुर्शब्दार्थको व्यृद्धिशब्दो वि
ज्ञेयः । विगतेति । अभावप्रतियोगिनीत्यर्थः । ऋद्धेरभावो व्यृद्धिरिति याव
न चार्थाभावेऽयमिति भ्रमितव्यम्, समस्यमानपदार्थाभावस्यैव तत्र विवक्षितत्वा
इह च यवनाभावस्याप्रतीतेः । यवनीयवृद्ध्यभावस्यैव प्रतीतेः । तद् ध्वनयन् अ

ततश्च कर्मत्वमात्रद्योतकतायाम् 'इति नारदम्' मति समासो भवत्येव' इत्याहुः । थ
सकं स्यादिति । एतच्च 'स नपुंसकम्' इत्यतो लभ्यते । समीप इति । अव्यय
भाव इत्यन्वर्थसंज्ञाश्रयणात्सप्तमीरूपाव्ययार्थप्राधान्य एवायं समासः । समीपवर्तिप्राव

१ अयं पाठो बालमनोरमानुरोधी । इतरत्र तु 'सुमद्रम्' इति पाठः ।

योऽतिहिमम् । अत्ययो ध्वंसः । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरि-

---

भाव उदाहरति—मक्षिकाणामभावो निर्मक्षिकमिति । विग्रहे निर्शब्दसमानार्थ-कमभावपदमिति भावः । घटः पटो नेत्यत्र तु नाव्ययीभावः, अर्थग्रहणसामर्थ्येना-त्यन्ताभावस्यव विवक्षितत्वात् । हिमस्यात्ययोऽतिहिममिति । अतीत्यव्यय-पर्यायः अत्ययशब्दो विग्रहे ज्ञेयः । अर्थाभावेत्यनेन पौनरुक्त्यं निरस्यति—अत्ययो ध्वंस इति । अर्थाभावशब्देनात्यन्ताभाव एव विवक्षितः । तेन पटस्य प्रागभावो निष्पटमिति न भवतीति भावः । सूत्रे असंप्रतीत्यस्य संप्रति न युज्यत इत्यर्थः । 'एर्तर्हि संप्रतीदानीम्' इत्यमरः । युजिक्रियान्तर्भावेण एकार्थीभावान्नञ्समासः । तदाह—निद्रा संप्रति न युज्यत इत्यतिनिद्रमिति । अतीत्यव्ययस्यासप्रत्यर्थकस्य स्थाने 'संप्रति न युज्यते' इति विग्रहवाक्यं ज्ञेयम् । सूत्रे शब्दप्रादुर्भाव इत्यनेन शब्दस्य

---

तु 'संख्ययाव्ययासन्ना—' इति बहुव्रीहिर्वक्ष्यति 'उपदशाः' इति यथा । विधानसामर्थ्या-दिति । ननु समयाग्राममित्यादौ द्वितीयाविधानसामर्थ्यान्मास्त्वव्ययीभावः, आराद्व-नादित्यत्र तु भवेदेव, 'अन्यारात्—' इति इति पञ्चमीविधानस्य दूरार्थकाराच्छब्दयोगे सावकाशत्वादिति चेत्, अत्र केचिदुत्प्रेक्षयन्ति—'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति षष्ठीपञ्चम्योः प्राप्तयोस्तदपवादतया पञ्चम्येव तेन विधीयते । तथा चान्तिकार्थकाराच्छ-ब्दयोगे षष्ठ्यपवादतया पञ्चमीविधानं निरवकाशमेवेति तत्सामर्थ्यादव्ययीभावो नेत्युक्तिः सम्यगेवेति । तदपरे न क्षमन्ते । 'अन्तिकार्थाराच्छब्दयोगे विशिष्य पञ्चमीविधाना-भावात्, 'अन्यारात्—' इति सूत्रस्य त्वन्यत्र कृतार्थत्वाच्च, सामीप्ये आराद्वनमित्यव्ययी-भावो दुर्वार एवेति । एवं हि व्याकुर्वतां 'पदस्येत्यपकर्षभावे भृशार्थे सावकाशोऽयं यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्येत' इति 'नित्यवीप्सयोः' इति सूत्रस्थमनोरमाग्रन्थो-ऽनुकूल इति दिक् । सुमद्रमिति । उत्तरपदार्थप्राधान्ये तु 'कुगति—' इति तत्पुरुषः । समृद्धा मद्राः सुमद्राः । दुर्यवनमिति । न चार्थाभावेनेह सिद्धिः, येन समस्यते तदीयार्थाभावेऽत्र समासस्वीकारात् । न चेह यवनानामभावः, येनार्थाभावे समासः स्यात्, किं तु तदीयाया ऋद्धेरभाव इति । निर्मक्षिकमिति । संसर्गाभावेऽयं समासो न त्वन्योन्याभावेऽपि । अर्थग्रहणसामर्थ्येन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधिन एवाभावस्य ग्रहणात् । अन्योन्याभावस्य तु प्रतियोगितावच्छेदकेनैव विरोधात्तस्य च प्रकारत्वेऽप्यविशेष्यत्वात् । ये तु वदन्ति—'घटः पटो नेत्यत्रापि पटत्वात्यन्ताभाव एवार्थः, आकृत्यधिकरणन्यायेन जातेः पदार्थत्वादिति, तेषामपि मते अर्थग्रहणसामर्थ्या-देवाक्षिप्तधर्म्यभावे अयं समासो न तु धर्माभाव इति न दोषः । अत्यय इति । स्पष्टार्थमेतेत्, अर्थाभावेन गतार्थत्वात् । अर्थाभावेन संसर्गाभावो विवक्षितो न त्वन्यो-न्याभावः । घटः पटो नेत्यत्रातिप्रसङ्गादिति निष्कर्षात् । संप्रति नेति । संप्रतीत्यव्य-यमिदानीमित्यर्थे । 'एर्तर्हि संप्रतीदानीम्' इत्यमरोक्तेः । तच्चाधिकरणशक्तिप्रधानत्वा-त्क्रियापदेनैवान्वयार्हम् । निषेधोऽपि क्रियाया एवोचितः, तदेतदाह—युज्यत इति । असंप्रतीति सौत्रप्रयोगे तु युजिक्रियान्तर्भावेण नञ्समास इति बोध्यम् । यत्तु प्रसाद-कृतोक्तम्—'असंप्रति संप्रत्यभाव इत्यर्थः । अनेन उपभोग्यवस्तुनो यो वर्तमानः कालः

शब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । पश्चाच्छब्दस्य तु समासः, 'ततः पश्चात्स्रंस्यते ध्वंस्यते' इति भाष्यप्रयोगात् । योग्यतावीप्सा... र्थानतिवृत्तिसादृश्यानि यथार्थाः । अनुरूपम्, रूपस्य योग्यमित्यर्थः । अर्थं... प्रति प्रत्यर्थम् । प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्... द्वितीयागर्भं वाक्यमपि । शक्तिमनतिक्रम्य यथाशक्ति । हरेः सादृश्यं सह...

---

प्रकाशनं विवक्षितम्, तदाह—हरिशब्दस्य प्रकाश इतिहरि इति । इति... व्ययं शब्दप्रकाशे वर्तते । तस्य हरिशब्देन स्वरूपपरेण षष्ठयन्तेन समास इति भाव... विष्णोः पश्चादनुविष्णु इति । अनु इत्यव्ययं पश्चादर्थे वर्तत इत्यर्थः । भाष्ये... 'अचः परस्मिन्–' इति सूत्रभाष्य इत्यर्थः । 'ततः पश्चात्' इत्यत्राव्ययीभावे तु प... च्छब्दस्य पूर्वनिपातः स्यादिति भावः । एतद्भाष्यप्रयोगादेव एतत् सूत्रे तत्तदर्थवो... पदघटकतया गृहीताव्ययेन तत्तदर्थकेनायं समासो नेति विज्ञायते । अत एव 'य... ऽसादृश्ये' इति सूत्रे सादृश्यसंपत्तीति प्राप्नोतीत्येवोक्तं भाष्ये । यथाशब्देन तु भव... समासः, उत्तरसूत्रारम्भात् । सूत्रे यथाशब्देन तदर्थो लक्ष्यते । यथार्थे विद्यम... मव्ययं समस्यत इति लभ्यत इत्यभिप्रेत्याह—योग्यतेति । अनुरूपमिति । अ... इत्यव्ययं योग्यतायाम्, अतो यथार्थे वर्तत इति भावः । अर्थमर्थं प्रती... लौकिकविग्रहवाक्यम् । अत्र वीप्सायां द्विर्वचनम् । 'लक्षणेत्थंभूताख्यान–' इति वीप्सा... द्योत्यायां प्रतेः कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । समासे तु द्विर्वचनं न, समा... वीप्साया द्योतितत्वाद् इति 'हयवरट्' इति सूत्रे कैयटः । प्रतिना तस्योक्तत्वा... तु तत्त्वम् । नन्वर्थमर्थं प्रतीति लौकिकविग्रहप्रदर्शनं न संभवति । नित्यसमास... दित्यत आह—प्रतिशब्दस्येति । सामर्थ्यादिति । अव्ययीभावसमासस्य नि... त्वं तु शेषषष्ठ्यामपि अव्ययीभावे सुब्लुकि समासात् सर्वविभक्तीनामम्भावे तद्वि... च प्रत्यर्थं, प्रत्यर्थेनेत्यादिसिद्धे द्वितीयाफलकं प्रतेः कर्मप्रवचनीयत्वविधानमनर्थकं स्या... दिति भावः । वस्तुतस्तु प्रतिस्थानमित्यादौ 'उपसर्गात्सुनोति–'इति षत्वाभावसंपाद... कर्मप्रवचनीयत्वं चरितार्थमेव । 'अर्थमर्थं प्रति प्रत्यर्थम्' इति 'सरूपाणाम्–'इति... भाष्ये प्रयोगदर्शनाद् इह वैकल्पिकसमास इति तत्त्वम् । शक्तिमनतिक्रम्य य... शक्तीति । 'परावरयोगे च' इति क्त्वाप्रत्ययः । परावरत्वं च बौद्धम् । अत्र यथं...

---

स निषिध्यते' इति । तन्न, अधिकरणशक्तिप्रधानस्य क्रियर्थवान्वयाहस्य 'निषेध... प्रतियोगित्वेनान्वयस्यायुक्तत्वात् । न हि भूतले घटो नास्तीत्यनेन भूतलं निषिध्यत... कश्चिदभ्युपैति, येनात्र वर्तमानकालनिषेधो युक्त्यर्हः स्यात् । इतिहरीति । स्व... परे षष्ठ्यन्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः । ततः पश्चादि... सति चात्राव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपातः स्यादिति भावः । भाष्यप्रयो... दिति । 'अनेकमन्यपदार्थे' इति सूत्रे 'सर्वपश्चात्' इति भाष्यप्रयोगाच्चेत्यपि बोध्य... प्रत्यर्थमिति । वृत्तौ वीप्सान्तर्भावान्न द्विर्वचनम् । प्रतिशब्दस्येति । यत्वाहु... 'ग्रामस्य वृक्षं वृक्षं प्रतीत्यत्र सापेक्षत्वेन समासाभावे द्वितीयाविधानं सावकाशमि...



१ निषेधप्रतियोगित्वेन इति क्वचित् पाठः ।

क्ष्यमाणेन सहस्य सः । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपदिति विग्रहे—

६० अव्ययीभावे चाकाले । (६-३-८१) सहस्य सः स्यादव्ययीभावे, न तु काले । सचक्रम् । काले तु सहपूर्वाह्णम् । सदृशः सख्या ससखि । यथार्थ-नैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम् । त्राणां संपत्तिः सक्षत्रम् । ऋद्धेराधिक्यं समृद्धिः, अनुरूप आत्मभावः संपत्ति-रति भेदः । तृणमप्यपरित्यज्य सतृणमत्ति । साकल्येनेत्यर्थः । न त्वत्र तृणभक्षणे

यय पदार्थानतिक्रमे वर्तत इत्यर्थः । हरेः सादृश्यं सहरीति । अत्र सहेत्यव्ययं ादृश्ये वर्तत इति भावः । वक्ष्यमाणेनेति । 'अव्ययीभावे चाकाले' इत्यनेनेत्यर्थः । येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठमिति । कार्यं कृतमिति शेषः । तत्तद्विभक्त्या विग्रह ति पक्षाभिप्रायेणेदम् । पूर्वस्य क्रमेण इत्यनुपूर्वम्, ततः स्वार्थे ष्यञ् । [1]यद्यपि एतत्सूत्र-हीताव्ययेन समासो नेत्यनुपदमेवोक्तम्, तथापि सूत्रगृहीतानुनाप्यनुज्येष्ठमिति समासः, नुपूर्वेति निर्देशात् । सूत्रे युगपच्छब्दात् स्वार्थे ष्यञ् यौगपद्यशब्दः । तद् ध्वनय-ाह—चक्रेण युगपदिति । युगपत्पर्यायस्य सहशब्दस्य चक्रेण इत्यनेन समासे ते सतीत्यर्थः । युगपच्छब्देन तु न समासः, सूत्रे गृहीतत्वादिति भावः । अव्ययी-ावे । सहस्य सः स्यादिति । 'सहस्य सः संज्ञायाम्' इत्यतः तदनुवृत्तेरिति ावः । न तु काल इति । कालवाचके परे सहस्य सो नेत्यर्थः । सचक्रमिति । क्रेण युगपत्प्रयुक्तमित्यर्थः । सहपूर्वाह्णमिति । समीपादौ अव्ययीभावः । सूत्रे ादृश्येति स्वार्थे ष्यञ् । तद् ध्वनयन्नाह—सदृशः सख्या ससखीति । सहेत्य-यं सदृशार्थकमिति भावः । गुणभूतेऽपीति । वचनग्रहणसामर्थ्येनाव्ययार्थप्राधान्य व समासप्रवृत्तेः गुणीभूतसादृश्ये अप्राप्त्या तद्ग्रहणमिति भावः । क्षत्राणां संपत्तिः क्षत्रमिति । क्षत्रियाणामनुरूपं कर्मेत्यर्थः । सहेत्यव्ययमत्र संपत्तौ वर्तत इति भावः । पत्तिसमृद्धिशब्दयोः पौनरुक्त्यं परिहरति—ऋद्धेरिति । धनधान्यादेरित्यर्थः । नुरूप इति । अनुरूपो योग्य आत्मभावः, स्वोचितं कर्मेति यावत् । तृणमप्य-रित्यज्य सतृणमत्तीति । 'परावरयोगे च' इति क्त्वा । परावरत्वं बौद्धमेव । हशब्दोऽत्रापरिवर्जने वर्तते । न तु तृणसहभावेऽपीति भावः । नन्वेवं सति साकल्ये

न, नित्यसमासेषु 'सविशेषणानां वृत्तिर्न' इत्यस्याप्रवृत्तेः । आनुपूर्व्येणेति । अनु-स्य भाव आनुपूर्व्यम्, ब्राह्मणादित्वात् ष्यञ् । चक्रेण युगपदिति । अत्र केचित्—ापचक्रमिति समासेनैव भवितव्यम्,युगपच्छब्दस्याप्यव्ययत्वात्, किं तु 'चक्रेणैककाले यादि विग्रहीतुमुचितमित्याहुः । सहपूर्वाह्णमिति । साकल्येऽव्ययीभावः । गुण-तेऽपीति । यदि सादृश्य इति नोच्यते, तर्हि यत्र सादृश्यं प्रधानमवगम्यते तत्रै ात्, अव्ययार्थप्राधान्यस्याव्ययीभावे औत्सर्गिकत्वादिति भावः । अन्त इति । इदानी-ावान् प्रदेशोऽध्येतव्य इति यावतो ग्रन्थप्रदेशस्य परिग्रहः कृतस्तदपेक्षा समाप्तिरि-न्तशब्देन विवक्षिता, सा चासकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते ।

१ यद्यपि 'यद्यपि' इति क्वचिदपि नास्ति तथापि उत्तरत्र 'तथापि' इति दर्श-द् अस्माभिर्निवेशितम् ।

तात्पर्यम् । अन्ते—अग्निग्रन्थपर्यन्तमधीते साग्नि । ६६१ यथाऽसादृश्ये (२–१–७) असादृश्य एव यथाशब्दः समस्यते । तेनेह न—यथा हरिस्तथा हरः । हरेरुपमानत्वं यथाशब्दो द्योतयति । तेन 'सादृश्य' इति वा 'यथार्थं' इति वा प्राप्तं निषिध्यते । ६६२ यावदवधारणे । (२—१—८) यावन्तः श्लोकाः

कथमिदमुदाहरणं स्यादित्यत आह—साकल्येनेत्यर्थ इति । पात्रे परिविष्टं सर्वं भक्षयतीति यावत् । न त्वत्रेति । तृणभक्षणस्याप्रसक्तेरिति भावः । अन्त इति उदाहरणं वक्ष्यत इति शेषः । सूत्रे अन्तशब्देन अन्तावयवसाहित्यं विवक्षितमित्य प्रेत्योदाहरति—अग्निग्रन्थपर्यन्तमधीते साग्नीति । अग्निशब्देन अग्निच प्रतिपादको ग्रन्थो विवक्षितः । तेनान्तावयवेन सहितं ग्रन्थमिति विग्रहः । अग्निग्र पर्यन्तमिति बहुव्रीहिः । ग्रन्थमिति अन्यपदार्थाध्याहारः । अधीत इति तु न सम प्रविष्टम् । अन्तावयवेन अग्निग्रन्थेन सहितं वेदकल्पसूत्रादिभागमधीत इत्यर्थः । मु कृत्स्नस्यानध्येतव्यत्वाद् अग्निग्रन्थपर्यन्ताध्ययने तत्कात्स्न्यानवगमात् साकल्यात्पृथगु यथाऽसादृश्ये । असादृश्य इति छेदः, व्याख्यानात् । असादृश्ये योग्यतावी पदार्थानतिवृत्तिरूपे वर्तमानं यथेत्यव्ययं समस्यत इत्यर्थस्य यथार्थत्वादेव सिद्धेः नि मार्थमिदमित्याह—असादृश्य एवेति । ननु 'प्रकारवचने थाल्' इति वि थाल्प्रत्ययान्तस्य कथं सादृश्ये वृत्तिरित्यत आह—हरेरिति । सामान्यस्य भेदको यो वि स प्रकारः, तस्मिन प्रकारे थालिति 'प्रकारवचने थाल्' इत्यस्यार्थः । ततश्च यद्वि धर्मवान् हरिः तद्विशेषधर्मवान् हर इति बोधे सति यत्तच्छब्दाभ्यां तयोः प्रका अभेदावगमाद् उपमानत्वप्रतीतिरिति भावः । तेनेति । प्राप्तमित्यत्रान्वयः । सादृश्य कत्वेनेत्यर्थः । सादृश्य इति वेति । 'अव्ययं विभक्ति–' इति सूत्रगतेन सादृश्य मानमव्ययं समस्यत इत्यंशेन वा यथार्थे विद्यमानमव्ययं समस्यत इत्यंशेन वा प्रा मव्ययीभावसमासकार्यं निषिध्यत इति भावः । भाष्ये तु प्रकारवचने यथाशब्द सादृश्येत्यनेनैव प्राप्तिरुक्ता, न तु यथार्थत्वेन प्राप्तिरुक्ता । यथाशब्दस्य सूत्रगृही तद्योगे यथार्थेत्यप्रवृत्तेरिति तदाशय इति शब्देन्दुशेखरे विस्तरः । यावदवधार

साग्नीति । अग्निशब्दस्तत्प्रतिपादकग्रन्थे वर्तते, स च तृयान्तो नित्यं समस्य न चैवमग्निना सहेति प्रयोगो दुर्लभ इति वाच्यम्, साहित्यमात्रस्य विवक्षायां तत्प्र गस्योपपत्तेः । अन्तत्वविवक्षायां तु समासस्य नित्यत्वादग्निग्रन्थपर्यन्तमित्यस्वपदवि दर्शितः । यत्तु केचित्-अग्निरन्तोऽस्येति प्रथमान्तेनाग्नेरन्तत्वमिति षष्ठ्यन्तेन वा वि समासोऽपि प्रथमान्तेन षष्ठ्यन्तेन वेत्याहुः, तन्न, सहशब्दस्यान्तवाचकत्वाभावाद त्वस्य तु सुतरामलाभात्, सहयुक्ते तृतीयाया न्याय्यत्वाच्च सतृणमत्तीत्यत्र साकल्य साग्नीत्यत्रान्तत्वस्यापि साहित्यद्योत्यतया तत्र तृतीयान्तेन समासं स्वीकृत्य इह तत्के त्यागस्य निष्प्रमाणत्वाच्च । अत्रेदं बोध्यम्—'तदधीते–' इत्यध्येतृप्रत्ययस्य वैक कत्वात्साग्नीत्यत्राण् नोक्तः । कृतेऽप्यध्येत्रणि सर्वादेः सादेश्च लुग्वक्तव्यः' इति व माणत्वात्साग्नीत्येव रूपमिति । यथाऽसा । निःसंदेहाय 'सादृश्ये यथा' इत्येव वक्त द्विपरीतोच्चारणं नञः श्लेषलाभार्थमिति व्याचष्टे—असादृश्य इति । यथा

वन्तोऽच्युतप्रणामा यावच्छ्लोकम् । ६६३ सुप्प्रतिना मात्रार्थे । (२—१—९)
शाकस्य लेशः शाकप्रति । मात्रार्थे किम्—वृक्षं वृक्षं प्रति विद्योतते विद्युत् । ६६४

---

इयत्तापरिच्छेदे गम्ये यावदित्यव्ययं समस्यते । सोऽव्ययीभाव इत्यर्थः । यावन्त इति । यत् परिमाणे येषामिति विग्रहे 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुप्प्रत्ययः । यावदित्यव्ययमेव समस्यते, विग्रहस्तु तद्धितान्तेनैव, नित्यसमासत्वेन अस्वपदविग्रहौचित्यात् । अवधारणे किम् । यावद्दत्तं तावद्भुक्तम् । इयद् भुक्तमिति नावधारयतीत्यर्थः । सुप्प्रतिना मात्रार्थे । सुबिति छेदः । मात्रा लेशः । तस्मिन्नर्थे विद्यमानेन प्रतिना सुबन्तं समस्यत इत्यर्थः । सुबित्यनुवर्तमाने पुनः सुब्ग्रहणं संनिहितस्याव्ययमित्यस्याननुवृत्त्यर्थम् । तद् ध्वनयन्नुदाहरति—शाकस्य लेशः शाकप्रतीति । अत्र प्रतीत्यव्ययं मात्रार्थकम् । अतस्तेन शाकस्येति सुबन्तस्य समासः । समासविधौ सुबन्तस्य प्रथमानिर्दिष्टत्वेन उपसर्जनत्वात्पूर्वनिपातः, न तु प्रतेः, तस्य समासविधौ तृतीयानिर्दिष्टत्वात् । वृक्षं वृक्षं प्रतीति । अत्र प्रतेः मात्रार्थकत्वाभावाद् न तेन समासः । न च 'लक्षणेत्थम्—' इति कर्मप्रवचनीयत्वविधानसामर्थ्यादेवात्र समासो न भविष्यति, प्रति समासे द्वितीयायाः षष्ठ्या वा लुकि अविशेषात्, सकृत्प्रवृत्ततया समासात्तद्विभक्त्युत्पत्तेरिति वाच्यम्, वृक्षं प्रति सिञ्चति इत्यादौ 'उपसर्गात् सुनोति—' इति षत्व-

---

इति । यत्परिमाणमेषां ते । 'यत्तदेतेभ्यः—' इति वतुप् । यावच्छ्लोकमिति । यावदित्यव्ययं समस्यते, विग्रहस्तु तद्धितान्तेनेत्यस्वपदविग्रहत्वमस्त्येव । अवधारणे किम्, यावद्दत्तं तावद्भुक्तम्, कियद् भुक्तं वा नावधारयतीत्यर्थः । सुप्प्रतिना । सुबित्यनुवर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थमिति ध्वनयन्नुदाहरति—शाकप्रतीति । नन्वारम्भसामर्थ्यादव्ययभिन्नमेव सुप्समस्यत इति चेत्, अत्राहुः—पुनः सुब्ग्रहणाभावे दोषामन्यमहः, दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाव्ययायेव मात्रार्थे प्रतिना समस्येरन्, तथा च दिवसस्य लेशो दिवाप्रति दोषाप्रतीत्यादीनामेवोदाहरणत्वं संभाव्येतेति । वृक्षं प्रतीति । ननु लक्षणादौ प्रतेः कर्मप्रवचनीयसंज्ञाविधानसामर्थ्याद् द्वितीयागर्भं वाक्यमेव स्यात्, न तु समासः, तस्य लेशार्थे सावकाशत्वादिति चेत् । मैवम्, वृक्षं प्रति सिञ्चन्तीत्यादौ षत्वनिवारकत्वेन कर्मप्रवचनीयसंज्ञाविधानस्य चरितार्थत्वान्मात्रार्थग्रहणाभावे लक्षणादावप्यनेन समासप्रसङ्गात् । वीप्सायामव्ययीभावे तु प्रत्यादेः पूर्वनिपातत्वे प्रत्यर्थं सिञ्चन्तीत्यादौ षत्वाप्रसक्त्या कर्मप्रवचनीयविधानस्याचरितार्थतया तत्सामर्थ्याद् द्वितीयागर्भं वाक्यमपीत्युक्तं मूलकृता 'अव्ययं विभक्ति—' इति सूत्रे । अत्र नव्याः—प्रत्यर्थमित्यव्ययीभावे वीप्सायां द्योतकत्वेन विद्यमानमव्ययं समस्यते । वीप्साद्योतकस्य यदि कर्मप्रवचनीयसंज्ञाविधिः स्वीक्रियते, तदापि प्रतिस्तवनं प्रतिस्थानमित्यादौ षत्वनिवारणाय प्रतीत्यस्य कर्मप्रवचनीयसंज्ञा चरितार्थैव । वस्तुतस्तु वीप्सायां विषयभूतायां प्रत्यादेः कर्मप्रवचनीयसंज्ञा, न तु वीप्साद्योतकस्यैव । अन्यथा वृक्षं वृक्षं प्रति सिचन्तीत्यत्र 'द्विर्वचनेनैव वीप्सा द्योत्यते । प्रतिशब्दस्तु क्रियया संबध्यते । कर्मणि द्वितीया । कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न' इत्यादिमनोरमाग्रन्थो 'लक्षणेत्थंभूता—' इति सूत्रस्थो दत्तजलाञ्जलिः

अक्षशलाकासंख्याः परिणा । (२—१—१०) द्यूतव्यवहारे पराजय एवा समासः । अक्षेण विपरीतं वृत्तमक्षपरि । शलाकापरि । एकपरि । ६६५ विभाषा (२—१—११) अधिकारोऽयम् । एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम् 'सुप्सुपा' इति तु न नित्यसमासः । अव्ययम् इत्यादिसमासविधानाज्ज्ञापकात्

---

निवृत्त्या कर्मप्रवचनीयत्वस्य चरितार्थत्वादित्यन्यत्र विस्तरः । **अक्षशलाका** । समस्य सोऽव्ययीभाव इति शेषः । **द्यूतव्यवहार** इति । वार्तिकमिदम् । इदं द्यूतं ता पञ्चभिः अक्षैः शलाकाभिर्वा भवति । यदि अक्षाः शलाका वा कृत्स्ना उत्ताना अव ञ्चो वा पतन्ति, तदा पातयिता जयति । अन्यथा पराजयत इति स्थितिः । अक्षेणेति कर्तरि तृतीया । विपरीतं वृत्तमित्यत्र वृतेर्भावे क्तः । विपरीतमिति क्रियाविशेषणम् जये यथा परिवर्तितव्यं न तथा परिवृत्तमित्यर्थः । शलाकापरीति । शला विपरीतं वृत्तमिति भावः । एकपरीति । एकेन विपरीतं वृत्तमित्यर्थः । एवं द्वि त्रिपरि इत्यादि । विभाषा । अधिकारोऽयमिति । ततश्च उत्तरत्र समासविधि एतदनुवर्तत इति लभ्यते । ननु 'प्राक्कडारात् समासः' इत्यत ऊर्ध्वं 'सह सुपा' इत्य प्रागेव कुतो विभाषाधिकारो न कृत इत्यत आह—एतत्सामर्थ्यादिति । म विभाषाधिकारपाठसामर्थ्यादेवेतः प्राचीनानां नित्यसमासत्वं गम्यत इत्यर्थः । यद्यपि प्राचीनानां विकल्पे प्रमाणाभावादेव नित्यत्वं सिद्धम् । तथापि तस्यैव लिङ्गेन दृढीकर मिति बोध्यम् । नन्वेवं सति 'सुप्सुपा' इत्यपि नित्यसमासः स्यात् । ततश्च पूर्वं भू इति लौकिकविग्रहवाक्यमनुपपन्नं स्यात् । 'सुप्सुपा' इति विषये विस्पष्टं पटुः विस्प पटुरिति विग्रहप्रदर्शनपरम् 'आ कडारात्–' इति सूत्रस्थभाष्यमपि विरुध्येतेत्यत आह सुप्सुपेति तु न नित्यसमास इति । कुत इत्यत आह—**अव्ययमित्यादीति** 'आ कडारात्' इत्येव सिद्धे 'प्राक्कडारात्' इति प्राग्ग्रहणं समाससंज्ञाया अव्ययीभावा संज्ञासमावेशार्थम् । अन्यथा एकसंज्ञाधिकारात् पर्यायः स्यादिति 'आ कडारात्–' इ सूत्रे भाष्ये स्थितम् । तत्र 'अव्ययं विभक्ति–' इत्याद्यव्ययीभावादिविधिषु 'सुप्सुपा' इ

---

स्यात् । ततश्च संज्ञाविधानसामर्थ्यस्योपक्षीणत्वाद् अर्थमर्थं प्रतीत्यादिभाष्यप्रयो देव द्वितीयागर्भं वाक्यमपि भवतीत्येवं व्याख्येयमित्याहुः । पराजयं द्योतयितुमाह विपरीतं वृत्तमिति । पूर्वं जये यथा वृत्तं तथा न वृत्तमित्यर्थः । एकपरीति एकेन विपरीतं वृत्तमित्यर्थः । एवं द्विपरीत्यादि—'विभाषाऽपपरिबहिर्–' इति यो विभज्य व्याचष्टे—**विभाषेति** । इतः प्राचीनानां समासानां टिघुभादिसंज्ञानामि वाग्रहणाभावान्नित्यत्वं न्यायत एव सिद्धम्, तच्च लिङ्गेनापि द्रढयति—एतदिति । नन्वे 'सुप्सुपा' इत्यपि नित्यं स्यात्, इष्टापत्तौ तु 'पूर्वं भूतो भूतपूर्वः, सुप्सुपेति समासः' इ वृत्तिग्रन्थो विरुध्येत । तथा शाकलसूत्रे 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इत्य 'नित्यग्रहणेन नार्थः, इदमपि सिद्धं भवति वाप्यामश्वो वाप्यश्वः' इति भाष्यं कथं व्याख्यत्—'वाप्यश्व इति 'सुप्सुपा' इति समासः, 'संज्ञायाम्' इति सप्तमीसमास तु नित्यत्वात्सिद्धः प्रतिषेध इति, सोऽपि ग्रन्थो विरुध्येतेत्याशङ्कायामाह—सुप्सुपे त्विति । नन्वत्र किं प्रमाणमित्यत आह—**अव्ययमित्यादीति** । सुप्सुपेत्यनेन

प्राग्वत् । मासपूर्वः । मातृसदृशः । पितृसमः । ऊनार्थे—माषोनं कार्षापणम् । माषविकलम् । वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः । मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्, 'मिश्रं चानुपसर्गमसन्धौ' (सू ३८८८) इत्यत्रानुपसर्गग्रहणात् । गुडसंमिश्रा धानाः । 'अवरस्योपसंख्यानम्' (वा १२५६) मासेनावरो मासावरः । ६९४ कर्तृकरणे कृता बहुलम् । (२–१–३२) कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः ।

---

श्लक्ष्ण एतैरित्यर्थः । मासपूर्व इति । मासेन पूर्व इति विग्रहः । मासात् प्रागुत्पन्न इत्यर्थः । यद्यप्यत्रावधित्वसंबन्धे 'अन्यारादितरर्ते–' इति दिक्शब्दयोगे पञ्चमी प्राप्ता, दिशि दृष्टः शब्दो दिक्शब्द इत्यभ्युपगमात् । तथाप्यत एव ज्ञापकात् तृतीया । हेतौ तृतीयेत्यन्ये । मातृसदृश इति । मात्रा सदृश इति विग्रहः । पितृसम इति । पित्रा सम इति विग्रहः । 'तुल्यार्थैरतुलोपमाभ्याम्–' इति तृतीया । 'तुल्यार्थैः–' इति षष्ठ्यां षष्ठीसमासेनैव सिद्धमित्याहुः । ऊनार्थेति । उदाहरणसूचनमिदम् । माषोनमिति । माषाख्यपरिमाणविशेष ऊनं परिमाणमित्यर्थः । अत एव ज्ञापकादवधित्वे तृतीया, हेतौ वा । अर्थग्रहणं च ऊनेनैव संबध्यते, न तु पूर्वादिभिरपि, समसदृशयोः पृथगुपादानात् । अर्थग्रहणस्य प्रयोजनमाह—माषविकलमिति । माषेण विकलमिति विग्रहः । हीनमित्यर्थः । पूर्ववत् तृतीया । वाक्कलह इति । वाचा कलह इति विग्रहः । आचारनिपुण इति । आचारेण निपुण इति विग्रहः । आचारहेतुकनैपुण्यवानित्यर्थः । गुडमिश्र इति । गुडेन मिश्र इति विग्रहः । आचारश्लक्ष्ण इति । आचारेण श्लक्ष्ण इति विग्रहः । आचारहेतुककुशलत्ववानित्यर्थः । ननु गुडसंमिश्रा इत्यत्र कथं समासः ? सुबन्तविशेषणत्वेऽपि समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात् । तत्राह—मिश्रग्रहणे सोपसर्गस्यापि ग्रहणमिति । कुत इत्यत आह—मिश्रं चेति । असन्धौ मिश्रेत्युत्तरपदमुपसर्गहीनं तृतीयान्तात् परमन्तोदात्तमिति तदर्थः । अत्रानुपसर्गग्रहणादितरत्र मिश्रग्रहणे सोपसर्गग्रहणं विज्ञायत इत्यर्थः । मासेनावर इति । मासेन पूर्व इत्यर्थः । न्यून इत्यर्थे ऊनार्थकत्वादेव सिद्धम् । कर्तृकरणे । कर्ता च करणं चेति समाहारद्वन्द्वात् सप्तमी । तृतीयेत्यनुवर्तते । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । कृतेत्यपि तथैव । तदाह—

---

मायां स्थितम् । विद्यया सदृशो विद्यासदृश इत्यादौ हेतुत्वप्रकारकबोधार्थं तृतीयासमासोऽप्यावश्यक इति त्वन्ये । पूर्वसूत्रेणैव तत्कृतत्वात्तृतीयासमासोऽपि सिद्ध्यतीत्यपरे । ऊनार्थ इति । पूर्वसूत्रेऽर्थशब्देन समासस्योक्तत्वादिहार्थग्रहणमभिधेयपरम् । तच्चोनशब्देनैव संबध्यते, न तु पूर्वादिभिः समसदृशयोः पृथग्ग्रहणादिति भावः । मिश्रं चेति । 'पणबन्धेनैकार्थ्यं संधिस्तत्राप्रयुज्यमानो मिश्रशब्द उपसर्गरहितोऽन्तोदात्तः' इति सूत्रार्थः । अवरस्येति । अत्र व्याचक्षते—ऊनार्थेत्येव सिद्धत्वादिदं प्रपञ्चार्थमेव । न चावरशब्दस्योनार्थकत्वमप्रसिद्धमिति वाच्यम् । 'सप्तदशावराः सत्रमासीरन्' इति श्रुतौ 'अव्यक्तानुकरणाद् द्व्यजवरार्धात्' इति सूत्रे च तत्प्रसिद्धेरिति । कर्तृकरणे । समाहारद्वन्द्वात्सप्तमीत्याशयेनाह—। कर्तरि करणे चेति । अत्र

नखैर्भिन्नो नखभिन्नः । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (प २९) न
निर्भिन्नः । कर्तृकरणे इति किम्—भिक्षाभिरुषितः । हेतावेषा तृतीया । बहु
ग्रहणं सर्वोपाधिव्यभिचारार्थम् । तेन 'दात्रेण लूनवान्' इत्यादौ न । कृ
किम्—काष्ठैः पचतितराम् । ६९५ कृत्यैरधिकार्थवचने । (२-१-३३)
स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनम्, तत्र कर्तरि करणे च तृती
कृत्यैः सह प्राग्वत् । वातच्छेद्यं तृणम् । काकपेया नदी । ६९६ अन्नेन व्यञ्जनम्

---

कर्तरि करणे चेति । प्राग्वदिति । समस्यते स तत्पुरुष इत्यर्थः । इह कृ
ग्रहणेन क्तप्रत्यय एव गृह्यते, बहुलग्रहणादिति भाष्यम् । अतः क्तान्तमेवोदाहरति-
हरिणा त्रात इति । पालित इत्यर्थः । ननु कृदन्तस्य समर्थविशेषणत्वेऽपि समा
प्रत्ययविधौ तदन्तविधिप्रतिषेधान्नखनिर्भिन्न इत्यत्र न स्यादित्यत आह—कृद्ग्र
इति । परिभाषेयं 'गतिरनन्तरः' इति सूत्रे भाष्ये स्थिता । पचतितरामिति
अतिशयेन पचतीत्यर्थः । 'अतिशायने' 'तिङश्च' इत्यनुवृत्तौ 'द्विवचनविभज्य–' इ
तरप् । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्याम् । अत्र तद्धितान्तेन समासनिवृ
कृद्ग्रहणमिति भावः । कृत्यैरधिकार्थवचने । अर्थवादवचनमिति । 'अ
वादकोक्तिरित्यर्थः । वातच्छेद्यं तृणमिति । वातेन छेद्यमिति विग्रहः ।
योग्यमित्यर्थः । 'ऋहलोर्ण्यत्' इति कृत्यप्रत्ययः । कोमलत्वेन स्तुतिः, दुर्बल
निन्दा वा । काकपेयेति । 'अचो यत्' इति यत्, 'ईद्यति' इति ईत्त्वम्, गुणः
अत्र पूर्णाम्भस्त्वेन स्तुतिः, अल्पाम्भस्त्वेन निन्दा वा । अन्नेन व्यञ्जनम्

---

केचित्—कर्तृकरणे इति प्रथमाद्विवचनं तृतीयया विशेष्यते, विशेषणेन च तद
विधिस्तेन तृतीयान्ते कर्तृकरणे कृदन्तेन समस्येते इति व्याख्यान्तरमित्याहु
सर्वोपाधीति । कर्तरि करणे च या तृतीया तदन्तमपि बहुलग्रहणात् क्वचि
समस्यते । क्वचित्तु विभक्त्यन्तरमपि समस्यते बहुलग्रहणादेवेत्यर्थः । समासा
प्रदर्शयति—दात्रेण लूनवानित्यादाविति । आदिशब्देन दात्रेण छिन्न
हस्तेन कुर्वन् इत्यादि ग्राह्यम् । विभक्त्यन्तरमपि समस्यत इत्यस्योदाहर
पादहारकः, गलेचोपकः । ह्रियत इति हारकः, बाहुलकात्कर्मणि ण्वुल् । पादा
मित्यपादानपञ्चम्यन्तस्य समासः । 'चुप मन्दायां गतौ' हेतुमण्णिजन्तात्कर्मणि ण्वु
'अमूर्धमस्तकात्–' इत्यलुक् । कर्तृत्वकरणत्वयोः क्रियानिरूपित्वेन क्रियास
कृदन्तेनैव भवेत्समासः, 'सुपा' इत्यधिकारात्तिङन्तेन तु नातिप्रसङ्ग इत्याशयेन पृच्छ
कृता किमिति । इतरस्तु तिङन्तप्रकृतिकतद्धितान्तप्रकृतिकसुबन्तेनासमासस्त
मित्याशयेन प्रत्युदाहरति—काष्ठैरिति । कृत्यैरधिकार्थं । पूर्वसूत्रस्यैव प्रपञ्च
न तु नियमार्थमित्याहुः । वातच्छेद्यमिति । पूर्ववत् कृत्यः । कोमलत्वाद्वाते
छेत्तुं शक्यत इति स्तुतिः, वातेनापि छेत्तुं शक्यते निर्बलत्वादिति निन्दा
काकपेयेति । 'शकि लिङ् च' इति शक्यार्थे कृत्यः । पूर्णतोयत्वात्तटस्थैः का
पातुं शक्येति स्तुतिः, अल्पतोयत्वेन निन्दा वा । अन्नेन । 'भिस्सा स्त्री भक्तम्

---

१ 'असद्भिन्नः' इति क्वचित् पाठः ।

(२-१-३४) संस्कारद्रव्यवाचकं तृतीयान्तमन्नेन प्राग्वत् । दध्ना ओदनो दध्योदनः । इहान्तर्भूतोपसेकक्रियाद्वारा सामर्थ्यम् ६९७ भक्ष्येण मिश्रीकरणम् । (२--१--३५) गुडेन धाना गुडधानाः । मिश्रणक्रियाद्वारा सामर्थ्यम् । ६९८ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः । (२—१—३६) चतुर्थ्यन्तार्थाय यत्तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् । तदर्थेन प्रकृतिविकृतिभाव एव, बलिरक्षितग्रहणाज्ज्ञापकात् । यूपाय दारु यूपदारु । नेह—

---

व्यञ्जनशब्दं व्याचष्टे—संस्कारेति । संस्क्रियते गुणविशेषवत्तया क्रियते अनेनेति संस्कारः, उपसेकादिसाधनं दध्यादि, तद्वाचकमित्यर्थः । अन्नेनेति । अन्नम् ओदनः, तद्वाचकशब्देनेत्यर्थः । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इति कोशः । दध्ना ओदनो दध्योदन इति । नन्विह दध्नेति करणत्वस्य उपसिक्तपदापेक्षत्वाद् असामर्थ्यात् कथमिह समास इत्यत आह—अन्तर्भूतेति । उपसेकक्रियां विना दध्नोऽन्नसंस्कारकत्वानुपपत्त्या दध्ना इत्यस्य दधिकरणकोपसेके वृत्तेर्नासामर्थ्यमिति भावः । तदुक्तं भाष्ये—'युक्तार्थसंप्रत्ययाच्च सामर्थ्यम्' इति । भक्ष्येण मिश्रीकरणम् । मिश्रीक्रियते खाद्यं द्रव्यमनेनेति मिश्रीकरणं गुडादि । तद्वाचकं तृतीयान्तं भक्ष्यवाचकेन समस्यत इत्यर्थः । कठिनद्रव्यं खाद्यं पृथुकादि भक्ष्यं विवक्षितम् । गुडेन धाना गुडधाना इति । 'धाना भृष्टयवे स्त्रियः' इत्यमरः । गुडेन मिश्रा धाना इत्यर्थः । ननु गुडकरणत्वस्य मिश्रपदापेक्षत्वान्न सामर्थ्यमित्यत आह—मिश्रणेति । गुडेनेत्यस्य गुडकरणकमिश्रणे वृत्तेर्नासामर्थ्यमिति भावः । चतुर्थी । प्रत्ययग्रहणपरिभाषया चतुर्थीत्यनेन चतुर्थ्यन्तं गृह्यते । तदर्थ, अर्थ, बलि, हित, सुख, रक्षित एषां द्वन्द्वः । चतुर्थ्यन्तमेतैः षड्भिः समस्यते, स तत्पुरुष इति फलितम् । तदर्थेत्यत्र तच्छब्देन चतुर्थ्यन्तार्थो विवक्षितः । तस्मै चतुर्थ्यन्तार्थाय इदं तदर्थम् । 'अर्थेन नित्यसमासः—' इति वक्ष्यमाणः समासः । चतुर्थ्यन्तवाच्यप्रजोजनकं यत् तत् तदर्थमिति पर्यवस्यति । तदाह—चतुर्थ्यन्तार्थायेत्यादिना । तदर्थेनेति । तदर्थेन समास इति यदुक्तं तत्प्रकृतिविकृतिभाव एव भवति; न त्वन्यत्रेत्यर्थः । कुत इत्यत आह—बलिरक्षितेति । यदि तादर्थ्यमात्रे अयं समासः स्यात् प्रकृतिविकृतिभाव

---

ऽन्नमोदनोऽस्त्री' इत्यमरः । व्याख्यानान्नेह स्वरूपग्रहणं तदाह—संस्कारकेत्यादि । भक्ष्येण । खरविशदमभ्यवहार्यं भक्ष्यम् । खरं कठिनं विशदं विविक्तावयवं खाद्यं भक्ष्यमित्यर्थः । यत्प्रत्ययान्तस्य एरजन्तस्य च भक्षयतेस्तत्रैव प्रयोगात् । अब्भक्ष इत्यादिप्रयोगस्तु भाक्तः । गुडधाना इति । ननु धानानां प्रत्येकं विभक्तावयवत्वाभावात्कथमेतदुदाहरणं संगच्छत इति चेत् । मैवम् । भृष्टयवसमुदायस्य धानात्वात्समुदायं प्रति समुदायिनामवयत्वाच्च तदुपपत्तेः । चतुर्थी तदर्थार्थ । तच्छब्देन प्रकृता चतुर्थी परामृश्यते, प्रत्ययग्रहणात्तदन्तग्रहणम्, चतुर्थ्यन्तेन सामर्थ्यात्तदर्थो लक्ष्यत इत्याशयेनाह—चतुर्थ्यन्तार्थाय यदिति । चतुर्थ्यन्तवाच्याय यूपाय यद्दार्वादि तद्वाचिन चतुर्थ्यन्तं समस्यत इत्यर्थः । बलिरक्षितग्रहणादिति । हितसुखग्रहणं तु न ज्ञापकम्, तद्योगे 'चतुर्थी चाशिषि—' इति अतादर्थ्येऽपि चतुर्थी-

रन्धनाय स्थाली । अश्वघासादयस्तु षष्ठीसमासाः । 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' (वा १२७३—१२७४) । द्विजायायं द्विजार्थः

एवेति नोच्येत, तर्हि बलिरक्षितग्रहणं व्यर्थं स्यात् । भूतेभ्यो बलिः, गोभ्यो रक्षितं तृणमित्यत्रापि बलेर्भूतार्थतया रक्षिततृणस्य गवार्थतया च तदर्थेत्येव समाससिद्धेरिति भावः । यूपायेति । अत्र चतुर्थ्यन्तवाच्ययूपार्थं दारु । अतो दारुशब्देन यूपायेत्यस्य समासः, यूपस्य दारुविकृतित्वाच्च, तक्षादिना अष्टाश्रीकृतवृक्षस्यैव यूपशब्दार्थत्वात् । अथ प्रकृतिविकृतिभावग्रहणस्य प्रयोजनमाह—नेहेति । रन्धनायेति । पकाये-त्यर्थः । 'रध हिंसायाम्' । इह पाको विवक्षितः । भावे ल्युट्, अनादेशः । 'रधि-जभोरचि' इति नुम् । स्थाल्याश्चतुर्थ्यन्तवाच्यपाकार्थत्वेऽपि प्रकृतिविकृतिभावविरहान्न समासः । ननु अश्वेभ्यो घासः—अश्वघासः, धर्माय नियमो धर्मनियम इत्यादौ कथं तदर्थेन समासः, प्रकृतिविकृतिभावविरहादित्यत आह—अश्वघासादयस्तु षष्ठी-समासा इति । नचैवं रन्धनाय स्थालीत्यत्रापि षष्ठीसमासः स्यादेवेति प्रकृतिविकृतिभावनियमो व्यर्थ इति वाच्यम्, शाब्दबोधे संबन्धत्वतादर्थ्यत्वकृतवैलक्षण्ये-उक्तनियमसाफल्यात् । एवं च रन्धनस्य स्थालीति संबन्धत्वेन भाने षष्ठीसमास इष्ट एव । तादर्थ्यत्वेन भाने चतुर्थीसमासवारणाय तु प्रकृतिविकृतिभावनियमाश्रयणमि-त्यास्तां तावत् । तदेवं तदर्थेत्यंशः प्रपञ्चितः । अथेदानीमर्थशब्देन चतुर्थ्यन्तस्य समासे विशेषमाह—अर्थेनेति । अर्थशब्देन चतुर्थ्यन्तस्य नित्यसमास इति वक्तव्यम् अन्यथा विभाषाधिकाराद्विकल्पः स्यात् । विशेष्यस्य प्रधानस्य यल्लिङ्गं तल्लिङ्गमित्यपि वक्तव्यम् । अन्यथा अर्थशब्दस्य नित्यं पुंल्लिङ्गत्वात् 'परवल्लिङ्गम्—' इति सर्वत्र पुंल्लि-ङ्गतैव स्यादित्यर्थः । अर्थशब्दोऽत्र वस्तुपरः । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । इह उपकारकं वस्तु विवक्षितमित्यभिप्रेत्योदाहरति—द्विजाय द्विजार्थः सूप इति । तत्र द्विजायायमित्यस्वपदविग्रहः । तत्र अर्थशब्दस्थाने

संभवादिति भावः । ननु 'चतुर्थी चाशिषि—' इति विहिता या चतुर्थी तदन्तस्य समासो न भवति, समासादाशिषोऽनवगमादिति केचिदाहुरिति कैयटेनोक्तम् । ततश्च तदर्थ-हितसुखग्रहणमपि बलिरक्षितग्रहणवज्ज्ञापकमेवेति चेत् । अत्र नव्याः—ब्राह्मणाय हितं ब्राह्मणहितम्, गोहितम्, गोसुखमित्यतादर्थ्यचतुर्थ्यन्तेनापि समासः स्वीक्रियते। सा चातादर्थ्यचतुर्थी 'हितयोगे च' इति वार्तिकात् 'चतुर्थी तदर्था—' इत्यादि हितसुखशब्दाभ्यां समासविधनाज्ज्ञापकाद्वा सभवतीति हितसुखग्रहणं न ज्ञापकम् सम्यगेवेत्याहुः । यूपायेति । तादर्थ्ये चतुर्थी । एवमग्रेऽपि यथासंभवमूह्यम् । अश्वघासादय इति । एतच्च भाष्यकृतोक्तम् । नन्वेवं रन्धनाय स्थालीत्यत्र षष्ठीसमासः स्यादेवेति प्रकृतिविकृतिभाव एवेति नियमो निष्फल एव । न च विशेषः, 'चतुर्थी तदर्था—' इति पूर्वपदप्रकृतिस्वरस्यापि प्रकृतिविकृतिभाव एवेति माणत्वात् । अत्राहुः—'संबन्धत्वतादर्थ्यत्वकृतवैलक्षण्येनोक्तनियमसाफल्यान्न दोषः। अत्र च मानमेतदेव भाष्यम्—'न माषाणामश्नीयात्' 'दाशरथाय मैथिली' इत्यादि प्रयोगा अपि इत्थमेव विवक्षाभेदेन निर्वाह्याः । एवं च पूर्वसूत्रे—इति

सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्। ६९९ पञ्चमी भयेन। (२—१—३७) चोराद्भयं चोरभयम्। 'भयभीतभीतिभीभिरिति वाच्यम्' ( वा १२७५ ) वृकभीतः। ७०० अपेतापोढमुक्तपतितापत्रस्तैरल्पशः। (२—१—३८) एतैः सहाल्पं पञ्चम्यन्तं समस्यते, स तत्पुरुषः। सुखापेतः। कल्पनापोढः। चक्रमुक्तः। स्वर्गपतितः। तरङ्गापत्रस्तः। अल्पशः किम्—प्रासादात्पतितः ७०१ स्तोकान्तिकदूरार्थ-

मिति शब्दः, नित्यसमासत्वेनास्वपदविग्रहौचित्यात्। द्विजायेति तादर्थ्यचतुर्थी। तदन्तस्य अर्थशब्देन समासः, विशेष्यसूपशब्दस्य पुंल्लिङ्गत्वात् समासस्य पुंल्लिङ्गता च। द्विजस्य उपकारकः सूप इत्यर्थः। द्विजार्था यवागूरिति। द्विजायेयमिति विग्रहः। अर्थशब्दस्य नित्यपुंलिङ्गत्वेऽपि 'परवल्लिङ्गम्—' इति पुल्लिङ्गं बाधित्वा अनेन विशेष्यलिङ्गानुसारेण स्त्रीलिङ्गता। द्विजार्थं पय इति। द्विजायेदमिति विग्रहः। अत्र विशेष्यलिङ्गानुसारान्नपुंसकत्वम्। भाष्ये तु चतुर्थ्यैव तादर्थ्यस्योक्तत्वाद् 'उक्तार्थानामप्रयोगाः' इति न्यायेन अर्थशब्देन विग्रहाप्रसक्तेर्नित्यसमासत्वं न्यायसिद्धमेव। गुरोरिदं गुर्वर्थमित्यादाविव लिङ्गमपि लोकत एव सिद्धमिति वार्तिकमिदं प्रत्याख्यातम्। भूतबलिरिति। भूतेभ्यो बलिरिति विग्रहः। तादर्थ्यचतुर्थ्यन्तस्य बलिशब्देन समासः। गोहितमिति। गोभ्यो हितमिति विग्रहः। गवामनुकूलमित्यर्थः। 'हितयोगे च' इति शेषषष्ठ्यपवादश्चतुर्थी। तदन्तस्य हितशब्देन समासः। गोरक्षितमिति। तृणादिकमिति शेषः। गोभ्यो रक्षितमिति विग्रहः। तादर्थ्यचतुर्थ्यन्तस्य रक्षितशब्देन समासः।

पञ्चमी भयेन। पञ्चम्यन्तं भयशब्देन सुबन्तेन समस्यत इत्यर्थः। चोराद्भयं चोरभयमिति। 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात् पञ्चमी। भयभीतभीतिभीभिरिति। सूत्रे भयशब्दस्यैव ग्रहणाद् भीतादेरप्राप्ते समासे वचनम्। वृकभीत इति। वृकभीतिः, वृकभीरित्यप्युदाहार्यम्। अत्र भाष्ये अपर आहेत्युक्त्वा 'भयनिर्गतजुगुप्सुभिरिति वक्तव्यम्' इत्युक्त्वा वृकभयम्, ग्रामनिर्गतः, अधर्मजुगुप्सुः—इत्युदाहृतम्। चोरत्रस्तः, भोगोपरत इत्यादौ 'सुप्सुपा' इति वा मयूरव्यंसकादित्वाद्वा समासः। अपेतापोढ। 'अल्पश—' इति स्वार्थे शस्, अत एव निपातनात्। तदाह—अल्पं पञ्चम्यन्तमिति। 'बह्वल्पार्थात्—' इति शस् तु न भवति, 'बह्वल्पार्थान्मङ्गलामङ्गलवचनम्' इति वक्ष्यमाणत्वात्। स्तोकान्तिक।

ग्रहणं व्यर्थमिति कैयटहरदत्तादीनामुक्तिः प्रामादिकीत्यवधेयम्। शाब्दबोधकृतवैलक्षण्यस्य तत्रापि सत्त्वादिति। अर्थेन नित्येति। अन्यथा विभाषाधिकारात्पक्षे द्विजायार्थ इति प्रयोगः स्यादिति भावः। विशेष्यलिङ्गता चेति। वचनाभावे त्वर्थशब्दस्य नित्यपुंस्त्वात् 'परवल्लिङ्गम्—' इति सर्वत्र पुंल्लिङ्गप्रयोग एव स्यादिति भावः। पञ्चमी भयेन। भयेनेति स्वरूपग्रहणम् नार्थस्य, प्रमाणाभावात्, 'भयभीत—' इति वार्तिकारम्भाच्च। तेन वृकात्त्रास इत्यादौ समासो न। कथं तर्हि 'भोगोपरतो ग्रामनिर्गतः' इत्यादिप्रयोगाः। अत्राहुः—बहुलग्रहणात् क्वचिद्विभक्त्यन्तरमपि कृता

कृच्छ्राणि क्तेन । (२—१—३९) स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रादागतः । 'पञ्चम्याः स्तो कादिभ्यः' (सू ९५९) इत्यलुक् । ७०२ षष्ठी । (२—२—८) राज्ञः पुरुष राजपुरुषः । ७०३ याजकादिभिश्च । (२—२—९) एभिः षष्ठ्यन्तं समस्यते 'तृजकाभ्यां कर्तरि' ( सू ७०९ ) इत्यस्य प्रतिप्रसवोऽयम् । ब्राह्मणयाजकः देवपूजकः । 'गुणात्तरेण तरलोपश्चेति वक्तव्यम्' (वा ३८४१) । तरबन्तं यद् गुणवाचि तेन सह समासस्तरलोपश्च । 'न निर्धारणे' (सू ७०४) इति 'पू

स्तोक, अन्तिक, दूर एतदर्थकानि, कृच्छ्र एतानि पञ्चम्यन्तानि क्तप्रत्ययान्तेन समस्य इत्यर्थः । अर्थग्रहणं स्तोकान्तिकदूरेषु संबध्यते । अल्पान्मुक्त इति । स्तोकपर्या यस्योदाहरणम् । अभ्याशादागत इति । अन्तिकपर्यायस्योदाहरणम् । वि कृष्टादागत इति । दूरशब्दपर्याय उदाहार्यः । 'करणे च स्तोक–' इति पञ्चमी दूरादागत इत्यत्र तु 'दूरान्तिकार्थेभ्यः–' इति पञ्चमी । अत्र 'सुपो धातु–' इति लु माशङ्क्याह—पञ्चम्याः स्तोकादिभ्य इत्यलुगिति ।

षष्ठी । षष्ठ्यन्तं सुबन्तेन समस्यते, स तत्पुरुष इत्यर्थः । राजपुरुष इति राजन् अस् पुरुष स् इत्यलौकिकविग्रहवाक्ये समासे सति सुब्लुकि अन्तर्वर्ति विभक्तिं प्रत्ययलक्षणेनाश्रित्य न लोपः । न च लुका लुप्तत्वान्न प्रत्ययलक्षणमिति वाच्यम्, पदत्वस्य सुब्घटितसमुदायधर्मत्वेन तस्य अङ्गकार्यत्वाभावादिति भावः याजकादिभिश्च । ननु 'षष्ठी' इति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्य आह—तृजकाभ्यामिति । ब्राह्मणयाजक इति । ब्राह्मणस्य याजक इ विग्रहः, यजतेर्ण्यन्तात् कर्तरि ण्वुल्, अकादेशः । 'कर्तृकर्मणोः कृति' इति कर्म षष्ठी । देवपूजक इति । देवानां पूजक इति विग्रहः । पूजकशब्दो याजकादिरि भावः । भूभर्तेति तृजन्तस्योदाहार्यम्, भर्तृशब्दस्य याजकादित्वात् । गुणात्तरेणेति वार्तिकमिदं 'सर्वं गुण' इति सूत्रे भाष्ये स्थितम् । गुणवाचकाद् विहितो यस्त तदन्तेन षष्ठी वा समस्यते, तरपो लोपश्चेत्यर्थः । फलितमाह—तरबन्तं यदिति ननु 'षष्ठी' इति सूत्रेणैव सिद्धे किमर्थमिदमित्यत आह—न निर्धारण इति

समस्यत इति प्रागेवोक्तत्वात्, 'सुप्सुपा' इत्यनेन वा तदुपपत्तिरिति । अपेतापोढ पञ्चमीति वर्तते, प्रत्ययग्रहणात्तदन्तग्रहणम् । अल्पश इत्यत्र 'बह्वल्पार्थाच्छस्कारका इति शस् । यद्यपि 'बह्वल्पार्थान्मङ्गलामङ्गलवचनम्' इति वक्ष्यति, तथाप्यत निपातनाच्छसिति बोध्यम् । कारकत्वं तु समसनक्रियां प्रति पञ्चम्यन्तस्य कर्मत्वात्त भिधायित्वाच्चाल्पशब्दस्य, तदेतदाह—अल्पं पञ्चम्यन्तमिति । स्तोकान्मु इत्यादि । 'करणे च स्तोकाल्प—इति पञ्चमी । दूरादागत इत्यादौ 'दूरान्ति कार्थेभ्यः–' इत्यनेन । षष्ठी राजपुरुष इति । राजन् अस् पुरुष सु इत्यलौकिकवि समासे कृते सुपो लुक्यन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपः । याजकादिभिश्च याजक । पूजक । परिचारक । परिवेषक । स्नातक । अध्यापक । उत्पादक । हो पोत । भर्तृ । रथगणक । पत्तिगणक । ... गुणात्तरेणेति । एतच्च ...

णगुण–' (सू ७०५) इति च निषेधस्य प्रतिप्रसवोऽयम् । सर्वेषां श्वेततरः सर्वश्वेतः । सर्वेषां महत्तरः सर्वमहान् । 'कृद्योगा च षष्ठी समस्यत इति वाच्यम्' (वा १३१७) इध्मस्य प्रव्रश्चन इध्मप्रव्रश्चनः । ७०४ न निर्धारणे । (२-२-१०) निर्धारणे या षष्ठी सा न समस्यते । नृणां द्विजः श्रेष्ठः । 'प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम्' (वा १३२०) । सर्पिषो ज्ञानम् ।

---

'सर्वगुण–' इति सूत्रे भाष्ये तु 'पूरणगुण इत्यस्यापवाद' इत्येवोक्तम् । सर्वशब्दानुवृत्तेः सर्वशब्द एवेदं वार्तिकमित्यभिप्रेत्योदाहरति—सर्वेषां श्वेततरः सर्वश्वेत इति । बकानां गुण इति शेषः । द्रव्यान्तरवृत्तिश्वेतरूपापेक्षया सर्वेषां बकानां श्वेतगुणोऽयमधिक इत्यर्थः । 'द्विवचनविभज्य–' इति विभक्तव्योपपदे तरप् । अत्र सर्वेषामिति षष्ठ्यन्तस्य श्वेततरशब्देन समासे तरपो लोपे सर्वश्वेत इति रूपम् । सर्वमहानिति । ईश्वर इति शेषः । पूर्ववत्तरन् । सर्वेषां महत्तर इति विग्रहः । इतरसंबन्धिमहत्त्वापेक्षया ईश्वरस्य महत्त्वमधिकमित्यर्थः । कृद्योगेति । कृता योगो यस्या इति विग्रहः । 'कर्तृकर्मणोः कृति' इति विहितेति भाष्यम् । इध्मप्रव्रश्चन इति । कुठार इति शेषः । प्रवृश्च्यतेऽनेनेति प्रव्रश्चनः । करणे ल्युट् । इध्मानां प्रव्रश्चन इति विग्रहः । कर्मणि षष्ठी । 'प्रतिपदविधाना–' इति वक्ष्यमाणनिषेधस्यापवादोऽयम् । न निर्धारणे । नृणां द्विजः श्रेष्ठ इति । अत्र नृणामिति षष्ठ्यन्तस्य द्विजशब्देन समासो न भवति । पुरुषाणामुत्तमः पुरुषोत्तम इत्यत्र तु शेषषष्ठ्येव, न तु निर्धारणषष्ठी । यतो निर्धारणम्, यच्च निर्धार्यते, यच्च निर्धारणहेतुः, एतत्त्रितयसंनिधान एव तस्याः प्रवृत्तेरिति कैयटः । गुणेन निषेधस्त्वनित्य इति तरप्सूत्रे कैयटः । केचित्तु 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।' इति गीतावाक्यात् कर्मधारय एव । उत्तमशब्दस्य विशेषणत्वेऽपि राजदन्तादित्वात् परनिपात इत्याहुः । प्रतिपदविधानेति । पदं पदं प्रतीति वीप्सायामव्ययीभावः । प्रतिपदं विधानं यस्याः सा प्रतिपदविधाना । 'षष्ठी शेषे' इति शेषलक्षणां षष्ठीं वर्जयित्वा सर्वा षष्ठी प्रतिपदविधानेति भाष्यम् । सर्पिषो ज्ञानमिति । अत्र 'ज्ञोऽविदर्थस्य करणे' इति

---

'सर्वं गुणकार्त्स्न्ये' इत्यत्र पठितम् । कृद्योगा षष्ठीति । 'कर्तृकर्मणोः कृति' इति कृत्संनियोगेन कृतेत्यर्थः । यदा तु 'प्रतिपदविधाना–' इत्यादिनिषेधवचनमारभ्यते, तदेदं तद्बाधनायारब्धव्यम् । तस्यैवानारभ्यत्वमनुपदं वक्ष्यामः । इध्मव्रश्चन इति । वृश्च्यते छिद्यतेऽनेनेति व्रश्चनः कुठारादिः, करणे ल्युट् । इध्मानामिति कर्मषष्ठ्यन्तस्यानेन समासः । नृणामिति ।' यतश्च निर्धारणम्' इति षष्ठी । द्विजशब्देनात्र समासप्रसङ्गः, तदपेक्षया हि षष्ठी । श्रेष्ठत्वं द्विजेतरमनुष्येभ्यः, तेषां सामान्यशब्देनोपस्थिततया तान्विहायानुपस्थितकल्पनाया अन्याय्यत्वात् । अथ कथं पुरुषोत्तम इति । यस्मान्निर्धार्यते, यश्चैकदेशो निर्धार्यते, यश्च निर्धारणहेतुः, एतत्त्रितयसंनिधाने सत्येवायं निषेध इति 'द्विवचनविभज्योप–' इति सूत्रे कैयटः । अन्ये तु—पुरुषेषूत्तम इति । निर्धारणसप्तम्याः 'संज्ञायाम्' इति समासः । न चैवं 'न निर्धारणे' इति व्यर्थम् स्वरे भेदात् । सप्तमीसमासे हि 'तत्पुरुषे तुल्यार्थ–' इत्यादिना पूर्वपदप्रकृतिस्वरः,

७०५ **पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।** (२—२—११) पूरणा-द्यर्थैः सदादिभिश्च षष्ठी न समस्यते । पूरणे—सतां षष्ठः । गुणे—काकस्य

---

विहितषष्ठ्याः समासो न भवति । 'न निर्धारणे' इति प्रत्याख्येयमेवेति भाष्ये स्पष्ट-मित्यलम् । **पूरणगुण ।** पूरणगुणसुहितानि अर्था येषां ते पूरणगुणसुहितार्थाः, च सच्च अव्ययं च तव्यश्च समानाधिकरणं चेति समाहारद्वन्द्वात् तृतीया । तदाह-पूरणाद्यर्थैरिति । **पूरण इति ।** उदाहरणं वक्ष्यत इति शेषः । सतां षष्ठ इति षण्णां पूरण इत्यर्थे 'तस्य पूरणे डट्' 'षट्कतिकतिपयचतुरां थक्' । न च कुम्भपूरण-मित्यत्रापि स निषेधः स्यादिति वाच्यम्, 'सोऽचि लोपे चेत् पादपूरणम्, इत्यादि निर्देशेन पूरणार्थकप्रत्ययस्यैव ग्रहणात् । 'उञ्छषष्ठाङ्कितसैकतानि' इत्यत्र तु उञ्छा-त्मकः षष्ठ इति व्याख्येयम् । **गुण इति ।** उदाहरणं वक्ष्यत इत्यर्थः । प्रधानत्वेन उपसर्जनत्वेन वा गुणवाची गुणशब्दः, व्याख्यानात् । तदाह—काकस्य कार्ष्ण्यम्

---

षष्ठीसमासे तु 'समासस्य' इत्यन्तोदात्तत्वं स्यात्तच्चानिष्टमित्याहुः। तन्मन्दम् । 'संज्ञायाम्' इति समासस्य नित्यत्वेन स्वपदविग्रहासंगतिप्रसङ्गात् । तस्मात्कैयटोक्तसमाधानमेव समीचीनमिति नव्याः । **प्रतिपदविधानेति ।** पदं पदं प्रति विहिता प्रतिपद-विधाना । 'षष्ठी शेषे' इति विहायान्येन 'ज्ञोऽविदर्थस्य-' इत्यादिना विहिता सा षष्ठीत्यर्थः । धातुकारकविशेषं गृहीत्वैव 'ज्ञोऽविदर्थस्य-' इत्यादिना षष्ठी विधीयत इति भवति तस्याः प्रतिपदविधानत्वम् । नन्वनेनैव गतार्थत्वाद् 'न निर्धारणे' इति व्यर्थ-मिति चेद् । अत्राहुः—'यतश्च निर्धारणम्' इति सूत्रं न षष्ठीं विधत्ते, किं तु सप्तमीमेव । षष्ठी तु तया मा बाधीति प्रतिप्रसूयत इत्यन्यदेतत् । 'एवं स्वामीश्वरा-धिपति-' इत्यादिष्वपि । तेन गृहस्वामी, सर्वेश्वरः, निषादाधिपतिरित्यादि सिद्ध-मिति । वस्तुतस्तु 'ज्ञोऽविदर्थस्य-' इत्यादिचतुर्दशसूत्रीमध्ये 'दिवस्तदर्थस्य' इत्यादि षट्सूत्रीं विहायावशिष्टायामष्टसूत्र्यां 'शेषे' इति वर्तते, तथा च 'न माषाणामश्नीयात्' इत्यादाविव 'षष्ठी शेषे' इत्येव सिद्धे नियमार्थं प्रकरणम्, 'इह षष्ठ्येव न तु तल्लुक्' इति । तथा च लुकः प्रयोजकीभूतः समास एव नेति फलितोऽर्थः । ततश्च 'प्रति-पदविधाना-' इति वचनं न कर्तव्यम् । एवं स्थिते 'कृद्योगा षष्ठी-' इति वचनम-मास्तु । 'कर्तृकर्मणोः कृति' इत्यत्र हि 'शेषे' इति निवृत्तम् । तथा चाप्राप्तषष्ठी-विधानार्थमेव तदिति समासनिवृत्तिप्रसङ्गाभावात् 'षष्ठी' इत्यनेनैव समाससिद्धेः सर्पिषो ज्ञानमिति । वस्तुतः करणस्य संबन्धमात्रविवक्षया 'ज्ञोऽविदर्थस्य-' इति षष्ठी । सर्पिःसंबन्धि प्रवर्तनमित्यर्थः । **पूरणगुण ।** अर्थशब्दस्य त्रिषु संबन्धादाह-पूरणाद्यर्थैरिति । अत्र प्राचोक्तम् 'एतदर्थैः षष्ठी न समस्यते' इति, तन्न्यूनम् । तथा हि सती सुहितान्तानामेव ग्रहणं स्यात्, तावतामेवार्थशब्देन समस्तत्वादिति ध्वनयन्नाह-सदादिभिश्चेति । **षष्ठ इति ।** षण्णां पूरणः षष्ठः । 'तस्य पूरणे डट्', 'षट्क-तिकतिपयचतुरां थुक्' । कथं तर्हि 'तान्युञ्छषष्ठाङ्कितसैकतानि' इति । प्रमाद एवेति मित्येके । उञ्छेषु षष्ठ उञ्छात्मकः षष्ठ इति वा व्याख्येयमिति मनोरमायां स्थितम्

काष्र्ण्यम्, ब्राह्मणस्य शुक्लाः। यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणम्। अनित्योऽयं गुणेन निषेधः, 'तदशिष्यं संज्ञाप्रमाणत्वात्' (सू १२९५) इत्यादिनिर्देशात्। तेन अर्थगौरवम्, बुद्धिमान्द्यम् इत्यादि सिद्धम्। सुहितार्थास्तृप्त्यर्थाः। फलानां सुहितः। तृतीयासमासस्तु स्यादेव। स्वरे विशेषः।

---

ब्राह्मणस्य शुक्ला इति। कृष्णशब्दाद् 'गुणवचनब्राह्मणादिभ्यः—' इति भावे ष्यञ्। शुक्लशब्दात्तु 'गुणवचनेभ्यो मतुपो लुक्' इति लुक्। ननु दन्ता इति शेषपूरणेन ब्राह्मणस्य दन्ताः शुक्ला इत्यर्थे ब्राह्मणशब्दस्य दन्तशब्देनैवान्वयात् शुक्लशब्देनान्वयाभावादसामर्थ्यात् कथमिह समासप्रवृत्तिरित्यत आह—यदा प्रकरणादिनेति। प्रकरणादर्थाद्वेत्यर्थः। दन्ताः संयुक्ताः शुभावहाः, न तु विरला इत्यादिदन्तवर्णने प्रकृते यदा ब्राह्मणस्य शुक्ला इत्युच्यते, तदा प्रकरणाद् दन्ता इति विशेष्योपस्थितिः। यदा वा सर्ववर्णेषु दन्तवस्त्रभूषणेषु प्रकृतेषु ब्राह्मणस्य शुक्ला इत्युच्यते, तदा अर्थाद् दन्ता इति विशेष्योपस्थितिः, तत्र सामर्थ्यसत्त्वात् समासे प्राप्ते निषेध इत्यर्थः, अत्र 'आकडारात्—' इति सूत्रोक्तगुणवचनसंज्ञकानां 'तृतीया तत्कृत—' इति सूत्रे प्रपञ्चितानां गुणानां न ग्रहणम्, अत्र गुणवचनशब्दाभावात्। किं तु 'वोतो गुणवचनात्' इति सूत्रभाष्ये प्रपञ्चितानां 'सत्त्वे निविशतेऽपैति—' इत्यादिलक्षणलक्षितगुणानामेव ग्रहणमिति बोध्यम्। एतेन 'आकडारात्—' इति सूत्रभाष्ये तद्धितान्तस्य गुणवचनत्वपर्युदासात् कथं काष्र्ण्यादिशब्दानां गुणवाचित्वमिति निरस्तम्। अथ अर्थगौरवमित्यादौ षष्ठीसमासं साधयितुमाह—अनित्योऽयमिति। संज्ञाप्रमाणत्वादिति। संज्ञायाः प्रमाणत्वं संज्ञाप्रमाणत्वम्, तस्मादिति विग्रहः। अत्र प्रमाणत्वस्य गुणत्वात् तेन षष्ठीसमासनिषेधात्समासनिर्देशोऽनुपपन्नः स्यात्। अतो गुणेन समासनिषेधोऽनित्य इति विज्ञायत इत्यर्थः। इत्यादीति। आदिना गुणातस्न्यमित्यादिसंग्रहः। वस्तुतस्तु अनित्यो गुणेन निषेध इत्ययमर्थो भाष्ये न दृश्यते, न च कृष्णैकत्वमित्यादौ समासानुपपत्तिरिति वाच्यम्, 'पङ्क्तिविंशति—' इति सूत्रे विंशत्यादिशब्दा भाववचना भवन्तीत्युक्त्वा गवां विंशतिर्गवां सहस्रमित्यर्थे गोविंशतिर्गोसहस्रमित्यादिप्रयोगात्। अर्थगौरवमित्यादौ तु अर्थगतं गौरवमिति मध्यमपदलोपिसमासो बोध्य इति शब्देन्दुशेखरे प्रपञ्चितम्। सुहितपदं व्याचष्टे—सुहितार्थास्तृप्त्यर्था इति। नपुंसके भावे क्त इति भावः। फलानां सुहित इति। करणत्वस्याविवक्षायां संबन्धविवक्षायां षष्ठी। अर्थग्रहणात् फलानां तृप्तिरित्यादावपि

---

गुण इति। 'सत्त्वे निविशतेऽपैति—' इत्यादिलक्षणलक्षितो गुणोऽत्र गृह्यते, न वृद्धिरेङ्लक्षणः, अर्थग्रहणात्। नापि संख्या। 'क्रोशशतयोजनशतयोः' इति वार्तिके निर्देशात्। काकस्य काष्र्ण्यम्। ब्राह्मणस्य शुक्ला इति। व्याप्तिन्यायात्केवलगुणवाची गुणोपसर्जनद्रव्यवाची च गुणशब्देन गृह्यत इति भावः। ननु ब्राह्मणस्य शुक्ला इत्यत्र समासप्रसङ्ग एव नास्ति, ब्राह्मणशब्दस्य दन्तैरेवान्वयाद् ब्राह्मणस्य ये दन्तास्ते शुक्ला इत्यर्थादित आह—यदेति। शुक्लशब्द एवेह विशेष्यसमर्पक इति भावः। चन्दनगन्धो घटरूपमित्यादावनेन निषेधे प्राप्ते 'तत्स्थैश्च गुणैः समासो वक्तव्यः'

सत्–द्विजस्य कुर्वन्, कुर्वाणो वा, किङ्कर इत्यर्थः। अव्ययम्–ब्राह्मणस्य कृत्वा पूर्वोत्तरसाहचर्यात्कृदव्ययमेव गृह्यते, तेन तदुपरि इत्यादि सिद्धमिति रक्षितः। तव्यः—ब्राह्मणस्य कर्तव्यम् । तव्यता तु भवत्येव, स्वकर्तव्यम् । स्वरे भेदः

---

न समासः । फलसुहितमिति कथं समास इत्यत आह—तृतीयासमासस्तु ... देवेति । करणत्वविवक्षायां तृतीया । 'कर्तृकरणे कृता बहुलम्' इति समास ... भावः। तर्हि सुहितयोगे षष्ठीसमासनिषेधो व्यर्थ इत्यत आह—स्वरे विशेष इति ... तृतीयासमासे 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः। षष्ठीसमासे तु समासस्या- न्तोदात्तत्वमिति फलभेद इति भावः। सदिति। सद्योगे षष्ठीसमासनिषेध उदाहि- यत इत्यर्थः। 'तौ सत्' इति शतृशानचोः सदिति संज्ञा वक्ष्यते। ननु द्विजस्य कु- र्वन्निति न कर्मणि षष्ठी, 'न लोक–' इति निषेधात्। नापि द्विजस्य घटं कुर्वन्... घटाद्यपेक्षया शेषषष्ठी, तर्हि सापेक्षत्वेनासामर्थ्यात् कुर्वन्नित्यनेन समासाप्रवृत्तेरि- ... आह—किङ्कर इत्यर्थ इति। द्विजं परिचरन्नित्यर्थ इति यावत् । कृञ्धातुः ... परिचरणे वर्तत इति फलितम्। अव्ययमिति । उदाहरणं वक्ष्यत इति शेषः। पूर्वोत्तरेति। सत्तव्याभ्यां कृद्भ्यामित्यर्थः । 'अनेकमन्यपदार्थे' इति सूत्रभा- ... सर्वपश्चादिति प्रयोगश्चेह लिङ्गम् । तव्य इति। उदाहरणं वक्ष्यत इत्यर्थः। ब्राह्म- णस्य कर्तव्यमिति। 'अर्हे कृत्यतृचश्च' 'तव्यत्तव्यानीयरः' इति कृत्यस्तव्य... 'कृत्यानां कर्तरि वा' इति षष्ठी। तव्यता तु भवत्येवेति। षष्ठीसमास इति ... तकारानुबन्धरहितस्यैव तव्यस्य सूत्रे ग्रहणात्तव्यतो न ग्रहणमिति भावः। स्वक... व्यमिति। स्वस्य कर्तव्यमिति विग्रहः। 'कृत्यानां कर्तरि वा' इति षष्ठी। अत्र त... योगात् समासनिषेधो नेति भावः। ननु तव्यत्प्रत्ययमाश्रित्य ब्राह्मणकर्तव्य... समाससंभवात् किं तव्ययोगे तन्निषेधेनेत्यत आह—स्वरे भेद इति। तव्यति ...

---

इति वार्तिकेन समासः प्रतिप्रसूयते । गन्धत्वेन प्रतीयमानो गन्धो न कदापि ... समानाधिकरणः। किं तु स्वप्रधानः इदमेव हि तात्स्थ्यं नाम। ननु 'पिनष्टि गन्ध... इति प्रयोगदर्शनात् शुक्लशब्दादितुल्य एव गन्धशब्दो न तत्स्थगुणवचन इति ... न । पिनष्टीति प्रयोगे हि गन्धानिति न गुणशब्दः, मालतीकुसुमादिषु गन्ध... प्रयोगदर्शनात्। किं तु चन्दनत्वादिजातिनिमित्तकोऽन्य एव सः। तस्माच्चन्दन... इत्यादौ तत्स्थत्वं सुस्थमेव। एवं घटरूपमित्यादावपि। नन्वेवमपि 'बलाकायाः शौक्ल्य... 'केशस्य नैल्यम्' इत्यादावतिप्रसङ्ग इति चेत्, अत्राहुः–'गुणिवचनादुत्पन्नष्यञा ... दिगुणस्यैवाभिधानात्तद्वाचकपदानां गुणिसामानाधिकरण्यसत्त्वान्न दोषः। तथा च ... न्येनाप्राधान्येन वा द्रव्याप्रतिपादकत्वे सति गुणप्रतिपादकत्वं तत्स्थगुणवाचि... इत्यर्थ इति। फलानामिति। करणस्य शेषत्वविवक्षायां षष्ठी । स्वरे ... इति। 'तत्पुरुषे तुल्यार्थ–' इति पूर्वपदप्रकृतिस्वरं बाधित्वा 'थाथ–' आदिसूत्रेणा... दात्तत्वे प्राप्ते तदपवादेन 'तृतीया कर्मणि' इत्यनेन पूर्वपदप्रकृतिस्वरे सत्याद्युदात्त... षष्ठीसमासे तु अन्तोदात्तत्वं स्यात्तच्च नेष्यत इति भावः। तृपिश्च सकर्मकोऽस्ति... पिसृताप्सोरसममेस बभूव इति भट्टिप्रयोगात्। समासस्तु ...

समानाधिकरणेन—तक्षकस्य सर्पस्य । विशेषणसमासस्त्विह बहुलग्रहणान्न । गोर्धेनोः' इत्यादिषु 'पोटायुवति—' (सू ७४४) इत्यादीनां विभक्त्यन्तरे चरि-

कृदुत्तरपदप्रकृतिस्वरेण प्रकृतिस्वरः, तव्ये तु नेति फलभेद इति भावः। समानाधिकरण इति। समानाधिकरणेन षष्ठ्यन्तं न समस्यते इत्यत्रोदाहरणं वक्ष्यत इत्यर्थः। तक्षकस्य सर्पस्येति। अत्र समासे सति पुनः समासात् षष्ठ्युत्पत्तौ तक्षकसर्पस्येति न भवतीत्यर्थः। ननु षष्ठीसमासस्य निषेधेऽपि 'विशेषणं विशेष्येण बहुलम्' इति कर्मधारयसमासो दुर्वारः। अतः किं षष्ठीसमासनिषेधेनेत्यत आह—विशेषणसमासस्त्विति। ननु षष्ठीसमासनिषेधसामर्थ्यादेवात्र कर्मधारयो न भविष्यति। तत् किमगतिकगत्या बहुलग्रहणाश्रयणेन। न च कर्मधारयस्वर एव यथा स्यात्, न तु षष्ठीसमासस्वर इत्यतदर्थः षष्ठीसमासनिषेध इति वाच्यम्, उभयथापि 'समासस्य' इत्यन्तोदात्तत्वस्याविशिष्टत्वादिति चेत्, मैवम्—कर्मधारये हि सति गमनस्य श्रेयस इत्यादौ 'श्रज्यावमकन्पापवत्सु भावे' इति पूर्वपदप्रकृतिस्वरः। षष्ठीसमासे त्वन्तोदात्तत्वं स्यात्। तन्मा भूदित्येतदर्थं षष्ठीसमासनिषेध आवश्यक इति समासनिषेधस्य चरितार्थत्वान्न तस्य विशेषणसमासनिवृत्तिसामर्थ्यमिति बहुलग्रहणमाश्रितम्। न चैवमपि तक्षकसर्प इति प्रथमान्तविग्रहे कर्मधारये सति तक्षकसर्पस्येति दुर्निवारमिति वाच्यम्, निषेधसामर्थ्यादेव प्रथमान्तकर्मधारयमाश्रित्य तक्षकसर्पस्येत्येवंजातीयकप्रयोगाभावोन्नयनात्। अथ समानाधिकरणेन निषेधे उदाहरणान्तरमाह—गोर्धेनोरिति। गोर्धेनोरित्यादिषु षष्ठीसमासः प्राप्तः, सोऽप्यनेन वार्यत इत्यन्वयः। आदिना यूनः खलतेरित्यादिसंग्रहः। ननु षष्ठीसमास एवात्र न प्रसज्यते, 'पोटायुवति—' 'युवा खलति—' इत्यादिविशेषविहितकर्मधारयेणात्र परस्यापि षष्ठीसमासस्य बाधितत्वादित्यत आह—पोटायुवतीत्यादीनां विभक्त्यन्तरे चरितार्थानां परत्वाद्बाधक इति। 'पोटायुवति—' 'युवा खलति—' इत्यादिविधयो गौर्धेनुः, युवा खलतिरित्यादिषु प्रथमाविभक्त्यन्तेषु सावकाशाः। षष्ठीसमासस्तु राज्ञः पुरुष इत्यादावसमानाधिकरणे सावकाशः। गोर्धेनोः, यूनः खलतेरित्यादिषु उभयं प्राप्तम्। तत्र 'पोटायुवति' 'युवा खलति'

शङ्कनीयम्। द्विजस्य कुर्वन् कुर्वाण इति। नेयं घटाद्यपेक्षया षष्ठी द्विजस्य दृष्टं कुर्वन्निति। तथा हि सत्यसामर्थ्यादेव समासाप्रसक्तौ निषेधोऽयं व्यर्थः स्यादतो व्याचष्टे—किंकर इत्यर्थ इति। ब्राह्मणस्य कृत्वेति। तादर्थ्यरूपसंबन्धस्य सामान्यरूपेण विवक्षायां षष्ठी। ब्राह्मणसंबन्धिनी या क्रिया तदनन्तरमित्यर्थः। कृदव्यय-श्चेति। 'अनेकमन्यपदार्थे' इति सूत्रे 'सर्वपश्चात्—' इति भाष्यप्रयोगादिति भावः। व्यादीति। तथा च भट्टिः प्रायुङ्क्त—'यत्कृतेऽरीन्निगृह्णीमः'। 'आदेयाः किंकृते भोगाः कुम्भकर्णं त्वया विना' इति। रक्षित इति। कैयटहरदत्तौ तु अव्ययप्रतिषेधे 'वृक्षस्योपरि' इत्युदाहरन्तौ अकृदव्ययेनापि निषेधं मन्येते, तौ च प्राग्वतभाष्यप्रयोगविरोधादुपेक्ष्याविति भावः। तव्यता तु भवत्येवेति। सूत्रे निरनुबन्धग्रहणा-ऽति भावः। स्वकर्तव्यमिति। कर्तृषष्ठ्या समासः। स्वरे भेद इति। कृदुत्तर-पदप्रकृतिस्वरेण तित्स्वरस्यावस्थानादन्तस्वरित इष्टः। तव्येन तु समासे मध्या-

तार्थानां परत्वाद्बाधकः षष्ठीसमासः प्राप्तः, सोऽप्यनेन वार्यते। ७०६ क्तेन च पूजायाम्। (२—२—१२) 'मतिबुद्धि–' (सू ३०८९) इति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते। राज्ञां मतो बुद्धः पूजितो वा। राजपूजित इत्यादौ तु भूते क्तान्तेन सह तृतीयान्तस्य समासः। ७०७ अधिकरणवाचिना च। (२—२—१३) क्तेन षष्ठी न समस्यते। इदमेषामासितं गतं भुक्तं वा।

---

इत्यादिविधीन् बाधित्वा षष्ठीसमासः प्राप्तः, सोऽप्यनेन समानाधिकरणेनेति निषेधेन वार्यत इत्यर्थः। न च निषेधसामर्थ्यादेव 'पोटायुवति–' इत्यादिसमासोऽपि वाध्यमिति वाच्यम्, षष्ठीसमासे गोर्धेनोरित्यादौ अन्यतरस्य पूर्वनिपातः। 'पोटायुवति' इत्यादिसमासे तु गोयुवादिशब्दस्यैवेति फलभेदस्य स्पष्टत्वात्। समानाधिकरणेन निषेधश्चायं क्वाचित्क एव, अन्यस्य पदस्यार्थ इत्यर्थे अन्यपदार्थ इति निर्देशात्। तेन नीलोत्पलस्य गन्ध इत्यादिसिद्धः। क्तेन च पूजायाम्। अत्र पूजाग्रहणं 'मतिबुद्धिपूजार्थेभ्यश्च' इति सूत्रोपलक्षणम्। तदाह—मतिबुद्धीति सूत्रेणेति। राज्ञां मतो बुद्धः पूजितो वेति। राज्ञा इष्यमाणो ज्ञायमानः पूज्यमान इति क्रमेणार्थः। 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। 'क्तस्य च वर्तमाने' इति षष्ठी। एवं सति राजपूजितो राजमतो राजबुद्ध इति कथं समास इत्यत आह—राजपूजित इत्यादाविति। अधिकरणवाचिना च। शेषपूरणेन सूत्रं व्याचष्टे—क्तेनेति। इदमेषामासितं शयितं गतं भुक्तं वेति। 'क्तोऽधिकरणे च ध्रौव्यगतिप्र-

---

दात्तत्वं स्यात्, तच्च नेष्यत इति भावः। सोऽप्यनेनेति। षष्ठीसमासेन 'पोटायुवति–' इति समासो वारितः, सोऽपि षष्ठीसमासः 'पूरणगुण–' इत्यनेन वार्यत इत्यर्थः। क्तेन च पूजायाम्। सूत्रोपलक्षणं पूजाग्रहणं व्याख्यानादित्याह—मतिबुद्धीति। राज्ञामिति। 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। भूत इति। न च तत्र निष्ठायां णिडन्यन्यायेन मत्यादिभ्यः क्तस्य वर्तमानकालो भूतकालतां बाधत इति वाच्यम्, 'तेनैकदिक्' इत्यतः 'तेन' इत्यधिकारे 'उपज्ञाते' इति निर्देशेन भूतकालस्याबाधज्ञापनात्। 'उपज्ञाते' इत्यत्र हि भूते क्तः, न तु वर्तमाने। अन्यथा 'क्तस्य च वर्तमाने' इति षष्ठीविधानादुपज्ञातशब्दस्य तेनेति तृतीयायोगो न स्यात्। न चैवमपि ज्ञानार्थेष्वेव ज्ञापकत्वमस्त्विति वाच्यम्। 'पूजितो यः सुरासुरैः' इति प्रयोगानुरोधेन सामान्यज्ञापकत्वस्यैव न्याय्यत्वात्। अन्ये तु कारकषष्ठ्या एव समासनिषेधोऽयम्, शेषषष्ठ्या तु समासः स्यादेवेत्याहुः। एतेन 'कलहं स राममहितः कृतवान्' इति भट्टिप्रयोगो व्याख्यातः। राममहितः स कलहं कृतवानित्यन्वयः। अधिकरणवाचिना च। वाचिग्रहणं चिन्त्यप्रयोजनमिति हरदत्तादयः। इदमेषामिति। 'क्तोऽधिकरणे च' इति क्तः। 'अधिकरणवाचिनश्च' इति कर्तरि षष्ठी। 'अधिकरणे च' इत्येव सूत्रद्वयेऽपि वाचिग्रहणं स्पष्टार्थमित्याहुः। ननु किंवृत्तं यद्वृत्तमित्यत्र न कर्मणि क्तः, वृतेरकर्मकत्वात्। तथा चाधिकरणक्तान्तेन कथमिह समास इति चन्मैवम्, नाधिकरणे क्तः, किन्तु गत्यर्थाकर्मक– इति कर्तरि। किमो वृत्त

[ते]कर्मणि च। (२—२—१४) 'उभयप्राप्तौ कर्मणि' (सू ६२४) इति या षष्ठी [वि]हिता न समस्यते। आश्चर्यो गवां दोहोऽगोपेन। ७०९ तृजकाभ्यां कर्तरि। [ल](२–२–१५) कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः। अपां स्रष्टा। वज्रस्य भर्ता।

[भो]ानार्थेभ्यः' इत्यधिकरणे क्तः। 'अधिकरणवाचिनश्च' इति षष्ठी। कर्मणि च। क्तेनेति निवृत्तम्। कर्मणि या षष्ठी सा न समस्यते—इत्यर्थे अपां स्रष्टेत्यादावपि [नि]षेधसिद्धः 'तृजकाभ्यां कर्तरि' इति व्यर्थं स्यात्। किं तु चकार इतिपर्यायः। [क]र्मणीति सप्तम्येकवचनमुच्चार्य या षष्ठी विहिता सा न समस्यत इत्यर्थः। फलित[म]ाह—उभयेत्यादिना। आश्चर्य इति। यद्यप्यत्र 'कर्तृकर्मणोः कृति' इत्येव [क]र्मणि षष्ठी, न तु 'उभयप्राप्तौ कर्मणि' इति सूत्रेण, तस्य सूत्रस्य कर्मण्येव षष्ठी, न [तु] कर्तरीति नियमपरत्वात्। तथापि नियमसूत्राणां विधिरूपेण निषेधरूपेण च द्वेधा [प्र]वृत्तेः स्वीकारान्न दोषः। शब्दानुशासनमित्यत्र तु वस्तुत आचार्यस्य कर्तृत्वेऽपि तस्यानु[प]ादानादुभयप्राप्तावित्यस्याप्रवृत्तेर्नायं निषेधः, 'कृत्वोऽर्थप्रयोगे—' 'इत्यतः प्रयोगे' इत्यनु[वृ]त्त्या कर्तृकर्मणोरुभयोः प्रयोग एव तस्य प्रवृत्तेः। यद्वा 'शेषे विभाषा' अविशेषेण विभा[षे]त्याश्रित्य उभयप्राप्तावित्यभावपक्षे 'कर्तृकर्मणोः कृति' इत्येव षष्ठ्याः प्राप्तेर्नायं [नि]षेध इत्यलम्। तृजकाभ्यां कर्तरि। कर्तरीति तृजकयोरेव विशेषणम्, श्रुतत्वात्। न [तु] षष्ठ्याः। तदाह—कर्त्रर्थतृजकाभ्यामिति। अपां स्रष्टा, वज्रस्य भर्तेति।

[क]र्मणि च। क्तेनेति नानुवर्तते, 'क्तेन च पूजायाम्' इति निषेधवैयर्थ्यप्रसङ्गात्। [ष]ष्ठी त्वनुवर्तते, किंतु सापि या काचित्कर्मणि षष्ठी न गृह्यते। 'अपां स्रष्टा' इत्यादा[व]नेनैव सिद्धौ 'तृजकाभ्यां कर्तरि' इति निषेधवैयर्थ्यापत्तेः। किं च 'इध्मव्रश्चनः' [इ]त्यादौ समाससिद्धये वचनं कर्तव्यं स्यात्। न च 'कृद्योगलक्षणा षष्ठी समस्यते' इति [वा]र्तिकमस्त्येवेति वाच्यम्, तस्य सिद्धान्ते प्रत्याख्यानात्। ततश्च निपातानामनेकार्थत्वा[दि]तीत्यर्थे चशब्दोऽयम् तदाह—कर्मणीति या षष्ठीति। सप्तम्येकवचनान्तं पद[मु]च्चार्य या षष्ठी विहिता परिशेषिता वेत्यर्थः। नियमसूत्राणां विधिमुखेन निषेध[मु]खेन वेति द्वेधा प्रवृत्तेः स्वीकृतत्वात्। गवां दोह इति। अगोपेनेत्युपन्यासस्त्विह उभय[प्रा]प्तिप्रदर्शनार्थः। ननु कथम् अथ शब्दानुशासनमिति। अत्र व्याचख्युः—शब्दानामितीयं [ष]ष्ठी 'कर्तृकर्मणोः—' इति विहिता, न तु 'उभयप्राप्तौ—' इत्यनेन, आचार्यस्य कर्तृ[त्वस्य व]स्तुतः सत्त्वेऽपि इहानुपादानात्। 'कृत्वोर्थप्रयोगे—' इत्यतः 'प्रयोगे' इत्यनुवर्तनात्कर्तृ[क]र्मणोरुभयोरुपादान एवायं नियम इति स्वीकारात्। 'आश्चर्यो गवां दोहोऽगोपेन' [इ]त्यत्र हि आश्चर्यं प्रतिपाद्यम्, तच्च यद्यशिक्षितो दोग्धा दुर्दोहा गावश्च दोग्धव्यास्त[दै]व निर्वहति, न त्वन्यथा। अतः कर्तृकर्मणोर्विशिष्योपादानादस्तूभयप्राप्तिः, इह तु [श]ब्दानामिदमनुशासनम्, न त्वर्थानाम्' इत्यर्थनिवृत्तिपरं वाक्यम्, न तु कर्तृविशेषनिवृत्ति[पर]मतो नास्त्युभयप्राप्तिः। अस्तु वा यथाकथंचिदुभयप्राप्तिः, तथापि न क्षतिः, 'उभ[यप्र]ाप्तौ—' इति सूत्रे 'अविशेषेण विभाषा' इति पक्षस्यापि विद्यमानतया नियमाप्रवृत्ति[पक्षे] 'आचार्यस्य शब्दानुशासनम्' इति प्रयोगसंभवात्। यदि वा शेषलक्षणा षष्ठीति [व्य]ाख्यायते, तदा तु समासनिषेधशङ्कैवात्र नास्तीति। तृजकाभ्याम्। इह 'कर्तृ

ओदनस्य पाचकः । कर्तरि किम्—इक्षूणां भक्षणमिक्षुभक्षिका । पत्यर्थ शब्दस्य तु याजकादित्वात्समासः । भूभर्ता । कथं तर्हि 'घटानां निर्मातुस्त्रिभु विधातुश्च कलहः' इति । शेषषष्ठ्या समास इति कैयटः । ७१० कर्तरि (२-२-१६) कर्तरि षष्ठ्या अकेन न समासः । भवतः शायिका । नेह

'ण्वुल्तृचौ' इति कर्तरि तृच्, 'कर्तृकर्मणोः—' इति कर्मणि षष्ठी । एवमोदनस्य पाच इति पचेः कर्तरि ण्वुल् । अकादेश इति विशेषः । इक्षुभक्षिकेति । 'स्त्रियां क्ति इत्यधिकारे धात्वर्थनिर्देशे ण्वुल् । कर्मणि षष्ठ्याः समासः । 'कर्मणि च' इति नि स्तु न, कर्तुः प्रयोग एव तत्प्रवृत्तेः । ननु 'भुवो भर्ता भूभर्ता' इत्यत्रापि नि स्यात् । न च भर्तृशब्दस्य याजकादौ पाठाद् भवत्येव षष्ठीसमासः । 'याजकादिभि इत्यस्य प्रतिप्रसवार्थत्वादिति वाच्यम्, एवं तर्हि वज्रस्य भर्तेत्यत्रापि समासप्रस दित्यत आह—पत्यर्थेति । याजकादौ पत्यर्थकस्यैव भर्तृशब्दस्य ग्रहणम्, व्याख्या नात् । ततश्च वज्रस्य भर्तेत्यत्र 'याजकादिभिश्च' इति समासो नेति भावः । इ तर्हीति । त्रयाणां भुवनानां समाहारस्त्रिभुवनम्, तद्धितार्थ इति द्विगुः । 'अकारा त्तरपदो द्विगुः स्त्रियाम्' इति तु न भवति, पात्राद्यन्तस्य नेत्युक्तेः । त्रिभुवनस्य नि तेति तृचो योगे कथं कर्मणि षष्ठ्याः समास इत्याक्षेपः । परिहरति—शेषषष्ठ्ये प्रत्यासत्त्या कारकषष्ठ्या एवायं निषेध इति 'बहुषु—' इति सूत्रे कैयट आहेत्यर्थः । च । कर्तरीत्येतत् षष्ठीत्यनुवृत्ते अन्वेति, तदाह—कर्तरि षष्ठ्या इति । नेति । 'तृजकाभ्यां कर्तरि' इत्यतस्तदनुवृत्तेरिति भावः । भवतः शायिकेति । क्तिन्' इत्यधिकारे धात्वर्थनिर्देशे ण्वुल्, अकादेशः, टाप्, । 'कर्तृकर्मणोः—' इ कर्तरि षष्ठी । अत्र अकस्य कर्त्रर्थकत्वाभावात् 'तृजकाभ्याम्—' इत्यस्य न प्राप्ति ननु पूर्वसूत्रे 'तृजकाभ्याम्—' इति समस्तपदोपादानात् कथमिहाकस्यैवानुवृत्तिः व तृच इत्यत आह—नेहेति । तद्योग इति । तृचः कर्तरि विहितत्वेन स्रष्टा इत्यादौ कर्तुः कृताभिहिततया तत्र कर्तरि षष्ठ्या एवाप्रसक्त्या तत्समासनिषेधस्य

षष्ठ्या तृजकाभ्याम्' इति वृत्तिकारव्याख्यानमयुक्तमिति ध्वनयन्नाह—कर्तृ काभ्यामिति । कर्तृग्रहणं तृजकयोरेव विशेषणमिति युक्तम्, तयोः श्रुतत्वात्, षष्ठ्या इति भावः । यद्यपि कर्तरीति तृचो न विशेषणम्, व्यभिचारात्, तथा विशेषणत्वेन तदावश्यकमित्याह— इक्षुभक्षिकेति । 'पर्यायार्हणा—' इति ण्वुच् । कर्मणि षष्ठ्या समासः । ननु वज्रस्य भर्तेत्युदाहरणमयुक्तम् । भर्तृ याजकादित्वेन समासावश्यंभावादित्याशङ्क्याह—पत्यर्थभर्तृशब्दस्येति । यद्य कादिष्वर्थविशेषविशिष्टतया भर्तृशब्दो न पठितः, तथापि रूढेर्बलीयस्त्वात्पति स्यैव तत्र ग्रहणम्, न तु यौगिकस्येति भावः । शेषषष्ठ्येति । न्यासकार न्तमेतत्, 'न लोका—' इति निषेधस्त्वनित्यः, 'त्रकाभ्याम्—' इति वक्तव्ये तृच् बन्धग्रहणाज्ज्ञापकादित्याह । केचित्तु—'जनिकर्तुः—' 'तत्प्रयोजको हेतुश्च' इति नित्योऽयं समासनिषेध इत्याहुः । तन्मन्दम्, शेषषष्ठीसमासेनोक्तनिर्देशोपपत्तेः ।



च । नेह तृजीति । न चात्तरार्थत्वं शङ्क्यम् । तृच् क्रीडाजीविकयोर्नित्यमिति

नुवर्तते। तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात्। ७११ नित्यं क्रीडा-जीविकयोः। (२-२-५७) एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका। क्रीडाविशेषस्य संज्ञा। 'संज्ञायाम्' (सु ३२८६) इति भावे ण्वुल्। जीविकायाम्–दन्तलेखकः। तत्र क्रीडायां विकल्पे, जीविकायां 'तृजकाभ्यां कर्तरि (सू ७०९) इति निषेधे प्राप्ते वचनम्। ७१२ पूर्वापराधरोत्तर-मेकदेशिनैकाधिकरणे। (२-२-१) अवयविना सह पूर्वादयः समस्यन्ते, एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः।

---

शृङ्गेण कण्डूयनं न कर्तव्यमितिवदसंभवपराहतत्वादित्यर्थः। नित्यं क्रीडाजीविकयोः। उद्दालकपुष्पभञ्जिकेति। उद्दालकः श्लेष्मातकः, तस्य पुष्पाणि, तेषां भञ्जनमित्यस्वपदविग्रहः। संज्ञायामिति। 'स्त्रियां क्तिन्' इत्यधिकारे 'संज्ञायाम्' इति भावे ण्वुलित्यर्थः। अत्र कर्मणि षष्ठ्याः समासः। वस्तुतस्तु 'स्त्रियां क्तिन्' इत्यधिकारे 'धात्वर्थनिर्देशे ण्वुल्' इति भावे ण्वुलित्येव युक्तम्। 'संज्ञायाम्' इति तु अधिकरणार्थमिति कृदन्ते वक्ष्यते। तथा सति उद्दालकपुष्पाणि भज्यन्ते यस्यां क्रीडायामिति विग्रहः। जीविकायामिति। उदाहरणं वक्ष्यत इत्यर्थः। दन्तलेखक इति। दन्तानां लेखनेन जीवतीत्यस्वपदविग्रहः, लिखेः कर्तरि ण्वुल्। अकादेशः। जीविका समासगम्या। ननु 'षष्ठी' इति सूत्रेणैवात्र षष्ठीसमाससिद्धेः किमर्थमिदमित्यत आह—तत्रेति। तत्र तस्मिन् उदाहरणद्वये क्रीडाबोधक उद्दालकपुष्पभञ्जिकेत्यत्र विभाषाधिकारात् षष्ठीसमासविकल्पे प्राप्ते, जीविकाबोधके तु दन्तलेखक इत्यत्र 'तृजकाभ्याम्–' इति षष्ठीसमासनिषेधे प्राप्ते इदं सूत्रमारब्धमित्यर्थः। पूर्वापर। 'पूर्वापराधरोत्तम्' इति समाहारद्वन्द्वात् प्रथमैकवचनम् एकदेशशब्दोऽवयवे रूढः। एकदेशोऽस्यातीत्येकदेशी अवयवी, तेनेति लभ्यते। अधिकरणं द्रव्यम्। एकमधिकरणम् एकाधिकरणम्। एकत्वविशिष्टद्रव्ये वर्तमानेन अवयविवाचकसुबन्तेन पूर्वापराधरोत्तरशब्दाः सुबन्ताः समस्यन्ते, स तत्पुरुष इत्यर्थः। फलितमाह—अवयविना सहेत्यादिना। ननु पूर्वश्चासौ कायश्चेति कर्मधारयेणैव पूर्वकाय इत्यादि सिद्धम्। भक्त्या कायशब्दस्य कायावयववाचित्वेन समानाधिकरण्योपपन्नत्वादिति भावः।

---

वामनस्तु—'अके जीविकार्थे' इत्यत्र 'अक' इति किम्, 'रमणीयकर्ता' इति प्रत्युदाहरन् जीविकायां तृचमिच्छति। भावे ण्वुलिति। भञ्जनं भञ्जिका। पुष्पाणामिति कर्मणि षष्ठी। 'भावे' इत्युपलक्षणम्, अधिकरणे ण्वुल्यपि बाधकाभावादिति मत्वा 'संज्ञायाम्' इति सूत्रे कृदन्ते मनोरमायामुक्तम्—'उद्दालकः श्लेष्मातकस्तस्य पुष्पाणि भज्यन्ते यस्यां क्रीडायां सा उद्दालकपुष्पभञ्जिका' इति। पूर्वापर। एकदेशशब्दोऽवयवे रूढः। अत एव तस्य कर्मधारयत्वेऽपि ततो मत्वर्थीयः। 'गुणसर्ववान्' इत्यत्रेव 'न कर्मधारयान्मत्वर्थीयः' इति निषेधस्य रूढेष्वप्रवृत्तेः। यद्यपीह 'एकगोपूर्वात्' इति ठञ् प्राप्तः, तथाप्यतएव निर्देशादनित्यस्तदेतदाह—अवयविनेति। नन्विदं सूत्रं व्यर्थम्, पूर्वकाय इत्यादिप्रयोगाणां कर्मधारयेणैव सिद्धेः, पूर्वकाय इतिवत्, 'समुदाये हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायात्

ओदनस्य पाचकः । कर्तरि किम्—इक्षूणां भक्षणमिक्षुभक्षिका । पत्यर्थ शब्दस्य तु याजकादित्वात्समासः । भूभर्ता । कथं तर्हि 'घटानां निर्मातुस्त्रिभु विधातुश्च कलहः' इति । शेषषष्ठ्या समास इति कैयटः । ७१० कर्तरि (२–२–१६) कर्तरि षष्ठ्या अकेन न समासः । भवतः शायिका । नेह

'ण्वुल्तृचौ' इति कर्तरि तृच्, 'कर्तृकर्मणोः–' इति कर्मणि षष्ठी । एवमोदनस्य पा इति पचेः कर्तरि ण्वुल् । अकादेश इति विशेषः । इक्षुभक्षिकेति । 'स्त्रियां क्ति इत्यधिकारे धात्वर्थनिर्देशे ण्वुल् । कर्मणि षष्ठ्याः समासः । 'कर्मणि च' इति नि स्नु न, कर्तुः प्रयोग एव तत्प्रवृत्तेः । ननु 'भुवो भर्ता भूभर्ता' इत्यत्रापि नि स्यात् । न च भर्तृशब्दस्य याजकादौ पाठाद् भवत्येव षष्ठीसमासः । 'याजकादिभि इत्यस्य प्रतिप्रसवार्थत्वादिति वाच्यम्, एवं तर्हि वज्रस्य भर्तेत्यत्रापि समासप्रस दित्यत आह—पत्यर्थेति । याजकादौ पत्यर्थकस्यैव भर्तृशब्दस्य ग्रहणम्, व्या नात् । ततश्च वज्रस्य भर्तेत्यत्र 'याजकादिभिश्च' इति समासो नेति भावः । तर्हीति । त्रयाणां भुवनानां समाहारस्त्रिभुवनम्, तद्धितार्थ इति द्विगुः । 'अकार त्तरपदो द्विगुः स्त्रियाम्' इति तु न भवति, पात्राद्यन्तस्य नेत्युक्तेः । त्रिभुवनस्य तेति तृचो योगे कथं कर्मणि षष्ठ्याः समास इत्याक्षेपः । परिहरति—शेषषष्ठ्ये प्रत्यासत्त्या कारकषष्ठ्या एवायं निषेध इति 'बहुषु–' इति सूत्रे कैयट आहेत्यर्थः। च । कर्तरीत्येतत् षष्ठीत्यनुवृत्ते अन्वेति, तदाह—कर्तरि षष्ठ्या इति । नेति । 'तृजकाभ्यां कर्तरि' इत्यतस्तदनुवृत्तेरिति भावः । भवतः शायिकेति । क्तिन्' इत्यधिकारे धात्वर्थनिर्देशे ण्वुल्, अकादेशः, टाप्, । 'कर्तृकर्मणोः–' कर्तरि षष्ठी । अत्र अकस्य कर्त्रर्थकत्वाभावात् 'तृजकाभ्याम्–' इत्यस्य न प्रा ननु पूर्वसूत्रे 'तृजकाभ्याम्–' इति समस्तपदोपादानात् कथमिहाकस्यैवानुवृत्तिः तृच इत्यत आह—नेहेति । तद्योग इति । तृचः कर्तरि विहितत्वेन स्रष्टा इत्यादौ कर्तुः कृताभिहिततया तत्र कर्तरि षष्ठ्या एवाप्रसक्त्या तत्समासनिषेधस

षष्ठ्या तृजकाभ्याम्' इति वृत्तिकारव्याख्यानमयुक्तमिति ध्वनयन्नाह—क काभ्यामिति । कर्तृग्रहणं तृजकयोरेव विशेषणमिति युक्तम्, तयोः श्रुतत्वात् षष्ठ्या इति भावः । यद्यपि कर्तरीति तृचो न विशेषणम्, व्यभिचारात्, तथा विशेषणत्वेन तदावश्यकमित्याह— इक्षुभक्षिकेति । 'पर्यायार्हणा–' इति ण्वुच् । कर्मणि षष्ठ्या समासः । ननु वज्रस्य भर्तेत्युदाहरणमयुक्तम् । भर्त याजकादित्वेन समासावश्यंभावादित्याशङ्क्याह—पत्यर्थभर्तृशब्दस्येति । यद्य कादिष्वर्थविशेषविशिष्टतया भर्तृशब्दो न पठितः, तथापि रूढेर्बलीयस्त्वात्प स्यैव तत्र ग्रहणम्, न तु यौगिकस्येति भावः । शेषषष्ठ्येति । न्यासाकार त्तमेतत्, 'न लोका–' इति निषेधस्त्वनित्यः, 'त्रकाभ्याम्–' इति वक्तव्ये तृ वन्ध्यग्रहणाज्ज्ञापकादित्याह । केचित्तु—'जनिकर्तुः–' 'तत्प्रयोजको हेतुश्च' इति नित्योऽयं समासनिषेध इत्याहुः । तन्मन्दम्, शेषषष्ठीसमासेनोक्तनिर्देशोपपत्तेः च । नेह तृजिति । न चोत्तरार्थत्वं शङ्क्यम् । तृच् क्रीडाजीविकयोर्नास्तीति

नुवर्तते। तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात्। ७११ नित्यं क्रीडाजीविकयोः। (२-२-५७) एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका। क्रीडाविशेषस्य संज्ञा। 'संज्ञायाम्' (सु ३२८६) इति भावे ण्वुल्। जीविकायाम्—दन्तलेखकः। तत्र क्रीडायां विकल्पे, जीविकायां 'तृजकाभ्यां कर्तरि' (सू ७०९) इति निषेधे प्राप्ते वचनम्। ७१२ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे। (२-२-१) अवयविना सह पूर्वादयः समस्यन्ते, एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः।

---

शृङ्गेण कण्डूयनं न कर्तव्यमितिवदसंभवपराहतत्वादित्यर्थः। नित्यं क्रीडाजीविकयोः। उद्दालकपुष्पभञ्जिकेति। उद्दालकः श्लेष्मातकः, तस्य पुष्पाणि, तेषां भञ्जनमित्यस्वपदविग्रहः। संज्ञायामिति। 'स्त्रियां क्तिन्' इत्यधिकारे 'संज्ञायाम्' इति भावे ण्वुलित्यर्थः। अत्र कर्मणि षष्ठ्याः समासः। वस्तुतस्तु 'स्त्रियां क्तिन्' इत्यधिकारे 'धात्वर्थनिर्देशे ण्वुल्' इति भावे ण्वुलित्येव युक्तम्। 'संज्ञायाम्' इति तु अधिकरणार्थमिति कृदन्ते वक्ष्यते। तथा सति उद्दालकपुष्पाणि भज्यन्ते यस्यां क्रीडायामिति विग्रहः। जीविकायामिति। उदाहरणं वक्ष्यत इत्यर्थः। दन्तलेखक इति। दन्तानां लेखनेन जीवतीत्यस्वपदविग्रहः, लिखेः कर्तरि ण्वुल्। अकारशः। जीविका समासगम्या। ननु 'षष्ठी' इति सूत्रेणैवात्र षष्ठीसमाससिद्धेः किमर्थमिदमित्यत आह—तत्रेति। तत्र तस्मिन् उदाहरणद्वये क्रीडाबोधक उद्दालकपुष्पभञ्जिकेत्यत्र विभाषाधिकारात् षष्ठीसमासविकल्पे प्राप्ते, जीविकाबोधके तु दन्तलेखक इत्यत्र 'तृजकाभ्याम्–' इति षष्ठीसमासनिषेधे प्राप्ते इदं सूत्रमारब्धमित्यर्थः। पूर्वापर। 'पूर्वापराधरोत्तम्' इति समाहारद्वन्द्वात् प्रथमैकवचनम् एकदेशशब्दोऽवयवे रूढः। एकदेशोऽस्यातीत्येकदेशी अवयवी, तेनेति लभ्यते। अधिकरणं द्रव्यम्। एकमधिकरणम् एकाधिकरणम्। एकत्वविशिष्टद्रव्ये वर्तमानेन अवयविवाचकसुबन्तेन पूर्वापराधरोत्तरशब्दाः सुबन्ताः समस्यन्ते, स तत्पुरुष इत्यर्थः। फलितमाह—अवयविना सहेत्यादिना। ननु पूर्वश्चासौ कायश्चेति कर्मधारयेणैव पूर्वकाय इत्यादि सिद्धम्। भक्त्या कायशब्दस्य कायावयववाचित्वेन समानाधिकरण्योपपत्तेः—

---

क्तत्वादिति भावः। वामनस्तु—'अके जीविकार्थे' इत्यत्र 'अक' इति किम्, 'रमणीयकर्ता' इति प्रत्युदाहरन् जीविकायां तृचमिच्छति। भावे ण्वुलिति। भञ्जनं भञ्जिका। पुष्पाणामिति कर्मणि षष्ठी। 'भावे' इत्युपलक्षणम्, अधिकरणे ण्वुल्यपि बाधकाभावादिति मत्वा 'संज्ञायाम्' इति सूत्रे कृदन्ते मनोरमायामुक्तम्—'उद्दालकः श्लेष्मातकस्तस्य पुष्पाणि भज्यन्ते यस्यां क्रीडायां सा उद्दालकपुष्पभञ्जिका' इति। पूर्वापर। एकदेशशब्दोऽवयवे रूढः। अत एव तस्य कर्मधारयत्वेऽपि ततो मत्वर्थीयः। 'कृष्णसर्पवान्' इत्यत्रेव 'न कर्मधारयान्मत्वर्थीयः' इति निषेधस्य रूढेष्वप्रवृत्तेः। अपीह 'एकगोपूर्वात्' इति ठञ् प्राप्तः, तथाप्यतएव निर्देशादनित्यस्तदेतदाह—अवयविनेति। नन्विदं सूत्रं व्यर्थम्, पूर्वकाय इत्यादिप्रयोगाणां कर्मधारयेणैव सिद्धेः, पूर्वकाय इतिवत् 'समुदाये हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायादत

अपरकायः । एकदेशिना किम्-पूर्वं नाभेः कायस्य । एकाधिकरणे किम्-
श्छात्राणाम् । सर्वोऽप्येकदेशोऽह्ना समस्यते । 'संख्याविसाय-' (सू २
इति ज्ञापकात् । मध्याह्नः । सायाह्नः । केचित्तु सर्वं एकदेशः कालेन सम

---

पत्तेरित्यत आह—षष्ठीसमासापवाद इति । पूर्वं कायस्येति विग्रहे 'प(सू
इति सूत्रेण समासे सति षष्ठयन्तस्य समासविधौ प्रथमानिर्दिष्टत्वात् पूर्वनिपा
स्यात् । तन्निवृत्त्यर्थमिदं वचनमित्यर्थः । पूर्वं कायस्येति । अत्र पूर्वं काय
विग्रहवाक्यम् । अर्धमिति गम्यम् । विशेष्याभिप्रायं नपुंसकत्वम् । 'तस्य परमाम्रे
तम्' इति निर्देशादवयववृत्तिदिक्शब्दयोगे पञ्चम्यभावात् षष्ठी । पूर्वकाय
पूर्वशब्दस्य समासविधौ प्रथमानिर्दिष्टत्वात् पूर्वनिपातः । 'परवल्लिङ्गम्-' इति
मिति भावः । 'यत्र उत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते
रुत्सर्गो न प्रवर्तते' इति 'पारे मध्ये षष्ठया वा' इत्यत्रोक्तम् । ततश्च एकदेशिसम
भावे षष्ठीसमासो न भवति । अपरकाय इति । अपरं कायस्येति विग्रहः ।
कायः । उत्तरकायः । एकदेशिना किमिति । एकद्रव्यवाचिना पूर्वादयः समस्य
इत्येवास्त्वित्यर्थः । पूर्वं नाभेः कायस्येति । अत्र नाभेरिति पूर्वशब्देऽ
दिग्योगे पञ्चमी । नाभ्यपेक्षया यत् पूर्वमर्धं तत् कायावयवभूतमित्यर्थः । अत्र
शब्दस्य नाभ्यपेक्षया पूर्वांशेऽन्वयः । अत्र पूर्वस्यांशस्य नाभिरवधिरेव, न त्ववय
अतो नाभिशब्देन पूर्वशब्दस्य समासो न भवतीत्यर्थः । पूर्वश्छात्राणामि
अत्र छात्रशब्दः छात्रसमुदायपरः । उद्भूतावयवसमुदायापेक्षं बहुवचनम् ।
वावयविभावसम्बन्धे षष्ठी । छात्रसमुदायस्य पूर्वमर्धमित्यर्थः । अत्र छात्रसमु
एकत्वेऽपि उद्भूतावयवकतया बहुत्वादेकत्वसंख्यावैशिष्टयाभावान्न समास इति
ननु अह्नो मध्यं मध्याह्न इत्यत्र कथमेकदेशिसमासः । मध्यशब्दस्य पूर्वादिष्वनन्त
दित्यत आह—सर्वोऽप्येकदेश इति । पूर्वादिभिन्नोऽपीत्यर्थः । ज्ञापकादि
'तत्पुरुषस्य-' इति 'अहस्सर्वैकदेशसंख्यातपुण्याच्च-' इति च प्रकृते 'अह्नोऽह्न
इत्येकदेशवाचकात् परस्य अहन्शब्दस्य अह्नादेशो विधीयते । ततश्चाह्नः साय
विग्रहे अवयविवृत्तिना अहन्शब्देन षष्ठयन्तेन अवयववृत्तिसायशब्दस्य तत्पुरु

---

आह—षष्ठीसमासापवाद इति । तथा च कायपूर्व इत्याद्यनिष्टप्रयोग
सूत्रमिति भावः । पूर्वं कायस्येति । यद्यपि 'अन्यारात्-' इति सूत्रे दिशि
शब्दो दिक्शब्द इति व्याख्यानेन संप्रत्यदिग्वृत्तिनापि योगे पञ्चमी स्वीकृतेति
दुर्लभा, तथापि 'तस्य परमाम्रेडितम्' इति लिङ्गाद् 'अवयववाचिदिक्शब्दयोगे प
न' इत्युक्तत्वात् षष्ठ्येव भवतीति भावः । पूर्वं नाभेरिति । नाभेर्यः पूर्वो
कायस्यावयव इत्यर्थः। नाभेरिति दिग्योगलक्षणा पञ्चमी । तेनात्र पूर्वस्य भागस्य
रवधिः, न त्वेकदेशीति नाभ्या सह समासो नेत्यर्थः । कायेन तु स्यादेव 'पूर्व
नाभेः' इति । पूर्वशब्द नित्यसापेक्षत्वात् प्रधानत्वाच्च । पूर्वश्छात्राणामि
नासौ निर्धारणे षष्ठी, किंतु समुदायसमुदायिसंबन्धे । बहुवचनं तूद्भूतावयव
दायविवक्षया । ततश्छात्राणामेकदेशित्वे सत्यप्येकत्ववैशिष्टयाभावान्न समासः

रा: कृभ्वस्तयोऽनुप्रयुज्यन्ते । 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' (सू २२४०) इति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते । तेन 'कृभ्वस्तियोगे-' (सू २११७) इत्यत: 'कृञो द्वितीय-' (सू २१२९) इति ञकारेण प्रत्याहारा-श्रयणात्कृभ्वस्तिलाभ: । तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वा-त्तदर्थयोरभेदेनान्वय: । सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते ।

---

अव्ययादाप्सुप:' इति लुक् । 'आम:' इत्यनेन तु परिशेषाल्लेरेव लुक्सिद्धेर्लेरिति नानुवर्तनीयम् । आम: परस्य लेरिति विवरणवाक्ये तु लेरिति स्पष्टार्थमेव । एवं च एधामित्यव्ययं न वेति पक्षद्वयम्, उभयथापि सुबन्तं पदमिति भाष्ये स्पष्टम् । कृञ्चानु । 'कास्प्रत्ययादाम्-' इत्यत आमित्यनुवृत्तं पञ्चम्या विपरिणम्यते । प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते । लिटि परे य: कृञ् स: अनुप्रयुज्यत इत्य-न्वय: । फलितमाह आमन्ताल्लिट्परा इति । लिट्शिरस्का इत्यर्थ: । कृभ्व-स्तय इति । कृञित्यनेन कृभ्वस्तीनां ग्रहणमिति भाव: । अनुप्रयुज्यन्त इति । अनुशब्दादनुशब्दाच्चाव्यवहिता: पश्चात्प्रयुज्यन्त इत्यर्थ: । विपर्यासनिवृत्त्यर्थं व्यववहित-निवृत्त्यर्थं चेति वार्तिकाद् भाष्याच्च । एवं च 'तं पातयां प्रथममास पपात पश्चात्' 'प्रभ्रंशयां यो नहुषं चकार' इत्यादिप्रयोगा: प्रामादिका एव । धातोराम् स्यात्, कृञ्चानुप्रयुज्यत इत्युक्तसमुच्चयार्थश्चकार: । ननु कृञ एवानुप्रयोगश्रवणात् कथं भ्वस्त्योरप्यनुप्रयोग इत्यत आह आम्प्रत्ययवदित्यादिना । 'कृञ्चानुप्रयुज्यते-' इत्यत्र कृञ एकस्यैवानुप्रयोगविधौ सति 'आम्प्रत्ययवत्-' इति सूत्रे अनुप्रयुज्य-मानस्येत्यस्य कृञ इति विशेषणं व्यर्थं स्यात् । धात्वन्तरस्यानुप्रयोगाप्रसक्ते: । ततश्च कृञ इति विशेषणादन्यस्यापि अनुप्रयोगो विज्ञायत इत्यर्थ: । ननु कृञोऽन्यस्याप्य-नुप्रयोगो विज्ञायताम्, भ्वस्त्योरपीत्येव कुत आयातमित्यत आह तेनेति । कृञ्-ग्रहणेनेत्यर्थ: । प्रत्याहाराश्रयणादिति । एतच्च भाष्ये स्पष्टम् । नन्वनुप्रयुज्य-मानानां कृभ्वस्तीनां आम्प्रकृतिभूतानां च कथमन्वय इत्यत आह तेषामित्यारभ्या-

---

निघातश्च तिङन्तस्येत्यर्थ: । न चातिङन्तत्वे पदत्वाभावादामन्तात्परस्य निघातो न सिध्यतीति शङ्क्यम्, लिट: कृत्त्वात्प्रत्ययलक्षणेन कृदन्ततया प्रातिपदिकत्वे सोरुत्पत्ता-वामन्तस्याव्ययत्वात्सुपो लुक्यपि प्रत्ययलक्षणेन सुबन्ततया पदत्वात् । कृञ्चानुप्रयु-ज्यते । कथं तर्हि 'तं पातयां प्रथममास पपात पश्चात्' । 'प्रभ्रंशयां यो नहुषं चकार' इति । प्रमाद एवायम् । न च विपरीतप्रोगनिवृत्तिमात्रे सूत्रस्य तात्पर्यात् पश्चात्प्रयोगो व्यवहितोऽपि न दुष्यतीति वाच्यम्, विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चेति वार्तिकविरोधात् । अन्यस्यापीति । यदीह कृञ्शब्देन एक एव धातुर्गृह्येत तदा धात्वन्तरस्य प्राप्त्यभावाद् 'आम्प्रत्ययवत्-' इति सूत्रेऽनुप्रयुज्य-मानस्य कृञ इति विशेषणं व्यर्थं स्यादिति भाव: । न चात्र 'कृञ् च-' इति चकारे-णैवानुप्रयोगोऽन्यस्यापीति ज्ञायत इति शङ्क्यम्, धातोराम् स्यात्, अनुप्रयुज्यते च लिट्पर: कृञ इत्यर्थसमर्पकतया तस्योपक्षीणत्वात् । अभेदान्वय इति । सामान्य-विशेषयोरभेदान्वयो लोकसिद्ध इति भाव: । एवं च एधांचक्रे एधांबभूवे इत्यादौ

कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते । २२४० आम्प्रत्ययवत्कृञो प्रयोगस्य । (१—३—६३) आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहि आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात् । इह पूर्ववद् इत्यन

---

भेदेनान्वय इत्यन्तेन । सामान्यविशेषयोरभेदान्वयस्य न्याय्यत्वादिति भावः । इव भ्वस्त्योरपि क्रियासामान्यवाचित्वाद् धातूनामनेकार्थत्वादिति ज्ञेयम् । ननु 'कृ स्तियोगे' इत्यस्य 'कृञो द्वितीय–' इत्यस्य च सूत्रस्य मध्ये 'अभिविधौ संपदा च' पठितम् । एवं च कृञ्प्रत्याहारे संपदोऽपि कुतो न ग्रहणमित्यत आह सं स्त्विति । अनन्वितार्थत्वादिति । सिद्धस्य वस्तुनो रूपान्तरापत्तिः सम्पदे एधादिधातोस्त्वाम्प्रकृतिभूतस्य वृद्ध्यादिरर्थः । तयोरुभयोरपि विशेषरूपत्वेन सा न्यविशेषभावाभावेन अभेदान्वयासंभवादित्यर्थः । अत एव 'कृभ्वस्तीनां ग्रहणम्' भाष्यं संगच्छत इति भावः । ननु 'आम्प्रत्ययवत्–' इति कृञ आत्मनेपदविधायक वक्ष्यमाणं व्यर्थम् । 'स्वरितञितः' इत्येव तत्सिद्धेरित्याशङ्क्याह कृञस्त्वि आम्प्रत्ययवत्कृञः । 'अनुदात्तङितः–' इत्यत आत्मनेपदमित्यनुवर्तते । तत्र त्ययस्यात्मनेपदाभावादाह आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो व्रीहिरिति । तस्य अन्यपदार्थस्य गुणा विशेषणानि वृत्तिपदार्थरूपाणि संविज्ञानं क्रियान्वयितया ज्ञानं न विद्यते यस्य बहुव्रीहेः सः अतद्गुणसंविज्ञानः । चित्रगुमानयेति । अत्र हि पुरुषस्यैवान्यपदार्थस्य क्रियान्वयः । न तु चित्राणां मपि । तथा च प्रकृते आम्प्रत्ययविनिर्मुक्त आम्प्रत्ययप्रकृतिभूत एधादिधा आम्प्रत्ययशब्देन लभ्यत इति भावः । आम्प्रत्ययवदिति तृतीयान्ताद्वतिः । अनु ज्यत इत्यनुप्रयोगः । कर्मणि घञ् । पञ्चम्यर्थे षष्ठी, तदाह आम्प्रकृत्येत्यादि आम्प्रकृतेर्भवितुं योग्यं यदात्मनेपदं तद् अनुप्रयुज्यमानात् कृञोऽपि स्यादिति या अत्र न प्रत्याहारग्रहणम् । 'अनुप्रयोगस्येत्येव सिद्धे कृञ्ग्रहणादिह न प्रत्याहारग्र

---

एककर्तृकभूतानद्यतनपरोक्षा वृद्ध्यभिन्ना क्रियेति तुल्यो बोधः । ननु करोतिः स भवतिस्त्वकर्मक इति कथमिह तुल्यतेति चेत् । अत्राहुः—यदाहि करोतिरुत्पादना स्वातन्त्र्येण प्रयुज्यते घटं चक्रे राज्यं चकारेति तदा नियमेन सकर्मकत्वम् । तु क्रियान्तरसमानाधिकरणः करोतिः प्रयुज्यते जुहवांचकारेत्यादौ तदा यत्समाना करणः करोतिस्तस्य सकर्मकत्वाकर्मकत्वाभ्यां स्वयमपि तथाभावं भजते । एवं भव रप्याम्प्रकृतिसामानाधिकरण्येन क्वचित्सकर्मकत्वं बोध्यम् । अतएवानुप्रयुज्यमाना सकर्मकत्वात्कर्मणि लिट् । तथा च माघः—'तस्यातपत्रं बिभरांबभूवे' इति, श्री 'तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे' इति । अत्रदमवधेयं जुहाव जुहवांचकार जुहवांबभूव इत्यादौ केवलो होमो गम्यते इतरत्र तु हो क्रियेति बोधः । फले तु न कश्चिद्विशेषः, घटमानय द्रव्यंघटमानयेत्यत्र यथा । चाम्प्रकृत्यर्थगतकारकसंख्यादिविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति ।



दिति भावः । आम्प्रत्ययवत् । आम्प्रत्ययान्तस्यात्मनेपदाभावादाह

वाक्यभेदेन संबध्यते । पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति । तेन कर्तृगेऽपि फले इन्दांचकारेत्यादौ न तङ् । २२४१ लिटस्तझयोरेशिरेच् । (३—४—८१) लिडादेशयोस्तझयोः एश् इरेच् एतौ स्तः । एकारोच्चारणं ज्ञापकं 'तङादेशानां टेरेत्वं न' इति । तेन डारौरसां न । कृ ए इति स्थिते । २२४२ असंयोगाल्लिट् कित् । (१—२—५) असंयोगात्परोऽपिल्लिट् कित्स्यात् । 'क्ङिति च' (सू २२१७)

---

इति भाष्यम् । परगामिन्यपि क्रियाफले कृञ्धातोरात्मनेपदार्थोऽयमारम्भः । इन्दांचकारेत्यादौ तु परगामिनि क्रियाफलेनानेनात्मनेपदम् । आम्प्रकृतेः 'इदि परमैश्वर्ये' इति धातोरात्मनेपदाभावाद् तस्य परस्मैपदित्वात् । एतदर्थमेव आम्प्रत्ययवदित्युपात्तम्। नन्विन्दांचकारेत्यादौ मास्त्वनेन सूत्रेण परगामिनि क्रियाफले आत्मनेपदम् । आत्मगामिनि तु क्रियाफले 'स्वरितञितः—' इत्यात्मनेपदं दुर्वारम् । अस्य सूत्रस्य एधांचक्र इत्यादौ परगामिनि क्रियाफले आत्मनेपदस्याप्राप्तस्य विधान एव समर्थतया आत्मगामिनि क्रियाफले 'स्वरितञितः— इति प्राप्तस्यात्मनेपदस्य निवारणे सामर्थ्याभावादित्यत आह इहेति । इह 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' इति सूत्रे 'पूर्ववत् सनः' इति पूर्वसूत्रात् पूर्ववदित्यनुवर्त्य आम्प्रत्ययवत् कृञोऽनुप्रगोगस्येत्येकं वाक्यम्, पूर्ववत् कृञोऽनुप्रयोगस्येति अन्यद्वाक्यमिति वाक्यद्वयं संपाद्यम् । तत्र पूर्ववदिति तृतीयान्ताद्वतिः । पूर्वेण पूर्वप्रयुक्तेन एधादिधातुना तुल्यमित्यर्थः । तत्र वाक्यद्वयस्य समानार्थकत्वे वैयर्थ्याद् द्वितीयं वाक्यं नियमार्थं संपद्यते । पूर्ववदेव आत्मनेपदं न तु तद्विपरीतमिति । एवं च पूर्ववाक्येन एधांचक्रे इत्यादौ कृञः परगामिन्यपि क्रियाफले आत्मनेपदविधिः, द्वितीयवाक्येन तु इन्दांचकारेत्यादौ कर्तृगामिनि कियाफले 'स्वरितञितः–' इत्यात्मनेपदस्य निवृत्तिः फलति, तदाह तेनेति । द्वितीयवाक्येनेत्यर्थः । न तङिति । न आत्मनेपदमित्यर्थः । एवं चानुप्रयुज्यमानात्कृञो लिटस्तङि प्रथमपुरुषैकवचने तादेशे एधाम् कृ त इति स्थिते । लिटस्तझयोरेशि । ननु लिटस्तझयोरिशिरिजित्येवास्तु । आदेशयोरेकारोच्चारणं व्यर्थम् 'टित आत्मनेपदानाम्–' इत्येत्वेनैव सिद्धेरित्यत आह एकारोच्चारणमिति । ज्ञापनस्य फलमाह तेन डारौरसां नेति । डा रौ रस् एषां लुडादेशभूतात्मनेपदादेशानां टेरेत्वं नेत्यर्थः । वस्तुतस्तु परत्वादेत्वे कृते पुनः प्रसङ्गविज्ञानेन डादिषु कृतेषु लक्ष्ये लक्षणस्येति न्यायाद् एत्वं नेति 'लुटः प्रथमस्य–' इति सूत्रभाष्ये स्पष्टम् । कृ ए इति स्थित इति । तकाराकारसंघातस्य एकारः शित्वात् सर्वादेश इति भावः । असंयोगाल्लिट् । अपिदिति । 'सार्वधातुकमपित्' इत्यतस्तदनुवृत्तेरिति भावः । "सार्वधातुकमपित्' इति

---

इति । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानादिति । तृतीयान्ताद्वतिः । अनुप्रयोगस्येत्यत्र कर्मणि घञिति भावः । 'अनुदात्तङित–' इत्यतोऽनुवर्तनादाह आत्मनेपदस्याविति । एवमप्राप्तस्य विधानेऽपि प्राप्तस्य निवारणमनेनैव सूत्रेण न संभवतीत्यत आह वाक्यभेदेनेति । अत्र च प्रमाणमाम्प्रत्ययवदिति वचनमेव । अन्यथा पूर्ववदित्यनुवृत्त्यैवानुप्रयोगस्य कृञ आमः पूर्वेण तुल्यमित्यर्थलाभादिष्टसिद्धेः किं तेन आम्प्रत्ययवद्ग्रहणेन । इत्यलम् । लिटस्तझयोः । एशिति । शकारकरणमकारविशिष्ट-

इति निषेधात् 'सार्वधातुकार्धधातुकयोः' (सू २१६८) इति गुणो न द्वित्वात्परत्वाद्यणि प्राप्ते । २२४३ द्विर्वचनेऽचि । (१—१—५९) द्वित्वनिमि ऽचि परे अच आदेशो न स्याद् द्वित्वे कर्तव्ये । २२४४ उरत् । (७—४—

---

ङित्त्वं तु नात्र प्रवर्तते । लिडादेशानामार्धधातुकत्वादिति बोध्यम् । कित्त्वस्य फल क्क्ङिति चेति । द्वित्वादिति । कृ ए इति स्थिते लिटि धातोरिति द्वित्व परत्वाद् 'इको यणचि' इति ऋकारस्य यणादेशे रेफे प्राप्ते सतीत्यर्थः । कृते तु एकाच्त्वाभावाद् 'लिटि धातोः—' इति द्वित्वं न स्यादिति भावः । द्विर्वचनेऽ द्विरुच्यते येन परनिमित्तेन तद् द्विर्वचनं द्वित्वनिमित्तमिति यावत् । अचीत्यस्य वि षणमिदम् । 'अचः परस्मिन्—' इत्यतः अच इति 'स्थानिवदादेशः—' इत्यत आ इति 'न पदान्त—' इत्यतो नेति चानुवर्तते । द्विर्वचन इत्यावर्तते । एवं च कर्तव्ये सतीत्यपि लभ्यते, तदाह द्वित्वनिमित्ते अचीत्यादिना । द्वित्वे क सतीत्युक्तेः कृते द्वित्वे चक्रे इत्यादौ यणादयो भवन्ति । अन्यथा तु न स्युः ।

---

तकारस्यादेशत्वाय । असंयोगात् । असंयोगादिति किम्, ममन्थे । अत्र न न । द्विर्वचनेऽचि । अचा सामानाधिकरण्यलाभाय द्विर्वचनशब्दस्य तन्नि लक्षणा स्वीक्रियते । यद्वा उच्यत इति वचनम्, द्विर्वचनं यस्मिन्नचि तद् द्विर्वचन अथवा द्विर्वचनमस्मिन्नस्तीत्यर्शआद्यच्, तदेतदाह द्वित्वनिमित्तेऽचीति । 'अचः परस्मिन्—' इत्यतोऽच इति, 'स्थानिवदादेशः—' इत्यस्मादादेश इति पदान्त—' इत्यतो नेति चानुवर्तते तदाह अच आदेशो न स्यादिति । य वृत्त्यादौ अजादेशः स्थानिवत्स्यादिति रूपातिदेशपक्षः स्वीकृतः, फलं चोभयत्र तु तथाप्यादेशनिषेधपक्षोऽपि भाष्यारूढ इति स एवात्र स्वीकृतः किं च आदेशम कृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु । 'प्रक्षाल पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात् । 'न पदान्त—' इति निषेधानन्तरं पा प्येवं सत्यनुगृहीत इति श्रेयानयं पक्षः । इष्टानुरोधेन द्विर्वचन इत्यावर्त्य कालाव परतयापि व्याचष्टे द्वित्वे कर्तव्य इति । कृते तु द्वित्वे यथायथमादेशः स्या भावः द्वित्वनिमित्ते किम्, दुद्यूषतीत्यत्र द्वित्वात्परत्वादूठि कृते यदि यणः पू द्वित्वं स्यात् तदा दिद्यूषतीत्यनिष्टं रूपं स्यात्तन्माभूदिति द्वित्वनिमित्त इत्यु नह्यूठ् द्वित्वनिमित्तम् । अचीति किम्, जेघ्रीयत । देध्मीयत । शाशय्यते । इ घ्राध्मोः' इति ईकारः, 'अयङ् यि क्ङिति' इत्ययङादेशश्च निषिध्येत, स माभू प्राञ्चः । अन्ये त्वाहुः—अचीति व्यर्थं घ्रीय्ध्मीय्शय्य इति द्वितीयाजवधिकस्य कार्यितया यङो द्वित्वनिमित्तत्वाभावादिति । अचः किम्, असूषुपत् । इह 'स्वापे इति यत्सम्प्रसारणं तस्मिन्निषिद्धेऽभ्यासे उवर्णो न श्रूयेत । न च द्वित्वे कृते संप्रसारणेन स्वापेरवयवत्वाविशेषादभ्यासे तदुत्तरखण्डे च उकारश्रवणं भव वाच्यम्, परस्य संप्रसारणे कृते यून इत्यत्रेव 'न संप्रसारणे—' इति पूर्वस्य संप्रसारणनिषेधात् । स्यादेतत्— [illegible] अच आदेशस्य निषेध [illegible] स्यादेव । असौ द्वित्वनिमित्तत्वेऽप्यकारस्यातथात्वात् । नच 'द्विर्वचनेऽचि'

अभ्यासऋवर्णस्यात्स्यात्प्रत्यये परे। रपरत्वम्। 'हलादिः शेषः' (सू २१७९)।

---

निमित्तस्य अचः सत्त्वात्। 'द्वित्वनिमित्ते' इति किम्? दुद्यूषति। दिव् धातोः सनि द्वित्वात्परत्वाद् ऊठि कृते द्वित्वात्प्राग्यण् भवत्येव। तथा च द्यू इत्यस्य द्वित्वे दुद्यूषतीति सिध्यति। द्वित्वे कर्तव्ये यणो निषेधे तु दिद्यूषतीत्यभ्यासे इकार एव श्रूयेत। न तूकारः। द्वित्वनिमित्त इत्युक्तौ तु ऊठि परे द्वित्वात् प्राग् यणो न निषेधः। ऊठो द्वित्वनिमित्तत्वाभावात् 'अचि' इति किम्? जेघ्रीयते। अत्र घ्राधातोर्यङि द्वित्वात् प्राग् 'ई घ्राध्मोः' इति ईकारादेशो न निषिध्यते। ईत्वस्य द्वित्वनिमित्तयङ्निमित्तकत्वेऽपि द्वित्वनिमित्ताज्निमित्तकत्वाभावात्। 'अचः' किम्? असूषुपत्। इह स्वापेश्चङि द्वित्वात् प्राक् 'स्वापेश्चङि' इति वकारस्य सम्प्रसारणं न निषिध्यते। तस्याजादेशत्वाभावात्। ततश्च कृते सम्प्रसारणे सुप् इत्यस्य द्वित्वे अभ्यासे उकारस्य श्रवणं सम्भवति। सम्प्रसारणे निषिद्धे तु स्वप् इत्यस्य द्वित्वे अभ्यासे उकारो न श्रूयेत। एवं च प्रकृते यणादेशात् प्राग् 'लिटि धातोः–' इति द्वित्व कृ कृ ए इति स्थिते उरत्। उः अत् इति छेदः। ऋइत्यस्य उरिति षष्ठ्येकवचनम्। 'अत्र लोपोऽभ्यासस्य' इत्यस्मादभ्यासस्येत्यनुवर्तते। 'अङ्गस्य' इत्यधिकृतम्। तद्वशात् प्रत्यये परत इति लभ्यते। प्रत्यये परत एव अङ्गसंज्ञाविधानात्, तदाह अभ्यासऋवर्णस्येत्यादिना। रपरत्वमिति। अभ्यासऋवर्णादेशस्याकारस्य 'उरण्रपरः' इति रपरत्वमित्यर्थः। तथा च कर् कृ ए इति स्थिते। हलादिः शेष इति। रेफस्य निवृत्तिरिति भावः।

---

वैयर्थ्यम्, चक्र इत्यादौ सावकाशत्वात्। तथा चैकाच्त्वाभावाद् 'लिटि धातोः–' इतीह द्वित्वं न स्यादिति चेत्। मैवम्, इह द्वित्वनिमित्तशब्देन साक्षाद्वा समुदायघटकतया वा यद् द्वित्वप्रयोजकं लक्ष्यानुरोधेन तस्य सर्वस्य ग्रहणात्। एतच्च 'ठस्येकः' इति सूत्रे कैयट स्पष्टम्। तथा च ऊर्णोतेः सनि 'सनीवन्त–' इतीट्पक्षे 'विभाषोर्णोः' इति ङित्त्वविरहे ऊर्णुनविषतीति सिद्धम्। सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकत्वेन तस्मिन्परे प्राप्तयोर्गुणावादेशयोर्द्वित्वे कर्तव्ये निषेधात्। अत एवाहुस्तद्भावभाविताभात्रेणेह निमित्तत्वमिति। एवं च द्वित्वनिमित्तघटकतया सनि इडागमोऽतुसोऽकारश्च द्वित्वनिमित्तमिति स्थितम्। नन्वेवम् ऋधातोः सनि 'स्मिपूङ्रञ्ज्वशां सनि' इति इटि कृते इस्शब्दनिमित्तकस्य गुणस्य 'द्विर्वचनेऽचि' इति निषेधे 'अजादेर्द्वितीयस्य' इति द्वित्वप्रसङ्गादरिरिषतीति न सिध्येत्। रिस्शब्दस्य द्वित्वे तु यद्यपि सिध्यति, तथापि गुणनिषेधे रिस्शब्द एव दुर्लभ इति चेत्। अत्राहुः—गुणे रपरे कृते रिस्शब्दस्यैव द्वित्वम्। न च द्वित्वनिमित्ते ह्यचि गुणस्य निषेधः। इस्शब्दस्तु नेह निमित्तं कार्यित्वात्। न हि कार्यी निमित्ततयाऽऽश्रीयते, 'स्थण्डिलाच्छयितरि व्रते' इति ज्ञापकात्। अन्यथा शीङो ङित्त्वेन 'क्ङिति च' इति गुणनिषेधाच्छयितरीति रूपस्यासिद्ध्यापत्तेः। न च किति ङिति परे गुणवृद्धी नेति व्याख्यायामुक्तेऽर्थे शयितरीति न ज्ञापकमिति वाच्यम्, तद्व्याख्यायां छिन्न भिन्नमित्यत्र गुणनिषेधो न स्यादित्यादिदोषस्य 'क्ङिति च' इति सूत्र एवोपपादितत्वात्। न चैवं कार्यिणो

'प्रत्यये' किम्—वव्रश्च । २२४५ कुहोश्चुः । (७—४—६२) अभ्यासकु
हकारयोश्चवर्गादेशः स्यात् । एधांचक्रे एधांचक्राते एधांचक्रिरे । २२

---

प्रत्यये किमिति । अङ्गेनैव प्रत्ययस्याक्षिप्तत्वात् प्रत्यये परत इति किमर्थमित्यर्थः
वव्रश्चेति । 'ओव्रश्चू छेदने', लिटि णल् द्वित्वं 'लिटचभ्यासस्य–' इति अभ्
रेफस्य सम्प्रसारणम् ऋकारः । उरत् । रपरत्वम् । हलादिः शेषः । वव्रश्चेति रू
अत्र अभ्यासऋवर्णस्य रेफस्थानिकस्य सम्प्रसारणस्य य उदरदत्वसम्पन्नः अ
तस्य 'अचः परस्मिन्–' इति स्थानिवत्त्वेन सम्प्रसारणतया तस्मिन् परे वकारस्य
सम्प्रसारणे सम्प्रसारणम्' इति निषेधान्न सम्प्रसारणमिति स्थितिः । 'उरत्' इ
प्रत्यये परत इत्यनुक्तौ तु सम्प्रसारणभूतऋकारस्थानिकस्य अकारस्य परनिमित्त
भावेन स्थानिवत्त्वाप्रसक्तेः सम्प्रसारणत्वाभावात्तस्मिन् परतो 'न सम्प्रसारणे सम्प्र
णम्' इति निषेधो न स्यादिति भावः । एवं च क कृ ए इति स्थिते कुहोश्चु
कु हृ इत्यनयोर्द्वन्द्वात् षष्ठीद्विवचनम् । 'अत्र लोपोऽभ्यासस्य' इत्यतः अभ्यास
त्यनुवर्तते, तदाह अभ्यासेति । यद्यपि स्थानिनां कवर्गीयाणां हकारस्य च
त्वात् चवर्गीयाणां पञ्चत्वान्न यथासंख्यम्, नापि स्थानत आन्तर्यम्, कण्ठतालु
भेदात् । आभ्यन्तरप्रयत्नसाम्यं तु कवर्गचवर्गयोरविशिष्टम् । हकारचवर्गयो
नास्त्येव तत् । अतो बाह्यप्रयत्नत एवान्तर्यमिह व्यवस्थापकमाश्रयणीयम् । त
प्रथमस्य कवर्गीयस्य प्रथम एव चवर्गीयो भवति, अघोषश्वासविवाराल्पप्राणप्रय
साम्यात् । नतु द्वितीयः, महाप्राणत्वात् । नापि तृतीयपञ्चमौ, घोषसंवारनादप्रयत्नत्वा
नापि चतुर्थः, घोषसंवारनादमहाप्राणप्रयत्नत्वात् । तथा द्वितीयस्य कवर्गीयस्य द्वि
एव चवर्गीयो भवति, अघोषश्वासविवारमहाप्राणप्रयत्नत्वात् । नतु प्रथमः, अल्पप्रा
त्वात् । नापि तृतीयपञ्चमौ, घोषसंवारनादाल्पप्राणप्रयत्नत्वात् । नापि च
घोषसंवारनादप्रयत्नत्वात् । तथा तृतीयस्य कवर्गीयस्य तृतीय एव चवर्गीयो भवति
घोषसंवारनादाल्पप्राणप्रयत्नत्वात् । न तु प्रथमः, अघोषश्वासविवारप्रयत्नत्वात् । न
एव न द्वितीयोऽपि, महाप्राणप्रयत्नत्वाच्च । नापि चतुर्थः, महाप्राणत्वात् । नापि पञ्च
घोषसंवारनादाल्पप्राणसाम्येऽपि अनुनासिकतया भेदात् । तथा चतुर्थस्य कवर्गी
चतुर्थ एव चवर्गीयो भवति, घोषसंवारनादमहाप्राणप्रयत्नत्वात् । न तु प्रथमः, अ
श्वासविवाराल्पप्राणप्रयत्नत्वात् । नापि द्वितीयः, अघोषविवारश्वासप्रयत्नत्वात् । न
तृतीयपञ्चमौ, अल्पप्राणत्वात् । पञ्चमस्य तु कवर्गीयस्य अनुनासिकत्वाद्
एव । हकारस्य तु घोषसंवारनादमहाप्राणवतः तादृशो वर्गचतुर्थ एव झकार
विवेकः । प्रकृते तु क कृ ए इति स्थिते अभ्यासककारस्य चकारे ऋकारस्य यणि रे
तदाह एधांचक्र इति । एककर्तृका भूतानद्यतनपरोक्षा वृद्धिरूपा क्रियेत्य
एधांचक्राते इति । कृञो लिट आतामि टेरेत्वम् । 'द्विर्वचनेऽचि' इति यणि नि

---

निमित्त्वानाश्रयणे सन्नन्तस्य कार्यित्वात्सनि परतः प्राप्योर्गुणावादेशयोरनिष्
पुनर्विप्रतीत्यपि न स्यादिति वाच्यम्,



लाभात् । ऊर्णोतेर्हि नुशब्द एव द्वित्वरूपं कार्यमनुभवति, न तु सन् । अरिरि

एकाच उपदेशेऽनुदात्तात् । (७—२—१०) उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्येट् न स्यात् । उपदेशे इत्युभयान्वयि । 'एकाच' इति किम्—यङ्लुग्व्यावृत्तिर्यथा स्यात् । स्मरन्ति हि—

---

कृ इत्यस्य द्वित्वे उरदत्वम् । हलादिः शेषः । चर्त्वम् । यण् । न च आतामित्यस्य द्वित्वनिमित्तत्वेऽपि आकारस्याचो द्वित्वनिमित्तत्वाभावात् कथमिह 'द्विर्वचनेऽचि' इति यण्निषेध इति वाच्यम्, साक्षाद्वा समुदायघटकतया वा द्वित्वप्रयोजकस्यैव द्वित्व-निमित्तशब्देन विवक्षितत्वादिति भावः । एधांचक्रिर इति । झस्य इरेच् । कृ इत्यस्य द्वित्वादि पूर्ववत् । अथ लिटि थासः से भावे कृ इत्यस्य द्वित्वादौ एधां चकृ से इति स्थिते आर्धधातुकस्येड्वलादेरिति इडागमे प्राप्ते एकाच उपदेशेऽनुदा-त्तात् । 'ऋत इद्धातोः' इत्यत धातोरित्यनुवर्तते । 'नेड्वशिकृति' इत्यतो नेति च । तदाह उपदेशे यो धातुरेकाजिति । एकः अच् यस्येति बहुव्रीहिः । आर्ध-धातुकस्येति । यद्यपीदं न श्रुतम्, नाप्यनुवृत्तिलभ्यम्, तथाप्यार्थिकमिदम्, आर्धधातुकस्यैवेटः प्राप्तेः । वृत्तिग्रन्थे तु आर्धधातुकस्येति नोपात्तम् । ननु 'एकाच उपदेशेऽनुदात्ताद्' इत्यत्र यदि उपदेशे इत्येतदेकाच इत्यत्रान्वेति तदा कर्तुमित्यत्र इण्नि-षेधो न स्यात् । कृञ्धातोरूदृदन्तैरित्यादिना अनुदात्तत्वस्य वक्ष्यमाणत्वेऽपि तुमुन्प्रत्यये कृते 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वात् । यदि तु उपदेशे इत्येतद् अनु-दात्तादित्यनेनान्वेति । तदा यद्यपि नायं दोषः, कृते तुमुन्प्रत्यये उदात्तत्वेऽपि धातू-पदेशकाले अनुदात्तत्वेन तत्र इण्निषेधस्य निर्बाधत्वात् । तथापि एधांचकृषे इत्यादौ इण्निषेधो न स्यात् । द्वित्वे कृते अनेकाच्त्वादित्यत आह उपदेशे इत्युभयान्व-यीति । 'उपदेशे' इत्येतद् 'एकाच्' इत्यत्र 'अनुदात्तात्' इत्यत्र चान्वेति । मध्य-मणिन्यायादिति भावः । ननु ऊदृदन्तैरित्यादिना परिगणितानामनुदात्तोपदेशधातू-नामेकाच्त्वाव्यभिचारादेकाज्ग्रहणं मास्तु । उपदेशेऽनुदात्तादित्येवास्तु । एतावतैव कर्तु चकृष इत्यादाविण्निषेधसिद्धेरिति पृच्छति एकाचः किमिति । यङ्लुग्व्या-वृत्तिरिति । यङ्लुकि चर्करितेत्यादौ इण्निषेधव्यावृत्तये एकाज्ग्रहणमित्यर्थः । ननु कृतेऽप्येकाज्ग्रहणे कथं यङ्लुग्व्यावृत्तिः । कृते द्वित्वे अनेकाच्त्वेऽपि धातूपदेशे एका-च्त्वादित्यत आह स्मरन्ति हीति । प्राचीनाचार्या निबध्नन्तीत्यर्थः । श्तिपा शपेत्या-द्युदाहरणानि यङ्लुङ्निरूपणे स्पष्टीभविष्यन्ति । नन्विह एकाज्ग्रहणाद्यङ्लुकि इण्निषेधस्य व्यावृत्तावपि श्तिपादिर्निर्निष्टानां यङ्लुकि व्यावृत्तिः प्राचीनाचार्यसंमताऽपि

---

यत्र तु रिस्शब्दः कार्यभागिति वैषम्यादिति । उभयान्वयीति । मध्ये पाठाद्देहली-दीपन्यायेन पूर्वोत्तराभ्यां संबध्यत इत्यर्थः । तत्रोत्तरान्वयस्य कर्तुं गन्तुमित्यादा-विण्निषेधः फलम् । नित्स्वरेण संप्रत्युदात्तत्वात् । पिपक्षति बिभित्सतीत्यादाविण्निषेधस्तु पूर्वान्वयस्य फलम् । द्वित्वे कृते अनेकाच्त्वात् । नन्वेकाच इत्युक्ते ह्युपदेशपदेनाप्य-न्वयः स्वीकर्तव्यस्तदेव मास्तु [illegible] एकाचः किमिति । पिपक्षतीत्यादाविव यङ्लुक्यपीण्निषेधः स्यादेवेत्याशङ्कायामाह स्मरन्ति

'श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥' इति ।

एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते । 'अचः' इत्येवैकत्वविवक्षया ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते । तेन वधेर्ह

---

पाणिनेरसंमतत्वेत्यत आह एतच्चेति । एतत् श्तिपाशपेति श्लोकसिद्धं सर्वमपि, सूत्रे एकाज्ग्रहणेनैव एकदेशानुमत्या ज्ञाप्यत इत्यर्थः । ननु 'हनो वध लिङि' 'लुङि इति हनधातोर्वधादेशे कृते अवधीदित्यत्र इडागमो न स्यात्, । वधादेशे कृते अने च्त्वेपि धातूपदेशे हन्तेरेकाच्त्वादित्यत आह अच इत्येवैकत्वेत्यादि व्याव इत्यन्तम् । 'एकाच उपदेशेऽनुदात्तात्' इत्यत्र हि एकग्रहणमपनीयाच इत्यु एकाच्कादिति लभ्यते । एकवचनोपात्तस्यैकत्वस्य त्यागे प्रमाणाभावात् । न चैवं एकत्वविशिष्टादचः परस्येत्येव लभ्येत, नत्वेकाच्कादिति बहुव्रीह्यर्थं इति वा अनुदात्तोपदेशपरिगणने शक्लृपचिमुच्यादीनां परिगणनसामर्थ्येन अच इ मत्वर्थलक्षणामाश्रित्य एकाज्वतो ग्रहणसंभवात् । तदेवमच इत्यनेनैव एकाच्का

---

हीति । श्तिपत्यादि । श्तिपा यथा—स्यतिहन्तियातिवातिद्रातीत्यादि । तेन प्रन्य नीदित्यादौ 'नेर्गद–' इति णत्वं न । शपा यथा—भरेति । बिभर्तेः भरतेः(यङ् न्तात्)सनि बिभरिषतीत्यत्र 'सनीवन्तर्ध–' इतीड्विकल्पो न, किंतु नित्यमेवेट् । 'एका इति निषेधाप्रवृत्तेः । अनुबन्धेन निर्देशो द्विधा स्वरूपेणेत्संज्ञकत्वेन च । स्वरूपेण यथ 'शीङः सार्वधातुके गुणः' 'दीङो युडचि–' इति । शेशीतः । देदीतः । तसि क्तम चेमे क्रमेणोदाहरणे । इत्संज्ञकत्वेन यथा—'अनुदात्तङित:–' इति । तेन स्पर्ध दिभ्यः 'अनुदात्तङित–' इत्यात्मनेपदं न । पास्पर्धीति । शेशयीति । गणेन यथ बेभिदीति । 'रुदादिभ्यः–' इति श्नम् न । एकाज्ग्रहणं प्रकृतसूत्रे । तेन वेभि चेच्छेदितेत्यादाविण्निषेधो न । एतच्चेति । न च श्तिपाशपाद्यंशे कथमिदं ज्ञा मिति शङ्क्यम्, एकादेशानुमतिद्वारा सर्वत्र ज्ञापनस्य 'उपपदमतिङ्' इत्यादौ दृष्टत्वा अतएव तत्र 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति मित्युक्तम् । अनन्यार्थैः स्यतिहन्तिमरेत्यादिभिः श्तिप्शबादिभिरेव ज्ञापनसंभवा 'अपरस्पराः–' इति सूत्रे सातत्यग्रहणेन एकदेशानुमत्या 'लुम्पेदवश्यमः कृत्ये' इ दिपूर्वाचार्यश्लोको ज्ञापित इति तु तत्रैवावोचाम । मनोरमायां त्वेकदेशानुमति पूर्वाचार्यपठितपरिभाषाया ज्ञापनस्य 'गतिकारकोपपदानाम्–'इत्यादौ दृष्टत्वादित्यु तदयुक्तमिति नव्याः । 'गतिकारकोपपदानाम्–' इत्याद्येव हि पूर्वाचार्याणां परि न च तज्ज्ञापनं तत्रैव दृष्टमिति युज्यते वक्तुमिति । तद्वत इति । न च मत्वर्थलक्ष मानाभावः वसत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात् । न चेदानीमनुदात्त परिभ्रष्टः, आधुनिकानां वसतिशक्लित्यादिपाठस्त्वनार्षत्वान्न मानमिति श पाणिनिना पठितानामेवानुदात्तधातूनामाधुनिकैर्व्याख्यातृपरम्परया संगृहीतत्वा अन्यथा एकः अच् यस्येति बहुव्रीहिलाभार्थमेकग्रहणे कृतेऽप्यनुदात्तपाठस्य परिभ्रष्ट वसतिशक्लत्यादयोऽनुदात्ताः, न तु वसादय इति निर्धारणं न स्यात् । एका

देश एकाचोऽपि न निषेधः । आदेशोपदेशेऽनेकाच्कत्वात् । अनुदात्ताश्चानुपदमेव संग्रहीष्यन्ते । एधांचकृषे एधांचक्राथे । २२४७ इणः षीध्वंलुङ्लिटां धोऽङ्गात् । (८—३—७८) इण्णन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात् । एधांचकृढ्वे । एधांचक्रे एधांचकृवहे एधांचकृमहे । एधांबभूव ।

---

सिद्धे यदेकग्रहणं करोति तत्सामर्थ्यादुपदेशे सर्वत्र एकाजेव, न तु कस्मिंश्चिदप्युपदेशे अनेकाजित्यर्थकल्पनया कदाचिदनेकाच्कोपदेशधातुर्व्यावर्त्यत इत्यर्थः । तेनेति । उपदेशे सर्वत्र एकाजेवेत्यर्थलाभेन, हन्त्युपदेशे—हनिति स्थान्युपदेशे—एकाचोऽपि सतो हनिति धातोरादेशस्य वधेः परस्य इण्निषेधो नेत्यर्थः । कुत इत्यत आह आदेशोपदेश इति । अवधीदित्यत्र 'अतो हलादेर्लघोः' इति वृद्धिनिवृत्तये हनो वधादेशस्य अदन्तताया भाष्ये उक्तत्वादिति भावः । ननु के ते अनुदात्ता धातव इत्यत आह अनुदात्तास्त्वनुपदमेवेति । पदस्य पश्चादनुपदम्, पदमात्रे अतीते सतीत्यर्थः । अनन्तरमेवेति यावत् । एधांचकृष इति । इडभावे प्रत्ययावयवत्वात् षत्वम् । एधांचक्राथ इति । लिट आथामादेशः । टेरेत्वम् । द्वित्वादि पूर्ववत् । लिटो ध्वमष्टेरेत्वे द्वित्वादौ एधांचकृध्वे इति स्थिते इणः षीध्वंलुङ्लिटाम् । षीध्वं लुङ् लिट् एषां द्वन्द्वः । 'धः' इति षष्ठ्येकवचनम् । इण इत्यङ्गविशेषणम् । तदन्तविधिः । 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम्, तदाह इण्णन्तादित्यादिना । धकारस्य ढकारो मूर्धन्यः । घोषसंवारनादमहाप्राणप्रयत्नसाम्यात्, तदाह एधांचकृढ्व इति । उत्तमपुरुषैकवचने इटि एत्वे पूर्ववद् द्वित्वादौ कृते रूपमाह एधांचक्र इति । एधांचकृवह इति । लिटो वहिभावे एत्वे द्वित्वादि पूर्ववद् । एवं लिटो महिभावे द्वित्वादि पूर्ववत् । सर्वत्र 'असंयोगाल्लिट्कित्' इति कित्वाद् गुणाभावः । अथ भूधातोः लिडन्तस्यानुप्रयोगो उदाहरति एधांबभूवेति । एधांचक्र इत्यनेन

---

नन्वेकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमित्युक्त्वा पुनरेकग्रहणसामर्थ्यादित्युक्तौ परस्परव्याघातः स्यादिति चेत् । अत्राहुः—एकाच्शब्देनैकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति नार्थः, किं तु वस्तुगत्यैवैकाज्ग्रहणम्, तच्चैकग्रहणं विनैव लभ्यत इत्यदोष इति । वधेरिति । यस्तु तद्व्यावृत्तयेऽनिट्कारिकास्वदन्तपर्युदास उक्तो व्याघ्रभूतिना स एव प्राचाऽनुसृतः । 'अदूदृदन्तरुस्नुक्षणुशीयुनुक्षुश्विडीङ्श्रिभिः । वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोऽनिटः' इति । स चादन्तपर्युदास इहोपेक्षितः । सूत्राननुगुणत्वात् । तथापि—'सर्वे सर्वपदादेशाः' इति न्यायेन कृ इत्यादेः करित्यादिरादेशस्तस्य यथा स्थान्युपदेशं गृहीत्वा कर्ता हर्तेत्यादौ निषेधः प्रवर्तते तथैव वधादेशेऽपि प्रवर्तमानः केन वार्यताम् । अदन्तपर्युदाससामर्थ्यादिति चेत् । न, सूत्रकारेणाऽपर्युदस्तत्वादिति भावः । इणः षीध्वम् । 'इण्कोः' इत्यधिकारेऽपि पुनरिण्ग्रहणं कवर्गात्परस्य माभूत्येतदर्थम् । तेनेह—पक्षीध्वम् । अङ्गात्परेषामिति । विहितानामित्युक्तौ तु दानो लुङि अदिड्ढ्वमित्यत्राव्याप्तिः स्यात्, लिहदुहनहां तु ढत्वघत्वधत्वेषु लिक्षीढ्वं घक्षीध्वं नत्सीध्वमित्यत्रातिव्याप्तिश्च स्यादिति बोध्यम् । अङ्गात् किम्, [illegible] ।



यद्यप्यर्थवतः षीध्वमित्यस्य ग्रहणात् कृषीढ्वमित्यादावेव भवेद् नान्यत्र, तथाप्यर्थवद्-

अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न । अन्यथा हि 'कृस्चानुप्रयुज्यते' इति 'कृ
इति वा ब्रूयात् । २२४८ अत आदेः । (७—४—७०) अभ्यासस्यादे
दीर्घः स्यात् । पररूपापवादः । एधामास एधामासतुरित्यादि । एधिता एधि
एधितारः । एधितासे एधितासाथे । २२४९ धि च । (८—२—१५)

---

समानार्थकम् । अनुप्रयुज्यमानस्य भूधातोः क्रियासामान्यार्थकत्वात् । नन्वस्ते
प्रयोगे लिडादेशस्यार्धधातुकत्वाद् अस्तेर्भूरित्यार्धधातुके विहितो भूभावः
न स्यादित्यत आह अनुप्रयोगेति । 'कृञ्चानुप्रयुज्यते–' इत्यत्र प्रत्याहारमा
कृभ्वस्तीनामनुप्रयोगविधिसामर्थ्यादस्धातोर्भूभावो नेत्यर्थः । तदेवोपपाद
अन्यथेति । अनुप्रयुज्यमानस्यास्तेर्भूभावाभ्युपगमे 'कृञ्चानुप्रयुज्यते–' इत्यनुप्र
विधौ 'कृस्चानुप्रयुज्यते–' इति वा 'कृभ्चानुप्रयुज्यते–' इति वा ब्रूयात् । ता
एधांबभूवेति सिद्धेरित्यर्थः । यद्यपि कृञित्युक्तौ लाघवमस्ति । तथापि एकस्यैव भवते
कस्य लाभाय कृञिति प्रत्याहारक्लेशो न कर्तव्य इति भावः। अत एव 'अत उत्सार्वधा
इति सूत्रभाष्येऽनुप्रयोगे भूभावेन अस्तेरबाधनमिति भाष्यं सङ्गच्छते । ततश्च
प्रयुज्यमानादस्धातोर्लिटि भूभावनिवृत्तौ णलि एधाम् अस् अ इति स्थिते
हलादिशेषे अ अस् इति स्थिते सवर्णदीर्घं बाधित्वा 'अतो गुणे' इति पररूपे प्र
अत आदेः । 'अत्र लोपः–: इत्यस्मादभ्यासस्येत्यनुवर्तते। 'दीर्घ इणः–' इत्यतो
इति च, तदाह आभ्यासस्येति । अत्र यद्वक्तव्यं तन्नामधातुप्रक्रियायाम् अ
चरति अतीत्यादिग्रन्थस्य व्याख्यानावसरे वक्ष्यते । एधाम्बासेति । नचात्र
प्रयुज्यमानाभ्यामस्तिभूभ्यामाम्प्रत्ययवदित्यात्मनेपदं शङ्क्यम्, तत्र कृञ्ग्रह
प्रत्याहारग्रहणाभावस्य भाष्ये उक्तत्वात् । एधामासतुरित्यादीति । एधामा
एधामासिथ एधामासथुः एधामास । एधामास एधामासिव एधामासिम । इति
प्रक्रिया । एधितेति । लुटः तादेशे एध् त इति स्थिते शबपवादस्तास् इट् । '
प्रथमस्य–' इति डा टिलोपः, एधितेति रूपम् । 'दीधीवेवीटाम्' इति लघूपध
न । एधिताराविति । लुट्, तास्, इट्, आतामित्यस्य रौभावः । 'रि
इति सलोपः । एधितार इति । झस्य रस्, आताम्, तास्, इट्, 'रि च' इति सलो
रुत्वविसर्गौ । एधितास इति । थासः से, तास्, इट्, 'तासस्त्योः–' इति सलो
एधितासाथ इति । आथाम्, टेरेत्वम्, तास्, इट् । अथ ध्वमि टेरेत्वे तासि

---

ग्रहणपरिभाषा क्वचिन्न प्रवर्तत इति ज्ञापनार्थमिदमुक्तम् । तेन 'अनिनस्मन्ग्रहणानि–'
सिद्धम् । एधांबभूवेत्यादि । 'आम्प्रत्ययवत्–' इति सूत्रे कृञ्ग्रहणादनुप्रयोगान्तरे
नेति 'शेषात्कर्तरि–' इति परस्मैपदमेव, भावकर्मणोस्तु स्यादेव एधांबभूवे ईक्षांबभू
इति । अस्तेस्तु भावकर्मणोस्तङि कृते एशि इटि च रूपे विप्रतिपद्येते । तथाहि—
त्रापि 'ह एति' इति हादेशे कृते एधामाहे ईक्षामाहे इति केचित् । तासिसाहचर्यादि
हत्वं न त्वेशीत्यन्ये । तत्साहचर्यादेव सार्वधातुक एव एति हत्वम् । तथा च कर्म
लिहारे तङि व्यतिहे इत्यत्रैव भवति न तूक्तद्वयेऽपि । तेन एधामासे ईक्षामासे इत्येव
मित्यपरे । कृभ्वितीति । यद्यपि कृञ् इत्युक्तौ लाघवमस्ति, तथापि धातुद्वयस्यैव लाभ

प्रत्यये परे सलोपः स्यात् । एधिताध्वे । २२५० ह एति । (७—४—५२) तासस्त्योः सस्य हः स्यादेति परे । एधिताहे एधितास्वहे एधितास्महे । एधिष्यते एधिष्येते एधिष्यन्ते । एधिष्यसे एधिष्येथे एधिष्यध्वे । एधिष्ये एधिष्यावहे एधिष्यामहे । २२५१ आमेतः । (३—४—९०) लोट एकारस्याम्स्यात् । एधताम् एधेताम् एधन्ताम् । २२५२ सवाभ्यां वामौ । (३—४—९१) सकारवकाराभ्यां परस्य लोडेतः क्रमाद् व अम् एतौ स्तः । एधस्व एधेथाम्

---

एधितास् ध्वे इति स्थिते । धि च । 'सस्स्यार्धधातुके' इत्यतः स इत्यनुवर्तते । 'तासस्त्योः–' इत्यतो लोप इति । अङ्गाक्षिप्तप्रत्ययो धीत्यनेन विशेष्यते । तदादिविधिः, तदाह धादाविति । तासः सलोपे एधिताध्वे इति रूपम् । अथ लुट इडादेशे एत्वे तासि इटि एधितास् ए इति स्थिते ह एति । ह इति प्रथमान्तम् । अकार उच्चारणार्थः । 'सस्स्यार्धधातुके' इत्यतः स इति 'तासस्त्योर्लोपः' इत्यतः तासस्त्योरिति चानुवर्तते, तदाह तासस्त्योरिति । तासः सस्य हकारे एधिताहे इति रूपम् । एधितास्वहे इति । लुटो वहिभावः, टेरेत्वम्, तास्, इट् । एवम् एधितास्महे इति । तत्र महिभावो विशेषः । इति लुट्प्रक्रिया । एधिष्यत इति । लृटः तादेशे टेरेत्वम् । 'स्यतासी–' इति शबपवादः, स्यः, इट्, प्रत्ययावयवत्वात् षत्वम् । एधिष्येते इति । आताम्, टेरेत्वम्, स्यः, इट्, 'आतो ङितः' इत्याकारस्य इय्, 'लोपो व्योः–' इति यलोपः, 'आद्गुणः' षत्वम् । एधिष्यन्त इति । झस्य टेरेत्वम्, झकारस्य अन्तादेशः, स्यः, इट्, पररूपम् षत्वम् । थासादावपि लटीव सुयोजमिति मत्वा रूपाणि न प्रदर्शितानि । तत्र थासः से, स्यः, इट्, षत्वम्, एधिष्यसे इति रूपम् । एधिष्येते इतिवदाथामि एधिष्येथे इति रूपम् । ध्वम एत्वे, स्यः, इट्, षत्वम्, एधिष्यध्वे इति रूपम् । इट एत्वे, स्यः, इडागमः, षत्वम्, 'अतो गुणे' इति पररूपम्, एधिष्ये इति रूपम् । वहिमह्योष्टेरेत्वम्, स्यः, इट्, अतो दीर्घः, एधिष्यावहे एधिष्यामहे इति रूपे । इति लृट्प्रक्रिया । आमेतः । 'आम्' 'एतः' इति च्छेदः । 'लोटो लङ्वत्' इत्यतो लोट इत्यनुवर्तते, तदाह लोट एकारस्येति । लोडादेशावयवस्य एकारस्येत्यर्थः । एधतामिति । लोटः तादेशे टेः एत्वे आमादेशे शपि रूपम् । एधेतामिति । आताम् । टेरेत्वं शप् 'सार्वधातुकमपित्' इति ङित्त्वाद् 'आतो ङितः' इत्याकारस्य इय्, गुणः, यकारलोपः, 'आमेतः' इत्येकारस्य आम् । एधन्तामिति । झस्य टेरेत्वे शपि झकारस्य अन्तादेशे एकारस्य आम् । अथ लोटः थासः सेभावे शपि एधसे इति स्थिते । सवाभ्याम् । सश्च वश्च सवौ । ताभ्यामिति विग्रहः । अकारावुच्चारणार्थौ । वश्च अम् च वामौ । 'लोटो लङ्वत्' इत्यस्माद् लोट इति 'आमेतः' इत्यस्मादेत इति चानुवर्तते, तदाह सकारेति । 'आमेतः' इत्यस्यापवादः । एधस्वेति । एधसे इत्यत्र एकारस्य व इति वकाराकारसंघात आदेशः । एधेथा-

---

त्याहाराश्रयणे क्लेश इति भावः । पररूपापवाद इति । अपवाद इत्ययं ग्रन्थो नामधातुप्रक्रियास्थः स्वग्रन्थेन सह विरुध्यते । तत्र हि अ इवाचरति अति । प्रत्ययग्रहणमपनीय कास्यनेकाज् इत्युक्तेर्नाम् । औ । अतुः । उः । द्वित्वम् 'अतो गुणे',

एधध्वम् । २२५३ एत ऐ । (३—४—९३) लोडुत्तमस्य एत ऐ स्यात् । आ
पवादः । एधै एधावहै एधामहै । २२५४ आडजादीनाम् । (६—४—
अजादीनामाट् स्याल्लुङादिषु । अटोऽपवादः । 'आटश्च' (सू २६९)
ऐधेताम् ऐधन्त । ऐधथाः ऐधेथाम् ऐधध्वम् । ऐधे ऐधावहि ऐधामहि ।

---

मिति । आथाम्, टेरेत्वम्, शप् 'आतो ङितः' इत्याकारस्य इय्, गुणः, यलोपः,
इत्याम् । एधध्वमिति । ध्वमि शप् टेरेत्वे कृते 'सवाभ्याम्—' इति वकारात्
देकारस्य अम् । उत्तमपुरुषैकवचने इटि टेरेत्वे शपि 'आमेतः' इत्येकारस्य
प्राप्ते । एत ऐ । ऐ इति लुप्तप्रथमाकम् । 'लोटो लङ्वत्' इत्यस्माल्लोट इति
त्तमस्य पिच्च' इत्यस्मादुत्तमस्येति चानुवर्तते, तदाह लोडुत्तमस्येति । एधै
एध ए इति स्थिते एकारस्य ऐत्वे 'आडुत्तमस्य—' इत्याडागमे 'आटश्च' इति
'वृद्धिरेचि' इति वृद्धिः । एधावहै, एधामहै इति । वहिमह्योष्टेरेत्वे शपि
रस्य ऐत्वे आटि सवर्णदीर्घः । इति लोट्प्रक्रिया । अथ एधधातोर्लङि 'लुङ्लङ्
क्ष्वडुदात्तः' इत्यडागमे वृद्धिं बाधित्वा परत्वाद् 'अतो गुणे' इति पररूपे प्रा
आडजादीनाम् । लुङादिष्विति । लुङ्लङ्लृङ्क्ष्वित्यनुवृत्तेरिति भावः ।
ऽपवाद इति । अटि अति पररूपं स्यादिति भावः । 'आटश्च' इत्यनन्तरं वृद्धि

---

'अत आदेः' इति दीर्घः । णल औ वृद्धिरित्युक्तत्वात् । हलादिःशेषात् प्रागेव प
'अत आदेः' इति दीर्घे कृते तु पररूपशङ्कापि तत्र नास्तीति चिन्त्योऽयं ग्रन्थ
नञ्याः । आडजादीनाम् । एतच्चाजादीनामटा सिद्धमिति वार्तिककृता प्र
ख्यातम् । ननु अटि सति 'वृद्धिरेचि' इत्यनेन ऐधतेत्यादिसिद्धावपि ऐन्दत्
सिध्येत् । किं च 'अतो गुणे' इति पररूपप्रवृत्त्या ऐधतेत्याद्यपि न सिध्येत् ।
'आटश्च' इति सूत्रं 'अटश्च' इति क्रियेत तर्हि अस्वपोऽहसत् इत्यत्र वृद्धिः स्या
'रुदश्च पञ्चभ्यः' 'अड्गार्ग्यगालवयोः' इति अडागमस्य सत्त्वाद् 'अतो रोरप्लुता
इति रोरुत्वे सति अच्परत्वाच्चेति चेत् । न, 'उपसर्गादृति धातौ' इत्यतो धाता
कृष्याजादौ धाताविति व्याख्यानात् । न च अस्वपोऽस्तीत्यादावोकारस्यान्तवद्भा
त्वात्परत्राजादिधातुसत्त्वाच्चोक्तदोषस्तदवस्थ इति वाच्यम्, आदित्यनुवर्त्य अ
रूपादटोऽचि परे वृद्धिरिति व्याख्यानात् । एतेन अटश्चेत्युक्तौ 'अट गतौ' इत्यस्मा
अटन्मित्यत्रातिप्रसङ्गः स्यादित्येतदपि निरस्तम् । न चैवमपि आतत् आतीत्
न सिध्यति । 'अटश्च' इत्यस्य ऐन्ददित्यादौ सावकाशतया परत्वादिह 'अतो
इत्यस्यैव प्रवृत्तेरिति वाच्यम्, चकारोऽत्र पुनर्वृद्धिविधानार्थं इत्यभ्युपगमादन्तरङ्ग
'अटश्च' इत्यस्यैव प्रवृत्तेः । स्यादेतत्—'आडजादीनाम्' इति सूत्राभावे आ
आसन् इति कथमटा सिध्यति । 'श्नसोः' इत्यल्लोपेन 'अटश्च' इति तत्र वृद्ध्यप्र
मवम्, अन्तरङ्गत्वात्प्रागेवाडागमे कृते वृद्धौ च कृतायां पश्चात् श्नसोरल्लोपस्याप्रस
न च 'वार्णादाङ्गं बलीयः' इति वृद्धेः प्रागल्लोप एव स्यादिति शङ्क्यम्, व्याश्र
'वार्णादाङ्गम्—' इति परिभाषाया अनित्यत्वात् । तत्र हि 'श्नसोरल्लोपः' इति तपरक
लिङ्गम्, यदि वृद्धेः प्रागेवाल्लोपः स्यात्तर्हि किं तेन तपकरणेनेति । यद्यपि

ङः सीयुट् । (३—४—१०२) लिङात्मनेपदस्य सीयुडागमः स्यात् । लोपः । एधेत एधेयाताम् । २२५६ झस्य रन् । (३—४—१०५) लिङो स्य रन्स्यात् । एधेरन् । एधेथाः एधेयाथाम् । एधेध्वम् । २२५७ इटोऽत् । ३—४—१०६) लिङादेशस्येटोऽत्स्यात् । एधेय एधेवहि एधेमहि । आशीर्लिङि ार्धधातुकत्वाल्लिङः सलोपो न । सीयुट्सुटोः प्रत्ययावयवत्वात्षत्वम् । एधिषीष्ट

---

षः । यद्यपि 'वृद्धिरेचि' इति 'एत्येधति—' इति वा वृद्धौ इदं सिध्यति, तथापि क्षतेत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् । ऐधतेति । लङस्तादेशे शपि आडा-मे 'आटश्च' इति वृद्धिः । लङादेशानां टिदादेशत्वाभावाद् एत्वं न भवति । 'आड-ादीनाम्' इति सूत्रं भाष्ये प्रत्याख्यातम् । ऐधेतामिति । आतामि शपि आटि द्धिः । 'आतो ङितः' इत्याकारस्य इय्, 'आद् गुणः' यलोपः । ऐधन्तेति । झेर-ादेशः, शप्, आट्, वृद्धिः । ऐधथा इति । थास्, शप्, आट्, वृद्धिः । धेथामिति । आथाम्, शप्, आट्, वृद्धिः, इय्, आद्गुणः, यलोपः । ऐध-ध्वमिति । ध्वम्, शप्, आट्, वृद्धिः । ऐधे इति । इट्, शप्, 'आद्गुणः', ाटो वृद्धिः । ऐधावहि ऐधामहि इति । वहिमह्योः शप्, आट्, वृद्धिः, अतो ीर्घः । इति लङ्प्रक्रिया । लिङः सीयुट् । स्पष्टम् । परस्मैपदानां लिङादेशानां ासुडागमविधानादात्मनेपदविषयमिदम् । सीयुटि टकार इत् । उकार उच्चारणार्थः । लोप इति । 'लिङः सलोपः—' इत्यनेनेति शेषः । एधेतेति । लिङस्तादेशः, ीयुट्, शप्, सलोपः, आद्गुणः, यलोपः । एधेयातामिति । आतामि सीयुट्, प्, सलोपः, आद्गुणः । झस्य रन् । 'लिङः सीयुट्' इत्यतो लिङ इत्यनुवर्तते, दाह लिङो झस्येति । लिङादेशस्य झस्येत्यर्थः । अनेकाल्त्वात्सर्वादेशः । एधे-रन्निति । झस्य रन्, शप्, सीयुट्, सलोपः, आद्गुणः, यलोपः । ऐधेथा इति । ास्, सीयुट्, शप्, सीयुटस्सस्य लोपः, आद्गुणः, यलोपः, थासस्सस्य रुत्वविसर्गौ । धेयाथामिति । आथाम् सीयुट्, सलोपः, शप्, आद्गुणः । एधेध्वमिति । ध्वम्, सीयुट्, शप्, सलोपः, आद्गुणः, यलोपः । इटोऽत् । इटः अत् इति छेदः । 'लिङस्सीयुट्' इत्यतो लिङ इत्यनुवर्तते, तदाह लिङादेशस्येति । 'अच्च ः' इत्यत्रेव आदेशे तकार उच्चारणार्थं एव, नत्वित्संज्ञक इति शब्देन्दुशेखरे 'दिव ौत्' इत्यत्र प्रपञ्चितम् । इत्संज्ञक एवेत्यन्ये । 'न विभक्तौ—' इति निषेधस्तु न । आदे-त्वात् प्राग् विभक्तित्वाभावात् । 'झस्य रन्' इत्यत्र तु लक्ष्यानुरोधेन संयोगान्त-ोपमाश्रित्य नकारान्तरप्रश्लेषादुपदेशे अन्त्यत्वाभावान्नकारस्य नेत्संज्ञेत्यलम् । एधे-ति । इट् नस्य अकारादेशः । सीयुट्, शप्, सलोपः, आद्गुणः । एधेवहि धेमहीति । वहिमह्योः सीयुट्, सलोपः, शप्, आद्गुणः, यलोपः । इति विधि-ङ्प्रक्रिया । आर्धधातुकत्वादिति । 'लिङाशिषि' इत्यनेनेति भावः । सलोपो ति । सार्वधातुकग्रहणस्य 'लिङः सलोपः—' इत्यत्रानुवृत्तेरिति भावः । सीयुट्-

---

क्रियायामानट् आव् इत्यादौ 'छन्दस्यपि दृश्यते' इत्याडागमस्य वक्ष्यमाणत्वात्तदर्थं-



सूत्रं कर्तव्यं तथापि बिनैवाड्व्यत्ययेन आङ्पूर्वकत्वेन वा तत्र कथंचिद्व्याख्येय-

एधिषीयास्ताम् एधिषीरन् । एधिषीष्ठाः एधिषीयास्थाम् । एधिषीध्वम् । एधि
एधिषीवहि एधिषीमहि । ऐधिष्ट ऐधिषाताम् । २२५८ आत्मनेपदेष्वन
(७—१—५) अनकारात्परस्यात्मनेपदेषु झस्य 'अत्' इत्यादेशः स्यात् । ऐधि
ऐधिष्ठाः । ऐधिषाथाम् । 'इणः षीध्वलुङ्लिटां धोऽङ्गात्' (सू २२४
ऐधिढ्वम् । इड्भिन्न एव इणिह गृह्यत इति मते तु ऐधिध्वम् । ढधयोर्वस्य

सुटोरिति । लक्ष्यभेदात्पुनः प्रवृत्तिरिति भावः । युगपदेवोभयोः षत्वमित
एधिषीष्टेति । आशिषि लिङः तादेशः । आर्धधातुकत्वाद् न शप्, सीयुट्,
रस्य सुट्, सीयुटस्सकारात् प्रागिडागमः, यलोपः, सीयुटः सुटश्च सकारस्य
तकारस्य ष्टुत्वेन टकारः । एधिषीयास्तामिति । आताम्, सीयुट् । आकारा
तकारात्प्राक् सुट् । सीयुटः प्रागिट् । तत उत्तरस्य सकारस्य षत्वम् । ए
रन्निति । 'झस्य रन्' । सीयुट्, इडागमः, यकारलोपः, षत्वम् । एधिषीष्ठा
थास्, सीयुट्, थकारस्य सुट्, सीयुटः प्रागिट्, सकारद्वयस्य षत्वम् । थक
ष्टुत्वेन ठकारः, रुत्वविसर्गौ । एधिषीयास्थामिति । आथाम्, सीयुट् ।
रादुपरि थकारात् प्राक् सुट्, सीयुटः प्रागिट् । तत उत्तरस्य सकारस्य षत्वम् ।
षीध्वमिति । ध्वम्, सीयुट्, यलोपः, सीयुटः प्रागिट्, षत्वम् । इणः परत्वे
इण्णन्तादङ्गात्परत्वं नास्ति । इटः प्रत्ययभक्तत्वात् । ततश्च 'इणः षीध्वम्—' इतिय
न भवति । एधिषीयेति । इटः अत्, सीयुट्, इट्, षत्वम् । एधिषीयु
एधिषीमहीति । वहिमह्योस्सीयुट् इट् षत्वम् । इत्याशीर्लिङ्प्रक्रिया । ऐधिष्या
लुङः तादेशः, च्लिः, सिच्, इट्, धातोराट्, वृद्धिः, षत्वम्, ष्टुत्वम् । ऐधिष्ट
मिति । आताम्, च्लिः, सिच्, इट्, आट्, वृद्धिः, षत्वम् । अथ झस्य अन्त
कारस्य 'झोऽन्तः' इत्यन्तादेशे प्राप्ते आत्मनेपदेषु । 'झोऽन्तः' इत्यतो झस्ये
षष्ठ्यन्तमनुवर्तते । आत्मनेपदेष्विति षष्ठ्यर्थे सप्तमी । आत्मनेपदावयवस्य झस्
स्येति लभ्यते । 'अदभ्यस्तात्' इत्यतः अदित्यनुवर्तते । न अत् अनत्, तस्मा
विग्रहः । तदाह अनकारादित्यादिना । ऐधिषतेति । झावयवझकारस्य
इत्यादेशः, च्लिः, सिच्, इट्, आट्, वृद्धिः, षत्वम् । ऐधिष्ठा इति । थास्,
सिच्, इट्, आट्, वृद्धिः, षत्वम्, थकारस्य ष्टुत्वेन ठकारः, रुत्वविसर्गौ । ऐधिषा
मिति । आथाम्, च्लिः, सिच्, इट्, आट्, वृद्धिः, षत्वम् । अथ ध्वमो धस्य
स्मारयति इणः षीध्वमिति । ऐधिढ्वमिति । ध्वम्, च्लिः, सिच्, इट्,
वृद्धिः, 'धि च' इति सस्य लोपः । 'इणः षीध्वम्—' इति धकारस्य ढत्वं
इटो लुप्तसिजभक्ततया सिजन्ताङ्गान्तर्भूतत्वेन इडन्तस्य इण्णन्ताङ्गत्वादिति भ
इड्भिन्न एवेति । उत्तरसूत्रे 'विभाषेटः' इत्यत्र इड्ग्रहणात् पूर्वसूत्रे

मिति स्थितस्य गतिमाहुः । सलोप इति । 'लिङः सलोपोऽनन्त्यस्य' इत्य
एधेयातामिति । सीयुटः सलोपे आद्गुणः । एधिषीध्वमिति । इणः
इण्णन्तादङ्गात्परत्वाभावाद् 'इणः षीध्वम्—' इति ढत्वं न भवति । आत्मने
न—' इत्यतो झ इति 'अदभ्यस्तात्' इत्यस्मात् अदिति चानुवर्तते । तदाह

त्र द्वित्वविकल्पात्षोडश रूपाणि । ऐधिषि ऐधिष्वहि ऐधिष्महि । ऐधिष्यत ऐधिष्येताम् ऐधिष्यन्त । ऐधिष्यथाः ऐधिष्येथाम् ऐधिष्यध्वम् । ऐधिष्ये ऐधिष्यावहि ऐधिष्यामहि । उदात्तत्वाद्वलादेरिट् । प्रसङ्गादनुदात्ताः संगृह्यन्ते—

ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।

---

धीध्वम्-' इत्यत्र इड्भिन्न एव इण् गृह्यत इति केचिदाहुः । तन्मते तु प्रकृते इटः परत्वाद् धकारस्य ढत्वाभावे ऐधिध्वमित्येव रूपमित्यर्थः । इदं तु मतान्तरं भाष्यानारूढमिति सूचयितुं तुशब्दः । ढधयोरिति । मतभेदमाश्रित्येदम् । तत्र ढत्वाभावपक्षे धकारस्य 'अनचि च' इति द्वित्वविकल्पाद् द्विधमेकधमिति रूपद्वयम् । एवं ढत्वे द्विढम् एकढमिति रूपद्वयम् । रूपचतुष्टयेऽपि 'यणो मयो द्वे वाच्ये' इत्यत्र मय इति पञ्चमीमाश्रित्य वकारस्य द्वित्वविकल्पादेकवकाराणि द्विवकाराणि च प्रागुक्तानि चत्वारि रूपाणि भवन्ति । तथा च अष्टौ रूपाणि संपन्नानि । मकारस्य द्वित्वविकल्पादेतान्यष्टौ रूपाणि एकमकाराणि द्विमकाराणि चेति षोडश रूपाणि संपन्नानीत्यर्थः । ऐधिषीति । लुङ इडादेशः, च्लिः, सिच्, इडागमः, आट्, वृद्धिः । वहिमह्योस्तु च्लेः सिचि इडागमे आटि वृद्धौ ऐधिष्वहि ऐधिष्महीति रूपे । इति लुङ्प्रक्रिया । ऐधिष्यतेति । लृङः तादेशः, स्यः, इट्, आट्, वृद्धिः, षत्वम् । ऐधिष्येतामिति । आतां स्यः, इट्, आकारस्य इय्, आद्गुणः, यलोपः, आट्, वृद्धिः, षत्वम् । ऐधिष्यन्तेति । झावयवझकारस्यान्तादेशः, स्यः, इट्, आट्, वृद्धिः, षत्वम् । ऐधिष्यथा इति । थास्, स्यः, इट्, आट्, वृद्धिः, रुत्वविसर्गौ । ऐधिष्येथामिति । आथाम्, स्यः, इट्, आकारस्य इय्, 'आद्गुणः,' यलोपः, आट्, वृद्धिः, षत्वम् । ऐधिष्यध्वमिति । ध्वम्, स्यः, इट्, आट्, वृद्धिः, षत्वम् । ऐधिष्य इति । इडादेशः, स्यः, इडागमः, षत्वम्, आद्गुणः । वहिमह्योस्तु स्यः, इट्, अतो दीर्घः, आट्, वृद्धिः षत्वम् । ऐधिष्यावहि ऐधिष्यामहि इति रूपे । नन्वेधधातोरनुदात्तेत्त्वाद् एकाच उपदेशेऽनुदात्तात्, इतीण्निषेधः कुतो न स्यादित्यत आह उदात्तत्वादिति । एधधातुः यद्यपि अनुदात्तेत्, तथापि अनुदात्तस्येतो लोपे सति परिशिष्टो धातुर्नानुदात्त इति भावः । ननु कतिपये धातवः पाणिनिना अनुदात्ता उच्चरिता इति कथमिदानीन्तनैरवगन्तव्यमित्यत आह प्रसङ्गादिति । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । पाणिनिपठितानामनुदात्तधातूनां तदानींतनशिष्यपरम्परया आनुनासिक्यवदिदानीं ज्ञानं संभवतीति भावः । ऊदृदन्तैरिति । अजन्तेषु धातुषु ऊदन्तैश्च ॠदन्तैश्च धातुभिः विना यु रु

---

वेति । आत्मनेपदेषु किम्, अदन्ति । सुन्वन्ति । अनतः किम्, एधन्ते । प्लवन्ते । इड्भिन्न एवेणिति । 'विभाषेटः' इति इटो विशिष्यग्रहणाद्गोबलीवर्दन्यायेन केचिदिड्भिन्न एवेणिह गृह्यत इति भावः । ऊदृदन्तैरिति । ऊदृदन्तैर्विना यौत्यादिभिर्विना ङ्वृङ्भ्यां च विना अन्ये ये एकाचोऽजन्तास्ते निहताः । अनुदात्ता इत्यर्थः । तथा च ता धाता चेता स्तोतेत्यादिषु इण् न भवति । ऊदन्ता भूप्रभृतयः । ॠदन्ताः कृतद-



भृतयः । यु मिश्रणादौ । रु शब्दे, रुङ् गतिरेषणयोः इत्युभयोर्ग्रहणम्,

वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥

शक्लृपच्मुच्रिच्वच्विच्सिच्प्रच्छत्यज्निजिर्भजः ।

क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रि एतैश्च धातुभिर्विना वृङ्ञ वृञ् आभ्यां च अन्ये एकाचः अजन्तधातवो निहता अनुदात्ताः स्मृताः । पाणिनिशिष्यपरम्परया ज्ञाता इत्यर्थः । अथ हलन्तेषु अनुदात्तान् धातून् परिगणयति शक्लृ पच मुचि शक्लृ पच् मुच् रिच् वच् विच् सिच् प्रच्छि त्यज् निजिर् भज् एषां द्वन्द्वः । कान्तेषु शक्लृ इत्येकः । लृकार इत् । भाष्ये तु अनुबन्धरहितः पाठो दृष्टः चान्तेषु पच् मुच् रिच् वच् विच् सिच् इति षट् । अत्र 'डुपचष्' इत्यस्यैव प्रसिद्धत्वात् । न तु 'पचि व्यक्तीकरणे' इत्यस्येत्याहुः । 'मुचॢ मोक्षणे' इत्यस्य ग्रहणम्, न तु 'मुचि कल्कने' इति भौवादिकस्य । अविशेषात्सर्वस्येत्यन्ये । छान्तेषु प्रच्छ् एकः प्रच्छेत्यकार उच्चारणार्थः । णिजिरित्यत्र इर इत्संज्ञा वक्ष्यते । भुजित्यादि सृज इत्यन्तमेकं पदम् । जान्तेषु त्यज् निज् भज् भञ्ज् भुज् भ्रस्ज् मस्ज् युज् रुज् रञ्ज् विज् स्वञ्ज् सञ्ज् सृज् इति पञ्चदश । अद्क्षुदित्यादि नुद इत्यन्तमेकं पदम् । तत्र तुदेत्यकार उच्चारणार्थः । पद्यभिदित्येकं पदम् । समाहारद्वन्द्वः । पद्य इति श्यना निर्देशः । विद्यतिरिति श्यना निर्देशः । विनदिति श्नना निर्देशः । शद्‌स्यादि बुध्यतीत्यन्तमेकं पदम् । समाहार द्वन्द्वः । सदि स्कन्दि हृदि क्षुधि इति निर्देशः । स्विद्यति बुध्यतीति श्तिपा श्यन्विकरणयोर्निर्देशः । ततश्च दान्तेषु

निरनुबन्धपरिभाषया, 'लुग्विकरणाऽलुग्विकरणयोः–' इति परिभाषया वा । साहचर्यल्लुग्विकरणस्यैव ग्रहणमिति शङ्क्यम्, तस्यानित्यत्वात् । 'क्ष्णु तेजने' 'शीङ् स्वप्ने' । 'ष्णु प्रस्रवणे' । 'णु स्तुतौ' । 'टुक्षु शब्दे' । 'टुओश्वि गतिवृद्ध्योः' 'डीङ् विहायसा गतौ' । 'श्रिञ् सेवायाम्' । 'वृङ् संभक्तौ' । 'वृञ् वरणे' । नन्वेवं न्नानामेकाचामेवानुदात्तत्वे ऊर्णुतः ऊर्णुतवानित्यादि न सिध्येदिति चेत् । 'ऊर्णोतेर्णुवद्भावो वाच्यः' इति वक्ष्यमाणवार्तिकेनेष्टसिद्धेः । तेन ऊर्णोनूयते तु 'धातोरेकाचः–' इति यङ् । ऊर्णुनावेत्यत्रानेकाच्त्वेन प्रवृत्तस्याऽमोऽभावश्च सिध्यति उक्तं च भाष्ये—'वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेदुपग्रहात्' इति । 'विभाषा गुणेऽस्त्रियाम्, इति हेताविय पञ्चमी हेतुरिह फलम् । एतच्च कैयटे स्पष्टम् । उपग्रहः प्रतिषेधः । इट्प्रतिषेधार्थमित्यर्थः एवं च णुवद्भावेनैकाच्त्वात् 'श्र्युकः किति, इति निषेधप्रवृत्तेः ऊर्णुत इत्यादि सिद्धम् 'एकाच उपदेशे–' इतीण्निषेधस्तु न प्रवर्तते, णुवद्भावेनैकाच्त्वेऽप्यनुदात्तत्वाभावात् ऊर्णुधातोर्णुधातोश्चोदात्तत्वात्, तथा चोर्णविता और्णावीदित्याद्यपि सिद्धम् । 'शक्लृघस्लृभ्यः' इति प्राचो ग्रन्थस्थं पाठमुपेक्ष्य हलन्तेषु कादिक्रमेणाह शक्लृ कान्त एकः । चान्तेषु पच्मुच्रिच्वच्विच्सिचः षट् । 'डुपचष् पाके' 'पचि व्यक्तीकरणे, द्वावपि पचित्यनेन गृह्येते । 'मुच्लृ मोक्षणे' । रिचित्यनेन 'रिचिर् विरेचने' 'रिच वियोजनसंपर्चनयोः' इति यौजादिकश्च गृह्यते । वचित्यनेन तु 'वच परिभाषणे' ब्रुवो वचिरादेशः । वचिर्योगादिकोऽपि गृह्यते । विचिर् पृथग्भावे' 'षिच

बहुलं प्राग्वत् । नीलमुत्पलं नीलोत्पलम् । बहुलग्रहणात् क्वचिन्नित्यम्, कृष्णसर्पः । क्वचिन्न, रामो जामदग्न्यः । ७३७ **पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ।** (२-१-५८) पूर्वनिपातनियमार्थमिदम् । पूर्ववैयाकरणः । अपराध्यापकः । 'अपरस्यार्धे पश्चभावो वक्तव्यः' ( वा ३२५३ ) अपरश्चासावर्धश्च पश्चार्धः । कथम् 'एकवीरः' इति । 'पूर्वकालैक—' ( सू ७२६ ) इति बाधित्वा परत्वादनेन समासे 'वीरैकः' इति हि स्यात् । बहुलग्रहणाद्भविष्यति । ७३८ **श्रेण्यादयः कृतादिभिः ।** ( २—१—५९ ) 'श्रेण्यादिषु च्व्यर्थवचनं

---

तदाह—भेदकमिति । प्राग्वदिति । समस्यते स तत्पुरुष इत्यर्थः । नीलमुत्पलं नीलोत्पलमिति । नीलपदं तावदुत्पलमनीलादुत्पलाद्व्यावर्तयतीति विशेषणसमर्पकम् । तस्य उत्पलपदेन विशेष्यसमर्पकेण समासः । प्रथमानिर्दिष्टत्वाद्विशेषणस्य पूर्वनिपात इति भावः । न च उत्पलपदम् अनुत्पलान्नीलं व्यावर्तयतीत्युत्पलपदस्यापि विशेषणत्वं स्यादिति वाच्यम्, जातिशब्दो गुणक्रियाशब्दसमभिव्याहारे विशेष्यसमर्पक एव, न तु विशेषणसमर्पकः, स्वभावात् । यथा—नीलोत्पलम्, पाचकब्राह्मण इति । गुणशब्दयोः समभिव्याहारे विशेषणविशेष्यभावस्य न नियमः । यथा—खञ्जकुब्जः कुब्जखञ्ज इति । क्रियाशब्दयोरप्यनियमः । यथा—पाचकपाठकः पाठकपाचक इति । तथा गुणक्रियाशब्दयोरप्यनियमः । यथा—खञ्जपाचकः पाचकखञ्ज इति भाष्ये स्पष्टम् । तथा कैलासाद्रिः, मन्दराद्रिः, अयोध्यानगरी इत्यादौ संज्ञाशब्दा अपि विशेषणसमर्पका एव, स्वभावात् । सामान्यजातिविशेषजातिशब्दयोः समभिव्याहारे तु विशेषजातिरेव विशेषणम्, शिंशपावृक्ष इत्यादि ज्ञेयम् । ननु वाग्रहणेन सिद्धे बहुलग्रहणं किमर्थमित्यत आह—**बहुलग्रहणादिति ।** पूर्वापर । पूर्वादयः समानाधिकरणेन समस्यन्त इत्यर्थः । विशेषणसमासेनैव सिद्धे किमर्थमिदमित्यत आह—**पूर्वनिपातेति ।** **अपराध्यापक इति ।** बहुलग्रहणानुवृत्त्या पाचकादिक्रियाशब्दैः । पूर्वादीनामेषां न समास इति समर्थसूत्रे भाष्ये स्थितम् । ततश्च 'अपराध्यापकः' इत्युदाहरणमुपेक्ष्यम् । अपरमीमांसक इत्युदाहरणमुचितम् । अपरस्यार्थ इति । 'पश्चात्' इति सूत्रभाष्ये इदं वार्तिकं स्थितम् । प्रथमवैयाकरणः, चरमवैयाकरणः, 'मध्यान्मः' मध्यमवैयाकरणः, वीरवैयाकरणः । आक्षिपति—कथमेकवीर इति । हि यतः, अनेन प्रकृतसूत्रेण, वीरशब्दस्यैकशब्देन समासे सति वीरशब्दस्य पूर्वनिपाते सति वीरैक इति स्यात् । अतः 'एकवीरः' इति कथमित्यन्वयः । ननु 'पूर्वकालैक—' इति सूत्रेणैकशब्दस्य वीरशब्देन समासे भवति 'एकवीरः' इति निर्बाधमित्यत आह—**पूर्वकालैकेति बाधित्वा परत्वा-** इति । परिहरति—**बहुलग्रहणादिति ।** बहुलग्रहणानुवृत्तेरस्य सूत्रस्याप्रवृत्तौ

---

नियम एव । खञ्जकुब्जः कुब्जखञ्जः । पाचकपाठकः पाठकपाचकः । खञ्जपाचकः पाचकखञ्ज इति । अत्र मूलमुपसर्जनमिति महासंज्ञा । अप्रधानं ह्युपसर्जनम् । गुणक्रिययोश्च द्रव्यं प्रत्यप्राधान्यं स्पष्टमेवेति । **अपरस्यार्ध इति ।** एतच्च 'पश्चात्' इति सूत्रे भाष्ये स्थितम् । **बहुलग्रहणादिति ।** एकेषु मुख्येषु वीरयति पराक्रमते

कर्तव्यम्' (वा १२९६) । अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । ७३९ क्
नञ्विशिष्टेनानञ् । (२-१-६०) नञ्विशिष्टेन क्तान्तेनानञ् क्तान्तं समस्
कृतं च तदकृतं च कृताकृतम् । 'शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्
संख्यानम्' (वा १३१०) । शाकप्रियः पार्थिवः शाकपार्थिवः । देवब्राह्म

---

पूर्वकालेत्येव समासो भवतीत्यर्थः । श्रेण्यादयः । श्रेण्यादयः कृतादिभिः समान
करणैः समस्यन्ते, स तत्पुरुष इत्यर्थः । श्रेण्यादिष्विति । श्रेण्यादिषु समासे
च्व्यर्थवचनम्–च्विप्रत्ययार्थेऽभूततद्भावे गम्ये श्रेण्यादीनां समासो वक्तव्य इत्यर्थः।
णय इति । शिल्पेन पण्येन वा जीविनां समूहाः श्रेणयः । पूर्वं शिल्पेन पण्ये
जीवितुमसमर्था इदानीं तेन जीवितुं समर्थाः कृता इत्यर्थे समासे सति 'श्रेणि
इति भवतीत्यर्थः । श्रेणिशब्दो ह्रस्वान्तः, भाष्ये तथैवोदाहरणात् । यदा तु
एव श्रेणयः परिष्कृतास्तदा तु न समासः, च्व्यर्थाभावात् । च्विप्रत्ययान्तस्य तु
त्वात् 'कुगति–' इति नित्यसमासः । ततः 'च्वौ च' इति श्रेणिशब्दस्य दी
क्तेन नञ्विशिष्टेनानञ् । नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सह नञ्
क्तान्तं समस्यते, स तत्पुरुष इत्यर्थः । कृतं च तदिति । एकदेशस्य करणात्कृतम्
देशान्तरस्याकरणात्तदेवाकृतम् । पूर्वनिपातनियमार्थम् । सिद्धं च तदभुक्तं चेत्
नायं समासः, विशिष्टशब्दो ह्यत्राधिकवाची । यथा देवदत्ताद्यज्ञदत्तः स्वाध्यायेन विशि
इत्युक्ते अधिक इति गम्यते । नञैव विशिष्टं नञ्मात्राधिकेन क्तान्तेनेति ल
एवं च समानप्रकृतिकत्वं क्तान्तयोः पर्यवसन्नमिति बोध्यम् । शाकपार्थिवादी
मिति । 'वर्णो वर्णेन' इति सूत्रभाष्ये इदं वार्तिकं पठितम् । शाकप्रियः पा
शाकपार्थिव इति । शाकः प्रियो यस्य स शाकप्रियः । 'वा प्रियस्य' इति
शब्दस्य परनिपातः शाकप्रियश्चासौ पार्थिवश्च इति विग्रहे बहुव्रीहिगर्भो वि
समासः । तत्र पूर्वखण्डे बहुव्रीहौ उत्तरपदस्य प्रियशब्दस्य लोपः । देवब्राह्म
इति । देवाः प्रिया यस्य स देवप्रियः, स चासौ ब्राह्मणश्चेति विग्रहः । पूर्व

---

इति वा बोध्यम् । श्रेण्यादयः । आद्य आदिशब्दो व्यवस्थावाची । द्वितीयस्तु
वाची । 'श्रेण्यादयः पठ्यन्ते, कृतादिराकृतिगणः' इति भाष्यात् । श्रेणि, एक,
मुकुन्द, शशि, विशिख, निचय, निधनादिः श्रेण्यादिः । कृत, मित, मत, भूतादिः
यदा तु सिद्धा एव श्रेणयः सम्यक् कृतास्तदा समासो नेष्यत इत्याशयेनाह–
णयः श्रेणय इति । एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्र
च्व्यन्तानां तु 'कुगति–' इति नित्यसमासः, परत्वात् । श्रेणीकृतम् । इह तु
च' इति दीर्घः । क्तेन । विशिष्टशब्दोऽवधारणार्थः । नञ्मात्राधिकेन नञ्
समस्यत इति सूत्रार्थः । तेनेह न–सिद्धं चाभुक्तं च । नुडिडधिकेनापीति वा
अशितं चानशितं च अशितानशितम् । क्लिष्टाक्लिशितम्, 'क्लिशः क्त्वानिष्ठयोः
वेट् । कृताकृतमिति । एकदेशकरणात्कृतम् । एकदेशान्तरस्याकरणात्तदेवाकृ
शाकपार्थिव इति । पृथिव्या ईश्वरः पार्थिवः । 'तस्येश्वरः' इत्यण् । शा
इति बहुव्रीहिः, तस्य पार्थिवशब्देन समासे कृते पूर्वसमासे मध्यमपदं प्रिय इति

७४० **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ।** (२-१-६१) सद्वैद्यः । वक्ष्यमाणेन महत आकारः । महावैयाकरणः । पूज्यमानैः किम्—उत्कृष्टो गौः । पङ्काद् उद्धृत इत्यर्थः । ७४१ **वृन्दारकनागकुञ्जरैः पूज्यमानम् ।** (२—१—६२) गोवृन्दारकः । व्याघ्रादेराकृतिगणत्वादेव सिद्धे सामान्यप्रयोगार्थं वचनम् । ७४२ **कतरकतमौ जातिपरिप्रश्ने ।** (२—१—६३) कतरकठः । कतमकलापः ।

---

पदलोपः । देवपूजको ब्राह्मण इति वा विग्रहः । सन्महत्परम । समानाधिकरणैः समस्यन्ते, स तत्पुरुष इति शेषः । सद्वैद्य इति । सन् वैद्य इति विग्रहः । चिकित्साशास्त्रकूलंकषज्ञानत्वं सत्त्वम् । तेन वैद्यस्य पूजा गम्यते । पूर्वनिपातनियमार्थं सूत्रम् । वक्ष्यमाणेनेति । महांश्चासौ वैयाकरणश्चेति विग्रहे अनेन समासे सति महच्छब्दस्य 'आन्महतः—' इति वक्ष्यमाणेन आकारे अन्तादेशे सवर्णदीर्घे महावैयाकरण इति भवतीत्यर्थः । ननु उत्कृष्टो गौरित्यत्रोत्कृष्टशब्दस्य अतिशयितवाचितया तेन गोः पूजावगमात् कथमिह समासो न भवतीत्यत आह—पङ्कादुद्धृत इत्यर्थं इति । उत्पूर्वकः कृषधातुरिहोद्धरणार्थक इति भावः । परमवैद्यः, उत्तमवैद्यः, उत्कृष्टवैद्यः । गुणक्रियाशब्दैः समासे सदादीनां पूर्वनिपातनियमार्थमिदं सूत्रम् । वृन्दारकनागकुञ्जरैः । समानाधिकरणैः समस्यत इति शेषः । विशेषणसमासेनैव सिद्धे विशेष्यस्य पूर्वनिपातनियमार्थं सूत्रम् । गोवृन्दारक इति । वृन्दारकशब्दो देवतावाची । 'अमरा निर्जरा देवाः' इत्युपक्रम्य 'वृन्दारका दैवतानि' इत्यमरः । गौः वृन्दारक इवेति विग्रहः । गौः नाग इव गोनागः । गौः कुञ्जर इव गोकुञ्जरः । नागशब्दः कुञ्जरशब्दश्च गजवाची । अत्र गोर्वृन्दारकादितुल्यत्वात् श्रैष्ठ्यं गम्यत इति पूज्यमानता । ननु व्याघ्रादेराकृतिगणत्वाद् 'उपमितं व्याघ्रादिभिः—' इत्येव सिद्धे किमर्थमिदमित्यत आह—व्याघ्रादेरिति । सामान्येति । गोकुञ्जरः श्रेष्ठ इत्यादाविति भावः । कतरकतमौ । जातिपरिप्रश्ने गम्ये कतरकतमौ समानाधिकरणेन समस्येते इत्यर्थः । कतरकठ इति । अनयोः कः कठ इत्यर्थः । 'कियत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' कठेन प्रोक्तमधीते कठः । वैशम्पायनान्तेवासित्वात् प्रोक्ते णिनिः । 'कठचरकाल्लुक्' इति तस्य लुक् । ततः 'तदधीते—' इत्यणः 'प्रोक्ताल्लुक्' इति लुक् । कतमकलाप इति । एषां कः कलाप इति विग्रहः । कलापिना प्रोक्तमधीते कलापः । 'कलापिनोऽण्' 'सब्रह्मचारि' इति टिलोपः । 'वा बहूनां जातिपरिप्रश्ने डतमच्' । ननु घटत्वादिवत् कठशाखाध्येतृत्वादिकं न जातिः । 'आकृतिग्रहणा जातिः' इति लक्षणस्य 'लिङ्गानां व न सर्वभाक्', 'सकृदाख्यातनिर्ग्राह्या' इति लक्षणस्य च तत्रा-

---

लोपः । तथा देवब्राह्मण इत्यत्र देवस्य पूजको देवपूजक इति पूर्वस्मिन् षष्ठीसमासे उत्तरपदं पूजक इति तस्य लोपो ज्ञेयः । सन्महत् । गुणक्रियाशब्दैः सह समासे सदादीनां पूर्वनिगातनियमार्थं सूत्रम् । कतरकतमौ । जातिपरिप्रश्ने किम्, कतरो देवदत्तः । 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति व्युत्पादितकतमशब्दसाहचर्यात्तादृशस्यैव कतरशब्दस्यापि ग्रहणे सिद्धे जातिपरिप्रश्नग्रहणं ज्ञापयति 'कतमशब्दोऽर्थान्तरेऽपि साधुः' इति । तथा च प्रत्युदाहृतं प्राचीनवृत्तिषु 'कतरो भवतोर्देवदत्तः

'गोत्रं च चरणैः सह' इति जातित्वम् । ७४३ किं क्षेपे । (२—१—६४) कुत्सितो राजा किंराजा, यो न रक्षति । ७४४ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः । (२—१—६५) ७४५ तत्पुरुषः समानाधिकरणः कर्मधारयः । (१—२—४२) पुंवत्कर्मधारयजातीयदेशीयेषु । (६—३—४२) कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात्पर ऊङभावो यस्मिंस्तथाभूतं पूर्वं पुंवत् । पूरणीप्रियादिष्वप्राप्तः पुंवद्भावो विधीयते । महानवमी । कृष्णचतुर्दशी । महा...

प्रवृत्तेरित्यत आह—गोत्रं चेति । अत्र कतमशब्दस्य जातिपरिप्रश्न एव व्युत्पादनात् कतरार्थमेव जातिपरिप्रश्नग्रहणम् । एवं च अनयोः कतरो देवदत्त इति भवति समासः । एषां कतमो देवदत्त इति तु नास्त्येव । जातिपरिप्रश्न एव डतमच्विधानात् । वस्तुतस्तु डतरडतमविधौ द्वयोरिति बहूनामिति जातिपरिप्रश्ने इति त्रयं प्रत्याख्यातं भाष्ये । एवं च कतम एषां देवदत्त इत्यप्यस्ति । तत्र समासाभावाय जातिपरिप्रश्नग्रहणम् इति शब्देन्दुशेखरे स्थितम् । किं क्षेपे । क्षेपो निन्दा । तत्र किमित्यव्ययं समानाधिकरणेन समस्यते, स तत्पुरुष इत्यर्थः । कुत्सितो राजा अस्वपदविग्रहोऽयम् । किम्पदस्थाने कुत्सितपदमिति ज्ञेयम्, वाक्येन निन्दाया स्वपदलौकिकविग्रहासम्भवात् । किंराजेति । 'राजाहस्सखिभ्यः—' इति टच् न, 'किमः क्षेपे' इति निषेधात् । ननु राज्ञो बहुसम्पत्तिशालिनः कथं कुत्सितत्वम् आह—यो न रक्षतीति । स किंराजेत्यन्वयः ।

पोटायुवति । पोटादिभिः समानाधिकरणैर्जातिवाचकं समस्यते, स तत्पुरुष इत्यर्थः । अथ कर्मधारयकार्यं वक्ष्यन् कर्मधारयसंज्ञामाह—तत्पुरुषः समा... समानम् एकमधिकरणं वाच्यं ययोः पदयोः, ते समानाधिकरणे पदे, ते अस्य स्तः समानाधिकरणः, मत्वर्थीयः अर्शआद्यच् । समानाधिकरणानेकपदावयवकस्तत्पुरुषः कर्मधारयसंज्ञको भवतीत्यर्थः । तत्तत्पुरुषाधिकारे इयं संज्ञा न कृता, तथा सत्येकसंज्ञाधिकारात् कर्मधारयसंज्ञया तत्पुरुषसंज्ञा बाध्येतेत्याहुः । पुंवत्कर्मधारय । पुंवद्भाषितपुंस्कादनूङिति वर्तते । एकापि सप्तमी विषयभेदाद्भिद्यते । कर्मधारये अधिकरणसप्तमी । जातीयदेशीयविषये परसप्तमी । तदाह—कर्मधारय... तथाभूतमित्यनन्तरं स्त्रीवाचकमिति शेषः । भाषितपुंस्कादनूङित्येतत् 'स्त्रियाः...' इति सूत्रे स्फुटीकरिष्यते । ननु कर्मधारये 'स्त्रियाः पुंवत्—' इत्यनेन सिद्धं पुं... जातीयदेशीययोस्तु 'तसिलादिष्वाकृत्वसुचः' इत्यनेन सिद्धमित्यत आह—पूरणीप्रियादिष्वप्राप्त इति । अपूरणीप्रियादिष्विति पर्युदासादिति भावः । महानवमीति । महती चासौ नवमी चेति विग्रहः । 'सन्महत्—' इत्यादिना समासः ।

कतमो भवतां देवदत्तः' इति । किं क्षेपे । किंराजेति । 'किमः क्षेपे' इति समासान्तनिषेधः । क्षेपे किम्, को राजा पाटलिपुत्रे ? । एवं 'किंसखा यो द्रुह्यति' 'किंगौः यो न वहति' इत्यप्युदाहरणं बोध्यम् । तत्पुरुषः । समानाधिकरणशब्दः ... । समानाधिकरणावयवक इत्यर्थः । भाषितपुंस्कादित्यादि । एतच्च

तथा कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते। पाचकस्त्री, दत्तभार्या, पञ्चमभार्या, स्त्रौघ्नभार्या, सुकेशभार्या, ब्राह्मणभार्या। एवं पाचकजातीया पाचकदेशीया इत्यादि। इभपोटा। पोटा स्त्रीपुंसलक्षणा। इभयुवतिः।

---

पूरणी नवमी। 'तस्य पूरणे डट्' 'नान्तादसंख्यादेर्मट्'। टित्वाद् ङीप्। अत्र नवमीशब्दस्य पूरणप्रत्ययान्तत्वात्तस्मिन् परे 'स्त्रियाः पुंवत्–' इति पुंवत्त्वमप्राप्तमनेन विधीयते। कृत पुंवत्त्वे 'आन्महतः–' इत्यात्त्वमिति भावः। कृष्णचतुर्दशीति। चतुर्दशानां पूरणी चतुर्दशी डट्। 'नस्तद्धिते' इति टिलोपः। टित्वान्ङीप्। कृष्णा चासौ चतुर्दशी चेति विग्रहः। महाप्रियेति। महती चासौ प्रिया चेति कर्मधारयः। अत्रापि प्रियादिपर्युदासादप्राप्तमनेन विधीयत इति भावः। 'पुंवत्कर्मधारय–' इत्यस्य प्रयोजनान्तरमाह—तथा कोपधादेरिति। 'न कोपधायाः' 'संज्ञापूरण्योश्च' 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' 'स्वाङ्गाच्चेतः' 'जातेश्च' इति पञ्चसूत्र्या प्रतिषिद्ध इत्यर्थः। कर्मधारयादाविति। कर्मधारये जातीयदेशीययोश्च परयोरित्यर्थः। पाचकस्त्रीति। पाचिका चासौ स्त्री चेति कर्मधारयः। अत्र 'न कोपधायाः' इति पुंवत्त्वस्य प्रतिषेधः प्राप्तः। दत्तभार्या, पञ्चमभार्येति। दत्ता चासौ भार्या चेति, पञ्चमी चासौ भार्या चेति च कर्मधारयः। अत्र 'संज्ञापूरण्योश्च' इति प्रतिषेधः प्राप्तः। स्त्रौघ्नभार्येति। स्त्रौघ्नी चासौ भार्या चेति कर्मधारयः। अत्र 'वृद्धिनिमित्तस्य च—' इति प्रतिषेधः प्राप्तः। सुकेशभार्येति। सुकेशी चासौ भार्या चेति कर्मधारयः। अत्र 'स्वाङ्गाच्च' इति निषेधः प्राप्तः। ब्राह्मणभार्येति। ब्राह्मणी चासौ भार्या चेति कर्मधारयः। अत्र 'जातेश्च' इति निषेधः प्राप्तः। अथ जातीयदेशीययोः प्रतिप्रसवमुदाहरति—एवं पाचकजातीया पाचकदेशीयेति। 'प्रकारवचने–' इति जातीयर्, 'ईषदसमाप्तौ–' इति देशीयर्। उभयत्रापि 'तसिलादिषु—' इति पुंवत्त्वस्य 'न कोपधायाः' इति निषेधः प्राप्तः। इत्यादीति। दत्तजातीया, दत्तदेशीया, पञ्चमजातीया, पञ्चमदेशीया, स्त्रौघ्नजातीया, स्त्रौघ्नदेशीया, सुकेशजातीया, सुकेशदेशीया, ब्राह्मणजातीया, ब्राह्मणदेशीया। तदेवं 'पुंवत्कर्मधारय—' इति सूत्रं निरूप्य 'पोटायुवति—' इति सूत्रस्य क्रमेणोदाहरणान्याह—इभपोटेति। पोटा चासौ इभी चेति कर्मधारयः। इभीशब्दस्य पुंवत्त्वम्। जातेः पूर्वनिपातार्थमिदं सूत्रम्। पोटा स्त्रीपुंसलक्षणा इति। कोशवाक्यमिदम्। स्त्रीपुंसयोर्लक्षणानि चिह्नानि यस्या इति

---

पुंवत्–' इति सूत्रे स्फुटीकरिष्यते। ननु तेनैव कर्मधारयेपि सिद्धम्, जातीयदेशीययोस्तु 'तसिलादिषु–' इति सिद्धम्, तत्किमनेन सूत्रेणेत्यत आह—पूरणीप्रियादिष्विति। तथेति च। महानवमीति। नवानां पूरणी। 'तस्य पूरणे डट्' 'नान्तादसंख्यादेर्मट्' टित्वान्ङीप्। महती चासौ नवमी चेति विग्रहः। पुंवद्भावे कृते वक्ष्यमाणेन महत आकारः। कोपधादेरिति। 'न कोपधायाः' 'संज्ञापूरण्योश्च' 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' 'स्वाङ्गाच्चेतः' 'जातेश्च' इति पञ्चसूत्र्या प्रतिषिद्ध इत्यर्थः। क्रमेणोदाहरति—पाचकस्त्रीति। जातीयदेशीययोरपि प्रतिप्रसवमुदाहरति—एवमिति। पाचिकाप्रकारवती पाचकजातीया। 'प्रकारवचने जातीयर्'। पाचक

अग्निस्तोकः । उदश्वित्कतिपयम् । गृष्टिः सकृत्प्रसूता, गोगृष्टिः । धेनुर्नवप्रसूता गोधेनुः । वशा वन्ध्या गोवशा । वेहद्गर्भघातिनी गोवेहत् । बष्कयणी तरुणवत्सा, गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्तः ।
७४७ प्रशंसावचनैश्च । (२—१—६६) एतैः सह जातिः प्राग्वत् । गोमतल्लिका । गोमचर्चिका । गोप्रकाण्डम् । गवोद्धः । गोतल्लजः । प्रशस्ता गौरित्यर्थः ।

---

बहुव्रीहिः । इभयुवतिरिति । युवतिश्चासौ इभी चेति विग्रहः । कर्मधारये पुंवत्त्व । अग्निस्तोक इति । स्तोकः अल्पः, स चासौ अग्निश्चेति विग्रहः । उदश्वित्कतिपयमिति । 'तक्रं ह्युदश्वित्' इत्यमरः । कतिपयं च तदुदश्विच्चेति कर्मधारयः । गृष्टिः सकृत्प्रसूतेति । कोशवाक्यमिदम् । गोगृष्टिरिति । गृष्टिश्चासौ गौश्चेति कर्मधारयः । धेनुर्नवप्रसूतेति । कोशवाक्यमिदम् । गोधेनुरिति । धेनुश्चासौ गौश्चेति विग्रहः । वशा वन्ध्येति । कोशवाक्यमिदम् । गोवशेति । वशा चासौ गौश्चेति । विग्रहः । वेहद्गर्भघातिनीति । कोशवाक्यमिदम् । गोवेहदिति । वेहच्चासौ गौश्चेति विग्रहः । बष्कयण्यतरुणवत्सेति । 'चिरसूता वष्कयणी' इत्यमरः । तरुणवत्सेत्यपपाठः । गोबष्कयणीति । वष्कयणी चासौ गौश्चेति विग्रहः । कठप्रवक्तेति । प्रवक्ता अध्यापकः, स चासौ कठश्चेति विग्रहः । कठाध्यापक इति । अध्यापकश्चासौ कठश्चेति विग्रहः । कठधूर्त इति । धूर्तश्चासौ कठश्चेति विग्रहः । 'धूर्तोऽक्षदेवी' इत्यमरः । विट इत्यन्ये न च 'कुत्सितानि कुत्सनैः' इत्यनेन सिद्धिः शङ्क्या, प्रवृत्तिनिमित्तकुत्सायामेव तत्प्रवृत्तेः । न हि कठत्वं कुत्सितम् । प्रशंसावचनैश्च । एतैरिति । रूढ्या प्रशंसावाचकैरित्यर्थः । जातिरिति । 'पोटायुवति—' इत्यतस्तदनुवृत्तेरिति भावः । प्राग्वदिति । समानाधिकरणैः समस्यते स तत्पुरुष इत्यर्थः । जातेः पूर्वनिपातनियमार्थं सूत्रम् । गोमतल्लिकेति । मतल्लिका चासौ गौश्चेति विग्रहः । गोमचर्चिकेति । मचर्चिका चासौ गौश्चेति विग्रहः । गोप्रकाण्डमिति । प्रकाण्डं चासौ गौश्चेति विग्रहः । गवोद्ध इति । उद्धश्चासौ गौश्चेति विग्रहः । 'अवङ् स्फोटायनस्य' 'आद् गुणः' । गोतल्लज इति । तल्लजश्चासौ गौश्चेति विग्रहः । सर्वत्र परवल्लिङ्गता । मतल्लिकादिशब्दानामप्रसिद्धत्वादाचष्टे—प्रशस्ता गौरित्यर्थ इति । गोशब्दस्य स्त्रीलिङ्गत्वाभिप्रायात्प्रशस्तेति स्त्रीलिङ्गम् ।

---

देशीयेति । 'ईषदसमाप्तौ—' इति देशीयर् । उभयत्र 'तसिलादिषु—' इति पुंवद्भावे 'न कोपधायाः' इति निषेधः प्राप्तः, पटुजातीया पटुदेशीयेत्यादौ तस्य चरितार्थत्वात् । इत्यादीति । आदिपदाद् दत्तजातीया, पञ्चमजातीया, स्रौघ्नजातीया, सुकेशजातीया, ब्राह्मणजातीया । एवं दत्तदेशीयेत्याद्युदाहार्यम् । स्त्रीपुंसलक्षणेति । स्तनश्मश्र्वादियुक्ता स्त्रीत्यर्थः । उदश्विदिति । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इत्यमरः । कठधूर्त इति । नात्र कठत्वं कुत्स्यते, अतः 'कुत्सितानि कुत्सनैः' इति गतार्थता न शङ्क्या, प्रवृत्तिनिमित्तकुत्सायामेव तस्य प्रवृत्तेः । 'कुमुदभ्रान्ति धूर्तबको वालमत्स्यानाम्' इत्यत्र धूर्तबक इत्यसाधुरेव । प्रशंसावचनैरिति । वचनग्रहणं रूढिशब्दपरिग्रहार्थम् । तेन ये यौगिकाः प्रशस्तशोभनरमणीयादयः

तल्लिकादयो नियतलिङ्गाः, न तु विशेष्यनिघ्नाः । जातिः किम्—कुमारी तल्लिका । ७४८ युवा खलतिपलितवलिनजरतीभिः । (२—१—६७) र्वनिपातनियमार्थं सूत्रम् । लिङ्गविशिष्टपरिभाषया युवतिशब्दोऽपि समस्यते । वा खलतिर्युवखलतिः । युवतिः खलती युवखलती । युवजरती । युवत्यामेव रतीधर्मोपलम्भेन तद्रूपारोपात्सामानाधिकरण्यम् । ७४९ कृत्यतुल्याख्या जात्या । (२—१—६८) भोज्योष्णम् । तुल्यश्वेतः । सदृशश्वेतः । अजात्या

---

निर्देशः । गोशब्दस्य पुँल्लिङ्गत्वे तु प्रशस्त इति पाठ्यम् । ननु गोशब्दस्य पुँल्लिङ्गत्वे तल्लिकामर्चचिकाप्रकाण्डशब्दानामपि विशेष्यनिघ्नत्वात् पुँल्लिङ्गतापत्तिः । गोशब्दस्य स्त्रीलिङ्गत्वे तु प्रकाण्डोद्धतल्लजानामपि स्त्रीलिङ्गतापत्तिश्चेत्यत आह—मतल्लिका-य इति । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्य-रः । कुमारी मतल्लिकेति । अवस्थाविशेषात्मकवयोविशेषवाचित्वान्न जाति-ाची कुमारीशब्द इति न समासः । समासे तु 'पुंवत्कर्मधारय—' इति पुंवत्त्वं स्यादिति ावः । युवा खलति । युवन्शब्दः खलत्यादिभिः समानाधिकरणैः समस्यते, स त्पुरुष इत्यर्थः । विशेषणसमासेन सिद्धे किमर्थमिदमित्यत आह—पूर्वेति । युवन्श-ब्दस्य खलत्यादिशब्दानां च गुणवाचित्वाद्विशेषणत्वे कामचारात्पूर्वनिपातस्यानियमे प्राप्ते तन्नियमार्थमिदं सूत्रमित्यर्थः । खलतिः केशहीनशिराः । 'पलितं जरसा शौ-क्ल्यम्' 'वलिनो वलिभः समौ' इत्यमरः । युवा खलतिः युवखलतिरिति । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपः । ननु युवेति पुँल्लिङ्गनिर्देशात् कथं युवति-शब्दस्य समास इत्यत आह—लिङ्गविशिष्टेति । युवतिः खलतिः युवखल-तिरिति । 'पुंवत्कर्मधारय—' इति पुंवत्त्वम् । युवजरतीति । जरती वृद्धा । युवति-श्चासौ जरती चेति विग्रहः । 'पुंवत्कर्मधारय—' इति पुंवत्त्वम् ननु युवतिः कथं जरती स्यादित्यत आह—युवत्यामेवेति । कृत्यतुल्याख्या । कृत्यप्रत्ययान्ताः तुल्य-वाचकाश्च जातिभिन्नवाचकेन समानाधिकरणेन समस्यन्ते स तत्पुरुष इत्यर्थः । भोज्योष्णमिति । भोज्यं च तदुष्णं चेति विग्रहः । 'ऋहलोर्ण्यत्' इति ण्यत् । अयं कृत्यप्रत्ययः । भोज्योष्णशब्दयोः क्रियागुणशब्दत्वात् विशेषणत्वे कामचाराद-नियतपूर्वनिपाते प्राप्ते नियमार्थमिदम् । तुल्यश्वेत इति । तुल्यश्चासौ श्वेतश्चेति

---

विशेषवचनाः शुचिमृद्वादयः, ये तु गौण्या वृत्त्या प्रशंसां गमयन्ति 'सिंहो माणवकः' इत्यादयस्ते सर्वे व्युदस्यन्ते । गवोद्ध इति । 'अवङ् स्फोटायनस्य' इत्यवङि 'आद् गुणः' । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः । 'प्रशंसावचनपोटायुवति—' इत्येकयोगसंभवे पृथग्योगकरणं चिन्त्यफलम् । युवखलतीति । 'कृदिकारादक्तिनः' इति ङीष् । 'पुंवत्कर्मधारय—' इति युवति-शब्दस्य पुंवद्भावः । जरतीति । जीर्यतेरतृन् । 'उगितश्च' इति ङीप् । एवं युवप-लितः, युववलिन इत्युदाहार्यम् । वलिनशब्दः पामादिः । कृत्यतुल्याख्या । तुल्य-महान् सदृशमहानित्यादौ तु परत्वादनेन 'सन्महत्—' इति बाध्यते । 'तस्य सत्कृत्य-मालिनः' इति भट्टिप्रयोगे तु 'सतां कृत्यं सत्कृत्यम्' इति षष्ठीसमासो बोध्यः । एवं

किम्—भोज्य ओदनः । प्रतिषेधसामर्थ्याद्विशेषणसमासोऽपि न । ७५० वर्णो वर्णेन । (२—१—६९) समानाधिकरणेन सह प्राग्वत् । कृष्णसारङ्गः । ७५१ कडाराः कर्मधारये (२—२—३८) कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः । कडारजैमिनिः । जैमिनिकडारः । ७५२ कुमारः श्रमणादिभिः (२—१—७०) कुमारी श्रमणा कुमारश्रमणा । इह गणे श्रमणा प्रव्र...

विग्रहः । उभयोर्गुणवचनतया विशेषणत्वानियमेऽपि तुल्यशब्दस्यैव पूर्वनिपा... आख्याग्रहणस्य प्रयोजनमाह—सदृशश्वेत इति । सदृशशब्दस्य तुल्यपर्या... दिति भावः । भोज्य ओदन इति । अत्र ओदनशब्दस्य जातिवाचित्वा... समासो न भवतीत्यर्थः । नन्वेतत्समासाभावेऽपि विशेषणसमासो दुर्वार इत्यत ... प्रतिषेधेति । भोज्यशब्दपूर्वनिपातस्योभय[1]त्राप्यविशिष्टतया 'अजात्या' इति ... सर्वैयर्थ्यादिति भावः । वर्णो । शेषपूरणेन सूत्रं व्याचष्टे—समानाधि... नेति । वर्णवाचिना समानाधिकरणेन वर्णवाची समस्यते, स तत्पुरुष इत्य... कृष्णसारङ्ग इति । सारङ्गश्चित्रवर्णवान् । कृष्णशब्दः कृष्णावयवके ला... इति सामानाधिकरण्यम् । कृष्णश्चासौ सारङ्गश्चेति विग्रहः । विशेषणसमासे... इदं प्रपञ्चार्थमेव । यत्तु 'वर्णो वर्णेष्वनेते' इति स्वरविधौ प्रतिपदोक्तत्वादस्यैव ग्र... मिदम् । तेन सारङ्गस्यावयवः कृष्णः सारङ्गकृष्ण इत्यत्र 'वर्णो वर्णेषु—' इति ... नेति, तच्चिन्त्यम्, कर्मधारयस्वरप्रकरणे 'वर्णो वर्णेष्वनेते' इति सूत्रस्य प... सिद्धेरिति दिक् । कडाराः कर्मधारये । 'उपसर्जनं पूर्वम्' इत्यतः पूर्व... वर्तते । कडारा इति बहुवचननिर्देशात्तदादिग्रहणम्, तदाह—कडा... इति । 'उपसर्जनं पूर्वम्' इति नित्ये प्राप्ते विकल्पोऽयम् । कडारजैमिनिरि... कडारश्चासौ जैमिनिश्चेति विग्रहः । कुमारः श्रमणादिभिः । कुमा...

'परमपूज्यः' इत्यादिष्वपि । वर्णो । समानाधिकरणेन वर्णवाचिना वर्णवाचि स... इत्यर्थः ।'विशेषणं विशेष्येण—' इत्यनेनैव सिद्धे पृथग्विधानं 'वर्णो वर्णेष्वने... पूर्वपदप्रकृतिस्वरो विधीयमानः प्रतिपदोक्तत्वादेतत्समासपूर्वपदस्यैव भवतु नान्य... तदर्थम् । कृष्णसारङ्ग इति । सारङ्गश्चित्रपर्यायः, स च गुणोपसर्जनद्रव्य... कृष्णशब्दोऽपि कृष्णावयवके भाक्तः । एवं च गौणे सामानाधिकरण्ये 'विशेषणं वि... ष्येण—' इत्यप्रवृत्तौ समासार्थमपीदमारब्धव्यमित्याहुः । ननु 'तृतीया तत्कृ... इत्यनेनैवायं समासः सिध्यति, सारङ्गत्वस्य कृष्णादिकृतत्वात् । नापि स्वरा... 'तत्पुरुषे तुल्यार्थतृतीया—' इत्यनेनैव पूर्वपदप्रकृतिस्वरसिद्धेरिति चेत् । अत्राहुः—... शुक्लो हरितशुक्ल इत्याद्यर्थं समासोऽनेनावश्यं विधेयः । नहीह तत्कृतत्वमस्ति । ... पीह 'विशेषणं विशेष्येण—' इत्यनेन समासः सिध्यति, तथापीष्टः स्वरो न सिध्... न च प्रतिपदोक्तसमासोऽकिञ्चित्करः, व्यावर्त्यालाभादिति वाच्यम्, कृष्णशुक्लो ... देर्व्यावर्त्यस्य संभवादिति । कडारादय इति । बहुवचननिर्देशादिति भावः । ... शब्देन गडुलशाण्डिल्यः, शाण्डिल्यगडुल इत्यादि । एतच्च भाष्ये स्पष्टम् ...

१ क्वचित्तु '—भयथा' इति पाठः ।

र्भिणीत्यादयः स्त्रीलिङ्गाः पठ्यन्ते । लिङ्गविशिष्टपरिभाषाया एतदेव ज्ञापकं ोध्यम् । ७५३ चतुष्पादो गर्भिण्या । (२-१-७१) चतुष्पाज्जातिवाचिनो र्भिणीशब्देन सह प्राग्वत् । गोगर्भिणी । 'चतुष्पाज्जातिरिति वक्तव्यम्' वा १३३१) । नेह । स्वस्तिमती गर्भिणी , ७५४ मयूरव्यंसकादयश्च । २-१-७२) एते निपात्यन्ते । मयूरो व्यंसकः मयूरव्यंसकः । व्यंसको धूर्तः । दक्चावाक्चोच्चावचम् । निश्चितं च प्रचितं च निश्चप्रचम् । नास्ति किञ्चन यस्य ाऽकिञ्चनः । नास्ति कुतो भयं यस्य सोऽकुतोभयः । अन्यो राजा राजान्तरम् ।

---

मणादिभिः समानाधिकरणैः समस्यते, स तत्पुरुष इत्यर्थः । कुमारी श्रमणा ुमारश्रमणेति । 'पुंवत्कर्मधारय-' इति पुंवत्त्वम् । श्रमणा परित्यक्तसर्वसंङ्गा । नु सूत्रे कुमारशब्दस्य पुँल्लिङ्गस्यैव पाठात् कथमिह स्त्रीलिङ्गस्योदाहरणमित्यत आह- हेति । ननु गणे स्त्रीलिङ्गानामेव पाठे सूत्रस्य कथं तेषु प्रवृत्तिः । न च लिङ्गविशिष्ट- रिभाषयेति वाच्यम्, तत्सद्भावे प्रमाणाभावादित्यत आह—लिङ्गेति । एतदेवेति । तदपीत्यर्थः, 'युवा खलति-' इतिसूत्रे जरतीग्रहणस्यापि तज्ज्ञापकत्वात् । न हि युवन्श- दस्य जरतीसामानाधिकरण्यमस्ति । चतुष्पादो गर्भिण्या । 'जातिग्रहणं कर्तव्यम्' ति वार्तिकमभिप्रेत्य आह—चतुष्पाज्जातीति । गोगर्भिणीति । गर्भिणी चासौ ौश्चेति विग्रहः । विशेष्यस्य पूर्वनिपातार्थमिदं सूत्रम् । जातिरिति किम् ? कालाक्षी र्भिणी । मयूरव्यंसकादयश्च । एते निपात्यन्त इति । कृतसमासकार्या निर्दि- यन्त इत्यर्थः । मयूरव्यंसक इति । व्यंसकश्चासौ मयूरश्चेति विग्रहः । व्यंसको ूर्त इति । अत्र कोषो मृग्यः । गुणवचनत्वाद् व्यंसकशब्दस्य पूर्वनिपाते प्राप्ते दं वचनम् । उच्चावचमिति । उदक्शब्दस्य उच्चेत्यादेशः । अवाक्शब्स्य अवचा- शश्च । 'उच्चावचं नैकभेदम्' इत्यमरः । निश्चप्रचमिति । निश्चितशब्दस्य निश्चा- ेशः । प्रचितशब्दस्य प्रचादेशः । नास्ति किञ्चनेति । चनेत्यव्ययमप्यर्थे । नास्ति कमपि यस्येत्यर्थे बहुव्रीह्यपवादस्त्रिपदस्तत्पुरुषः । नञो नकारस्य लोपश्च निपात्यते । ान्न लोपो नञः' इति तु नात्र प्रवर्तते, किंशब्दस्य उत्तरपदत्वाभावात् समासचरमखण्ड एव ुत्तरपदशब्दस्य रूढत्वात् । नास्ति कुत इति । कुतोऽपि भयमस्य नास्तीति विग्र-

---

वेति । एवकारः स्फुटसिद्धत्वद्योतनार्थो न त्ववधारणार्थः । 'युवा खलति-' ति सूत्रे जरतीग्रहणस्यापि ज्ञापकत्वसंभवात् । न हि युवन्शब्दस्य पुंस्त्वे जरतीसा- ानाधिकरण्यं संगच्छते । चतुष्पादो । मण्डूकप्लुत्या अत्र 'जातिः' इत्यनुवर्तत -त्याह—जातिवाचीति । जातिः किम्, कालाक्षी गर्भिणी । चतुष्पात्किम्, ाह्मणी गर्भिणी । प्रत्युदाहरणे 'विशेषणम्-' इति समासः स्यादेव । गर्भिणीका- ाक्षीत्यादिपूर्वनिपाते विशेषः । मयूर । चकारोऽत्रावधारणार्थः । तेन 'परममयूर ्यंसकः' इत्यादि समासान्तरं न भवति । धूर्त इति । एवं च गुणवचनत्वात्पूर्व- िपाते प्राप्ते इदं वचनमारब्धमिति भावः । अन्ये तु मयूर इव व्यंसको मयूरव्यंसक त्यादौ 'उपमानानि सामान्यवचनैः' इति समासस्यापवादोऽयम् । तेन 'समासस्य' त्यन्तोदात्तत्वमिह सिध्यति । 'तत्पुरुषे तुल्यार्थ-' इत्युपमानपूर्वपदप्रकृतिस्वरस्याप-

चिदेव चिन्मात्रम् । 'आख्यातमाख्यातेन क्रियासातत्ये' (ग २०) । अ पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता । पचतभृज्जता । खादतमो 'एहीडादयोऽन्यपदार्थे' (ग १८) एहीड इति यस्मिन्कर्मणि तदेहीडम् । यवम् । उद्धर कोष्ठादुत्सृज देहीति यस्यां क्रियायां सोद्धरोत्सृजा । उद्धमवि असातत्यार्थमिह पाठः । 'जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधा (ग २९) । जहीत्येतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये चेत्कर्ताभिधीयत इत्यर्थः । जहिजोडः । जहिस्तम्बः । ७५५ ईषदकृता । (२-२ ईषत्पिङ्गलः । 'ईषद् गुणवचनेनेति वाच्यम्' (वा १३१६) । ईषद्रक्तम् । नञ् । (२-२-६) नञ्सुपा सह समस्यते ७५७ नलोपो नञः । (६-३

---

हस्यार्थः । अकुतो भय इति । बहुव्रीह्यपवादस्तत्पुरुषः । अन्यो राजा रा रमिति । अत्र अन्तरशब्दः अन्यपर्यायः । तस्य स्थाने अन्यशब्दो विग्रहवाक्ये नित्यसमासत्वेन अस्वपदविग्रहौचित्यात् । नित्यसमासत्वं च राजान्तरमित्यस्य नादेव ज्ञेयम् । अत्र अन्तरशब्दस्य परनिपातः । चिदेव चिन्मात्रमिति । कात्स्न्र्येऽवधारणे' इत्यमरः । नित्यसमासत्वसूचनाय अस्वपदविग्रहः । निपात नासिकनित्यतेत्याहुः । आख्यातमिति । गणसूत्रम् । क्रियासातत्ये गम्ये तिङन्तेन समस्यते, स तत्पुरुष इत्यर्थः । अश्नीतपिबतेति । इहासुवन्तत्वेऽपि स क्रियारूपस्यान्यपदार्थस्य प्राधान्यात् स्त्रीत्वाट्टाप् । एवं पचतभृज्जतेत्यादा एहीडादय इति । इदमपि गणसूत्रम् । अन्यपदार्थे एहीडादयो निपात्यन्त इ एहि ईडे इति विग्रहः । ईडे इति लडुत्तमपुरुषैकवचनम् । डकारादेकारस्य अकारा एहियवमिति । यौमीत्यस्य यवादेशः । उत्सृजेत्यस्य विवरणम्— देहि इह पाठ इति । एहीडादिष्वित्यर्थः । 'जहि कर्मणा बहुलम्–' इत्यपि गण कर्ता अभिधीयत इति । उक्तेः कर्तेत्यर्थः । जहिजोड इति । जोड इति चित् संज्ञा । जहि जोडं जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः । स्तम्ब इति । जहि स्तम्बम् , जहि स्तम्बमिति य आहेति विग्रहः । इति समाना णाधिकारः । ईषदकृता । ईषच्छब्दः अकृदन्तप्रकृतिकसुबन्तेन समस्यते, स इत्यर्थः । ईषत्पिङ्गल इति । पिङ्गलशब्दः अव्युत्पन्नप्रातिपदिकमिति भावः द्गुणवचनेनेति । अकृतेत्यपहायेति शेषः । नञ् । इदं समानाधिकरणाधि नेत्यभिप्रेत्याह—सुपा समस्यत इति । न लोपो नञः । नेति लुप्तषष्ठीकं

---

मानसंशब्दनेन विहिते प्रतिपदोक्तसमासे चरितार्थत्वादित्याहुः । राजान्तर अन्तरशब्दोऽत्र भिन्नवाची । चिन्मात्रमिति । 'मात्रं कात्स्न्र्येऽवधारणे' इत्य अन्तरमात्रशब्दाभ्यां सह नित्यसमास इत्युभयत्र अस्वपदविग्रहो दर्शितः । नित्यस सत्वं तु अनवारणार्थकचकारेण लब्धमित्याहुः । अश्नीतपिबतेति । इह क्रिय स्यान्यपदार्थस्य प्राधान्यात् स्त्रीत्वाट्टाप् । एवमग्रेऽपि—उद्धर कोष्ठादित्यादि । उत्सृजेत्येतावानेव विग्रहः । उत्सृजेत्यस्य विवरणं देहीति । कोष्ठादिति तूद्धरे काङ्क्षापूरणार्थमुक्तम् । समासेन चेत्कर्तेति । जहिजोडमिति आभीक्ष्ण्येन

ो नस्य लोपः स्यादुत्तरपदे। न ब्राह्मणोऽब्राह्मणः। ७५८ तस्मान्नुडचि।

ाह—नञो नस्येति। उत्तरपद इति। 'अलुगुत्तरपदे' इत्यतस्तदनुवृत्तेरिति
वः। नञाऽशिति सिद्धे लोपवचनम् अकब्राह्मण इति साकच्कार्थमित्याहुः। अब्रा-
ण इति। अत्रारोपितत्वं नञर्थः। आरोपितत्वं च ब्राह्मणत्वद्वारा ब्राह्मणेऽन्वेति।
रोपितब्राह्मणत्ववानिति बोधः। अर्थाद् ब्राह्मणभिन्न इति पर्यवस्यति। केचित्तु नञ्
ेदवाची, ब्राह्मणाद्भिन्न इत्यर्थ इत्याहुः। तदयुक्तम्, ब्राह्मणाद्भिन्न इत्यर्थे पूर्वपदप्राधा-
ापत्तेः। तथा च 'उत्तरपदार्थप्रधानस्तत्पुरुष' इति भाष्याद्भाषा विरुध्येत। किं च अते,
ास्मै, अतस्मादित्यादौ सर्वनामकार्यं शीभावस्मायादिकं न स्यात्, तच्छब्दार्थस्य
र्थं प्रति विशेषणत्वे अप्रधानत्वात् 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इत्युक्तेः।
ा अस इत्यादौ 'तदोः सः सावनन्त्ययोः' इति सर्वाद्यन्तर्गतत्यदादिकार्यं सत्वं
न स्यात्। अनेकमित्यत्र एकवचनानुपपत्तिश्च। एकभिन्नस्य एकत्वासंभवेन
त्वबहुत्वनियमेन च द्विबहुवचनापत्तेः। तथा सति 'अनेकमन्यपदार्थे' इति नोपपद्येत,
तत्तदोःसुलोपः—' इत्यत्र अनञ्समासग्रहणं चात्र लिङ्गम्। तद्धि असः शिवः, अनेषः
व इत्यादौ सुलोपाभावार्थम्। तद्भिन्न एतभिन्न इत्यर्थे तु तच्छब्दाद्यर्थस्य उप-
र्जनतया त्यदाद्यत्वानापत्तौ हल्ङ्याद्लोपस्य दुर्वारत्वात्तद्वैयर्थ्यं स्पष्टमेव। तस्मादु-
रपदार्थप्राधान्यं भाष्योक्तमनुसृत्य आरोपितत्वमेव नञर्थ इति युक्तम्। विस्तरस्तु
ढमनोरमायां शब्दरत्ने मञ्जूषायां च ज्ञेयः। प्राचीनास्तु 'तत्सादृश्यमभावश्च तद-
त्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः'। इति पठित्वा अब्राह्मणः;
पापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोअश्वेभ्यः, अधर्म इत्यु-
जह्रुः। तत्र सादृश्यादिकं प्रकरणादिगम्यमित्याहुः। तस्मान्नुडचि। तच्छब्देन

ह स जहिजोडः। एवं जहि स्तम्बमिति य आह स जहिस्तम्बः। नञ्। इह
'लोपो नञः' इत्यत्र विशेषणार्थो ञकारः। तत्फलं च नैकधेत्यत्रालोपः। 'अव्ययं
प्रकुनिपातानाम्' इत्यव्ययपूर्वपदप्रकृतिस्वरार्थं ञकारोच्चारणमित्यन्ये। सुपा सह
मस्यत इति। उत्तरपदार्थप्रधानोऽयं समासः। तथा हि आरोपितत्वं नञा
ात्यते। तथा च अब्राह्मणशब्दाद् 'आरोपितो ब्राह्मणः' इति बोधे अर्थाद् 'ब्राह्मण-
ान्नः' इत्यर्थः पर्यवस्यति। अतएवानुपसर्जनत्वादतस्मिन् अस इत्यादौ सर्वनामकार्यं
ध्यति। तत्पुरुषस्यौत्सर्गिकमुत्तरपदार्थप्राधान्यमप्येवं सति निर्बाधम्। 'एतत्तदोः—'
ति सूत्रे अनञ्समासग्रहणं चेह लिङ्गमित्यादि मनोरमायामनुसन्धेयम्। नलोपो
ञः। 'नञोऽश्' इति वक्तव्ये नलोपवचनं साकच्कार्थम्। तेन नञोऽकचि अक-
ब्राह्मणः, अकनश्व इत्यादि सिद्धमित्याहुः। उत्तरपद इति। 'अलुगुत्तरपदे' इत्य-
धिकारादिति भावः। उत्तरपदे किम्, घटो नास्ति, पटो नास्ति। नन्वेवमपि
'त्रैणार्थः' इत्यत्र नलोपः स्यादिति चेत्। अत्राहुः—उत्तरपदाक्षिप्तपूर्वपदेन। नञं
ाशेष्य 'पूर्वपदभूतस्य नञः', इति व्याख्यानान्न भवति। 'स्त्रीपुंसाभ्याम्—' इति
विहितस्य नञ्प्रत्ययस्यापूर्वपदत्वात्। अतएव चात्र 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव
ग्रहणम्' इति परिभाषा नोपतिष्ठते। न च प्रत्ययग्रहणे तदन्तग्रहणान्नञ्प्रत्ययान्तस्य

(६-३-७४) लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात्। अनश्वः। ... भावेऽव्ययीभावेन सहायं विकल्प्यते। 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' वा... 'अद्रुतायामसंहितम्' (वा ११६७) इति च भाष्यवार्तिकप्रयोगात्। तेन ... पलब्धिः, अविवादः, अविघ्नम् इत्यादि सिद्धम्। 'नञो नलोपस्तिङि ...

---

पूर्वसूत्रावगतो लुप्तनकारो नञ् परामृश्यते। उत्तरपद इत्यनुवृत्तम् अचीत्यनेन वि... तदादिविधिः। 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वात्' इतिपरिभाषया ... षष्ठीं प्रकल्पयति। तदाह-लुप्तनकारादिति। अनश्व इति। समासे ... नकारस्य लोपे तत्परिशिष्टाकारस्य नुट्, टकार इत्, उकार उच्चारणार्थः। टित्वाद... इति भावः। नुक् तु न कृतः। ङमुट्प्रसङ्गात्। ननु 'उत्तरे कर्मण्यविघ्नमस्तु' ... विघ्नानामभाव इत्यर्थे नञ्तत्पुरुषे सति परवल्लिङ्गत्वे अविघ्न इति स्यात्। न... भावे अव्ययीभावेन तत्सिद्धिरिति वाच्यम्, अव्ययीभावस्य निर्मक्षिकमित्यादौ ... शतया परत्वात्तत्पुरुषस्यैव प्रसङ्गादित्यत आह-अर्थाभाव इति। रक्षेति। ... र्त्तिकभाष्ये इदं वाक्यम्। रक्षा च ऊहश्च आगमश्च लघु च असंदेहश्च इति ... 'परवल्लिङ्गम्-' इति पुंस्त्वम्। अत्र संदेहाभाव इत्यर्थे असंदेहशब्दस्य असं... प्रयोगात् तत्पुरुषो विज्ञायते। अव्ययीभावे रक्षोहागमलध्वसंदेहमिति स्यात्। ... यामसंहितमिति। 'परः सन्निकर्षः संहिता' इति सूत्रे पठितमिदं वार्तिकम्। ... यां वृत्तौ संहिताभाव इत्यर्थः। अत्र अव्ययीभावे सति असंहितमिति प्रयोगाद... यीभावेऽपि अर्थाभावो नञा गम्यो भवतीति विज्ञायते। अन्यथा तत्पुरुषे स... ल्लिङ्गत्वादसंहितेति स्यात्। ततश्च नञा गम्ये अभावे तत्पुरुषाव्ययीभावयोर्वि... स्थितम्। तेनेति। अनुपलब्धिरित्यत्र अविवाद इत्यत्र च तत्पुरुषः, अविघ्न... अव्ययीभावश्च सिध्यतीत्यर्थः। शब्देन्दुशेखरे तु अन्यथा प्रपञ्चितम्। न... पस्तिङि क्षेप इति। 'न लोपो नञः' इति सूत्रस्थवार्तिकमिदम्। नञो ...

---

पूर्वपदत्वं संभवत्येवेति 'प्रत्ययाप्रत्यययोः-' इत्येतदुपतिष्ठत एवेति वाच्यम्। ... हृल्लेख-' इति सूत्रे अण्ग्रहणात्पृथग् लेखग्रहणेन 'उत्तरपदाधिकारे प्रत्यय... न्तग्रहणं नास्ति' इति ज्ञापनात्। यद्वा 'अमूर्धमस्तकात्-' 'विभक्तावप्रथमाया... दिज्ञापकाद् 'नलोपो नञः' इत्यत्राव्ययमेव नञ् गृह्यते, न तु प्रत्यय इति। ... न्नुडचि। 'ङः सि धुट्' इत्यत्रेवाचीति सप्तम्याः षष्ठी प्रकल्प्यत इत्याह-... रिति। अचा उत्तरपदविशेषणाद् 'यस्मिन्विधिः-' इति तदादिविधिर्लभ्य... भावः। अनश्व इति। नुटः परादित्वेन अपदान्तत्वाद् 'ङमो ह्रस्वात्-' इति ... भवति। ननु विघ्नानामभावोऽविघ्नमित्यत्रापि परत्वात्तत्पुरुषः स्यादव्ययीभाव... क्षिकादौ सावकाशत्वाद्। अन्यथा अनुपलब्धिः, अविवाद इति न सिद्ध... शङ्क्याह-अर्थाभावेऽव्ययीभावेन सहेत्यादि। अविघ्नमिति। यद्यपि ... विघ्ना यस्मिन्निति बहुव्रीहिणा अविघ्नं कर्मेत्यादिप्रयोगः सिद्धयति, ... 'उत्तरे कर्मण्यविघ्नमस्तु' इत्यादिप्रयोगा अव्ययीभावं विना स्वरसतो न सिद्ध... भावः। नञो नलोप इति। तिङन्तेन समासाभावादप्राप्ते वचनम्। अप...

[वा ३९८४) । अपचसि त्वं जाल्म । नैकधा इत्यादौ तु नशब्देन सह 'सुपा' [इ]ति सू ६४९ ) इति समासः । ७५९ नभ्राण्नपान्नवेदानासत्यानमुचिन-[कु]लनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । (६-३-७५) पाद् इति शत्रन्तः । वेदा [इ]त्यसुन्नन्तः । न सत्या असत्याः । न असत्या नासत्याः । न मुञ्चतीति [न]मुचिः । न कुलमस्य । न खमस्य । न स्त्री पुमान् । स्त्रीपुंसयोः [न]सकभावो निपातनात् । न क्षरतीति नक्षत्रम् । क्षीयतेः क्षरतेर्वा क्षत्रमिति [नि]पात्यते । न क्रामतीति नक्रः । 'क्रमेर्डः' । न अकमस्मिन्निति नाकः । ७६० [न]गोऽप्राणिष्वन्यतरस्याम् । ( ६-३-७७ ) नग इत्यत्र नञ्प्रकृत्या वा । [न]गाः—अगाः पर्वताः । अप्राणिषु इति किम्—अगो वृषलः शीतेन । 'नित्यं [क्री]डा-' ( सू ७११ ) इत्यतो नित्यम् इत्यनुवर्तमाने-७६१ कुगतिप्रादयः । [(]२-२-१८ ) एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः । ['ग]तिश्च' ( सू २३ ) इत्यनुवर्तमाने । ७६२ ऊर्यादिच्विडाचश्च । (१-[४]-६१ ) एते क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटा-

---

[ल]ोपः स्यात् तिङि परे निन्दायामिति वक्तव्यमित्यर्थः । अपचसि त्वं जाल्मेति । [कु]त्सितं पचसीत्यर्थः । अत्र अ इति भिन्नं पदम्, तिङन्तेन समासाभावात् । वार्तिकमिदं [भा]सङ्ग्राद्दुपन्यस्तम् । नञ्समानार्थकेन अ इत्यव्ययेनापि सिद्धमिदमिति वार्तिकं विफल-[मे]व । केचित्तु अस्मादेव वार्तिकादव्ययेषु अ इत्यस्य पाठः अप्रामाणिक इत्याहुः । ननु [नै]कधेत्यत्रापि नञ्समासे 'न लोपो नञः' इति नकारस्य लोपे 'तस्मान्नुडचि' इति नुटि [अ]नेकधेत्येव स्यादित्यत आह—नैकधेत्यादौ त्विति । एतदर्थमेव 'नञ्' इति सूत्रे ['न] लोपो नञः' इति सूत्रे च अकारानुबन्धग्रहणमिति भावः । नभ्राण्नपात् । सुग-[म]म् । अनुवर्तमान इति । समासविधयो वक्ष्यन्त इति शेषः । कुगतिप्रादयः । [स]मस्यन्त इति । स तत्पुरुष इत्यपि ज्ञेयम् । कुत्सितः पुरुष इति । नित्यसमा-[स]त्वादस्वपदविग्रहः । कुत्सितार्थकस्य कु इत्यव्ययस्यैवात्र ग्रहणम्, न तु पृथ्वीपर्यायस्य, [ग]त्यादिसाहचर्यात् । गतिश्चेत्यनुवर्तमान इति । क्रियायोग इति चेति बोध्यम् । [ऊ]र्यादिच्विडाचश्च । च्विडाचौ प्रत्ययौ । ऊरीकृत्येति । ऊरीत्यव्ययमङ्गीकारे, तस्य [कृ]त्वेत्यनेन गतिसमासः । समासेऽनञ्पूर्वे क्त्वो ल्यप् । शुक्लीकृत्येति । अशुक्लं शुक्लं [कृ]त्वेत्यर्थः । 'कृभ्वस्तियोगे-' इत्यभूततद्भावे च्विः । गतिसमासे सति क्त्वो ल्यप्. वेरपृ-

---

[कु]त्सितं पचसीत्यर्थः । नशब्देनेति । नञा समासे त्वनेकधेत्येव स्यादिति भावः । [न]भ्राट् । सत्सु साधवः सत्याः । 'तत्र साधुः' इति यत् । न सत्या असत्याः । असत्या नासत्याः । इह बहुवचनमविवक्षितम् । तेन 'नासत्यावश्विनौ दस्रौ' इति [सि]द्धम् । नमुचिरिति । 'सर्वधातुभ्य इन्' । 'इगुपधात्कित्' इति कित्त्वान्न गुणः । [क्ष]रतेः क्षीयतेर्वेति । 'क्षर संचलने' भ्वादिः । 'क्षि निवासगत्योः' तुदादिः । [कुग]ति । कुशब्दोऽत्राव्ययं गृह्यते, न तु पृथिवीवाचकः, गत्यादिसाहचर्यात् । [ऊ]र्यादिच्विडाचश्च । 'उपसर्गाः क्रियायोगे' इत्यततोनुवर्तनादाह—क्रियायोग [इ]ति । क्रियायोग ... कृभ्वस्तियोगे विहितो ... गतिसंज्ञा ...

कृत्य । 'कारिकाशब्दस्योपसंख्यानम्' (वा ११३२) कारिका क्रिया । कृत्य । ७६३ अनुकरणं चानितिपरम् । (१-४-६२) खाट्कृत्य । परं किम्-खाडिति कृत्वा निरष्ठीवत् । ७६४ आदरानादरयोः

---

स्येति वलोपः । 'अस्य च्वौ' इति ईत्वम् । पटपटाकृत्येति । पटपटा कृत्वेत्यर्थः । 'अव्यक्तानुकरणाद्‍द्व्यजवरार्धादनितौ डाच्' इति पटच्छब्दाड्डाचि टिलोपः । 'नित्यमाम्रेडिते डाचि' इति तकारपकारयोः पकार एकादशः । क्त्वो ल्यप् । कारिकाशब्दस्योपसंख्यानमिति । गतिसंज्ञाया इति शेषः । काशब्दं व्याचष्टे—कारिका क्रियेति । 'स्त्रियां क्तिन्' इत्यधिकारे धात्व ण्वुल् । कारिकाकृत्येति । क्रियां कृत्वेत्यर्थः । द्वितीयान्तस्य गतिसमासे सुब्लुक् कारिकाशब्दोऽत्र न कर्त्रीवाची, न श्लोकवाची च, व्याख्यानात् । रणं चानितिपरम् । अनुकरणं गतिसंज्ञं स्याद् इतिपरं वर्जयित्वेत्यर्थः । स्येति । खाडिति शब्दं कृत्वेत्यर्थः । गतिसमासे क्त्वो ल्यप् । खाडिति न चात्र इतिशब्देन व्यवहितत्वे क्रियायोगाभावादेव गति संज्ञा न भविष्यति, निितिपरग्रहणेनेति वाच्यम्, यथाकथंचित्क्रियायोगसत्त्वात् । 'ते प्राग्धातोः' इति ते गत्युपसर्गा धातोः प्रागेव प्रयोज्याः, न तु परत इति प्रयोगनियमपरमेवेति आदरानादरयोः सदसती । सदिति असदिति च अव्यये आदरानादरयोः

---

तेनेह न-ऊरीपक्त्वा । माधवादिग्रन्थे तु 'आविःप्रादुःशब्दौ मुक्त्वा अन्येषां योगे गति संज्ञा' इति स्थितम् । तथैवोदाहरति—ऊरीकृत्येति । एतच्च नुसारेणोक्तम् । वस्तुतस्तु ऊरीभूयेति भाष्योदाहरणाद्दिङ्मात्रमुदाहरति, ऊरीकृत्ये रितुयुक्तम् । संज्ञाफलं समासस्तत्फलं च ल्यबिति बोध्यम् । ऊरी उररी एतावङ्ग आविःशब्दस्य तु साक्षात्प्रभृतिषु पाठात् कृञो योगे गतिसंज्ञाविकल्पः, त्वनेन नित्यमिति बोध्यम् । कथं तर्हि 'वारुणीमदविशङ्कमथाविश्चक्षुषो भवद् रागः' इति माघ इति चेत् । अत्राहुः—'ते प्राग्धातोः' इतिसूत्रस्य प्रयोगनियम पक्षे प्रकृते अनुपपत्तावपि संज्ञानियमार्थत्वपक्षे दोषलेशोऽपि नास्तीति ।—शुक्ल 'कृभ्वस्तियोगे संपद्य कर्तरि च्विः' । 'अस्य च्वौ' इतीकारः । पटपटाकृ 'डाचि बहुलं द्वे भवतः' इति पटच्छब्दस्य द्वित्वम् । 'अव्यक्तानुकरणाद्- डाचि टिलोपः । 'नित्यमाम्रेडिते डाचि' इति तकारपकारयोः पकार एका निपातसंज्ञायाः समावेशार्थं सूत्रे चकारः । तेन ऊरीकृतमित्यत्र 'गतिरनन्तरः' पूर्वपदप्रकृतिस्वरे क्रियमाणे निपातप्रयुक्तमाद्युदात्तत्वं भवति । कारिकेति । 'पर्यायार्हर्ण-' इति ण्वुच् । तदाह—क्रियेति । 'क्रियायोगे, इत्यनेन शब्दस्य विशेषणात् श्लोकवाची कारिकाशब्दोऽत्र न गृह्यत इति भावः । शब्दस्यात्र मर्यादास्थितिरर्थः । यत्न इत्यन्ये । अनुकरणं चा । 'ते प्राग् इत्यस्य संज्ञानियमपक्षेऽनितीति व्यर्थमिति मत्वा पृच्छति । अनितिपरं किम् इतरस्तु प्रयोगनियमपक्षे खाडित्यनुकरणस्येतिशब्दे परे गतिसंज्ञानिवारणाय परमित्यावश्यकमिति । प्रत्युदाहरति—खाडिति कृत्वेति । कृत्वां संज्ञायाम्

(१-४-६३) सत्कृत्य । असत्कृत्य । ७६५ भूषणेऽलम् । (१-४-६४) अलंकृत्य । भूषणे किम्-अलं कृत्वौदनं गतः । पर्याप्तिमित्यर्थः । 'अनुकरणम्-' (सू ७६३) इत्यादित्रिसूत्री स्वभावात्कृञ्विषया । ७६६ अन्तरपरिग्रहे । (१-४-६५) अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम्-अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः । ७६७ कणेमनसी श्रद्धाप्रतीघाते । (१-४-६६) कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्रतिरूपको निपातः अभिलाषातिशये वर्तते । मनश्शब्दोऽप्यत्रैव । ७६८ पुरो-

---

विद्यमाने गतिसंज्ञकेस्त इत्यर्थः। सत्कृत्येति । आदरं कृत्वेत्यर्थः । असत्कृत्येति । अनादरं कृत्वेत्यर्थः । गतिसमासे क्त्वो ल्यप् । भूषणेऽलम् । भूषणे विद्यमानम् अलमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । अलंकृत्येति । कटकादिधारणेन परिष्कारं कृत्वेत्यर्थः । कृञ्विषयेति । कृञ्योग एव भवतीत्यर्थः । वस्तुतस्तु संकोचे प्रमाणाभावाद् कृत्यन्तरयोगेऽपि त्रिसूत्रीप्रवृत्तिर्युक्ता । अत एव अलं भुक्त्वा ओदनं गत इति वृत्तिकृता प्रत्युदाहृतम् । अन्तरपरिग्रहे । अपरिग्रहे वर्तमानम् अन्तरित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । हतं परिगृह्येति । हत्वा गमनं हतम् अपरिगृह्य परिगृह्य वा भवति । तत्र आद्यमुदाहरणम्, द्वितीयं प्रत्युदाहरणमित्यर्थः । अपरिग्रह इति प्रयोगोपाधिरेव, न तु वाच्यकोटिप्रविष्टम् । कणेमनसी श्रद्धाप्रतीघाते । कणे शब्दो मनश्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञकौ स्तः । अत्यन्ताभिलाषः श्रद्धा, तस्या निवृत्तिः प्रतीघातः । कणेहत्येति । गतिसमासे क्त्वो ल्यप् । मनोहत्येति । पयः पिबतीत्यनुषज्यते । ननु समासे कृते कणे इति सप्तम्याः कथं न लुगित्यत आह--कणे शब्द इति । ननु श्रद्धाप्रतीघातस्य कथमिहावगतिः, श्रद्धावाचकशब्दाभावात् । मनसो घाते सति कथं वा पयःपानमित्यत आह—अभिलाषातिशय इति । कणेशब्द इत्यनुषज्यते । 'परावरयोगे च' इति सूत्रेण क्त्वा । अभिलाषनिवृत्तिपर्यन्तं पयः पिबतीत्यर्थः। श्रद्धाप्रतीघाते । किम् ? कणे हत्वा गतः । सूक्ष्मस्तण्डुलावयवः कणः, तद्विषये हत्वा गत इत्यर्थः । मनो हत्वा गतः, विषपानादौ मनःप्रवृत्तिं प्रतिवध्य गत

---

योगो नैव स्यात्, किंतु 'इति खाट्कृत्य' इत्येव स्यादिति भावः । न च 'इति खाट्कृत्य' इति न भवति, इतेः परस्यानुकरणस्य गतिसंज्ञानिषेधादिति वाच्यम्, 'अनितिपरम्' इत्यत्र इतिः परो यस्मात्तद् इतिपरम्, न इतिपरमनितिपरमिति बहुव्रीहिघटितनञ्तत्पुरुषाश्रयणात् । स्यादेतत्—अनुकरणस्येतिशब्दपरत्वे क्रियायोगाभावाद्गतिसंज्ञा नास्तीति खाडिति कृत्वेति रूपं निर्बाधम्, किमनेनानितिपरग्रहणेनेति चेत्, अत्राहुः—इतिकृत्वेति समुदाय एवायं कृत्वेत्यर्थे वर्तते । तथा च इतिशब्दः क्रियाविशेषकः, इति तद्घटितसमुदायस्य क्रियावाचकत्वादस्त्येव क्रियायोग इति । हतं परिगृह्येति । हत्वा गमनं द्विधा—हतं त्यक्त्वा परिगृह्य चेति । आद्यमुदाहरणम्, द्वितीयं तु प्रत्युदाहरणम् । अपरिग्रह इति च प्रयोगोपाधिः, न तु वाच्यकोटिनिविष्टमिति भावः । कणेहत्येति । अत्यन्तमभिलष्य तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः । तथा च श्रद्धाया अपगमः प्रतिघातो गम्यते । प्रत्युदाहरणं तु कणे हत्वा गतः । सूक्ष्म-

ऽव्ययम् । (१-४-६७) पुरस्कृत्य । ७६९ अस्तं च । (१-४-६८)
मिति मान्तमव्ययं गतिसंज्ञं स्यात् । अस्तंगत्य । ७७० अच्छ गत्यर्थव
(१-४-६९) अव्ययम् इत्येव । अच्छगत्य । अच्छोद्य । अभिमुखं
उक्त्वा चेत्यर्थः । अव्ययं किम्-जलमच्छं गच्छति । ७७१ अदोऽनु
(१-४-७०) अदःकृत्य अदःकृतम् । परं प्रत्युपदेशे प्रत्युदाहरण
कृत्वा अदः कुरु । ७७२ तिरोऽन्तर्धौ । (१-४-७१) । तिरोभूय ।
विभाषा कृञि । (१-४-७२) । तिरस्कृत्य, तिरःकृत्य, तिरः

---

इत्यर्थः । पुरोऽव्ययम् । पुर इत्यव्ययं गतिसंज्ञकं स्यात् । पुरस्कृत
गतिसमासे क्त्वो ल्यप् । अव्ययं किम् ? पुरम्, पुरौ, पुरः कृत्वा गतः
च । पूर्वसूत्रादव्ययमित्यनुवर्तत इत्याह—मान्तमव्ययमिति ।
स्येति । तिरोधानं प्राप्येत्यर्थः । अव्ययं किम् ? काण्डम् अस्तं कृत्वा ।
कृत्वेत्यर्थः । अच्छगत्यर्थवदेषु । गत्यर्थधातुषु वदधातौ च प्रयु
अच्छेत्यव्ययं गतिसंज्ञकं स्यात् । अच्छगत्येति । गतिसमासे क्त्वो ल्यप् ।
द्येति । वदधातोः क्त्वा । गतिसमासे क्त्वो ल्यप् । अच्छेत्यव्ययमि
तद्यथा—वहिरच्छंतीति । तदाह—अभिमुखमिति । जलमच्छं गच्छ
अत्राच्छशब्दस्य नाव्ययत्वम्, न गतिसंज्ञा, नापि 'प्राग्रीश्वरान्निपाताः' इ
निपातसंज्ञा । निपातत्वे सति हि अव्ययत्वाद् विभक्तिलुक् स्यादिति भावः
ऽनुपदेशे । अदश्शब्दः अनुपदेशे गतिसंज्ञः स्यात् । अदःकृत्येति ।
मासे क्त्वो ल्यप् । अमुं यज्ञं कृत्वेत्यर्थे तु सुब्लुक् च । अदःकृतमिति ।
नन्तरः' इति स्वरः फलम् । यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणम्
प्रतीति । अदः कुर्वित्यादावित्यर्थः । तिरोऽन्तर्धौ । अन्तर्धिः व्यवधा
तिरस् इत्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । तिरोभूयेति । गतिसमासे क्त्वो
व्यवहितो भूत्वेत्यर्थः । विभाषा कृञि । कृञि प्रयुज्यमाने तिरस् इत्यव्य
संज्ञं वा स्यादित्यर्थः । तिरस्कृत्य तिरःकृत्येति । गतिसंज्ञापक्षे गतिसमा
ल्यप् । 'तिरसोऽन्यतरस्याम्' इति सत्वविकल्पः । तिरः कृत्वेति । गति
पक्षे सत्वमपि न भवति, तद्विधौ गतिग्रहणानुवृत्तेरित्याहुः । केचित्तु तिरसो

---

स्तण्डुलावयवः कणः, तस्मिन् हत्वेत्यर्थः । पुरस्कृत्येति । 'पूर्वाधरावराणाम्-
सिप्रत्ययान्तोऽयमव्ययम् । 'नमस्पुरसोः—' इति विसर्गस्य सः । 'अमुं पुरः
इत्यत्र तु स्थितमित्यध्याहारेण दृशि प्रत्यगतित्वात्सत्वाभावः । अव्ययं किम्,
पुरः कृत्वा गतः । अस्तं च । अव्ययमिति किम्, अस्तं कृत्वा काण्डं गतः
मित्यर्थः । अच्छमिति । सत्यां हि गतिसंज्ञायां निपातसंज्ञावत्त्वेनाव्ययत्व
स्यादिति भावः । अदःकृत्येति । यदा स्वयमेव पर्यालोचयति 'अदः कृतम्
तदेदमुदाहरणम् । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरेणाद्युदा
प्रत्युदाहरणमिति । अदःकृत्वा अदःकुर्वित्यादीत्यर्थः । तिरोऽन्तर्धौ ।
किम्, तिरोभूत्वा स्थितः । पार्श्वतो भूत्वेत्यर्थः । विभाषा कृञि ।

७७४ उपाजेऽन्वाजे। (१-४-७३)। एतौ कृञि वा गतिसंज्ञौ स्तः। उपाजेकृत्य, उपाजे कृत्वा। अन्वाजकृत्य, अन्वाजे कृत्वा। दुर्बलस्य बलमाधायेत्यर्थः। ७७५ साक्षात्प्रभृतीनि च। (१-४-७४) कृञि वा गतिसंज्ञानि स्युः। 'च्व्यर्थ इति वाच्यम्' (वा ११४२)। साक्षात्कृत्य, साक्षात् कृत्वा। लवणंकृत्य, लवणं कृत्वा। मान्तत्वं निपातनात्। ७७६ अनत्याधान उरसिमनसी। (१-४-७५)। उरसिकृत्य, उरसि कृत्वा। अभ्युपगम्येत्यर्थः। मनसिकृत्य, मनसि कृत्वा। निश्चित्येत्यर्थः। अत्याधानमुपश्लेषणम्, तत्र न। उरसि कृत्वा पाणिं शेते। ७७७ मध्ये पदे निवचने च। (१—४—७६) एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने। मध्येकृत्य, मध्ये कृत्वा। पदेकृत्य, पदे कृत्वा।

---

रिभवे प्रयोगदर्शनात् सत्वविधौ गतिग्रहणं नानुवर्तयन्ति। उपाजेऽन्वाजे। उपाजेकृत्येति। गतिसंज्ञापक्षे गतिसमासे क्त्वो ल्यप्। अन्वाजेकृत्येत्यपि तथैव। उपाजे, अन्वाजे इत्यव्यये दुर्बलस्य बलाधाने वर्तेते। तदाह—दुर्बलस्येति। साक्षात्प्रभृतीनि च। शेषपूरणेन सूत्रं व्याचष्टे—कृञि वेति। साक्षादित्यव्ययम्। च्व्यर्थ इति। अभूततद्भावे गम्ये सतीति वक्तव्यमित्यर्थः। साक्षात्कृत्येति। अप्रत्यक्षं प्रत्यक्षं कृत्वेत्यर्थः। गतित्वपक्षे क्त्वो ल्यप्। तत्र सुब्लुकमाशङ्क्याह—मान्तत्वमिति। लवणम्, उष्णम्, शीतम्, उदकम्, आर्द्रम् इति पञ्चानां साक्षात्प्रभृतिगणे मान्तत्वं निपात्यत इत्यर्थः। अनत्याधाने। उरसि मनसि इति विभक्तिप्रतिरूपके अव्यये गतिसंज्ञे वा स्तः अनत्याधाने। उरसिकृत्येति। गतित्वपक्षे क्त्वो ल्यप्। इह अत्याधानं न गम्यत इत्याह—अभ्युपगम्येत्यर्थ इति। मनसिकृत्येति। गतित्वपक्षे क्त्वो ल्यप्। अत्रापि नात्याधानं गम्यत इत्याह—निश्चित्येत्यर्थ इति। अत्याधानशब्दं विवृण्वन् तस्य प्रयोजनमाह—अत्याधानमुपश्लेषणमिति। संयोग इत्यर्थः। उरसि कृत्वेति। उरसि पाणिं निधाय शेत इत्यर्थः। अत्र पाणिसंश्लेषणावगमान्न गतित्वमिति भावः। मध्ये पदे। गतित्वे तदभावे च त्रयाणामेदन्तत्वं निपात्यते। मध्येकृत्येति। गतिसमासे क्त्वो ल्यप्। मध्यं कृत्वेत्यर्थः। पदेकृत्येति। गतिसमासे

---

गतित्वाभावपक्षे 'तिरसोऽन्यतरस्याम्' इति सत्वमपि न भवति। तद्विधौ गतिग्रहणानुवृत्तेः। माधवस्तु—पराभवे तिरस्कार इति प्रयोगदर्शनात्सत्वविधौ गतिग्रहणानुवृत्ति नेच्छन्तीत्याह—उपाजेऽन्वाजे। एतौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य साहाय्याधाने वर्तेते, तदाह—दुर्बलस्येति। साक्षात्प्रभृ। साक्षात्। मिथ्या। अमा। ...। लवणम्। उष्णम्। शीतम्। उदकम्। आर्द्रम्। गतिसंज्ञासंनियोगेन लवणादीनां पञ्चानां मकारान्तत्वं निपात्यते। प्रादुस्। नमस्। आविस्। इत्यादि। आकृतिगणोऽयम्। साक्षात्कृत्येति। असाक्षाद्भूतं यथा साक्षाद् भवति तथा कृत्वेत्यर्थः। ...न्त्वेषु तु पूर्वविप्रतिषेधाद् 'ऊर्यादिच्विडाचश्च' इति नित्यैव संज्ञा। तेन लवणीकृत्यत्र मान्तत्वं न भवति। तद्धि पाक्षिकम्, गतिसंज्ञासंनियोगेनेह गणे निपातनात्। ...यकृता लवणशब्दस्य लवणीशब्दस्य वा विकल्पेन लवणशब्द आदिश्यते तस्य संज्ञाविकल्प इत्युक्तम्। उभयथापि त्रैरूप्यं निर्बाधम्। अनत्या। उरसिमनसी-

निवचनेकृत्य, निवचने कृत्वा। वाचं नियम्येत्यर्थः। ७७८ नित्यं हस्ते पा पयमने (१-४-७७) कृञि। उपयमनं विवाहः। स्वीकारमात्रमित्यर्थे हस्तेकृत्य। पाणौकृत्य। ७७९ प्राध्वं बन्धने। (१-४-७८) प्राध्वम् इष्ट यम्। प्राध्वंकृत्य। बन्धनेनानुकूल्यं कृत्वेत्यर्थः। प्रार्थनादिना त्वानुकूल्ये प्राध्वं कृत्वा। ७८० जीविकोपनिषदावौपम्ये। (१-४-७९) जीविका मिव कृत्वा जीविकाकृत्य। उपनिषदमिव कृत्वा उपनिषत्कृत्य। औपम्ये किं जीविकां कृत्वा। प्रादिग्रहणमगत्यर्थम्। सुपुरुषः। अत्र वार्तिकानि। दं

क्त्वो ल्यप्। पदं कृत्वेत्यर्थः। निवचनेकृत्येति। वचनाभावं कृत्वेत्यर्थः। वाहि वाचं नियम्येत्यर्थ इति। वचनस्य अभावो निवचनम्। अर्थाभावे अव्य इति भावः। नित्यं हस्ते। शेषपूरणेन सूत्रं व्याचष्टे—कृञीति। हस्ते पाणाविति च शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमन इति यावत्। हाप पाणौकृत्येति। कन्यां स्वीकर्तुं पाणिं गृहीत्वेत्यर्थः। एदन्तत्वमौदन्तत्वं च निपात्यते। उपयमने किम्? हस्ते कृत्वा सुवर्णं गतः। अन्यदीयमिति बुद्धया परावृत्त इत्यर्थः। प्राध्वं बन्धने। प्राध्वमिति न द्वितीयान्तमित्याह—अव्य त्यव्ययमिति। बन्धने गम्ये प्राध्वमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः। या कृत्येति। गतिसमासे क्त्वो ल्यप्। अत्र प्राध्वमिति मान्तमव्ययं बन्धनेति कूल्ये वर्तते, तदाह—बन्धनेनेति। बन्धनग्रहणस्य प्रयोजनमाह—प्रार्थ नेति। जीविकोपनिष। उपमैव औपम्यम्, तस्मिन्विषये जीविकाशब्दः, उन च्छब्दश्च कृञा योगे गतिसंज्ञौ स्तः। जीविकामिवेति। अशनपानादिर्थ पायो जीविका। तामिव अवश्यं कृत्वेत्यर्थः। जीविकाकृत्येति। गतिसमासेन ल्यप्। उपनिषदमिव कृत्वेति। उपनिषद् वेदान्तभागः, तामिव रहसि स्व कृत्वेत्यर्थः। उपनिषत्कृत्येति। गतिसमासे क्त्वो ल्यप्। उभयत्रापि कौ तदेवं 'कुगतिप्रादयः' इत्यत्रत्यगतिसमासाः प्रपञ्चिताः। ननु गतिग्रहणेनैव सि ग्रहणं व्यर्थमित्यत आह—प्रादिग्रहणमगत्यर्थमिति। सुपुरुष इति। क्रियायोगाभावादगतित्वेऽपि समासः। सोः पूजार्थकत्वेऽपि धातुवाच्यक्रियायो गतित्वम्। भाष्ये तु 'कुगतिप्रादयः' इति सूत्रमपनीय तत्स्थाने 'क्वाङ्स्व समस्यन्त इति वक्तव्यम्' इत्युक्त्वा 'कुब्राह्मणः, आकडारः, सुब्राह्मणः अति

विभक्तिप्रतिरूपकौ। मध्ये पदे। 'विभाषा कृञि' इति वर्तते। चकाराद् धाने' इति च। एषामनत्याधानरूपार्थविशेषे एदन्तत्वमविशेषेण निपात्यते, संज्ञासंनियोगेन। अनत्याधाने किम्, पदे कृत्वा शिरो नमति। वाचं नि मिवचनं हि वचनाभावः। अर्थाभावेऽव्ययीभावः। नित्यं हस्ते। उपय एवंतयोरेदन्तमौदन्तत्वं च निपात्यते। हस्तेकृत्येति। परिणीयेत्यर्थः। किम्, हस्ते कृत्वा कार्षापणं गतः। स्वीकारमात्रमिति पक्षे तु नालमिति बुद्धया दानार्थं गत इति योज्यम्। एवं तावद् गतिसमासमुदाहृत्य प्रादिसमासान् भते। प्रादिग्रहणमिति। सुपुरुष इति। क्रियायोगाभावाद् गतित्व

[ग]ताद्यर्थे प्रथमया' (वा १३३५) प्रगत आचार्यः प्राचार्यः । 'अत्यादयः क्रान्ता-[द्य]र्थे द्वितीयया' (वा १३३६) । अतिक्रान्तो मालामतिमालः । 'अवादयः [क्रु]ष्टाद्यर्थे तृतीयया' (वा १३३७) अवक्रुष्टः कोकिलया अवकोकिलः । 'पर्या-[दयो] ग्लानाद्यर्थे चतुर्थ्या' (वा १३३८) । परिग्लानोऽध्ययनाय पर्यध्ययनः । [नि]रादयः क्रान्ताद्यर्थे पञ्चम्या' (वा १३३९) निष्क्रान्तः कौशाम्ब्याः निष्कौ-[शा]म्बिः । 'कर्मप्रवचनीयानां प्रतिषेधः' (वा १३३९) वृक्षं प्रति । ७८१ तत्रो-[प]दं सप्तमीस्थम् । (३-१-९२) सप्तम्यन्ते पदे 'कर्मणि–' (सू २९१३)

---

[ब्रा]ह्मणः, दूरीकृत्य' इत्युदाहृतम् । स्वती पूजायाम्, दुर्निन्दायाम्, आङीषदर्थे, [...] पापार्थे इति सौनागव्याकरणवचनम् इति भाष्ये स्पष्टम् । अत्र वार्तिका-[...]ति । 'प्रादयो गताद्यर्थे समस्यन्त इति वक्तव्यम्' इति वार्तिकं पठित्वा तत्र व्यव-[स्था]पकानि पञ्च वार्तिकानि सौनागव्याकरणसिद्धानि भाष्ये यानि पठितानि तानि [...]र्यन्त इत्यर्थः । प्रादय इति । गताद्यर्थे विद्यमानाः प्रादयः समस्यन्त इत्यर्थः । [प्र]गत आचार्य इति । प्रेत्यस्य विवरणं गत इति, गत आचार्य इत्येव अस्वपद-[वि]ग्रहः, नित्यसमासत्वात् । अभिगतो मुखम् अभिमुखः, प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि । [अ]त्यादय इति । क्रान्ताद्यर्थे अत्यादयः समस्यन्त इत्यर्थः । अतिक्रान्तो माला-[मि]ति । अतिशब्दः क्रान्ते वर्तते । क्रान्तो मालामित्यस्वपदविग्रहः । तत्र क्रमुधातो-[रति]क्रमणमर्थः । अतिमाल इति । 'एकविभक्ति च–' इति मालाशब्दस्य उप-[सर्ज]नत्वाद् 'गोस्त्रियोः–' इति ह्रस्वः । अवादय इति । क्रुष्टाद्यर्थे अवादयः समस्यन्त [इत्य]र्थः । अवकोकिल इति । कोकिलया आहूत इत्यर्थः । पर्यादय इति । [ग्ला]नाद्यर्थे पर्यादयः समस्यन्त इत्यर्थः । अध्ययनाय अध्ययनार्थम्, तेन श्रान्त इत्यर्थः । [प]रत्र ग्लाने वर्तते । निरादय इति । [क्रा]न्ताद्यर्थे निरादयः समस्यन्त इत्यर्थः । [नि]ष्कौशाम्बिरिति । अतिमालवद् ह्रस्वः । निरित्यव्ययं निर्गमने वर्तते । कर्म-[प्रव]चनीयानां प्रतिषेध इति । वार्तिकमेतत् । वृक्षं प्रतीति । 'लक्षणेत्थम्–' [इति] कर्मप्रवचनीयत्वान्न प्रादिसमासः । इदं तु वार्तिकं भाष्ये प्रत्याख्यातम् । अथोपपद-[समा]सं वक्ष्यन्नुपपदसंज्ञामाह—तत्रोपपदं सप्तमीस्थम् । अधिकारोऽयम् । [सप्त]मीति तदन्तग्रहणम् । सप्तम्यन्ते पदे वाच्यवाचकभावसंबन्धेन तिष्ठतीति सप्तमी-[स्थ]म् । सप्तम्यन्तवाच्यमिति यावत् । धातोरित्यधिकारसूत्रादुत्तरसूत्रमिदम् । ततश्च [तद]धिकारान्तर्गतेषु 'कर्मण्यण्' इत्यादिसूत्रेषु यत्सप्तम्यन्तमुच्चारितं तदेव इह विवक्षि-[त]म् । एवं च तदुदाहरणे कुम्भं करोति कुम्भकार इत्यत्र सप्तम्यन्तवाच्यं कुम्भादीति

---

[व्य]वस्थया समासप्रसक्तौ व्यवस्थाप्रवचनानि पठचन्ते । प्रादय इति । आदिशब्द [...]यत्र प्रकारे । तेन दुराचारः पुरुषो दुष्पुरुष इत्यादि सिद्धम् । प्रगत आचार्य [इति] । अनेन गतार्थे वृत्तिमस्वपदविग्रहेण नित्यसमासतां च दर्शयति । एवं प्रगतः [पि]तामहः प्रपितामहः । प्रमातामह इत्यादि । अत्यादय इति । आदिपदादभिगतो [मुख]मभिमुखः । उद्गतो वेलामुद्वेलः । प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि सिद्धम् । अतिमाल [इति] । 'गोस्त्रियोः' इति ह्रस्वः । अवादय इति । आदिपदात् परिणद्धो वीरुधा

इत्यादौ वाच्यत्वेन स्थितं कुम्भादि, तद्वाचकं पदमुपपदसंज्ञं स्यात् ।
सत्येव वक्ष्यमाणः प्रत्ययः स्यात् । ७८२ उपपदमतिङ् । (२-२-१९)

---

पर्यवसन्नम् । कुम्भादेश्च उपपदसंज्ञायां प्रयोजनाभावात्तद्वाचकपदेषु विधा
तथा च धातोरित्यधिकारान्तर्गते कर्मणीत्यादिसूत्रे यत्सप्तम्यन्तं कर्मणीत्यादि
यत् कुम्भादि तद्वाचकं पदम् उपपदसंज्ञं स्यादित्यधिकृतं वेदितव्यमित्यर्थः
तदाह—सप्तम्यन्ते पद इत्यादिना । तत्र 'धातोः कर्मणः समानक
इति, 'धातोरेकाचो हलादेः–' इति 'धातोः' इति च क्रमेण त्रयो धात्वधिकारा
प्रत्यासत्त्या तृतीयधात्वधिकारस्थसप्तम्यन्तस्यैव ग्रहणाद् 'धातोरेकाचः–' इ
'च्लि लुङि' इत्यत्र सप्तम्यन्तं न गृह्यते । अन्यथा कर्मणीत्यादाविव लुङ
दित्यादावुपपदे धातोः च्लिरित्यर्थः स्यात् । ननु तत्रेति व्यर्थम्, तृतीय
कारस्य प्रकृतत्वादेव ग्रहणसंभवादित्याशङ्क्याह—तस्मिंश्च सत्येव व
प्रत्ययः स्यादिति । अयमाशयः । तत्रेति भिन्नं वाक्यं क्रमव्यत्यासेन यो
सप्तमीस्थमुपपदसंज्ञं स्यात् । तत्र–तस्मिन्सति इति चाधिकृतं वेदितव्यमिति
चोपपदे सति वक्ष्यमाणः प्रत्ययः स्यादिति तत्रेत्यस्यार्थः फलति । तथा च
इत्यत्र इदं सूत्रमुपस्थितम् । कर्मणीति सप्तम्यन्तं प्रथमान्तत्वेन विपरिणम्यते ।
निर्देशस्तु उपपदसंज्ञाप्रवृत्त्यर्थः । धातोरण् स्यात् कर्तर्यर्थ, कर्मवाचकं तु
पदम् उपपदसंज्ञं प्रत्येतव्यम्, तस्मिन्नुपपदे सत्येव अण् स्यादिति फलति ।
सत्येवाण् स्यादित्यभावे तु कार इत्येवं केवलादपि धातोः कर्तर्यर्थ अण्प्रत्ययः

---

परिवीरुत् । तंनद्धो वर्मणा संवर्मेति । पर्यादय इति । आदिपदादुद्युक्तः
उत्सङ्ग्रामः । अध्ययनायेति । तादर्थ्ये चतुर्थी । गुरुकुलवासादिना परि
यनार्थमित्यर्थः । निरादय इति । आदिपदादुत्क्रान्तः कुलादुत्कुलः । नि
लिभ्यो निरङ्गुलम् । प्रतिषेध इति । 'कुगतिप्रादयः' इति प्रसक्तसमासस्य
प्रतिषेधः, स च 'सुराजा, अतिसखा' इति भाष्यादिप्रयोगात्स्वतिभिन्नानामेव
चनीयानामित्यर्थः । वृक्षं प्रतीति । 'लक्षणेत्थंभूता–' इति कर्मप्रवचनी
सामर्थ्यादिह समासो नेति चेत्, तर्हि अपिस्तुतमित्युदाहार्यम् । 'अपि स्तु
इत्यादौ 'अपिः पदार्थसंभावना–' इत्यस्य सावकाशत्वात्स्वरे विशेषसत्त्वान्न
तत्रोपपदम् । सप्तमीस्थमित्येतद्व्याचष्टे—सप्तम्यन्त इत्यादिना
पदमिति । एतच्चोपपदमित्यन्वर्थसंज्ञाबलाल्लभ्यते । अत एव संज्ञाविधावपि
ग्रहणेन सप्तम्यन्तं गृह्यते । 'धातोः' इति पृथगधिकारबलात् 'संनिहिते धा
इति लभ्यते । तेन 'च्लि लुङि' इत्यस्य लुङन्ते अभूदित्यादावुपपदे धातो
त्यर्थो न भवति । तत्रग्रहणं व्याचष्टे—तस्मिन् सत्येवेति । उपपदे सत्ये
तत्रग्रहणाभावे तु 'धः कर्मणि ष्ट्रन्' इत्यादाविव 'कर्मण्यण्' इत्यादावपि
भिधेये अणित्याद्यर्थः स्यात् । तथा च कर्तर्यण् प्रत्ययो न स्यात् । किं च
निर्देशस्योपपदसंज्ञार्थतया चरितार्थत्वात्केवलादपि धातोः कर्तर्यण्प्रत्ययः
कृते तु तत्रग्रहणे कुम्भाद्युपपदस्य प्रत्ययोत्पत्तौ निमित्तत्वप्रतीत्या केवला

न्तं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भं करोतीति
भकारः । इह कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम् । अतिङ् किम् ।
भवान् भूत् । 'माङि लुङ्' (सू २२१९) इति सप्तमीनिर्देशान्माङुपपदम् ।

णीति सप्तम्यन्तनिर्देशस्तु कुम्भकार इत्यादौ उपपदसंज्ञां प्रापय्य 'उपपदमतिङ्'
नित्यसमाससंपादनेन कुम्भ इत्यस्य कार इत्यस्य च साधुत्वप्रापणार्थतया चरि-
र्थः । तस्मिन्नुपपदे सत्येवाण् स्यादित्युक्ते तु कुम्भाद्युपपदस्य अण्प्रत्ययोत्पत्तौ
मित्तत्वावगमान्न केवलादण्प्रत्ययः, उपपदसंज्ञायाः प्रत्ययविधिसंनियोगशिष्टत्वला-
त् । 'धः कर्मणि ष्ट्रन्' 'भुवो भावे' इत्यादौ सप्तम्यन्तमर्थनिदशपरमेव, व्याख्या-
देति भाष्यकैयटादिषु स्पष्टम् । उपपदमतिङ । सुबन्तमिति । 'सुबामन्त्रिते'
तस्तनुवृत्तेरिति भावः । समर्थेनेति । प्रथमान्तं समर्थग्रहणं तृतीयान्ततया
रिणम्यत इति भावः । अतिङन्तश्चायं समास इति । सूत्रे तिङिति तद-
हणमिति भावः । समासः तिङन्तघटितो न भवतीत्यर्थः । अतिङ् किम् ? कारको
ति । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति व्रजतावुपपदे कृञो ण्वुल्, अका-
: । उपपदं समर्थेनेत्येतावत्युक्ते इहाप्युपपदसमासः स्यात् । अतः अतिङ्ग्रहणम् ।
वं सुबित्यनुवृत्तेः प्रयोजनाभावः इति वाच्यम्, चर्मकार इत्यत्र नलोपार्थकत्वात् ।
दमतिङन्तं समर्थेन समस्यत इति व्याख्याने तु सुबिति नानुवर्तेत । ततश्च
कार इत्यत्र नलोपो न स्यादिति भावः । कुम्भमिति । कुम्भं करोतीत्यर्थे 'कर्म
' इति कर्मीभूतकुम्भवाचकपदे उपपदे कृञ्धातोः कर्तरि अण्प्रत्यये 'अचो
ति' इति वृद्धौ रपरत्वे कारशब्दः । तेन कुम्भशब्दस्य समासे कुम्भकारशब्द
र्थः । ननु कुम्भं करोतीति कथं विग्रहप्रदर्शनम्, अतिङन्तः समास इत्युक्तत्वा-
यत आह—कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यमिति । लोके
गानर्हत्वमलौकिकत्वम् । 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्यरीत्या अलौकिक-
हवाक्य एव समासप्रवृत्तिः । कुम्भं करोतीति तदर्थप्रदर्शनमात्रमिति भावः । कुम्भ
कार इत्यपपाठः, कृद्योगे षष्ठ्या विधानात् । मा भवान् भूदिति । अत्र
ति तिङन्तेन माङः समासनिवृत्त्यर्थमतिङ्ग्रहणमिति भावः । भवानिति पदं तु
सभावसूचनाय मध्ये प्रयुक्तम् । ननु माङः तृतीयधात्वधिकारे सप्तमीनिर्दिष्टत्वं
दृष्टम्, येन तस्य उपपदत्वात् समासः प्रसज्येत इत्यत आह—माङिति । ननु
ङ्ग्रहणं व्यर्थम्, मा भवान् भूदित्यत्र सुपेत्यनुवृत्त्यैव समासनिवृत्तिसंभवादित्यत

व नास्ति । एवं स्थिते 'धः कर्मणि—' इत्यादौ क्वचिदर्थग्रहणं व्याख्यानादित्याहुः ।
तु 'तत्रोपपदम्—' इत्यस्य 'कर्मण्यण्' इत्यादेश्चैकवाक्यतया प्रवृत्तावुपपदसंज्ञाया
षयत्वापत्तेस्तत्रग्रहणं विनापीष्टं सिद्ध्यत्येवेत्याहुः । उपपदमतिङ । समर्थेनेति ।
महान्तं कुम्भं करोतीत्यादौ नातिप्रसङ्गः । अतिङन्तश्चेति । सुबिति तु अनुवर्तेत
अङिन्तमिति नोक्तमिति भावः । कुम्भ असिति । अमिति तु नोक्तम्, कृद्योगे
विधानात् । अतिङ किमिति । 'सुपा' इत्यधिकारात्किमनेनेति प्रश्नः । इतरो
ज्ञापकं ... प्रयुक्तमिति—मा भवानिति । समासाभावसूच-

अतिङ्ग्रहणं ज्ञापयति सुपा इत्येतन्नेहानुवर्तत इति । पूर्वसूत्रेऽपि
पृथक्कृत्यातिङ्ग्रहणं तत्रापकृष्यते । सुपा इति च निवृत्तम् । तथा च
कारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' (प ७६) इति
व्याघ्री । अश्वक्रीती । कच्छपी । ७८३ अमैवाव्ययेन । (२-२-२०)

आह—अतिङ्ग्रहणमिति । एवं च उपपदम् असुबन्तेन समस्यत इति फलि
गतिसमासोऽप्यसुबन्तेनेत्याह—पूर्वसूत्र इति । उत्तरसूत्रात्पूर्वसूत्रे अनु
कर्षः । 'कुप्रादयः' इति 'गति' इति च योगो विभज्यते । कुप्रादयः सुबन्तेन सम
गतिस्तु समर्थेन समस्यते । अतिङन्तश्च समास इति व्याख्येयमिति यावत् स
किमित्यत आह—तथा चेति । गतिकारकोपपदानां कृदन्तैः सह सुबुत्पत्ते
समासो वक्तव्य इति प्राचीनव्याकरणोक्तं सिद्धं भवतीत्यर्थः । यद्यप्युक्तरीत्या गत्यु
योरेव लाभः, तथाप्येकदेशानुमतिद्वारा प्राचीनपरिभाषेयं सिध्यति । अथ परि
फलं दर्शयितुं गतिसमासमुदाहरति—व्याघ्रीति । व्याजिघ्रतीति व्याघ्रः । मा
पूर्वाद् घ्रायातेः 'आतश्चोपसर्गे' इति कः, 'आतो लोप इटि च' इत्याल्लोपः । सम
ध्माधेट्दृशश्शः' इति तु न भवति, 'जिघ्रतः संज्ञायां नेति वाच्यम्' इति नि
आङो घ्रशब्देन गतिसमासः । आघ्रशब्देन वेः गतिसमासः । तत्र यदि घ्र
सुबन्तत्वमपेक्ष्येत तर्हि स्त्रीप्रत्यये उत्पन्ने सुबुत्पत्तिः स्यात्, स्वार्थद्रव्यलिङ्गसंख्या
प्रयुक्तकार्याणां क्रमिकत्वस्य 'कुत्सिते' इति सूत्रस्थभाष्यदर्शितस्य 'ङ्याप्प्रातिप
इत्यत्र अस्माभिः प्रपञ्चितत्वात् । ततश्च सुबुत्पत्तये लिङ्गसंख्याकारकं क्रमेण
मिति प्रथमं लिङ्गसंयोगे सति अदन्तत्वात् टाप् स्यात् । न तु जातिलक्षणङीप्,
मात्रस्य जातिवाचित्वाभावात् । ततश्च घ्राशब्देन सुबन्तेन समासे सति व्याघ्र

नाय भवानिति मध्ये प्रयुक्तम् । पूर्वसूत्र इति । 'कुप्रादयः गतिः' इति योगं
'कुप्रादयः सुबन्ताः सुबन्तेन समस्यन्ते, गतिस्तु सुबन्तोऽतिङन्तेन समस्यत इति
मित्यर्थः । तथा चेति । यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः, तथापि
यिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्यत इति भावः । का
'कर्तृकरणे कृता—' इति सूत्रस्थबहुलग्रहणमुक्तार्थे साधकमित्यपि मनोरमायां
प्रागिति । कृदन्ताच्चरमपदात्सुबुत्पत्तेः पूर्वं समास इत्यर्थः । प्रथमान्त
त्विहानुवर्तत एव । तेन राजदर्शीत्यादौ पूर्वपदे नलोपादि कार्यं सिद्ध्यति । प
फलं दर्शयन् गतिमुदाहरति—व्याघ्रीति । व्याजिघ्रतीति व्याघ्री । 'आत
इति कः । 'पाघ्राध्माधेट्—' इति शस्तु संज्ञायां न भवति, व्याघ्रादि
निर्देशादिति वक्ष्यते । व्याङोर्घ्रशब्देन गतिसमासः । यदि घ्रशब्दस्य सु
पेक्षेत, तर्हि सुबुत्पत्तये संख्याद्यपेक्षेत । ततः प्रागेव लिङ्गयोग इति लिङ्गनिमि
टापा भाव्यं न तु ङीषा । घ्रशब्दमात्रस्य जातिवाचित्वाभावात्, ततो
समास इत्यदन्तत्वाज्जातिलक्षणो ङीष् न स्यादिति भावः । यद्यप्युपपद
त्सिद्धम्, तथापि गतिग्रहणमाङो घ्रशब्देन समासे पश्चादाघ्रशब्देन विशब्दस्य

ल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते। स्वादुङ्कारम्। नेह—'काल-

दन्तत्वाभावाद् जातिलक्षणो ङीष् न स्यादिति भावः। यद्यप्युपपदत्वेनाप्येतत्सिद्धम्, थापि गतित्वसंभवमात्रेणेदमित्याहुः। वस्तुतस्तु आङो ग्राशब्देन उपपदसमासः, आतच्चोपसर्ग' इति सप्तमीनिर्देशात्। केचित्तु आग्राशब्देन गतिसमास इति तदंशे तिसमासोदाहरणमित्याहुः। अथ कारकसमासमुदाहरति—अश्वक्रीतीति। अश्वेन क्रीतेति विग्रहे 'कर्तृकरणे कृता—' इति समासः। 'क्रीतात्करणपूर्वात्' इति ङीष्। सुवन्तेन समासे तु उक्तरीत्या पूर्वं टापि अदन्तत्वाभावाद् ङीष् न स्यादिति भावः। उपपदसमासमुदाहरति—कच्छपीति। कच्छः तीरम्, तेन तस्मिन् वा पिबतीति कच्छपी। 'सुपि स्थः' इत्यत्र 'सुपि' इति योगविभागात् कः, उपपदसमासः तस्य सुवन्तापेक्षायाम् उक्तरीत्या टाबेव स्यात्, न तु जातिलक्षणङीषिति भावः। अमैवाव्ययेन। अमेवेत्यनन्तरं तुल्यविधानमित्यध्याहार्यम्। 'तुल्यार्थैरतुलोपमाभ्याम्—' इति तृतीया। अमैव तुल्येति। अम्प्रत्ययमात्रविधायकशास्त्रेण अमैव सह यस्य उपपदसंज्ञा विधीयते तदुपपदमव्ययेन समस्यत इति यावत्। पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमित्याह—तदेवेति। विवरणवाक्ये द्वितीय एवकारो नियमलभ्यः, न तु सूत्रस्थः, तस्य अप्राप्ते अमा तुल्यविधानत्वे अवधारणार्थत्वात्। स्वादुंकारमिति। स्वादुं कृत्वेत्यर्थः। ओदनं भुङ्क्त इति शेषः। 'स्वादुमि णमुल्' इति णमुल्, स्वादुशब्दस्य मान्तत्वं निपातनात्। 'कृन्मेजन्तः' इत्यव्ययत्वम्।

दनभ्युपगमादिति बोध्यम्। कारकमुदाहरति—अश्वक्रीतीति। अश्वेन क्रीता। कर्तृकरणे कृता—' इति समासः। 'क्रीतात्करणपूर्वात्' इति ङीष्। सुवन्तेन समासे टापा भाव्यमित्यदन्तत्वाभावात् 'क्रीतात्करण—' इत्ययं ङीष् न स्यादिति ज्ञेयम्। उपपदमुदाहरति—कच्छपीति। कच्छेन पिबतीति कच्छपी। 'सुपि' इति योगविभागात्कः। इहापि समासस्य सुवन्तापेक्षायां टाबेव स्यान्न ङीषित्यादिव्याघ्रीत्यत्रेव बोध्यम्। प्राचा तु 'उपपदमतिङन्तं समस्यते' इत्युक्तम्, तदसत्। तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्यापत्त्या राजदर्शी चर्मकार इत्यादौ नलोपो न स्यादपदान्तत्वात्। घटितेत्यादौ 'अतो गुणे' इति पररूपं च स्यात्। स्यादेतत्—कच्छेन साधनेन पिबती त्यर्थाभ्युपगमे कच्छस्य कारकत्वेन कच्छपीति रूपसिद्धौ नेदमुपपदस्यासाधारणोदाहरणमिति चेत्, एवं तर्हि माषवापिणीत्युदाहर्तव्यम्। 'सुप्यजातौ—' इति णिनौ कृते माषोपपदस्य कृदन्तेन समासे 'प्रातिपदिकान्त—' इत्यादिना पूर्वपदस्थान्निमित्तात्परस्य समासप्रातिपदिकान्तनकारस्य णत्वं सिद्ध्यति। सुवन्तेन समासे त्वन्तरङ्गत्वान्नान्तलक्षणे ङीपि पश्चाद्वापिनीशब्देन समासे गर्गभगिनीत्यत्रेव णत्वं न स्यादित्येके। अन्ये तु कच्छेन हेतुना पिबतीत्यर्थविवक्षायां कच्छस्याकारकत्वात्कच्छपीत्युपपदस्योदाहरणं म्यगेवेत्याहुः। अमैवाव्ययेन। पूर्वेण सिद्धे नियमार्थमिदम्। तुल्यविधानमिति। एतच्चाध्याहारेण लभ्यम्। तदेवेति। यस्मिन्नुपपदे येन वाक्येन अमेव सहितस्तदेवोपपदमव्ययेन समस्यते नान्यदित्यर्थः। नियमबललभ्योऽयमेवकारो न तु सूत्रस्थः। स्वादुंकारमिति। 'स्वादुमि णमुल्'। अव्ययेनेति किम्, कुम्भ-

समयवेलासु तुमुन्' (सू ३१७९) । कालः समायो वेला वा भो
अमैवेति किम्—अग्रे भोजम्—अग्रे भुक्त्वा । 'विभाषाऽग्रेप्रथमपूर्वेषु'
३३४५) इति क्त्वाणमुलौ । अमा चान्येन च तुल्यविधानमेतत् ।
तृतीयाप्रभृतीन्यन्यतरस्याम् । (२-२-२१) 'उपदंशस्तृतीयायाम्'
३३६८) इत्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते । मूलके
भुङ्क्ते—मूलकोपदंशम् । उच्चैःकारम् । ७८५ क्त्वा च । (२-२-

तदेवेति नियमस्य प्रयोजनमाह—नेहेति । उपपदसमास इति शेषः । भो
ति । यद्यपि 'कालसमयवेलासु—' इति सप्तमीनिर्देशात् कालसमयवेलानामुपप
तथापि कालादीनामुपपदसंज्ञा तुमुना तुल्यविधानैव, न त्वमा । अत एव कालादि
पपदत्वेऽपि न समास इत्यर्थः । अमैवेति किमिति । अमैवेत्येवकारः किमर्थं
प्रश्नः । अमा चान्येन चेति । अम्प्रत्ययेन क्त्वाप्रत्ययेन च सह उपपदसंज्ञा
थमपूर्वशब्दानां विहिता, ततश्च उपपदत्वस्य अमैव तुल्यविधानत्वाभावाद् न
मास इति भावः । तृतीयाप्रभृतीन्यन्यतरस्याम् । तृतीयाशब्देन 'उपदंशस्तृ
याम्' इत्यारभ्य 'अन्वच्यानुलोम्ये' इत्यन्तसूत्रोपात्तान्युपपदानि विवक्षितानि ।
अव्ययेनेति चानुवर्तते एवकारस्तु, नानुवर्तते, अस्वरितत्वात् । अमेत्येतदव्यय
णम् । तदाह—उपदंशस्तृतीयायामित्यादिना । मूलकेन उपदंशं
मूलकोपदंशमिति । 'उपदंशस्तृतीयायाम्' इति णमुल् । अमैव तुल्यविधानत्वा
सूत्रेण नित्यं[1] प्राप्ते विकल्पोऽयम् । ननु मूलकेनेत्यस्य भुङ्क्त इत्यत्रैवान्वया
दंश इत्यत्रानन्वयादसामर्थ्यात् कथमिह समास इति चेत्, मैवम्—उपदंशनक्रिय
हि मूलकस्य आर्थिकं कर्मत्वमादाय सामर्थ्यमुपपाद्यम् । तृतीया तु प्रधानक्रिया
परत्वाच्चोपपाद्येत्यन्यत्र विस्तरः । उच्चैःकारमिति । उच्चैः कृत्वेत्यत्र तु '
ऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' । तत्र उच्चैःकारमित्यत्र उपपदत्वस्य 'अमै
विधानत्वाभावाद् 'अमैवाव्ययेन' इत्यप्राप्ते अनेन विकल्पः । समासपक्षे 'आदि
न्यतरस्याम्' इति कृदुत्तरपदप्रकृतिस्वर आद्युदात्तत्वम् । असमासपक्षे तु उच्चैरिति
त्रेण अन्तोदात्तत्वमिति फले भेदः । अमन्तेनेति किम् ? पर्याप्तो भोक्तुम् । 'प
वचनेषु' इति तुमुन् । क्त्वा च । तृतीयाप्रभृतीनीति पूर्वसूत्रमनुवर्तते । क्त्वेत्य
यार्थे प्रथमा । टायां 'सुपां सुलुक् पूर्वसवर्ण—' इति पूर्वसवर्णदीर्घ इत्यपरे । त
तृतीयेति । ननु 'उपदंशस्तृतीयायाम्' इत्यतः प्रागेव समानकर्तृकयोरिति क्त्वा

कारः । असति ह्यव्ययग्रहणे अमैव यत्तुल्यविधानं तदेव केनचित्समर्थेन सम
तथा सति 'स्वादुंकारः' इत्यत्रैव समासः स्यान्न तु कुम्भकार इत्यत्र । अथ
वैयर्थ्यभीत्या अव्ययविषयकनियम इति चेत्, तर्हि अमन्तविषयक एव किं न
'अमन्तेन यः समासः सोऽमैव तुल्यविधानस्य' इति । तथा चाग्रेभोजमित्यत्र
मा भूत्, अग्रे भुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेवेति भावः । तदेवेति
कालो भोक्तुम्, समयो भोक्तुम् । अमैवेत्येवकारेणामा चान्येन च तुल्यविधा

१ 'नित्यं' इति क्वचिन्न पाठः ।

तीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । उच्चैःकृत्य, उच्चैः कृत्वा । व्ययेऽयथाभिप्रेत–' (सू. ३३८१) इति क्त्वा । तृतीयाप्रभृतीनीति किम्– लं कृत्वा, खलु कृत्वा । ७८६ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः । ५–४–८६) संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् । अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ।

---

ठात् कथमुच्चैः कृत्वेत्युदाहरणमित्यत आह—अव्ययेऽयथेति । 'अव्ययेऽयथा- प्रताख्याने कृञः क्त्वाणमुलौ' इति सूत्रेणेत्यर्थः । अलं कृत्वेति । 'अलंखल्वोः तिषेधयोः प्राचां क्त्वा' इत्येतद् 'उपदंशस्तृतीयायाम्' इत्यतः पूर्वमेव पठितम् । तः तद्विहितक्त्वो मान्तेन सह समासाभावाद् न ल्यबिति भावः । इत्युपपदसमासाः । अथ तत्पुरुषेषु असाधारणसमासान्तान् वक्तुमुपक्रमते—तत्पुरुषस्यांगुलेः ख्याव्ययादेः । 'अच्प्रत्यन्ववपूर्वात्–' इत्यतः अजित्यनुवर्तते, समासान्त इत्यधिकृ- म् । तेन समासस्य अन्तावयव इति लभ्यते । प्रत्ययः परश्च इत्यधिकाराद् अच्प्रत्य- स्य तत्पुरुषात् परत्वेऽपि तस्य तदवयवत्वाद् अङ्गुलेरिति अवयवषष्ठी । अङ्गुलेरिति पुरुषविशेषणम्, तदन्तविधिः । तदाह—संख्याव्ययादेरिति । संख्या च अव्ययं संख्याव्यये, ते आदी यस्येति विग्रहः । द्व्यङ्गुलमिति । 'तद्धितार्थे–' इति द्विगुः । माणे द्वयसज्दघ्नञ्मात्रचः' 'प्रमाणे लः' द्विगोर्नित्यम्' इति लुक् । द्व्यङ्गुलिशब्दा- चि तस्य तद्धितत्वात्तस्मिन् परे 'यस्येति च' इति इकारलोपः । निरङ्गुलमिति ।

---

दस्य समासनिवारणेऽपि तुमुना तुल्यविधानस्य स्यादेव, अतस्तन्निवारणाय तदेवेत्युक्तम् । तीयाप्रभृतीन्यन्यतरस्याम् । उभयत्र विभाषेयम् । अमैव तुल्यविधानस्य प्राप्ते- ना चान्येन च तुल्यविधानस्याप्राप्ते चारम्भात् । प्राप्ते यथा—'उपदंशस्तृतीयायाम्' लकेनोपदंशं मूलकोपदंशम् । अप्राप्ते यथा—'अव्ययेऽयथाभिप्रेताख्यान–' इति वाणमुलौ । उच्चैःकारम् । इह समासपक्षे कृदुत्तरपदप्रकृतिस्वरः 'आदिर्णमुल्यन्यत- स्याम्' इत्याद्युदात्तत्वम् । असमासे तु उच्चैरित्यन्तोदात्तत्वम् । 'उदि चेर्डैसिः' इति युत्पत्तिपक्षे प्रत्ययस्वरस्य, अव्युत्पत्तिपक्षे तु 'फिषः' इत्यस्य च प्रवृत्तेरित्याहुः । नोरमायां तु उच्चैरित्यन्तोदात्तस्वरादिषु तथा पाठादिति स्थितम् । अमेत्यनुवर्तत वेत्याह—अमन्तेनेति । तेनेह न–पर्याप्तो भोक्तुम् । 'पर्याप्तिवचनेषु–' इति मुन् । क्त्वा च । क्त्वेति तृतीयान्तम् । 'आतः' इति योगविभागादालोपः, 'त्रित्व कन्दिस्यन्दोः' इतिवदिति हरदत्तः । तन्न । सवर्णदीर्घेणापि तृतीयान्तत्वोपपत्तेः । लं कृत्वेति । 'अलंखल्वोः प्रतिषेधयोः–' इति सूत्रस्य 'उपदंशस्तृतीयायाम्' त्यस्मात्पूर्वत्वान्नेह समासः । तत्पुरुषे असाधारणान्समासान्तानाह—तत्पुरुषस्येति । लोन्त्यविधिं बाधित्वा 'प्रत्ययः' परश्च' इति 'परत्वात्तत्पुरुषात्पर एवाच्प्रत्ययो भवति था गापोष्टकः कित्त्वेऽपि गापाभ्यां पर एव टग् भवति, न त्वन्तावयवः । इत्यस्तु नुबन्धकरणसामर्थ्यात्परविधिर्बाध्यते । एवं च लाघवात् 'तत्पुरुषादङ्गुलेः–' इति क्तव्ये 'तत्पुरुषस्याङ्गुलेः– इति तु समासान्तापेक्षया अवयवषष्ठीत्याहुः । द्व्यङ्गुल- मिति । 'तद्धितार्थ–' इति समासः । 'द्विगोर्नित्यम्' इति मात्रचो लोप इति वृत्ति-

७८७ अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः। (५-४-८७) एभ्यो रात्रे... चात्संख्याव्ययादेः। 'अहर्ग्रहणं द्वन्द्वार्थम्' (वा ३३५३) अहश्च रात्रि... रात्रः। सर्वा रात्रिः सर्वरात्रः। पूर्वं रात्रेः पूर्वरात्रः। संख्यातरात्रः। पुण्य... द्वयो रात्र्योः समाहारो द्विरात्रम्। अतिक्रान्तो रात्रिमतिरात्रः। ७८८ रा... स्सखिभ्यष्टच्। (५-४-९१) एतदन्तात्तत्पुरुषाट्टच्स्यात्। परमराजः। अ... कृष्णसखः। ७८९ अह्नष्टखोरेव। (६-४-१४५) एतयोरेव परतोऽह्नष्टि...

'निरादयः क्रान्ताद्यर्थे–' इति समासः, अच्, इलोपः। अहस्सर्वैकदेश... पुण्याच्च। एभ्यो रात्रेरिति। अहन्, सर्व, एकदेश, संख्यात, पुण्य एभ्यः... रात्रिशब्दस्येत्यर्थः। अहन्नादिपूर्वपदकस्य रात्र्यन्तस्य तत्पुरुषस्येति यावत्। न... रादिः रात्र्यन्तस्तत्पुरुषो नास्त्येव। अह्नो रात्रिरिति वा अहश्चासौ रात्रिश्च... असंभवादित्यत आह–अहर्ग्रहणं द्वन्द्वार्थमिति। न च ब्रह्मणो यदहः तस्य... भूता या मानुषी रात्रिरिति षष्ठीतत्पुरुषः संभवतीति वाच्यम्, अहर्ग्रहणं द्वन्द्वा... भाष्यप्रामाण्येन एवं जातीयकतत्पुरुषस्य प्रयोगाभावोन्नयनात्। अहोरात्र... द्वन्द्वादच्, इलोपः, 'जातिरप्राणिनाम्' इत्येकवत्त्वम्। 'स नपुंसकम्' इति बा... 'रात्राह्नाहाःपुंसि' इति पुंस्त्वम्। सर्वारात्रिः सर्वरात्र इति। सर्वा रात्रिरिति... 'पूर्वकालैक–' इति कर्मधारयः। अच्, इकारलोपः। 'रात्राह्ना–' इति पुंस्त्वम्। '... म्नो वृत्तिमात्रे–' इति पुंवत्त्वम्। एकदेशेत्यर्थग्रहणमित्यभिप्रेत्योदाहरति–पूर्व... पूर्वं रात्रेरिति विग्रहे 'पूर्वापराधरोत्तरम्–' इत्येकदेशिसमासः। अच्, इलोपः, 'रात्रा... इति पुंस्त्वम्। संख्यातरात्र इति। संख्याता रात्रिरिति विग्रहे कर्मधारयः। ...त्कर्मधारय–' इति पुंवत्त्वम्। पुण्यरात्र इति। पुण्या रात्रिरिति विग्रहे कर्मधा... 'पुंवत्कर्मधारय–' इति पुंवत्त्वम्। अच् इलोपः 'रात्राह्ना–' इति पुंस्त्वम्। द्विरात्र... तद्धितार्थं इति द्विगुः। संख्यादित्वादच्, इलोपः। 'संख्यापूर्वं रात्रं क्लीबम्' इ... सकत्वम्। अतिरात्र इति। 'अत्यादयः क्रान्ताद्यर्थे–' इति समासः। अव्ययादि... दच्, इलोपः, 'रात्राह्ना–' इति पुंस्त्वम्। राजाहस्सखिभ्यष्टच्। 'तत्पुरु... ङ्गुलेः–' इत्यतः तत्पुरुषस्येत्यनुवृत्तं पञ्चमीबहुवचनत्वेन विपरिणतं राजाहस्स... इत्यनेन विशेष्यते। तदन्तविधिः, तदाह—एतदन्तादिति। परमराज... परमश्चासौ राजा चेति विग्रहः। समासान्तष्टच्। 'नस्तद्धिते' इति टिलोपः। ...राज इति। अतिक्रान्तो राजानमिति विग्रहः, 'अत्यादयः–' इति समासः। ... टिलोपः। कृष्णसख इति। कृष्णस्य सखेति विग्रहः समासान्तष्टच्। 'यस्ये...

कृत्। मनोरमायां तु द्वयसचो लुगिति स्थितम्। द्वन्द्वार्थमिति। अह्नो रात्रि... षष्ठीतत्पुरुषस्यासंभवादिति भावः। ननु अहःशब्दस्याहस्तुल्यतायां रात्रिशब्द... रात्रितुल्यतायां गौणत्वसंभवादहश्चासौ रात्रिश्चेति कर्मधारयोऽस्त्विति चेन्न। ... संभवे गौणग्रहणायोगात्। 'हेमन्तशिशिरावहोरात्रे च–' इत्यत्र द्वन्द्वे समासा... नाच्च। अहोरात्र इति। 'जातिरप्राणिनाम्' इत्येकवद्भावः। 'स नपुंसकम्' ... तद्बाधित्वा परत्वाद 'रात्राह्नाहाः–' इति पुंस्त्वम्। ...

स्यात्, नान्यत्र । उत्तमाहः । द्वे अहनी भृतो द्व्यहीनः क्रतुः । तद्धितार्थे द्विगुः । 'तमधीष्टः–' (सू १७४४) इत्यधिकारे, 'द्विगोर्वा' इत्यनुवृत्तौ 'रात्र्यहस्संवत्स-राच्च' (सू १७५१) इति खः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह—मद्राणां राज्ञी मद्रराज्ञी । ७९० अह्नोऽह्न एतेभ्यः । (५–४–८८) सर्वादिभ्यः पर-

---

इति इकारलोपः । अह्नष्टखोः । शेषपूरणेन सूत्रं व्याचष्टे—टिलोपः स्यादिति । टेरित्यनुवर्तते, 'अल्लोपोऽनः' इत्यस्माद् लोप इति चेति भावः । 'नस्तद्धिते' इत्येव सिद्धे नियमार्थमिदमित्याह—नान्यत्रेति । एवकारस्तु अह्न एव टखोरिति विपरीत-नियमव्यावृत्त्यर्थः । टखोरेवेति किम्? अह्ना निर्वृत्तम् आह्निकम्, 'कालाट्ठञ्' इत्यधिकारे 'तेन निर्वृत्तम्' इति ठञ् । टिलोपाभावादल्लोपः । टप्रत्यये उदाहरति—उत्तमाह इति । उत्तमं च तदहश्चेति विशेषणसमासः । 'राजाहस्सखिभ्यष्टच्' इति टच् 'अह्नष्टखोरेव' इति प्रकृतिसूत्रेण टिलोपः, 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । खे उदाहरति—द्वे अहनी भृत इति । अत्यन्तसंयोगे द्वितीया । भृतः परिक्रीत इत्यर्थः । द्व्यहीन इत्यत्र प्रक्रियां दर्शयति—तद्धितार्थे द्विगुरिति । कोऽत्र तद्धित इत्यत आह—तम-धीष्ट इत्यादि । तथा च द्व्यहन्शब्दात् खस्य ईनादेशे 'अह्नष्टखोरेव' इति टिलोपे द्व्यहीन इति रूपमित्यर्थः । नन्वत्र 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः कुतो न स्यात् । न च खे टिलोपविधिसामर्थ्यान्नाह्नादेश इति वाच्यम्, अहीन इत्यत्र खे टिलोपविधेः चरि-तार्थत्वात्, इति चेत्, न—समासान्ते पर एवाह्नादेशविधानात् । प्रकृते तु समासान्त-विधेरनित्यत्वाद् 'राजहस्सखिभ्यः–' इति न टच् । यद्यपि उत्तमाह इत्यत्र द्व्यहीन इत्यत्र च 'नस्तद्धिते' इत्येव टिलोपः सिद्धः, तथापि आह्निकमित्यादावावश्यकस्य नियमविधेर्विधिमुखेनापि प्रवृत्त्यभ्युपगमादिह तदुपन्यासः । ननु मद्राणां राज्ञी मद्र-राज्ञीत्यत्रापि लिङ्गविशिष्टपरिभाषया 'राजाहस्सखिभ्यः–' इति टच् स्यादित्याशङ्क्याह-लिङ्गेति । अनित्यत्वादिति । समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषा नेति 'ङ्याप्प्रातिपदिकात्' इत्यत्र भाष्ये उक्तत्वादिति भावः । मद्रराज्ञीति । न च टचि सत्यपि 'यस्येति च' इतीकारलोपे मद्रराज्ञ्शब्दात् टित्वाद् ङीपि मद्रराज्ञीति निर्बाध-मिति वाच्यम्, टचि हि सति 'भस्याढे तद्धिते' इति पुंवत्त्वे टिलोपे मद्रराजी इति स्यादिति भावः । अह्नोऽह्न एतेभ्यः । पूर्वसूत्रे अहस्सर्वैकदेशसंख्यातपुण्यशब्द

---

ग्रन्थः परास्तः । 'मासेन स्यादहोरात्रः' इत्यादिग्रन्थविरोधाच्च । सर्वरात्र इति । 'पूर्वकालैक–' इति समासः । पूर्वरात्र इति । 'पूर्वापराधरोत्तरम्–' इत्येकदेशि-समासः । यदा तु रात्रिशब्दस्यैकदेशे लक्षणां स्वीकृत्य कर्मधारयोऽभ्युपगम्यते तदा पूर्वरात्रिरित्येव भवति । द्विरात्रमिति । 'संख्यापूर्वं रात्रं क्लीबम्' इति वक्ष्यते अह्नष्टखोरेव । 'नस्तद्धिते' इत्येव सिद्धे नियमार्थमिदम् । एवकारस्त्वह्न एव टखयो-रिति विपरीतनियमशङ्कानिरासार्थः । 'आत्माध्वानौ खे' इति प्रकृतिभावविधानेन तन्निरासे प्रतिपत्तिगौरवं स्यादिति भावः । टखोरेवेति किम्, अह्ना निर्वृत्तमाह्निकम् 'कालात्' इत्यधिकारे 'तेन निर्वृत्तम्' इति ठञ् । टिलोपाभावाद् 'अल्लोपोऽनः' इत्य-कारलोपः । उत्तमाह इति । 'सर्वैकदेशसंख्यात–' इत्यत्र उत्तमशब्दस्यापाठादह्ना

स्याहन्शब्दस्याह्नादेशः स्यात् समासान्ते परे । ७९१ अह्नोऽदन्तात् । (८—४—
अदन्तपूर्वपदस्थाद्रेफात्परस्याऽह्नादेशस्य नस्य णः स्यात् । सर्वाह्णः । पूर्वा
संख्याताह्नः । द्वयोरह्नोर्भवः, 'कालाट्ठञ्' (सू १३८१) 'द्विगोर्लुगन
(सू १०८०) इति ठञो लुक्, द्वयह्नः । स्त्रियामदन्तत्वाट्टाप्, द्वयह्ना । द्वयह्नप्रि

---

निर्दिष्टाः । तत्र चकारेण संख्याव्यये अनुकृष्टे । अहश्शब्दवर्जं ते सर्वे एतच्छ
परामृश्यन्ते, न त्वहश्शब्दः, अहश्शब्दात् परस्य अहन्शब्दस्य तत्पुरुषे असंभवा
भिप्रेत्य व्याचष्टे—सर्वादिभ्य इति । समासान्ते पर इति । एतत् तु प्रक
ल्लब्धम् । अह्नोऽदन्तात् । 'पूर्वपदात्संज्ञायाम्—' इत्यतः पूर्वपदादित्यनुवृत्तम्
दित्यत्रान्वेति । 'रषाभ्यां नो णः—' इति सूत्रं षकारवर्जमनुवर्तते । पूर्वपदा
पूर्वपदस्थादिति विवक्षितम्, तदाह—अदन्तपूर्वेति । तदन्तविधिनैव सिद्धे
ग्रहणं स्पष्टार्थम् । लक्षेषु अहस्सु भवो लक्षाह्ण इत्यत्र णत्वार्थं पा
बोध्यम् । समासान्ते पर इति किम् ? द्वे अहनी भृतो द्वयहीनः । अत्र समासान्त
रनित्यत्वात् टजभावे अह्नादेशो न । सर्वाह्ण इति । सर्वमहरिति विग्रहे 'पूर्व
इति समासे 'राजाहस्सखिभ्यः—' इति टच्, अह्नादेशः, णत्वम्, 'रात्राह्नाहाः—' श
पुंस्त्वम् । पूर्वाह्ण इति । समासादि सर्वाह्णवत् । संख्याताह्न इति । संख्यातम
विग्रहः । विशेषणसमासः, टच्, अह्नादेशः । निमित्ताभावान्न णत्वम् । पुण्यपूर्वस्य
वक्ष्यते । संख्यापूर्वस्य उदाहरति—द्वयोरह्नोरित्यादि । द्वयह्न इति । त
द्विगुः । टच्, ततो भवार्थे ठञ्, तस्य लुक्, अह्नादेशः । प्रसङ्गादाह—स्त्रियाम
द्वयह्नेति । द्वयोरह्नोर्भवेत्यर्थः । ठञ् लुक् च पूर्ववत् । 'अपरिमाणविस्त—' इ
ङीप् । ठञ्निमित्तस्तु ङीप् नेत्यपरिमाणविस्तेत्यत्रोक्तम् । टचष्टित्त्वेऽप्युपसर्जन
'टिड्ढ—' इति न ङीप् । वस्तुतस्तु स्त्रीत्वमेवात्र नास्ति, रात्राह्नाहाःपुंसीत्यु
शब्देन्दुशेखरे प्रपञ्चितम् । संख्यापूर्वस्योदाहरणान्तरमाह—द्वयह्नप्रिय इति ।

---

देशो न । द्वयहीन इति । समासान्तविधेरनित्यत्वान्न टच् । सति तु तस्मिन्नह्ना
प्रसज्येत । न च नान्तस्य खे परे टिलोपविधिसामर्थ्यान्न टजिति वाच्यम्,
इत्यत्र तस्य सावकाशत्वात् । अनित्यत्वादिति । अत्र च लिङ्गं 'शक्तिलाङ्गलाङ्कु
इत्यत्र घटीग्रहणम् । मद्रराज्ञीति । यद्यत्र टच् स्यात्तदा 'भस्याढे—' इति पुंव
टिलोपे च मद्रराजीत्यनिष्टरूपं स्यादिति भावः । अह्नोऽह्न एतेभ्यः । एतच्छ
'अहःसर्वैकदेश—' इति सूत्रस्थाः परामृश्यन्ते । सूत्रे तु तस्मिन्नहरादयो निर्दिष्टा
कारेण च संख्याव्यये अनुकृष्टे तत्र सर्वेषां बुद्धिस्थत्वाविशेषेऽप्यहःशब्द इह न गृ
असंभवादित्याशयेनाह—सर्वादिभ्य इति । समासान्ते पर इति । ए
प्रकरणाल्लब्धम् । भाष्ये तु अह्नादेशः प्रत्याख्यातः 'अह्न एभ्यः अच् स्याट्टचोऽप
इति व्याख्यायाम्, 'अह्नष्टखोरेव' इति नियमाट्टिलोपाभावे 'अल्लोपोऽनः' इत्य
लोपात्सर्वाह्न इत्यादिरूपसिद्धेः । रेफादिति । यदि तु लक्षे अहस्सु भव इत्य
व्युत्पत्त्या लाक्षाह्ण इत्यपि प्रयोगोऽस्ति, तर्हि षादित्यपि बोध्यम् । 'रषाभ्याम्—'

षकारात् । ठञो लुगिति । अणो लुगिति वृत्तिकाराद्युक्तमयुक्तमिति भावः । प्रस

अत्यह्नः । ७९२ क्षुभ्नादिषु च (८—४—३९) एषु णत्वं न स्यात् । दीर्घाह्नी प्रावृट् । एवं चैतदर्थमाह्न इत्यदन्तानुकरणक्लेशो न कर्तव्यः । 'प्रातिपदिकान्त—'

---

अहनी प्रिये यस्येति विग्रहः । 'तद्धितार्थ–' इत्युत्तरपदे द्विगुः, टच्, अह्लादेश इति भावः । अव्ययपूर्वस्योदाहरति—अत्यह्न इति । अहरतिक्रान्त इति विग्रहः । 'अत्यादयः–' इति समासः । टच्, अह्लादेश इति भावः । क्षुभ्नादिषु च । 'रषाभ्याम्–' इत्यतो ण इति 'न भाभूपूकमि–' इत्यतो नेति चानुवर्तते, तदाह—एष्विति । दीर्घाह्नी प्रावृडिति । वर्षर्तौ प्रावृट्शब्दः स्त्रीलिङ्गः । 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । दीर्घाण्यहानि यस्मिन्निति बहुव्रीहिः । 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीप्, 'अल्लोपोऽनः' इत्युपधालोपः । 'अह्नोऽदन्तात्' इति णत्वं तु क्षुभ्नादित्वान्नेति भावः । ननु क्षुभ्नादिषु दीर्घाह्नीत्यस्य पाठो व्यर्थः, 'अह्नोऽदन्तात्' इत्यत्र हि अह्न इत्यदन्तात् षष्ठ्यर्थे प्रथमा । अदन्तपूर्वपदस्थान्निमित्तात् परस्य अह्नशब्दस्य नस्य णत्वं स्यादिति तदर्थः । दीर्घाह्नीत्यत्र च अह्नदेशस्याप्रसक्त्या अदन्तत्वाभावादेव णत्वस्याप्राप्तौ किं तन्निवृत्त्यर्थेन क्षुभ्नादिपाठेनेत्यतआह—एवं चेति । एवं सति—दीर्घाह्नीशब्दस्य क्षुभ्नादिपाठे सति, एतदर्थम्—'अह्नोऽदन्तात्' इति णत्वनिवृत्त्यर्थम्, अह्न इत्यस्य अदन्तत्वानुसरणं षष्ठ्यर्थे व्यत्ययेन प्रथमानुसरणं क्लेशावहं न कर्तव्यमित्यर्थः, क्षुभ्नादिपाठादेव णत्वनिवृत्तिसिद्धेरिति भावः । ननु दीर्घाह्नीत्यस्य णत्वाभावाय

---

स्त्रियामिति । नन्विह स्त्रीत्वं दुर्लभ 'रात्राह्नाहाः पुंसि' इति वचनादिति चेत्, मैवम् । सर्वमहः सर्वाह्ण इत्यादावुपक्षीणस्य तद्वचनस्य लुप्ततद्धितायामप्रवृत्तेः । 'लुपि युक्तवत् –' इति लिङ्गातिदेशो ह्यत्र प्रमाणम् । प्राक्तलिङ्गानुशासनानां लुप्तप्रत्ययेषु प्रवृत्तौ तद्वैयर्थ्यापत्तेः । अत एव लवणः सूपः, लवणा यवागूरित्यादौ न क्लीबत्वम् । किं च 'द्विगुप्राप्तापन्ना–' इत्यादिना परवल्लिङ्गत्वे प्रतिषिद्धे तदपवादस्य 'रात्राह्नाहाः–' इत्यस्याप्राप्तिरेवेति द्व्यहन्शब्दोऽयं विशेष्यनिघ्न एव, न तु नियतपुंल्लिङ्गः । एवं चात्र भवार्थकतद्धिते लुप्तेऽपि 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन भवार्थवत्तन्निष्ठस्त्रीत्वाभिधानमपि न्याय्यमेवेति दिक् । टाबिति । न चेह ठञन्तत्वाद् ङीप् स्यादिति शङ्क्यम्, ठञो लुप्तत्वात् । न च प्रत्ययलक्षणम्, वर्णाश्रयत्वात् । ठञो योऽकारस्तदन्तान्ङीबिति तत्र व्याख्यातत्वात् । अत एव वृत्तिकाराद्युक्ताणो लुक्पक्षेऽपि न ङीप्, 'अण्योकारः' इति तत्र व्याख्यातत्वात् । न चैवमपि टजन्तत्वान्ङीप् स्यादेवेति वाच्यम्, टचः समासान्ततया तदन्तस्य तद्धितार्थं प्रत्युपसर्जनत्वात् । अत एव हि आपिशलिना प्रोक्तमधीयाना ब्राह्मणी आपिशलेत्युदाहृतं भाष्ये । 'द्विगोः' इति ङीप् तु न शङ्क्य एव, 'अपरिमाण–' इति निषेधात् । अतष्टाबेवात्र युक्तस्तथैवोदाहरति—द्व्यह्नेति । 'अह्नोऽह्न–' इति सूत्रे अह्नादेशं प्रत्याख्याय 'अच्प्रत्यन्वव–' इत्यतोऽचमनुवर्त्य 'टजपवादोऽच्' इति व्याचक्षाणस्य भाष्यकारस्य मते तु निर्विवाद एवात्र टाप् । कथं तर्हि कालनिर्णयदीपिकायां द्व्यहनीति प्रयोग इति चेत् । अत्राहुः—द्वे अहनी यस्यां तिथाविति बहुव्रीहौ नान्तलक्षणो ङीब बोध्यः । द्वयोरह्नोर्भव इति व्याख्यानग्रन्थस्तु फलितार्थकथनपरतया ज्ञेय इति । संख्यादिभिन्नस्य तत्पुरुषस्य

(सू १०५५) इति णत्ववारणाय क्षुभ्नादिषु पाठस्यावश्यकत्वात् । अदन्ता-
तपरकरणान्नेह—परागतमहः । पराह्णः । ७९३ न संख्यादेः समाहारे
(५—४—८९) समाहारे वर्तमानस्य संख्यादेरह्नादेशो न स्यात् । 'संख्यादे
स्पष्टार्थम् । द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः । ७९४ उत्तमैकाभ्यां च
(५—४—९०) आभ्यामह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह । पुण्यै-
काभ्याम्' इत्येव सूत्रयितुमुचितम् । पुण्याहम् । सुदिनाहम् । सुदिनशब्दः प्रशस्त-
वाची । एकाहः । 'उत्तमग्रहणमुपान्त्यस्यापि संग्रहार्थम्' इत्येके । संख्याताहः ।
७९५ अग्राख्यायामुरसः । (५—४—९३) टच्स्यात् । अश्वानामुर इव उ-
रसम् । मुख्योऽश्व इत्यर्थः । ७९६ अनोश्मायस्सरसां जातिसंज्ञयोः
(५—४—९४) टच्स्याज्जातौ संज्ञायां च । उपानसम्, अमृताश्मः' काला

---

किं क्षुभ्नादिपाठोऽभ्युपगम्यताम् उत अह्न इत्यस्य अदन्तत्वमित्यत्र विनिगमना
इत्यत आह—प्रातिपदिकान्तेति । अथ 'अह्नोऽदन्तात्' इत्यत्र पूर्वपदवि
अदन्तादिति तपरत्वस्य प्रयोजनमाह—अदन्तादिति । पराह्ण इति । 'प्रा
गताद्यर्थे—' इति समासः, टच्, अव्ययात्परत्वादाह्नादेशः । परेति पूर्वपदस्यादन्तत्वाभा
न णत्वमिति भावः । न संख्यादेः समाहारे । अह्नादेश इति । 'अह्नोऽह्न
इत्यतस्तदनुवृत्तेरिति भावः । ननु संख्यादिभिन्नस्य तत्पुरुषस्य समाहारे अभा
सिद्धे संख्यादेरिति व्यर्थमित्यत आह—स्पष्टार्थमिति । द्व्यह इति । स
द्विगुः । टच्, 'रात्राह्ना—' इति पुंस्त्वम् । संख्यादित्वात्प्राप्तस्य अह्नादेशस्य नि
त्र्यह इति । त्रयाणामह्नां समाहार इति विग्रहः । समासादि द्व्यहवत् । उत्त
भ्यां च । ननु उत्तमशब्दात्परस्याहन्शब्दस्य अह्नादेशाप्रसक्तेरुत्तमग्रहणं व्यर्थ
आह—उत्तमशब्द इति । उत्तमशब्दः अन्त्ये वर्तते । यथा द्वा
'उदयनीयातिरात्र उत्तममहः' इति अन्त्यमिति गम्यते । 'अहस्सर्वैकदेशसं
पुण्याद्—' इत्युपात्तेषु अन्त्यः पुण्यशब्दो विवक्षित इत्यर्थः । तर्हि पुण्यैकाभ्याम्
कुतो न सूत्रितमित्याशङ्क्य स्वतन्त्रेच्छत्वान्महर्षेरित्याह—पुण्यैकाभ्यामित्ये
पुण्याहमिति । पुण्यमहरिति विग्रहे विशेषणसमासः, टच्, टिलोपः, 'पुण्यसुदि
च' इति नपुंसकत्वम् । एकाह इति । एकमहरिति विग्रहे 'पूर्वकाल—' इति समा
टच्, टिलोपः । उपान्त्यस्यापीति । लक्षणयेति शेषः । पुण्येत्यनुक्त्वा उ
ग्रहणमेव लक्षणाबीजम्, उत्तमं च एकं चेति द्वन्द्वः, सौत्रं द्विवचनमिति भा
संख्याताह इति । संख्यातमहरिति विग्रहे विशेषणसमासः,
टिलोपः । 'रात्राह्ना—' इति पुंस्त्वम् । उपान्त्य-संख्यातशब्दपूर्वकत्वाद् नाह्ना
अग्राख्यायामुरसः । शेषपूरणेन सूत्रं व्याचष्टे—टच् स्यादि

---

समाहारे वृत्त्यसंभवादाह—स्पष्टार्थमिति । पुण्याहमिति । 'पुण्यसुदिनाभ्या
इति क्लीबत्वं वक्ष्यति । उपान्त्यस्यापीति । यथा 'प्रथमयोः—' इति प्रथमाद्वि
योर्ग्रहणं द्विवचननिर्देशात्, तथेहापि उत्तमग्रहणमुपान्त्यस्यापि

चैकश्चेति विग्रहे सौत्रं द्विवचनमिति तेषामाशयः । अग्राख्यायाम् । पञ्च

मण्डूकसरसम् इति जातिः। महानसम्, पिण्डाश्मः, लोहितायसम्, जलसरसम् इति संज्ञा। **७९७ ग्रामकौटाभ्यां च तक्ष्णः।** (५—४—९५) ग्रामस्य तक्षा ग्रामतक्षः। साधारण इत्यर्थः। कुट्यां भवः कौटः, स्वतन्त्रः। स चासौ तक्षा च कौटतक्षः। **७९८ अतेः शुनः।** (५—४—९६) अतिश्वो वराहः। अतिश्वी सेवा। **७९९ उपमानादप्राणिषु।** (५—४—९७) अप्राणिविषयकोपमानवाचिनः शुनष्टच्स्यात्। आकर्षः श्वेवाकर्षश्वः। अप्राणिषु किम्—वानरः श्वेव वानरश्वा। **८०० उत्तरमृगपूर्वाच्च सक्थ्नः।** (५—४—९८) चादुपमानात्। उत्तरसक्थम्। मृगसक्थम्। पूर्वसक्थम्। फलकमिव सक्थि फलकसक्थम्।

---

पञ्चम्यर्थे सप्तमी। अग्र प्रधानं तद्वाची य उरश्शब्दः तदन्तात् तत्पुरुषात् टच् स्यादित्यर्थः। 'अग्रचाख्यायाम्' इति पाठान्तरम्। अग्रे भवमग्रचम्, मुख्यमिति यावत्। अश्वानामुर इवेति। उरो यथा प्रधानं तथेत्यर्थः। उरश्शब्दस्य मुख्ये वृत्तौ लक्षणावीजमिदम्। **अश्वोरसमिति।** उरश्शब्देन मुख्यवाचिना षष्ठीसमासः, टच्, 'परवल्लिङ्गम्—' इति नपुंसकत्वम्। अग्राख्यायामिति किम्? देवदत्तस्योरः देवदत्तोरः। **अनोऽश्मायस्।** **उपानसमिति।** उपगतमन इति प्रादिसमासः। **अमृताश्म इति।** अमृतः अश्मेति विग्रहः। टचि, टिलोपः। **कालायसमिति।** कालम् अय इति विग्रहः, टच् 'परवल्लिङ्गम्—' इति नपुंसकत्वम्। **मण्डूकसरसमिति।** षष्ठीसमासः। टच्। जातिविशेषा एते। महानसम्, पिण्डाश्मः, लोहितायसम्, जलसरसमिति संज्ञाविशेषाः। **ग्रामकौटाभ्यां च तक्ष्णः।** आभ्यां टजिति। ग्रामकौटाभ्यां परो यस्तक्षन्शब्दः तदन्तात्तत्पुरुषाट्टच् स्यादित्यर्थः। **ग्रामतक्ष इति।** टचि टिलोपः। **साधारण इति।** ग्रामे यावन्तो जनाः सन्ति तावतां विधेय इत्यर्थः। **कुट्यां भव इति।** कुटीमेकां क्रयादिना सम्पाद्य तत्र यो वसति, न तु परकीयभूमिप्रदेशे, स कौट इत्यर्थः। फलितमाह—**स्वतन्त्र इति।** **कौटतक्ष इति।** टचि, टिलोपः। **अतेश्शुनः।** अतीत्यव्ययात् परो यः श्वन्शब्दः, तदन्तात्तत्पुरुषाट्टजित्यर्थः। **अतिश्व इति।** श्वानमतिक्रान्त इति विग्रहः। अत्यादय इति समासः। टचि, टिलोपः। श्वापेक्षयाधिकवेगवान् वराह इत्यर्थः। **अतिश्वी सेवेति।** श्वानमतिक्रान्तेत्यर्थः, श्वापेक्षया नीचा सेवेति यावत्, टच्, टिलोपः। टित्त्वाद् ङीप्, 'यस्येति च' इत्यकारलोपः। **उपमानादप्राणिषु।** **आकर्षः श्वेवेति।** आकृष्यते कुसूलादिगतधान्यमनेनेत्याकर्षः, पञ्चाङ्गुलो दारुविशेषः। 'उपमितं व्याघ्रादिभिः—' इति समासः। टच्, टिलोपः, आकर्षश्व इति रूपम्। उपमानात् किम्? शुनो निष्क्रान्तो निश्श्वा। **उत्तरमृग।** उत्तर, मृग, पूर्व एभ्य उपमानाच्च परो यः सक्थिशब्दः तदन्तात्तत्पुरुषाट्टच् स्यादित्यर्थः। **उत्तरसक्थमिति।** उत्तरं सक्थीति विग्रहः। पूर्वं सक्थीति विग्रहे 'पूर्वकाल—' इति समासः। **फलकसक्थमिति।** फल-

---

सप्तमी। अग्रं प्रधानम्। अग्रवाची य उरः शब्दस्तदन्तात्तत्पुरुषाट्टच् स्यात्। अग्राख्यायां किम्, देवदत्तस्योरो देवदत्तोरः। **ग्रामकौटाभ्याम्।** 'जातिसंज्ञयो:' इति नानुवर्तते। ग्रामेति किम्, राज्ञस्तक्षा राजतक्षा। **अतिश्व इति।** श्वानमतिक्रान्तो

८०१ नावो द्विगोः (५—४—९९) नौशब्दान्ताद् द्विगोष्टच्स्यात्, तद्धितलुकि । द्वाभ्यां नौभ्यामागतो द्विनावरूप्यः । 'द्विगोर्लुगनपत्ये' १०८०) इत्यत्र अचि इत्यस्यापकर्षणाद्धलादेर्न लुक् । पञ्चनावप्रियः । त्रिनावम् । अतद्धितलुकीति किम्—पञ्चभिर्नौभिः क्रीतः पञ्चनौः । अर्धाच्च । (५—४—१००) अर्धान्नावष्टच्स्यात् । नावोऽर्धम् अर्धनावम् । लोकात् । ८०३ खार्याः प्राचाम् । (५—४—१०१) द्विगोरर्धाच्च खार्याः स्यात् । द्विखारम्, द्विखारि । अर्धखारम्, अर्धखारी । ८०४ द्वित्रिभ्यामञ्जलेः (५—४—१०२) टज्वा स्याद् द्विगौ । द्व्यञ्जलम्, द्व्यञ्जलि । अतद्धितलुकी

---

कमिव सक्थीति विग्रहे मयूरव्यंसकादित्वात् समासः । सर्वत्र टच्, टिलोपः । द्विगोः । न तु तद्धितलुकीति । 'गोरतद्धितलुकि' इत्यतो मण्डूकप्लुत्या वृत्तेरिति भावः । द्विनावरूप्य इति । तद्धितार्थे समासः, टच्, आवादेशः । मनुष्यभ्योऽन्यतरस्यां रूप्यः' तस्य 'द्विगोर्लुगनपत्ये' इति लुकमाशङ्क्याह—र्लुगनपत्य इत्यत्रेति । अपकर्षणादिति । 'गोत्रेऽलुगचि' इत्युत्तरसूत्रादि पञ्चनावप्रिय इति । पञ्च नावः प्रिया यस्येति विग्रहे उत्तरपदे द्विगुः आवादेशः, द्विनावमिति । द्वयोः नावोः समाहार इति विग्रहे द्विगुः, टच्, देशः, 'स नपुंसकम्' इति नपुंसकत्वम् । त्रिनावमिति । तिसृणां नावां इति विग्रहः, द्विनाववत् । पञ्चनौरिति । तद्धितार्थे समासः । आर्हीयष्ठक्, इति लुक् । अर्धाच्च । अर्धशब्दात् परो यो नौशब्दः तदन्तात् तत्पुरु त्यर्थः । अर्धनावमिति । 'अर्धं नपुंसकम्' इति समासः, टच्, आवादेशः 'परवल्लिङ्गम्–' इति स्त्रीत्वमाशङ्क्याह—क्लीबत्वं लोकादिति । खार्याः प्रा खारीशब्दान्ताद् द्विगोः, अर्धपूर्वकाद् खारीशब्दान्तात्तत्पुरुषाच्चेत्यर्थः । मिति । द्वयोः खार्योः समाहार इति विग्रहे द्विगुः । टच्, 'यस्येति च' । कम्' इति नपुंसकत्वम् । टजभावपक्षे 'स नपुंसकम्' इति नपुंसकत्वान्नपुंसक अर्धखारमिति । खार्या अर्धमिति विग्रहः । 'अर्धं नपुंसकम्' इति समासः 'यस्येति च' । क्लीबत्वं लोकात् । अर्धखारीति । पूर्ववत् समासः । टज 'परवल्लिङ्गम्–' इति स्त्रीत्वम् । एकविभक्तावषष्ठ्यन्तवचनादुपसर्जनत्वाभावान्न अर्धखारि इति क्वचिद् ह्रस्वान्तपाठः, तदा क्लीबत्वं लोकात्, ततो ह्रस्वः । द्वित्रिभ्यामञ्जलेः । शेषपूरणेन सूत्रं व्याचष्टे—टज्वा स्यादिति । विति । द्व्यञ्जलमिति । द्वयोरञ्जल्योः समाहार इति विग्रहे द्विगुः, टच्,

---

जवेनेत्यर्थः । अतिश्वीति । नीचेत्यर्थः । आकर्षः श्वेति । 'उपमितं व्याघ्रा इति समासः । आकृष्यतेऽनेन खलादिगतं धान्यमित्याकर्षः काष्ठविशेषः । त्किम्, निष्क्रान्तः शुनो निश्वा । फलकसक्थमिति । अत एव ज्ञापकादसा वचनेनाप्युपमानस्य समास इति माधवः । द्विनावरूप्य इति । हेतुमनुष्ये इति रूप्यः । पञ्चनौरिति । आर्हीयष्ठक् । 'अध्यर्धपूर्व–' इति लुक् ।



द्विगोरिति । खारीशब्दान्ताद् द्विगोरित्यर्थः । अर्धखारमिति ।

ाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः । ८०५ ब्रह्मणो जानपदाख्यायाम् (५—४—१०४) ब्रह्मान्तात्तत्पुरुषाट्टच्स्यात्समासेन जानपदत्वमाख्यायते चेत् , सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । ८०६ कुमहद्भ्यामन्यतरस्याम् । (५–४–१०५) आभ्यां ब्रह्मणो वा टच्स्यात्तत्पुरुषे । कुत्सितो ब्रह्मा कुब्रह्मः, कुब्रह्मा । ८०७ आन्महतः समानाधिकरणजातीययोः । (६–३–४६) महत आकारो-

---

न्त' 'स नपुंसकम्' । द्व्यञ्जलीति । समाहारे द्विगुः । टजभावे सति नपुंसकह्रस्वत्वम् । अतद्धितलुकीत्येवेति । अनुवर्तत एवेत्यर्थः । अञ्जलिभ्यां क्रीत इति । अञ्जलिशब्दः अञ्जलिपरिमितधान्यादौ वर्तते, केवलस्याञ्जलेः मूल्यत्वासम्भवात् । परिमाणत्वात् ठञ् । 'अध्यर्ध–' इति तस्य लुक् । ब्रह्मणो जानपदाख्यायाम् । जनपदे भवो जानपदः, भावप्रधानो निर्देशः । तस्य केनाख्येत्याकाङ्क्षायां प्रकृतत्वात् समासेनेति लभ्यते, तदाह––समासेन जानपदत्वमाख्यायते चेदिति । जानपदत्वमित्यनन्तरं ब्रह्मण इति शेषः । सुराष्ट्रे ब्रह्मेति । ब्रह्मशब्दोऽत्र पुंल्लिङ्गः । ब्रह्मा विप्रः । 'वेदास्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यमरः । सप्तमीति योगविभागात् समासः । टच् , टिलोपः, 'परवल्लिङ्गम्–' इति पुंस्त्वम् । जानपदेति किम् ? देवब्रह्मा नारदः कुमहद्भ्यामन्यतरस्याम् । कुब्रह्मेति । टजभावे रूपम् । 'कुगतिप्रादयः' इति समासः । कुब्रह्म इति । टचि रूपम् , टिलोपः । अथ महत्पूर्वस्य विकल्पमुदाहरिष्यन् विशेषमाह––आन्महतः । 'अलुगुत्तरपदे' इत्युत्तरपदाधिकारस्थमिदं सूत्रम् । उत्तरपदे इत्यनुवृत्तं समानाधिकरणपदे अन्वेति, न तु जातीय इति, तस्य प्रत्ययत्वात् , तदाह––महत आत्वमित्यादिना । महाब्रह्म इति । महांश्चासौ ब्रह्मा चेति विग्रहः । 'सन्महत्–' इत्यादिना समासः । आत्वम् । सवर्णदीर्घः । 'कुमहद्भ्याम्–' इति टच् । टिलोपः, 'परवल्लिङ्गम्–' इति पुंस्त्वम् । महाब्रह्मेति । टजभावे आत्वे रूपम् । अथ प्रसङ्गादुक्तमात्वविधिं प्रपञ्चयिष्यन् समानाधिकरणे पुनरुदाहरति––महादेव इति । जातीये उदाहरति––महाजातीय इति । महात्सदृश इत्यर्थः । प्रकारवचने जातीयर् , आत्वम् , सवर्णदीर्घः । समानाधिकरणे किमिति । 'आन्महतो जातीये च' इत्येवास्तु । चकारादुत्तरपदसमुच्चये

---

क्लीबत्वं लोकात् । अर्धखारीति 'परवल्लिङ्गम्–' इति स्त्रीत्वम् । टज्वा स्याद् द्विगाविति । द्विगाविति किम् , द्वयोरञ्जलिः द्व्यञ्जलिः । द्व्याञ्जलमिति । समाहारे द्विगुः । अतद्धितलुकीत्येवेति । एतच्च पूर्वसूत्रेऽपि बोध्यम् । अञ्जलिभ्यां क्रीत इति । केवलाञ्जलिः पाणिद्वयम् , तस्य मूल्यत्वासंभवात् , किं तु अञ्जलिपरिमितो व्रीह्यादिर्विवक्षितः । ततश्च परिमाणत्वाद् द्व्यञ्जलिरित्यत्र ठञ् । तस्य तु 'अध्यर्धपूर्व–' इति लुक् । ब्रह्मणो । जनपदे भवो जानपदः । 'द्व्येकयोः–' इतिवद्भावप्रधानो निर्देशस्तस्याख्यायां प्रत्यासत्त्या समासेनेत्येतल्लभ्यते, तदाह––समासेन जानपदत्वमिति । कस्येत्याकाङ्क्षायां संनिधानाद् ब्रह्मण इति लभ्यते । सुराष्ट्रब्रह्म इति । 'सप्तमी' इति योगविभागात्समासः । जानपदेति किम् , देवब्रह्मा नारदः । कुब्रह्म इति । ब्राह्मणपर्यायो ब्रह्मन्शब्दः । आन्महतः । तकार उच्चारणार्थः, न तु सवर्णार्थः

ऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाब्रह्मः, महा
महादेवः । महाजातीयः । समानाधिकरणे किम्—महतः सेवा महत्से
लाक्षणिकं विहाय प्रतिपदोक्तः 'सन्महत्—' (सू ७४०) इति समासो
इति चेत्, महाबाहुः न स्यात् । तस्मात् 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्त
(प ११४) इति परिभाषा नेह प्रवर्तते, समानाधिकरणग्रहणसामर्थ्या

---

सति महत आत्त्वं स्याद् उत्तरपदे जातीये च परत इत्यर्थलाभादेव महादे
दिसिद्धेः किं सामानाधिकरणेनेति प्रश्नः । महतः सेवा महत्सेवेति । अ
समासे आत्त्वनिवृत्त्यर्थं समानाधिकरणग्रहणमिति भावः । ननु षष्ठीसमासो ला
समस्यमानपदं विशिष्य अनुच्चार्य सामान्यशास्त्रत एव निर्वर्तितत्वात् । 'सन्महत्
इत्ययं समासस्तु सन्महदादिशब्दं समस्यमानं विशिष्योच्चार्य विहितत्वात् प्रतिप
ततश्च लक्षणप्रतिपदोक्तपरिभाषया 'आन्महतो जातीये च' इत्यत्र 'सन्महत्-इ
पदोक्तसमासोत्तरपदग्रहणे सति तत एव षष्ठीसमासोत्तरपदनिराससंभवा
समानाधिकरणग्रहणमिति शङ्कते—लाक्षणिकमित्यादिना । परिहरति—म
स्यादिति । महान्तौ बाहू यस्येति विग्रहः । अस्य समासस्य 'अनेकमन्यपदा
सामान्यविहितत्वात् प्रतिपदोक्तत्वाभावात्तदुत्तरपदे परे आत्त्वं न स्यात्, अतः
धिकरणग्रहणमित्यर्थः । ननु कृतेऽपि समानाधिकरणग्रहणे लक्षणप्रतिपदोक्तप
प्रवृत्तेर्दुर्वारत्वाद् महाबाहुरित्यत्रात्त्वं न स्यादेवेत्यत आह—तस्मादिति ।
ब्दार्थमाह—**समानाधिकरणग्रहणसामर्थ्यादिति** । एवं च लक्षणप्रति
परिभाषां बाधित्वा लाक्षणिकस्यापि ग्रहणार्थं समानाधिकरणग्रहणमिति भा
च सुमहान्तौ बाहू यस्य स सुमहाबाहुरित्यत्र कथमात्त्वम् । आत्त्वविधेः पदाङ्ग
स्थत्वाभावेन तदन्तविध्यभावादिति वाच्यम्, उत्तरपदाक्षिप्तपूर्वपदस्य महता
सति तदन्तविधिलाभात् । परममहत्परिमाणवानित्यत्र तु महतः परिमाण
परिमाणम्, परमं महत्परिमाणमिति षष्ठीसमासगर्भः कर्मधारय इति दि

---

इत्याह—**आकारोऽन्तादेशः स्यादिति** । इहोत्तरपदाधिकारे पूर्वपदमाक्षिप्यते
महता विशेषितमिति तदन्तविधिर्लभ्यते । 'ग्रहणवता—' इति निषेधस्तु
विधिविषय इत्युक्तत्वात् । तेन महाबाहुवदतिमहाबाहुरिति प्रयोगो भवति
महत्परिमाणमित्यत्र तु परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषोऽ
इति न तत्रात्वप्रसक्तिरिति वृद्धाः । यत्तु वर्धमानेनोक्तम्—'इष्टकेषीकामाला
इत्यत्र तदन्तविध्युपसंख्यानसामर्थ्यादुत्तरपदाधिकारे तदन्तविधिर्नास्ति, ते
महत आत्वं नेति, तद्भाष्यकैयटविरुद्धम् । तथा हि 'येन विधिः—' इति सूत्र
कारे प्रयोजनमिष्टकचितं पक्वेष्टकचितमिति भाष्ये उदाहृतम्, कैयटेन च
उत्तरपदं गृह्यत इति व्याख्यातम् । एतदेवार्थतः काशिकायामुपनिबद्धम्,
केषीका—' इत्यत्र कात्यायनोक्तमुपसंख्यानमस्ति । ननु प्रतिपदोक्तसमासे
तस्मिन्नेव परे आत्वं स्यान्नान्यत्रेति किमनेन समानाधिकरणग्रहणेनेत्यत
महाबाहुरिति । बहुव्रीहिरयम्, स च सामान्यशास्त्रनिर्वृत्तत्वाल्लाक्षणिक इ

आत्' इति योगविभागादात्वम्, 'प्रागेकादशभ्यः–' (सू १९९५) इति निर्देशाद्वा, एकादश। महतीशब्दस्य 'पुंवत्कर्मधारय–' (सू ७४६) इति पुंवद्भावे कृते आत्वम्, महाजातीया। 'महत आत्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च' (वा ३९५०)। असामानाधिकरण्यार्थमिदम्। महतो महत्या वा घासो महाघासः। महाकरः। महाविशिष्टः। 'अष्टनः कपाले हविषि' (वा ३९५१) अष्टाकपालः। 'गवि च युक्ते' (वा ३९५२)। गोशब्दे परे युक्त इत्यर्थे गम्ये अष्टन आत्वं स्यादिति वक्तव्यमित्यर्थः। अष्टागवं शकटम्। 'अचप्रत्यन्वव–' (सू ९४३) इत्यत्र 'अच्' इति योगविभागाद्बहुव्रीहावप्यच्। अष्टानां गवां समाहारोऽष्टगवम्, तद्युक्तत्वाच्छकटमष्टागवमिति वा। ८०८ द्व्यष्टनः

आन्महतः–' इत्यत्र महत एव ग्रहणाद् 'द्व्यष्टनः–' इत्युत्तरसूत्रे द्व्यष्टनोरेव ग्रहणाद् एकादशेत्यत्र कथमात्वमित्यत आह—आदिति। योगविभागादात्वमिति। योगविभागस्य भाष्यादृष्टत्वादाह—प्रागेकादशभ्य इति निर्देशाद्वेति। एकादशेति। एकश्च दश चेति द्वन्द्वः। एकाधिका दशेति वा। आन्महत इत्यत्र लिङ्गविशिष्टपरिभाषया महतीशब्दस्यापि जातीयर्प्रत्यये परे महतीजातीयेति स्यादित्यत आह—महतीशब्दस्येति। न च परत्वात्पुंवत्त्वं बाधित्वा आत्वं स्यादिति वाच्यम्, 'आन्महतः–' इत्यत्र लिङ्गविशिष्टपरिभाषा न प्रवर्तत इति ङ्याप्सूत्रे भाष्ये उक्तत्वादिति भावः। महत आत्व इति। घास, कर, विशिष्ट एषु परतो महत आत्वं पुंवत्त्वं च वक्तव्यमित्यर्थः। ननु 'आन्महतः-' इत्यात्वे 'पुंवत्कर्मधारय–' इति पुंवत्त्वे च सिद्धे किमर्थमिदमित्यत आह—असामानाधिकरण्यार्थमिदमिति। महाकर इति। महतो महत्या वा कर इत्यर्थः। महाविशिष्ट इति। महतो महत्या वा विशिष्टः, अधिक इत्यर्थः। अष्टन इति। कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः। अष्टाकपाल इति। अष्टसु कपालेषु संस्कृतः पुरोडाश इत्यर्थे तद्धितार्थे द्विगुः। 'संस्कृतं भक्षाः' इत्यण्। 'द्विगोर्लुगनपत्ये' इति लुक्। आत्वं सवर्णदीर्घः। गवि च युक्त इति। वार्तिकमिदम्। तत्सूचयितुमाह—वक्तव्यमित्यर्थ इति। अष्टागवं शकटमिति। अष्टौ गावो यस्येति बहुव्रीहिः। आत्वम्, सवर्णदीर्घः। अष्टभिर्गोभिर्युक्तमित्यर्थः। ननु 'गोरतद्धितलुकि' इति टज्विधेस्तत्पुरुषमात्रविषयत्वाद् अष्टागवमिति कथमित्यत आह—अचप्रत्यन्ववेत्यत्रेति। तत्पुरुषत्वे अष्टगवशब्दष्टजन्त एवेत्याह—अष्टानामिति। तथा च समाहारद्विगोस्तत्पुरुषत्वाद् 'गोरतद्धितलुकि' इति टच् सुलभ इत्यर्थः। नन्वष्टानां गवां समाहार इत्यर्थे शकटे कथमन्वयः, युक्तार्थवृत्तित्वाभावात्, कथं वा आत्वमित्यत आह—तद्युक्तत्वादिति। समाहारद्विगुरूपतत्पुरुषाट्टचि व्युत्पन्नस्य अष्टगवशब्दस्य लक्षणया अष्टभिर्गोभिर्युक्ते वर्तमानस्य आत्वमित्यर्थः। द्व्यष्टनः। शेषपूरणेन सूत्रं व्याचष्टे—आत्स्यादिति। द्विशब्दस्य अष्टन्शब्दस्य च संख्यावाचके उत्तरपदे

अष्टनः कपाले इति। कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः। अष्टाकपाल इति। 'संस्कृतं भक्षाः' इत्यणो 'द्विगोर्लुगनपत्ये' इति लुक्।

संख्यायामबहुव्रीह्यशीत्योः। (६-३-४७) आत्स्यात्। द्वौ च दश च । द्व्यधिका दशेति वा। द्वाविंशतिः। अष्टादश। अष्टाविंशतिः। अबहुव्रीह्य किम्—द्वित्राः, द्व्यशीतिः। 'प्राक्शतादितिवक्तव्यम्' (वा ३९५३) द्विशतम्, द्विसहस्रम्। ८०९ त्रेस्त्रयः। (६-३-४८) त्रिशब्दस्य स्यात्पूर्वविषये। त्रयोदश। त्रयोविंशतिः। बहुव्रीहौ तु त्रिर्दश सुजर्थे बहुव्रीहिः। अशीतौ तु त्र्यशीतिः। प्राक्छतादित्येव, त्रि त्रिसहस्रम्। ८१० विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्। (६-३- द्व्यष्टनोस्त्रेश्च प्रागुक्ते वा स्याच्चत्वारिंशदादौ परे। द्विचत्वारिंशत्, द्वाचत्वा

---

परे आत्स्यात्, न तु बहुव्रीह्यशीत्योरित्यर्थः। द्विशब्दस्योदाहरति—द्वा द्वौ च एकश्च द्व्येकाः, द्व्यधिक एक द्व्येक इत्यादौ तु नास्ति, 'एकादिनवान्तानां द्वन्द्वतत्पुरुषौ न स्तः' इति 'चार्थे—' इति सूत्रे भाष्ये ध्वनितत्वादिति शब्दे स्थितम्। द्वाविंशतिरिति। द्वौ च विंशतिश्चेति समाहारद्वन्द्वः। 'स न इति क्लीबत्वं तु न। किंतु लोकात् स्त्रीत्वम्। इतरेतरयोगस्तु न, अनभि द्व्यधिका विंशतिरिति तत्पुरुषो वा। अथाष्टन्शब्दस्योदाहरति— अष्टा अष्टौ च दश चेति द्वन्द्वः। अष्टाधिका दशेति वा। अष्टाविंशतिरिति। च विंशतिश्चेति समाहारद्वन्द्वः। स्त्रीत्वं लोकात्। अष्टाधिका विंशतिरिति द्वित्रा इति। द्वौ वा त्रयो वेति विग्रहः। 'संख्याव्यय—' इति बहुव्रीहिः। 'ब संख्येये डच्' इति डच्। बहुव्रीहित्वादत्र द्विशब्दस्य आत्त्वं न। द्व्यशीतिरिति चाशीतिश्चेति समाहारद्वन्द्वः। स्त्रीत्वं लोकात्। द्व्यधिका अशीतिरिति वा। अत्र परकत्वाद् द्विशब्दस्यात्त्वं न। प्राक्शतादिति। 'द्व्यष्टनः संख्यायाम्—' पुन शतप्रभृतिसंख्याशब्दे परे न भवतीति वक्तव्यमित्यर्थः। द्विशतमिति। द्वौ च समाहारद्वन्द्वः। द्व्यधिकं शतमिति वा। एवं द्विसहस्रमित्यत्रापि। त्रेस्त्रयः। वेलादिषु त्रयोदशेति पाठात् सकारान्तोऽयमादेश इत्याह—त्रयस्यादिति विषय इति। प्राक्शतात् संख्याशब्दे उत्तरपदे परतः, न तु बहुव्रीह्य त्यर्थः। त्रयोदशेति। त्रयश्च दश चेति, त्र्यधिका दशेति वा विग्रहः। त्रिशब्दस्य त्रयस्, रुत्वम्, उत्वम्, आद्गुणः। एवं त्रयोविंशतिरित्यपि। इति। त्रिरावृत्ता दशेत्यर्थः। 'बहुव्रीहौ संख्येये डच्—' इति डच्। नन्व त्यस्य 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' इति सु समासेऽपि सुचः श्रवणापत्तिरित्यत आह—सुजर्थे बहुव्रीहिरिति। सुजर्थे भ्यावृत्तौ लक्षणया विद्यमानस्य त्रिशब्दस्यैवात्र 'संख्याव्यय—' इति बहुव्रीहि सुजन्तस्येत्यर्थः। त्र्यशीतिरिति। त्रयश्चाशीतिश्चेति समाहारद्वन्द्वः। लोकात्। त्र्यधिकाशीतिरिति वा। त्रिशतमिति। त्रयश्च शतं चेति समा त्र्यधिकं शतमिति वा। एवं त्रिसहस्रमित्यपि। विभाषा चत्वारिंश।

'अर्ध्यर्घपूर्व—' इत्यणो लुगिति केषांचिद् व्याख्यानं तु प्रामादिकम्, 'संस्कृतम्'



अनार्षीयत्वात्। त्रेस्त्रयः। संधिवेलादिषु त्रयोदशेति पाठात्सान्तोऽयमा

ष्टचत्वारिंशत्, अष्टाचत्वारिंशत्। त्रिचत्वारिंशत्, त्रयश्चत्वारिंशत्। एवं पञ्चा-
त्षष्टिसप्ततिनवतिषु । ८११ एकादिश्चैकस्य चादुक् । (६-३-७६)
कादिर्नञ्प्रकृत्या स्यादेकस्य चादुगागमश्च। नञो विंशत्या सह समासे कृते
कशब्देन सह 'तृतीया' इति योगविभागात्समासः । अनुनासिकविकल्पः।
केन न विंशतिः एकान्नविंशतिः-एकाद्नविंशतिः । एकोनविंशतिरित्यर्थः। 'षष
त्वं दतृदशधासूत्तरपदादेष्टुत्वं च धासु वेति वाच्यम्' (वा ४००१--४००२) ।

स्यापि द्व्यष्टनोरित्यस्य सम्बन्धाय—सर्वेषामिति। द्व्यष्टनोस्त्रेश्चेत्यर्थः । तदाह—
व्यष्टनोस्त्रेश्चेति । एकादिश्च । 'न लोपो नञः' इत्यतो नञ इति षष्ठ्यन्त-
नुवर्तते। तच्च प्रथमया विपरिणम्यते। 'नभ्राण्नपात्-' इत्यतः प्रकृत्येत्यनुवर्तते,
दाह—एकादिर्नञ् प्रकृत्येति । एक आदिर्यस्येति विग्रहः । एकस्य चादु-
गमश्चेति । आदुगिति अदुगिति वा छेदः। नञो विंशत्येति । न विंश-
तिरिति विग्रहे नञ्समासे सति नविंशतिशब्दस्य एकशब्देन तृतीयान्तेन सह एकेन
विंशतिरिति विग्रहे समास इत्यन्वयः। ननु तत्कृतत्वाद्यभावात् कथमिह तृतीयासमास
त्यत आह—तृतीयेति योगविभागादिति । अनुनासिकविकल्प इति ।
तीयासमासे कृते सुब्लुकि एक न विंशति इति स्थिते 'न लोपो नञः' इति प्राप्तस्य
कारलोपस्य प्रकृतिभावान्निवृत्तौ एकशब्दस्यादुगागमः, तत्र ककार इत्, उकार
च्चारणार्थः। कित्त्वादन्तावयवः, सवर्णदीर्घः, एकाद् न विंशतिरिति स्थिते 'यरो-
नुनासिके-' इति दकारस्य पक्षे अनुनासिकनकार इत्यर्थः। अदुगागमपक्षेऽपि पर-
पं तु अकारोच्चारणसामर्थ्यान्न भवति। एकेन न विंशतिरिति विग्रहवाक्यम्। एकेन
ना विंशतिर्न भवतीत्यर्थः । एकान्नविंशतिः, एकाद्नविंशतिरिति । अनु-
सिकत्वे तदभावे च रूपम्। एकोनविंशतिरित्यर्थ इति। पर्यवस्यतीति शेषः ।
केन ऊनेति विग्रहः। 'पूर्वसदृश-' इति समासः। सा चासौ विंशतिश्च। षष उत्व-
ति । दतृशब्दे दशन्शब्दे च उत्तरपदे परे धाप्रत्यये च परे षष्शब्दस्य उत्वम्
तरखण्डस्य दतृशब्दस्य दशन्शब्दस्य धाप्रत्ययस्य च आदेर्दकारस्य धकारस्य
टुत्वं च वक्तव्यमित्यर्थः। टुत्वमित्येव छेदः, न तु ष्टुत्वमिति प्रयोजनाभावात्।
सु वा' इति बहुवचनाद्विधार्थधाप्रत्ययस्यैव ग्रहणमिति भाष्यम्। धाप्रत्यये परे
ष उत्वं वा स्यात्। टुत्वं तु उत्वपक्षे तदभावपक्षे च पूर्ववाक्यान्नित्यमेवेति कैयटः।
त्वपक्ष एव नित्यं टुत्वमिति हरदत्तः । षोडन्निति। षड् दन्ता यस्येति बहुव्रीहौ
यसि दन्तस्य दतृ' इति दत्रादेशः, ऋकारस्य इत्वम्। अन्त्यषकारस्य उत्वम्।

नियन्नाह । त्रयस्स्यादिति । सुजर्थे बहुव्रीहिरिति । 'संख्ययाव्यया—'
यादिनेति शेषः । एकादिरिति। अदुगिति छेदः। पररूपं त्वकारोच्चारणसामर्थ्या-
भवति। धासु वेति। 'संख्याया विधार्थे-' इत्यादिना विहितस्य धाप्रत्ययस्यैवेह
हणम्, 'प्रत्ययाप्रत्यययोः-' इति परिभाषया। तेनेह न—षट् दधातीति षड्धा। 'आतोऽ-
पसर्गे कः' टाप् । षोडन्निति । षड् दन्ता अस्य षोडन्। 'वयसि दन्तस्य—' इति



१—साचेत्यादि विग्रहः क्वचिन्नास्ति ।

षोडन्, षोडश, षड्धा, षोढा । ८१२ परवल्लिङ्गं द्वन्द्वतत्पुरुषयो । (२—४—
एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटा
अर्धपिप्पली । 'द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः' (वा
पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः । प्राप्तो जीविकां प्राप्तजी
आपन्नजीविकः । अलं कुमार्यै अलंकुमारिः । अत एव ज्ञापकात्समा

---

आद्गुणः, दकारस्य टुत्वेन डकारः, सुप्रत्यये उगित्त्वान्नुम्, सुलोपः, संयोग
लोपः । तस्यासिद्धत्वान्न दीर्घः । षोडन् इति रूपम् । षोडशेति । षट्
चेति, षडधिका दशेति वा विग्रहः । अन्त्यस्य षकारस्य उत्वम्, आद्गुणः,
रस्य टुत्वेन डकारः । हरदत्तमतमनुसृत्य उत्वाभावपक्षे धासु वेत्यस्योदाह
षड्धेति । 'संख्याया विधार्थे धा' । अन्त्यस्य षकारस्य उत्वाभावपक्षे तु टुत्व
भवति । 'झलां जशोन्ते' इति जश्त्वेन षकारस्य ड इति भावः । उत्वपक्षे
रति—षोढेति । धाप्रत्ययः, अन्त्यस्य षकारस्य उत्वम्, आद् गुणः, टुत्वेन
ढ इति भावः । कैयटमते तु उत्वाभावपक्षेऽपि टुत्वं नित्यमेव । षड्ढा । कैयट
युक्तम्, षोढा, षड्ढा इत्येव भाष्ये उदाहृतत्वादिति शब्देन्दुशेखरे स्थितम् । प
ङ्गम् । परवदिति षष्ठ्यन्ताद्वतिः । तदाह—एतयोः परपदस्येवेति ।
पदमत्र इतरेतरयोगद्वन्द्वपरम्, समाहारद्वन्द्वे 'स नपुंसकम्' इत्यस्य तदपवाद
कुक्कुटमयूर्याविमे इति । अत्र द्वन्द्वे अवयवलिङ्गेनानियमे प्राप्ते नियमार्थ
अर्धपिप्पलीति । 'अर्धं नपुंसकम्' इति तत्पुरुषः । अस्य एकदेशिसमासस्य पूर्व
प्रधानतया पूर्वपदलिङ्गे प्राप्ते उत्तरपदलिङ्गार्थं विधिः । अत्र 'द्वन्द्वतत्पुरुषयोः
षष्ठ्यन्तमर्थपरम् । द्वन्द्वतत्पुरुषार्थयोरित्यर्थः । एवं च कुक्कुटमयूर्याविमे इत्य
पि तदेव लिङ्गम् । द्विगुप्राप्तेति । द्विगु, प्राप्त, आपन्न, अलंपूर्व, गतिसमा
परवल्लिङ्गस्य प्रतिषेधो वक्तव्य इत्यर्थः । पञ्चस्विति । उत्तरपदस्य नपुंसकत्वात्
सस्य नपुंसकत्वं प्राप्तं न भवति, किन्तु विशेष्यलिङ्गमेव । प्राप्तजीविक
अत्र उत्तरपदस्य जीविकाशब्दस्य यल्लिङ्गं तत्समासस्य न भवति । अलं
दाहरति—अलं कुमार्यै, अलंकुमारिरिति । अत्र उत्तरपदकुमारीलिङ्गं
न भवति । नन्वत्र तदर्थादियोगाभावान्न चतुर्थीसमासः । 'पर्यादयो ग्लानाद्यर्थे
न भवति, तस्य समासस्य नित्यत्वेन अलं कुमार्यै इति भाष्ये विग्रहप्रदर्शनानु
ह्यत आह—अत एवेति । 'एकविभक्ति च—' इति कुमारीशब्दस्योपसर्जनत्वाद्

---

दन्नादेशः । परवल्लिङ्गम् । इतरेतरयोगे द्वन्द्वोऽत्र गृह्यते न समाहारे द्वन्द्व
नपुंसकम्' इत्यपवादस्य वक्ष्यमाणत्वात् । सूत्रे 'द्वन्द्वतत्पुरुषयोः' इति न
द्विवचनम् । तथात्वे द्वन्द्वे तत्पुरुषे च यत्परपदं तद्वल्लिङ्गं पूर्वपदस्यातिदिश्ये
पदस्य संबन्धिशब्दत्वेन पूर्वपदाक्षेपकत्वात्, ततश्च 'मयूरीकुक्कुटावित्यत्र
ईकारनिवृत्तिप्रसङ्गः । कुक्कुटमयूर्यौ, अर्धपिप्पलीत्यादौ तु पूर्वपदे स्त्रीप्रत्यय
किं तु षष्ठिद्विवचनमित्याशयेनाह—एतयोरिति । द्वन्द्वतत्पुरुषार्थयोरित्यर्थः ।
नप्रयोगेऽपि तदेव लिङ्गं सिद्धम् । उपमेये षष्ठ्ययुपगमाद्वतिरपि

निष्कौशाम्बिः । ८१३ पूर्ववदश्ववडवौ । (२—४—२७) द्विवचनमतन्त्रम् । अश्ववडवौ । अश्ववडवान् । अश्ववडवैः । ८१४ रात्राह्नाहाः पुंसि । (२—४—२९) एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अनन्तरत्वात्परवल्लिङ्गतापवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते । अहोरात्रः । रात्रेः पूर्वभागः पूर्वरात्रः । पूर्वाह्णः ।

---

गतिसमासमुदाहरति—निष्कौशाम्बिरिति । अत्र कौशाम्बीशब्दलिङ्गं समासस्य भवति । यद्यपि निरादिसमास एवायम्, न तु गतिसमासः, प्रादिग्रहणमगत्यर्थमित्युक्तेः । तथापि गतिसमासग्रहणं प्रादिसमासोपलक्षणमित्याशयः । पूर्ववदश्ववडवौ । अश्वश्च वडवा च इति द्वन्द्वे परवल्लिङ्गं बाधित्वा पूर्ववल्लिङ्गार्थमिदम् । अश्ववडवाविति द्वन्द्वः पूर्वपदस्य लिङ्गं लभत इत्यर्थे बहुवचने विभक्त्यन्तरे च न स्यादित्यत आह—द्विवचनमतन्त्रमिति । उपलक्षणमिदम् । द्विवचनं विभक्तिश्चेति द्वयमपि अविवक्षितमित्यर्थः । पूर्ववद्ग्रहणमत्र लिङ्गम् । अन्यथा निपातनादेव सिद्धे किं तेनेति भावः । रात्राह्नाहाः । द्वन्द्वतत्पुरुषयोरित्यनुवृत्तं प्रथमाबहुवचनेन विपरिणतं रात्रादिभिर्विशेष्यते, तदन्तविधिः । रात्राह्नाहान्तद्वन्द्वतत्पुरुषाः पुंसीत्यर्थः । फलितमाह—एतदन्ताविति । परवल्लिङ्गतापवादः । ननु अहोरात्र इति समाहारद्वन्द्वे 'स नपुंसकम्' इति नपुंसकत्वप्रसङ्गः । न च नपुंसकत्वस्याप्ययं पुंस्त्वविधिरपवाद इति वाच्यम्, 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्' इति न्यायेन अस्य पुंस्त्वविधेः परवल्लिङ्गतामात्रापवादत्वात् । तस्मादहोरात्राविति इतरेतरद्वन्द्व एवेहोदाहर्तुमुचित इत्यत आह—अनन्तरत्वादिति । अयमिति । पुंस्त्वविधिरिति शेषः । अहोरात्र इति । अहश्च रात्रिश्च तयोस्समाहार इति द्वन्द्वे परत्वान्नपुंसकत्वम् अपवादत्वात् परवल्लिङ्गमपि बाधित्वा अनेन पुंस्त्वम् । 'अहस्सर्वैकदेश–' इत्यच् । पूर्वाह्ण इति । अह्नः पूर्वमित्येकदेशिसमासः । 'राजाहस्सखिभ्यः' इति टच् । 'अह्नोऽह्नः'

---

इत्याशयेनाह—परपदस्येवेति । भाष्ये तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति प्रत्याख्यातमिदं सूत्रम् । अस्मिंश्च प्रत्याख्याते तुल्यन्यायत्वाल्लिङ्गानुशासनं सर्वमेव प्रत्याख्यातम् तथापि तत्प्रौढिवादमात्रम् । अन्यथा व्याकरणस्यैव वैयर्थ्यप्रसङ्गात् । गतिसमासेष्विति । गतिग्रहणं प्रादीनामुपलक्षणं मुख्यस्य गतेरसंभवादित्याशयेन उदाहरति । निष्कौशाम्बिरिति । अतन्त्रमिति । अत्र च लिङ्गं पूर्ववद्ग्रहणम् । अन्यथा निपातनादेव सिद्धे किं तेनेति भावः । इह समासार्थस्य वा पूर्ववल्लिङ्गातिदेशः, उत्तरपदार्थस्य वा, उभयथाप्यश्ववडवौ शोभनावित्यनुप्रयोगेऽपि पुंस्त्वं सिध्यति । ननु समासार्थस्य पुंस्त्वेऽपि स्वाश्रयस्त्रीत्वस्यानिवर्तनाट्टापः श्रवणप्रसङ्गः । न चातिदेशवैयर्थ्यम्, शसि नत्वप्रवृत्त्या अनुप्रयोगे पुंल्लिङ्गत्वभावेन च तत्सार्थक्यादिति चेदत्राहुः—इहैव निपातनाद् 'अश्ववडवपूर्वापराधरोत्तराणाम्–' इत्यत्र निपातनाद्वा टापो निवृत्तिरिति । अहोरात्र इति । प्राचा तु अहोरात्रमित्युदाहृतम् । तन्नेति प्रागेवोक्तम् । अत्र वदन्ति 'रात्राह्ना–' इत्यनेन रात्रादीनामेव पुंस्त्वं विधीयते । तदन्तस्य तु 'परवल्लिङ्गम्-' इत्येव सिध्यति । अत एव भिन्नविषयत्वाद् 'विप्रतिषेधे परं कार्यम्' इति न प्रवर्तते । एवं च 'रात्राह्नाहाः' इति पुंस्त्वाप्रवृत्त्या समाहारे 'स नपुंसकम्' इत्येव भवति, परवल्लिङ्गापवादत्वा-

द्व्यहः 'संख्यापूर्वं रात्रं क्लीबम्' (लि १३१)। द्विरात्रम्, त्रिरात्रम्, गणरा
८१५ अपथं नपुंसकम्। (२—४—३०) तत्पुरुषः इत्येव। अन्यत्र
अपथो देशः। कृतसमासान्तनिर्देशान्नेह—अपन्थाः। ८१६ अर्धर्चाः
च। (२—४—३१) अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः।
अर्धर्चम्। ध्वजः, ध्वजम्। एवं तीर्थशरीरमण्डपीयूषदेहाङ्कुशकलशेत्यादि

---

इत्यह्नादेशः। परवल्लिङ्गं नपुंसकं च बाधित्वा पुंस्त्वम्। द्व्यह इति। द्वयोरह्नोः
हार इति विग्रहे द्विगुः, टच्, 'न संख्यादेस्समाहारे' इत्यह्नादेशनिषेधः। परव
बाधित्वा पुंस्त्वम्। उत्तरपदस्याहन्शब्दस्य अकारान्तत्वाभावान्न स्त्रीत्वम्, समास
समासभक्तत्वात्। संख्यापूर्वम्। लिङ्गानुशासनसूत्रमिदम्। न त्वष्टाध्यायीस्थं
नापि वार्तिकम्, भाष्ये अदर्शनात्। 'रात्राह्नाहाः पुंसि' इत्यस्यायमपवादः। द्वि
मिति। समाहारद्विगुः। 'अहस्सर्वैकदेश—' इत्यच्। गणरात्रमिति। गण
बहुपर्यायः, 'बहुगणवतु—' इति संख्यात्वम्। गणानां रात्रीणां समाहार इति
अच्। अपथं नपुंसकम्। न पन्था इति विग्रहे नञ्समासे नञो नस्य
'ऋक्पूः—' इत्यप्रत्यये टिलोपे अपथशब्दः, स नपुंसकमित्यर्थः। परवल्लिङ्गताप
तत्पुरुष इत्येवेति। 'परवल्लिङ्गम्—' इत्यतस्तदनुवृत्तेरिति भावः। द्वन्द्वग्र
नानुवर्तते, अयोग्यत्वात्। अन्यत्र त्विति। बहुव्रीहावित्यर्थः। अपन्था
'पथो विभाषा' इति समासान्तविकल्पः। 'पथः संख्याव्ययादेः' इति वक्ष्यमाण
केन गतार्थमेवेदं सूत्रम्। अर्धर्चाः। बहुवचनात्तदादीनां ग्रहणमित्याह—अ
दय इति। अर्धर्चमिति। ऋचोऽर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति स

---

दिति। तन्न। उक्तरीत्या द्व्यहत्र्यहादावपि नपुंसकत्वप्रसङ्गात्। न चेष्टापत्तिः। द्व्यह
प्राचाप्युदाहृतत्वेन स्वमूलग्रन्थेन सह विरोधापत्तेः। 'ते तु त्रिंशदहोरात्रः' इत्यादि
विरोधाच्च। तस्माद्रात्राद्यन्तस्यैवायं पुंस्त्वविधिः, 'द्वन्द्वतत्पुरुषयोः—' इति प्र
तथा च भिन्नविषयत्वाद्यभावाद् 'रात्राह्नाहाः—' इति पुंस्त्वं समाहारनपुंसकतां
बाधत एव। संख्यापूर्वमिति। अत्र च 'अपथपुण्याहौ नपुंसकौ'। 'संख्यापूर्वा
इति लिङ्गानुशासनसूत्रं मूलम्। संख्याग्रहणेषु कृत्रिमाकृतिमन्यायो न प्रवर्तते 'द्व
संख्यायाम्-' इति सूत्रे अशीतिपर्युदासादित्याशयेनोदाहरति। द्विरात्रम्। त्रिरा
गणरात्रमिति। गणानां बहुरात्रीणां समाहार इति विग्रहः। अपथं नपुं
तत्पुरुष इत्येवेति। द्वन्द्वग्रहणं तु नानुवर्तते अयोग्यत्वादिति भावः। अपन्था
'पथो विभाषा' इति समासान्तविकल्पः। इदं सूत्रं शक्यमकर्तुम्। 'पथः संख्या
इति वक्ष्यमाणवार्तिकेन गतार्थत्वात्। प्रसङ्गादाह अर्धर्चा इति। इह केषां
भेदेन व्यवस्थेष्यते सा च व्यवस्था मद्यमकरन्दमाक्षिकाणां वाची मधुशब्दो द्वि
चैत्रादिवाची तु पुंल्लिङ्गः। क्रियावचनस्तु विशेष्यलिङ्ग इत्येवं यथायथं
'अर्धर्चाः पुंसि च' 'स नपुंसकम्' इत्यनयोर्मध्ये 'जात्याख्यायाम्—' इति
सूत्र्यः सङ्गतिरिह चिन्त्या। बहूनां वचनं प्रतिपादनमिति व्याख्यानात्

८१७ जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ( १—२—५८ ) एकोऽप्यर्थो वा बहुवद्भवति । ब्राह्मणाः पूज्याः—ब्राह्मणः पूज्यः । ८१८ अस्मदो द्वयोश्च । (१—२—५९) एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात् । वयं ब्रूमः । पक्षे, अहं ब्रवीमि, आवां ब्रूव इति वा । 'सविशेषणस्य प्रतिषेधः' (वा ७२१) । पटुरहं ब्रवीमि । ८१९ फल्गुनीप्रोष्ठपदानां च नक्षत्रे । (१—२—६०) द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात् । पूर्वे फल्गुन्यौ, पूर्वाः फल्गुन्यः । पूर्वे प्रोष्ठपदे—पूर्वाः प्रोष्ठपदाः । नक्षत्रे किम्—'फल्गुन्यौ माणविके । ८२० तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् । ( १—२—६३ ) बहुत्वं द्वित्ववद्भवति । तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू । तिष्येति किम्—²विशाखानूराधाः । नक्षत्रेति किम्—तिष्यपुनर्वसवो माणवकाः ।

---

'ऋक्पूः–' इति अच् । परवल्लिङ्गं स्त्रीत्वं बाधित्वा पुंनपुंसकत्वविकल्पः । जात्याख्यायाम् । आकृत्यधिकरणन्यायेन घटादिशब्दानां जातिवाचकत्वाज्जातेश्चैकत्वादेकवचनमेव स्यादित्यारम्भः । जातिशब्दे एकत्वे बहुवचनं वा स्यादित्यक्षरार्थः । तथा सति ब्राह्मणाः भोज्या इत्यादौ विशेषणान्न स्यादित्याशङ्क्य एकस्मिन्नर्थे विद्यमानः शब्दो बहूनर्थान् वक्ति, एकार्थो बहुवद्भवतीति लभ्यते इत्यभिप्रेत्याह—एकोऽप्यर्थ इति । बहुत्वप्रयुक्तं कार्यं लभत इत्यर्थः । अस्मदो द्वयोश्च । सविशेषणस्येति । 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः' इत्यत्र तु अवयवगतबहुत्वाभिप्रायं बहुवचनम् । फल्गुनी । नक्षत्रे इति प्रथमाद्विवचनम् । नक्षत्रे यद्यभिधीयेते इत्यर्थः । चेन द्वयोरित्यनुकर्षः । तदाह—द्वित्वे इति । पूर्वे प्रोष्ठपदे इति । स्त्रीत्वादौङश्शीभावः । 'प्रोष्ठपदा भाद्रपदा स्त्रियाम्' इत्यमरः । फाल्गुन्यौ माणविके इति । फल्गुनीनक्षत्रयुक्तकाले जाते इत्यर्थः । 'नक्षत्रेण युक्तः–' इत्यण् । 'लुबविशेषे' इति लुप् । ततो जातार्थे 'फल्गुन्याषाढाभ्यां टानौ' इति टः । टित्त्वाद् ङीप् । तिष्यपुनर्वस्वोः । विशाखानुराधा इति । विशाखे च अनुराधाश्चेति विग्रहः । तिष्यतिपुनर्वसव इति । तिष्यश्च पुनर्वसू चेति विग्रहः । तिष्यशब्दात् पुनर्वसुशब्दाच्च 'नक्षत्रेण युक्तः-' इत्यण् । 'लुबविशेषे' इति लुप् । ततो जातार्थे सन्धिवेलाद्यण् । 'श्रविष्ठाफल्गुनी—'

---

देश इत्याशयेनाह । एकोप्यर्थो वा बहुवदिति । एवं च विशेषणादपि सिद्धमिति ध्वनयन्नुदाहरति—ब्राह्मणाः पूज्या इति । जात्याख्यायां किम्, देवदत्तो यज्ञदत्तः । एकस्मिन् किम्, व्रीहियवौ । अस्मदो द्वयोश्च । चाद् 'एकस्मिन् बहुवचनमन्यतरस्याम्' इति च वर्तते तदेवाह—एकत्वे द्वित्वे च विवक्षित इत्यादि । फल्गुनीप्रोष्ठपदानां च । चकारेण द्वयोरनुकर्षणादाह—द्वित्व इति । फल्गुन्यौ माणविके इति । फल्गुनीशब्दाद् 'नक्षत्रेण युक्तः कालः' इत्यण् । तस्य 'लुबविशेषे' इति लुप् । ततो जातार्थे फल्गुन्यषाढाभ्यां टानौ' इति टः, टित्त्वाद् ङीप् । न चायं गौणः, यौगिकत्वात् । तथा च गौणमुख्यन्यायाप्रवृत्त्या नक्षत्रग्रहणमावश्यकमिति भावः । तिष्यपुनर्वस्वोः विशाखानुराधा इति । विशाखे चानुराधाश्चेति विग्रहः ।

---

१ 'पूर्वफल्गुन्यौ' इति क्वचित् पाठः । २ 'नुराधः' इति क्वचित् पाठः ।

८२१ स नपुंसकम् । (२—४—१७) समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् परवल्लिङ्गापवादः । पञ्चगवम् । दन्तोष्ठम् । 'अकारान्तोत्तरपदो द्विगुः स्त्रियामि (वा १५५६) । 'पञ्चमूली । 'आबन्तो वा' (वा १५५७) पञ्चखट्वम्, पञ्चखट्व 'अनो नलोपश्च, वा च द्विगुः स्त्रियाम्' (वा १५५८) पञ्चतक्षी, पञ्चतक्ष

---

इत्यादिना लुक् । जात्याख्यायामित्यादिचतुस्सूत्र्या अत्र संगतिश्चिन्त्या । स नपुंसक 'द्विगुरेकवचनम्' इति द्विगुः 'द्वन्द्वश्च प्राणि—' इति द्वन्द्वश्च तच्छब्देन परामृश्य तौ च समाहारार्थावेव विवक्षितौ, व्याख्यानात् । तदाह—समाहार इति पञ्चगवमिति । पञ्चानां गवां समाहार इति द्विगुः । दन्तोष्ठमिति । दन्ता ओष्ठौ चेति विग्रहः । 'द्वन्द्वश्च प्राणि—' इति समाहारद्वन्द्वः । अकारान्तो अकारान्तम् उत्तरपदं यस्येति विग्रहः । 'स नपुंसकम्' इत्यस्यापवादः । पञ्चमूली समाहारद्विगुः, स्त्रीत्वम्, 'द्विगोः' इति ङीप् । आबन्तो वेति । स्त्रियां वक्तव्यमित्यर्थः । पञ्चखट्वमिति । समाहारद्विगुः । नपुंसकत्वे ह्रस्वः पञ्चखट्वीति । उपसर्जनह्रस्वत्वे अदन्तत्वाद् 'द्विगोः' इति स्त्रीत्वपक्षे ङीप् । नलोपश्चेति । अन इत्यावर्तते । एकं प्रथमया विपरिणतं द्विगुरित्यत्रान्वे तदन्तविधिः । अन्नन्तो द्विगुः स्त्रियां वा स्यात्, अनो नस्य लोपः स्यादित्य वाग्रहणं स्त्रियामित्यत्रैव संबध्यते, न तु नलोपेऽपि । तेन स्त्रीत्वाभावेऽपि नलो पञ्चतक्षीति । पञ्चानां समाहार इति द्विगुः, स्त्रीत्वम्, नलोपः, 'द्विगोः' इ ङीविति भावः । पञ्चतक्षमिति । समाहारद्विगुः । स्त्रीत्वाभावपक्षे 'स नपुंस इति नपुंसकत्वम्, नलोप इति भावः । न चान्तर्वर्तिनीं विभक्तिमाश्रित्य तक्षन्शब्द सुबन्तत्वेन पदत्वाद् 'न लोपः प्रातिपदिक—' इत्यनेन नलोपो भविष्यतीति वाच्

---

तिष्यपुनर्वसव इति । तिष्यपुनर्वसुशब्दाभ्यां पूर्ववद् 'नक्षत्रेण युक्तः का इत्यण्, 'लुबविशेषे' इति च लुप् । ततो जातार्थे 'संधिवेला—' आदिसूत्रेण अण्, त तु श्रविष्ठाफल्गुन्यनुराधा—' इत्यादिना लुक् । नक्षत्र इत्यनुवर्तमाने पुनर्नक्षत्र पर्यायाणामपि यथा स्यादित्येतदर्थमित्याकरः । एवं च 'सिध्यपुनर्वसू' इत्यपि सि तीति दिक् । बहुवचनस्य किम्, इदं तिष्यपुनर्वसु । 'चार्थे द्वन्द्वः' इति समाहारद्व यम् । स नपुंसकम् । 'अनन्तरस्य—' इति न्यायोऽत्र नाश्रीयते, तथात्वे द्विगुसंग्रह स्यादित्याशयेनाह—द्विगुर्द्वन्द्वश्चेति । अत्र व्याचक्षते—प्रकरणादेवानुवाद्यलाभे 'स' मेतत्प्रकरणानुपात्तस्यापि समाहारद्वन्द्वस्य संग्रहार्थम्, तेन संज्ञापरिभाषायामित्यादि मिति । पञ्चगवमिति । 'तद्धितार्थे—' इत्यादिना समाहारे द्विगुः । दन्तोष्ठमिति । द्व प्राणि-' इत्यादिना समाहारे द्वन्द्वः । पञ्चखट्वमिति । नपुंसकह्रस्व । पञ्चखट्वीति । उप र्जनह्रस्वत्वे सत्यदन्तत्वाद् द्विगोः' इति स्त्रीत्वपक्षे ङीप् । अनो नलोपश्चेति । पदत्वे चापदादिविधौ-' इति प्रत्ययलक्षणप्रतिषेधादप्राप्तो नलोप इति भावः । इह वाग्र स्त्रियामित्यनेन संबध्यते, न तु पूर्वेण । तेन नित्यो नलोप इत्याह—पञ्चतक्षमित्या



१ 'पूर्वो' इति क्वचित् ।

'पात्राद्यन्तस्य न' (वा १५५२)। पञ्चपात्रम्। त्रिभुवनम्। चतुर्युगम्। पुण्यसुदिनाभ्यामह्नः क्लीवतेष्टा' (वा १५५३) पुण्याहम्। सुदिनाहम्। 'पथः संख्याव्ययादेः' (वा १५५४)। संख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीवमित्यर्थः। त्रयाणां पन्थास्त्रिपथम्। विरूपः पन्था विपथम्। कृतसमासान्तनिर्देशान्नेह—सुपन्थाः, अतिपन्थाः। 'सामान्ये नपुंसकम्' (वा ५०४३) मृदु

---

'उत्तरपदत्वे च–' इति प्रत्ययलक्षणनिषेधात्। पात्राद्यन्तस्य नेति। पात्रादिर्गणः। तदन्तस्य समाहारद्विगोः न स्त्रीत्वमिति वक्तव्यमित्यर्थः। पञ्चपात्रम्, त्रिभुवनम्, चतुर्युगमिति। स्त्रीत्वाभावे 'स नपुंसकम्' इति नपुंसकत्वमिति भावः। पुण्येति। पुण्यसुदिनाभ्यां परो यः अह्नशब्दः तदन्तस्य तत्पुरुषस्य नपुंसकत्वं वक्तव्यमित्यर्थः। 'रात्राह्ना–' इत्यस्यापवादः। पुण्याहमिति। पुण्यम् अहरिति कर्मधारयः, 'राजाहः—' इति टच्, टिलोपः। 'उत्तमैकाभ्यां च' इति अह्नादेशनिषेधः। सुदिनाहमिति। सुदिनम् अहरिति कर्मधारयः, टच्, टिलोपः, प्रशस्तपर्यायः सुदिनशब्द इति न पौनरुक्त्यम्। पथः संख्याव्ययादेरिति। नपुंसकत्वं वक्तव्यमिति शेषः। संख्याव्ययेति समाहारद्वन्द्वः। संख्याव्ययमादिरिति कर्मधारयः, दिग्योगे पञ्चमी, पर इति शेषः, पथ इति कृतसमासान्तादकारान्तात् प्रथमा। तदाह—संख्याव्ययादेरिति। परवल्लिङ्गतापवादः। त्रिपथमिति। 'ऋक्पूः—' इति अप्रत्ययः, टिलोपः। एवं विपथमित्यपि। 'प्रादयो गताद्यर्थे—' इति समासः। सुपन्थाः, अतिपन्था इति। 'स्वती पूजायाम्' इति समासः। 'न पूजनात्' इति समासान्तनिषेधः। आवश्यकत्वादनेन सिद्धे 'अपथं नपुंसकम्' इति न कार्यम्। सामान्ये नपुंसकमिति। न्यायसिद्धमेतत्, विशेष्यविशेषणासंनिधाने सति स्त्रीत्वपुंस्त्वयोरनभिव्यक्तौ 'उभयोरन्तरं यच्च तदभावे नपुंसकम्' इति लक्षणलक्षित-

---

पात्राद्यन्तस्येति। स्त्रीत्वमिति शेषः। आकृतिगणोऽयम्। सुदिनाहमिति। प्रशस्तपर्यायः सुदिनशब्दः, 'सुदिनासु सभासु कार्यमेतत्प्रतिभिन्वीत विशेषतः स्वयं च' इत्यादिप्रयोगात्। पथः संख्याव्ययेति। संख्याव्ययरूपो य आदिस्तस्मादित्यर्थः। त्रिपथम्, विपथमिति। 'ऋक्पूरब्धूः–' इत्यप्रत्ययः। सुपन्थाः, अतिपन्था इति। 'न पूजनात्' इति समासान्तनिषेधः। कथं तर्हि 'व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः' इत्यमर इति चेत्, प्रमाद एवायमिति बहवः। मनोरमायां तु 'पथे गतौ' इत्यस्मात् पचाद्यचि पथति व्याप्नोतीति व्युत्पादितः पथशब्दोऽस्ति। तथा च त्रिकाण्डशेषः 'वाटः पथश्च मार्गः स्यात्' इति। पथशब्देन समासे पुंस्त्वमुपपन्नम्। न चैवं विपथसिद्धावपि कापथो न स्यात्कादेशस्य दुर्लभत्वादिति वाच्यम्, 'ईषदर्थे च' इति तत्संभवात्कुत्सायामर्थतः पर्यवसानादिति स्थितम्। केचित् तु 'पथः संख्या–' इति वार्तिके कृतसमासान्तस्यैव ग्रहणं न तु पचाद्यजन्तस्य, इत्यत्रबीजाभावाद्विपथः कापथ इति प्रयोगो दुरुपपाद एवेत्याहुः। अत्र माधवः—परवल्लिङ्गापवादत्वात्तत्पुरुष एवेदं प्रवर्तते नान्यत्र। विपथा नगरी, बहुव्रीहिरयम्। पन्थानमतिक्रान्ता अतिपन्था। इहापि न, 'द्विगुप्राप्ता-' इत्यादिना परवल्लिङ्गतायाः प्रतिषेधादिति। सामान्ये नपुंसकमिति। अनियतलिङ्गविषयकमिदम्।

पचति । प्रातः कमनीयम् । ८२२ तत्पुरुषोऽनञ्कर्मधारयः । (२—४—
अधिकारोऽयम् । ८२३ संज्ञायां कन्थोशीनरेषु । (२—४—२०)
न्तस्तत्पुरुषः क्लीबं स्यात्, सा चेदुशीनरदेशोत्पन्नायाः कन्थायः संज्ञा ।
मस्यापत्यानि सौशमयः, तेषां कन्था सौशमिकन्थम् । संज्ञायाम् किम्—
कन्था । उशीनरेषु किम्—दाक्षिकन्था । ८२४ उपज्ञोपक्रमं तदाद्याचि
सायाम् । (२—४—२१) उपज्ञान्तः उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्या

---

नपुंसकत्वस्यैव न्याय्यत्वात् । अत एव 'दाण्डिनायन—' इति सूत्रभाष्ये
स्वरसर्वनाम, नपुंसकं लिङ्गसर्वनामेत्युक्तम् । मृदु पचतीति । क्रियाविशेषणं
द्वितीयान्तम् । पचेर्हि विक्लित्त्यनुकूलव्यापारोऽर्थः । तत्र विक्लित्त्यंशे मृदुत्वम
विक्लित्तिश्च व्यापारे साध्यत्वेनान्वेति । तथा च मृदु पाकं करोतीत्यर्थः ।
धातूपात्तव्यापारं प्रति कर्मीभूतेन विक्लित्त्यंशेन सामानाधिकरण्याद् मृद्विति
यत्र तु धात्वर्थः करणत्वेनान्वेति 'यजेत स्वर्गकामः' इत्यादौ, तत्र हि यागेन
कुर्यादित्यर्थः । तत्र क्रियाविशेषणस्य तृतीयान्तत्वमेव 'ज्योतिष्टोमेन
स्वर्गकामः' इत्यादावित्यन्यत्र विस्तरः । प्रातः कमनीयमिति । रमणीयमित्
अत्रापि प्रातरित्यव्ययस्य विशेष्यस्यालिङ्गत्वात् तद्विशेषणस्य कमनीयशब्दस्यान
लिङ्गविशेषावगमकत्वाभावाद् नपुंसकत्वमेवेति भावः । इदं चानियतलिङ्गविषय
तेन आदिं वचति प्रातरादिरित्यत्र न भवति, आदिशब्दस्य नियत लिङ्गत्वा
तत्पुरुषोऽनञ् । नञ्समासकर्मधारयाभ्यां भिन्नस्ततपुरुषो वक्ष्यमाण
भागित्यर्थः । तदाह—अधिकारोऽयमिति । 'परवल्लिङ्गम्—'इत्यतः प्रा
शेषः । संज्ञायां कन्था । सुगममेव । उपज्ञा । उपज्ञायते प्रथमं
इत्युपज्ञा । 'स्त्रियां क्तिन्' इत्यधिकारे 'आतश्चोपसर्गे' इति कर्मण्यङ् । उप
आरभ्यते इत्युपक्रमः । कर्मणि घञ् । 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधः ।
चोपक्रमश्चेति समाहारद्वन्द्वः । तत्पुरुष इत्यस्य विशेषणमिदम्, तदन्तवि
'स नपुंसकम्' इत्यतो नपुंसकमित्यनुवर्तते । तदाह—उपज्ञान्त उपक्रम
श्चेति । तच्छब्देन उपज्ञोपक्रमौ विवक्षितौ । आदिशब्दो भावप्रधानः प्रा

---

तेनादिः पचति, प्रातरादिति पुंस्त्वमेव । मृदु पचतीति । क्रियाविशेषण
द्वितीयान्तम् । धातूपात्तभावनां प्रति हि फलांशः कर्मीभूतः । तथा च फलसा
धिकरण्ये द्वितीया । अत एव सक्तूल्वावित्यादौ कारकपूर्वकत्वाद्यण् । यत्र तु भा
प्रति करणतया धात्वर्थविशेषोऽन्वेति तत्र तद्विशेषणानां तृतीयान्ततैव, ज्योति
यजेतेत्यत्र यथा । एतच्च 'करणे यजः' इति सूत्रे वृत्तिपदमञ्जर्योः स्पष्टम् ।
रुषोऽनञ् । नञ्समासकर्मधारयाभिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभाग्भवतीति सू
उपज्ञो । उपज्ञायत इत्युपज्ञा । 'आतश्चोपसर्गे' इति कर्मण्यङ् । उपक्रम्यत
पक्रमः । कर्मणि घञ् । 'नोदात्तोपदेशस्य—' इति वृद्धिप्रतिषेधः । उपज्ञा च उप
श्चेति समाहारद्वन्द्वः । स चानुवर्तमानस्य तत्पुरुषस्य विशेषणम् । तच्छब्देन उप
क्रमौ परामृश्यते । तदेतत्सकलमभिप्रेत्याह—उपज्ञान्त इत्यादि । आख्यातु

तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते । पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः । ८२५ छाया बाहुल्ये । (२—४—२२) छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्वपदार्थबाहुल्ये—इक्षूणां छाया इक्षुच्छायम् । 'विभाषा सेना–' ( सू ८२८ ) इति विकल्पस्यायमपवादः । 'इक्षुच्छायानिषादिन्यः' इति तु 'आ समन्तान्निषादिन्यः' इत्याङ्श्लेषो बोध्यः । ८२६ सभा राजाऽमनुष्यपूर्वा । ( २–४–२३ ) राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम् । ईश्वरसभम् । 'पर्यायस्यैवेष्यते' (वा ५१९) नेह–राजसभा, चन्द्रगुप्तसभा । अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षस्सभम्, पिशाचसभम् । ८२७ अशाला च । ( २–४–२४ ) सङ्घा-

---

वर्तते । तयोरादिः प्राथम्यं तदादिः । तस्य आचिख्यासा आख्यातुमिच्छा, विवक्षायामिति यावत् । तदाह—तयोरादिरित्यादि । पाणिनेरुपज्ञेति । कर्तरि षष्ठी । पाणिन्युपज्ञं ग्रन्थ इति । पाणिनिना प्रथमं ज्ञायमान इत्यर्थः । इदं प्रकरणं परवल्लिङ्गत्वस्य विशेष्यनिघ्नत्वस्य चापवादः । नन्दोपक्रमं द्रोण इति । नन्देनारभ्यमाण इत्यर्थः । कर्तरि षष्ठ्याः समासः । छाया बाहुल्ये । छायया तत्पुरुषस्य विशेषणात् तदन्तविधिमभिप्रेत्याह—छायान्त इति । पूर्वपदार्थेति । कस्य बाहुल्ये इत्याकाङ्क्षायाम् आपादकद्रव्यनिमित्तकत्वात् छायायाः तद्बाहुल्ये इति गम्यते । तच्चापादकद्रव्यमर्थात् पूर्वपदार्थभूतमिति भावः । बाहुल्ये किम् ? कुड्यस्य छाया कुड्यच्छाया । सभा । राजा च अमनुष्यश्च राजामनुष्यौ, तौ पूर्वौ यस्याः सा राजामनुष्यपूर्वा इति विग्रहः । सभया तत्पुरुषविशेषणात्तदन्तविधिः । राजशब्देन राजपर्याय एव विवक्षितः, न तु राजन्शब्दः । तदाह—राजपर्यायपूर्व इति । इनसभम्, ईश्वरसभमिति । इनस्य ईश्वरस्य वा सभेति विग्रहः । इनेश्वरशब्दौ राजपर्यायाविति भावः । पर्यायमात्रग्रहणे प्रमाणं दर्शयति—पर्यायस्यैवेष्यत इति । भाष्यकृतेति शेषः । 'स्वं रूपम्–' इति सूत्रे 'जित्पर्यायवचनस्यैव राजाद्यर्थम्' इति वार्तिकं भाष्ये पठितमिति भावः । राजसभेति । राजन्शब्दपूर्वकत्वेऽप्यत्र राजपर्यायपूर्वकत्वं नास्तीति भावः । चन्द्रगुप्तसभेति । चन्द्रगुप्त इति राजविशेषस्य नाम, न तु तत्पर्याय इति भावः । नन्वमनुष्यपूर्वकत्वाद् देवसभेत्यादावपि स्या-

---

आचिख्यासेतीच्छासना इह विवक्षैव शब्दप्रवृत्तौ नियामिका, न तु वस्तुस्थितिरिति ज्ञाप्यते । तेन 'त्वदुपक्रमसौजन्यम्' इत्याद्यपि सिध्यति । पाणिनेरिति । कर्तरि षष्ठी । नन्दोपक्रममिति । 'नन्दस्योपक्रममिति विग्रहः । छाया बाहुल्ये । बाहुल्ये सति या छाया तद्वाची यश्छायान्तस्तत्पुरुष इत्यर्थः । इह कस्य बाहुल्य इत्यपेक्षायामावरकद्रव्यनिमित्तत्वाच्छायायास्तद्बाहुल्य इति गम्यते । तच्चावरकं पूर्वपदार्थभूतमेवेत्याशयेनाह—पूर्वपदार्थबाहुल्य इति । पूर्वपदार्थबाहुल्ये किम्, कुड्यस्य च्छाया कुड्यच्छाया । प्रश्लेषो बोध्य इति । केचित्तु—'इक्षुच्छायनिषादिन्यः' इत्येव पठन्ति । सभा । इनसभमित्यादि । इनशब्दोऽत्र राजपर्यायः, ईश्वरशब्दश्च । ननु 'स्वं रूपम्–' इति [illegible] ग्रहणं युक्तं न पर्यायस्येत्यत आह—पर्यायस्यैवे-

तार्थी या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात्। स्त्रीसभम्। स्त्रीसङ्घात इ
अशाला किम्—धर्मसभा। धर्मशालेत्यर्थः। ८२८ विभाषा सेनासुरा
शालानिशानाम्। ( २-४-२५ ) एतदन्तस्तत्पुरुषः क्लीबं वा स्
ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा। कुड्यच्छायम्, कुड्यच्छ
गोशालम्, गोशाला। श्वनिशम्, श्वनिशा। 'तत्पुरुषोऽनञ्कर्मधारयः' (सू
इत्यनुवृत्तेर्नेह। दृढसेनो राजा। असेना। परमसेना।

॥ इति तत्पुरुषसमासप्रकरणम् ॥

---

दित्यत आह—अमनुष्यशब्दो रूढयेति। असुरशब्दो दैत्यानिवेति भा
अशाला च। अशालार्थकेत्यर्थः। सभाशब्दः शालायां सङ्घातार्थे च वर्तते। 'स
राजामनुष्यपूर्वकस्य शालावाचिनः सभाशब्दस्य पूर्वसूत्रे क्लीबत्वमुक्तम्। वि
संघातवाचिनः सभाशब्दस्य क्लीबत्वमुच्यत इत्याह—संघातार्था या सभे
सभाशब्द इत्यर्थः। विभाषा सेना। प्रथमार्थे षष्ठी। तत्पुरुष इत्यनुवृत्तं वि
दिभिर्विशेष्यते। तदन्तविधिः। तदाह—एतदन्त इति। प्रत्येकाभिप्रायमे
नम्। श्वनिशमिति। शुनो निशेति विग्रहः। कृष्णचतुर्दशीत्याहुः। 'शु
तुर्दश्यामुपवसतः पश्यामः' इति तिर्यगधिकरणे शाबरभाष्ये स्थितम्।
इति। दृढा सेना यस्येति बहुव्रीहिः। तत्पुरुषत्वाभावाद् न क्लीबत्ववि
असेनेति। तत्पुरुषत्वेऽपि नञ्समासत्वान्न क्लीबत्वविकल्पः। परमसेनेति।
धारयत्वाद् न क्लीबत्वम्। 'तत्पुरुषोऽनञ्कर्मधारयः' इत्यधिकारस्य अत्रैव
जनमिति कैयटे प्रपञ्चितम्।

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां
बालमनोरमाख्यायां तत्पुरुषसमासप्रकरणम्।

---

ष्यत इति। एवकारेण स्वरूपस्य विशेषाणां च निरासः। कथं तर्हि 'नृपतिसभा
वेपमानः' इति कीचकवधे। अत्र केचित्—ना पतिर्यस्यां सभायामिति बहुव्रीहि
पश्चात्कर्मधारयः। 'अनञ्कर्मधारयः' इत्युक्तेर्न क्लीबत्वमित्याहुः। रक्षितस्त्व
गजपतिवन्नृपतिरपि राजविशेषस्तेनात्र नानुपपत्तिरिति। अशाला च। शाला
संघातवाची च सभाशब्दस्तत्र राजामनुष्यपूर्वत्वे शालावाचिनः क्लीबत्वमुक्तम्।
तु संघातवाचिनो विधीयत इत्याह—संघातार्थेति। विभाषा सेना। प्र
षष्ठीति। सेनादिभिस्तत्पुरुषो विशेष्यते। विशेषणेन तदन्तविधिस्तदाह—ए
इति। श्वनिशमिति। कृष्णचतुर्दशी। तस्यां किल केचिच्छ्वान उपवस
एतच्च शाबरभाष्ये तिर्यगधिकरणे स्पष्टम्। 'तत्पुरुष—'इत्याद्यधिकारसूत्र
प्रयोजनम्, न तु 'संज्ञायां कन्थोशीनरेषु' इत्यादिपञ्चसूत्र्याम्। अतत्पुरुषस्य नञ्स
कर्मधारयस्य च तत्रासंभवादित्याकरे स्थितम्। तथैव प्रत्युदाहरति—
इत्यादि। ननु बहुव्रीहौ विशेष्यनिघ्नता न्याय्यैवेति किमनेन तत्पुरुषग्रहणेन।
न्यायापेक्षया वचनस्य बलीयस्त्वात्। किं च सति ... ग्रहणे ... नपुंसकता स
वल्लिङ्गापवादत्वादस्य प्रकरणस्येति दिक्॥ इति तत्त्वबोधिन्यां तत्पुरुषसमासप्रक

# अथ बहुव्रीहिसमासप्रकरणम् । १९ ।

**८२९ शेषो बहुव्रीहिः । ( २-२-२३ )** अधिकारोऽयम् । 'द्वितीया श्रित–' ( सू ६८६ ) इत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः प्रथमान्तमित्यर्थः । **८३० अनेकमन्यपदार्थे । ( २-२-२४ )** अनेकं प्रथमान्तमन्यपदार्थे वर्तमानं वा समस्यते स बहुव्रीहिः । अप्रथमाविभक्त्यर्थे

---

**शेषो बहुव्रीहिः** । **त्रिकस्येति** । विभक्तेरित्यर्थः । ननु 'द्वितीया श्रित–' इति 'तृतीया तत्कृत–' इति 'चतुर्थी तदर्थ–' इति 'पञ्चमी भयेन' इति 'षष्ठी' इति 'सप्तमी शौण्डैः' इति च द्वितीयादिविभक्तीनां षण्णां समासो विहितः । विशेषणं विशेष्येणेत्यादिना तु प्रथमाया अपि समासो विहितः, अतः शेषविभक्तिर्दुर्लभेत्यत आह—**विशिष्येति** । विशेषणसमासस्य वस्तुतः प्रथमाविभक्तौ प्रवृत्तावपि प्रथमाविभक्तिं विशिष्य उच्चार्यविधानाभावात् समासविधिषु विशिष्यनिर्दिष्टद्वितीयादिविभक्तिषट्कापेक्षया शेषः प्रथमाविभक्तिरिति भावः । तदाह—**प्रथमान्तमित्यर्थं इति** । एतच्च भाष्ये स्पष्टम् । **अनेकमन्यपदार्थे** । **प्रथमान्तमिति** । शेषग्रहणानुवृत्तिलभ्यमिदम् । एवं च सुप्सुपेति नानुवर्तते, प्रयोजनाभावात् । अनेकं सुबन्तमिति पाठेऽपि प्रथमान्तमित्यर्थः । **अन्येति** । उपस्थितप्रथमान्तातिरिक्तेत्यर्थः । एवं च पञ्चभिर्भुक्तमन्नं यस्य स पञ्चभुक्त इति बहुव्रीहिनिवृत्त्यर्थं 'बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्' इति वार्तिकं यद्भाष्ये स्थितम्, यच्च वृष्टे देवे यो गतः स वृष्टदेव इति बहुव्रीहिनिवृत्त्यर्थम् 'अप्रथमाविभक्त्यर्थे बहुव्रीहिर्वक्तव्यः' इति वार्तिकम्,

---

**शेषो बहुव्रीहिः** । 'शिष् असर्वोपयोगे' कर्मणि घञ् । अत्र वृत्तिकृद् यत्रान्यसमासो नोक्तः स शेष इत्याह । येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिसंज्ञकः समासो न विहितः शेष इत्यर्थं इति हरदत्तो व्याख्यत् । एतच्च 'प्राक्कडारात्परं कार्यम्' इति पाठाभिप्रायेण बोध्यम् । अस्मिंस्तु पक्षे शेषग्रहणाभावे उन्मत्तगङ्गमित्यत्र परत्वाद्बहुव्रीहिः स्यात्, निरवकाशत्वाच्चाव्ययीभाव इत्युन्मत्तगङ्ग इत्याद्यनिष्टं पक्षे प्रसज्येत । 'आकडारादेका–' इति पाठाभ्युपगमपक्षे त्वेकसंज्ञाधिकारेणैवोन्मत्तगङ्गमित्यादिसिद्धेः शेषग्रहणं व्यर्थम् । निरवकाशतयाऽव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधात् । अतस्तत्रापि प्रयोजनमाह—**द्वितीया श्रितेत्यादिनेति** । शेषाधिकारस्थव्रीहेरेव 'शेषाद्विभाषा' इति कप्प्रत्ययो नान्यस्माद्बहुव्रीहेरित्येतल्लाभार्थमपि शेषग्रहणमावश्यकमिति बोध्यम् । **यस्य त्रिकस्येति** । यद्यपि 'प्रादयो गताद्यर्थे प्रथमया' इत्युक्तम् । तथापि 'द्वितीया श्रितादिभिः' इतिवत् 'प्रथमा केनचित्सह समस्यते' इति नोक्तमित्यर्थः । वार्तिककृता प्रथमयेत्युक्तावपि सूत्रकृता नोक्तमिति वा । **प्रथमान्तमिति** । काण्ठेकाल इत्यादिबहुव्रीहिस्तु ज्ञापकसाध्य इति भावः । **अन्यस्य पदस्यार्थ इति** । समस्यमानपदातिरिक्तस्य पदस्यार्थ इत्यर्थः । पदेन हि प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः कर्मकर्त्रादिरभिधीयते । प्रथमान्तेन तु प्रातिपदिकार्थमात्रम् । यद्यपि त्रिकपक्षे संख्या प्रत्ययार्थः, तथापि तस्याः प्रकृत्यर्थं प्रति विशेषणत्वान्न प्रकृत्यर्थोप-

बहुव्रीहिरिति समानाधिकरणानामिति च फलितम् । प्राप्तमुदकं यं स प्राप्तो
ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीता

---

तदुभयमपि न कर्तव्यमित्याह—अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समा
धिकरणानामिति च फलितमिति । शेषग्रहणादिति शेषः । शेषग्र
प्रथमान्त इति लभ्यत इति हि भाष्यम् । पञ्चभिर्भुक्तमस्य इत्यत्र च समस्यमान
रेकस्याप्रथमान्तत्वान्न बहुव्रीहिरिति फलितम् । प्रथमान्तातिरिक्तस्य पदस्यार्थे
समस्यते इत्यर्थाश्रयणाद् वृष्टे देवे गत इत्यत्रापि न बहुव्रीहिरिति फलितमिति
तत्र द्वितीयार्थे बहुव्रीहिमुदाहरति—प्राप्तमिति । 'गत्यर्थाकर्मक–' इति कर्तरि
अत्र विग्रहवाक्ये ग्रामकर्मकप्राप्तिकर्तृ उदकमित्येवं ग्रामस्य विशेषणतया, विशे
तु प्राप्तस्य उदकस्य बोधः । समासे तु एकार्थीभावमहिम्ना उदककर्तृकप्राप्तिकर्म
ग्राम इत्येवं ग्रामस्य विशेष्यतया, तद्विशेषणतया तु प्राप्तस्य उदकस्य बो
एवमुत्तरत्रापि विशेषणविशेष्यभावव्यत्यासो ज्ञेयः । अथ तृतीयार्थे बहुव्रीहिमुदाह
ऊढरथोऽनड्वानिति । ऊढो रथो येनेति विग्रहः । अथ चतुर्थ्यर्थे बहुव्रीहि
हरति—उपहृतपशू रुद्र इति । उपहृतः पशुः यस्मै इति विग्रहः ।
पञ्चम्यर्थे बहुव्रीहिमुदाहरति—उद्धृतौदना स्थालीति । उद्धृत ओदनो

---

सर्जनकः प्रत्ययार्थः प्रथमान्तस्यास्ति । एवं च 'द्वितीयान्ताद्यर्थे' इति फलि
तदाह—अप्रथमाविभक्त्यर्थे इति । समानेति । एतच्च शेषग्रहणाल्लभ
अनेकं किम्, बहूनामपि यथा स्यात् । एतच्च मूल एव स्फुटीभविष्यति । अनि
केवलग्रहणं ज्ञापकीकृत्यानेकग्रहणमिह सुत्यजमित्याहुः । अन्यग्रहणं किम्, बहु
तत्पुरुषयोर्विषयविभागो यथा विज्ञायेत, स्वपदार्थे हि सावकाशं तत्पुरुषं परत्वा
पदार्थे बहुव्रीहिर्बाधते । असति त्वन्यग्रहणे कण्ठेकाल इत्यादौ व्यधिकरणपदे
समुदाये च सावकाशं बहुव्रीहिं स्वपदार्थ इवान्यपदार्थेऽपि नीलोत्पलं सर इ
समानाधिकरणे तत्पुरुषो बाधेत । पदग्रहणं किम्, वाक्यार्थे मा भूत् । ग्रा
नदी । इह मा स्नासीरिति वाक्यार्थो गम्यते । अर्थग्रहणं किम्, यावता
पदान्तरस्य वृत्त्यसंभवादेव पदार्थे भविष्यति । अत्राहुः—प्रकृत्यर्थविशिष्टप्रत्य
भिधानं यथा स्यात् । अन्यथा प्राधान्यात् प्रत्ययार्थमात्रं गृह्येत । इष्टापत्ति
चित्रगुरित्येतत् षष्ठ्यर्थसंबन्धमात्रपरं स्यात् । तथा च देवदत्तादेः सामानाधिक
स्यादिति । अत्रेदमवधेयम्—'सुपा–' इत्येतन्नानुवर्तते । तेनात्रानेकं प्रथमान्तं
समस्यत इति पर्यवसन्नोऽर्थः । एवं च द्विपदबहुव्रीहिरबाध एव । ये तु 'सुप
इत्यनुवर्त्य 'अनेकं सुबन्तं सुपा सह' इति व्याचक्षते तेषां तु द्विपदबहुव्रीहि
एवेति । द्वितीयादिविभक्त्यर्थे क्रमेणोदाहरति—प्राप्तमित्यादि । ग्रामकर्मकप्रा
उदकमिति विग्रहार्थः । उदककर्तृकप्राप्तिकर्मेति समासार्थः । विग्रहवाक्ये स इति
तु स्याप्ययमेवार्थः । अनडुत्कर्तृकोद्वहनकर्मीभूतो रथः । रथकर्मकोद्वहनकर्ता तु
सार्थः । रुद्रसंप्रदानकोपहरणकर्मीभूतः पशुः पशुकर्मकोपहरणसंप्रदानं तु समासा
स्थाल्यवधिकोद्धरणकर्म ओदनः । ओदनकर्मकोद्धरणावधिः स्थाली समासार्थ

रिः। वीरपुरुषको ग्रामः। प्रथमार्थे तु न। वृष्टे देवे गतः। व्यधिकरणानामपि । पञ्चभिर्भुक्तमस्य। 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः (वा १३६०) प्रपतितपर्णः प्रपर्णः 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' (वा १३६१) अविद्यमानपुत्रः अपुत्रः। '[1]अव्ययानां च' उच्चैर्मुखः 'सप्तम्युप-

ति बहुव्रीहिः। अथ षष्ठ्यर्थबहुव्रीहिमुदाहरति—पीताम्बरो हरिरिति। पीतमम्बरं यस्येति विग्रहः। अथ सप्तम्यर्थबहुव्रीहिमुदाहरति—वीरपुरुषको ग्राम इति। वीराः पुरुषा यस्मिन्निति विग्रहः। 'शेषाद्विभाषा' इति कप्। अत्र कर्मादीनां समासेनाभिहितत्वात् प्रथमैव। प्रथमार्थे तु नेति। अन्यपदार्थशब्देन प्रथमान्तातिरिक्तद्वितीयाद्यन्तार्थस्यैव विवक्षितत्वादिति भावः। व्यधिकरणानामपि नेति। अनेकं प्रथमान्तमित्युक्तेरिति भावः। प्रादिभ्यः। प्रादिभ्यः परं यद्धातुजप्रकृतिकथमान्तं तस्य अन्येन प्रथमान्तेन बहुव्रीहिर्वाच्यः। तत्र बहुव्रीहौ प्रादिभ्यः परस्य उत्तरपदस्य धातुजस्य लोपश्च विकल्पेन वाच्य इत्यर्थः। अत्र बहुव्रीहिरित्यनुवादः, लोपस्यैव विधिः। प्रपतितपर्ण इति। प्रकृष्टं पतितं प्रपतितम्। 'प्रादयो गताद्यर्थे—' इति समासः। प्रपतितं पर्णं यस्मादिति विग्रहः। प्रपर्ण इति। प्रपतितेति पूर्वपदे धातुजस्य उत्तरपदस्य लोपे रूपम्। नञोऽस्त्यर्थानां। नञः परेषामस्त्यर्थवाचिनां सुबन्तानां बहुव्रीहिर्वाच्यः। तत्रास्त्यर्थवाचिनामुत्तरपदभूतानां लोपश्च वा वक्तव्य इत्यर्थः। अविद्यमानपुत्र इति। न विद्यमान इति नञ्समासः। नञो नलोपः। अविद्यमानः पुत्रो यस्येति विग्रहः। अपुत्र इति। अस्त्यर्थकविद्यमानशब्दस्य लोपे

इह कर्मादीनां समासेनाभिहितत्वात्प्रथमा। ननु वाक्ये धात्वर्थं प्रति क्तप्रत्ययार्थस्य कर्तुः कर्मणो वा विशेष्यत्वाद् वृत्तावपि तथैवोचितेति प्राप्तोदकोढरथादौ उदककर्तृकप्राप्ती त्यादिवर्णनं तु न युज्यत इति चेत्। उच्यते—एकार्थीभावादिभिर्वृत्तौ विशिष्टार्थविषयकं शक्त्यन्तरमेव स्वीक्रियते, न त्ववयवशक्तिः इति नानुपपत्तिः। व्यपेक्षावादिभिस्त्वगत्या भिन्नैव व्युत्पत्तिः स्वीकार्या। किं च कर्तृविशिष्टप्राप्तेः पदार्थत्वे तस्यैव समासार्थत्वादुदकस्य तदभेदो वाच्यः, स च बाधितः, न हि कर्तृविशिष्टा प्राप्तिरुदकमिति संभवति। अतएव 'बहूनां वृत्तिधर्माणां वचनैरेव साधने स्यान्महद्गौरवम्' इत्यादिना समर्थसूत्रे एकार्थीभावपक्ष एव प्रबल इत्यवोचाम। प्रथमार्थे तु नेति। शेषपदेन वा अन्यपदार्थे इत्यनेन वा अतिप्रसङ्गवारणाद् 'अप्रथमाविभक्त्यर्थे' इति वचनं न कर्तव्यमिति भावः। व्यधिकरणानामित्यादि। इह शेषपदेनैव वारितोऽतिप्रसङ्ग इति 'समानाधिकरणानां बहुव्रीहिः' इत्यपि न कर्तव्यमिति भावः। 'यत्रान्यसमासो नोक्तः स शेषः' इति वृत्तिकारादीनां मते तु 'प्रथमान्तानामेव बहुव्रीहिः' इत्यलाभात्कर्तव्यमेवेदं वचनमिति बोध्यम्। प्रादिभ्य इति। प्रादिभ्यः परं यद्धातुजं तदन्तस्य पदान्तरेण बहुव्रीहिर्व्याख्येय इति सूत्रसिद्धानुवादः। वा चेति। इदं तु वाचनिकम्। पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य लोपो वाच्य इत्यर्थः। एतच्च प्रादीनामेव वृत्तौ विशिष्टार्थवृत्तितामाश्रित्य सुत्यजम्। नञोऽस्त्यर्थानामिति।

१ अव्ययानामित्यारभ्य अस्तिक्षीरादयश्चेत्येतत्पर्यन्तः पाठो बहुत्र नोपलभ्यते।

मानपूर्वपदस्योत्तरपदलोपश्च' । सप्तम्यन्तम् उपमानं च पूर्वपदं यस्य तस्य पदा॰ समास उत्तरपदलोपश्च भवतीत्यर्थः । कण्ठेस्थः कालो यस्य स कण्ठे॰ उष्ट्रमुखमिव मुखं यस्य स उष्ट्रमुखः । 'सङ्घातविकारषष्ठ्याश्चोत्तरपदलोप॰ केशानां सङ्घातश्चूडा यस्य स केशचूडः, सुवर्णस्य विकारः अलङ्कारो य॰ सुवर्णालङ्कारः । 'अस्तिक्षीरादयश्च' । अस्तीति विभक्तिप्रतिरूपकमव्य॰ अस्तिक्षीरा गौः । ८३१ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधि॰

---

रूपम् । अत्रापि बहुव्रीहिरित्यनुवादः । अव्ययानां चेति । बहुव्रीहिर्वाच्य॰ शेषः । उच्चैर्मुख इति । उच्चैरित्यस्याधिकरणशक्तिप्रधानतया सप्तम्य॰ प्रथमान्तत्वाभावादप्राप्ते बहुव्रीहौ वचनम् । सप्तम्युपमानपूर्वपदस्यो॰ लोपश्चेति । सप्तम्यन्तोपमानसहिते पूर्वपदे यस्य तत् सप्तम्युपमानपूर्वपदम्॰ समस्तपदस्य पदान्तरेण बहुव्रीहिर्वाच्यः । समस्तपदात्मके पूर्वपदे यदुत्तरप॰ लोपश्च वक्तव्य इत्यर्थः : तत्र सप्तम्यन्तसहितसमस्तपूर्वपदकं बहुव्रीहिमुदाह॰ कण्ठेस्थः कालो यस्य स कण्ठेकाल इति । 'सुपि स्थः' इति कः । ॰ तिष्ठतीति कण्ठेस्थः । उपपदसमासः । 'अमूर्धमस्तकात्–' इति सप्तम्या ॰ कण्ठेस्थ इति समस्तपदम् । तस्य कालशब्देन बहुव्रीहिरित्यनुवादः । सुपो ॰ तत्र कण्ठस्थेत्येतद्बहुव्रीहेः पूर्वपदं सप्तम्यन्तपदसहितं तस्मिन् यदुत्तरपदं ॰ तस्य लोपो वाचनिकः । कण्ठेकाल इति सप्तम्यन्तपदघटितसमासगर्भो बहु॰ तदवयवभूतसप्तम्याः 'अमूर्धमस्तकात्–' इत्यलुक् । अथ उपमानसहितसमस्त॰ बहुव्रीहिमुदाहरति—उष्ट्रमुखमिव मुखं यस्य स उष्ट्रमुख इति । ॰ मुखमिवेति विग्रहे षष्ठीतत्पुरुषः । मुखशब्दो मुखसदृशे लाक्षणिक इति सूच॰ शब्दः । उष्ट्रमुखमिव मुखं यस्येति विग्रहे बहुव्रीहिरित्यनुवादः । तत्र उष्ट्रमु॰ व्रीहेः पूर्वपदं तस्मिन् उत्तरपदस्य मुखशब्दस्य लोपो वाचनिकः । संघात॰ षष्ठ्याश्चोत्तरपदलोपश्चेति । षष्ठ्यन्तात्परस्य उत्तरपदस्य पदान्तरेण ॰ वाच्यः । षष्ठ्यन्तादुत्तरपदस्य लोपश्च । केशानां संघातश्चूडा ॰ केशचूड इति । संघातशब्दस्य लोपे रूपम् । सुवर्णस्य विकारो॰ यस्य स सुवर्णालंकार इति । अत्र विकारशब्दस्य उत्तरपदस्य लोपे ॰ अस्तिक्षीरादयश्चेति । अस्तिक्षीरादयो बहुव्रीहावुपसंख्येया इत्यर्थः । अ॰ गौरित्यत्र अस्तीत्यस्य तिङन्ततया प्रथमाविभक्त्यन्तत्वाभावादप्राप्ते बहु॰ वचनम् । वस्तुतस्तु वचनमिदं नारब्धव्यमित्याह—अस्तीति विभक्ति॰ कमव्ययमिति । विभक्तिप्रतिरूपकत्वेन निपातितत्वादस्तीति 'स्वरादिनिपात॰ इत्यव्ययं विद्यमानार्थकम् । ततः सोः 'अव्ययादाप्सुपः' इति लुकि प्रत्यय॰ प्रथमान्तत्वादेव सिद्धेरिदं वचनं न कर्तव्यमिति भावः । तदुक्तं भाष्ये—'अस्ति॰ दिवचनं न वाव्ययत्वात्' इति । स्त्रियाः पुंवत् । भाषितपुंस्कादनूङिति सम॰



इत्यर्थः । अस्त्यर्थानां किम्, अनुपनीतपुत्रः । नञः किम्, निर्विद्यमा॰

स्त्रियामपूरणीप्रियादिषु । (६-३-३४) भाषितपुंस्कादनूङ् ऊङोऽभावो-ऽस्यामिति बहुव्रीहिः । निपातनात्पञ्चम्या अलुक्, षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकस्य शब्दस्य पुंवाचकस्येव रूपं स्यात्समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ

---

पदं स्त्रियाः इति षष्ठ्यन्तस्य विशेषणमित्यभिप्रेत्य व्याचष्टे—भाषितपुंस्कादिति । अनूङित्यस्य व्याख्यानम्—ऊङोऽभाव इति । अर्थाभावेऽव्ययीभावः, नञ्तत्पुरुषो वा । भाषितपुंस्कादिति दिग्योगे पञ्चमी । पर इति प्रथमान्तमध्याहार्यम् । तथा च भाषितपुंस्कात् परः अनूङ् यस्येति विग्रहे बहुव्रीहिरिति फलति । ननु समासे सति पञ्चम्या लुक्प्रसङ्ग इत्यत आह—निपातनात् पञ्चम्या अलुगिति । इदमुपलक्षणम् । निपातनाद् अप्रथमान्तस्यापि बहुव्रीहिः परशब्दलोपश्चेत्यपि बोध्यम् । यद्वा, अत एव निपातनादप्रयुज्यमानेऽपि परशब्दे तदर्थे गम्ये पञ्चमी । नन्वेवमपि स्त्रियाः इति षष्ठ्यन्तस्य 'भाषितपुंस्कादनूङ्' इति यदि विशेषणं स्यात्, तर्हि भाषितपुंस्कादनूङ इति षष्ठी श्रूयेतेत्यत आह—षष्ठ्याश्च लुगिति । निपातनादित्यनुषज्यते । भाषितः पुमान् येन तद्भाषितपुंस्कम्, तदस्यास्तीति अर्शआद्यच् पुंस्त्वे स्त्रीत्वे च एकप्रवृत्तिनिमित्तकमिति यावत् । 'तृतीयादिषु भाषितपुंस्कम्' इत्यत्र व्याख्यातमेतत् । तदाह—तुल्ये प्रवृत्तिनिमित्त इति । स्त्रीवाचकस्य शब्दस्येति । स्त्रीलिङ्गस्येत्यर्थः । स्त्रियाः इति षष्ठ्यन्तं न स्त्रीप्रत्ययपरमिति भावः । नन्विह 'सुपा' इत्यननुवृत्तावपि सुबित्येतदनुवर्तते । तथा चास्तिक्षीरेति प्रयोगो दुर्लभ

---

इत्याशङ्क्य तं साधयति—विभक्तिप्रतिरूपकमिति । स्त्रियाः पुंवत् । निपातनादिति । एतच्च पूर्वत्रापि योज्यम् । अन्यथा व्यधिकरणानां बहुव्रीहिः स्वरसतो न सिध्येत् । लुगिति । अनूङिति प्रथमान्तम् । षष्ठ्यर्थे प्रथमेति हरदत्तः । एवं च सूत्रे केषांचिद् 'अनूङः समानाधिकरणे' इति षष्ठ्यन्तपाठोऽसांप्रदायिक इति भावः । तुल्य इत्यादि । 'भाषितः पुमान् यस्मिन्' इत्यादिव्याख्यानादयमर्थो लभ्यत इति तृतीयादिषु भाषितपुंस्कम्–' इत्यत्रोपपादितम् । यद्यत्र 'भाषितः पुमान्येन तद्भाषितपुंस्कम्' इत्युच्येत तर्हि कुटीभार्यः, द्रोणीभार्य इत्यादावतिप्रसङ्गः स्यात् । भवति हि कुटशब्दो घटे पुंल्लिङ्गो, गेहे तु स्त्रीलिङ्गः । द्रोणशब्दस्तु परिमाणविशेषे पुंल्लिङ्गो, गवादन्यां तु स्त्रीलिङ्ग इति । ऊङोऽभावो यत्रेति । यदि तु ऊङन्योऽनूङिति पर्युदासः स्यात् तर्हि टाबाद्यन्तमेव गृह्येत । ततः किमिति चेत्, दरदोऽपत्यं दारदः । 'द्व्यञ्मगध–' इत्यण्, तस्य स्त्रियाम् 'अतश्च' इति लुक्, दरद् । सा चासौ वृन्दारिका च दारदवृन्दारिकेत्यादि न सिध्येत् । न ह्यत्र दर्शनीया भार्या यस्य स दर्शनीयभार्य इत्यादाविव स्त्रीप्रत्ययः कश्चिदस्तीति भावः । ननु 'न कोपधाया ऊङश्च' इत्येव सूत्र्यतामिति चेत्, न । बाधकबाधनार्थेन 'पुंवत्कर्मधारय–' इत्यनेन वामोरूभार्येति कर्मधारये पुंवद्भावापात्तेः पृथक्प्रतिषेधसामर्थ्यात्सिद्धान्ते तु न दोषः । स्त्रियाः इत्यस्य स्त्रीप्रत्ययपरतां वारयति—स्त्रीवाचकस्येति । 'स्त्रीप्रत्ययस्य पुंवद्भावः, इत्युक्ते स्त्रीप्रत्यय-लोप इत्येवार्थः पर्यवस्यतीति दारदवृन्दारिकेति न सिध्येत् । किं च पुंवद्भावस्य [illegible]

च परतः । 'गोस्त्रियोः–' (सू ६५६) इति ह्रस्वः । चित्रा गावो यस्येति लौ
विग्रहे 'चित्रा अस् गो अस्' इत्यलौकिकविग्रहे चित्रगुः । रूपवद्भार्यः ।
जरती गौर्यस्येति विग्रहे अनेकोक्तेर्बहूनामपि बहुव्रीहिः । अत्र केचित्—

---

पुंवदिति रूपातिदेशः पुंस इव पुंवदिति षष्ठ्यन्ताद्वतिः । तदाह—पुंवाच रूपमिति । स्त्रियामिति सप्तम्यन्तमपि न स्त्रीप्रत्ययपरं किन्तु स्त्रीलिङ्गपर 'अलुगुत्तरपदे' इत्यधिकृते उत्तरपदेऽन्वेति तदाह—स्त्रीलिङ्गे उत्तरपद अपूरणीप्रियादिष्वित्येतद्व्याचष्टे—न तु पूरण्यां प्रियादौ च परत पूरणीति स्त्रीलिङ्गनिर्देशात् स्त्रीलिङ्गः पूरणप्रत्ययान्तो विवक्षित इति ज्ञेयम् प्रवृत्तिनिमित्ते इति किम्, कुटीभार्यः । अत्र पुंवत्त्वं न भवति, कुटीशब्द पुंल्लिङ्गः, गेहे तु स्त्रीलिङ्ग इति । प्रवृत्तिनिमित्ताभेदाद् । स्त्रीप्रत्ययः पुंवत्स्या तु स्त्रीप्रत्ययस्य लोपः पर्यवस्येत् । ततश्च पट्वी भार्या यस्य स पटुभार्य इत्यत्र पदं परनिमित्तमाश्रित्य ङीषो लोपे तस्य 'अचः परस्मिन्–' इति स्थानिवत्त्वाद् यण् स्यात् । **ह्रस्व इति ।** चित्रा गावो यस्येति विग्रहे बहुव्रीहिसमासे सुब्लु अनेकमिति प्रथमान्तनिर्दिष्टतया, विग्रहे नियतविभक्तिकतया वा उपसर्जनत्वे चित्रगोशब्दे ओकारस्य 'गोस्त्रियोः–' इत्युकारो ह्रस्व इत्यर्थः । ननु चित्रा गा लौकिकसमासाभ्युपगमे सुपो लुकः प्राक् चित्रा अस् इत्यत्र पूर्वसवर्णदीर्घे इत्यत्र पूर्वरूप च एकादेशे कृते तस्य परादिवत्त्वेन आसो लुकि चित्रशब्दे न श्रूयेत चित्रगुरित्यत्र उकारश्च न श्रूयेत, पूर्वान्तवत्त्वे तु परिशिष्टस्य सकार सुप्त्वाभावाल्लुक् न स्यादित्यत आह—चित्रा अस् इति । गोशब्दस्य स्त्रीलि तद्विशेषणत्वाच्चित्रेति स्त्रीलिङ्गनिर्देशः । 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभा 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति न्यायात् प्रागेव पूर्वसवर्ण सुब्लुगिति भावः । **चित्रगुरिति ।** बहुव्रीहौ ह्रस्वत्वे चित्राशब्दस्य पुंव भावः । **रूपवद्भार्य इति ।** रूपवती भार्या यस्येति विग्रहः । अत्र उपसर्जन रूपवतीशब्दस्य पुंवत्त्वम् ननु चित्रा जरती गौर्यस्येति विग्रहे कथं त्रिपद 'सुप् सुपा' इत्येकत्वस्य विवक्षितत्वादित्यत आह—**अनेकोक्तेरिति ।** शे प्रथमान्तमिति लब्धम् । एकस्य प्रथमान्तस्य समासो नोपपद्यते, समास इत्य विज्ञानात् । ततश्चार्थादनेकं प्रथमान्तमिति सिद्धे पुनरनेकग्रहणाद् द्विबहूनां

---

उत्तरपदनिमित्ताया ङीषो निवृत्तेः 'अचः परस्मिन्–' इति स्थानिवद्भावाद्यण् अपि च वतण्डस्यापत्यं स्त्री वतण्डी 'वतण्डाच्च' इति यञ्, 'लुक् स्त्रियाम् तस्य लुक्, शार्ङ्गरवादित्वान् ङीन्, वतण्डी चासौ वृन्दारिका च वातण्डयवृन्दा अत्र पुंवद्भावेन ङीनो निवृत्तावपि अर्थगतस्य स्त्रीत्वस्यानिवृत्तत्वाद् 'लुक इति यञो लुक् प्रसज्येतेति भावः । **ह्रस्व इति ।** अनेकमिति प्रथमानिर्दि 'प्रथमानिर्दिष्टम्–' इति 'एकविभक्ति च–' इति वा गोशब्दस्योपसर्जनत्वादि चित्रा असिति । 'अन्तरङ्गानपि–' इति न्यायादिह पूर्वं सवर्णदीर्घो न अन्यथा एकादेशस्य परादित्वेन सुपो लुकि चित्रगुरित्यत्र अकारो न

जरतीगुः, जरतीचित्रागुर्वा । एवं दीर्घातन्वीजङ्घः, तन्वीदीर्घाजङ्घः । त्रिपदे बहुव्रीहौ प्रथमं न पुंवत् । उत्तरपदस्य मध्यमेन व्यवधानात् । द्वितीयमपि न पुंवत् पूर्वपदत्वाभावात् । उत्तरपदशब्दो हि समासस्य चरमावयवे रूढः । पूर्वपदशब्दस्तु प्रथमावयवे रूढ इति वदन्ति । वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते । 'आनङ ऋतः–' (सू ९२१) इत्यत्र यथा । तेनोपान्त्यस्य पुंवदेव । चित्राजरद्गुः

---

तानां बहुव्रीहिरिति भाष्ये स्पष्टमिति भावः । अत्रेति । त्रिपदबहुव्रीहावित्यर्थः । चित्राजरतीगुः, जरतीचित्रागुर्वेति । गां प्रति चित्रात्वस्य जरतीत्वस्य च विशेषणत्वाविशेषाद् अन्यतरस्य 'सप्तमीविशेषणे बहुव्रीहौ' इति पूर्वनिपात इति भावः । एवं दीर्घेति । दीर्घे तन्व्यौ जङ्घे यस्येति विग्रहः । उभयत्रापि पूर्वमध्यपदयोः पुंवत्त्वमाशङ्क्याह—त्रिपद इति । उत्तरपदस्येति । समासचरमावयवपदस्य उत्तरपदत्वात् तृतीयमेव पदमत्रोत्तरपदं वाच्यम् । तत्परकत्वं च मध्यमपदस्यैव, न तु प्रथमपदस्यापि, तस्य मध्यमेन पदेन व्यवधानादित्यर्थः । ननु तर्हि मध्यमपदस्य पुंवत्त्वं दुर्वारम्, उत्तरपदपरकत्वसत्त्वादित्यत आह—द्वितीयमपि न पुंवदिति । पूर्वपदत्वाभावादिति । उत्तरपदेन पूर्वपदमाक्षेपाल्लभ्यते । समासप्रथमावयवपदमेव पूर्वपदम् न तु मध्यमावयवपदमपीति भावः । ननु मध्यमपदापेक्षया प्रथमपदस्य पूर्वपदत्वमस्ति । मध्यमपदस्य च प्रथमपदापेक्षया उत्तरपदत्वमस्तीत्यत आह—उत्तरपदशब्दो हीति । रूढ इति । वैयाकरणसमयसिद्ध इत्यर्थः । इति वदन्तीति । एवंप्रकारेण केचिद्वदन्तीत्यन्वयः । तत्र प्रथमपदस्य त्रिपदबहुव्रीहौ नास्ति पुंवत्त्वमिति युज्यते, उत्तरपदपरकत्वाभावात् । मध्ययपदस्य तु पूर्वपदत्वाभावेऽप्यस्त्येव पुंवत्त्वम्, 'स्त्रियाः पुंवत्' इत्यत्र तु पूर्वपदस्याश्रवणाद् अनुवृत्त्यभावाच्च, किन्तु उत्तरपदे इत्यनेन पूर्वपदस्य पुंवत्त्वमित्यर्थाद् गम्यत इति वक्तव्यम् । तदपि न सम्भवतीत्यत आह—नेह पूर्वपदमाक्षिप्यत इति । इह 'स्त्रियाः पुंवत्–' इत्यत्र उत्तरपदे इत्यनुवृत्तेन पूर्वपदं नाक्षिप्यते, नार्थाद्गम्यत इत्यर्थः । कुत इत्यत आह—आनङृत इत्यत्र यथेति । ऋदन्तानां द्वन्द्वे आनङ् स्यात् उत्तरपदे इति तदर्थः । तत्र चतुर्णां द्वन्द्वे 'होतृपोतृनेष्टोद्गातारः' इत्युपान्त्यस्य नेष्टुरानङुदाहृतः 'समर्थः पदविधिः' इत्यत्र भाष्ये । तत्रोत्तरपदेन पूर्वपदाक्षेपनियमे नेष्टुरुपान्त्यस्य पूर्वपदत्वाभावाद् आनङ् नोपपद्येत । तस्मान्नावश्यम् उत्तरपदे विहितं कार्यं पूर्वपदस्यैवेति नियम इत्यर्थः । तेनेति । पूर्वपदानाक्षेपेणेत्यर्थः । उपान्त्यस्येति । अन्त्यस्य समीपमुपान्त्यम् । चरमावयवसमीपवर्तिनो मध्यमस्येत्यर्थः । पुंवदेवेति । रूपमिति शेषः । तदेव दर्शयति—चित्राजरद्गुरिति । अत्र चित्राशब्दस्य न पुंवत्त्वम् । मध्यमेन व्यवधानाद् उत्तरपदपरकत्वाभावाच्चेति भावः । इत्यादीति । जरतीचित्रगुः, तन्वीदीर्घजङ्घः, दीर्घातनुजङ्घः । ननु 'आनङृतः—' इत्यत्र 'होतृपोतृनेष्टोद्गातारः' इति भाष्योदाहरणान्मास्तु पूर्वपदाक्षेपः । 'स्त्रियाः पुंवत्–' इति सूत्रे तदनाक्षेपे किं प्रमाणमिहेति । अत्रैव सूत्रे पट्वीमृद्व्यौ भार्ये अस्येति द्वन्द्वगर्भबहुव्रीहौ पट्वीमृदुभार्य इति भाष्योदाहरणादिति भावः । आनङिति । तथा च 'समर्थः' सूत्रे भाष्ये होतृपोतृ

इत्यादि। अत एव 'चित्राजरत्यौ गावौ यस्येति द्वन्द्वगर्भेऽपि चित्राजरद्गुः' इति भाष्यम्। कर्मधारयपूर्वपदे तु द्वयोरपि पुंवत्। जरच्चित्रगुः। कर्मधारयोत्तर... चित्रजरद्गवीकः स्त्रियाः किम्-ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः। भाषित...

---

मित्यत आह—अत एवेति। 'स्त्रियाः। पुंवत्–' इत्यत्रापि पूर्वपदानाक्षेपादित्यर्थः। ... गर्भेऽपीत्यनन्तरं बहुव्रीहाविति शेषः। भाष्यमिति। यद्यपि कृत्स्नभाष्यपरिशी... चित्राजरद्गुरित्युदाहरणं भाष्ये क्वापि न दृश्यते, तथापि चित्राजरद्गुरिति... प्रयोगमिति शेषः। भाष्यमित्यस्य पट्वीमृदुभार्य इति प्रकृतसूत्रस्थभाष्यमित्यर्थः... सूचयतीति शेषः। 'स्त्रियाः पुंवत्–' इति प्रकृतसूत्रभाष्ये हि पट्व्यौ मृद्व्यौ... यस्येति द्वन्द्वगर्भबहुव्रीहौ पट्वीमृदुभार्य इत्युदाहृतम्। तत्र पट्वीमृदुशब्द... द्वन्द्वः पूर्वपदं, न तस्य भाषितपुंस्कत्वमस्तीति न पुंवत्त्वम्, द्वन्द्वस्य परव... तानियमात्। तत्र द्वन्द्वे पूर्वपदस्य पट्वीशब्दस्य तु न पुंवत्त्वम्। मध्य... व्यवधानादुत्तरपदपरकत्वाभावात्। मध्यमपदस्यानुत्तरपदत्वादसमानाधिकरणत्वा... तस्मिन्परे पुंवत्त्वसंभवः। मृद्वीशब्दस्य तु केवलस्य भाषितपुंस्कत्वाद् उत्तर... कत्वाच्च पुंवत्त्वमिति तदाशयः। 'स्त्रियाः पुंवत्–' इत्यत्र पूर्वपदाक्षेपे तु मृद्... पूर्वपदत्वाभावेन पुंवत्त्वाप्रवृत्तेः तदसंगतिः स्पष्टैव। ततश्च पट्वीमृदुभार्य इति... चित्राजरद्गुरिति प्रयोगं गमयतीत्यर्थः। कर्मधारयेति। जरती चासौ चित्रा... कर्मधारयः। 'पुंवत्कर्मधारय–' इति जरतीशब्दस्य पुंवत्त्वाद् ङीपो निवृत्तिः।... जरच्चित्रा गौर्यस्येति कर्मधारयपूर्वपदत्वे बहुव्रीहौ पूर्वपदस्य जरच्चित्राशब्दस्य... पुंवत्–' इति पुंवत्त्वात् टापो निवृत्तिरिति भावः। कर्मधारयोत्तरेति।... चासौ गौश्चेति कर्मधारये 'गोरतद्धितलुकि' इति टचि अवादेशे 'पुंवत्कर्म... इति जरतीशब्दस्य पुंवत्त्वे ङीपो निवृत्तौ टित्त्वाद् ङीपि जरद्गवीशब्दः। तत... जरद्गवी यस्येति कर्मधारयोत्तरपदके बहुव्रीहौ 'नद्यृतश्च' इति कपि चित्रा... 'स्त्रियाः पुंवत्–' इति पुंवत्त्वे चित्रजरद्गवीक इति रूपमित्यर्थः। स्त्रियाः कि... षष्ठ्यन्तस्य प्रश्नः। ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिरिति।... शब्दस्य नपुंसकत्वे 'ह्रस्वो नपुंसके–' इति ह्रस्वे ग्रामणिशब्द इदन्तः।...

---

नेष्टोद्गातार इत्यत्र चतुर्णां द्वन्द्वे तृतीयस्यानङ् उदाहृतः। पूर्वपदाक्षेपे तु... सिध्येत्। न ह्यत्र नेष्टा पूर्वपदम्, होतुरेव पूर्वपदत्वादिति भावः। अत... पूर्वपदानाक्षेपादेवेत्यर्थः। चित्राजरदिति। द्वन्द्वान्तर्गतजरच्छब्दस्योत्तरपद... सामानाधिकरण्यान्न टापो निवृत्तिः। न चैवमपि द्वन्द्वात्मकस्य पूर्वपदस्य... धिकरणोत्तरपदपरत्वात्पुंवद्भावे टान्निवृत्तिर्दुर्वारेति वाच्यम्। द्वन्द्वान्तर्गत... च्छब्दयोः स्त्रीप्रत्ययप्रकृत्योः प्रत्येकं भाषितपुंस्कत्वेऽपि द्वन्द्वात्मकस्य पूर्वपद... त्वात्। द्वयोरपीति। पूर्वपदान्तर्गतमुत्तरपदमाश्रित्य प्रथमस्यापि पुंवद्भा... भावः। जरच्चित्रेति। 'पूर्वकालैक–' इति समासः। लिङ्गविशिष्टपरि... जरद्ग्रहणेन जरतीशब्दस्यापि ग्रहणात्। चित्रजरद्गवीक इति। जरती... गौश्च जरद्गवी, 'गोरतद्धित–' इति टचि टित्वान् ङीप्। चित्रा...

किम्-गङ्गाभार्यः । अनूङ् किम्-वामोरूभार्यः । समानाधिकरणे किम्-कल्याण्या माता कल्याणीमाता । 'स्त्रियां किम्–कल्याणी प्रधानं यस्य स कल्याणीप्रधानः । पूरण्यां तु—८३२ अप्पूरणीप्रमाण्योः । (५-४-११६) पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः ।

---

नपुंसकस्फोरणार्थः । दृष्टिशब्देन नेत्रस्थानापन्नं विवक्षितम् । ग्रामणि दृष्टिरस्येत्येव विग्रहः । 'स्त्रियाः' इत्यभावे ग्रामणीशब्दस्य पुंवत्त्वे नपुंसकह्रस्वनिवृत्तौ ग्रामणीकुलमिति स्यादिति भावः । गङ्गाभार्य इति । अत्र गङ्गाशब्दस्य नित्यस्त्रीलिङ्गतया भाषितपुंस्कत्वाभावाद् न पुंवत्त्वमिति भावः । वामोरूभार्य इति । वामौ सुन्दरौ ऊरू यस्या इति बहुव्रीहिः । 'संहितशफलक्षणवामादेश्च' इत्यूङ् । तदन्तस्य पुंवत्त्वे ऊङो निवृत्तौ वामोरुभार्य इति पूर्वपदमुदन्तमेव स्यादिति भावः । स्त्रियां किमिति । सप्तम्यन्तस्य प्रश्नः । कल्याणी प्रधानं यस्य स कल्याणीप्रधान इति । अत्र प्रधानशब्दस्य नित्यनपुंसकत्वात् कल्याणीशब्देन समानाधिकरण्येऽपि स्त्रीलिङ्गत्वाभावात्तस्मिन्परे पुंवत्त्वं नेति भावः । पूरण्यां त्विति । पुंवत्त्वनिषेधोदाहरणे विशेषो वक्ष्यत इति शेषः । अप्पूरणी । अविति छेदः । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतो बहुव्रीहावित्यनुवृत्तं पूरणीप्रमाणीभ्यां विशेष्यते, तदन्तविधिः, स्त्रीलिङ्गनिर्देशात् पूरणप्रत्ययान्तं स्त्रीलिङ्गमिह गृह्यते । तदाह—पूरणार्थेत्यादिना । अप् स्यादिति । समासान्तस्तद्धित इत्यपि बोध्यम् । पञ्चमीति । पञ्चानां पूरणीत्यर्थः । 'तस्य पूरणे डट्' 'नान्तादसंख्यादेः–' इति तस्य मडागमः । टित्वाद् ङीप् । कल्याणीपञ्चमा रात्रय इति । इह बहुव्रीहौ कृते पञ्चमीशब्दे पूरणार्थप्रत्ययान्ते परे कल्याणीशब्दस्य पुंवत्त्वनिषेधः, अप् समासान्तस्तद्धितः, टाप्, 'यस्येति च' इतीकारलोपः । ननु पञ्चमी रात्रिरन्यपदार्थप्रविष्टा वा न वा । नाद्यः, तस्या समस्यमानपदार्थत्वेन तदन्यत्वानुपपत्तेः । नान्त्यः, पञ्चम्या रात्रेरन्यपदार्थप्रवेशाभावे कल्याणीपञ्चमा इति समासात्पञ्चमीं रात्रिं विना चतुर्णामेव बोधनापत्तौ पञ्चमपदस्यासंगत्यापादनादिति चेत्, सत्यम्—पञ्चानां रात्रीणाम् उद्भूतावयवभेदः समुदाय एवान्यपदार्थः । तत्र पञ्चम्या रात्रेः प्रवेशेऽपि तद्घटितसमुदायस्यान्यपदार्थत्वं न विरुध्यते, समुदायस्यावयवापेक्षया अन्यत्वात् । रात्रय इति बहुवचनं तु अवयवबहुत्वापेक्षम् । यथा चैतत्तथा सर्वनामसंज्ञासूत्रे प्रपञ्चितम् । अथ प्रमाण्यन्तादब्विधेरुदाहरणमाह—स्त्री प्रमाणी यस्य स स्त्रीप्रमाण इति । प्रमाणशब्दोऽत्र करणल्युडन्तो विशेष्यनिघ्नः, टित्वाद् ङीप् । बहुव्रीहौ सति अप्प्रत्यये 'यस्येति च' इति ईकारलोपे स्त्रीप्रमाण इति रूपम् ।

---

बहुव्रीहौ 'नद्यृतश्च' इति वक्ष्यमाणः कप् । वामोरूभार्य इति । 'संहितशफलक्षणवामादेश्च' इत्यूङ् । प्रधानमिति । भावल्युडन्तं नित्यनपुंसकम् । पञ्चमीति । 'तस्य पूरणे' इति डट् 'नान्तादसंख्यादेः–' इति डटो मडागमः । 'टिड्ढा–' इति ङीप् । प्रमाणीति । करणे ल्युट्, तदन्तस्य विशेष्यनिघ्नत्वात् स्त्रियां ङीप् । कथं तर्हि 'प्रमाणायां स्मृतौ' इति शाबरभाष्यमिति चेत् । अत्र भट्टाः—'प्रमाणमयते

'पुंवद्भावप्रतिषेधोऽप्रत्ययश्च प्रधानपूरण्यामेव' (वा ३३५९-३९१०)। पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या। अन्यत्र तु—८३३ नद्यृतश्च (५-४-१५३) नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप्स्यात्। पुंवद्भा ८३४ केऽणः। (७-४-१३) के परेऽणो ह्रस्वः स्यात्। इति प्राप्ते— न कपि। (७-४-१४) कपि परे अणो ह्रस्वो न स्यात्। कल्याणपञ्च

---

पूर्वपदस्य तु नित्यस्त्रीलिङ्गत्वादभाषितपुंस्कत्वान्न पुंवत्त्वप्रसक्तिः। प्रधान मेवेति। 'स्त्रियाः पुंवत्—' इति सूत्रे 'अप्पूरणी—' इति सूत्रे च प्रधानपूर कर्तव्यमिति भावः। ननु कल्याणीपञ्चमा रात्रय इत्यत्र पञ्चम्या रात्रेः मानपदार्थत्वात् कथं प्राधान्यम्, बहुव्रीहेरन्यपदार्थप्रधानत्वादित्यत आह— पूरणी वाच्या चेत्युक्तोदाहरणे मुख्येति। कल्याणीपञ्चमा रात्रय दाहरणे पञ्चानां पूरणी रात्रिः समस्यमानपञ्चमीपदार्थत्वेऽपि अन्यपदार्थ घटकतया बहुव्रीहिसमासवाच्यापि भवतीति कृत्वा मुख्या भवतीत्यर्थः। वयवस्य रात्रिसमुदायस्य प्रधानत्वेऽपि तद्घटकतया यथा प्रथमाद्याश्चतस्रो समासाभिधेयाः, एवं पञ्चम्यपि रात्रिः समासाभिधेया भवतीति समस्यमानप पदार्थस्य अन्यपदार्थानुप्रवेशात् प्राधान्यमिति भावः। अन्यत्र त्विति। क पञ्चमीकः पक्ष इत्यत्र पूरण्या रात्रेरन्यपदार्थप्रवेशाभावाद् अप्राधान्यादप्रत्य सति विशेषो वक्ष्यत इत्यर्थः। नद्यृतश्च। नदी च ऋच्चेति समाहारद्वन्द्वात्पञ्च 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतो बहुव्रीहावित्यनुवृत्तं पञ्चम्या विपरिणम्यते क्षिप्तमुत्तरपदं नद्यृद्भ्यां विशेष्यते। तदन्तविधिः। 'उरःप्रभृतिभ्यः—' इत्यतः क नुवर्तते। तदाह—नद्युत्तरपदादिति। नद्यन्तोत्तरपदादित्यर्थः। कप् स्यादि तद्धितः समासान्तश्चेत्यपि बोध्यम्। तथा च कल्याणी पञ्चमी यस्य पक्षस्येति बहुव्रीहौ सति व्यपदेशिवत्त्वेन पञ्चम्युत्तरपदस्य नद्यन्तत्वात्तदुत्तरपदकबहुव्रीहेः भावः। नद्यन्ताद् बहुव्रीहेरिति न व्याख्यातम्। बहुधीवरीति बहुव्रीहेः नद्यन्त त्वापत्तेः। नद्यन्तोत्तरपदादिति व्याख्याने तु न दोषः। धीवन्शब्दस्योत्तर नकारान्तत्वेन नदीत्वाभावादिति शब्देन्दुशेखरे विस्तरः। पुंवद्भाव इति। रात्रेः समासवाच्यत्वाभावेन निषेधाभावादिति भावः। केऽणः। ह्रस्वः स्यादि 'शॄदॄप्राम्—' इत्यतस्तदनुवृत्तेरिति भावः। न कपि। अणो ह्रस्व इति। इत्यतः 'शॄदॄप्राम्—' इत्यतश्च तदनुवृत्तेरिति भावः। ननु कल्याणपञ्चमीकः पक्ष पञ्चदशाहोरात्रात्मके पक्षे अन्यपदार्थे पञ्चम्या रात्रेः प्रवेशात् प्राधान्यं दुर्वार

---

याति मूलभूतां श्रुतिं यतः। क्विबन्तादयतेस्तस्मात्प्रमाणा स्मृतिरुच्यते' इत्य तत्रायतेः क्विपि 'ह्रस्वस्य पिति कृति—' इति तुकि टाब् दुर्लभः, तथाप्यागमशास्त्र नित्यत्वात्तुङ् नेति बोध्यम्। क्विबिवाचरति क्विब्—विजित्यर्थं इति वा व्याख्ये अन्ये तु प्रमाणं वेदस्तद्वदाचरतीत्याचारक्विबन्तात्प्रमाणशब्दात्पचाद्यचि टाबित्या प्रधानपूरण्यामेवेति। प्रधाने कार्यसंप्रत्ययस्यार्थसिद्धमिदम्। नद्यृतः। स्पष्टार्थम्। नद्युत्तरपदादिति। नद्यन्तादिति नोक्तम्, कप्रत्ययेन सह

पक्षः। अत्र तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतया रात्रिरप्रधानम्। बहुकर्तृकः। अप्रियादिषु किम्—कल्याणीप्रियः। प्रिया, मनोज्ञा, कल्याणी, सुभगा, दुर्भगा, भक्तिः, सचिवा, स्वसा, कान्ता, क्षान्ता, समा, चपला, दुहिता, वामा, अबला, तनया। 'सामान्ये नपुंसकम्' दृढं भक्तिर्यस्य स दृढभक्तिः। स्त्रीत्वविवक्षायां तु दृढाभक्तिः। ८३६ तसिलादिष्वाकृत्वसुचः। (६-३-३५) तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत्स्यात्। परिगणनं कर्तव्यम्, अव्याप्त्यतिव्याप्तिपरिहाराय। 'त्रतसौ' (वा ३९१८)। 'तरप्तमपौ' (वा ३९१९)। 'चरट्-

---

आह—अत्र तिरोहितेति। रात्रेः तत्प्रवेशाभावाद् अप्राधान्यमिति भावः। भाष्ये एवमुदाहरणमेवात्र लिङ्गम्। ऋदन्तोत्तरपदात्कपमुदाहरति—बहुकर्तृक इति। बहवः कर्तारो यस्येति विग्रहः। तदेवमपूरणीप्रियादिष्वित्यत्र पूरणीविषयं प्रपञ्च्य प्रियादिषु परेषु पुंवद्भावनिषेधस्य प्रयोजनं पृच्छति—अप्रियादिषु किमिति। कल्याणीप्रिय इति। कल्याणी प्रिया यस्येति विग्रहः। प्रियादिगणं पठति—प्रिया मनोज्ञेत्यादि। ननु भक्तिशब्दस्य प्रियादिषु पाठे दृढा भक्तिर्यस्य स दृढभक्तिरित्यत्र कथं पुंवत्वमित्यत आह—सामान्ये नपुंसकमिति। आश्रित्येति शेषः।. दृढमिति। पदसंस्कारपक्षे सामान्यपरत्वमाश्रित्य दृढशब्दो नपुंसकलिङ्गो व्युत्पाद्यः। ततस्तस्य भक्तिशब्देनान्वये पूर्वप्रवृत्तं नपुंसकत्वं नापैति, लिङ्गविशेषस्याविवक्षितत्वात्, वेदाः प्रमाणमितिवत्। अत्र चार्थे पस्पशाह्निकभाष्ये 'शक्यं च अनेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्' इति प्रयोगो लिङ्गम्। नन्वेवं सति प्रियादिषु भक्तिशब्दपाठो व्यर्थ इत्यत आह—स्त्रीत्वविवक्षायां त्विति। वाक्यसंस्कारपक्षे विशेष्यानुसारेण स्त्रीत्वप्रतीतेर्नियमादिति भावः। तसिलादिष्वाकृत्वसुचः। 'स्त्रियाः पुंवत्—' इत्यनुवर्तते। आ कृत्वसुच इत्याङ् अभिविध्यर्थकः, तमभिव्याप्येत्यर्थः। तदाह—तसिलादिषु कृत्वसुजन्तेष्विति। 'पञ्चम्यास्तसिल्' इत्यारभ्य 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इत्येतत्पर्यन्तसूत्रविहितेष्वित्यर्थः। उत्तरपदपरकत्वाभावात् स्त्रियाऽपुंवदित्यप्राप्तौ वचनमिदम्। ननु तिल्थ्यन्शसां कृत्वसुचः परत्रव पाठात् तसिलादिष्वन्तर्भावात्तेषु परेषु वृकतिः अजथ्या बहुश इत्यत्र पुंवत्त्वं न स्यादित्यव्याप्तिः। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति देश्यस्य 'षष्ठ्या रूप्य च' इति रूप्यस्य च तसिलादिष्वन्तर्भावात् तयोः परतः पट्वीदेश्येत्यत्र [illegible] रूप्येत्यत्र च पुंवत्त्वं स्यादित्यतिव्याप्तिरित्यत आह—परिगणनमिति। [illegible] त्यतिव्याप्तीति। इष्टस्थले अप्रवृत्तिरव्याप्तिः। अनिष्टस्थले प्रवृत्तिः अतिव्या[illegible]

---

बहुव्रीहेरनद्यन्तत्वात् उत्तरपदं तु नद्यन्तं भवत्येव, 'समासे अन्तः समासान्तः' इ[illegible] पक्षाश्रयणादिति बोध्यम्। दृढमिति। अदार्ढ्यनिवृत्तिमात्रपरत्वेनात्र दृढशब्दप्रयोगान्न लिङ्गविशेषविवक्षेति भावः। लिङ्गविशेषविवक्षायां तु दृढा भक्तिरित्यादिसिद्धये प्रियादिषु भक्तिशब्दपाठः। तसिलादिषु कृत्वसुजन्तेष्विति। 'पञ्चम्यास्तसिल्' इत्यारभ्य 'संख्याया क्रियाभ्यावृत्तिगणने कृत्वसुच्' इत्येतत्पर्यन्तेष्वित्यर्थः। [illegible] वृकतिरजथ्या बहुश इत्यत्राव्याप्तिः तसिलादि-

जातीयरौ' (वा ३९२०)। 'कल्पब्देशीयरौ' (वा ३९२१)। 'रूपप्पा (वा ३९२२)। 'थाल्' (वा ३९२३)। 'तिल्थ्यनौ' (वा ३९२५)। बहुत्र। बहुतः। दर्शनीयतरा। दर्शनीयतमा। 'घरूप–' (सू९८५) वक्ष्यमाणो ह्रस्वः परत्वात्पुंवद्भावं बाधते। पट्वितरा। पट्वितमा। पटु पटुजातीया। दर्शनीयकल्पा। दर्शनीयदेशीया। दर्शनीयरूपा। दर्शनीयपा बहुथा। प्रशस्ता वृकी वृकतिः। अजाभ्यो हिता अजथ्या। 'शसि बह्वल्पा

परिगणनप्रकारमाह—त्रतसावित्यादिना। बह्वीषु बहुत्र इति। बह्वीषि बह्वीशब्दात् 'सप्तम्यास्त्रल्' इति त्रलि पुंवत्त्वे ङीषो निवृत्तौ बहुत्रेति रूपमि बहुत इति। 'पञ्चम्यास्तसिल्' इति बह्वीशब्दात् तसिल्, पुंवत्त्वाद् ङीषो नि रिति भावः। दर्शनीयतरेति। अनयोरियमतिशयेन दर्शनीयेत्यर्थे दर्शनीया 'द्विवचनविभज्योपपदे तरप्–' इति तरप्। पुंवत्त्वे टापो निवृत्तिरिति भावः। यतमेति। आसामियमतिशयेन दर्शनीयेत्यर्थे दर्शनीयाशब्दाद् 'अतिशायने विष्ठनौ' इति तमप्। पुंवत्त्वे टापो निवृत्तिरिति भावः। ननु पट्वीशब्दात्तरपि च पट्वीतरा पट्वीतमा इत्यत्रापि पुंवत्त्वे ङीषो निवृत्तौ पटुतरा पटुतमेति स्या आह—घरूपेति। तथा च ह्रस्वेन पुंवत्त्वे बाधिते सति ङीषो निवृत्त्यभावे ह्रस्वे सति पट्वितरा पट्वितमेति रूपमित्यर्थः। पटुचरीति। पट्वी 'भूतपूर्वे चरट्' इति पुंवत्त्वे ङीषो निवृत्तिरिति भावः। पूर्वं पट्वीत्यर्थः। तीयेति। पट्वीशब्दात् 'प्रकारवचने जातीयर्' इति पुंवत्त्वे ङीषो निवृ भावः। पटुसदृशीत्यर्थः। दर्शनीयकल्पेति। 'ईषदसमाप्तौ–' इति दर्शनीया कल्पप्। पुंवत्त्वे टापो निवृत्तिरिति भावः। प्रायेण दर्शनियेत्यर्थः। दर्शनी येति। 'ईषदसमाप्तौ–' इति दर्शनीयाशब्दाद् देशीयर्। पुंवत्त्वे टापो निवृ भावः। प्रायेण दर्शनीयेत्यर्थः। दर्शनीयरूपेति। दर्शनीयाशब्दात् 'प्र रूपप्' इति रूपपि पुंवत्त्वे टापो निवृत्तिरिति भावः। प्रशस्तत्वेन द्रष्टुं योग्य दर्शनीयपाशेति। दर्शनीयशब्दाद् याप्ये पाशप्। पुंवत्त्वे टापो निवृ भावः। कुत्सितत्वेन द्रष्टुं योग्येत्यर्थः। बहुथेति। बह्वीशब्दात् प्रकारवचने पुंवत्त्वे ङीषो निवृत्तिरिति भावः। बहुप्रकारेत्यर्थः। वृकतिरिति। प्रशंसाया वृत्तौ 'वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि' इति वृकीशब्दाद् जातिलक्षणङी तिल्। पुंवत्त्वे ङीषो निवृत्तिरिति भावः। अजथ्येति। 'तस्मै हितम्' इत्य

कृत्वसुच्पर्यन्तेषु तिल्थ्यन्शसां पाठाभावात्। पट्वीदेश्या शुभ्रारूप्य इत्यत्राति 'ईषदसमाप्तौ–' इति देश्यस्य 'षष्ठ्या रूप्य च' इति रूप्यस्य च तत्र अतस्तन्निवारणाय परिगणनमित्यर्थः। परिगणिताम् त्रतसादीन् क्रमेणोदाह बह्वीष्विति। यद्यपि बह्वादिषु ङीषो वैकल्पिकत्वात्तदभावे बहुत्रेत्यादि सि तथापि पक्षे बह्वीत्रेत्याद्यनिष्टवारणायेदम्। ततस्तत्रेति प्राचोक्तमुदाहरणमत्रोपे 'सर्वनाम्नो वृत्तिमात्रे–' इत्यनेन गतार्थत्वादिति मनोरमायां स्थितम्। पट्वि प्रायेण तु पटुतरेत्युदाहृतम्, तत्प्रामादिकमिति भावः। पटुचरीति। पूर्वं

पुंवद्भावो वक्तव्यः' (वा ३९२६) वह्वीभ्यो देहि बहुशः, अल्पाभ्यो देहि अल्पशः। 'त्वतलोर्गुणवचनस्य' (वा ३९२७) शुक्लाया भावः शुक्लत्वम्, शुक्लता। गुणवचनस्य किम्—कर्त्र्या भावः कर्त्रीत्वम्। 'शरदः कृतार्थता' इत्यादौ तु सामान्ये नपुंसकम्। 'भस्याढे तद्धिते' (वा ३९२८)। हस्तिनीनां

---

'अजाविभ्यां थ्यन्' इत्यजाशब्दात् थ्यन्। पुंवत्त्वे टापो निवृत्तितिति भावः। 'वृकतिरजथ्या' इत्यत्र 'जातेश्च' इति पुंवत्त्वनिषेधो न, परिगणनसामर्थ्यात्। शसीती। शसि परे वह्वर्थकस्य अल्पार्थकस्य पुंवत्त्वं वक्तव्यमित्यर्थः। त्रतसावित्यादि-परिगणितेष्वनन्तर्भावाद्वचनमिदम्। बह्वीभ्य इति। बह्वीभ्यो देहीत्यर्थे 'बह्वल्पार्था-च्छस् कारकादन्यतरस्याम्' इति बह्वीशब्दात् शस्, पुंवत्त्वे ङीषो निवृत्तिरिति भावः। संप्रदानकारकत्वस्फोरणाय देहीति शब्दः। अल्पश इति। अल्पाभ्यो देहीत्यर्थः। पुंवत्त्वे टापो निवृत्तिरिति भावः। त्वतलोरिति। त्वप्रत्यये तलप्रत्यये च परे गुणोपसर्जनद्रव्यवाचिनः पुंवत्त्वं वक्तव्यमित्यर्थः। कर्त्रीत्वमिति। कर्त्रीशब्दस्य क्रियानिमित्तत्वान्न गुणवचनत्वमिति भावः। 'आकडारात्—' इति सूत्रभाष्ये समास-कृदन्ततद्धितान्ताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दभिन्नमर्थवच्छब्दरूपं गुणवचनसंज्ञकं भवतीति स्थितम्। प्रकृते च गुणवचनशब्देन एतदेव विवक्षितम्। 'वोतो गुणवच-नात्' इति सूत्रभाष्यस्थं 'सत्त्वे निविशतेऽपैति—' इत्यादि गुणलक्षणं तु नात्र प्रवर्तते। अत एव 'एक तद्धिते च' इति सूत्रभाष्ये एकस्या भाव एकत्वमित्यत्र एकशब्दस्य गुणवचनत्वाभावात् 'त्वतलोर्गुणवचनस्य' इत्यप्राप्तं पुंवत्त्वमत्र विधीयत इत्युक्तं सङ्ग-च्छते। सखीत्वमित्यादि तु असाध्वेवेति शब्देन्दुशेखरे विस्तरः। ननु कृतः अर्थः कृत्यं यया सा कृतार्था, तस्या भावः कृतार्थतेत्यत्र कथं पुंवत्त्वम्। कृतार्थशब्दस्य समासत्वेन उक्तगुणवचनत्वाभावादित्यत आह—शरद इति। दृढभक्तिरित्यात्रानु-पदोक्तरीत्या कृतः अर्थः येन तत् कृतार्थमिति सामान्याभिप्रायं कृतार्थशब्दं प्रथमतो व्युत्पाद्य तस्मादविवक्षितलिङ्गात् तलप्रत्ययो व्युत्पाद्य इति भावः। भस्याढ इति। ढभिन्ने तद्धिते परे स्त्रियाः पुंवत्त्वं वक्तव्यमित्यर्थः। परिगणितेष्वनन्तर्भावाद्वचनम्।

---

पटुजातीयेति। 'प्रकारवचने जातीयर्'। दर्शनीयरूपेत्यादि। 'प्रशंसायां रूपप्'। 'याप्ये पाशप्'। बहुथेति। 'प्रकारवचने थाल्'। तत्र हि 'किंसर्वनाम-बहुभ्यः—' इत्यधिकृतम्। वृकतिरिति। 'वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि' इति तिल्। अजथ्येति। 'अजाविभ्यां थ्यन्'। शसीति। 'बह्वल्पार्थात्—' इति यः शस्, स तसिलादिषु ज्ञातव्य इत्यर्थः। त्रतसादिषु परिगणनं कर्तव्यमिति यावत्। त्वतलोर्गुणवचनस्येति। गुणस्येति वक्तव्ये वचनग्रहणं प्रसिद्धगुणपरिग्रहार्थम्। अतस्तथैवोदाहरति—शुक्लत्वम्, शुक्लतेति। नन्विह जातिसंज्ञाव्यतिरिक्तं धर्ममात्रं गुण इति यत्प्राचीनैरुक्तम्, तत्स्वीकर्तव्यम्। अन्यथा 'निरीक्ष्य मेने शरदः कृतार्थता' 'सा मुमोच रतिदुःखशीलताम्' इत्यादिषु पुंवद्भावाप्रवृत्त्या दीर्घश्रवणं स्यादित्यत आह—सामान्ये नपुंसकमिति। एवं च 'नेष्टं पुरो द्वारवतीत्वमासीत्' इत्यादि-

समूहो हास्तिकम् । अढे किम्—रौहिणेयः । 'स्त्रीभ्यो ढक्' (सू ११२३) ढोऽत्र गृह्यते । 'अग्नेर्ढक्' (सू १२३६) इति ढकि तु पुंवदेव । अग्नायी अस्य स्थालीपाकस्य आग्नेयः । सपत्नीशब्दस्त्रिधा । शत्रुपर्यायात्सपत्नशब्दा रवादित्वाद् ङीन्येकः । समानः पतिर्यस्या इति विग्रहे विवाहनिबन्धनं

---

हास्तिकमिति । 'तस्य समूहः' इत्यधिकारे 'अचित्तहस्तिधेनोः—' इति ठस्येकः । पुंवत्त्वे सति नान्तलक्षणङीपो निवृत्तिः । 'नस्तद्धिते' इति टिलो भावः । न च पुंवत्वाभावेऽपि 'यस्येति च' इति ईकारलोपे टिलोपे च हास्ति सिद्धमिति वाच्यम् । 'यस्य—' इति लोपस्याभीयत्वेनासिद्धतया स्थानिवत्त्वे तद्धितपरकत्वाभावेन टिलोपानापत्तेः । 'ठक्छसोश्च' इति पुंवत्त्वादेव सिद्धि शङ्क्या । छसः साहचर्येण 'भवतष्ठक्छसौ' इति ठक एव तत्र ग्रहणात् । रौ इति । 'वर्णादनुदात्तात्—' इति रोहितशब्दाद् ङीप् तकारस्य नकारश्च । रौ अपत्यमित्यर्थे 'स्त्रीभ्यो ढक्', एयादेशः, 'भस्य—' इति पुंवत्त्वे ङीन्नकारयोः नि स्यादिति भावः । गृह्यत इति । व्याख्यानादिति भावः । अग्नायीति । स्त्री अग्नायी । 'वृषाकप्यग्नि—' इति ङीप् । अग्नेरिकारस्य ऐकारादेशः । अ देवता अस्येत्यर्थे 'अग्नेर्ढक्' इति ढक् । प्रातिपदिकग्रहणे लिङ्गविशिष्ट ग्रहणात् । ततो ढस्य एयादेशः, पुंवत्त्वे सति ङीबैत्वनिवृत्तौ अग्नि ए स्थिते 'यस्येति च' इति इकारलोपे आदिवृद्धौ आग्नेय इति रूपम् । पुंवत्त्वा तु आग्नायेय इति स्यादिति भावः । वस्तुतस्तु अग्नित्वं पुंसि प्रवृत्तिनि स्त्रियां तु अग्निसंबन्ध इति प्रवृत्तिनिमित्तभेदादेवात्र न पुंवत्त्वमिति बो सपत्नीशब्दस्त्रिधेति । व्युत्पादनभेदादिति शेषः । शत्रुपर्यायादिति । वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इति कोशादिति भावः । अयं भाषितपुंस्कः । हनिबन्धनमिति । विवाहजनितसंस्कारविशेषनिमित्तकमित्यर्थः । 'पतित्वं सप्त इत्यादिस्मरणादिति भावः । आश्रित्येत्यनन्तरं प्रवृत्त इति शेषः । समानः पतिः

---

प्रयोगो निर्बाध इति भावः । हास्तिकमिति । 'अचित्तहस्तिधेनोः—' इति न चात्र 'यस्येति—' लोपेन निर्वाहः, तस्य असिद्धवदत्रा—' इत्यसिद्धत्वाद् परस्मिन्—' इति स्थानिवद्भावाच्च 'नस्तद्धिते' इति टिलोपानापत्तेः । च 'ठक्छ इत्यनेनैवात्र पुंवद्भावसिद्धिः शङ्क्या । छसा साहचर्यात् 'भवतष्ठक्छसौ' ठकस्तत्र ग्रहणात् । नापि 'जातेश्च' इति पुंवद्भावनिषेधः शङ्क्यः । भाष्योदाहरणात् 'सौत्रस्यैव निषेधो न त्वौपसंख्यानिकस्य' इति ज्ञाप रौहिणेय इति । रोहितशब्दाद् 'वर्णादनुदात्तात्—' इति ङीब्नकारौ । पुंवद्भावे तयोर्निवृत्तौ रौहितेय इति स्यादिति भावः । गृह्यत इति । व्याख्या शेषः । अग्नायीति । अग्निशब्दाद् 'वृषाकप्यग्नि—' इति स्त्रियां ङीबैकारा आग्नेय इति । पुंवद्भावाभावे तु आग्नायेय इति स्यादिति भावः । श दिति । अत्र च 'व्यन् त्सपत्ने' इ[illegible] गो लिङ्गम् । 'रिपौ वैरिसपत्नारि द्वेषणदुर्हृदः' इत्यमरः । विवाहनिबन्धनमिति । तज्जन्यसंस्कारविशे

शब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः। स्वामिपर्यायपतिशब्देन भाषितपुंस्कस्तृतीयः। आद्ययोः शिवाद्यण्। सपत्न्या अपत्यं सापत्नः। तृतीयात्तु लिङ्गविशिष्ट परिभाषया पत्युत्तरपदलक्षणो ण्य एव, न त्वण्। शिवादौ रूढयोरेव ग्रहणात् सापत्यः। 'ठक्छसोश्च' (वा ३९२९) भवत्याश्छात्रा भावत्काः, भवदीयाः।

---

इति बहुव्रीहिः। 'नित्यं सपत्न्यादिषु' इति निपातनात् सभावः, ङीब् नत्वं च। नित्यस्त्रीलिङ्ग इति। अन्यपदार्थस्य स्त्रीत्वे सत्येव विवाहनिबन्धनपतिशब्दस्य सभावादिविधानादिति भावः। 'पतिर्नाम धवः' इति कोशादिति भावः। आद्ययोरिति। शत्रुपर्यायं सपत्नशब्दं विवाहनिबन्धनं पतिशब्दं चाश्रित्य प्रवृत्तयोः सपत्नीशब्दयोरित्यर्थः। सापत्न इति। सपत्न्या अपत्यमित्यर्थे 'तस्यापत्यम्' इत्यणं बाधित्वा 'स्त्रीभ्यो ढक्' इति ढकि प्राप्ते 'शिवादिभ्योऽण्' इत्यणि आद्यस्य सपत्नीशब्दस्य भाषितपुंस्कतया पुंवत्त्वे ङीपो निवृत्तौ सापत्न इति रूपम्। न तु नकारस्यापि निवृत्तिः, शत्रुपर्यायसपत्नशब्दस्य अव्युत्पन्नप्रातिपदिकतया तत्र नकारस्य स्त्रीत्वनिमित्तकत्वाभावात्। द्वितीयस्य तु सपत्नीशब्दस्य ङीब्नत्वाभ्याम् उत्पन्नस्य शिवाद्यणि कृते भाषितपुंस्कत्वाभावाद् न पुंवत्त्वम्, किंतु ङीपो 'यस्येति च' इति लोपे सापत्न इति रूपम्। सति तु पुंवत्त्वे ङीब्नकारयोः निवृत्तौ सापत इति स्यात्। तृतीयात्त्विति। स्वामिपर्यायं पतिशब्दमाश्रित्य प्रवृत्तात् सपत्नीशब्दात् पत्युत्तरपदलक्षणो ण्य एवेत्यन्वयः। सपत्न्या अपत्यमित्यर्थे 'तस्यापत्यम्' इत्यणं बाधित्वा 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्य एवेत्यन्वयः। ननु सपत्नीशब्दो न पत्युत्तरपद इत्यत आह—लिङ्गविशिष्टपरिभाषयेति। एवशब्दस्य व्यावर्त्यमाह—नत्वणिति। ननु ण्यप्रत्ययस्यापि शिवाद्यण् अपवाद इत्यत आह—शिवादौ रूढयोरेवेति। सपत्नशब्दः शत्रौ केवलरूढः। विवाहनिबन्धनं पतिशब्दमाश्रित्य प्रवृत्तस्तु योगरूढः, विवाहकर्तरि पाति रक्षतीति योगस्यापि सत्त्वात्। स्वामिपर्यायं तु पतिशब्दमाश्रित्य प्रवृत्तः केवलयौगिकः। शिवादौ रूढयोरेव ग्रहणम्, न तु केवलयौगिकस्य, योगाद् रूढेर्बलवत्त्वादिति भावः। ततः किमित्यत आह—सापत्य इति। स्वामिपर्यायपतिशब्दघटितसपत्नीशब्दस्य भाषितपुंस्कत्वात् पुंवत्त्वे सति ङीब्नत्वयोर्निवृत्तौ 'यस्येति च' इतीकारलोपः। सापत्य इति रूपमित्यर्थः। ठक्छसोश्चेति। वार्तिकमेतत्। एतयोः परतः पुंवत्त्वं वक्तव्यमिति शेषः। अभत्वादप्राप्तौ वचनम्। भावत्काः, भवदीया इति। 'तस्येदम्' इत्य-

---

रूढमित्यर्थः। सापत्न इति। अभाषितपुंस्कत्वाद् द्वितीयस्य पुंवद्भावो न भवति। सति च पुंवद्भावे नकारादेशाभावात्सापत इति स्यात्। आद्यस्य तु पुंवद्भावेऽपि सापत्न इत्येव भवतीति भावः। रूढयोरेवेति। आद्यः शब्दो रूढः, द्वितीयस्तु योगरूढः, तेन 'समानः पतिर्यस्याः' इति विग्रहो न विरुध्यत इति दिक्। ठक्छसोश्चेति। अभत्वार्थं आरम्भः। भावत्का इति। 'भवतष्ठक्छसौ' ठावस्थायामेव पुंद्भावे कृते 'ठस्येकः' इति इकादेशं बाधित्वा तान्तलक्षणः कादेशः। नन्विकादेशे भत्वाद् 'भस्याढे–' इति पुंवद्भावे सति कादेशप्रवृत्त्या रूपसिद्धौ किमत्र ठग्रहणेन। मैवम्, [illegible]

एतद्वार्तिकं 'एकतद्धिते च' (सू १०००) इति सूत्रं च न कर्तव्यम्, 'सर्व वृत्तिमात्रे पुंवद्भावः' इति भाष्यकारेष्टया गतार्थत्वात् । सर्वमयः । सर्वकाम् सर्विका भार्या यस्य स सर्वकभार्यः । सर्वप्रिय इत्यादि । पूर्वस्यैवेदम्,

---

धिकारे 'भवतष्ठक्छसौ' इति भवतीशब्दात् ठक्छसौ, लिङ्गविशिष्टस्यापि ग्रह तत्र ठकि इकादेशात्प्राक् ठावस्थायामेव पुंवत्त्वे इकादेशं बाधित्वा 'इसुसुक्तान्ता इति कादेशः । न च इकादेशे शति भत्वाद् 'भस्याढे तद्धिते' इति पुंवत्त्वे कृते स्थानिवत्त्वेन ठक्त्वाद् 'इसुसुक्तान्तात्–' इति कादेशे भावत्क इति रूपसिद्धौ कि हणेनेति वाच्यम्, इकादेशे कृते हि मथितं पण्यमस्य माथितिक इत्यत्रेव अ तया स्थानिवत्त्वाभावेन संनिपातपरिभाषया कादेशानापत्तेः, अतष्ठग्ग्रहणम् । श ब्दाच्छसि तु 'सिति च' इति पदत्वेन भत्वस्य बाधाद् 'भस्याढे–' इत्यप्राप्ते अनेन पुंवत्त्वम् । एतदिति । 'ठक्छसोश्च' इति वार्तिकमित्यर्थः । एकत चेति । एकशब्दस्य तद्धिते उत्तरपदे च परे ह्रस्वः स्यादिति तदर्थः । एकस्या एकत्वम्, एकता । एकस्याः शाटी एकशाटी । वृत्तिमात्र इति । कृत्तद्धितादयो वृ मात्रशब्दः कार्त्स्न्ये । 'स्त्रियाः पुंवत्—' इत्यादिसूत्रगतनिमित्ताभावेऽपि भाष्यकारेष्टचेति । भाष्यकारवचनेनेति यावत् । इदं च 'दक्षिणोत्तराभ्याम्- सूत्रे भाष्ये स्पष्टम् । गतार्थत्वादिति । निवृत्तप्रयोजनकत्वाद् इति भावः । योजनस्य 'सर्वनाम्नः–' इति वचनेनैव सिद्धत्वादिति यावत् । 'सर्वनाम्नो वृत्ति- इत्यस्य तद्धितवृत्तौ उदाहरति—सर्वमय इति । सर्वस्या आगत इत्यर्थे आगतः' इत्यधिकारे 'मयट् च' इति मयट्, 'सर्वनाम्नः–' इति पुंवत्त्वम्, चिन्मया दिवदत्यन्तस्वार्थिको वा मयट् । अथ सनाद्यन्तधातुवृत्तावुदाहरति—सर्वकाम्यं सर्वामात्मन इच्छतीत्यर्थे 'काम्यच्च' इति सर्वाशब्दात् काम्यच् । 'सर्वनाम्न इति पुंवत्त्वम् । 'सनाद्यन्ताः–'इति धातुत्वाल्लडादि । मयट्काम्यचोस्त्रतसादि परिगणितेष्वनन्तर्भावात्तसिलादिष्विति पुंवत्त्वमत्र न स्यादिति भावः । तद्धितवृत्तौ हरणान्तरमाह—सर्वकभार्य इति । समासवृत्तिरेवैषा । सर्वप्रिय इति । प्रिया यस्येति विग्रहः । समासवृत्तिरियम् । प्रियादिपर्युदासो रूपवतीप्रिय इत्या युज्यत इति भावः । वस्तुतस्तु एकशब्दे अकच्प्रत्यये 'प्रत्ययस्थात्–' इति इत्वे

---

योगात्सन्निपातपरिभाषया वा कादेशप्रवृत्तेर्दुर्लभत्वात् । अतः 'ठक्छसोः–' इति कर्तव्यमेव । भवदीया इति । छसः सित्करणात् 'सिति च' इति पदसंज्ञा । जश्त्वं भवति । एवं च पदसंज्ञया भसंज्ञाया बाधाद् 'भस्याढे—' इत्यस्या वार्तिके छस्ग्रहणं कृतम् । भाष्यकारेष्टचेति । अनेन सूत्रवार्तिकयोरुक्ति ध्वनितः । उत्तरं दृष्ट्वा पूर्वस्याप्रवृत्तत्वात् । निष्कर्षे तु व्यर्थमेवेत्याह—गता दिति । इष्टेरुदाहरणान्याह—सर्वमय इत्यादिना । 'तत आगतः' 'मयड्वा—' इति मयट् । तसिलादिषु मयडादेरपरिगणितत्वात्तेनेदं न सि भावः । सर्वकभार्यं इति । न च 'स्त्रियाः पुंवत्'—इति सूत्रेण गतार्थं



कोपधायाः' इति निषेधात् । न चास्यापि तेन निषेधः शङ्कयः । 'स्त्रियाः

भाजाज्ञाद्वा—' (सू ४६६) इति लिङ्गात्। तेनाकच्येकशेषवृत्तौ च न। सर्विका। पूर्वाः। 'कुक्कुट्यादीनामण्डादिषु' (वा ३९३४) कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृग्याः पदं मृगपदम्। मृगक्षीरम्। काकशावः। ८३७ क्यङ्मानि-

---

तस्याभाव एकिकत्वम्। अत्र पुंवत्त्वे टाप इत्वस्य च निवृत्तौ एककत्वमिति स्यात्, इकारो न श्रूयेत, इत्वनिमित्तस्य टापो निवृत्तत्वात्, पाचिकाशब्दाज् जातीयरि पाचकजातीयेतिवत्। ह्रस्वे सति स्थानिवत्त्वे टापः सत्त्वात् प्राप्तजीविकवदित्वश्रवणमिति फलभेदसत्त्वाद् 'एकतद्धिते च' इति न गतार्थमित्याहुः। ननु तदितरा तदन्येत्यादावुत्तरपदस्य सर्वनामत्वात् पुंवत्त्वं स्यादित्यत आह—पर्वस्यैवेदमिति। वृत्तिप्रविष्टानेकभागानां मध्ये किञ्चिदपेक्षया पूर्वस्यैवेदं सर्वनाम्नः पुंवत्त्वविधानमित्यर्थः। भस्त्रैषाजाज्ञाद्वेति लिङ्गादिति। 'भस्त्रैषा—' इति सूत्रेण एषा द्वा इत्येतयोः साकच्कयोरपि कात्पूर्वस्य इत्वविधानम् अन्यथा निर्विषयं स्यात्। तद्धितवृत्तौ तयोः सर्वनामतया पुंवत्त्वनियमादिति भावः। अकचि तद्धितवृत्तावुदाहरति—सर्विकेति। सर्वाशब्दात् साकच्कात्टापि 'प्रत्ययस्थात्—' इति इत्वे पुंवत्त्वे टाबित्त्वयोः निवृत्तिः स्यादिति भावः। एकशेषवृत्तावुदाहरति—सर्वा इति। टाबन्तस्य प्रथमाबहुवचनमिदम्। पुंवत्त्वे टापो निवृत्तिः स्यादिति भावः। कुक्कुट्यादीनामण्डादिष्विति। पुंवत्त्वं वक्तव्यमिति शेषः। असमानाधिकरणार्थमिदमिति सूचयन् षष्ठीसमासमुदाहरति—कुक्कुट्या अण्डं कुक्कुटाण्डमिति। पुंवत्त्वेन जातिलक्षणङीषो निवृत्तिरिति भावः। एवमग्रेऽपि। मृगक्षीरमिति। मृग्याः क्षीरमिति विग्रहः। काकशाव इति। 'काक्याः शाव इति विग्रहः। 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः।

---

इत्यादिप्रकरणोक्तस्यैव तेन निषेधात्। अस्या इष्टेस्तु तस्मिन् प्रकरणे असमाविष्टत्वात्। न च वृत्त्यन्तर्गतस्य सर्वनामत्वाभावात्पुंवद्भावो न भवेदिति वाच्यम्। वचनारम्भसामर्थ्याद् मात्रग्रहणाद्वा क्वचित्सर्वनामत्वेन दृष्टानां संप्रति संज्ञाभावेऽपि पुंवद्भावाभ्युपगमात्। अतएवोत्तरपूर्वायै इत्यत्र संज्ञाभावेऽपि पुंवद्भावः। सर्वा नाम काचित्, तस्याः पुत्रः सर्वापुत्र इत्यत्र तु नातिप्रसङ्गः, संज्ञोपसर्जनयोः सर्वादिगणबहिर्भूतत्वेन वृत्तेः पूर्वमप्यसर्वनामत्वात्। सर्वप्रिय इति। 'स्त्रियाः पुंवत्—' इत्यत्र प्रियादिपर्युदासो रूपवतीप्रिय इत्यादावुपयुज्यत इति भावः। तदितरा तदन्येत्यादावुत्तरपदेऽतिप्रसङ्गमाशङ्क्याह—पूर्वस्यैवेति। वृत्तिघटकानेकभागमध्ये किंचिदपेक्षया पूर्वस्येत्यर्थः। लिङ्गादिति। अन्यथा एषा द्वा एतयोः कात्पूर्वस्य आपि विधीयमानमित्वं निर्विषयं स्यादिति भावः। 'दक्षिणपूर्वा दिक्' इति भाष्योदाहरणमपीह लिङ्गमिति बोध्यम्। यत्तु प्राचा 'सर्वनाम्नः समासेः पूर्वं[2] पुंवत्' इत्युक्तम्, यच्च व्याचख्युः 'वार्तिकार्थमनुवदति सर्वनाम्न इत्यादिना' इति. तत्प्रामादिकम्। 'वृत्तिमात्रे' इति पाठस्यैव भाष्यारूढत्वात्। सर्वमयः सर्वकाम्यतीत्युक्तोदाहरणासिद्धिप्रसङ्गाच्च। वार्तिकार्थमित्याद्यपि प्रामादिकमेव। वार्तिकग्रन्थे एतदभावात्। न च 'सर्वनाम्नो वृत्तिमात्रे—' इत्येतद्वार्तिकमेव, न तु भाष्यकारेष्टिरिति शङ्क्यम्। 'ठक्छसोः—' इति

---



१ सर्वकाया: इति क्वचित् पाठः। २ 'पूर्वम्' इति क्वचिन्नास्ति।

नोश्च। (६—३—३६) एतयोः परतः पुंवत्। एनीवाचरति एतायते। वाचरति श्येतायते। स्वाभिन्नां कांचिद्दर्शनीयां मन्यते दर्शनीयमानिनी। स्त्रियं मन्यते दर्शनीयमानी चैत्रः। ८३८ न कोपधायाः। (६—३— कोपधायाः स्त्रिया न पुंवत्। पाचिकाभार्यः। रसिकाभार्यः। मद्रिका

---

क्यङ्मानिनोश्च। एतयोरिति। क्यङि मानिनि च उत्तरपदे परत एनीवेति। एता चित्रवर्णा। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे।' इत्य एतशब्दः श्वेतपर्याय इति याज्ञिकाः। 'वर्णादनुदात्ता–' इति ङीब् नकारश्च। 'उ दाचरे' इत्यनुवर्तमाने 'कर्तुः क्यङ् सलोपश्च' इति एनीशब्दात् क्यङि पुंवत्वे त्वयोर्निवृत्तौ, 'अकृत्सार्वधातुकयोः' इति दीर्घे एतायते इति रूपमिति श्येनीवेति। श्येतशब्दः श्वेतपर्यायः। 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डु इत्यमरः। क्यङादि पूर्ववत्। ननु 'स्त्रियाः पुंवत्–' इत्येव मानिनीत्युत्तरपदे पुंवत्त्वसिद्धेः मानिन्ग्रहणं किमर्थमित्याशङ्क्य मानिन्ग्रहणमसमानाधिकरणार्थम् लिङ्गार्थं चेत्यभिप्रेत्य असमानाधिकरणे परे तावदुदाहरति—स्वभिन्नामिति। नीयमानिनीति। दर्शनीयामिति द्वितीयान्ते उपपदे सुप्यजातौ णिनिरित 'मनः' इति णिनिप्रत्ययः, उपपदसमासः, सुब्लुक्, असमानाधिकरणेऽपि मानि उत्तरपदे परे अनेन पुंवत्त्वे टापो निवृत्तौ 'ऋन्नेभ्यः–' इति ङीपि दर्शनीयमा रूपम्। या स्वात्मानमेव दर्शनीयां मन्यते तस्या दर्शनीयायाः 'स्त्रियाः पुंवत्–' पुंवत्त्वं सिद्धमिति ध्वनयितुं स्वभिन्नामित्युक्तम्। एकस्या एव दर्शनीयाया मन प्रति कर्मत्वकर्तृत्वसंभवेऽपि वास्तवाभेदेन मानिनीशब्दसामानाधिकरण्यसत्त्व भावः। अथास्त्रीलिङ्गे उत्तरपदे उदाहरति—दर्शनीयामिति। स्त्रियमित्य मात्मानमिति शेषः। आत्मानं यो दर्शनीयां स्त्रियं मन्यते स दर्शनीयमानी इत्यन्वयः। अत्र उत्तरपदवाच्यस्य मानिनो वस्तुतो दर्शनीयस्त्रीभेदेऽपि आ तदभेदमादाय सामानाधिकरण्यं' यद्यप्यस्ति, तथापि मानिन्शब्दस्य उत्तरपदस्य पुं त्वात् तस्मिन् परे पुंवत्त्वं न प्राप्तमित्यनेन तद्विधिरिति भावः। न कोप पाचिकाभार्य इति। पाचिका भार्या यस्येति विग्रहः। पचो ण्वुल्। अकादे त्वानि पुंवत्त्वनिषेधश्च। पुंवत्त्वे टाबित्त्वयोर्निवृत्तिः स्यात्। रसिकेति। र अस्तीति रसिका, 'अत इनिठनौ' इति ठन्। ठस्येकः, टाप्, पुंवत्त्वनिषेधः। पुंवत्त्वे निवृत्तिः स्यात्। मद्रिकायत इति। मद्राख्ये देशविशेषे भवा मद्रिका 'मद्रवृज्यो

---

वार्तिकस्य निरालम्बनत्वापत्तेः। भाष्यकारेष्टित्वे तु वार्तिकस्योक्तिसंभव उ प्राक्। क्यङ्मा—एतायत इत्यादि। 'कर्तुः क्यङ् सलोपश्च' क्यङि पुंवद्भा एतश्येतयोः। 'अकृत्सार्व–' इति दीर्घः। मानिन्ग्रहणमसमानाधिकरणार्थं चेत्याशयेन यथाक्रममुदाहरति—स्वभिन्नामित्यादिना। दर्शनीयमानिनी 'मनः' इति णिनिः। नान्तत्वान् ङीप्। या स्वात्मानमेव दर्शनीयां मन्यते 'स्त्रियाः पुंवत्–' इत्येव सिद्धम्। एकस्या अपि ईप्सिततमत्वव्यापाराश्रयत्वा भेदेन कर्मत्वकर्तृत्वयोः सत्त्वेऽपि वास्तवाभेदेन सामानाधिकरण्याविघातादि

मद्रिकामानिनी। 'कोपधप्रतिषेधे तद्धितवुग्रहणम्' ( वा ३९३१ )। नेह—पाका भार्या यस्य स पाकभार्यः। ८३९ **संज्ञापूरण्योश्च।** (६—३—३८) अनयोर्न पुंवत्। दत्ताभार्यः। दत्तामानिनी। दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति। पञ्चमीभार्यः। पञ्चमीपाशा। ८४० **वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे।** (६-३-३९) वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत्। स्रौघ्नी-

---

टाप्, इत्वम्, मद्रिकेवाचरतीत्यर्थः। 'क्यङ्मानिनोश्च' इति पुंवत्त्वं प्राप्तमिह निषिध्यते। मद्रिकामानिनीति। मद्रिकां मन्यत इत्यर्थे 'मनश्च' इति णिनिः, उपपदमासः इहापि 'क्यङ्मानिनोश्च' इति पुंवत्त्व प्राप्तं निषिध्यते। उभयत्रापि पुंवत्त्वे टावित्वयोः निवृत्तिः स्यात्। तद्धितवुग्रहणमिति। 'न तद्धितवुकोपधायाः' इति सूत्र पठनीय-मिति यावत्। तद्धितसबन्धी वुसंबन्धी च यः ककारः तदुपधायाः स्त्रिया न पुंवत्त्व-मिति फलति। मद्रिकायते इति तद्धितकोपधोदाहरणम्। पचिकाभार्य इति तु वुसंबन्धिकोपधोदाहरणम्। तद्धितवुग्रहणस्य प्रयोजनमाह—नेहेति। पाकेति। 'अर्भकपृथुकपाका वयसि' इत्युणादिषु कप्रत्ययान्तो निपातितः। अयं तद्धितस्य 'वुप्रत्य-यस्य वा न ककार इति नात्र पुंवत्त्वनिषेध इति भावः। ननु दत्ताशब्दस्य संज्ञा-त्वेन एकद्रव्यनिवेशितया भाषितपुंस्कत्वाभावात् 'स्त्रियाः पुंवत्–' इत्यस्य प्रसक्तेरेवा-भावात् किं तन्निषेधेनेत्यत आह—दानक्रियानिमित्त इति। दत्तशब्दोऽयं डित्यादिशब्दवन्न, किंतु दानक्रियां पुरस्कृत्यैव स्त्रियां पुंसि च संज्ञाभूतः प्रवृत्तः, अतस्तस्य भाषितपुंस्कत्वात् पुंवत्त्वे प्राप्ते निषेधोऽयमित्यर्थः। पूरण्याः पुंवत्त्वनिषेध-मुदाहरति—पञ्चमीभार्य इति। पञ्चमी भार्या यस्येति विग्रहः। अत्र 'स्त्रियाः पुंवत्–' इति प्राप्तं निषिध्यते। पञ्चमीपाशेति। निन्दिता पञ्चमीत्यर्थः। 'याप्ये पाशप्'। अत्र 'तसिलादिषु–' इति प्राप्तं पुंवत्त्वं निषिध्यते। वृद्धिनिमित्तस्य च। वृद्धेर्निमित्तं हेतुरिति विग्रहः। रक्तं च विकारश्चेति समाहारद्वन्द्वः। ततो नञ्तत्पुरुषः। रक्तविकारभिन्नेऽर्थे विद्यमानस्येत्यर्थः। वृद्धिशब्देन विहितैव वृद्धिरिह विवक्षिता, व्याख्यानात्। तदाह—वृद्धिशब्देनेत्यादिना। तदन्तेति। प्रत्ययग्रहणपरि-भाषालभ्यम्। स्रौघ्नीति। स्रुघ्नो देशः। तत्र भव इत्यण्। 'यस्येति च' इत्यकार-

---

पाचिकाभार्य इति। पचतीति पाचिका ण्वुल्। 'युवोः–' इत्यकादेशे टापि 'प्रत्ययस्थात्–' इतीत्त्वम्। रसिकाभार्य इति। रसोऽस्त्यस्या इति रसिका। 'अत इनिठनौ' इति ठन्। मद्रिकायत इति। मद्रेषु भवा मद्रिका। 'मद्रवृज्योः कन्'। 'क्यङ्मानिनोश्च' इति पुंवत्त्वप्राप्तिः। सति तु पुंवद्भावे इत्वं न श्रूयेतेति भावः। तद्धितवुग्रहणमिति। द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संबध्यते, तद्धितग्रहणं वुग्रहणं चेत्यर्थः। पाकाभार्येति। 'अर्भकपृथुकपाका वयसि' इति कप्रत्ययान्तोऽय-मुणादिषु निपातितः। न चायं तद्धितस्य ककारो, नापि वोः। 'वयसि प्रथमे' इति ङीपं बाधित्वा अजादित्वाट्टाप्। संज्ञापूरण्योश्च। यत्तु दत्तायते इति क्यङन्तमपि

१ 'तुको वा' इति क्वचित् पाठः।



१

नोश्च। (६—३—३६) एतयोः परतः पुंवत्। एनीवाचरति एतायते। श्येनी-
वाचरति श्येतायते। स्वाभिन्नां कांचिद्दर्शनीयां मन्यते दर्शनीयमानिनी। दर्शनीयां
स्त्रियं मन्यते दर्शनीयमानी चैत्रः। ८३८ न कोपधायाः। (६—३—३
कोपधायाः स्त्रिया न पुंवत्। पाचिकाभार्यः। रसिकाभार्यः। मद्रिकायते

---

क्यङ्मानिनोश्च। एतयोरिति। क्यङि मानिनि च उत्तरपदे परत इत्यर्थः।
एनीवेति। एता चित्रवर्णा। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे।' इत्यमरः।
एतशब्दः श्वेतपर्याय इति याज्ञिकाः। 'वर्णादनुदात्ता—' इति ङीब् नकारश्च। 'उपमाना-
दाचरे' इत्यनुवर्तमाने 'कर्तुः क्यङ् सलोपश्च' इति एनीशब्दात् क्यङि पुंवत्त्वे ङीन-
त्वयोर्निवृत्तौ, 'अकृत्सार्वधातुकयोः' इति दीर्घे एतायते इति रूपमिति भावः।
श्येनीवेति। श्येतशब्दः श्वेतपर्यायः। 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डुराः'
इत्यमरः। क्यङादि पूर्ववत्। ननु 'स्त्रियाः पुंवत्—' इत्येव मानिनीत्युत्तरपदे पर
पुंवत्त्वसिद्धेः मानिन्ग्रहणं किमर्थमित्याशङ्क्य मानिन्ग्रहणमसमानाधिकरणार्थम् अस्त्री-
लिङ्गार्थं चेत्यभिप्रेत्य असमानाधिकरणे परे तावदुदाहरति—स्वभिन्नामिति। द
नीयमानिनीति। दर्शनीयामिति द्वितीयान्ते उपपदे सुप्यजातौ णिनिरित्यनु
'मनः' इति णिनिप्रत्ययः, उपपदसमासः, सुब्लुक्, असमानाधिकरणेऽपि मानिनि
उत्तरपदे परे अनेन पुंवत्त्वे टापो निवृत्तौ 'ऋन्नेभ्यः—' इति ङीपि दर्शनीयमानिनी
रूपम्। या त्वात्मानमेव दर्शनीयां मन्यते तस्या दर्शनीयायाः 'स्त्रियाः पुंवत्—' इ
पुंवत्त्वं सिद्धमिति ध्वनयितुं स्वभिन्नामित्युक्तम्। एकस्या एव दर्शनीयाया मनधात
प्रति कर्मत्वकर्तृत्वसंभवेऽपि वास्तवाभेदेन मानिनीशब्दसामानाधिकरण्यसत्त्वादि
भावः। अथास्त्रीलिङ्गे उत्तरपदे उदाहरति—दर्शनीयामिति। स्त्रियमित्यन
मात्मानमिति शेषः। आत्मानं यो दर्शनीयां स्त्रियं मन्यते स दर्शनीयमानी
इत्यन्वयः। अत्र उत्तरपदवाच्यस्य मानिनो वस्तुतो दर्शनीयस्त्रीभेदेऽपि आरोपि
तदभेदमादाय सामानाधिकरण्यं' यद्यप्यस्ति, तथापि मानिन्शब्दस्य उत्तरपदस्य पुंल्लि
त्वात् तस्मिन् परे पुंवत्त्वं न प्राप्तमित्यनेन तद्विधिरिति भावः। न कोपधाया
पाचिकाभार्य इति। पाचिका भार्या यस्येति विग्रहः। पचो ण्वुल्। अकादेशटा
त्वानि पुंवत्त्वनिषेधश्च। पुंवत्त्वे टाबित्त्वयोर्निवृत्तिः स्यात्। रसिकेति। रसो
अस्तीति रसिका, 'अत इनिठनौ' इति ठन्। ठस्येकः, टाप्, पुंवत्त्वनिषेधः। पुंवत्त्वे तु ट
निवृत्तिः स्यात्। मद्रिकायत इति। मद्राख्ये देशविशेषे भवा मद्रिका 'मद्रव्रज्यो

---

वार्तिकस्य निरालम्बनत्वापत्तेः। भाष्यकारेष्टित्वे तु वार्तिकस्योक्तिसंभव उक्त
प्राक्। क्यङ्मा—एतायत इत्यादि। 'कर्तुः क्यङ् सलोपश्च' क्यङि पुंवद्भावे
एतश्येतयोः। 'अकृत्सार्व—' इति दीर्घः। मानिन्ग्रहणमसमानाधिकरणार्थमस्त्री
चेत्याशयेन यथाक्रममुदाहरति—स्वभिन्नामित्यादिना। दर्शनीयमानिनीति
'मनः' इति णिनिः। नान्तत्वान् ङीप्। या त्वात्मानमेव दर्शनीयां मन्यते
'स्त्रियाः पुंवत्—' इत्येव सिद्धम्। एकस्या अपि ईप्सिततमत्वव्यापाराश्रयत्वविव
भेदेन कर्मत्वकर्तृत्वयोः सत्त्वेऽपि वास्तवाभेदेन सामानाधिकरण्याविघातादिति

मद्रिकामानिनी। 'कोपधप्रतिषेधे तद्धितवुग्रहणम्' ( वा ३९३१ ) । नेह—पाका भार्या यस्य स पाकभार्यः। ८३९ संज्ञापूरण्योश्च । (६—३—३८) अनयोर्न पुंवत् । दत्ताभार्यः । दत्तामानिनी । दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति । पञ्चमीभार्यः । पञ्चमीपाशा। ८४० वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे । (६-३-३९) वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् । स्रौघ्नी-

टाप्, इत्वम्, मद्रिकेवाचरतीत्यर्थः। 'क्यङ्मानिनोश्च' इति पुंवत्त्वं प्राप्तमिह निषिध्यते। मद्रिकामानिनीति । मद्रिकां मन्यत इत्यर्थे 'मनश्च' इति णिनिः, उपपदमासः इहापि 'क्यङ्मानिनोश्च' इति पुंवत्त्व प्राप्तं निषिध्यते। उभयत्रापि पुंवत्त्वे टावित्वयोः निवृत्तिः स्यात्। तद्धितवुग्रहणमिति। 'न तद्धितवुकोपधायाः' इति सूत्र पठनीय-मिति यावत्। तद्धितसवन्धी वुसंवन्धी च यः ककारः तदुपधायाः स्त्रिया न पुंवत्त्व-मिति फलति। मद्रिकायते इति तद्धितकोपधोदाहरणम् । पचिकाभार्य इति तु वुसंवन्धिकोपधोदाहरणम्। तद्धितवुग्रहणस्य प्रयोजनमाह—नेहेति । पाकेति। 'अर्भकपृथुकपाका वयसि' इत्युणादिषु कप्रत्ययान्तो निपातितः। अयं तद्धितस्य 'वुप्रत्य-यस्य वा न ककार इति नात्र पुंवत्त्वनिषेध इति भावः। ननु दत्ताशब्दस्य संज्ञा-त्वेन एकद्रव्यनिवेशितया भाषितपुंस्कत्वाभावात् 'स्त्रियाः पुंवत्—' इत्यस्य प्रसक्तेरेवा-भावात् किं तन्निषेधेनेत्यत आह—दानक्रियानिमित्त इति । दत्तशब्दोऽयं डित्यादिशब्दवन्न, किंतु दानक्रियां पुरस्कृत्यैव स्त्रियां पुंसि च संज्ञाभूतः प्रवृत्तः, अतस्तस्य भाषितपुंस्कत्वात् पुंवत्त्वे प्राप्ते निषेधोऽयमित्यर्थः। पूरण्याः पुंवत्त्वनिषेध-मुदाहरति—पञ्चमीभार्य इति । पञ्चमी भार्या यस्येति विग्रहः । अत्र 'स्त्रियाः पुंवत्—' इति प्राप्तं निषिध्यते। पञ्चमीपाशेति। निन्दिता पञ्चमीत्यर्थः। 'याप्ये पाशप्'। अत्र 'तसिलादिषु—' इति प्राप्तं पुंवत्त्वं निषिध्यते । वृद्धिनिमित्तस्य च । वृद्धेर्निमित्तं हेतुरिति विग्रहः। रक्तं च विकारश्चेति समाहारद्वन्द्वः। ततो नञ्तत्पुरुषः। रक्तविकारभिन्नेऽर्थे विद्यमानस्येत्यर्थः । वृद्धिशब्देन विहितैव वृद्धिरिह विवक्षिता, व्याख्यानात् । तदाह—वृद्धिशब्देनेत्यादिना । तदन्तेति । प्रत्ययग्रहणपरि-भाषालभ्यम्। स्रौघ्नीति। स्रुघ्नो देशः। तत्र भव इत्यण्। 'यस्येति च' इत्यकार-

पाचिकाभार्य इति । पचतीति पाचिका ण्वुल् । 'युवोः—' इत्यकादेशे टापि 'प्रत्ययस्थात्—' इतीत्वम् । रसिकाभार्य इति। रसोऽस्त्यस्या इति रसिका। 'अत इनिठनौ' इति ठन्। मद्रिकायत इति। मद्रेषु भवा मद्रिका । 'मद्रवृज्योः कन्'। 'क्यङ्मानिनोश्च' इति पुंवत्त्वप्राप्तिः। सति तु पुंवद्भावे इत्वं न श्रूयेतेति भावः। तद्धितवुग्रहणमिति । द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संबध्यते, तद्धितग्रहणं वुग्रहणं चेत्यर्थः। पाकाभार्येति। 'अर्भकपृथुकपाका वयसि' इति कप्रत्ययान्तोऽ-णादिषु निपातितः। न चायं तद्धितस्य ककारो, नापि वोः। 'वयसि प्रथमे' इति ङीपं बाधित्वा अजादित्वाट्टाप्। संज्ञापूरण्योश्च । यत्तु दत्तायते इति क्यङन्तमपि

१ 'वुको वा' इति क्वचित् पाठः।

नोश्च । (६—३—३६) एतयोः परतः पुंवत् । एनीवाचरति एतायते । श्ये वाचरति श्येतायते । स्वाभिन्नां कांचिद्दर्शनीयां मन्यते दर्शनीयमानिनी । द स्त्रियं मन्यते दर्शनीयमानी चैत्रः । ८३८ न कोपधायाः । (६—३— कोपधायाः स्त्रिया न पुंवत् । पाचिकाभार्यः । रसिकाभार्यः । मद्रिका

---

क्यङ्मानिनोश्च । एतयोरिति । क्यङि मानिनि च उत्तरपदे परत इ एनीवेति । एता चित्रवर्णा । 'चित्रं किर्मीरकल्माषशवलैताश्च कर्बुरे ।' इत्य एतशब्दः श्वेतपर्याय इति याज्ञिकाः । 'वर्णादनुदात्ता—' इति ङीब् नकारश्च । 'उप दाचरे' इत्यनुवर्तमाने 'कर्तुः क्यङ् सलोपश्च' इति एनीशब्दात् क्यङि पुंवत्त्वे ङी त्वयोर्निवृत्तौ, 'अकृत्सार्वधातुकयोः' इति दीर्घे एतायते इति रूपमिति भा श्येनीवेति । श्येतशब्दः श्वेतपर्यायः । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डु इत्यमरः । क्यङादि पूर्ववत् । ननु 'स्त्रियाः पुंवत्—' इत्येव मानिनीत्युत्तरपदे पुंवत्त्वसिद्धेः मानिन्ग्रहणं किमर्थमित्याशङ्क्य मानिन्ग्रहणमसमानाधिकरणार्थम् लिङ्गार्थं चेत्यभिप्रेत्य असमानाधिकरणे परे तावदुदाहरति—स्वभिन्नामिति । नीयमानिनीति । दर्शनीयामिति द्वितीयान्ते उपपदे सुप्यजातौ णिनिरित्य 'मनः' इति णिनिप्रत्ययः, उपपदसमासः, सुब्लुक्, असमानाधिकरणेऽपि मानि उत्तरपदे परे अनेन पुंवत्त्वे टापो निवृत्तौ 'ऋन्नेभ्यः—' इति ङीपि दर्शनीयमानि रूपम् । या त्वात्मानमेव दर्शनीयां मन्यते तस्या दर्शनीयायाः 'स्त्रियाः पुंवत्–' पुंवत्त्वं सिद्धमिति ध्वनयितुं स्वभिन्नामित्युक्तम् । एकस्या एव दर्शनीयाया मनन प्रति कर्मत्वकर्तृत्वसंभवेऽपि वास्तवाभेदेन मानिनीशब्दसामानाधिकरण्यसत्त्वा भावः । अथास्त्रीलिङ्गे उत्तरपदे उदाहरति—दर्शनीयामिति । स्त्रियमित्य मात्मानमिति शेषः । आत्मानं यो दर्शनीयां स्त्रियं मन्यते स दर्शनीयमानी इत्यन्वयः । अत्र उत्तरपदवाच्यस्य मानिनो वस्तुतो दर्शनीयस्त्रीभेदेऽपि आरो तदभेदमादाय सामानाधिकरण्यं' यद्यप्यस्ति, तथापि मानिन्शब्दस्य उत्तरपदस्य पुंलि त्वात् तस्मिन् परे पुंवत्त्वं न प्राप्तमित्यनेन तद्विधिरिति भावः । न कोपधा पाचिकाभार्य इति । पाचिका भार्या यस्येति विग्रहः । पचो ण्वुल् । अकादेश त्वानि पुंवत्त्वनिषेधश्च । पुंवत्त्वे टाबित्त्वयोर्निवृत्तिः स्यात् । रसिकेति । रसो अस्तीति रसिका, 'अत इनिठनौ' इति ठन् । ठस्येकः, टाप्, पुंवत्त्वनिषेधः । पुंवत्त्वे तु निवृत्तिः स्यात् । मद्रिकायत इति । मद्राख्ये देशविशेषे भवा मद्रिका 'मद्रवृज्योः

---

वार्तिकस्य निरालम्बनत्वापत्तेः । भाष्यकारेष्टित्वे तु वार्तिकस्योक्तिसंभव उ प्राक् । क्यङ्मा—एतायत इत्यादि । 'कर्तुः क्यङ् सलोपश्च' क्यङि पुंवद्भावे एतश्येतयोः । 'अकृत्सार्व–' इति दीर्घः । मानिन्ग्रहणमसमानाधिकरणार्थम चेत्याशयेन यथाक्रममुदाहरति—स्वभिन्नामित्यादिना । दर्शनीयमानिनी 'मनः' इति णिनिः । नान्तत्वान् ङीप् । या त्वात्मानमेव दर्शनीयां मन्यते 'स्त्रियाः पुंवत्–' इत्येव सिद्धम् । एकस्या अपि ईप्सिततमत्वव्यापाराश्रयत्वादि भेदेन कर्मत्वकर्तृत्वयोः सत्त्वेऽपि वास्तवाभेदेन सामानाधिकरण्यमस्त्येवेति

मद्रिकामानिनी। 'कोपधप्रतिषेधे तद्धितवुग्रहणम्' ( वा ३९३१ ) । नेह—पाका भार्या यस्य स पाकभार्यः। ८३९ संज्ञापूरण्योश्च । (६—३—३८) अनयोर्न पुंवत् । दत्ताभार्यः । दत्तामानिनी । दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति । पञ्चमीभार्यः । पञ्चमीपाशा । ८४० वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे । (६-३-३९) वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् । स्रौघ्नी-

टाप्, इत्वम्, मद्रिकेवाचरतीत्यर्थः। 'क्यङ्मानिनोश्च' इति पुंवत्त्वं प्राप्तमिह निषिध्यते। मद्रिकामानिनीति। मद्रिकां मन्यत इत्यर्थे 'मनश्च' इति णिनिः, उपपदसमासः इहापि 'क्यङ्मानिनोश्च' इति पुंवत्त्व प्राप्तं निषिध्यते। उभयत्रापि पुंवत्त्वे टाबित्वयोः निवृत्तिः स्यात्। तद्धितवुग्रहणमिति। 'न तद्धितवुकोपधायाः' इति सूत्र पठनीय-मिति यावत्। तद्धितसवन्धी वुसंवन्धी च यः ककारः तदुपधायाः स्त्रिया न पुंवत्त्व-मिति फलति। मद्रिकायते इति तद्धितकोपधोदाहरणम्। पचिकाभार्य इति तु वुसंवन्धिकोपधोदाहरणम्। तद्धितवुग्रहणस्य प्रयोजनमाह—नेहेति। पाकेति। 'अर्भकपृथुकपाका वयसि' इत्युणादिषु कप्रत्ययान्तो निपातितः। अयं तद्धितस्य 'वुप्रत्य-यस्य वा न ककार इति नात्र पुंवत्त्वनिषेध इति भावः। ननु दत्ताशब्दस्य संज्ञा-त्वेन एकद्रव्यनिवेशितया भाषितपुंस्कत्वाभावात् 'स्त्रियाः पुंवत्—' इत्यस्य प्रसक्तेरेवा-भावात् किं तन्निषेधेनेत्यत आह—दानक्रियानिमित्त इति। दत्तशब्दोऽयं डित्यादिशब्दवन्न, किंतु दानक्रियां पुरस्कृत्यैव स्त्रियां पुंसि च संज्ञाभूतः प्रवृत्तः, अतस्तस्य भाषितपुंस्कत्वात् पुंवत्त्वे प्राप्ते निषेधोऽयमित्यर्थः। पूरण्याः पुंवत्त्वनिषेध-मुदाहरति—पञ्चमीभार्य इति। पञ्चमी भार्या यस्येति विग्रहः। अत्र 'स्त्रियाः पुंवत्—' इति प्राप्तं निषिध्यते। पञ्चमीपाशेति। निन्दिता पञ्चमीत्यर्थः। 'याप्ये पाशप्'। अत्र 'तसिलादिषु—' इति प्राप्तं पुंवत्त्वं निषिध्यते। वृद्धिनिमित्तस्य च। वृद्धेर्निमित्तं हेतुरिति विग्रहः। रक्तं च विकारश्चेति समाहारद्वन्द्वः। ततो नञ्तत्पुरुषः। रक्तविकारभिन्नेऽर्थे विद्यमानस्येत्यर्थः। वृद्धिशब्देन विहितैव वृद्धिरिह विवक्षिता, व्याख्यानात्। तदाह—वृद्धिशब्देनेत्यादिना। तदन्तेति। प्रत्ययग्रहणपरि-भाषालभ्यम्। स्रौघ्नीति। स्रुघ्नो देशः। तत्र भव इत्यण्। 'यस्येति च' इत्यकार-

पाचिकाभार्य इति। पचतीति पाचिका ण्वुल्। 'युवोः—' इत्यकादेशे टापि 'प्रत्ययस्थात्—' इतीत्वम्। रसिकाभार्य इति। रसोऽस्त्यस्या इति रसिका। 'अत इनिठनौ' इति ठन्। मद्रिकायत इति। मद्रेषु भवा मद्रिका। 'मद्रवृज्योः कन्'। 'क्यङ्मानिनोश्च' इति पुंवत्त्वप्राप्तिः। सति तु पुंवद्भावे इत्वं न श्रूयेतेति भावः। तद्धितवुग्रहणमिति। द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संवध्यते, तद्धितग्रहणं वुग्रहणं चेत्यर्थः। पाकाभार्येति। 'अर्भकपृथुकपाका वयसि' इति कप्रत्ययान्तोऽय-मुणादिषु निपातितः। न चायं तद्धितस्य ककारो, नापि वोः। 'वयसि प्रथमे' इति ङीपं बाधित्वा अजादित्वाट्टाप्। संज्ञापूरण्योश्च। यत्तु दत्तायते इति क्यङन्तमपि



१ 'वुको वा' इति क्वचित् पाठः।

भार्यः । 'माथुरीयते । माथुरीमानिनी । वृद्धिनिमित्तस्य किम्–मध्यमभार्यः । वृद्धिशब्देन किम्–तावद्भार्यः । रक्ते तद्धितस्य किम्–काण्डलावभार्यः । काषायी कन्था यस्य स काषायकन्थः । विकारे तु हैमी मुद्रिका यस्येति

लोपः । णित्त्वादादिवृद्धिः, 'टिड्ढाणञ्–' इति ङीप् । स्त्रौघ्नी भार्या यस्येति स्त्रियाः पुंवत्–' इति प्राप्तमिह निषिध्यते । माथुरीयते माथुरीमानिनी मथुरायां भवा माथुरी, 'तत्र भवः' इत्यण्, 'यस्येति च' इत्याकारलोपः, आदि 'टिड्ढ–' इति ङीप् । माथुरीवाचरतीत्यर्थे 'कर्तुः क्यङ् ।' इति क्यङ् । 'सनाद्य इति धातुत्वाल्लडादि, माथुरीयते । माथुरीं मन्यते माथुरीमानिनी, 'मनः' इति उपधावृद्धिः । उपपदसमासः, सुब्लुक्, नान्तत्वान्ङीप् । इहोभयत्रापि 'क्यङ् नोश्च' इति प्राप्तं पुंवत्त्वं निषिध्यते । मध्यमभार्य इति । मध्ये भवा 'मध्यान्मः' इति मः । मध्यमा भार्या यस्येति विग्रहः । 'स्त्रियाः पुंवत्–' इति पुंवत् अत्र मप्रत्ययस्य तद्धितस्य वृद्धिनिमित्तत्वाभावान्न पुंवत्त्वनिषेधः । काण्डला इति । काण्डं लुनातीति काण्डलावी, 'कर्मण्यण्' इत्यण्प्रत्ययः कृत्, 'अचो इति वृद्धिः आवादेशः, उपपदसमासः, 'टिड्ढाणञ्–' इति ङीप् । काण्डलावी यस्येति विग्रहः, पुंवत्त्वाद् ङीपो निवृत्तिः । अत्राणः कृत्त्वात्तद्धितत्वाभावा पुंवत्त्वनिषेधः । तावद्भार्य इति । तत् परिमाणमस्यास्तावती, 'यत्त परिमाणे वतुप्' इति तच्छब्दाद्वतुप् तद्धितः, 'आ सर्वनाम्नः' इत्याकारः, उ ङीप् । तावती भार्या यस्येति विग्रहः । पुंवत्त्वाद् ङीपो निवृत्तिः, 'आ सर्व इत्याकारात्मिकां वृद्धिं प्रति वतुपो निमित्तत्वेऽपि आकारस्य वृद्धिशब्देन विधा वात्तन्निमित्तवतुवन्तस्य न पुंवत्त्वनिषेधः । रक्ते त्विति । रक्तेऽर्थे विहि तद्धितस्य न पुंवत्त्वनिषेध इत्यर्थः । काषायीति । कषायो गैरिको धातु तेन रक्ता काषायी, 'तेन रक्तं रागात्' इत्यणि 'यस्येति च' इति लोपः, आदि टिड्ढाणञ्–इति ङीप् । काषायकन्थ इति । पुंवत्त्वे ङीपो निवृत्तिः । तद्धितस्य रक्तार्थकत्वाद् न पुंवत्त्वनिषेधः । विकारे त्विति । विकारार्थे विहि तद्धितस्य न पुंवत्त्वनिषेध इत्यर्थः । हैमीति । हेम्नो विकारभूतेत्यर्थः । 'अ

वृत्त्यादिषूदाहृतम्, तत्तु विशेषाभावादिहोपेक्षितम् । पञ्चमीपाशेति । 'याप्ये 'तसिलादिषु–' इति प्राप्तिः । वृद्धिनिमित्तस्य । स्त्रौघ्नीति । स्रुघ्ने भवा भवः' इत्यणि 'टिड्ढा–' इति ङीप् । माथुरीयत इति । माथुरायां भवा मा सेवाचरतीत्यर्थे 'कर्तुः क्यङ्–' इति क्यङ् । मध्यमेति । मध्ये भवा म 'मध्यान्मः' इति मः । काण्डलावेति । काण्डं लुनातीति काण्डलावी 'कर्म कृदयम् । तावदिति । तत्परिमाणमस्यास्तावती । 'यत्तदेतेभ्यः–' इति 'आ सर्वनाम्नः' इत्याकारो न वृद्धिशब्देन विहित इति भावः । काषाय कषायेण रक्तेत्यर्थे 'तेन रक्तं रागात्' इत्यणि ङीप् । हैमीति । हेम्नो विकार

१ क्वचित् माथुरीयते माथुरीमानिनीति पाठः ।
२. 'गिरिजो' इति क्वचित् पाठः ।

मुद्रिकः । वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावादिह पुंवत्—वैयाकरणभार्यः, सौवश्वभार्यः । ८४१ स्वाङ्गाच्चेतः । (६–३–४०) स्वाङ्गाद्य ईकारस्तदन्ता स्त्री

---

देश्च' इत्यञ्, टिलोपः, आदिवृद्धिः, 'टिड्ढ—' इति ङीप्, हैमीति रूपम् । हैमी मुद्रिका यस्येति विग्रहः । पुंवत्त्वे ङीपो निवृत्तिः । अत्राञस्तद्धितस्य विकारार्थकत्वान्न पुंवत्त्वनिषेधः । स्यादेतत्, व्याकरणमधीते वेत्ति वा स्त्री वैयाकरणी, 'तदधीते तद्वेद' इत्यण् तद्धितः । 'यस्येति च' इत्यकारलोपः । अणो णित्त्वात् तन्निमित्तिकाया यकाराकारस्य पर्जन्यवल्लक्षणप्रवृत्त्या प्राप्ताया वृद्धेः 'न य्वाभ्याम्–' इति निषेधः । यकारात् प्रागैकारागमश्च, 'टिड्ढाणञ्–' इति ङीप् । वैयाकरणी भार्या यस्येत बहुव्रीहौ पुंवत्त्वे ङीपो निवृत्तौ वैयाकरणभार्य इति रूपम् । तथा स्वश्वस्यापत्यं स्त्री 'अत इञ्' इति इञोऽपवादः शिवाद्यण्, 'यस्येति च' इति लोपः । प्रथमवकारात् परस्य अकारस्यादिवृद्धेर्न य्वाभ्यामिति निषेधः । प्रथमवकारात् प्रागौकारागमश्च, 'टिड्ढ–' इति ङीप् । सौवश्वी भार्या यस्येति बहुव्रीहौ पुंवत्त्वे ङीपो निवृत्तौ सौवश्वभार्य इति रूपमिति स्थितिः । अत्रोभयत्रापि आदिवृद्धेः 'न य्वाभ्याम्–' इति निषेधेऽपि अणः तद्धितस्य णित्त्वेन स्वरूपयोग्यवृद्धिनिमित्तत्वानपायात्, पुंवत्त्वनिषधो दुर्वार इत्यत आह—वृद्धिं प्रति फलोपधानाभावादिह पुंवदिति । प्रतीत्यनन्तरं निमित्तस्य तद्धितस्येति शेषः । अणः वृद्धिनिमित्तस्य यत् फलं वृद्धिस्तेन उपधानं तात्कालिकसाहित्यं तदभावादित्यर्थः 'वृद्धेस्तद्धितस्य' इत्येतावत्युक्तेऽपि निमित्तत्व-संबन्धं वृद्धेरिति षष्ठीमाश्रित्य 'वृद्धिनिमित्ततद्धितस्य' इत्यर्थलाभे सति निमित्तग्रहणात् फलोपहितनिमित्तत्वं विवक्षितमिति विज्ञायत इति भावः । यद्यप्यैजागमसिद्धवृद्धिं प्रतिं अण्प्रत्ययः फलोपहितमेव निमित्तम् । तथापि वृद्धिशब्देन विहितां वृद्धिं प्रति-फलोपहितं निमित्तं न भवत्येवेति न दोषः । वृद्धिशब्देन विहितैव वृद्धिरिह गृह्यत इत्यत्रापि इदमेव निमित्तग्रहणं लिङ्गम् । अन्यथा ऐजागमादत्र फलोपहितनिमित्तत्व-स्यापि सत्त्वात् तन्निमित्तग्रहणं निष्फलं स्यात् । विस्तरस्तु शब्देन्दुशेखरे द्रष्टव्यः । स्वाङ्गाच्चेतः । ईत इति च्छेदः । तदाह—स्वाङ्गाद्य ईकार इति ।

---

'अनुदात्तादेश्च–' इत्यञ् । फलोपधानेति । निमित्तशब्दः फलोपहितपरः । स्वरूपयोग्यपरत्वे तु वैयाकरणभार्य इत्यत्र पुंवद्भावो न सिध्येदिति भावः । व्याकरण-मधीते वेत्ति वा वैयाकरणी । 'तदधीते तद्वेद' इत्यण् । स्वश्वस्यापत्यं स्त्री सौवश्वी 'तस्यापत्यम्' इत्यण्, उभयत्र णित्त्वात्प्राप्ता आदिवृद्धिः 'न य्वाभ्याम्–' इत्यनेन प्रति-षिध्यत इति नायं वृद्धिं प्रति फलोपहितः, किं तु स्वरूपयोग्यः । यद्यप्यैजागमनिमित्त-त्वाद् वृद्धिं प्रति फलोपहितोऽपि भवत्ययं तद्धितः, तथापि वृद्धिशब्देन विहितां वृद्धिं प्रति न भवतीति भावः । अत्र व्याचक्षते—सूत्रे निमित्तशब्दः फलोपहितपरः, अन्यथा निमित्तग्रहणमनर्थकं स्यात् । वृद्धेस्तद्धितस्येत्युक्तेऽपि निमित्तत्वमेव संबद्ध इति वृद्धिनिमित्तं यस्तद्धित इत्यर्थलाभात् । तेन वृद्धिशब्देन विहिता वृद्धिरित्ययमर्थो लभ्यते । अन्यथा फलोपहितपरत्वलाभो निष्फलः स्यादुक्तदोषतादवस्थ्यादिति ।

न पुंवत्। सुकेशीभार्यः। स्वाङ्गात् किम्—पटुभार्यः। ईतः किम्—अकेशभा
'अमानिनीति वक्तव्यम्' (वा ३९३२) सुकेशमानिनी। ८४२ जातेश्च
(६—३—४१) जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवत्। शूद्राभार्यः। ब्राह्
भार्यः। सौत्रस्यैवायं निषेधः। तेन हस्तिनीनां समूहो हास्तिकमित्यत्र 'भस्याढे
(वा ३९२८) इति तु भवत्येव। ८४३ संख्ययाऽव्ययासन्नादूराधिकसं
संख्येये। (२—२—२५) संख्येयार्थया संख्यया अव्ययादयः समस्यन्ते

---

सुकेशीभार्य इति। सुशोभनाः केशा यस्याः सा सुकेशी, 'स्वाङ्गाच्चोपसर्ज
इति ङीष्। 'स्त्रियाः पुंवत्—' इति प्राप्तस्य निषेधः। पटुभार्य इति। पट्वी
यस्येति विग्रहः। पटुत्वस्य अस्वाङ्गत्वान्न पुंवत्त्वनिषेधः। किंतु पुंवत्त्वे 'वोतो
वचनात्' इति ङीषो निवृत्तिरिति भावः। अकेशभार्य इति। अविद्यम
केशा यस्याः सा अकेशा, 'नञोऽस्त्यर्थानाम्' इति बहुव्रीहिः, विद्यमान
लोपश्च। स्वाङ्गत्वेऽपि न ङीष्, 'सहनञ्विद्यमान—' इति निषेधात्। अतष्टा
अकेशा भार्या यस्येति विग्रहः। स्वाङ्गत्वेऽपि ईकाराभावान्नपुंवत्त्वनिषेधः।
पुंवत्त्वे टापो निवृत्तिरिति भावः। अमानिनीति। स्वाङ्गाच्चेति निषेधो म
न्शब्दे परतो न भवतीति वक्तव्यमित्यर्थः। सुकेशमानिनीति। सुकेशीं म
इत्यर्थे 'मनश्च' इति णिनिः, उपधावृद्धिः, उपपदसमासः, सुब्लुक्, पुंवत्त्वे
निवृत्तिरिति भावः। जातेश्च। ईत इति अस्वरितत्वान्नानुवर्तते इत्यभिप्राया
जातेः परो यः स्त्रीप्रत्यय इति। शूद्राभार्य इति। 'शूद्रा चामहत्पूर्वा—'
जातिलक्षणङीषोऽपवादष्टाप्। पुंवत्त्वनिषेधान्न टापो निवृत्तिः। ब्राह्मण
इति। पुंवत्त्वनिषेधान्न शार्ङ्गरवादिङीनो निवृत्तिः। ननु हस्तिनीनां
हास्तिकमित्यत्र 'अचित्तहस्ति—' इति ठकि हस्तिनीशब्दस्य 'भस्याढे—' इति
पुंवत्त्वम्, 'जातेश्च' इति निषेधादित्यत आह—सौत्रस्यैवायं निषेध इति। सूत्र
तस्येत्यर्थः। 'भस्याढे—' इति तु वार्तिकमिति भावः। एतच्च 'न कोपधायाः' इति
भाष्ये स्पष्टम्। संख्यया। शेषग्रहणम् 'अनेकमन्यपदार्थे' इति च नि
बहुव्रीहिरित्यनुवर्तते, 'सुप्सुपा' इति च। संख्येये इत्येतत्संख्ययेत्यत्राऽन्वेति। सं
परिच्छेद्यं संख्येयम्, तत्रार्थे विद्यमानया संख्ययेति लभ्यते। संख्याशब्दश्चा
स्वरूपपरः, किंतु एकादिशतान्तशब्दपरः। तदाह—संख्येयार्थया संख्यया
एकादिशब्देन सुबन्तेनेत्यर्थः। अव्ययादय इति। अव्यय, आसन्न, अदूर, अ

---

सुकेशीति। 'स्वाङ्गाच्चोपसर्जनात्—' इति ङीष्। अकेशीति। 'सहनञ्विद्यमा
इति निषेधान्ङीषभावः। जातेश्च। यद्यत्र जातेरित्येवं विहित इति व्याख्यायेत
हास्तिकमित्युदाहरणे 'औपसंख्यानिकस्य नायं निषेधः' इति भाष्योक्तिर्न संग
हस्तिन्शब्दाज् 'जातेः—' इति ङीष् न विहितः, अदन्तत्वाभावात्, किंतु 'ऋन्नेभ्यो
इति ङीब्विहित इति पुंवद्भावनिषेधस्याप्रसक्तेरत आह—जातेः पर इति। ए
हस्तिनीभार्यः शुनीभार्य इत्यादावपि निषेधः सिध्यतीति भावः। यः स्त्री
इति। टाबादिः। प्राचा तु ङीषेवोपात्तस्तदयुक्तमिति ध्वनयन्नुदाहरति

बहुव्रीहिः। दशानां समीपे ये सन्ति ते उपदशाः। नव एकादश वेत्यर्थः। 'बहुव्रीहौ संख्येये-' (सू ८५१) इति वक्ष्यमाणो डच्। ८४४ ति विंशतेर्डिति। (६-४-१४२) विंशतेर्भस्य तिशब्दस्य लोपः स्याड्डिति। आसन्नविंशाः, विंशतेरासन्ना इत्यर्थः। अदूरत्रिंशाः अधिकचत्वारिंशाः। द्वौ वा त्रयो वा

---

संख्या एते सुबन्ता इत्यर्थः। अत्रापि संख्याशब्दो न स्वरूपपरः, किंतु एकादिशब्दपर एव। अत्रेदमवधेयम्—विंशतेः प्रागेकादिशब्दाः संख्येयेषु वर्तन्ते विशेष्यलिङ्गाश्च। दशादयो नित्यबहुवचनान्ताः। विंशत्यादिशब्दातु नित्यमेकवचनान्ताः संख्यायां संख्येये च वर्तन्ते नवतिपर्यन्ता नित्यस्त्रीलिङ्गाश्च। यथा विंशतिर्ब्राह्मणाः, ब्राह्मणानां विंशतिरिति। यदा विंशत्यादिः संख्या, ततो द्वित्वबहुवचने स्तः। यथा गवां द्वे विंशती इति, चत्वारिंशदिति गम्यते। गवां तिस्रो विंशतय इति, षष्टिरिति गम्यते। 'विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः। संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः॥' इत्यमरः। अत्राव्ययस्योदाहरति—दशानां समीपे ये सन्ति त उपदशा इति। उपशब्दस्य समीपार्थकस्याव्ययीभाव उक्तः। इह तु समीपवर्तिनि उपशब्दो वर्तते। दशसमीपवर्तिन इत्यर्थः। ततश्च अन्यपदार्थवृत्तित्वाभावादप्रथमान्तत्वाच्च 'अनेकमन्यपदार्थे' इत्यप्राप्ते वचनमिदम्। तस्य दशानां वृक्षादीनां समीपवर्तितो गवादय इत्यर्थभ्रमं वारयति—नवैकादश वेत्यर्थ इति। समीप्यमिह दशन्शब्दार्थगतदशत्वापेक्षम्, एकार्थीभावबलात्। तथा च दशत्वसमीपवर्तिसंख्यावत्सु उपशब्द इति फलति। ततश्च दशत्वसमीपवर्तिसंख्यावन्त इति बोधपर्यवसानं भवति। डजिति। उपदशन्शब्दात् डचि 'नस्तद्धिते' इति टिलोप इति भावः। आसन्नशब्दस्य विंशतिशब्देन षष्ठ्यन्तेन समासे डचि कृते 'टेः' इति इकारमात्रस्य लोपे प्राप्ते आह—ति विंशतेर्डिति। तीति लुप्तषष्ठीकम्। 'भस्य' इत्यधिकृतम्। 'अल्लोपोऽनः' इत्यस्माल्लोप इत्यनुवर्तते, तदाह—विंशतेर्भस्येति। 'अलोऽन्त्यस्य' इति न भवति, 'नानर्थकेऽलोऽन्त्यविधिः' इत्युक्तेः। आसन्नविंशा इति। विंशति-

---

भार्य इति। ब्राह्मणीति। शार्ङ्गरवादित्वान्ङीन्। प्राचा तु ङीब्न पुंवदिति व्याख्याय ब्राह्मणीभार्य इत्युदाहृतम्, तद्भ्रमसात्। सौत्रस्यैवेति। व्याख्यानादिति भावः। 'न कोपधायाः' इति निषेधस्तु 'भस्याढे-' इति प्राप्तस्यापि भवत्येव। तेन विलेपिकाया धर्म्यं वैलेपिकमिति सिद्धम्। यदि 'अण्महिष्यादिभ्यः' इत्यणि पुंवद्भावः स्यात्तर्हीकारोऽत्र न श्रूयेत। एतच्च 'न कोपधायाः' इति सूत्रे भाष्ये स्पष्टम्। प्रासङ्गिकं समाप्य प्रकृतमनुसरति—संख्ययेति। सामानाधिकरण्यस्यान्यपदार्थवृत्तेश्च विरहात् पूर्वेणाप्राप्तौ वचनम्। दशानामिति। उपगता दश येषामिति न विगृहीतम्। पूर्वेणैव सिद्धेः। उपदशा इति। उपशब्दः समीपे समीपिनि च वर्तते, आद्ये अव्ययीभावः, द्वितीये तु बहुव्रीहिरिति विवेकः। नव एकादश वेत्यर्थ इति। संख्याद्वारकसम्बन्धस्यान्तरङ्गत्वादिति भावः। तेन दशानां वृक्षादीनां समीपे ये सन्ति गवादयस्ते उपदशा इति न प्रयुज्यन्ते। तिविंश। सूत्रे तीति लुप्तषष्ठीकमित्याह ...

द्वित्राः। द्विरावृत्ता दश द्विदशाः, विंशतिरित्यर्थः। ८४५ दिङ्नामान्य राले। (२-२-२६) दिशो नामान्यन्तराले वाच्ये प्राग्वत्। दक्षिणस्या

संख्यासन्नसंख्यावन्त इत्यर्थः। डचि कृते आसन्नविंशति-अ-इति स्थिते, ति सवर्णदीर्घं बधित्वा 'अतो गुणे' इति पररूपे, आसन्नविंशशब्दः अव 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति प्रत्ययलक्षणाभावेनापदत्वात्। दूरशब्दस्योदाहरति—अदूरत्रिंशा इति। त्रिंशतः अदूरा इति विग्रहः। त्संख्यायाः अदूरसंख्यावन्त इत्यर्थः। डचि टिलोपः। अधिकस्योदाहरति—अधि चत्वारिंशा इति। चत्वारिंशतोऽधिका इति विग्रहः। चत्वारिंशत्संख्याया अधि संख्यावन्त इत्यर्थः। डचि टिलोपः। संख्यावाचकशब्दस्य संख्यावाचकशब्देन समास दाहरति—द्वौ वा त्रयो वा द्वित्रा इति। वार्थे बहुव्रीहिः, द्वित्र्यन्य इत्यर्थः। डचि टिलोपः। ननु द्वित्रा आनीयन्तामित्युक्ते कदाचिद् द्वावानयति, कथं बहुवचनमिति चेत् अत्र भाष्ये 'अनिश्चये बहुवचनं प्रयोक्तव्यम्' इति वच समाहितम्। तथा 'कार्यान्वये विकल्पः, शब्दात्तु नियमेन कोटिद्वयोपस्थि तदुपस्थित्यनन्तरमन्यतरानयनमिच्छया। अतः 'शब्दान्नियमेन पञ्चानामुपस्थि इत्यपि समाहितम्। न च वार्थप्राधान्याद् 'अनेकमन्यपदार्थे' इत्येवात्र सिद्धि वाच्यम्, 'शेषाद्विभाषा' इति कबभावार्थकत्वात्। स हि कप् 'अनेकमन्यपदार्थे' विहितबहुव्रीहावेव प्रवर्तत इति भाष्ये स्पष्टम्। अथ संख्यायाः संख्यया स उदाहरणान्तरमाह—द्विरावृत्ता दश द्विदशा इति। शब्दशक्तिस्वाभाव्या जर्थान्तर्भाविण पूर्वपदस्य वृत्त्याश्रयणात् समासे सुचो न श्रवणमिति भाष्ये स्पष्ट द्वित्वसंख्याकदशत्ववन्त इत्यर्थः। फलितमाह—विंशतिरित्यर्थ इति दिङ्नामानि। नामानीत्यनन्तरं सुबन्तानि परस्परमिति शेषः। प्राग्वदि समस्यन्ते स च बहुव्रीहिरित्यर्थः। नामानीति बहुत्वमविवक्षितमित्यभिप्रेत्योदाहर

स्येति। आसन्नविंशा इति। इह तिलोपोत्तरम् 'अतो गुणे' इति पररूपमेव, टिलोपः, टिलोपस्याभीयत्वेनासिद्धत्वात्। न चात्र पररूपमपि न स्याट्टिलोपस्य स्था वत्वादिति शङ्क्यम्। अज्झलादेशोऽजादेशो न भवतीति 'अचः परस्मिन्-' स्याप्रवृत्तेः। 'स्थानिवदादेशः-' इति तु न प्रवर्तत एव, शास्त्रीये कार्ये हि तत्प्रवृत्तिः। न तु विघातार्थमिति सिद्धान्तात्। विंशतेरिति। इहापि अ विंशतिर्येषामिति न विगृहीतमुक्तयुक्तेः। अदूरेत्यादि। अदूरास्त्रिंशतः, अधिका त्वारिंशत इति विग्रहौ बोध्यौ। द्वित्रा इति। वार्थेऽयं बहुव्रीहिः। स च वा विकल्पः, पक्षे द्विवचनस्याप्यापत्तेः, किं तु संशयः। स चानियतसंख्यावमर्शी, च त्रयोऽपि सर्वदा भासन्त इति तदपेक्षं बहुवचनमेव। आनयनादिक्रियान्व द्वयोस्त्रयाणां वेत्यनियत एवेत्याहुः। द्विरावृत्ता इति। सुजर्थे बहुव्रीहिरित्य वृत्तौ तु सुजर्थान्तर्भाविणैकार्थीभावाश्रयणात्सुचोऽप्रयोगः। संख्येयेति किम्, चत ब्राह्मणाः। अव्ययेत्यादि किम्, ब्राह्मणाः पञ्च। संख्येयेति किम्, अधिका वि गवाम्। संख्यार्थे संख्येति न समासः। आदेशतः संख्याः संख्येये वर्तन्ते

पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा । नामग्रहणाद्यौगिकानां न । ऐन्द्र्याश्च कौबेर्याश्चान्तरालं दिक् । ८४६ तत्र तेनेदमिति सरूपे । (२-२-२७) सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये स बहुव्रीहिः । इतिशब्दादयं विषयविशेषो लभ्यते । 'अन्येषामपि दृश्यते' (सू ३५३९) दीर्घं इत्यनुवर्तते । इचि कर्मव्य-

---

दक्षिणस्याश्चेति । दक्षिणपूर्वेति । स्त्रीत्वं लोकात् । यद्वा अन्तरालमिह दिगेव गृह्यते । 'सर्वनाम्नो वृत्तिमात्रे पुंवत्त्वम्' इति भाष्यम् । यद्यप्युपसर्जनत्वान्न सर्वनामत्वम् । तथापि भूतपूर्वगत्या सर्वनामत्वमदाय पुंवत्त्वं भवति, अत एव भाष्यात् । ननु दिशोरन्तराले इत्येव सिद्धे नामग्रहणं किमर्थमित्यत आह— नामग्रहणादिति । दिक्षु रूढाः शब्दा दिङ्नामानीत्यनेन विवक्षिताः । ऐन्द्रीशब्दः कौबेरीशब्दश्चेन्द्रसंबन्धात् कुबेरसंबन्धाच्च प्रवृत्तौ यौगिक एव न रूढ इति भावः । तत्र तेन । समास इति, बहुव्रीहिरिति चाधिकृतम् । तत्र इत्यनेन सप्तम्यन्ते पदे विवक्षिते । ग्रहणविषये इति प्रथमाद्विवचनान्तं तद्विशेषणमध्याहार्यम् । तेन इत्यनेन तु तृतीयान्ते पदे विवक्षिते । प्रहरणविषये इति प्रथमाद्विवचनान्तं तद्विशेषणमध्याहार्यम् । सरूपे इति प्रथमाद्विवचनान्तं पदविशेषणम् । ग्रहणविषये इति प्रहरणविषये इति तु सप्तम्यन्तयोस्तृतीयान्तयोश्च यथासंख्यमन्वेति । इदम् इत्यर्थनिर्देशः । युद्धं प्रवृत्तमिति तद्विशेष्यमध्याहार्यम् । कर्मव्यतिहारे द्योत्ये इत्यप्यध्याहार्यम् । तदाह— सप्तम्यन्त इति । प्रथमाद्विवचनमिदम् । ग्रहणविषय इति । गृह्यते अस्मिन्निति ग्रहणम्, केशादि, अधिकरणे ल्युट्, तद् विषयः वाच्यं ययोस्ते, ग्रहणविषये, ग्रहणवाचके इति यावत् । प्रहरणविषय इति । प्रह्रियते अनेनेति प्रहरणं दण्डादि तद् विषयः वाच्यं ययोस्ते प्रहरणविषये प्रहरणवाचके इति यावत् । अत्रापि सरूपे पदे इत्यन्वेति । इदं युद्धं प्रवृत्तमित्यर्थ इति । इदमिति सामान्यार्थनिर्देशः । युद्धमिति विशेषनिर्देशः । अतः केशाकेशि युद्धमिति न पुनरुक्तिः । परस्परग्रहणं परस्परप्रहरणं च कर्मव्यतिहारः । ननु ग्रहणविषये प्रहरणविषये इत्यध्याहारे किं प्रमाणमित्यत आह—इतिशब्दादिति । इतिशब्दो लौकिकप्रसिद्धप्रकारवचनः । केशाकेशीत्यादिलौकिकप्रयोगे यावानर्थः प्रसिद्धस्तावत्यर्थेऽयं बहुव्रीहिर्भवतीत्यर्थः । अन्येषामपि दृश्यते । अनुवर्तत इति । 'ढ्रलोपे—' इत्यत इति शेषः । 'नहिवृतिवृषि—' इत्यादिपूर्वसूत्रोक्तादन्येषामपि दीर्घो दृश्यत

---

संख्यायाम् । विंशत्याद्याः संख्यास्तु संख्येयसंख्ययोर्वर्तन्ते । यदा तु संख्येये विंशतिशब्दस्तदा भवत्येव समासः अधिकविंशा इति । तत्र तेनेदम् । ग्रहणविषय इति । गृह्यते इति ग्रहणं केशादि, तद्विषयो वाच्यो ययोस्ते सरूपे । प्रह्रियते अनेनेति प्रहरणं दण्डादि, तद्विषयो वाच्यो ययोरिति प्राग्वत् । कर्मव्यतिहारः परस्परग्रहणं परस्परप्रहरणं च । ननु 'ग्रहणविषये सप्तम्यन्ते समस्येते प्रहरणविषये तृतीयान्ते च' इत्यादिविषयविशेषः सूत्राक्षरैः कथं लभ्यते इत्यत आह— इतिशब्दादिति। इति लौकिकी विवक्षा दर्शयति । लोके केशाकेशीत्यादिप्रयोगे यावानर्थ

तिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घः। इच्समासान्तो वक्ष्यते। तिष्ठद्गु
ष्विच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वं च। केशेषु केशेषु गृहीत्वेदं युद्धं
केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि। मुष्टीमुष्टि।
ओर्गुणः। (६-४-१४६) उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते। अवादे
बाहूबाहवि 'ओरोत्' इति वक्तव्ये गुणोक्तिः 'संज्ञापूर्वको विधिरनित्यः' (प

---

इत्यर्थः। अतिप्रसङ्गमाशङ्क्याह—कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य
इति। बहुव्रीहौ चेत् कर्मव्यतिहारे एव पूर्वपदान्तस्यैव दीर्घ इत्यर्थः। तेन तु
डित्यादौ दीर्घो निर्बाधः। दृशिग्रहणादयमर्थो लभ्यते। वक्ष्यत इति। 'इच्कर्म
तिहारे' इति सूत्रेणेति शेषः। तिष्ठद्गुप्रभृतिष्विति। वृत्तिग्रन्थ एवात्र प्रमाण
अव्ययीभावत्वमिति। तत्र अव्ययीभाव इत्यनुवृत्तेरिति भावः। अव्य
मिति। 'अव्ययीभावश्च' इत्यनेनेति शेषः। 'अव्ययादाप्सुपः' इति सुब्लुक् तत्
मिति भावः। गृहीत्वेति। परस्परमिति शेषः। न च केशग्रहणस्य पुरुषकर्तृक
प्रवृत्तेश्च युद्धकर्तृकत्वात् समानकर्तृकत्वाभावात् कथमिह क्त्वाप्रत्यय इति वाच्
गृहीत्वेत्यनन्तरं स्थितयोरित्यध्याहारात्। ततश्च अस्य केशेषु सः, तस्य के
यमित्येवं परस्परं गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहवाक्यं फलित
केशाकेशीति। केशेषु केशेष्वित्यनयोर्ग्रहणाद्यन्तर्भावेन वृत्तिघटकयोः समासे
सुब्लुक् पूर्वपदस्य दीर्घः, इच्समासान्तः। 'यस्येति च' इत्यकारलोपः।
यत्वात्सुब्लुगिति भावः। अन्यपदार्थवृत्तित्वेऽपि एकशेषापवादोऽयं बहुव्रीहि
अप्रथमान्तार्थश्च। दण्डैश्चेति। अस्य दण्डः सः, तस्य दण्डैरयमित्येवं पर
प्रहृत्य स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहार्थः। दण्डादण्डीति। दण्डैर्दण्डै
नयोः प्रहरणाद्यन्तर्भावेन समासघटकयोः समासे सति सुब्लुक्, पूर्वपदस्य दी
इच्, 'यस्येति च' इति अकारलोपः। अव्ययत्वात् सुब्लुक्। मुष्टीमुष्टी
अस्य मुष्टिभिः सः, तस्य मुष्टिभिश्चायमित्येवं परस्परं प्रहृत्य स्थितयोरिदं
प्रवृत्तमिति विग्रहः। मुष्ट्या मुष्ट्या इत्यनयोः समासे सति सुब्लुगादि पूर्वव
मुष्टामुष्टीति पूर्वपदान्तस्य आत्वमपाणिनीयमेव। ओर्गुणः। ओः इत्युकारात् प
कवचनम्। तेन भस्येत्यधिकृतं विशेष्यते। तदन्तविधिः। 'नस्तद्धिते' इत्यनुवर्त
तदाह—उवर्णान्तस्येति। बाहूबाहवीति। बाहौ बाहौ च परस्परं गृ
स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहः। समासः, सुब्लुक्, पूर्वपदस्य दीर्घः,

---

तावत्यर्थे बहुव्रीहिर्भवतीत्यर्थः। अन्येषामपि दृश्यते। अत्र प्राचा दृशिग्रहणा
व्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घत्वम्, 'आत्वं वानचि' इत्युक्तम्। तत्र 'आत्वं
इत्यपाणिनीम्। अत एव मुष्टामुष्टीत्युदाहरणमप्यप्रामाणिकमेव। एतच्च मनोर
स्पष्टम्। ओर्गुणः। तद्धिते किम्, पट्वी। वाय्वोः। गुणोक्तिरिति।
'ओरोत्' इति सूत्रितेऽपि 'भस्य तद्धिते' इत्येवंरूपसंज्ञापूर्वकत्वमस्त्येव, तथापि वि
समर्पकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वको विधिरिति भावः। यद्यपि ओ
तपरस्तत्कालस्य संज्ञैव तथापि इह तकार उच्चारणार्थस्तपरत्वे फलाभावाद्

इति ज्ञापयितुम् । तेन स्वायम्भुव इत्यादि सिद्धम् । सरूपे इति किम्–हलेन मुसलेन । ८४८ तेन सहेति तुल्ययोगे । (२–२–२८) तुल्ययोगे वर्तमानं सह इत्येतत्तृतीयान्तेन प्राग्वत् । ८४९ वोपसर्जनस्य । (६–३–८२) बहुव्रीहे-

---

'यस्येति च' इति बाधित्वा ओर्गुणः, अवादेशः । अव्ययत्वात् सुपो लुक् । ननु गुण उकारस्थाने भवन् स्थानसाम्यादोकार एव भवति । ततश्च लाघवाद् 'ओरोत्' इत्येव सिद्धे गुण इति गुरुनिर्देशो व्यर्थ इत्यत आह—ओरोत् इति । न चैवमपीह तद्धितसंज्ञापूर्वकत्वं दुर्वारमिति वाच्यम्, विधेयसमर्पकं पदं यत्र संज्ञारूपं स एव संज्ञा-पूर्वकविधिरित्यभ्युपगमात् । न च 'ओत्' इति 'तपरस्तत्कालस्य' संज्ञेति वाच्यम्, विधीयमानत्वादेव तत्कालत्वसिद्धचा तकारस्य उच्चारणार्थत्वात् । स्वायम्भुव इति । स्वयम्भुवोऽपत्यमित्यर्थे अण्, स्वायंभुवः, संज्ञापूर्वकत्वेनानित्यत्वादोर्गुणाभावे उवङ्, आदिवृद्धिरिति भावः । स्वायम्भुवमिति पाठे तस्येदमित्यण् । हलेन मुसलेनेति । अत्र असरूपत्वाद् हलामुसलीति न भवतीति भावः । तेन सहेति तुल्ययोगे । तुल्ययोग इति । युगपत्कालिकक्रियायोग इत्यर्थः । तृतीयान्तेनेति । तेनेत्यनेन तल्लाभादिति भावः । प्राग्वदिति । समस्यते स बहुव्रीहिरित्यर्थः । असामानाधि-करण्यार्थं कवभावार्थं चेदम् । वोपसर्जनस्य । उत्तरपदे इत्यधिकृतम् । 'सहस्य सः संज्ञायाम्' इत्यतः सहस्य स इत्यनुवर्तते । उपसर्जनम् अस्यास्तीत्युपसर्जनः, मत्वर्थे अर्शआद्यच् । उत्तरपदाक्षिप्तसमासो विशेष्यम् । उपसर्जनवतः समासस्येत्यर्थः । यद्यपि सर्वेषामपि समासानां कश्चिदवयवः उपसर्जनमेव । तथापि सामर्थ्यादुपसर्जन-सर्वावयवकस्येति लभ्यते । तथा च उपसर्जनस्येत्यनेन बहुव्रीहेरिति लब्धम् । अवयव-

---

इत्येव वास्तु । 'स्वं रूपं शब्दस्य– इति तु प्रत्याख्यातमिति भावः । स्यादेतत्—तपर-स्तत्कालस्य संज्ञा भवतीति 'गुरोरनृतः–' इति प्लुतनिषेधस्यापि संज्ञापूर्वकत्वेनानित्य-त्वात् क्लृ३प्तशिखेत्यत्र प्लुतसिद्धये ऋलृक् सूत्रे ऋकारात्पृथक् लृकारोपदेशो व्यर्थः । न चैवं सावर्ण्ये सत्यप्युक्तरीत्या लृकारस्य प्लुतसिद्धेरनित्यत्वज्ञापनस्य निष्फलत्वात् । न चैव-मपि ऋदिताम् लृदित्कार्यम् लृदितामृदित्कार्यं च वारयितुमनित्यत्वज्ञापनमावश्यकमिति वाच्यम् । राजृभ्राजृगम्लृशक्लृ इति पृथगनुबन्धकरणसामर्थ्याद् 'नाग्लोपिशास्वृदि-ताम्', 'लृदितः परस्मैपदेषु' इति पृथगनुवादसामर्थ्याच्च तत्कार्याच्च तत्कार्याणामसांकर्यसि-द्धेरिदि चेत्—अत्राहुः—'गुरोरनृतः–' इत्यनेन ऋद्भिन्नस्य गुरोः प्लुतविधानाद् 'अनृतः' इत्येतदनूद्यमानगुरुविशेषणत्वेनानुवादरूपमेव, न तु विधेयसमर्पकसंज्ञारूपं पदमिति ऋस्थानिकप्लुतनिषेधस्यानित्यासिद्धचा क्लृ३प्तशिखेत्यत्र प्लुतो न सिध्यति, ततश्च तत्सिध्यर्थमुक्तज्ञापनायोभयोपदेश आवश्यक इति । अन्ये तु ऋकारात्पृथग् लृकार उपदेष्टव्य एव ऋकारोपदेशेन लृकारस्यालाभात् । न च 'ऋलृवर्णयोर्मिथः सावर्ण्यम्–' इति वचनात् तल्लाभः शङ्क्यः । वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेरित्याहुः । तेन सहेति । तुल्ययोगे किम्, 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' । इह सहशब्दो न तुल्ययोगवचनः । भारकर्मकवहनक्रियायां तु पुत्राणामनन्वयात् । किं तु विद्यमानवचनः । दशसु पुत्रेषु विद्यमानेष्वित्यर्थः । तथा सहशब्दस्य विद्यमानार्थत्व-

रवयवस्य सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः, सहपुत्रो वा आगतः । तु
योगवचनं प्रायिकम् । सकर्मकः । सलोमकः । ८५० प्रकृत्याशिषि
(६-३-८३) सहशब्दः प्रकृत्या स्यादाशिषि । स्वस्ति राज्ञे सहपुत्राय, सहामात्याय
'अगोवत्सहलेष्विति वाच्यम्' (वा ३९९०) । सगवे सवत्साय । सहलाय
८५१ बहुव्रीहौ संख्येये डजबहुगणात् । (५-४-७३) संख्येये यो ब
व्रीहिस्तस्माड्डच् स्यात् । उपदशाः । अबहुगणात् किम्—उपबहवः, उपगणाः
अत्र स्वरे विशेषः । 'संख्यायास्तत्पुरुषस्य वाच्यः' । (वा ३३४८) निर्गत

---

षष्ठयेषा तदाह—बहुव्रीहेरवयवस्येत्यादिना । बहुव्रीहेरिति किम्, सहयुध्वा
'राजनि युधिकृञः' 'सहे च' इति क्वनिप् । उपपदसमासः । बहुव्रीह्यवयव
सहस्य सत्वं न । सपुत्र इति । सभावे रूपम् । पुत्रेण युगपदागत इत्यर्थः
प्रायिकमिति । इतिशब्दादिदं लभ्यते । 'विभाषा सपूर्वस्य' इत्यादिनिर्देशान्
भावः । सकर्मक इति । विद्यमानकर्मक इत्यर्थः । अत्र तुल्ययोगाभावेऽपि स
सः । प्रकृत्याशिषि । 'सहस्य सः संज्ञायाम्' इत्यतः सहस्येत्यनुवृत्तं प्रथ
विपरिणम्यते । तदाह—सहशब्द इति । प्रकृत्येति । स्वभावेन स्थितः स्
दित्यर्थः । सभावो नेति यावत् । स्वस्तीति । भूयादिति शेषः । सहपुत्रायेति
तेन सहेति समासे कृते, आशीर्योगान्न सभावः । सहामात्यायेति । अगोवत्से
गोवत्सहलेषु परतः सहस्य प्रकृतिभावो नेत्यर्थः । सगव इति । राज्ञे स्वस्ति
शेषः । अथ बहुव्रीहावसाधारणसमासान्तमाह—बहुव्रीहौ । संख्येये यो ब
हिरिति । 'संख्याव्यय–' इति विहित इति शेषः । तस्मादिति । बहुव्रीहा
पञ्चम्यर्थे सप्तमीति भावः । डचस्याद् इति । समासान्तस्तद्धितश्चेति ज्ञेय
उपदशा इति । दशानां समीपे ये सन्तीति विग्रहः । 'संख्ययाव्यय–' इति
व्रीहिः । सुब्लुक् । उपदशन्शब्दाड्डचि 'नस्तद्धिते' इति टिलोपः । उपबहवः
उपगणा इति । बहूनां समीपे ये सन्तीति, गणस्य समीपे ये सन्तीति च विग्रह

---

मप्यस्तीति वक्तुमुक्तम् । प्रत्युदाहरणशरीरं तु सह पुत्रैरित्येवेति बोध्यम् । तृतीया
'सह युक्ते–' इत्यनेनैव । सोपसर्जनस्य । उपसर्जनस्येति न सहस्य विशेष
अव्यभिचारात् । किं तूत्तरपदेन संनिधापितस्य समासस्य । तच्चावयवद्वारकम्,
सर्जनसर्वावयवकस्य समासस्येत्यर्थः । तदेतत्फलितमाह—बहुव्रीहेरिति । तेनेह
सहयुध्वा, सहकृत्वा । 'राजनि युधि कृञः' 'सहे च' इति क्वनिपि उपपदसमासा
'सहस्य सः संज्ञायाम्' इत्यतोऽनुवर्तनादाह—सहस्य सः स्यादिति । प्रायिकमि
'विभाषा सपूर्वस्य' इत्यादिनिर्देशादिति भावः । सकर्मक इति । विद्यमानक
इत्यर्थः । प्रकृत्याशिषि । कथं तर्हि 'यजमानस्य सपुत्रस्य सभ्रातृकस्य सपरिवार
युरारोग्यैश्वर्याभिवृद्धिरस्तु' इत्यादिप्रयोगाः संगच्छन्त इति चेत्—उच्यते—'ऐश्व
भिवृद्धिरस्त्विति भवन्तोऽनुब्रवन्तु' इत्येतत्प्रार्थनावाक्यम्, न त्वाशीर्वचनम् । यच्चा
र्वचनम् 'तथास्तु' इति तत्र हि सपुत्रकेत्यादि न प्रयुज्यत एवेति न काप्यनुपपत्ति
बहुव्रीहौ संख्येये । व्यत्ययेन पञ्चम्यर्थे सप्तमीत्याह—यो बहुव्रीहि

त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ।

८५२ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । (५-४-११३) व्यत्ययेन षष्ठी । स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच्स्यात् । दीर्घे सक्थिनी यस्य स दीर्घसक्थः । जलजाक्षी । 'स्वाङ्गात्' किम्---दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः ।

---

'बहुगणवतुडति संख्या' इति संख्यात्वात् 'संख्ययाव्यय–' इति समासः । अबहुगणाद् इति निषेधान्न डच् । ननु उपगणा इत्यत्र डचि सति असति च रूपसाम्यात् किं तन्निषेधेनत्यत आह—अत्र स्वरे विशेष इति । डचि सति चित इति अन्तोदात्तत्वं स्यादित्यर्थः । संख्याया इति । संख्यान्ततत्पुरुषस्य समासान्तो डच् वक्तव्य इत्यर्थः । निस्त्रिंशानीति । 'निरादयः क्रान्त–' इति तत्पुरुषः, डच्, 'टेः' इति टिलोपः । त्रिंशतोऽधिकानीति यावत् । निस्त्रिंश इति । समासादि पूर्ववत् । त्रिंशदधिकाङ्गुलिरित्यर्थः । न च गवां विंशतिर्गोविंशतिरित्यत्रातिप्रसङ्गः शङ्क्यः, 'अव्ययादेः' इति विशेषणादिति भाष्ये स्पष्टम् । न चैकाधिका विंशतिरेकविंशतिरित्यत्र 'संख्ययाव्यय–' इति समासे सति 'बहुव्रीहौ संख्येये–' इति डच् शङ्क्यः, अन्यत्राधिकलोपादिति वार्तिकादित्यास्तां तावत् । बहुव्रीहौ । व्यत्ययेनेति । सक्थ्यक्ष्णोरिति षष्ठी पञ्चम्यर्थे, 'व्यत्ययो बहुलम्' इति च्छन्दसि वचनादित्यर्थः । 'छन्दोवत्सूत्राणि भवन्ति' इति भाष्यम् । 'बहुव्रीहौ' इति सप्तमी व्यत्ययेन पञ्चम्यर्थे । तदाह—स्वाङ्गवाचीति । सक्थ्यक्ष्यन्तादिति । बहुव्रीहिविशेषणत्वात् तदन्तविधिरिति भावः । षच् स्यादिति । समासान्तस्तद्धितश्चेति ज्ञेयम् । दीर्घसक्थ इति । षच् 'यस्येति च' इति लोपः । जलजाक्षीति । जलजे इव अक्षिणी यस्या इति विग्रहः । समासे षचि 'नस्तद्धिते' इति टिलोपः । षित्त्वाद् ङीष् । षित्त्वं ङीषर्थमिति भावः । दीर्घसक्थि शकटमिति । दीर्घे सक्थिनी सक्थिसदृशावीषादण्डौ यस्येति विग्रहः । अत्र सक्थिशब्दार्थयोरीषादण्डयोः 'अद्रवं मूर्तिमत्स्वाङ्गम्–' इत्यादिस्वाङ्गलक्षणाभावान्न षजिति भावः । अत्र 'स्वाङ्गात्' इत्यस्य प्रत्युदाहरणान्तरमाह—स्थूलाक्षेति । स्थूलानि अक्षीणि पर्वग्रन्थयो यस्या इति बहुव्रीहिः । अस्वाङ्गत्वादिह न षजिति भावः । 'ननु षजभावेऽपि नान्तलक्षणङीपि स्थूलाक्षिणीति

---

दिति । उपगणा इत्यत्र डचि सत्यसति च रूपे विशेषो नास्तीत्याह—स्वरे विशेष इति । डचि सति 'चितः' इत्यन्तोदात्तत्वं स्यात्, असति तु पूर्वपदप्रकृतिस्वर इत्यर्थः । न च सत्यपि डचि परत्वात्पूर्वपदप्रकृतिस्वर एव स्यादिति शङ्क्यम्, 'चितः' इति स्वरस्य सतिशिष्टत्वात्, डचश्चित्करणस्य वैयर्थ्यापत्तेश्च । संख्याया इति । संख्यान्तस्य तत्पुरुषस्य चरमावयवो डज्वक्तव्य इत्यर्थः । एकविंशतिरित्यादौ तु न भवति, 'अन्यत्राधिकलोपात्' इति वार्तिककारोक्तेः । व्यत्ययेन षष्ठीति । एतच्चोपलक्षणम्, सप्तम्यपि व्यत्ययेनैव, तदाह—स्वाङ्गवाचीत्यादि । 'अद्रवं मूर्तिमत्–' इत्यादिलक्षणलक्षितं स्वाङ्गं गृह्यते । तेन शोभनाक्षी प्रतिमेत्यादिप्रयोगो निर्बाध एवेत्याहुः । षच् यादिति । षो ङीषर्थः । चस्तु 'चितः' इत्यन्तोदात्तार्थः । तेनात्र पूर्वपदप्रकृतिस्वरो

...ग्रन्थोऽयमसङ्गत इव प्रतिभाति, ...भावात् ।

'अक्षणोऽदर्शनात्' (सू ९४४) इत्यच् । ८५३ अङ्गुलेर्दारुणि । (५-४-११
अङ्गुल्यन्ताद्बहुव्रीहेः षच्स्याद्दारुण्यर्थे । पञ्च अङ्गुलयो यस्य तत्पञ्चाङ्गुलं दा
अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते । वहुव्रीहेः किम्–द्वे अङ्
प्रमाणमस्या द्व्यङ्गुला यष्टिः । तद्धितार्थे तत्पुरुषे 'तत्पुरुषस्याङ्गुलेः–' (सू ७८
इत्यच् । दारुणि किम्–पञ्चाङ्गुलिर्हस्तः । ८५४ द्वित्रिभ्यां ष मूर्
( ५-४-११५ ) आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः । '
नक्षत्रे अब्वक्तव्यः' ( वा ३३६० ) । मृगो नेता यासां ता मृगनेत्रा रात्र
पुष्यनेत्राः । ८५५ अन्तर्वहिर्भ्यां च लोम्नः । ( ५-४-११७ ) वा
लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । वहिर्लोमः । ८५६ अञ्नासिका
संज्ञायां नसं चास्थूलात् । ( ५-४-११८ ) नासिकान्ताद्बहुव्रीहेरच्स्या

---

स्यादित्यत आह—अक्षणोऽदर्शनादित्यजिति । षचि तु षित्त्वलक्षणङीष् स
दिति भावः । अङ्गुलेर्दारुणि । बहुव्रीहावित्यनुवृत्तस्य पञ्चम्यर्थे सप्तम्यन्
अङ्गुल्या विशेषणात् तदन्तविधिरित्यभिप्रेत्याह–अङ्गुल्यन्तादिति । पञ्चाङ्
दार्विति । षचि 'यस्येति च' इति इकारलोपः । ननु दारुणः कथं अङ्गु
इत्यत आह—अङ्गुलिसदृशावयवमिति । अङ्गुलिसदृशा अवयवा यस्
विग्रहः । धान्येति । कुसूलादिस्थितधान्याद्याकर्षकमिति यावत् । उच्यत इ
लक्षणयेति शेषः । द्व्यङ्गुलेति । 'प्रमाणे द्वयसच्–' इति विहितस्य मा
'द्विगोर्नित्यम्' इति लुक् । अवहुव्रीहित्वादत्र न षजिति भावः । तर्हि द्व्यङ्
रिति स्यादित्यत आह—तद्धितार्थ इति । षचि तु ङीष् स्यादिति भा
द्वित्रिभ्याम् । षेति लुप्तप्रथमाकं पदम् । द्विमूर्ध इति । द्वौ मूर्धानौ यस्
विग्रहः । त्रिमूर्ध इति । त्रयो मूर्धानो यस्येति विग्रहः । समासान्तः । 'नस्तद्धि
इति टिलोपः । षचि अनुवर्तमाने षग्रहणं चित्स्वरनिवृत्त्यर्थम् । नेतुरिति । न
विद्यमानो यो नेतृशब्दः तदन्ताद्बहुव्रीहेरप् वक्तव्य इत्यर्थः । नेता नायकः ।
नेतेति । मृगः मृगशीर्षम् । रात्रिनेता चन्द्रः । तद्योगान्नक्षत्रस्यापि नेतृत्वं बोध्
मृगनेत्रा इति । मृगनेतृशब्दादप्, ऋकारस्य यण, रेफः, टाप् । पुष्य
इति । पुष्यो नेता यासामिति विग्रहः । अन्तर्बहिर्भ्यां च लोम्नः । अन्त
इति । अन्तः लोमानि यस्येति विग्रहः, अप्, टिलोपः । एवं वहिर्लोमः । अञ्
सिकायाः । अच् इति च्छेदः । नासिकाया इत्यस्य बहुव्रीहेर्विशेषणत्वात् तद

---

न भवति । स्थूलाक्षेति । स्थूलानि अक्षीणि पर्वाङ्कुराणि यस्याः सा । प्राचा
स्थूलाक्षिरिक्षुरिति प्रत्युदाहृतम् । तन्न, 'अक्षणोऽदर्शनात्' इत्यचो दुर्वारत्वात्
यदपि समासान्तविधेरनित्यत्वात्स न कृत इति कैश्चिद् व्याख्यातम् । तदसा
एवं हि षजपि तथैव न भविष्यतीति प्रत्युदाहरणस्यासङ्गतिप्रसङ्गात् । द्व्यङ्गुले
मात्रचो 'द्विगोर्नित्यम्' इति लुक् । नेतुरिति । नेता नायकः । नक्षत्रे यो नेतृ
स्तदन्ताद्बहुव्रीहेरित्यर्थः । मृगनेत्रा इति । मृगो मृगशीर्षनक्षत्रम् । चन्द्रो

यस्य मृगनक्षत्रस्य चन्द्रनेता मृग इत्यत्र तु न भवति । इह हि नेतृशब्दान्तो बहुव्री

नासिकाशब्दश्च नसं प्राप्नोति न तु स्थूलपूर्वात् । ८५७ पूर्वपदात्संज्ञायामगः । (८-४-३) पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्संज्ञायां न तु गकारव्यवधाने । द्रुरिव नासिका यस्य द्रुणसः । खरणसः । अगः किम्—ऋचामयनम् ऋगयनम् । 'अणृगयनादिभ्यः', ( सू १४५२) इति निपातनाण्णत्वाभावमाश्रित्य अग इति प्रत्याख्यातं भाष्ये । अस्थूलात् किम्—स्थूलनासिकः । 'खुरखराभ्यां वा नस्' ( वा ३३६३ ) । खुरणाः । खरणाः । 'पक्षेऽजपीष्यते' । खुरणसः । खरणसः । ८५८ उपसर्गाच्च । (५-४-११९) प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच् नासिकाया नसादेशश्च । असंज्ञार्थमिदं वचनम् । उन्नता नासिका यस्य स उन्नसः । ८५९ उपसर्गादनोत्परः । ( ८-४-२८ ) इति सूत्रम् ।

---

विधिमभिप्रेत्याह—नासिकान्तादिति । नसमित्यनन्तरं प्राप्नोतीत्यध्याहार्यम् । उपस्थितत्वान्नासिकाशब्द इति लभ्यते । तदाह—नासिकाशब्दश्च नसं प्राप्नोतीति । पूर्वपदात् । रषाभ्याम् इत्यनुवृत्तम् । पूर्वपदशब्देन पूर्वपदस्थं लक्ष्यते । 'रषाभ्याम्' इत्यनेन लब्धो रेफः षश्च प्रत्येकमन्वेति । तदाह—पूर्वपदस्थान्निमित्तादिति । रेफषकारात्मकादित्यर्थः । अग इति पञ्चम्यन्तम् । गकारभिन्नात्परस्येत्यर्थः । गकारात्परस्य नेति यावत् । तदाह—न तु गकारव्यवधान इति । अनेन 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इत्यनुवृत्तिः सूचिता । अन्यथा अग इत्यस्य वैयर्थ्यं स्यात् । खण्डपदत्वादप्राप्तौ वचनमिदम् । द्रुरिवेति । वृक्ष इवेत्यर्थः । द्रुणस इति । बहुव्रीहेरच् । नासिकाशब्दस्य नसादेशः । णत्वम् । ऋगयनमिति । 'ऋवर्णात्–' इति वार्तिकस्याप्यत्रानुवृत्त्या णत्वं प्राप्तं गकारेण व्यवधानान्न भवतीति भावः । अत्र ऋचामयनमिति विग्रहप्रदर्शनं चिन्त्यम्, वाक्येन संज्ञानवगमात् । न च रघुनाथ इत्यादौ संज्ञायां णत्वं शङ्क्यम्, णत्वेन चेत्संज्ञा गम्यत इत्यर्थात् । इह तु कृते णत्वे संज्ञात्वभङ्गापत्तेर्न णत्वम् । अत एव 'भृञोऽसंज्ञायाम्' इति सूत्रभाष्ये 'य एते संज्ञायामिति विधीयन्ते, तेषु नैवं विज्ञायते संज्ञायामभिधेयायामिति । किं तर्हि प्रत्ययान्तेन चेत्संज्ञा गम्यते' इत्युक्तम् । खुरेति । खुरखराभ्यां परस्य नासिकाशब्दस्य बहुव्रीहौ संज्ञायां नसादेशो वेति वक्तव्यमित्यर्थः । प्रकृतत्वादेव सिद्धे नसादेशवचनम् अच्प्रत्ययानुवृत्त्यर्थम् । खुरणा इति । खुराविव नासिके यस्येति विग्रहः । नसादेशः । 'पूर्वपदात्संज्ञायाम्–' इति णत्वम् । 'अत्वसन्तस्य–' इति दीर्घः । खरणा इति । खररूपा नासिका यस्येति विग्रहः । पक्षे खुरनासिक इति खरनासिक इति च न भवतीत्याह—पक्षे अजपीष्यत इति । अच्प्रत्ययसहितो नसादेश इत्यर्थः । भाष्ये त्विदं न दृश्यते । उपसर्गाच्च । नन्वञ्नासिकाया इत्येव सिद्धे किमर्थमिदमित्यत आह—असंज्ञार्थमिति । उपसर्गादनोत्पर इति सूत्रमिति ।

---

नक्षत्रे वर्तते न तु नेतृशब्द इति । खुरखराभ्यामिति । 'नासिकायाः–' इति वर्तते । केवलादेशवचनं प्रत्ययनिवृत्त्यर्थम् खुरणा । इति । 'अत्वसन्तस्य–' इति दीर्घः । उपसर्गाच्च । उपसर्गग्रहणं प्रादीनामुपलक्षणम्, नासिकाशब्दस्याक्रियार्थत्वेन तं प्रत्यु-



पसर्गत्वाभावात् । न च क्रियायोगाभावेऽप्युपसर्गत्वमस्त्विति शङ्क्यम् ।

तद्भङ्क्त्वा भाष्यकार आह—उपसर्गाद्बहुलम् । उपसर्गस्थान्निमित्ता नसो नस्य णः स्याद्बहुलम् । प्रणसः । 'वेर्ग्रो वक्तव्यः' (वा ३३ विगता नासिका यस्य विग्रहः । 'ख्यश्च' (वा ३३६६) । विख्यः । कथं 'विनसा हतवान्धवा' इति भट्टिः । विगतया नासिकयोपलक्षितेति यम् । ८६० सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः । (५-४- एते बहुव्रीहयोऽच्प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्य सुप्रातः । श्वोऽस्य सुश्वः । शोभनं दिवा अस्य सुदिवः । शारेरिव कुक्षि शारिकुक्षः । चतस्रोऽश्रयोऽस्य चतुरश्रः । एण्या इव पादावस्यैणी

---

तत्र हि 'नश्च धातुस्थो–' इति सूत्रान्नसिति लुप्तषष्ठीकमनुवर्तते । ' नो णः' इत्यनुवर्तते । उपसर्गस्थाद्रेफषकारात्परस्य नसो नस्य णः स्यात्, नकारो णत्वं न प्राप्नोतीत्यर्थः । खण्डपदस्थत्वादप्राप्ताविदं सूत्रम् । आयूंषि तारिषत्' इत्याद्युदाहरणम् । अनोत्परः किम् ? 'प्र नो मुञ्चतम् ओत्परकत्वान्न णत्वमिति स्थितिः । तद्भङ्क्त्वेति । 'अनोत्परः' इत्यपनीय बहुलमिति च कृत्वा भाष्यकार आहेत्यर्थः । तथा च फलितं सूत्रमाह—उ द्बहुलम् । निमित्तादिति । रेफषकारान्मकादित्यर्थः । 'उपसर्गादनोत्परः' यथाश्रुते तु 'प्रणो नय' इत्यादावव्याप्तिः, 'प्र नः पूषा' इत्यादावतिव्याप्तिश्चेति प्रणस इति । प्रगता नासिका यस्येति विग्रहः । 'उपसर्गाच्च' इत्यच्, नासि नस् । 'उपसर्गाद्बहुलम्' इति णत्वमिति भावः । वेरिति । वेः परो यो ना शब्दः स ग्रादेशं प्राप्नोतीति भावः । विग्र इति । विगता नासिका यस्येति वि प्रकृतवार्तिकेन नासिकाशब्दस्य ग्रादेश इति भावः । विगता नासिका यस्येति अचि नसादेशं टापि च विनसेति भट्टिप्रयोगो न युज्यते । ग्रादेशस्यास्य प्रत्यपवादत्वादित्याक्षिपति—कथं तर्हीति । समाधत्ते—विगतयेति । नासिका विनासिका, प्रादिसमासः, अबहुव्रीहित्वाद् न ग्रादेशः, किंतु टायां इति नसादेशे विनसेति तृतीयान्तं रूपम् । उपलक्षितेत्यध्याहार्यमिति सुप्रात । सुप्रात इति । अच्प्रत्ययः । 'अव्ययानां भमात्रे टिलोपः' । इति । अच्, पूर्ववट्टिलोपः । सुदिव इति । शोभनं दिवा यस्येति विग्रहः ।

---

सावकमित्यव्ययीभावे 'उपसर्गात्सुनोति–' इति सस्य षत्वप्रसङ्गात्तदाह—प्रादि उपसर्गादनोत्परः । अनोत्परः किम्, प्रणो मुञ्चतमित्यत्र णत्वं मा तद्भङ्क्त्वेति । 'अनोत्परः' इत्यपनीय बहुलग्रहणं च कृत्वेत्यर्थः । अन्यथा नयेत्यादावव्याप्तिः, प्र नः पूषेत्यादौ त्वतिव्याप्तिः प्रसज्येतेति भावः । प्रणस प्रगता नासिका अस्येति विग्रहः । कथं तर्हीति । ग्रख्ययोरन्यतरेण भाव्यमिति नासिकयेति । तथा च विनसेति न प्रथमान्तम्, किं तु 'पद्दन्न–' इति तृतीयान्तमिति भावः । शोभनं प्रातरस्येति । अधिकरणशक्तिप्रधानस्य नाधिकरण्यासंभवात्प्रातःशब्देन प्रातस्तनं कर्म लक्ष्यत इत्याहुः । प्रातःकल्पमि प्रातःशब्दो वृत्तिविषये शक्तिमत्पर इति न सामानाधिकरण्यानुपपत्तिरित्यन्ये ।

अजपदः । प्रोष्ठो गौः, तस्येव पादावस्य प्रोष्ठपदः । ८६१ नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् । ( ५-४-१२१ ) अच्स्यात् । अहलः, अहलिः । असक्थः, असक्थिः । एवं दुःसुभ्याम् । शक्त्योः इति पाठान्तरम् । अशक्तः, अशक्तिः । ८६२ नित्यमसिच्प्रजामेधयोः । (५—४—१२२) नञ्दुःसुभ्य इत्येव । अप्रजाः । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः ।

त्याकारान्तमव्ययम् । 'अव्ययानां भमात्रे टिलोपः' इति टिलोपः । शारिकुक्ष- इति । शारिः पक्षिविशेषः । अचि 'यस्यति च' इति इकारलोपः । चतस्रोऽश्रय इति । कोणा इत्यर्थः । अचि 'यस्येति च' इति इकारलोपः । एण्या एवेति । एणी मृगी । अजपद इति । अजः छागः, तस्येव पादावस्येति विग्रहः । एणी-पदादिषु अच् । निपातनात् पादः पत् । नञ्दुस्सुभ्यः । शेषपूरणेन सूत्रं व्याचष्टे— अच् स्यादिति । अहलः, अहलिरिति । अविद्यमानो हलिः यस्येति विग्रहः । हलिशब्द इदन्तो हलपर्यायः, तदन्तादचि 'यस्येति च' इति इकारलोपे तदभावे च रूपम् । यद्यपि हलशब्देन हलिशब्देन च रूपद्वयं सिद्धम् । तथापि अनुक्तसमासान्त-तया शैषिकस्य कपः प्राप्तौ तन्निवृत्त्यर्थमिदं वचनम् । अस्य वैकल्पिकत्वेऽपि अनुक्त-समासान्तत्वाभावादत्र न कप् । असक्थः, असक्थिरिति । अविद्यमानं सक्थि यस्येति विग्रहः । एवं दुस्सुभ्यामिति । दुर्हलः, दुर्हलिः । दुस्सक्थः, । दुस्सक्थिः । शक्त्योरिति । 'हलिशक्त्योः' इति केचित् पाणिनीयाः पठन्तीत्यर्थः । केचि-च्छिष्याः पाणिनिना तथा पाठिता इति वदन्तीति भावः । नित्यमसिच् । नञ्दु-सुभ्य इत्येवेति । पूर्वसूत्रादनुवर्तत इति भावः । एतेभ्यः पराभ्यां प्रजामेधा-शब्दाभ्यां नित्यमसिच् समासान्तः स्यात्, स तद्धित इत्यर्थः । असिचः चकार इत्, इकार उच्चारणार्थः । अन्यतरस्यामित्यनुवृत्तिनिवृत्त्यर्थं नित्यग्रहणम् । अस्वरितत्वादेव तदनुवृत्त्यभावे सिद्धे स्पष्टार्थमिति तत्त्वम् । अप्रजा इति । अविद्यमाना प्रजा यस्येति विग्रहः । 'नञोऽस्त्यर्थानाम्—' इति समासः । असिचि 'यस्येति च' इत्या-कारलोपादप्रजशब्दात् सुबुत्पत्तिः । सौ तु 'अत्वसन्तस्य—' इति दीर्घः । 'हल्ङ्याप्—' इति सुलोपः । यद्यप्यकारं विना सिचि विहितेऽपि सिद्धमिदम् । तथापि सिच्यभत्वेन आकारलोपाभावादप्रजास्शब्दात् सुबुत्पत्तौ, प्रथमैकवचने अप्रजाः इति रूपसिद्धावपि अप्रजसाविति न स्यात् । किंतु अप्रजासावित्यादि स्यात् । तस्मादकारोच्चारणं भत्व-संपादनार्थमावश्यकम् । दुष्प्रजा इति । दुर्गता प्रजा यस्येति विग्रहः । 'प्रादिभ्यो

पदादिषु निपातनात्पद्भावः । नञ्दुःसुभ्यो । नन्वत्र हलिग्रहणं व्यर्थम्, हलशब्दमादाया-हल इति प्रयोगसंभवात् । न च महद्धलं हलिः, तद्रहितोऽहलिस्तत्रैवार्थे हल इति प्रयोगार्थं तद्ग्रहणमिति वाच्यम्, अहल इत्यत्र महद्धलरहित इत्यर्थाप्रतीतेः । न चवमप्यन्तोदात्तार्थमच्प्रत्ययविधानमावश्यकम्, अन्यथाऽहल इत्यत्र पूर्वपदप्रकृति-स्वरः स्यादिति शङ्कयम्, 'नञ्सुभ्याम्' इत्यनेनान्तोदात्तत्वविधानात् । अत्राहुः— शैषिकस्य कपो निवृत्त्यर्थम्, 'दुर्हलैः' इत्यत्रान्तोदात्तत्वार्थं च तदिति । शक्त्योरिति । आचार्येण केचिच्छात्रा हलिशक्त्योरिति पाठिता इति भावः । नित्यमसिच् ।

८६३ धर्मादनिच्केवलात् । (५-४-१२४) केवलात्पूर्वपदात्परो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच्स्यात् । कल्याणधर्मा । केवलात् किम्-स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत् । स्वशब्दो हीह न केवलं पूर्वं किं तु मध्यमत्वादापेक्षिकम् । 'सन्दिग्धसाध्यधर्मा' इत्यादौ तु कर्मधारयपूर्वो बहुव्रीहिः । एवं च परमस्वधर्मा इत्यपि साध्वेव । निवृत्तिधर्मा, अनुच्छित्ति

---

धातुजस्य-' इति समासः । असिजादि पूर्ववत् । 'इदुदुपधस्य-' इति षत्वम् । इति । शोभना प्रजा यस्येति विग्रहः । असिजादि पूर्ववत् । अमेधा इत्य अविद्यमाना मेधा यस्येति विग्रहः । असिजादि पूर्ववत् । केचित्तु नित्यग्रहणम् विधानार्थम् । तेनाल्पमेधस इत्यादि सिध्यतीत्यप्याहुः । धर्मादनिच्केवला पूर्वपदादित्यध्याहृत्य केवलादित्यस्य तद्विशेषणत्वमाह— केवलात्पूर्वपदादिति । चकार इत् । इकार उच्चारणार्थः । मध्यमपदत्वानाक्रान्तत्वं केवलपूर्वपद कल्याणधर्मेति । कल्याणो धर्मो यस्येति विग्रहः । अनिचि 'यस्येति च' इत्य लोपः । परम इति । परमः स्वो धर्मो यस्येति बहुव्रीहौ परमस्वधर्मशब्दे स्व धर्मशब्दापेक्षया पूर्वपदत्वात् ततः परमस्वधर्मशब्दादप्यचः प्राप्तौ तन्निवृत्त्यर्थं ग्रहणमिति भावः । केवलग्रहणे कृते तु न दोष इत्याह—स्वशब्दो हीह न पूर्वपदमिति । किं त्विति । किं तु स्वशब्दो धर्मपदापेक्षया पूर्वत्वात्पूर्वपदम्, केवलम्, मध्यमत्वात् । केवलशब्देन च पदान्तरराहित्यवाचिना मध्यमपदत्वाना स्वलाभादित्यर्थः । इदं च 'इजादेः-' इति सूत्रभाष्ये स्पष्टम् । एवं च त्रिपद परमस्वधर्म इत्येव भवति । नत्वनिच् । 'सर्वनामसंख्ययोरुपसंख्यानम्' इति स्व पूर्वनिपातस्तु 'वाहिताग्न्यादिषु' इति पाक्षिकत्वान्न भवति । नन्वेवं सति सं साध्यो धर्मो यस्य स संदिग्धसाध्यधर्मा इत्यत्र कथमनिच् । अत्र हि संदि केवलं पूर्वपदम्, धर्मशब्दस्तस्मात् परो न भवति । यस्मात् साध्यशब्दात् परो शब्दः, तस्य तु न पूर्वपदत्वम्, मध्यमपदत्वादित्यत आह—संदिग्धेति । सं श्चासौ साध्यश्चेति कर्मधारयः, संदिग्धसाध्यो धर्मो यस्येति कर्मधारयगर्भो बहुव्री एवं च संदिग्धसाध्यशब्दस्य केवलपूर्वपदत्वात् तत्रानिज् निर्बाध इति भावः । एवं उक्तरीत्या परमश्चासौ स्वश्च परमस्वः, परमस्वः धर्मो यस्येति कर्मधारयाश्र

---

अकारोच्चारणं भत्वसंपादनार्थम्, तेन सुप्रजसावित्यादौ 'यस्येति च' इत्याकार सिध्यति । अस्वरितत्वादेव अन्यतरस्यांग्रहणाननुवृत्तिसिद्धौ नित्यग्रहणमन्यतो नार्थम् । तेन 'अल्पमेधसः' इति सिध्यतीति वृत्तिकारादयः । धर्माद अनिचोऽकारश्चिन्त्यप्रयोजन इत्येके । अन्ये तु धर्मं करोत्याचष्टे वा 'तत्करोति-' ण्यन्तात् क्विपि धर्म्, परमो धर्म्, यस्य स परमधर्मा । एकदेशविकृतस्यानन्यत्व शब्दोऽयमित्यकारोच्चारणमिह सप्रयोजनमेवेत्याहुः । बहुव्रीहिणात्र पूर्वपदमा इत्यनुपदमेव वक्ष्यति । तच्च 'केवलात्' इत्यनेन विशेष्यत इत्याह—केवल पदादिति । प्राचा तूत्तरपदमपि विशेषितम् । प्रसादकृतापि केवलादिति धर्मा पूर्वपदस्य च विशेषणमिति व्याख्यातम्, तदुभयमपि चिन्त्यम् । आवृत्तौ माना

इत्यादिवत् । पूर्वपदं तु बहुव्रीहिणा आक्षिप्यते । ८६४ जम्भा सुहरिततृण-सोमेभ्यः । (५--४—१२५) जम्भा इति कृतसमासान्तं निपात्यते। जम्भो भक्ष्ये दन्ते च । शोभनो जम्भोऽस्य सुजम्भा । हरितजम्भा । तृणं भक्ष्यं यस्य, तृणमिव दन्ता यस्येति वा तृणजम्भा । सोमजम्भा । स्वादिभ्यः किम्—पतितजम्भः । ८६५ दक्षिणेर्मा लुब्धयोगे (५--४--१२६) दक्षिणे ईर्मं व्रणं यस्य दक्षिणेर्मा

---

केवलपूर्वपदत्वादनिच् । परमस्वधर्मेत्यपि साध्वेवेत्यर्थः । निवृत्तीति । निवृत्तिः धर्मो यस्येति, अनुच्छित्तिः धर्मो यस्येति च विग्रहः । अत्र समासे निवृत्तिशब्दस्य अनुच्छित्तिशब्दस्य च केवलपूर्वपदत्वाद् यथायोग्यमनिजिति भावः । नन्विह सूत्रे पूर्वपदशब्दस्याश्रवणादनुवृत्त्यभावाच्च कथं पूर्वपदादिति लभ्यत इत्यत आह— पूर्वपदं त्विति । जम्भा सुहरित । जम्भेति नकारान्तं पदम् । तदाह— जम्भेति कृतसमासान्तमिति । अनिजन्तमित्यर्थः । सु, हरित, तृण, सोम इत्येतेभ्यः परो यो जम्भशब्दः, तदन्ताद् बहुव्रीहेः अनिच्प्रत्ययो निपातित इति भावः । जम्भो भक्ष्ये दन्ते चेति । अत्र कोशो मृग्यः । सुजम्भेति । सुजम्भशब्दादनिचि 'यस्येति च' इत्यकारलोपः । हरितजम्भेति । हरितो जम्भो यस्येति विग्रहः । तृणमिवेति । तृणशब्दस्य दन्तवाचिना जम्भशब्देन सामानाधिकरण्यलाभाय तृणशब्दस्य तत्सदृशे लक्षणेति भावः । सोमजम्भेति । सोमः चन्द्रः स इव शुभ्रा जम्भा दन्ता यस्येति विग्रहः । सोमः सोमलता वा, सैव जम्भो भक्ष्यं यस्येति विग्रहः । पतितजम्भ इति । पतिता जम्भा दन्ता यस्येति विग्रहः । दक्षिणेर्मा । लुब्धो व्याधः, तद्योगे 'दक्षिणेर्मा—' इत्यनिच्प्रत्ययः, बहुव्रीहिश्च निपात्यते । दक्षिणे ईर्मं यस्येति विग्रहः । ईर्ममित्यस्य व्याख्यानं व्रणमिति । व्यधिकरणत्वेऽपि बहुव्रीहिर्निपातनात् । अनिचि 'यस्येति च' इत्यकारलोपे

---

धर्मपदविशेषणे प्रयोजनाभावाच्च । न च धर्मशब्दान्तं यत्रोत्तरपदं तद्व्यावृत्तिः फलमिति वाच्यम्, तत्र बहुव्रीह्यवयवीभूतपूर्वपदात्परत्वस्य धर्मपदे असंभवादेवादोषत्वात् । सङ्ख्यमत्वादिति । न च 'सर्वनामसंख्ययोः—' इति स्वशब्दस्य पूर्वनिपातः शङ्क्यः, आहिताग्न्यादेराकृतिगणत्वादिति हरदत्तादिभिः समाहितत्वात् । आपेक्षिकमिति । नन्वत एव केवलग्रहणं व्यर्थम्, पूर्वशब्दस्य समासप्रथमावयवे रूढत्वेनैव मध्यमपदव्यावृत्तिसंभवादिति चेत् । अत्राहुः—पूर्वपदाक्षेपे तात्पर्यग्राहकत्वेन केवलपदस्य सार्थकत्वादिति । कर्मधारयपूर्वपद इति । नन्वत्रानिच् दुर्लभः, 'केवलात्' इत्यस्य समासानात्मकत्वादित्यर्थादिति चेत् । मैवम्, केवलग्रहणस्य समासानात्मकपूर्वपदपरत्वे मानाभावात् । निवृत्तिधर्मा हि स्थानी भवतीत्यादिप्रयोगविरोधाच्च । अस्मदुक्तार्थस्तु 'धृञ् धारणे' इति धातौ माधवग्रन्थे स्पष्टः । एतेन साध्यो धर्मोऽस्येति साध्यधर्मा संदिग्धश्चासौ साध्यधर्मा चेति विग्रहः । स च संदेहः साध्यधर्मद्वारक एव पर्यवस्यतीति केषांचिद्व्याख्यानं परास्तम् । उक्तरीत्यैव साध्यस्य साक्षात् संदिग्धत्वलाभे तत्समर्थनप्रयासस्य व्यर्थत्वात् । साध्वेवेति । परमस्वः ... यदा विगृह्यते तदेत्यर्थः । दक्षिणेर्मा—। लुब्धो व्याधः । तद्योगादेवेर्मनिष्पत्तावि

मृगः । व्याधेन कृतव्रण इत्यर्थः । ८६६ इच्कर्मव्यतिहारे । (५—४—१२७) कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच्स्यात्समासान्तः । केशाकेशि । मुसलामु… ८६७ द्विदण्ड्यादिभ्यश्च । (५—४—१२८) तादर्थ्ये चतुर्थ्येषा । एषां सि… मिच्प्रत्ययः । स्यात् । द्वौ दण्डौ यस्मिन्प्रहरणे तद् द्विदण्डि प्रहरणम् । द्विमु… उभाहस्ति । उभयाहस्ति । ८६८ प्रसंभ्यां जानुनोर्ज्ञुः । (५—४—१२९) … परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ । प्रगते जानुनी यस्य प्रज्ञुः । … ८६९ ऊर्ध्वाद्विभाषा । (५—४—१३०) ऊर्ध्वज्ञुः, ऊर्ध्वजानुः ।

---

दक्षिणेर्मेति रूपम् । लुब्धशब्दं विवृण्वन्नाह—व्याधेनेति । रोगादिनी … दक्षिणेर्म इत्येवेति भावः । इच्कर्मव्यतिहारे । समासान्त इति । … इत्यपि ज्ञेयम् । केशाकेशीति । अत्र प्रक्रिया प्रागेव प्रदर्शिता । द्विदण्ड्या… भ्यश्च । द्विदण्ड्यादिषु इदन्तानामेव निपातनात् तेभ्यः परत्वेन इच्प्रत्ययवि… नर्थक इत्याशङ्क्य नेयं पञ्चमीत्याह—तादर्थ्ये चतुर्थ्येषेति । द्वौ दण्डावि… कर्मव्यतिहाराभावेपि वैरूप्येऽपि बहुव्रीहिः इच्प्रत्ययश्च निपात्यते । द्विदण्डि… दण्डादण्डीतिवत् प्रक्रिया । कर्मव्यतिहाराभावत् पूर्वपदस्य न दीर्घ इति वि… द्विमुसलीति । द्वे मुसले यस्मिन् प्रहरणे इति विग्रहः । उभाहस्ति… याहस्तीति । उभौ हस्तौ यस्मिन् प्रहरण इति विग्रहः । उभयो… नित्यमयचि प्राप्ते निपातनेन विकल्प्यते । कर्मव्यतिहाराभावेऽपि दीर्घश्च । प्रसं… जानुशब्दयोरिति । प्र सम् इति पूर्वपदद्वित्वाद् उत्तरपदभूतजानुशब्द… द्वित्वं बोध्यम् । जानुन इत्युक्ते तु 'प्रत्ययः, परश्च' इत्यधिकारात् पञ्चम्यन्तत्वं… ज्ञोः प्रत्ययत्वं च सम्भाव्येत । तस्यादेशत्वसिद्धये षष्ठीद्विवचननिर्देशः । तद… ज्ञुरादेश इति । प्रज्ञुरिति । 'प्रादिभ्यो धातुजस्य—' इति समासः । संज्ञु… संगते जानुनी यस्येति विग्रहः । ऊर्ध्वाद्विभाषा । ऊर्ध्वशब्दात् परो यो … शब्दः, तस्य ज्ञुरादेशो वा स्यात् । बहुव्रीहावित्यर्थः । ऊर्ध्वज्ञुरिति । ऊर्ध्वं …

---

निपातनं नान्यदेत्यर्थस्तदेतदाह—व्याधेनेति । 'वाली हेमाब्जमाली गुप… रिपुणा निर्मितो दक्षिणेर्मा' इति प्रयोगस्त्वौपचारिक इति कथंचिन्नेयः । … केशीति । 'तत्र तेनेदम्—' इति कर्मव्यतिहारे बहुव्रीहिः । इच्प्रत्ययस्य तिष्ठद्गुप्र… पाठादव्ययीभावत्वेऽव्ययत्वम् । नन्वेवमिचश्चित्करणं व्यर्थम्, अव्ययीभाव… बहुव्रीहिसंज्ञाया बाधात्समासस्वरेणान्तोदात्तत्वसिद्धेः । अत्राहुः—विशेषणार्थं… वश्यकमेव । तिष्ठद्गुप्रभृतिषु इकारमात्रपाठे हि सुगन्धिरित्यादावतिव्याप्तिप्रसङ्ग… किं चात्राव्ययीभावसंज्ञया बहुव्रीहिसंज्ञा न बाध्यते, किं तु द्वयोः समावेश… उपजीव्यविरोधस्यान्यय्यत्वात् । एवं च स्वरार्थमपि चित्वं कर्तव्यमेवे… द्विदण्डीति । समुदायनिपातनस्य विषयविशेषपरिग्रहार्थत्वाद् द्विदण्डा घा… त्विज् न भवति । उभाहस्तीत्यादि । इह निपातनादेवायचः पाक्षिक… प्रसंभ्याम् । जानुशब्दस्यैकत्वेऽप्युपपदनिबन्धनं द्वित्वमाश्रित्य जानु… द्विवचननिर्देशः, तत्फलं तु स्थानषष्ठीत्वस्फुटीकरणम् । 'जानुन' इत्युक्ते तु …

**धनुषश्च** । (५—४—१३२) धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात् । 'द्विधन्वा । शार्ङ्गधन्वा । ८७१ **वा संज्ञायाम्** । (५-४-१३३) शतधन्वा, शतधनुः । ८७२ **जायाया निङ्** । (५—४—१३४) जायान्तस्य बहुव्रीहेर्निङादेशः स्यात् । ८७३ **लोपो व्योर्वलि** । (६—१—६६) वकारयकारयोर्लोपः स्याद्वलि । पुंवद्भावः युवतिर्जाया अस्य युवजानिः । ८७४ **गन्धस्येदुत्पूतिसुसुरभिभ्यः** । (५—४—१३५) एभ्यो गन्धस्येकारोऽन्तादेशः स्यात् । उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः । 'गन्धस्येत्त्वे तदेकान्तग्रहणम्'

---

यस्येति विग्रहः । **धनुषश्च** । 'ऊधसोऽनङ्' इति पूर्वसूत्रं स्त्रीप्रत्ययाधिकारे व्याख्यातम् । तस्मादनङित्यनुवर्तते । तदाह—**अनङादेश इति** । ङित्त्वादन्तादेशः । 'प्रत्ययः, परश्च' इत्यधिकारस्थत्वेऽपि ङित्त्वादन्तादेश इति भावः । **द्विधन्वेति** । द्वे धनुषी यस्येति विग्रहः । समासे द्विधनुश्शब्दे सकारस्य अनङादेशः । ङकार इत् । अकार उच्चारणार्थः । उकारस्य यणिति भावः । **शार्ङ्गधन्वेति** । शृङ्गस्येदं शार्ङ्गम्, 'तस्येदम्' इत्यण्, तद् धनुर्यस्येति विग्रहः । समासे शार्ङ्गधनुश्शब्दे सकारस्यानङ्, ङकार इत्, अकार उच्चारणार्थः, उकारस्य यणिति भावः । महिम्नस्तवे 'स्वलावण्याशंसाधृतधनुषम्' इति प्रयोगस्त्वार्षः । **वा संज्ञायाम्** । 'धनुषश्च' इत्युक्तः अनङ् संज्ञायां वा स्यादित्यर्थः । **शतधन्वेति** । शतधन्वा नाम राजविशेषः स्यमन्तकोपाख्याने प्रसिद्धः । **जायाया निङ्** । **आदेश इति** । 'प्रत्ययः, परश्च' इत्यधिकारस्थत्वेऽपि ङित्त्वादन्तादेशोऽयमिति भावः । **लोपो व्योर्वलि** । व् य् अनयोर्द्वन्द्वात् षष्ठीद्विवचनम् । तदाह—**वकारयकारयोरिति** । **पुंवद्भाव इति** । 'स्त्रियाः पुंवत्—' इत्यनेनेति शेषः । **युवजानिरिति** । जायाशब्दे यकारादाकारस्य निङ् । ङकार इत्, 'लोपो व्योः—' इति यकारलोपः । युवतिशब्दस्य पुंवत्त्वात् तिप्रत्ययस्य निवृत्तिः । नलोप इति भावः । । **गन्धस्येदुत्** । गन्धस्य इत् इति च्छेदः । **एभ्य इति** । उत्, पूति, सु, सुरभि एतेभ्य इत्यर्थः । **इकारोऽन्तादेश इति** । पूर्वोत्तरसाहचर्यादिकार आदेश एवेति भावः । समासान्ताधिकाराद् 'आदेः परस्य' इति न भवति । **उद्गन्धिरिति** । उद्गतो गन्धो यस्येति विग्रहः । **पूतिगन्धिरिति** । पूतिशब्दः असुरभौ । पूतिः गन्धो यस्येति विग्रहः । **सुगन्धिरिति** । शोभनो गन्धो यस्येति विग्रहः । **सुरभिगन्धिरिति** । सुरभिः गन्धो

---

पञ्चमी प्रत्याधिकराज् ङुरपि प्रत्यय इत्येवं संदेहः स्यात्, तदेतद् ध्वनयन्नाह—जानुशब्दयोर्ङुरादेश इति । शार्ङ्गधन्वेति । कथंतर्हि 'स्वलावण्याशंसाधृतधनुषमह्नाय तृणवत्' इति पुष्पदन्तप्रयोग इतिः चेत् । अत्राहुः—समासान्तविधेरनित्यत्वान्नात्रानुपपत्तिः । अनित्यत्वे प्रमाणं त्वंश्वादिगणे राजन्शब्दपाठः । स हि 'प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्तार्थः । 'राजाहःसखि—' इति टचो नित्यत्वे तु किं तेनेति । **लोपो व्योर्वलि** । व्योर्लोप इति वक्तव्ये 'वेरपृक्तलोपाद्वलिलोपः पूर्वविप्रतिषेधेन' इति ज्ञापयितुमादौ विधेयनिर्देशः कृतः । तेन सुखीयतेः क्विपि सुखीरिति

---

१. 'द्विधन्वा' इति [illegible]

(वा ३३६८)। एकान्त एकादेश इवाविभागेन लक्ष्यमाण इत्यर्थः। सुगन्धि पुष्पं सलिलं च। सुगन्धिर्वायुः। नेह—सु शोभना गन्धा द्रव्याण्यस्य सुगन्ध आपणः। ८७५ अल्पाख्यायाम्। (५—४—१३६) सूपस्य गन्धो लेशो यस्मिंस्तत्सूपगन्धि भोजनम्। घृतगन्धि। 'गन्धो गन्धक आमोदे लेशे सम्बन्ध

---

यस्येति विग्रहः। सर्वत्र 'वायु:' इति विशेष्यम्। तदेकान्तेति। तस्य विशेष्य भूतद्रव्यस्य एकान्त एकदश इव प्रतीयमान इत्यर्थः। अत्र गन्धस्य गुणस्य द्रव्यैक देशत्वं न युज्यत इत्याशङ्कय एकान्तशब्द एकदेशवदविभक्ते लाक्षणिक इत्याह एकान्त एकदेश इवेति। सुगन्धि पुष्पं सलिलं चेति। अत्र गन्ध पुष्पात् सलिलाच्च द्रव्यात् पृथगलक्ष्यमाणत्वादिति भावः। सु शोभना इति सु इत्यस्य व्याख्यानं शोभना इति। गन्धा इति। गन्धवन्त इत्यर्थः। 'गुणवच भ्यो मतुपो लुगिष्टः' इति लुक्। द्रव्याणीति। चन्दनादीनीत्यर्थः। गन्धा इति विशेष्यमेतत्। गन्धशब्दस्य नपुंसकद्रव्यविशेषणत्वेऽपि नियतलिङ्गत्वात् पुं युज्यते। 'गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः। स एव द्रव्यवचनो बहुत्वे पुं च स्मृतः॥' इति कोशात्। सुगन्ध आपण इति। अत्र गन्धशब्दवाच्य चन्दनादिद्रव्याणां विशेष्यभूतापणापेक्षया पृथग् लक्ष्यमाणत्वादित्त्वं नेति भाव अल्पाख्यायाम्। अल्पवचने सति गन्धशब्दस्य इकारोऽन्तादेशः स्याद् बहुव्रीह वित्यर्थः। लेश इति गन्धशब्दस्य विवरणम्। सूपस्य गन्धो यस्मिन्नित्येव विग्रह सूपगन्धि भोजनमिति। उत्पूतिसुसुरभिपूर्वकत्वाभावादेकान्तत्वाभावाच्चाप्र वचनमिदम्। व्यधिकरणपदानामपि क्वचिदस्ति बहुव्रीहिरिति मूल एवानुपदं वक्ष्य घृतगन्धीति। घृतस्य गन्धो लेशो यस्मिन्निति विग्रहः। गन्धशब्दस्याल्पवाचि

---

सिद्धम्। गन्धस्येत्। तकार उच्चारणार्थ इत्याशयेनाह—इकारोऽन्तादेश इति 'आदेः परस्य' इतीह न भवति 'समासान्ताः' इत्यधिकारात्। अत्र केचिदाहुः इकारस्य प्रत्ययत्वेऽपि न क्षतिः, 'यस्येति च' इति लोपेनोद्गन्धिरित्यादिरूपसिद्धेः च 'तित्स्वरितम्' इत्यन्तस्वरितत्वापत्तिः शङ्क्या, तकारस्योच्चारणार्थत्वाभ्युपगमा नापि षष्ठीनिर्देशादादेशत्वमेव न प्रत्ययत्वमिति वाच्यम्, 'गापोष्टक्' इत्यादिप्रत्य विधिष्वपि षष्ठीदर्शनादिति। अविभागेनेति। एवं च च गुणवाचिन एव ग्रहणम्, न द्रव्यवाचिन इति फलितोऽर्थः। द्रव्याणीति। अस्ति च गन्धशब्दो द्रव्यवच 'वहति जलमियं पिनष्टि गन्धान्' इति प्रयोगात्। 'गन्धस्तु सौरभे नृत्ये गन्धके ग लेशयोः। स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः॥' इति कोशाच्च। केचित्तु—'ग स्येत्वे—' इति वार्तिके तदेकान्तशब्देन स्वाभाविकत्वं विवक्षितम्, तेनागन्तुकस्य नेत्या तथा च भट्टिः—'आघ्रायिवान् गन्धवहः सुगन्धः' इति। व्याख्यातं च जयमङ्ग याम्—'गन्धस्य—' इत्यादिनेकारः समासान्तो न, 'गन्धस्येत्वे तदेकान्तग्रहणम्' वचनात्। सुगन्ध आपणिक इति यथेति। अतएव 'भग्नबालसहकारसुगन्धो' इत्या नां प्रामादिकत्वं दुर्घटवृत्तिकृतोक्तम्। अल्पाख्यायाम्। अल्पवाचिनो गन्धस्यका न्तादेशः स्याद् बहुव्रीहौ। सूपस्य गन्ध इति। अत एव ज्ञापकाद्व्यधिकरण

गवंयोः ।' इति विश्वः । ८७६ उपमानाच्च । (५—४—१३७) पद्मस्येव गन्धोऽस्य पद्मगन्धिः : ८७७ पादस्य लोपोऽहस्त्यादिभ्यः । (५—४—१३८) हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्यात् समासान्तो बहुव्रीहौ । स्थानिद्वारेणायं समासान्तः । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम्—हस्तिपादः कुसूलपादः । ८७८ कुम्भपदीषु च । (५—४—१३९) कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम् । 'पादः पत्' (सू ४१४) कुम्भपदी । स्त्रियाम् किम्—कुम्भपादः । ८७९ संख्यासुपूर्वस्य । (५—४—१४०) पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् । सुपात् । ८८० वयसि दन्तस्य दतृ । (५—४—१४१) संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद्वयसि । द्विदन् । चतुर्दन् । षड् दन्ता अस्य षोडन् । सुदन्,

---

प्रमाणमाह—गन्धो गन्धक इति । उपमानाच्च । उपमानवाचिपूर्वपदात् परस्यापि गन्धशब्दस्य इकारोऽन्तादेशः स्याद् बहुव्रीहावित्यर्थः । पद्मस्येवेति । फलितार्थकथनमिदम् । पद्मगन्ध इव गन्धो यस्येति विग्रहः । पद्मपदं पद्मसंबन्धिगन्धसदृशे लाक्षणिकम् । 'सप्तम्युपमानपूर्वपदस्य—' इति समासः । पादस्य लोपः । अहस्त्यादिभ्य इति च्छेदः । उपमानादित्यनुवर्तते । तदाह—हस्त्यादिवर्जितादिति । 'आदेः परस्य' इत्यप्रवृत्तये आह—समासान्तो बहुव्रीहाविति । शैषिकस्य कपो निवृत्त्यर्थमपि लोपस्य समासान्तत्वम् । अन्यथा अनुक्तसमासान्तत्वात् कप् प्रसज्येत । नन्वभावात्मकस्य लोपस्य कथं समासान्तावयवत्वमित्यत आह—स्थानीति । व्याघ्रस्येवेति । फलितार्थकथनमिदम् । व्याघ्रपादाविव पादावस्येति विग्रहः । 'सप्तम्युपमानपूर्वपदस्य—' इति समासः । कुम्भपदीषु च । कुम्भपदीष्विति बहुवचननिर्देशाद् गणपाठाच्च कुम्भपद्यादिग्रहणमिति भावः । ङीप् चेति । 'पादोऽन्यतरस्याम्' इति विकल्पापवाद इति भावः । स्त्रियामिति । कुम्भपद्यादीनां स्त्रीलिङ्गानामेव गणे पाठादिति भावः । कुम्भपदीति । कुम्भस्येव पादावस्येति विग्रहः । 'पादस्य लोपोऽहस्त्यादिभ्यः' इति लोपे सिद्धे तदनुवादेन नित्यं ङीबर्थं वचनम् । संख्यासुपूर्वस्य । शेषपूरणेन सूत्रं व्याचष्टे—पादस्येति । उपमानात् परत्वाभावादप्राप्तौ वचनम् । द्विपादिति । द्वौ पादावस्येति विग्रहः । सुपादिति ।

---

बहुव्रीहिः । यद्वा फलितार्थकथनमेतत् । सूपो गन्धो यस्मिन्नित्येव विग्रहः । गन्धशब्दस्य विशेषणत्वेऽप्यस्मादेव ज्ञापकात् परनिपातः । पादस्य । यद्ययं लोपः समासान्तो न स्यात् 'आदेः परस्य' इत्यादेः स्यात् । शैषिकः कप् च प्रसज्येत, 'शेषाद्विभाषा' इत्यत्र समासान्तापेक्षस्य शेषस्याश्रयणादत आह—समासान्त इति । कथं पुनरभावो भावस्यावयवः स्यात्तत्राह—स्थानिद्वारेणेति । वचनबलादौपचारिकमवयवत्वं गृह्यत इति भावः । कुम्भपदीषु च । बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाप्ययमवगतिरित्यभिप्रेत्याह—कुम्भपद्यादिष्विति । इह गणे कुम्भपदी एकपदी जालपदीत्येवं समुदाया एव पठ्यन्ते, तस्य च प्रयोजनं विषयविशेषपरिग्रह इत्याशयेनाह—स्त्रियामिति । यच्चेहोपमानपूर्वं संख्यापूर्वं च पठ्यते तस्य सिद्धे लोपे नित्य-

सुदती । वयसि किम्—द्विदन्तः करी । सुदन्तो (नटः) ८८१ स्त्रियां संज्ञायाम् । ( ५-४-१४३ ) दन्तस्य दतृ स्यात्समासान्तो बहुव्रीहौ । अयोदती । फालदती । संज्ञायां किम्—समदन्ती । ८८२ विभाषा श्यावारोकाभ्याम् (५-४-१४४) दन्तस्य दतृ स्याद्बहुव्रीहौ । श्यावदन् , श्यावदन्तः । अरोकदन् , अरोकदन्तः । ८८३ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । ( ५-४-१४५ ) एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन्;, कुड्मलाग्रदन्तः। ८८४ ककुदस्यावस्थायां लोपः । (५-४-१४६) अजातककुत् । पूर्णककुत् । ८८५ त्रिककुत्पर्वते । (५-४-१४७) त्रीणि ककुदान्यस्य त्रिककुत् । संज्ञैषा ...

---

शोभनौ पादावस्येति विग्रहः । वयसि दन्तस्य दतृ । द्विदन्निति । द्वौ दन्तौ यस्येति विग्रहः । शिशुत्वं गम्यते । दन्तस्य दत्रादेशः । ऋकार इत् । उगित्वान्नुम् । सुलोपः । संयोगान्तलोपः । तस्यासिद्धत्वादुपधादीर्घो न । चतुर्दन्निति । चत्वारो दन्ता यस्येति विग्रहः । दत्रादि पूर्ववत् । षोडन्निति । षड् दन्ता यस्येति विग्रहः । दत्रादि पूर्ववत् । 'षष उत्त्वम्–' इति ष्टुत्वोत्त्वे । सुदन्निति । सु शोभना दन्ताः समस्ता जाता यस्येति विग्रहः । वयोविशेषावगतये समस्तस्य निवेशः । सुदतीति । शोभना दन्ताः समस्ता यस्या इति विग्रहः । दत्रादेशः । 'उगितश्च' इति ङीप् । द्विदन्तः करीति । हस्तिनः सर्वदा द्विदन्तत्वेन वयोविशेषानवगतिरिति भावः । स्त्रियां संज्ञायाम् । शेषपूरणेन सूत्रं व्याचष्टे—दन्तस्येति । वयोविशेषानवगमेऽपि प्राप्त्यर्थमिदम् । अयोदतीति । फालदतीति । संज्ञाविशेषाविमौ । समदन्तीति । समा दन्ता यस्या इति विग्रहः । 'नासिकोदर–' इति ङीप् । ... श्यावारोकाभ्याम् । शेषपूरणेन सूत्रं व्याचष्टे—दन्तस्येति । श्यावदन्निति । श्यावा धूम्रा दन्ता यस्येति विग्रहः । 'श्यावः स्यात् कपिशो धूम्र' इत्यमरः । अरोकदन्निति । अरोका अदीप्ताः अच्छिद्रा वा दन्ता यस्येति विग्रहः । अग्रान्त... अग्रः अग्रशब्दोऽन्तेऽवसाने यस्य स अग्रान्त इत्यभिप्रेत्योदाहरति—कुड्मलाग्रदन्निति । कुड्मलानां मुकुलानां अग्राणि तानीव दन्ता यस्येति विग्रहः । शुद्धदन्, शुद्धदन्तः । शुभ्रदन् शुभ्रदन्तः । वृषदन्, वृषदन्तः । वराहदन्, वराहदन्तः । ककुदस्य । अवस्थायां गम्यमानायां ककुदस्य लोपः स्याद् बहुव्रीहाविति । आहारकालादिकृतोऽवयवानामुपचयोऽपचयश्चावस्थेत्युच्यते । बलीवर्दांमूलगतो ... उद्भूतोऽवयवः ककुदम् । अजातककुदिति । अजातं ककुदमस्येति विग्रहः ...

---

ङीवर्थं वचनम्, तेन 'पादोऽन्यतरस्याम्' इति विकल्पो न भवति । द्विदन्निति । द्वौ दन्तावस्य जातौ । शिशुत्वावस्था त्विह गम्यते । 'उगिदचाम्—' इति नुम् । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । षोडन्निति । 'षष उत्वं दतृदशधा–' इत्यनेनोत्वम् । ... सुदतीति । 'उगितश्च' इति ङीप् । समदन्तीति । 'नासिकोदर–' इति ङीष् । श्यावदन्निति । 'श्यावः स्यात्कपिशः' इत्यमरः । अरोकदन्निति । ... अच्छिद्रा दन्ता यस्य सः । अग्रान्त । इहानुक्तसमुच्चयार्थश्चकारस्तेन मूषिकदन् ... सिद्धयतीत्याहुः । —अजातेति । अजातं ककुदमस्येति विग्रहः ...

विशेषस्य । त्रिककुदोऽन्यः । ८८६ उद्विभ्यां काकुदस्य । (५-४-१४८) लोपः स्यात् । उत्काकुत् । विकाकुत् । काकुदं तालु । ८८७ पूर्णाद्विभाषा । (५-४-१४९) पूर्णकाकुत्, पूर्णकाकुदः । ८८८ सुहृद्दुर्हृदौ मित्रामित्रयोः । (५-४-१५०) सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः, दुर्हृदयः । ८८९ उरःप्रभृतिभ्यः कप् । (५-४-१५१) व्यूढोरस्कः । प्रियसर्पिष्कः । इह पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः इत्येकवचनान्तानि पठ्यन्ते । द्विवचनबहुवचनान्तेभ्यस्तु 'शेषाद्विभाषा' (सू ८९१) इति विकल्पेन कप् । द्विपुमान् द्विपुंस्कः । 'अर्थान्नञः' (ग १४९) । अनर्थकम् । नञः किम्—अपार्थम्, अपार्थकम्, । ८९० इनः स्त्रियाम् ।

---

बाल इत्यर्थः । पूर्णककुदिति । पूर्णं ककुदमस्येति विग्रहः । युवेत्यर्थः । त्रिककुत् पर्वते । पर्वतविशेषे गम्य इत्यर्थः । त्रिककुदिति कृताकारलोपो निपात्यते । त्रीणि ककुदानि शृङ्गाणि यस्येत्यर्थः । उद्विभ्यां काकुदस्य । लोप इति । उद्विभ्यां परस्य काकुदस्य लोपः स्यात् बहुव्रीहावित्यर्थः । उत्काकुदिति । उन्नतं काकुदं यस्येति विग्रहः । काकुदशब्दं व्याचष्टे—काकुदं तालिवति । पूर्णाद्विभाषा । पूर्णात् परस्य काकुदस्य लोपो वा स्यादित्यर्थः । पूर्णं काकुदं यस्येति विग्रहः । सुहृद्दुर्हृदौ । यथासंख्यमभिप्रेत्योदाहरति—सुहृन्मित्रमिति । सु शोभनं हृदयं यस्येति विग्रहः । उरःप्रभृतिभ्यः कप् । बहुव्रीहौ समासान्तः तद्धित इति विशेषः । तद्धितत्वात् ककारस्य नेत्संज्ञा । । व्यूढोरस्क इति । व्यूढं विशालम् उरो वक्षो यस्येति विग्रहः । कप् । 'सोऽपदादौ' इति सत्वम् । प्रियसर्पिष्क इति । प्रियं सर्पिः यस्येति विग्रहः । कप् । 'इणः षः' इति षत्वम् । ननु द्वौ पुमांसौ यस्य स द्विपुमानित्यनुपपन्नम् । उरःप्रभृतिषु पुमानिति पुंस्शब्दस्य पाठादित्यत आह—इहेति । गणे अविभक्तिकानामेव पाठः । इह तु केषांचिदेकवचनान्तानामेव पाठस्तद्विवक्षार्थ इति भावः । द्विपुंस्क इति । 'संपुंकानाम्—' इति सः । अर्थान्नञ इति । गण

---

वस्था गम्यते उरःप्रभृतिभ्यः कप् । उरः प्रभृत्यन्ताद्बहुव्रीहेः कप् स्यात् । 'समासार्थोत्तरपदान्ताः समासान्ताः' इति पक्षे तु बहुव्रीहेश्चरमावयवेभ्य उरःप्रभृतिभ्यः कबिति व्याख्येयम् । तद्धितत्वात्कस्य नेत्वम् । व्यूढोरस्क इति । व्यूढं विशालमुरो यस्य सः । 'सोऽपदादौ' इति विसर्जनीयस्य सः । प्रियसर्पिष्क इति । 'इणः षः' इति विसर्गस्य षत्वम् । एकवचनान्तानीति । 'नद्यृतश्च' इति सिद्धे लक्ष्मीशब्दपाठस्त्विह एकवचनान्तलक्ष्मीशब्दावयवकबहुव्रीहेरेव नित्यं कप् । अन्यत्र 'शेषाद्–' इति विकल्प एवेति नियमार्थः । तेन 'अकृशमकृशलक्ष्मीश्चेतसा शंसितं सः' इति भारविप्रयोगः सिद्धः । अकृशा लक्ष्म्यो यस्येति विग्रहः । यत्तु प्राचोक्तं—'नद्यृतश्च' इति कप् बहुलक्ष्मीक इति । तदयुक्तम् । संख्यावाचिबहुशब्दस्यैकवचनान्तत्वाभावात्प्रकृतनियमेन वारितत्वात् । बह्वी अधिका लक्ष्मी यस्येति विग्रहे वैपुल्यवाचिन एकवचनान्तत्वसंभवेऽपि विशेषविधेर्बलीयस्त्वेन 'उरः प्रभृतिभ्यः कप्' इत्येव वक्तुमुचितत्वात् । यदा तु 'नियमशास्त्राणां निषेधमुखेन प्रवृत्तिः' इत्याश्रीयते तदा प्राचो

(५-४-१५२) बहुदण्डिका नगरी । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधि प्रयोजयन्ति' (प १७) बहुवाग्मिका । स्त्रियां किम्-बहुदण्डी बहुदण्डिको ग्रामः । ८९१ शेषाद्विभाषा । (५-४-१५४) अनुक्तसमासान्ताच्छेषाधिकारस्थाद्बहुव्रीहेः कब्वा स्यात् । महायशस्कः, महायशाः । अनु इत्यादि किम्-व्याघ्रपात् । सुगन्धिः । प्रियपथः । शेषाधिकारस्थात् कि उपबह्वः । उत्तरपूर्वा । सपुत्रः । तन्त्रादिना शेषशब्दोऽर्थद्वयपर

---

सूत्रम् नञ्परो योऽर्थशब्दस्तदन्ताद् बहुव्रीहेः कप् स्यादिति तदर्थः । कमिति । अविद्यमानोऽर्थो यस्येति विग्रहः । अपार्थम्, अपार्थकमिति । तोऽर्थो यस्मादिति विग्रहः । अत्र नञ्पूर्वकत्वाभावाद् न नित्यः कबिति भा इनः स्त्रियाम् । इन्नन्तात् कप् स्याद् बहुव्रीहावित्यर्थः । बहुदण्डिका रीति । दण्डः अस्यास्तीति दण्डी, 'अत इनिठनौ' इति इनिः । बहवो दं यस्याम् इति विग्रहः । बहुवाग्मिकेति । वागस्यास्तीति वाग्मी । 'वाचो ग्मि इति ग्मिनिप्रत्ययः । नकारादिकार उच्चारणार्थः । तद्धितत्वाद् गकारस्य ने चकारस्य कुत्वम्, जश्त्वम्, वाग्मीति रूपम् । बहवो वाग्मिनो यस्यां विग्रहः । अत्रेनः अनर्थकत्वेऽपि 'अनिनस्मन्-' इति वचनात्तदन्तस्याप्यत्र ग्रहणं भावः । बहुदण्डी, बहुदण्डिको ग्राम इति । बहवो दण्डिनो यस्मिं विग्रहः । अत्र समासस्यास्त्रीलिङ्गत्वान्न नित्यः कबिति भावः । शेषाद्वि इतः पूर्वं येभ्यः समासान्ता विहिताः, तेभ्योऽन्यः शेषः । तदाह—अनुक्त सान्तादिति । शेषाधिकारास्थादिति । शेषादित्यनेन शेषाधिकारस्थानि विवक्षितमिति भावः । महायशस्क इति । महद् यशो यस्येति विग्र 'आन्महतः—' इत्यात्वे कपि, 'सोऽपदादौ' इति सत्वम् । महायशा इ कबभावे 'अत्वसन्तस्य-' इति दीर्घः । व्याघ्रपादिति । 'पादस्य लोपोऽहस्त्य भ्यः' इत्युक्तसमासान्तोऽयम्, स्थानिद्वारा लोपस्यापि समासान्तत्वात् । सुगन्धि 'गन्धस्येदुत्पूति- इति कृतसमासान्तोऽयम् । प्रियपथ इति । 'ऋक्पूः-' कृतसमासान्तोऽयम् । उपबह्व इति । 'संख्ययाव्यय-' इति बहुव्रीहिरयम् शेषाधिकारस्थः । उत्तरपूर्वेति । अयमपि 'दिङ्नामान्यन्तराले' इति बहुव्रीहि शेषाधिकारस्थः । सपुत्र इति । 'तेन सह-' इत्ययमपि बहुव्रीहिः, न शेषाधि

---

क्तमपि सम्यगेवेति ज्ञेयम् । अर्थान्नञ इति । गणसूत्रमिदम् । अनर्थकेनापी कथं तर्हि 'सुपथी नगरी' इति हलन्तेषूक्तम्, कपोऽत्र दुर्वारत्वात् । न च 'न पूजा इत्यनेन 'ऋक्पूरब्धूः-' इत्यस्येव कपोपि निषेधः शङ्क्यः, षचः प्राचीनानामे निषेध इति वक्ष्यमाणत्वात् । कप्प्रत्ययस्य षच उत्तरत्वात् । सत्यम्, समा विधेरनित्यत्वात्साधुरिति समाधेयम् । 'युवोरनाकौ' इति सूत्रे सुपथीति भाष्या क्तम् । बहुवाग्मिकेति । 'वाचो ग्मिनिः' । शेषाद्वि । यद्यत्र प्रागुक्तकबभा शेषः स्यात् तर्हि व्याघ्रपात्सुगन्धिरित्यादावपि स्यात् । अतः समासान्तापेक्षः शे गृह्यत इत्याह—अनुक्तसमासान्तादिति । व्याघ्रपादिति । स्थानिद्वारा लो

८९२ आपोऽन्यतरस्याम् (७-४-१५) कप्यावन्तस्य ह्रस्वो वा स्यात् । बहुमालाकः, बहुमालकः । कवभावे बहुमालः । ८९३ न संज्ञायाम् । (५-४-१५५) 'शेषात्-' (सू८९१) इति प्राप्तः कन्न स्यात्संज्ञायाम् । विश्वे देवा अस्य विश्वदेवः । ८९४ ईयसश्च । (५—४—१५६) ईयसन्तोत्तरपदान्न कप् । बहवः श्रेयांसोऽस्य बहुश्रेयान् । 'गोस्त्रियोः-' (सू ६५६) इति ह्रस्वत्वे प्राप्ते । 'ईयसो बहुव्रीहेर्नेति वाच्यम्' (वा ६९६) बह्वयः श्रेय-

---

रस्थः । ननु सकृदुच्चारिताच्छेषशब्दात् कथमर्थद्वयलाभ इत्यत आह—तन्त्रादिनेति । आदिना आवृत्तिसंग्रहः । एकमनेकोपयोगि तन्त्रम् । उच्चारयित्रा तन्त्रेणोच्चारितात् शब्दाद् आवृत्त्या बोध इति बोध्यम् । 'श्वेतो धावति' इत्यादौ सकृदुच्चारणेऽपि 'श्वा इतो धावति, श्वेतगुणको धावति' इत्येवमनेकार्थबोधदर्शनादिति भावः । आपोऽन्यतरस्याम् । कपीति । 'न कपि' इत्यतस्तदनुवृत्तेरिति भावः । आबन्तस्येति । प्रत्ययग्रहणपरिभाषया लब्धमिदम् । ह्रस्वो वेति । 'शृद्रप्रां ह्रस्वो वा' इत्यतः तदनुवृत्तेरिति भावः । 'न कपि' इति नित्यं निषेधे प्राप्ते विकल्पार्थमिदं वचनम् । बहुमालाक इति । बह्व्यो माला यस्येति विग्रहः । ह्रस्वपक्षे बहुमालक इति भवति । कपो वैकल्पिकत्वात् पक्षे बहुमालः । सर्वत्र 'स्त्रियाः पुंवत्—' इति पुंवत्वम् । न संज्ञायाम् । शेषादिति प्राप्त इति । 'अनन्तरस्य-' इति न्यायात् 'शेषाद्विभाषा' इति विहितस्य कप एवायं निषेधः, न तु व्यवहित 'नद्यृतश्च' इत्यादिकप इति भावः । विश्वे देवा अस्येति । अत्र संज्ञायां समासस्य नित्यत्वाल् लौकिकविग्रहप्रदर्शनं चिन्त्यमेव । ईयसश्च । बहुश्रेयसीशब्दे श्रेयसीशब्दस्यैव प्रत्ययग्रहणपरिभाषया ईयसन्तत्वादाह—ईयसन्तोत्तरपदादिति । बहुव्रीहिणा उत्तरपदादित्याक्षिप्यत इति भावः । न कबिति । 'न संज्ञेयसोः' इति वक्तव्ये पृथग्योगकरणाद् नित्यस्य वैकल्पिकस्य च कपोऽयं निषेध इति भावः । श्रेयांस इति । अतिशयेन प्रशस्ता इत्यर्थः । 'द्विवचनविभज्य-' इति ईयसुन् । 'प्रशस्यस्य श्रः' इति श्रः, 'आद्गुणः' इति गुणः । बहुश्रेयानिति । शैषिकः कन्निषिध्यते । ह्रस्वत्वे प्राप्त इति । बह्वय श्रेयस्यो यस्येति बहुव्रीहिः । तत्र श्रेयसीशब्दस्योपसर्जनस्त्रीप्रत्ययान्त-

---

समासान्ता इत्युक्तम् । सुगन्धिरिति । 'गन्धस्येत्-' इत्यादिना इत्समासान्तः । प्रियपथ इति । 'ऋक्पूः-' इत्यप्प्रत्ययः समासान्तः । उपबहव इति । 'संख्ययाव्यया-' इत्यादिना समासः । उत्तरपूर्वेति । 'दिङ्नामा—' इत्यादिना समासः । सपुत्र इति । 'तेन सहेति—इत्यादिना समासः । अयं भावः । 'शेषो बहुव्रीहिः' इत्यतः शेषपदम् 'अनेकमन्यपदार्थे' इत्येतस्मिन्नेव सूत्रेऽनुवर्तते, 'संख्ययाव्ययासन्ना—' इत्यादिषु च निवर्तते । तथा च शेषाधिकारस्थत्वादुपबहव इत्यादिषु कप्प्रत्ययो नेति । एवं च 'अनेकमन्यपदार्थे' इति सूत्रात्पृथक् 'संख्ययाव्ययासन्ना-' इत्यादीनामारम्भः कबभावार्थमप्यावश्यक इति स्थितम् । ननु सकृदुच्चरितस्य शेषशब्दस्यानुवृतसमासान्तपरत्वं शेषाधिकारस्थपरत्वं च कथमित्यत आह—तन्त्रादिनेति । 'अर्थभेदेन शब्दभेदः' 'सत्यप्यर्थभेदे शब्दस्याभेदः' इति मतद्वयम् । आद्ये आवृत्तिः । द्वितीये तन्त्र-

स्योऽस्य बहुश्रेयसी । बहुव्रीहेः किम्—अतिश्रेयसिः । ८९५ वन्दिते भ्रातुः (५—४—१५७) पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात् । प्रशस्तो भ्राता यस्य प्रशस्तभ्राता, सुभ्राता । 'न पूजनात्' (सू ९५४) इति निषेध 'बहुव्रीहौ सक्थ्यक्षणोः—' (सू ८५२) इत्यतः प्रागेवेति वक्ष्यते । वन्दिते किम्—मूर्खभ्रातृकः । ८९६ नाडीतन्त्र्योः स्वाङ्गे । (५—४—१५९) स्वाङ्गे नाडीतन्त्रीशब्दौ तदन्तात्कब्न स्यात् । बहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा बहुतन्त्रीर्धमनी । स्त्रीप्रत्ययान्तत्वाभावाद्ध्रस्वो न । स्वाङ्गे किम्—बहुनाडिः स्तम्भः । बहुतन्त्रीका वीणा । ८९७ निष्प्रवाणिश्च । (५—४—१६०) कबभावोऽत्र निपात्यते । प्रपूर्वाद्वयतेर्ल्युट् । प्रवाणी तन्तुवायशलाका । निर्गता प्रवाणी

---

त्वाद् 'गोस्त्रियोः—' इति ह्रस्वत्वे प्राप्ते इत्यर्थः । ईयसो बहुव्रीहेरिति । ईयसन्तात् बहुव्रीहेः परस्य स्त्रीप्रत्ययस्य ह्रस्वो नेति वाच्यमित्यर्थः । बहुश्रेयसीति । 'नद्यृतश्च' इति नित्यः कबिह निषिध्यते, लिङ्गविशिष्टपरिभाषया ईयस्ग्रहणेन स्त्रीप्रत्ययान्तश्रेयसी शब्दस्यापि ग्रहणादिति भावः । बहुव्रीहेः किमिति । 'ईयसो बहुव्रीहेः—' इत्यस्य शेषः । अतिश्रेयसिरिति । श्रेयसीमतिक्रान्त इति तत्पुरुषोऽयमिति भावः । वन्दिते भ्रातुः । पूजितेऽर्थ इति । 'वदि अभिवादनस्तुत्योः' इत्युभयार्थकस्य धातोरिह उभयसाधारणपूजार्थकत्वमाश्रीयत इति भावः । प्रशस्तभ्रातेति । 'नद्यृतश्च' इति प्राप्तः कबिह निषिध्यते । सुभ्रातेति । सु शोभनो भ्राता यस्य इति विग्रहः अत्रापि 'नद्यृतश्च' इति प्राप्तस्य कपो निषेधः । ननु 'न पूजनात्' इत्येव निषेधे सिद्धे किमर्थमिदमित्यत आह—न पूजनादिति । प्रागेवेति । एवं 'नद्यृतश्च' इत्यादिकपः तेन निषेधाप्राप्तौ इदं वचनमिति भावः । नाडीतन्त्र्योः स्वाङ्गे । बहुनाडिः काय इति । प्राणिस्थत्वात् स्वाङ्गत्वसूचनाय काय इति विशेष्यम् । उपसर्जनह्रस्वः । 'नद्यृतश्च' इति प्राप्तः कब् न भवति । बहुतन्त्रीर्ग्रीवेति । बह्वयस्तन्त्र्यो यस्या इति विग्रहः । वीणातन्तुषु तन्त्रीशब्दस्य प्रसिद्धत्वाद् आह— बहुतन्त्रीर्धमनीति । बहुतन्त्रीशब्दे 'गोस्त्रियोः—' इति ह्रस्वमाशङ्क्याह—स्त्रीप्रत्ययान्तत्वाभावादिति । 'अवितृस्तृतन्त्रीभ्य ईः' इत्यौणादिकस्य 'स्त्रियाम्' इत्यधिकारेऽविहितत्वादिति भावः । निष्प्रवाणिश्च । प्रपूर्वादिति । 'वेञ् तन्तुसन्ताने' इत्यस्मात् प्रपूर्वात् 'करणाधिकरणयोश्च' इत्यधिकरणे ल्युट् । प्रोयते अस्यामिति

---

मिति विवेकः । यत्तु वदन्ति—'प्रतिपदोक्ताः समासान्ताः स्वविषये बाधका भवन्ति' तत्किमनुक्तसमासान्तपरेण शेषग्रहणेनेति । तन्न । 'ऋक्पूः—' इत्यादीनां समासान्तानां चरितार्थतया प्रियपथ इत्यादौ परेण कपा बाधापत्तेः । ईयसश्च । नित्यो वैकल्पिकश्च कप् सर्वोऽपि निषिध्यते । बहुश्रेयानिति । अतिशयेन प्रशस्यः श्रेयान् । 'द्विवचनविभज्योप—' इतीयसुन् । 'प्रशस्यस्य श्रः' । 'शेषाद्विभाषा' इति कप्प्राप्तः । बहुश्रेयसीति । 'नद्यृतश्च' इति नित्यं प्राप्तः कब् लिङ्गविशिष्टपरिभाषया 'ईयसश्च' इति प्रतिषिध्यते । बहुनाडिरिति । उपसर्जनह्रस्वः । स्त्रीप्रत्ययान्तत्वाभावादिति । 'अवितृस्तृतन्त्रिभ्य ईः' इत्यौणादिकस्य 'स्त्रियाम्' इत्यधिकारे अविहितत्वादिति भावः ।

निष्प्रवाणिः पटः, समाप्तवानः, नव इत्यर्थः । ८९८ सप्तमीविशेषणे बहुव्रीहौ । (२—२—३५) सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम् । कण्ठेकालः । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । चित्रगुः । 'सर्वनामसंख्ययोरुपसंख्यानम्' (वा १४१९) सर्वश्वेतः । त्रिशुक्लः[1] । मिथोऽन्यो: समासे संख्या

---

प्रवाणी । 'पूर्वपदात् संज्ञायाम्—' इति णत्वम् । समाप्तवान इति । समाप्तं वानं वानक्रिया यस्येति विग्रहः । अत्र शैषिककबभावो निपात्यते । सप्तमीविशेषणे । 'उपसर्जनं पूर्वम्' इत्यतः पूर्वमित्यनुवर्तते । प्रत्ययग्रहणपरिभाषया सप्तमीति तदन्तग्रहणम् । तदाह—सप्तम्यन्तमिति । कण्ठेकाल इति । कण्ठे तिष्ठतीति कण्ठेस्थः, स कालो यस्येति विग्रहः । सुपीति योगविभागात् कः । 'सप्तम्युपमानपूर्वपदस्य' इति बहुव्रीहिसमासः स्थशब्दलोपश्च इति 'अनेकमन्यपदार्थे' इति सूत्रभाष्ये स्पष्टम् । 'अमूर्धमस्तकात्—' इति सप्तम्या अलुक् । अत एवेति । यद्यपि कण्ठेस्थशब्दः प्रथमान्त एवात्र बहुव्रीहौ पूर्वपदम्, तस्य कालशब्देन सामानाधिकरण्यमस्त्येवेति कथं सप्तमीग्रहणं व्यधिकरणपदबहुव्रीहिज्ञापकम् । किं च विशेषणत्वादेव सिद्धे किं वा सप्तमी ग्रहणेन । तथापि यदा स्थपदमनादृत्य कण्ठे इत्यस्याधिकरणत्वं तस्य च कालरूपे उत्तरपदार्थे उपसंक्रमः, तदा कण्ठे इत्यस्याप्रथमान्तत्वाद् बहुव्रीहेरप्रसक्तेः तत्र सप्तम्यन्तस्य पूर्वनिपातविधिरभित्तिचित्रायितः स्यात् । ततश्च सप्तमीग्रहणाद् अप्रथमान्तोऽपि बहुव्रीहिः क्वचिदस्तीति विज्ञायत इति योज्यम् । तेन 'सच्छास्त्रजन्मा हि विवेकलाभः' इत्यादि सिद्धम् । चित्रगुरिति । उभयोरपि प्रथमानिर्दिष्टत्वेन विग्रहे नियतविभक्तिकत्वेन चान्यतरस्य पूर्वनिपाते प्राप्त उत्तरपदविशेषणस्यैव पूर्वनिपातार्थं विशेषणग्रहणमिति भावः । सर्वनामसंख्ययोरिति । बहुव्रीहौ पूर्वनिपातस्येति शेषः । सर्वश्वेत इति । सर्वः श्वेतो यस्येति विग्रहः । उभयोरपि गुणवचनत्वेन विशेषणविशेष्यभावे कामचराद् अन्यतरस्य पूर्वनिपाते प्राप्ते सर्वनामत्वात् सर्वशब्दस्यैव पूर्वनिपातः । उपसर्जनत्वेऽपि भूतपूर्वगत्या सर्वनामत्वम् । त्रिशुक्ल इति । त्रयः शुक्ला यस्येति विग्रहः । उभयोरपि कामचारेण पूर्वनिपाते प्राप्ते संख्यात्वात् त्रिशब्दस्यैव पूर्वनिपातः । द्विशुक्ल इत्यत्र तु सर्वनामत्वादेव सिद्धम् । ननु द्वौ अन्यौ यस्य द्व्यन्य इति बहुव्रीहौ सर्वनामसंख्ययोरन्यतरस्य पाक्षिकः पूर्वनिपातः

---

सप्तमीविशेषणे । यदा कण्ठे किंचिदस्तीति ज्ञायते तस्य विशेषण काल इति, तदेदं सप्तमीग्रहणम् । अन्यदा तु तेन विनापि विशेषणत्वादेव सिद्धम् । चित्रगुरिति । न च 'उपसर्जनं पूर्वम्' इत्येवेदं सिध्यतीति वाच्यम्, 'बहुव्रीहौ सप्तमी' इत्युक्ते तक्रकौण्डिन्यन्यायेनोपसर्जनपूर्वत्वस्य बाधापत्तेरतो विशेषणग्रहणं कृतम् । सर्वनामेति । कथं तर्हि 'तः परो यस्मात्स तपरः' इति कथं च 'जहत्स्वार्था वृत्तिः' इति । इह हि जहत्स्वं पदं यं स जहत्स्वः, सोऽर्थो यस्यामिति बहुव्रीहिगर्भो बहुव्रीहिः । तथा च स्वपरशब्दयोः सर्वनामत्वात्पूर्वनिपातेन भाव्यमिति चेत्—अत्राहुः—सूत्रभाष्यप्रयोगात्स्वपरशब्दयोर्न पूर्वनिपातः, राजदन्तादित्वाद्वा सिद्धमिति । द्विशुक्ल इति । यद्यपि



[1] बहुत्र मूले 'द्विशुक्लः' इत्येव पाठः ।

पूर्वं शब्दपरविप्रतिषेधात्' (वा ५०४४) । द्व्यन्यः । 'संख्याया अल्पी (वा १४१७) द्वित्राः । द्वन्द्वेऽपि । द्वादश । 'वा प्रियस्य' (वा १४ गुडप्रियः, प्रियगुडः । 'गड्वादेः परा सप्तमी' (वा १४२१) गड्डु क्वचिन्न । वहेगडुः । ८९९ निष्ठा (२—२—३६) निष्ठान्तं बहुव्रीहौ पूर्वं कृतकृत्यः । 'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' (वा १४२२) । सारङ्ग

---

स्यादित्यत आह—मिथोऽनयोरिति । सर्वनामसंख्ययोरित्यर्थः । संख्या मिति । प्रयोज्येति शेषः । शब्दपरेति । एकस्मिन्नेव सूत्रे सर्वनामसं समासोपात्तत्वेऽपि सर्वनामसंख्याशब्दयोः संख्याशब्दस्य पाठतः परत्वमादाय वि षेधसूत्रप्रवृत्तेरित्यर्थः । संख्याया अल्पीयस्या इति । न्यूनाधिकसंख्याव शब्दानां समासे न्यूनसंख्यायाःपूर्वं प्रयोग इति वक्तव्यमित्यर्थः । द्वित्रा इति वा त्रयो वेति विग्रहे 'संख्ययाव्यय—' इति बहुव्रीहिः । ननु 'द्वन्द्वे घि' इत्यतो इत्यनुवृत्तौ 'अल्पाच्तरम्' इति सूत्रभाष्येऽस्य वार्तिकस्य पाठाद् बहुव्रीहौ कथ प्रवृत्तिरित्यत आह—द्वन्द्वेऽपीति । इदं च वार्तिकं द्वन्द्वेऽद्वन्द्वेऽपि प्रवर्तत द्वादशेति । द्वौ च दश च इति द्वन्द्वः । तत्पुरुषे तु शतानां विंशतिः विंशति मित्युदाहार्यम् । 'तदस्मिन्नधिकमिति दशान्ताड्डः' इति सूत्रभाष्ये सहस्राणां इत्यर्थे शतसहस्रमिति भाष्यकैयटयोः प्रयोगोऽत्र मानमिति शब्देन्दुशेखरे स्थि वा प्रियस्येति । बहुव्रीहौ पूर्वं प्रयोगो वक्तव्य इत्यर्थः । गड्वादेः परा मीति । बहुव्रीहौ योज्येति वक्तव्यमिति शेषः । गडुकण्ठ इति । गडुः यस्येति विग्रहः । गडुर्नाम ग्रीवादिगतो दुर्मांसगोलः । असंज्ञात्वाद् 'हलदन्ता इत्यलुङ् न । क्वचिन्नेति । व्याख्यानमेवात्र शरणम् । वहेगडुरिति वहः स्कन्धः, तस्मिन् गडुर्यस्येति विग्रहः । निष्ठा । निष्ठान्तमिति । 'क्तक्त निष्ठा' इति वक्ष्यति । तदन्तमित्यर्थः । कृतकृत्य इति । कृतं कृत्यं येनेति विग्र उभयोरपि क्रियाशब्दत्वाद् विशेषणत्वे कामचाराद् अन्यतरस्य पूर्वनिपाते निष्ठान्तस्य पूर्वनिपातः । जातिकालेति । 'जातिकालसुखादिभ्योऽनाच्छादनात् इति स्वरविधिना ज्ञापितमिदमिति भाष्ये स्पष्टम् । जातिपूर्वस्योदाहरणमाह सारङ्गजग्धीति । सारङ्गो जग्धो भक्षितो यया इति विग्रहः 'अस्वाङ्गपूर्वपदा

---

सर्वनामत्वेनैव द्विशब्दस्य पूर्वनिपातत्वं सिध्यति, तथापि त्रिशुक्ल इत्यादि सिद्धये वा संख्याग्रहणं कृतम् । ननु संख्याया अल्पाच्तरत्वेन 'संख्यासर्वनाम्नोः' इति विपरीतोच्चारणमयुक्तमित्याशङ्क्याह—मिथोऽनयोरिति । विपरीतोच्चारणमे लिङ्गमिति भावः । अल्पीयस्या इति । अल्पार्थवाचिकाया इत्यर्थः । गडु रिति । आदिशब्दः प्रकारवाची । तेन पद्मं नाभौ यस्य पद्मनाभः । ऊर्णा ना यस्य, 'ङ्यापोः—' इति ह्रस्वः, ऊर्णनाभ इति सिद्ध्यतीत्याहुः । जातिकाले एतच्च 'जातिकालसुखादिभ्योऽनाच्छादनात्' इत्यनेन ज्ञापितमिति भावः । सारङ्ग जग्धीति । सारङ्गो जग्धो यया सा । 'अस्वाङ्गपूर्वपदाद्वा' इति ङीप् । कथं

मासजाता । सुखजाता । प्रायिकं चेदम् । कृतकटः । पीतोदकः । १००० वाऽऽहिताग्न्यादिषु । (२-२-३७) आहिताग्निः । अग्न्याहितः । आकृतिगणोऽयम् । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' (वा १४२५) अस्युद्यतः । दण्डपाणिः । क्वचिन्न । विवृतासिः ।

इति बहुव्रीहिसमासप्रकरणम् ।

—:०:—



...ति ङीष् । कालपूर्वस्योदाहरति—मासजातेति । मासो जातो यस्या इति विग्रहः,- ...प् । सुखपूर्वस्योदाहरति—सुखजातेति । सुखं जातं यस्या इति विग्रहः । प्रायि... ...मिति । व्याख्यानमेवात्र शरणम् । कृतकट इति । कृतः कटो येनेति विग्रहः ...त्र कटत्वस्य जातित्वेऽपि न कृतशब्दस्य परनिपातः । पीतोदक इति । पीतम् ...दकं येनेति विग्रहः । उदकत्वस्य जातित्वेऽपि न पीतशब्दस्य परनिपातः । ...ऽऽहिताग्न्यादिषु । निष्ठायाः पूर्वं प्रयोग इति शेषः । आहिताग्निरिति । ...हिता आधानेन संस्कृता अग्नयो येनेति विग्रहः । प्रहरणार्थेभ्य इति । ...युधार्थेभ्य इत्यर्थः । निष्ठायामुदाहरति—अस्युद्यत इति । असिः उद्यतो येनेति ...ग्रहः । सप्तम्या उदाहरति—दण्डपाणिरिति । दण्डः पाणौ यस्येति विग्रह । ...निष्ठा' इत्यस्य 'सप्तमीविशेषणे—' इत्यस्य चायमपवादः । क्वचिन्नेति । व्याख्या...मेवात्र शरणम् । विवृतासिरिति । विवृतः कोशान्निष्कासितः असिर्येनेति ...ग्रहः । एवं जातीयान्याहिताग्न्यादित्वकल्पनया समाधेयानीत्याहुः ।

इति श्रीवासुदेवदीक्षित विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां बहुव्रीहिसमासनिरूपणम् ।

—००००—

...रुस्मितश्चारुहसितः' इत्यादि । अत्राहुः—'नपुंसके भावे क्तः' इति क्तस्य न पूर्व-...पातः, निष्ठाशब्देन विहितस्यैवेह ग्रहणादिति । क्वचिन्नेति । आहिताग्न्यादित्वकल्पना-...नभिधानाद्वेति भावः ।

इति तत्त्वबोधिनीव्याख्यायां बहुव्रीहिप्रकरणम् ।



—००००—

# अथ द्वन्द्वसमासप्रकरणम् ॥ २० ॥

९०१ चार्थे द्वन्द्वः । (२-२-२९) अनेकं सुबन्तं चार्थे वर्तमानं समस्यते, स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः । मिलितानामन्वय इतरेतरयोगः । समूहः समाहारः । तत्रेश्वरं गुरुं च भजस्व इति समुच्चये, भिक्षामट गां चानय इत्यन्वाचये च न समासोऽसामर्थ्यात् । धवखदिरौ

अथ द्वन्द्वसमासनिरूपणम्—चार्थे द्वन्द्वः । 'सुबामन्त्रिते' इत्यतः सुप् 'अनेकमन्यपदार्थे' इत्यतः अनेकमिति चानुवर्तते । समास इति विभाषा इति चाधिकृतम् । तदाह—अनेकमित्यादिना । कश्चार्थ इत्यत आह—समुच्चय 'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यमरः । तत्र समुच्चयं निर्वक्ति—परस्पर एकस्मिन्निति । एकस्मिन् क्रियापदे आवृत्ते एकस्य असमस्यमानपदस्य प्रथमं तदनन्तरमन्यस्यान्वयो यत्र, तत्र समुच्चयः चार्थ इत्यर्थः । यथा—ईश्वरं भजस्व इति । तत्र हि चशब्दयोगाद् गुरोः ईश्वरसापेक्षत्वम्, न त्वीश्वरस्य पेक्षत्वम्, तस्य चकारयोगाभावात् । अत एवात्र एक एव चशब्दः प्रयुज्यते । ईश्वरं च भजस्व गुरुं च भजस्व इति वाक्यद्वयं पर्यवस्यति । अथान्वाचयं लक्ष अन्यतरस्येति । यत्रान्यतरस्य पदस्यैकस्मिन् क्रियापदे आनुषङ्गिकत्वेन परा विषयत्वेनान्वयः, इतरस्य तु पदस्यान्यस्मिन् क्रियापदे उद्देश्यत्वेनान्वयश्च तत्रा श्चार्थ इत्यर्थः । यथा–भिक्षामट गां चानय इति । 'अट गतौ' । भिक्षामटनेन हीत्यर्थः । भिक्षामट, तदा गौः संगता चेत् तामप्यानय, न तु गवानयने प्रयतितव्यमिति तात्पर्यार्थः । इतरेतरयोगं लक्षयति—मिलितानामिति । रापेक्षितानां समुदितानामेकस्मिन् क्रियापदेऽन्वयो यत्र, तत्रेतरेतरयोगः परस्पर चार्थः प्रत्येतव्य इत्यर्थः । यथा धवश्च खदिरश्च धवखदिराविति । अत्र पर हित्यसूचनाय चकारद्वयप्रयोगः । अथ समाहारं लक्षयति—समूहः इति । परस्परसाहित्यमित्यर्थः । यथा संज्ञापरिभाषयोः समूहः संज्ञापरिभा तत्रेतरेतरयोगद्वन्द्वे साहित्यं द्रव्यविशेषणम्, यथा धवखदिरौ छिन्धीति, वि विति गम्यते । समाहारद्वन्द्वे तु समूहो विशेष्यम्, यथा संज्ञापरिभाषमिति । समूह इति गम्यते । संज्ञापरिभाषमधीते इत्यादौ समूहस्य क्रियान्वयस्तु स बोध्य इत्यलम् । तत्रेति । तेषु चार्थेषु समुच्चयेऽन्वाचये च न द्वन्द्वसमास इ ईश्वरं गुरुं च भजस्वेति । समुच्चयोदाहरणमिदम् । भिक्षामट गां चान

चार्थे द्वन्द्वः । 'अनेकमन्यपदार्थे' इत्यतोऽनेकमित्यनुवर्तते 'सुबाम इत्यस्मात्सुबपि । 'समासः' इति 'विभाषा' इति चाधिक्रियत एव, तदाह सुबन्तमित्यादि । चार्था इति । चशब्दद्योत्या इत्यर्थः । एकस्मि भजनादावित्यर्थः । ईश्वरं गुरुं च भजस्वेति । क्रियायां द्रव्ययोः समुच्च तथा राशौ गजश्चाश्वश्चेति द्रव्ये द्रव्ययोः समुच्चयः । पट शुक्लो रक्तश्चेति द्रव्ये

संज्ञापरिभाषम्। अनेकोक्तेर्होतृपोतृनेष्टोद्गातारः। द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु होतापोतानेष्टोद्गातारः। ९०२ राजदन्तादिषु परम्। (२-२-३१) एषु

हरणं चानुपदमेव व्याख्यातम्। असामर्थ्यादिति। ईश्वरं गुरुं च इत्यत्रोक्तरीत्या ईश्वरगुरुशब्दयोः परस्परनिरपेक्षयोरावृत्ते भजस्वेति पदे क्रमेणान्वयात् परस्परमन्वयाभावादसामर्थ्यम्। भिक्षामट गां चानय इत्यत्र तु भिक्षागवोरटने आनयने च क्रमेण परस्परवार्तानभिज्ञयोरेवान्वयात् परस्परान्वयाभावादसामर्थ्यं स्पष्टमेव। ततश्च इतरेतरयोगसमाहारयोरेव चार्थयोः परस्परसाहित्यसत्त्वात् समर्थत्वेन द्वन्द्वसमासः। विस्तरस्तु मञ्जूषायां द्रष्टव्यः। इतरेतरयोगमुदाहरति—धवखदिराविति। धवश्च खदिरश्चेति द्वन्द्वः। धवो वृक्षविशेषः, खदिरः प्रसिद्धः, तौ समुदिताविति बोधः। समाहारे तूदाहरति—संज्ञेति। संज्ञा च परिभाषा च तयोः समाहार इति विग्रहः। समाहारस्यैकत्वादेकवचनम्। 'स नपुंसकम्' इति नपुंसकत्वम्। ननु 'चार्थे द्वन्द्वः' इत्यत्र 'सुप्सुपा' इत्यनुवृत्त्यैव धवखदिरावित्यादिसिद्धेरनेकग्रहणानुवृत्तिर्व्यर्थेत्यत आह—अनेकोक्तेरिति। होतृपोत्रिति। होता च पोता च नेष्टा च उद्गाता च इति विग्रहे बहूनामपि द्वन्द्वार्थमनेकग्रहणमिति भावः। 'आनङृतो द्वन्द्वे' इति नेष्टृशब्दस्यैव उत्तरपदपरकत्वाद् आनङ्; न तु होतृपोतृशब्दयोरपि, उत्तरपदस्य मध्यमपदव्यवहितत्वेन होतृपोतृशब्दयोरुत्तरपदपरकत्वाभावात्। ननु तर्हि होतापोतानेष्टोद्गातार इति कथमित्यत आह—द्वयोरिति। होता च पोता चेति द्वयोर्द्वन्द्वः। होतृशब्दस्य आनङ्। ततश्च नेष्टा च उद्गाता चेति द्वयोर्द्वन्द्वः। नेष्टृशब्दस्यानङ्। ततो होतापोतारौ च नेष्टोद्गातारौ चेति द्वन्द्वद्वयगर्भो द्वन्द्वः। तत्र नेष्टोद्गातृशब्दे उत्तरपदे होतापोतृशब्दस्य आनङित्यर्थः। आनङि ङकार इत्। ङित्त्वादन्तादेशः। अकार उच्चारणार्थः। अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नस्य लोपः नेष्टोद्गातृशब्दे

रक्तः पटः कुण्डलं चेति गुणे द्रव्ययोरित्यूह्यम्। भिक्षामट गां चानयेति। अत्र ह्यदर्शनाद्गामनानयन्नपि भिक्षामटत्येव। अनटंस्तु भिक्षां न गामानयति। तथा अटन्नपि नान्विष्य गामानयति। अतो भिक्षाटनस्यैव प्राधान्यं गवानयनस्य त्वानुषङ्गिकता। असामर्थ्यादिति। एकार्थीभावाभावादित्यर्थः। तथाहि बहुव्रीहिघटकपदानां कर्मान्तर्भावेणेव द्वन्द्वघटकपदानां चार्थान्तर्भावेण एकार्थीभाव आवश्यकः। 'समर्थः पदविधिः' इति परिभाषितत्वात् 'चार्थे द्वन्द्वः' इत्युक्तेश्च। न चेतरेतरान्वये परस्परनिरपेक्षाणामेकार्थीभावः संभवति, येन समुच्चयान्वाचयावेकार्थीभावान्तर्भूतौ स्याताम्। ततश्चेतरेतरयोगे समाहारे च परस्परसाहित्यसत्त्वात्समासो भवति, न तु समुच्चयान्वाचययोः। परं त्वितरेतरयोगे साहित्यं विशेषणं द्रव्यं तु विशेष्यम्, समाहारे तु साहित्यं प्रधानं द्रव्यं विशेषणमिति विवेक्तव्यम्। ननु नीलोत्पलमित्यादौ चशब्दान्तर्भावेण विग्रहदर्शनादेकार्थीभावसत्त्वाच्च द्वन्द्वो दुर्वारः स्यात्। मैवम्, 'विशेषणं विशेष्येण—' इति सामानाधिकरण्ये विहितया तत्पुरुषसंज्ञया द्वन्द्वसंज्ञाया बाधात्। तस्यास्त्वसामानाधिकरण्ये सावकाशत्वात्। सामानाधिकरण्याभावविवक्षायां तु 'प्रमाणप्रमेय' इत्यादाविव नीलोत्पलादावपि द्वन्द्वे इष्टापत्तिरेव। होतृपोत्रिति। उत्तरपदपरत्वा-

पूर्वंप्रयोगार्हं परं स्यात्। दन्तानां राजा राजदन्तः। 'धर्मादिष्वनियमः' (वा १४१ इन्द्र अर्थधर्मौ, धर्मार्थौ। दम्पती, जम्पती, जायापती। जायाशब्दस्य जम्भावो द वश्च वानिपात्यते। आकृतिगणोऽयम्। ९०३ द्वन्द्वे घि। (२-२-३३) घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ। 'अनेकप्राप्तावेकत्र नियमोऽनि शेषे' (वा १४१० ) हरिगुरुहराः-हरिहरगुरवः। ९०४ अजाद्यद (२—२—३३) इदं द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ। बहुष्वनियमः। अश्वर

---

आद्गुणश्च। राजदन्तादिषु परम्। 'उपसर्जनं पूर्वम्' इत्यनुवर्तते। तदा एष्विति। राजदन्तादिष्वित्यर्थः। पूर्वप्रयोगार्हमित्यतः प्राग् उपसर्जनमिति राजदन्त इति। दन्तशब्दस्य षष्ठीतत्पुरुषेऽप्रधानतयोपसर्जनत्वेऽपि परनिपा इह गणे राजदन्ताग्रेवणादिशब्दास्तत्पुरुषाः, विष्वक्सेनार्जुनादयो द्वन्द्वाश्च पठिताः द्वन्द्वप्रकरणे तदुपन्यासः। विष्वक्सेनार्जुनावित्यत्र 'अजाद्यदन्तम्' इत्यर्जुनस्य पूर्वनिपाते प्राप्ते परनिपातः। धर्मादिष्वनियम इति। गणसूत्रमिद अन्यतरस्य पूर्वनिपात इत्यर्थः। अर्थधर्माविति। अजाद्यदन्तशब्दस्य निपातनियमे प्राप्ते तदनियमो वक्तव्य इत्यर्थः। निपात्यत इति। पाक्षिको दन्तादिगण इत्यर्थः। पत्युरभ्यर्हितत्वेऽपि परनिपातश्च। आकृतिगणोऽयमि वृत्तौ तु कृत्स्नोऽयं गणः पठितः। द्वन्द्वे घि। पूर्वमित्यनुवर्तते। तदाह- स्यादिति। हरिहराविति। हरिशब्दस्य घित्वात् पूर्वनिपातः। ननु हरि गुरव इत्यत्र गुरुशब्दस्यापि घित्वात् पूर्वनिपातः स्यादित्यत आह—अनेक अनेकस्य घिसंज्ञकपदस्य द्वन्द्वप्राप्तौ सत्यामेकस्य घिसंज्ञकस्य पूर्वनिपातनि शेषेऽन्यस्मिन् घिसंज्ञकपदविषये पूर्वनिपातस्य विकल्प इत्यर्थः। इदम् 'अल्पा इति सूत्रे भाष्ये स्पष्टम्। जातिपक्षे तावद् आकृतिं पुरस्कृत्य सर्वासु व्यक्तिषु तत्त स्त्राणि सकृदेव प्रवर्तन्ते, सकृच्छ्रुतत्वात्। न तु प्रतिव्यक्ति, तथा सति प्रतिव्य वृत्तिप्रसङ्गात्। ततश्च अनेकघिसंज्ञकसमवाये एकस्य घिसंज्ञकस्य पूर्वनिपाते सति शास्त्रं न प्रवर्तते, सकृत्प्रवृत्त्यैव शास्त्रस्य शान्ताकाङ्क्षत्वात्। व्यक्तिपक्षस्तु नेहा लक्ष्यानुरोधादित्याहुः। हरिहरगुरव इति। हरगुरुशब्दयोर्न नियम इति अजाद्यदन्तम्। इदमिति। अजादित्वे सत्यदन्तमित्यर्थः। ईशकृष्णावि अत्र कृष्णस्यादन्तत्वेऽप्यजादित्वाभावान्न पूर्वनिपातः। बहुष्वनियम इ

---

भावादनयोरानङ् न। राजदन्तादिषु। इह द्वन्द्वतत्पुरुषयोः पाठेऽपि 'अर्थ इत्याद्यभिप्रायेणास्य द्वन्द्वेषूपन्यासः। द्वन्द्वे घि। 'अनेकम्—' इति सर्वेषामेव निर्दिष्टत्वेनोपसर्जनत्वाविशेषादनियमप्राप्तावयमारम्भः। यत्र त्वनेकं घ्यन्तं तत्र पूर्वनिपातनियमः स्यादत आह—अनेकप्राप्तावेकत्रेति। अत्र व्याख्या आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तते, न प्रतिव्यक्त्यावृत्त्या। तत्रैकस्य पूर्व इति जातौ लक्षणं प्रवृत्तमेवेति न पुनः प्रवर्तते। व्यक्तिपक्षस्त्विह नाश्रीयते नुरोधादिति। हरिहरगुरव इति। हरगुरुशब्दयोर्न नियमः प्रवर्तते इति

इन्द्राश्वरथाः । 'घ्यन्तादजाद्यदन्तं विप्रतिषेधेन' (वा १४२६) इन्द्राग्नी ।९०५ अल्पाच्तरम् । (२-२-३४) शिवकेशवौ । 'ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण' (वा १४२१) हेमन्तशिशिरवसन्ताः । कृत्तिकारोहिण्यौ । समाक्षराणां किम्—ग्रीष्मवसन्तौ । 'लघ्वक्षरं पूर्वम्' (वा १४१३) कुशकाशम् । 'अभ्यर्हितं च' (वा १४१२) । तापसपर्वतौ । 'वर्णानामानुपूर्व्येण' (वा १४१५) ब्राह्मणक्षत्रियविट्छूद्राः । 'भ्रातुर्ज्यायसः' (वा १६१६) युधिष्ठिरार्जुनौ ।

---

वक्तव्य इति शेषः । ननु इन्द्राग्नी इत्यत्र घित्वादग्निशब्दस्य पूर्वनिपातः किं न स्यादित्यत आह—घ्यन्तादिति । घ्यन्तशब्देन 'द्वन्द्वे घि' इति सूत्रं विवक्षितम् । ल्यब्लोपे पञ्चमी । विप्रतिषेधसूत्रेण 'द्वन्द्वे घि' इत्येतद् बाधित्वा 'अजाद्यदन्तम्' इति प्रवर्तत इत्यर्थः । अल्पाच्तरम् । अल्पः अल्पसंख्यः अच् यस्य तदल्पाच्, तदेवाल्पाच्तरम् । अत एव निपातनात् स्वार्थे तरप्, कुत्वाभावश्च । अल्पसंख्याच्कं पदं द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः । शिवकेशवाविति । हरिहरयोरन्यतरोत्कर्षवादस्य पाखण्डवादत्वादिति भावः । यदि तु 'द्विवचनविभज्य–' इत्यतिशयार्थे तरप् स्यात्, तदा धवखदिरपलाशा इत्यत्र बहुषु न स्यादिति प्राञ्चः । शब्देन्दुशेखरे तु प्रकर्षार्थिक एवायं तरप् इति स्थितम् । ऋतुनक्षत्राणामिति । समानसंख्याच्कानाम् ऋतूनां नक्षत्राणां च द्वन्द्वे आनुपूर्व्येण क्रमेण निपातो वक्तव्य इत्यर्थः । हेमन्तशिशिरवसन्ता इति । त्रयाणामृतूनामानुपूर्व्यं लोकप्रसिद्धम् । एवं कृत्तिकादिनक्षत्राणामपि । ग्रीष्मवसन्ताविति । विषमाक्षरत्वान्न वसन्तस्य पूर्वनिपातः । किंतु अल्पाच्त्वाद् ग्रीष्मस्य पूर्वनिपातः । लघ्वक्षरं पूर्वम् । लघु अक्षरमच् यस्य तद् द्वन्द्वे पूर्वं प्रयोज्यमिति वक्तव्यमित्यर्थः । कुशकाशमिति । समाहारद्वन्द्वोऽयम् । अभ्यर्हितं चेति । श्रेष्ठः पूर्वः प्रयोज्य इति वक्तव्यमित्यर्थः । तापसपर्वताविति । पर्वतस्य स्थावरजन्मतया तापसस्य तदपेक्षया अभ्यर्हितत्वं बोध्यम् । भाष्ये तु मातापितरावित्युदाहृतम् । 'गर्भधारणपोषाभ्यां पितुर्माता गरीयसी' इत्यादिस्मृतेरिति तदाशयः । वर्णानामानुपूर्व्येणेति । एषां क्रमेण पूर्वनिपातः । 'ब्रह्मक्षत्रियविट्छूद्रा वर्णाः' इत्यमरः । तेषामानुपूर्व्यं तु 'प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृत्तं निरमिमीत' इत्यादितैत्तिरीयब्राह्मणादिसिद्धम् । भ्रातुर्ज्यायस इति ।

---

अजाद्यदन्तम् । 'समुद्राभ्राद्घः' 'लक्षणहेत्वोः क्रियायाः' इत्यादिनिर्देशादनित्यमिदं प्रकरणम् । तेन 'स सौष्ठवौदार्यविशेषशालिनीम्' इति भारविप्रयोगः संगच्छते । अल्पाच्तरम् । अतएव निपातनात् स्वार्थे तरप् कुत्वचुत्वयोरभावश्च । यदि तु प्रकर्षे तरप् स्यात् तदा द्वयोरेव नियमः स्यात् । द्विवचनान्तोपपदत्वविषय एव तरपो विधानात् । ततश्च धवखदिरपलाशा इत्यादौ बहुषु नियमो न स्यात् । ऋतुनक्षत्राणामिति । ऋतूनामानुपूर्व्यं प्रादुर्भावकृतं नक्षत्राणां तूदयकृतं च । अभ्यर्हितं चेति । 'वासुदेवार्जुनाभ्यां वुन्' इति निर्देशेनेदं ज्ञाप्यत इति चतुर्थे भाष्यम् । 'अल्पाच्तरम्' 'अजाद्यदन्तम्' इति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तमकुर्वन् ज्ञापयति सर्वतोऽभ्यर्हितं पूर्वं निपततीति । तेनैव सूत्रं वक्ष्यते । युधिष्ठिरार्जुनाविति । ...

९०६ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् (२—४—२) एषां द्वन्द्व एकवत्स्या
पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् । समाहारस्यैकत्वा
सिद्धे नियमार्थं प्रकरणम् । प्राण्यङ्गादीनां समाहार एव यथा स्या

ज्येष्ठभ्रातुः पूर्वनिपात इत्यर्थः । अत्र 'द्वन्द्वे घि' 'अजाद्यदन्तम्' इति वि
'अल्पाच्तरम्' 'लघ्वक्षरं पूर्वम्' 'ऋतुनक्षत्राणाम्' 'अभ्यर्हितं च' 'भ्रातु
इति विधिभिः परत्वाद् बाध्यते । भाष्ये तु सर्वत एवाभ्यर्हितं पूर्वनिपा
मतान्तरं स्थितम् । द्वन्द्वश्च प्राणि । प्राणितूर्यसेनाङ्गानीति द्वन्द्वगर्भषष्ठीस
द्वन्द्वान्ते श्रूयमाणः अङ्गशब्दः प्रत्येकं संबध्यते इत्यभिप्रेत्य आह—एषा
प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां चेत्यर्थः । द्वन्द्व इति । समाहारद्वन्द्व इत्यर्थः ।
रेकवचनम्' इति पूर्वसूत्रे 'समाहारग्रहणं कर्तव्यम्' इति वार्तिकस्यात्रा
एकवदिति । एकवचनमित्यनुवर्तते । एकं वक्तीत्येकवचनम् । कर्तरि ल्युट् ।
न्याभिप्रायं नपुंसकम् । पाणिपादमिति । पाण्योः पादयोश्च समाहा
विग्रहः । अत्र समाहारे एकवत्त्वं 'स नपुंसकम्' इति नपुंसकत्वं च ।
पादयोश्च प्राण्यवयवत्वात् प्राण्यङ्गोदाहरणमिदम् । अथ तूर्याङ्गद्वन्द्वे उदाह
मार्दङ्गिकपाणविकमिति । मृदङ्गपणवशब्दौ वाद्यविशेषपरौ । इह तु त
वर्तेते । मृदङ्गवादनं शिल्पमस्येत्यर्थे 'शिल्पम्' इति ठक् । मार्दङ्गिकपाणविकयो
हार इति विग्रहः । तूर्याङ्गत्वादेकवचनम् । तूर्याङ्गत्वं च तद्वादकतया बोध्य
नपुंसकम्' इति नपुंसकत्वम् । सेनाङ्गद्वन्द्वे उदाहरति—रथिकाश्वारो
रथेन चरन्तीति रथिकाः । 'पर्पादिभ्यः ष्ठन्' । रथिकानामश्वारोहाणां च
इति विग्रहः । सेनावयवत्वादेकवत्त्वम् । पूर्ववन्नपुंसकत्वम् । ननु समाहारद्वन्द्वे स

रंशत्वाच्छूरत्वाद्वा अभ्यर्हितत्वमर्जुनेऽप्यस्तीति न तेन नियमः सिध्यतीति
द्वन्द्वश्च प्राणि । प्राणितूर्यसेनानामङ्गानीति बहुवचनान्तेनाङ्गशब्देन षष्ठी
अङ्गशब्दश्च प्रत्येकमन्वेति । तेन प्राण्यङ्गानां प्राण्यङ्गैरेव, तूर्याङ्गानां तूर्याङ्गै
ङ्गानां सेनाङ्गैरेव यो द्वन्द्वः स एकवद्भवति, न तु व्यतिरेकेण । तेनेह न–मार्द
रोहौ । अत्र प्राणिसेनयोरङ्गं नामावयवः । तूर्यस्य त्वङ्गं नामोपकारकं बोध्य
द्वन्द्व इति । प्राण्यङ्गानां द्वन्द्वः, तूर्याङ्गानां द्वन्द्वः, सेनाङ्गानां द्वन्द्वः,
'द्विगुरेकवचनम्' इत्यत एकवचनं वर्तते । तत्रैकं वक्तीति व्युत्पत्त्या एकव
समाहाररूपो योऽर्थस्तत्प्रतिपादकः स्यादित्यर्थं मन्वानः फलितमाह—ए
दिति । पाणिपादमिति । यद्यप्यत्र 'जातिरप्राणिनाम्' इत्येव सिद्धम्,
द्रव्यप्राधान्येऽपि भवत्विति प्राणिग्रहणमित्येके प्राणिपणवाविति व्यतिकरे मा
नियमार्थं वचनमित्यन्ये । मार्दङ्गिकेति । मृदङ्गवादनं शिल्पमस्येत्यर्थे 'तदस्य
इति ठक् । एवं पाणविक इत्यपि । रथिकाश्वारोहमिति । रथेन
रथिकाः । 'पर्पादिभ्यः ष्ठन्' इति ष्ठन् । ते चाश्वारोहाश्च तेषां समाहारः ।
द्वन्द्वः' इत्यनेन समाहारद्वन्द्वः सिद्धः, तस्य चैकत्वादेकवचनमपि सिद्धमिति
त्याशङ्क्याह—नियमार्थमिति । समाहार एवेति । समाहारे प्राण्यङ्गा

९०७ **अनुवादे चरणानाम्** । (२-४-३) चरणानां द्वन्द्व एकवत्स्यात्सिद्ध-
स्योपन्यासे । 'स्थेणोर्लुङीति वक्तव्यम्' (वा १५३५--१५३६) । उदगात्कठका-
लापम्, प्रत्यष्ठात्कठकौथुमम् । ९०८ **अध्वर्युक्रतुरनपुंसकम्** । (२--४--४)
यजुर्वेदे विहितो यः क्रतुस्तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत्स्यात् । अर्का-

---

विशेष्यत्वात् तस्य चैकत्वादिदं सूत्रं व्यर्थमित्यत आह--समाहारस्यैकत्वादिति ।
समाहार एवेति । न त्वितरेतरयोगः । एषां द्वन्द्वनियमार्थं सूत्रमित्यर्थः । एवमुत्तर-
सूत्राण्यपि समाहार एवेति नियमार्थानि । न चेतरेतरयोगद्वन्द्वे एषामेकवत्त्वविधानार्थ-
मिदं सूत्रमस्तु । तथा च पाणिपाद इति पुंल्लिङ्गमेकवचनान्तं रूपं फलमिति वाच्यम्,
'समाहारग्रहणं कर्तव्यम्' इति पूर्वसूत्रस्थवार्तिकस्यात्रानुवृत्तेः, एकवद्भावप्रकरणेऽस्मिन्
सर्वत्र समाहारद्वन्द्वानामेव भाष्ये उदाहृतत्वाच्च । न च रथिकमार्दङ्गिकावित्यादावति-
प्रसङ्गः शङ्क्यः, प्राण्यङ्गानां परस्परद्वन्द्व एकवत्, तूर्याङ्गानां परस्परद्वन्द्व एकवत् सेना-
ङ्गानां परस्परद्वन्द्व एकवदित्यभ्युपगमादिति भाष्ये स्पष्टम् । **अनुवादे चरणानाम्** ।
चरणानां द्वन्द्व एकवदिति । शाखाध्येतृविशेषाश्चरणाः । तद्वाचिनां परस्परद्वन्द्व
एकवदित्यर्थः । अनुवाद इत्येतद्व्याचष्टे--सिद्धस्योपन्यास इति । अवगतार्थस्य
प्रतिपादन इत्यर्थः । स्थेणोरिति । लुङीति प्रत्येकमन्वयाभिप्रायमेकवचनम् । लुङन्ते
स्थाधातौ लुङन्ते इण्धातौ च प्रयुज्यमान एव अनुवादे चरणानां द्वन्द्व एकवदिति
वक्तव्यमित्यर्थः । उदगादिति । प्रादुरभूदित्यर्थः । इण्धातोर्लुङि रूपम् । कठका-
लापमिति । कठेन प्रोक्तमधीयत इति कठाः । वैशम्पायनान्तेवासित्वाण्णिनिः ।
तस्य 'कठचरकात्' इति लुक् । ततोऽध्येतृप्रत्ययस्य 'प्रोक्ताल्लुक्' इति लुक् । कलापिना
प्रोक्तमधीयते इति कालापाः । प्रोक्तार्थे 'कलापिनोऽण्' । 'सब्रह्मचारिपीठसर्पि' इत्यादिना
टिलोपः । ततोऽध्येत्रणः 'प्रोक्ताल्लुक्' इति लुक् । कठानां कालापानां च समाहार इति
विग्रहः । प्रत्यष्ठादिति । प्रतिपूर्वात् स्थाधातोर्लुङि रूपम् । कठकौथुममिति ।
कठेन प्रोक्तमधीयत इति कठाः । कौथुमिना प्रोक्तमधीयत इति कौथुमाः । प्रोक्ते-
ऽर्थे 'तेन प्रोक्तम्' इत्यण् । 'सब्रह्मचारि--' इत्यनेन टिलोपः । ततोऽध्येत्रणो लुक् ।
कठानां कौथुमानां च समाहार इति विग्रहः । यदा कठा कालापाश्च उदिताः, यदा

---

इतरेतरनियमोऽत्र न भवति, 'तिष्यपुनर्वस्वोः--' इति सूत्रे बहुवचनग्रहणात् । तद्धि
समाहारे एकवचनस्य द्विवचनं मा भूदिति कृतम् । अन्यथा तिष्यपुनर्वस्विति न
स्यादिति । एवं च 'द्वन्द्वश्च प्राणितूर्य--' इति प्रकरणबहिर्भूतानामपि समाहारद्वन्द्वो
भवत्येव, तेन 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इति पठ्यमानं नापूर्वं वचनमिति ज्ञेयम् ।
चरणानामिति । शाखाध्येतृवाचिनामित्यर्थः । स्थेणोरिति । 'ष्ठा गतिनिवृत्तौ'
'इण् गतौ' स्थाप्रकृतिक इण्प्रकृतिके लुङन्ते उपपदे सतीत्यर्थः । स्थेणोः किम्,
अभूवन् कठकालापाः । लुङि किम्, तिष्ठन्तु कठकालापाः । उदगादिति । इह
यदा कठेषु कालापेषु च प्रतिष्ठितेषु उदितेषु चावाभ्यां तत्र गन्तव्यमिति संकेतयित्वा
तत्संकेतं विस्मृत्यासीनं प्रतीदमुच्यते । कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्ते-

वासित्वाण्णिनिः । तस्य 'कठचरकात्--' इति लुक् । अध्येत्रणस्तु 'प्रोक्ताल्लुक्' इति

श्वमेधम् । अध्वर्युक्रतुः किम्—इषुवज्रौ, सामवेदे विहितौ । अनपुंसक । राजसूयवाजपेये, अर्धर्चादी । ९०९ अध्ययनतोऽविप्रकृष्टाख्या (२—४—५) अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत् । पदक्र ९१० जातिरप्राणिनाम् । (२-४-६) प्राणिवर्जजातिवाचिनां द्वन्द्व धानाशष्कुलि । प्राणिनां तु विट्छूद्राः । द्रव्यजातीयानामेव, नेह— गमनाकुञ्चने । जातिप्राधान्य एवायमेकवद्भावः । द्रव्यविशेषविवक्षायां तु

---

कठाः कौथुमाश्च प्रतिष्ठिताः, तदा किञ्चिदिदं वक्तव्यमिति कृतसंकेतयोरि द्वयम् । अत्रोदयप्रतिष्ठयोः पूर्वसिद्धयोरनुवादादेकवत्त्वम् । स्थेणोः किम्? अभू कालापाः । लुङि किम्? अतिष्ठन् कठकालापाः । अध्वर्युक्रतुः । अध्वर्युशब्दो कर्मविधायकयजुर्वेदपरः, तदाह—यजुर्वेद इति । अर्काश्वमेधमिति । अर्को क्रतुः । अश्वमेधो नाम प्रसिद्धः । उभौ यजुर्वेदविहितक्रतू । अर्कस्य चाश्वमे समाहार इति विग्रहः । इषुवज्रावित्ति । क्रतुविशेषावेतौ न यजुर्वेदवि भावः । तर्हि कस्मिन् वेदे विहितावित्यत आह—सामेति । राजसू इति । एतयोर्यजुर्वेदविहितत्वेऽपि नपुंसकत्वान्नैकवत्त्वमिति भावः। राजसूयवा पुंल्लिङ्गतया प्रसिद्धेराह—अर्धर्चादी इति । अध्ययनतः । अविप्रकृष्ट मिति च्छेदः । अध्ययनत इति तृतीयार्थे तसिः । तदाह—अध्ययनेन सन्नेति । संनिकृष्टेत्यर्थः । पदकक्रमकमिति । पदान्यधीयते पदकाः । अधीयते क्रमकाः । 'क्रमादिभ्यो वुन्'। पदकानां क्रमकाणां च समा विग्रहः । पदाध्ययनानन्तरं क्रमाध्ययनमित्यध्ययनगता प्रत्यासत्तिरध्येतर्यारो भावः । पदक्रममिति नोदाहृतम्, 'जातिरप्राणिनाम्' इत्येव सिद्धेः । तु न जातिरिति भावः । जातिरप्राणिनाम् । जातिरिति षष्ठीबहु व्यत्ययेन प्रथमा, जातिवाचिनामित्यर्थः । धानाशष्कुलीति । धानाश्च तासां समाहार इति विग्रहः । जातिवाचित्वादेकवत्त्वम्, नपुंसकत्वाद्ध्रस्व विट्छूद्रा इति । विशश्च शूद्राश्चेति विग्रहः । द्रव्यजातीयाना अप्राणिनामिति पर्युदासे सति नञिवयुक्तन्यायादिदं लभ्यत इति भावः । वित्ति । गुणगतजातिवचनावेतौ । गमनाकुञ्चने इति । क्रियागतजा

---

लुक् । 'कलापिनोऽण्' 'सब्रह्मचारी—' इत्याद्युपसंख्यानाट्टिलोपः । यजु अध्वर्युशब्दो यजुर्वेदलक्षक इति भावः । पदकेति । पदान्यधीते पदकः । भ्यो वुन्' । एवं क्रमकोऽपि । पदान्यधीत्य क्रमोऽध्येतव्य इति स्पष्टा अध्ययनतः किम्, पितापुत्रौ । अविप्रकृष्टेति किम्, याज्ञिकनैयायिकौ । जातिवाच्यवयवकद्वन्द्वोऽपि जातिरित्युपचर्यत इत्याशयेनाह—जातिवा विट्शूद्रा इति । जातिप्राधान्येऽपि बहुवचनमुपपद्यते 'जात्याख्यायामे इति विधानात् । तेनात्र द्व्यङ्गविकलं नेति भावः । द्रव्यजातीयानामेवेति । नाम' इति पर्युदासात् 'नञिवयुक्त—' न्न्यायेन द्रव्यजातीयानामेकवद्भावो, क्रियाजातीयानामिति भावः । जातिः किम्, नन्दकपाञ्चजन्यौ

लकानि । ९११ विशिष्टलिङ्गो नदीदेशोऽग्रामाः । (२—४—७) ग्रामवर्जनदी-
शवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्व एकवत्स्यात् । उद्धयश्च इरावती च

नावेतौ । ननु बदर्याः फलानि बदराणि, आमलक्याः फलान्यामलकानि, 'फले लुक्'
ति विकारप्रत्ययस्य लुकि 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् । फलत्वव्याप्य-
तिविशेषवाचिनावेतौ । ततश्च बदराणि चामलकानि च बदरामलकं बदराम-
कानीति कथं रूपद्वयम्, 'जातिरप्राणिनाम्' इत्येकवत्त्वस्य नित्यत्वादित्यत
ह—जातिप्राधान्य इति । व्यक्तिविशेषानादरेण सकलतत्तद्व्यक्त्यनुस्यूतजाति-
विक्षायामित्यर्थः । घटमानयेत्यादौ हि घटादिशब्दानामाकृत्यधिकरणन्यायेन घट-
ादिजातिरर्थः । जातेश्च निराश्रयाया उपस्थित्यसंभवाद् आश्रयभूतव्यक्त्याकाङ्क्षा-
मविशेषात् कृत्स्नाप्युपस्थिता । तत्र घटमानयेत्यादिप्रयोगेषु जातेरतीतानागत-
र्तमानकृत्स्नव्यक्तीनां च क्रियान्वयासंभावाद् व्यक्तिविशेषमेव कञ्चिदादाय क्रिया
श्राम्यति । इदमेव च जातेः प्राधान्यं तत्तज्जात्याश्रयसकलतत्तद्व्यक्तिबोधकत्वात्म-
म् । घटाः शुक्ला इत्यादिप्रयोगेषु पदान्तरसमभिव्याहारादिवशाद्व्यक्तिविशेषानेव
तिरुपस्थापयतीति जातेरप्राधान्यम्, जात्याश्रयसकलव्यक्त्यनुपस्थापकत्वादिति 'तस्या-
तः—' इति सूत्रे कैयटे स्पष्टम् । ततश्च फलत्वव्याप्यया बदरत्वजात्या आमल-
त्वजात्या चाविशेषात्तदाश्रयसकलव्यक्त्युपस्थितौ बदरामलकमित्येकवद्भावः ।
व्यविशेषेति । आरण्यानि बदरामलकानीत्यादौ फलत्वव्याप्यबदरत्वामलकत्वा-
जातिभ्याम् आरण्यत्वादिविशेषितकतिपयव्यक्तीनामेवोपस्थितिः । ग्राम्याणां व्यक्ती-
मनुपस्थितेः तयोर्जात्योरप्राधान्याद् नायमेकवद्भाव इत्यर्थः । क्षीरोदके संपृक्ते
यन्तादिवत्सूत्रभाष्यप्रयोगोऽत्र लिङ्गमित्याहुः । विशिष्टलिङ्गो नदीदेशोऽग्रामाः ।
ग्रामा इति च्छेदः । व्यत्ययेन बहुत्वे एकवचनम् । विपूर्वकशिषधातुः भेदे वर्तते—

तिप्राधान्य एवेति । एतच्च जातिग्रहणाल्लब्धम् । अन्यथा पर्युदासेनैव जात्युप-
र्जनद्रव्यवाचिनोऽपि ग्रहणोपपत्तौ किं तेनेति भावः । द्रव्यविशेषेति । नन्वेवं
ञ्जिता नु विविधास्तरुशैलाः' इति भारविप्रयोगः संगच्छत एवेति किमिति तरुसहिताः
ला इति मनोरमायां समर्थितमिति चेत्—अत्राहुः—सकलतरुशैलरञ्जनं तत्र विव-
तम्, न तु केषां चित्तरुशैलविशेषाणामिति जातिप्राधान्यादेकवद्भावमाशङ्क्यतथोक्त-
ति । बदरामलकानीति । 'फले लुक्' इति लुक् । 'लुक्तद्धितलुकि' इति स्त्री-
त्ययस्यापि लुकि फलत्वजात्युपसर्जनद्रव्यवचनावेतौ । 'विभाषा वृक्षमृग—' इति सूत्रे
दराणि चामलकानि च बदरामलकम् । 'जातिरप्राणिनाम्' इत्येकवद्भाव इति वक्ष्यति,
तु नानेन ग्रन्थेन विरुध्यते । फलत्वजातिवाचिनां बहुवचनान्तानामेव द्वन्द्व एक-
द्भवति, न त्वेकवचनान्तानां द्वन्द्व इति 'फलसेनावनस्पति—' इति वार्तिकोक्तनियम-
त्य तत्प्रवृत्तेः । विशिष्टलिङ्गो । सूत्रे चत्वारोऽपि शब्दा अवयवधर्मेणावयविद्वन्द्वे
न्त इत्याशयेनाह—ग्रामेत्यादि । इह नदीवाचिनां द्वन्द्वः, देशवाचिनां द्वन्द्व इति
क्यभेदेन व्याख्येयम् । तेन गङ्गाकुरुक्षेत्रे इत्यत्र न भवति । देशशब्देनात्र प्रसिद्ध
जनपदो गृह्यते, नद्याः पृथक् ग्रहणात् । तेन पर्वतानां न, कैलासश्च गन्धमादनं च

उद्ध्येरावति । गङ्गा च शोणश्च गङ्गाशोणम् । कुरवश्च कुरुक्षेत्रं च कुरुकु
भिन्नलिङ्गानां किम्—गङ्गायमुने, मद्रकेकयाः । अग्रामाः किम्—जाम्बव
शालूकिनी ग्रामः—जाम्बवशालूकिन्यौ । ९१२ क्षुद्रजन्तवः । (२—
एषां समाहारे एव द्वन्द्व एकवत्स्यात् । यूकालिक्षम् । आनकुलात्क्षुद्र
९१३ येषां च विरोधः शाश्वतिकः । (२—४—९) एषां प्राग्वत् । अहिन

---

विशेषणं विशेष्येणेत्यादौ यथा । विशिष्टं लिङ्गं येषामिति विग्रहः ।
ग्रामवाचकभिन्ना भिन्नलिङ्गका ये नदीवाचिनो ये देशवाचिनश्च तेषां द्वन्द्व
स्यादिति लभ्यते तदाह—ग्रामवर्जेति । समाहारे द्वन्द्व इति । एक
फलाभिप्रायमेतत्, अस्यैकवद्भावप्रकरणस्य समाहार एव द्वन्द्व इति नियम
अनुपदमेवोक्तत्वात् । उद्ध्यश्चेति । उद्ध्यो नाम नदविशेषः, इराव
काचिन्नदी । तयोर्नदीविशेषवाचकत्वादेकत्वादेकवत्त्वम् । नदीशब्देन नदस्यापि
अन्यथा भिन्नलिङ्गत्वासम्भवादिति भावः । जाम्बवशालूकिन्याविति ।
इत्यनेन ग्रामावयवकद्वन्द्वपर्युदासो विवक्षितः । अयं च द्वन्द्वो नगरग्रामोभयाव
ग्रामावयक इति तस्य पर्युदास इति भावः । क्षुद्रजन्तवः । एतेषां द्वन्द्व
त्यर्थः । फलितमाह—एषां समाहार एव द्वन्द्व इति । यूकालि
यूकाश्च लिक्षाश्चेति विग्रहः । केशबहुले शिरःप्रदेशे स्वेदजा जन्तुविशे
लिक्षाश्च प्रसिद्धाः । एकवत्त्वं नपुंसकह्रस्वत्वं च । आ नकुलादिति । 'नकु
क्षुद्रजन्तवः' इति भाष्यादिति भावः । येषां च । शेषपूरणेन सूत्रं व्या
एषां प्राग्वदिति । समाहारद्वन्द्व एकवदित्यर्थः । शश्वदित्यव्ययं सदेत्यर्थे
ततो भवार्थे ठञ् । निपातनाद् अव्ययानां भमात्रे टिलोपः, 'इसुसुक्तान्तात्
कादेशश्च न भवति । स्वाभाविक इत्यर्थः । अहिनकुलमिति । अहयो नकु
विग्रहः । अनयोः स्वाभाविको विरोधः प्रसिद्धः । विरोधो वैरम्, न तु सहानव
तेन छायातपावित्यत्र न भवति । देवासुरा इत्यत्र तु नायमेकवद्भावः,

---

कैलासगन्धमादने । नदीदेश इति किम्, कुक्कुटमयूर्यौ । विशिष्टिपदस्या
भिन्नलिङ्गानामिति । विपूर्वो हि शिषिर्भेदार्थः । अत एव 'विशेषणं विशे
इति सूत्रे भेदकं भेद्येनेति व्याख्यातम् । समाहारे द्वन्द्व एकवत्स्या
निष्कर्षाभिप्रायेणेयमुक्तिः । यथाश्रुताभिप्रायेण तु 'द्वन्द्व एकवत्स्यात्' इति केचि
व्याख्यायत इति ज्ञेयम् । उद्ध्येरावतीति । उद्ध्यो नदः सोऽपि नदी
नदीशब्देन गृहीतः, एवं शोणोऽपि । 'अग्रामा इत्यत्र नगरप्रतिषेधो व
तेन मथुरापाटलिपुत्रम् इत्यत्र निषेधो न भवति, उभयोरपि नगरत्वात् ।
अपचितपरिमाणत्वं क्षुद्रत्वम् । तच्चापेक्षिकत्वादनवस्थितम् । यच्च स्मर्यते
जन्तुरनस्थिः स्यादथ वा क्षुद्र एव यः । शतं वा प्रसृतौ येषां केचिदानकुलाद
तत्र सर्वपक्षसाधारण्येनोदाहरति—यूकालिक्षमिति । आ नकुलादिति ।
पर्यन्ता इत्यर्थः । येषां च विरोधः । विरोधो वैरम्, न तु सहानवस्थान
न—छायातपौ । शश्वदित्यव्ययं त्रैकाल्ये वर्तते, तत्र भवः शाश्वतिकः,

गोव्याघ्रम्, काकोलूकम् इत्यादौ परत्वाद् 'विभाषा वृक्षमृग—' ( सू ९१६) इति प्राप्तं चकारेण बाध्यते । ९१४ शूद्राणामनिरवसितानाम् (२—४—१०) अबहिष्कृतानां शूद्राणां प्राग्वत् । तक्षायस्कारम् । पात्राद्बहिष्कृतानां तु चाण्डालमृतपाः । ९१५ गवाश्वप्रभृतीनि च । (२—४—११) यथोच्चारितानि साधूनि स्युः । गवाश्वम् । दासीदासमित्यादि । ९१६ विभाषा वृक्षमृगतृणधान्य-

---

कादाचित्कत्वात् । अमृतादिप्रयुक्तः कादाचित्क एव हि तेषां विरोधः, अमृतमथनादिकाले तेषां विरोधाभावात् । ननु 'विभाषा वृक्षमृग—' इति सूत्रे पशुशकुनिद्वन्द्वयोरेकवद्भावविकल्पो वक्ष्यते । तस्य तावद् गोमहिषं गोमहिषाः, हंसचक्रवाकं हंसचक्रवाकाः, इत्यत्रावकाशः । येषां चेत्यस्य अहिनकुलमित्यवकाशः । गोव्याघ्रं काकोलूकमित्यादौ तदुभयं प्रसक्तम् । तत्र परत्वाद्वक्ष्यमाणविभाषा प्राप्नोतीत्याशङ्क्याह-गोव्याघ्रमिति । चकारेणेति । येषां चेति चकारेणेत्यर्थः । एतच्च भाष्ये स्पष्टम् । शूद्राणाम् । अनिरवसितशब्दं व्याचष्टे—अबहिष्कृतानामिति । 'यैर्भुक्तं पात्रं क्षारोदकप्रक्षालनेन संस्कारेणापि न शुध्यति ते निरवसिताः चाण्डालादयः । यैस्तु भुक्तं पात्रं संस्कारेण शुध्यति तेऽनिरवसिताः' इति भाष्ये स्पष्टम् । शूद्राणामिति । त्रैवर्णिकेतरः शूद्रशब्देन विवक्षितः, अनिरवसितानामिति लिङ्गात् । प्राग्वदिति । समाहारद्वन्द्व एकवदित्यर्थः । तक्षायस्कारमिति । तक्षाणश्च अयस्काराश्चेति विग्रहः । अनिरवसितानामित्यस्य प्रयोजनमाह—पात्रादिति । चाण्डालमृतपा इति । एतद्भुक्तपात्रस्य संस्कारेणापि नास्ति शुद्धिरिति अत एव भाष्याद्विज्ञेयम् । धर्मशास्त्रेषु च प्रसिद्धमेतत् । गवाश्वप्रभृतीनि च । यथा गणे पठितानि तथैव साधूनीत्यर्थः । गवाश्वमिति । गावश्चाश्वाश्चेति विग्रहः । अत्र 'विभाषा वृक्षा' इति पशुद्वन्द्वत्वाद् विकल्पे प्राप्ते नित्योऽयं विधिः । अत्र 'सर्वत्र विभाषा—' इति प्रकृतिभावे पूर्वरूपे च गो अश्वं गोऽश्वमिति नैकवत्त्वनियमः, यथोच्चारितानीत्युक्तेः, गणे च गवाश्वमित्येव निर्देशात् । गवाश्वादिषु 'यथोच्चारिते द्वन्द्ववृत्तम्' इति वार्तिकमत्र मानम् । दासीदासमिति । अत्रैकवत्त्वनियमः 'पुमान् स्त्रिया' इत्येकशेषस्तु

---

अतएव निपातनाद् 'इसुसुक्तान्तात्—' इति कादेशः, 'अव्ययानां भमात्रे—' इति टिलोपश्च । शाश्वतिकः किम्, 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' । तेषां ह्यमृतादिप्रयुक्तः कादाचित्को विरोधो न तु नित्यः, मन्थनप्रवृत्तिकाले तद्विरहात् । परत्वादिति । पशुशकुनिद्वन्द्वस्यावकाशो गोमहिषं गोमहिषाः, हंसचक्रवाकं हंसचक्रवाकाः । 'येषां च—' इत्यस्यावकाशो मार्जारमूषकं श्रमणब्राह्मणमित्यादौ ज्ञेयः । चकारेण बाध्यत इति । चकारः पुनर्विधायक इति भावः । शूद्राणाम् । त्रैवर्णिकेतरमनुष्यपरः शूद्रशब्दो न तु शूद्रत्वजातिपरः, 'अनिरवसितानाम्' इति निषेधात् । पात्रादिति । यैर्भुक्ते भस्मना शुध्यते कांस्यम्' इत्यादिस्मृत्युक्तसंस्कारेणापि पात्रं न शुध्यति तेषामित्यर्थः । गवाश्व । यथोच्चारितानीति । गणपाठे पाणिनिना यथा पठितानि तथैव साधूनीत्यर्थः । तेनावङः पाक्षिकत्वाद्यदा नावङ् तदा उत्तरसूत्रेण विकल्पो न भवति । गोअश्वम् । 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' । गवाश्वमिति ।

व्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । (२-४-१२)

दीनां सप्तानां द्वन्द्वः, अश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वद्वा । वृक्षादौ विशेषा… ग्रहणम्' (वा५१८) प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः । रुरुपृषतम्, रुरुपृ… कुशकाशम्, कुशकाशाः । व्रीहियवम्, व्रीहियवाः । दधिघृतम्, दधिघृते । … हिषम्, गोमहिषाः । शुकबकम्, शुकबकाः ; अश्ववडवम्, अश्ववडवौ । पूर्वा… पूर्वापरे । अधरोत्तरम्, अधरोत्तरे । 'फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तु… तृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्' ( वा १५४० ) । … चामलकानि च बदरामलकम् । 'जातिरप्राणिनाम्' ( सू ९१० ) इत्येकवद्…

---

निपातनात्र । इत्यादीति । 'गवाविकं 'गवैडकमित्यादि वृत्तौ स्पष्टम् । … वृक्ष । द्वन्द्वं इत्यनुवृत्तम् । एकापि षष्ठी विषयभेदाद् भिद्यते । वृक्षादिसप्ताना… वत्वेनान्वयः—वृक्षादीनां द्वन्द्व इति । वृक्षाद्यवयवको द्वन्द्व इति लभ्यते । अश्व… दियुगलत्रयस्य त्वभेदेनान्वयः–अश्ववडव, पूर्वापर, अधरोत्तर इत्यात्मको द्वन्द्वः… तदाह—वृक्षादीनामिति । प्राग्वदिति । विकल्पेन एकवदित्यर्थः । … विति । वृक्षविशेषवाचिनां तृणविशेषवाचिनां धान्यविशेषवाचिनां पशुविशेषवा… चेत्यर्थः । 'स्वं रूपम्–' इति सूत्रे भाष्यवार्तिकयोस्तथोक्तत्वादिति भावः । … वृक्षाश्च धवाश्चेत्यादौ नायं विधिरिति फलितम् । किं तु 'जातिरप्राणिनाम्… नित्यमेवैकवत्त्वम् । तत्र वृक्षाद्यवयवकद्वन्द्वेषु सप्तसु वृक्षद्वन्द्वमुदाहरति—प्ल… प्लक्षाश्च न्यग्रोधाश्चेति विग्रहः । मृगद्वन्द्वमुदाहरति—रुरुपृषतमिति । … पृषताश्चेति विग्रहः । तृणद्वन्द्वमुदाहरति— कुशेति । कुशाश्च काशाश्चेति वि… धान्यद्वन्द्वमुदाहरति—व्रीहीति । व्रीहयश्च यवाश्चेति विग्रहः । व्यञ्जनद्व… हरति—दधीति । दधि च घृतं चेति विग्रहः । पशुद्वन्द्वमुदाहरति—गो… मिति । गावश्च महिषाश्चेति विग्रहः । शकुनिद्वन्द्वमुदाहरति —शुकेति । … बकाश्चेति विग्रहः । अश्ववडवादिद्वन्द्वमुदाहरति—अश्ववडवमिति । … वडवाश्चेति विग्रहः । पूर्ववदश्ववडवौ' इति अश्ववडवावित्यत्र पूर्वपदवत् पुंलि… फलसेनेति । एकवद्भावप्रकरणशेषभूतमिदं वार्तिकम् । 'द्वन्द्वश्च प्राणि-… सूत्रैः फलसेनादीनां द्वन्द्व एकवद्भवन् बहुवचनान्तावयवक एव एकवद्… नत्वेकद्विवचनान्तावयवक इत्यर्थः । तत्र फलद्वन्द्वमुदाहरति–बदराणि… बदरीफलानि आमलकीफलानि चेत्यर्थः । विकारतद्धितस्य फले लुक् । 'लुक्… लुकि' इति स्त्रीप्रत्ययस्य लुक् । जातिरिति । बहुवचनान्तावयवक…

---

इह पशुद्वन्द्वे विभाषा प्राप्ता, दासीदासमिति । अत्र 'पुमान्स्त्रिया' इति… बाध्यते । विभाषा । विशेषामेवेति । अयं भावः—वृक्षादिशब्दैः… द्वन्द्वो विशेष्यते, न चैको वृक्षशब्दो द्वन्द्वः, न च द्वयोः सह प्रयोगः, 'सरूपा… इत्येकशेषात् । नापि पर्यायाणां 'विरूपाणामपि समानार्थानाम्' इत्येकशेषात् । वृक्षश्च धवश्चेत्यादिसामान्यविशेषयोः, अनभिधानात्तत्र द्वन्द्वस्यैवाभावादिति…

---

१ 'गवाविकम्' इति क्वचित्पाठः । २ क्वचित् 'गवैलकम्' इति पाठः ।

नेह—बदरामलके, रथिकाश्वारोहौ, प्लक्षन्यग्रोधावित्यादि । 'विभाषा वृक्ष–' (सू ९१६) इति सूत्र येऽप्राणिनस्तेषां ग्रहणं 'जातिरप्राणिनाम्' (सू० ९१०) इति नित्ये प्राप्ते विकल्पार्थम् । पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्य प्राप्ते 'मृगाणां मृगैरेव शकुनीनां तैरेवोभयत्र द्वन्द्वः, अन्यैस्तु सहेतरेतरयोग एव'

---

'जातिरप्राणिनाम्' इत्येकवत्त्वमित्यर्थः । बहुप्रकृतिरेवेत्यस्य प्रयोजनमाह-नेहेति । बदरामलके इति । बदरं चामलकं चेति विग्रहः । बहुवचनान्तावयवकद्वन्द्वत्वाभावान्न 'जातिरप्राणिनाम्' इत्येकवत्त्वम् । रथिकाश्वारोहाविति । अत्र सेनाङ्गत्वेऽपि नैकवत्त्वम् । प्लक्षन्यग्रोधाविति । इह वृक्षद्वन्द्वत्वेऽपि 'विभाषा वृक्ष–' इत्येकवत्त्वं न । इत्यादीति । रुरुपृषतौ, अत्र मृगद्वन्द्वत्वेऽपि नैकवत्त्वम् । हंसचक्रवाकौ, अत्र शकुनिद्वन्द्वत्वेऽपि नैकवत्त्वम् । यूकालिक्षे, अत्र क्षुद्रजन्तुद्वन्द्वत्वेऽपि नैकवत्त्वम् । व्रीहियवौ, अत्र धान्यद्वन्द्वत्वेऽपि नैकवत्त्वम् । कुशकाशौ, अत्र तृणद्वन्द्वत्वेऽपि नैकवत्त्वम् । ननु 'चार्थे द्वन्द्वः' इत्यनेनेतरेतरयोगसमाहारद्वन्द्वाभ्यामेव एकवत्त्वविकल्पस्य सिद्धत्वाद् 'विभाषा वृक्ष–' इति सूत्रं व्यर्थमित्याशङ्क्याह—विभाषेत्यादि विकल्पार्थमित्यन्तम् । वृक्षमृगतृणधान्यव्यञ्जनद्वन्द्वेषु प्लक्षन्यग्रोधं रुरुपृषतं कुशकाशं व्रीहियवं दधिघृतम् इत्येतेषु 'जातिरप्राणिनाम्' इति नित्यविहितैकवत्त्वानित्यत्वार्थमप्राणिवृक्षादिग्रहणमित्यर्थः । नन्वेवमपि पशुग्रहणं व्यर्थम्, तदुदाहरणे गोमहिषमित्यत्र 'जातिरप्राणिनाम्' इति नित्यैकवत्त्वनियमस्याप्राप्त्या तन्निवृत्त्यर्थत्वायोगादित्यत आह—पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वाद् नित्ये प्राप्ते इति । विकल्पार्थमित्यनुषज्यते । नन्वेवमपि मृगशकुनिग्रहणं व्यर्थम्, तदुदाहरणे रुरुपृषतं शुकबकमित्यादौ 'जातिरप्राणिनाम्' इति एकवत्त्वस्य सेनाङ्गनित्वनैकवत्त्वस्य च अप्राप्त्या तन्निवृत्त्यर्थत्वाभावेन 'चार्थे द्वन्द्वः' इत्येवेतरेतरयोग समाहारद्वन्द्वाभ्यामेकवत्त्वविकल्पसिद्धेरित्यत आह—मृगाणां मृगैरेवेत्यादि मृगशकुनिग्रहणमित्यन्तम् । मृगाणां मृगैरेव सह उभयत्र इतरेतरयोगे समाहारे च 'चार्थे–' इति द्वन्द्वः । यथा—रुरुपृषतं रुरुपृषतावित्यादि । तथा शकुनीनां शकुनिभिरेव उभयत्र इतरेतरयोगे समहारे च 'चार्थे–' इति द्वन्द्वः । यथा शुकबकम्, शुकबकाविति । मृगाणां तदितरैः शकुनीनां तदन्यैश्च सह इतरेतरयोगद्वन्द्व एव भवति, न समाहारद्वन्द्वः । यथा—रुरुशुका इति । एतादृशनियमार्थं मृगशकुनिग्रहणमित्यर्थः । ननु पूर्वापरग्रहणम् अधरोत्तरग्रहणं च व्यर्थम्, 'चार्थे—' इत्येव सिद्धेः । 'जातिरप्राणिनाम्' इत्यादिनित्यैकवत्त्वस्य तत्र अप्रवृत्त्या तन्निवृत्त्यर्थत्वास

---

प्रकरणशेषतया नियममाह—फलसेनेत्यादि । फलसेनादीनां द्वन्द्वो 'विभाषा वृक्ष-मृग–' इत्यनेन लक्षणान्तरेण वा एकवद्भवन्बहुप्रकृतिरेव एकवद्भवतीत्यर्थः । बहवो वर्ति पदार्थाः, बहुवचनान्ता वा प्रकृतिः कारणं यस्य स बहुप्रकृतिः । बदराणि चामलकानि चेति । 'जात्याख्यायामेकस्मिन्–' इति वैकल्पिकं बहुवचनम् । बदरामलके इति । जातिप्राधान्येऽप्येकवचनान्तयोर्द्वन्द्व इति नास्त्येकवद्भाव इति भावः । पशुग्रहणमिति । विकल्पार्थमित्यनुषज्यते । 'चार्थे द्वन्द्वः' इत्यनेनैव सिद्धे मृग–

इति नियमार्थं मृगशकुनिग्रहणम् । एवं पूर्वापरम्, अधरोत्तरम् इत्यपि । अ॰ डवग्रहणं तु पक्षे नपुंसकत्वार्थम् । अन्यथा परत्वात् 'पूर्ववदश्ववडवौ' (सू ८ इति स्यात् । ९१७ विप्रतिषिद्धं चानधिकरणवाचि । (२-४- विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात् । शीतोष्णम्, शीतोष्णे । ल्पिकः समाहारद्वन्द्वः 'चार्थे' (सू ९०१) इति सूत्रेण प्राप्तः, स विरुद्धा॰ यदि भवति तर्ह्यद्रव्यवाचिनामेवेति नियमार्थमिदम् । तेन द्रव्यवाचिनामित॰

---

भवादित्यत आह—एवं पूर्वापरम् अधरोत्तरम् इत्यपीति । यथा मृ॰ निग्रहणं मृगैरेव मृगाणां शकुनीनां तैरेव उभयत्र द्वन्द्वः, एवं पूर्वशब्दस्य ॰ शब्देनैव, अधरशब्दस्य उत्तरशब्देनैव उभयत्र इतरेतरयोगे समाहारे च द्व॰ अन्येन तु सह पूर्वोत्तरावित्यादौ इतरेतरयोग एवेति नियमार्थं पूर्वापरग्रहणम् ॰ रोत्तरग्रहणं चेत्यर्थः । ननु अश्ववडवग्रहणं व्यर्थम्, सेनाङ्गत्वेऽपि पशुद्वन्द्व॰ एकवद्भावविकल्पसिद्धेरित्यत आह—अश्ववडवेति । नपुंसकत्वविकल्पार्थमित्य॰ ननु समाहारस्य एकत्वादेव एकवत्त्वसिद्धेः इदम् एकवत्त्वप्रकरण समाहार एव द्व॰ नियमार्थमित्युक्तम् । तथा च पशुद्वन्द्वत्वाद् एकवत्त्वविकल्पे सति समाहारे वा इत॰ योगे वा द्वन्द्व इत्यनियमः पर्यवस्यति । एवं च समाहारद्वन्द्वपक्षे 'स नपुंसकम्' ॰ नपुंसकत्वम्, इतरेतरयोगे तु नेति नपुंसकत्वविकल्पस्य सिद्धत्वाद् अश्ववड॰ व्यर्थमेवेत्यत आह—अन्यथेति । इह नपुंसकत्वविध्यभावे ससाहारद्वन्द्वप॰ 'स नपुंसकम् इति नपुंसकत्वं बाधित्वा परत्वात् 'पूर्ववदश्ववडवौ' इति पुंस्त्वं स॰ नपुंसकविधौ तु तत्सामर्थ्यात् समाहारद्वन्द्वपक्षे 'पूर्ववदश्ववडवौ' इत्येतद् बा॰ नपुंसकत्वं भवत्येव । अधिकारप्राप्तपूर्ववदश्वेत्येतत्तु इतरेतरयोगद्वन्द्वे सावकाश॰ भावः । **विप्रतिषिद्धं च** । विभाषा इत्यनुवर्तते । विप्रतिषेधो विरोधः सहानव॰ लक्षणः । अधिकरणं द्रव्यम् । अद्रव्यवाचि विरुद्धार्थकं च यदनेकं सुबन्तं ॰ यवको द्वन्द्वो विभाषैकवद्भावक इत्यर्थः । फलितमाह—विरुद्धार्थानामिति गोत्वाश्वत्वं गोत्वाश्वत्वे, सुखदुःखं सुखदुःखे इत्याद्युदाहरणम् । ननु 'चार्थे' ॰ इतरेतरयोगसमाहाराभ्यामेवात्र एकत्वविकल्पसिद्धेः इदं व्यर्थम् । न च 'जा॰ प्राणिनाम्' इति नित्यं प्राप्ते विकल्पार्थमिति वाच्यम्, जातिप्रवृत्तिनिमित्तकद्रव्यवा॰ द्वन्द्व एव तत्प्रवृत्तेरित्यत आह—वैकल्पिक इत्यादि नियमार्थमिदमित्यन्त॰ तेनेति । उक्तनियमेनेत्यर्थः—शीतोष्णे उदके स्त इति । अत्र विरुद्धार्थक॰

---

शकुनिग्रहणं व्यर्थमित्याशङ्क्याह—मृगाणां मृगैरेवेत्यादि । नपुंसकत्व॰ मिति । अयं भावः—पशुत्वाद्विकल्पे सिद्धे अश्ववडवग्रहणं प्रतिपदविधानार्थं॰ तेनाश्ववडवमित्येकवद्भावपक्षे 'पूर्ववदश्ववडवौ' इत्येतद्बाधित्वा 'स नपुंसकम्' इत्य॰ भवति । स इति तच्छब्देन ह्येकवद्भावभाजं परामृश्य विधीयमानं नपुंसकत्वमेकव॰ ववदेव प्रतिपदविहितं भवति । तथा च प्रतिपदोक्तस्य बलीयस्त्वान्नपुंसकत्वं सिध्यती॰ विप्रतिषिद्धम् । अधिकरणमिह द्रव्यम् । चकारो विभाषानुकर्षणार्थस्तदेत॰ चष्टे—विरुद्धार्थानामित्यादि । उदाहरणं तु शीतोष्णं शीतोष्णे, सुखदुःखं ॰

योग एव। शीतोष्णे उदके स्तः। विप्रतिषिद्धं किम् ! नन्दकपाञ्चजन्यौ । इह पाक्षिकः समाहारद्वन्द्वो भवत्येव । ९१८ न दधिपयआदीनि। (२—४—१४) एतानि नैकवत्स्युः। दधिपयसी। इध्मावर्हिषी। निपातनाद्दीर्घः । ऋक्सामे। वाङ्मनसे। ९१९ अधिकरणैतावत्त्वे च। (२—४—१५) द्रव्यसङ्ख्यावगमे एकवदेवेति

---

द्रव्यवाचित्वाद् न समाहारद्वन्द्व इति भावः । नन्दकपाञ्चजन्याविति । विष्णोः खड्गः नन्दकः, शङ्खस्तु पाञ्चजन्यः, तयोरेकत्र विष्णौ सहावस्थानाद् न विरुद्धत्वमिति स्थितिः । इह विप्रतिषिद्धग्रहणाभावे 'चार्थे–' इति समाहारद्वन्द्वः अद्रव्यवाचिनामेवेति नियमो लभ्येत । एवं सति नन्दकपाञ्चजन्यमिति पाक्षिक-समाहारद्वन्द्वो न स्यात्, समाहारद्वन्द्वस्य सर्वस्यापि अद्रव्यवाचिष्वेव नियमितत्वात् । विप्रतिषिद्धमित्युक्तौ तु विरुद्धार्थानां समाहारद्वन्द्वश्चेत् तर्हि अद्रव्यवाचिनामेवेति नियमो लभ्यते । नन्दकपाञ्चजन्ययोश्चाविरुद्धत्वादयं नियमो न प्रवर्तते। ततश्च द्रव्यवाचित्वेऽपि 'चार्थे–' इति कदाचित् समाहारद्वन्द्वः, कदाचित् इतरेतरयोगद्वन्द्वश्च भवत्येव । तदाह—इह पाक्षिकः समाहारद्वन्द्वो भवत्येवेति । न दधिपय-आदीनि । एतानि नैकवत् स्युरिति । एषां समाहारद्वन्द्वो नास्तीत्यर्थः । दधिपयसी इति । दधि च पयश्चेति विग्रहः । 'जातिरप्राणिनाम्' इति नित्यमेकवत्त्वं प्राप्तं वाधित्वा व्यञ्जनद्वन्द्वत्वाद्विकल्पः प्राप्तः, सोऽपि न भवति। इध्मावर्हिषी इति । इध्मं च वर्हिश्चेति विग्रहः । दीर्घ इति । इध्म-शब्दस्येति शेषः । ऋक्सामे इति । ऋक् च साम चेति विग्रहः । 'अचतुर' इत्यादिनाऽच्समासान्तः । वाङ्मनसे इति । वाक् च मनश्चेति विग्रहः । पूर्व-वत्समासान्तः । अत्र गणे ब्रह्मप्रजापती इत्यादि पठितम् । समाहारद्वन्द्व एवेति नियमप्रक्रमेपि नानेन नियमस्यैव निषेधः, ब्रह्मप्रजापती इत्यादौ नियमस्याप्राप्तेः। किंत्वेकवत्त्वस्यैव । तथाच 'चार्थे–' इति समाहारद्वन्द्वस्य निषेधः फलति। अधि-करणैतावत्त्वे च । अधिकरणं द्रव्यम्, तस्य एतावत्त्वमियत्ताविशेषः। तदाह—द्रव्यसंख्यावगम इति । समस्यमानपदार्थस्येयत्ताविशेषे पदान्तरसमभिव्याहार-

---

दुःखे इत्यादि । विरोधोऽत्र सहानवस्थानलक्षणः। भवत्येवेति। विप्रतिषिद्धग्रहणा-भावे तु स न स्यात्, अद्रव्यवाचिनामेवेति नियमादिति भावः। अनधिकरणवाचीति किम्, शीतोष्णे उदके स्तः । इह पाक्षिकः समाहारद्वन्द्वोऽपि स्यादिति दिक् । न दधिपय । दधिपयसी इति । व्यञ्जनत्वाद्विकल्पः प्राप्तः । एवं 'मधुसर्पिषी, सर्पिर्मधुनी' इत्यत्रापि बोध्यम्। इह 'ब्रह्मप्रजापती' 'शिववैश्रवणौ' इत्यादौ समाहार-द्वन्द्वनिषेधमुखेनेतरेतरयोगद्वन्द्वोऽनेन व्यवस्थाप्यते । तत्साहचर्याद्दधिपयसी इत्यादा-वपि तथैव। तेन तत्र व्यञ्जनत्वप्रयुक्तविकल्पे निषिद्धेऽपि जातिलक्षणो नित्यमेकवद्भा-वोऽस्त्विति न शङ्कनीयम्, किं च नेह लक्षणविशेष आग्रहः। 'एतानि नैकवत्स्युः' इत्येकवद्भावमात्रस्य निषेधात्, यथा 'न षट्स्वस्रादिभ्यः' इत्यत्र ङीप्टापोरुभयोरपि निषेधसिद्धये 'स्त्रियां यदुक्तं तन्न' इति सामान्यतो निषिध्यत इति दिक्। ऋक्सामे, वाङ्मनसे इति । 'अचतुर–' इत्यादिनात्र समासान्तोऽच् निपात्यते। अधिकरणै।

नियमो न स्यात् । दश दन्तोष्ठाः । ९२० विभाषा समीपे । (२—४—
अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे समाहार एव इत्येवंरूपो नियमो वा स्या
उपदशं दन्तोष्ठम् । उपदशा दन्तोष्ठाः । ९२१ आनङृतो द्वन्द्वे

गम्ये इत्यर्थः । नियमो नेति । ब्रह्मप्रजापती इत्यादौ समाहार एव द्वन्द्व
नियमस्य प्रकृतस्याप्रवृत्तेरेकवत्त्वनिषेधः पूर्वसूत्रे आश्रितः । इह तु बाधकाभा
प्रकृतस्य नियमस्यैव निषेध आश्रित इति भावः । दश दन्तोष्ठा इति । दन्ता
ओष्ठाश्चेति विग्रहः । इतरेतरयोगद्वन्द्वोऽयम्, न तु समाहारद्वन्द्वः । समासार्थसमा
विशेषणीभूतसमस्यमानपदार्थानां पदान्तरलभ्यदशत्वसापेक्षत्वेनासामर्थ्यात् । इतरे
योगद्वन्द्वस्तु भवत्येव, तत्र समस्यमानपदार्थानामेव प्रधानत्वाद् 'उपमितं व्याघ्रादिभिः
इति सूत्रभाष्ये प्रधानस्य सापेक्षत्वेऽपि समासाभ्युपगमात् । ततश्चात्रैकवदेवेति निय
भावे सति असामर्थ्यात्समाहारत्वे निवृत्ते परिशेषादितरेतरयोगत्वमेवावतिष्ठते।
त्वेकवन्न स्यादित्येव व्याख्यायेत, तर्हि समाहारद्वन्द्वो नेत्यर्थः पर्यवस्येत् । तथा
दश दन्तोष्ठा इतीतरेतरयोगद्वन्द्वो न स्यात्, 'द्वन्द्वश्च प्राणितूर्य–' इति तन्निषेधा
तथाच वाक्यमेव स्यात् । किंच समाहारद्वन्द्वनिषेधोऽयं व्यर्थ एव, उक्तरीत्या सा
त्वेनासामर्थ्यादेवाप्राप्तेः । अत एकवदिति नियमो न स्यादित्येव व्याख्येयम् । एवं
प्राण्यङ्गनिबन्धनस्य एकवदेव स्यादिति नियमस्य इतरेतरयोगद्वन्द्वनिवृत्तिफलस्या
निषेधे सति इतरेतरयोगद्वन्द्वस्यावस्थितिः फलतीति पदमञ्जर्यां स्पष्टम् । विभा
समीपे । अधिकरणैतावत्त्वे इत्यनुवर्तते । समीपे इत्यस्य सामीप्येन परिच्छे
सतीत्यर्थः । फलितमाह—अधिकरणेति । उपदशं दन्तोष्ठमिति । दशा
समीपे इत्यर्थेऽव्ययीभावः । उक्तरीत्याऽसामर्थ्येऽपि वचनसामर्थ्यात्समाहारद्वन्द्व
समानलिङ्गवचनत्वादव्ययभावस्यैवानुप्रयोग इति भाष्यम् । अत एवोपदशं द

समासार्थस्याश्रयोऽधिकरणं वर्तिपदार्थः, तस्यैतावत्त्वं परिगणननियमः, तस्मिन् ग
मान इति व्याचष्टे—द्रव्यसंख्यावगम इति । नियमो न स्यादिति । द
प्राण्यङ्गत्वात्प्राप्तस्य 'एकवदेव' इति नियमस्य प्रतिषेधेऽपि 'चार्थे द्वन्द्वः' इति समाहा
द्वन्द्वः स्यादिति वाच्यम्, 'सविशेषणानां वृत्तिर्न' इत्यभ्युपगमेन समाहारद्व
प्राप्त्यभावात् । न चोक्तन्यायेनेतरेतरयोगद्वन्द्वोऽपि न स्यादिति वाच्यम्, सामान्याप्र
इति लिङ्गात् प्रधानस्य सापेक्षत्वेऽपि तदभ्युपगमात् । उक्तं हि भाष्ये—'भवति
प्रधानस्य सापेक्षस्यापि वृत्तिः' इति । स्यादेतत्—समाहारद्वन्द्वस्यात्र प्राप्त्यभावे 'द्वन्द्व
प्राणितूर्य–' इति नियमाप्रवृत्त्या इतरेतरयोगद्वन्द्वो निर्बाध एवेति सूत्रमिदमकिं
त्करमिति चेत्—अत्राहुः—'नियमसूत्राणां निषेधमुखेन प्रवृत्तिः' इति पक्षे 'द्वन्द्व
प्राणितूर्य–' इति सूत्रं केवलमितरेतरयोगद्वन्द्वनिषेधपरम् । तथा चेतरेतरयोगनिषेध
निषेधद्वारा इतरेतरयोगद्वन्द्वप्रापणार्थमिदमिति । एवं च निषेधमुखप्रवृत्तिपक्ष
ज्ञापनायेदमिति फलितमिति दिक् । विभाषा समीपे । यद्यपीह 'समाहारद्व
एवेति व्याख्यानेऽपि न क्षतिः, तथापि पूर्वसूत्रे नियमनिषेधस्योक्तत्वात्तदनुरोधेनाह
नियमो वा स्यादिति । उपदशं दन्तोष्ठमिति । एकवद्भावपक्षे अव्ययीभा

इत्यतो मण्डूकप्लुत्या 'पुत्रे' इत्यनुवृत्तेः पितापुत्रौ । ९२२ देवताद्वन्द्वे च । (६—३—२६) इहोत्तरपदे परे आनङ् । मित्रावरुणौ । 'वायुशब्दप्रयोगे प्रति (वा ३९०७) अग्निवायू, वाय्वग्नी । पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परि र्थम् । तेन ब्रह्मप्रजापती इत्यादौ नानङ् । एतद्धि नैकहविर्भागित्वेन श्रुतम्, न लोके प्रसिद्धं साहचर्यम् । ९२३ ईदग्नेः सोमवरुणयोः । (६—३—२७) दे द्वन्द्वे इत्येव । ९२४ अग्नेः स्तुत्स्तोमसोमाः । (८-३-८२) अग्नेः प मेषां सत्य षः स्यात्समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ । अग्नीव

---

'विभाषा स्वसृपत्योः' इत्यत्र च मध्येऽसंबन्धादाह—मण्डूकेति । अनुवृत्तेरि न च तातपुत्रावित्यत्रापि स्यादिति वाच्यम्, ऋदन्तस्य पुत्रे परे आनङ् स्यादिति भेदेन व्याख्यानात् । देवताद्वन्द्वे च । मित्रावरुणाविति । इह ऋदन्तत्वा पूर्वणाप्राप्ते विधिरयम् । वायुशब्देति । वायुशब्दस्य पूर्वपदत्वेनोत्तरपदत्वेन वा प्र सत्यानङः प्रतिषेधो वक्तव्य इत्यर्थः । ननु पूर्वसूत्राद् द्वन्द्वग्रहणे अनुवर्तमाने पुनः ग्रहणं व्यर्थमित्यत आह—पुनरिति । निर्वापादौ प्रसिद्धसाहित्यकदेवतावा शब्दग्रहणार्थमित्यर्थः । तेनेति । प्रसिद्धसाहचर्यग्रहणेनेत्यर्थः । एतदिति । तद् ब्रह्मप्रजापतियुगलं हविर्भागित्वेन न वेदे प्रसिद्धमित्यर्थः । नापि लोके प्रौढिवादमात्रमेवेदम्, 'वेदे ये सहनिर्वापनिर्दिष्टाः, इत्येव भाष्ये दर्शनात्, लोकप्र साहचर्यग्रहणे पार्वतीपरमेश्वरावित्यादावतिप्रसङ्गाच्च । ईदग्नेः । इत्येवेति । देवता इत्यनुवर्तत एवेत्यर्थः । सोमशब्दे वरुणशब्दे च उत्तरपदे परे अग्नेरीदादेशः स् देवताद्वन्द्वे इत्यर्थः । आनङोऽपवादः । अग्नेः स्तुत् । स्तुत्, स्तोम, सोम इति द्व षष्ठ्यर्थे प्रथमा । 'सहेः साडः सः' इत्यतः स इति षष्ठ्येकवचनान्तमनुवर्तते । रिति पञ्चमी । 'समासेऽङ्गुलेः—' इत्यतः समासे इत्यनुवर्तते । तदाह—अग्नेः प मिति । षः स्यादिति । 'अपदान्तस्य मूर्धन्यः' इत्यनुवृत्तेरिति भावः । दाद्योः' इति षत्वनिषेधापवादोऽयम् । अग्निष्टुदिति । क्रतुविशेषो अग्निष्टोम इति । स्तोत्रविशेषस्य संस्थाविशेषस्य च नाम । अग्नीषोमावि अग्निश्च सोमश्चेति विग्रहः । ईत्वषत्वे । अग्नीवरुणाविति । अग्निश्च वरुण विग्रहः । ईत्वम् । देवताद्वन्द्वे किम् ? अग्निर्नाम कश्चित्, सोमो नाम कश्चित्—

---

एवेत्यत्र नियामकाभावात् । एतेन 'ऋत इति कार्यिनिर्देशार्थम्' इत्युक्तत्वान्नि मानस्य ऋकारस्यैवादेशः स्यादिति ङित्करणं व्यर्थमित्याशङ्कापि परास्ता । वृगातार इति । न ह्यत्र नेष्टा पूर्वपदम्, आद्यवयवस्यैव पूर्वपदत्वात् । मातापि विति । पुत्रोत्पादने अनयोर्योनिकृतः संबन्धः । पूर्वत्र तु हौत्रादिरूपविद्याकृतः सं एकस्मिन्यज्ञे आर्त्विज्यरूप इति विवेकः । मण्डूकप्लुत्येति । तेन 'विभाषा स पत्योः' इत्यत्र न संबध्यत इति भावः । पितापुत्राविति । अनयोरपि योनिकृतः सं जन्यजनकभावलक्षणः । देवता । अनुकारान्तार्थमविद्यायोनिसंबन्धार्थं च वचन ईदग्नेः । आनङोऽपवादोऽयम् । देवताद्वन्द्वे इत्येवेति । इदं च वृत्ति स्थितम् । ज्योतिर्लतयोरदेवताद्वन्द्वेऽपि 'अग्नीषोमौ प्रणेष्यामि' इत्याश्वलायन

१२२५ इद्वृद्धौ। ( ६-३-२८ ) वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे। अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म। अग्नीवरुणौ देवते अस्य आग्निवारुणम्। 'देवताद्वन्द्वे च' ( सू १२३९ ) इत्युभयपदवृद्धिः। अलौकिके विग्रहवाक्ये आनङ्मीत्त्वं च बाधित्वा इत्। वृद्धौ किम्—आग्नेन्द्रः 'नेन्द्रस्य परस्य' (सू १२४०)

---

सोमौ। अदेवताद्वन्द्वत्वादीत्त्वं न। अत एव च न षत्वम्, 'अग्नेर्दीर्घात् सोमस्य इष्यते' इति वार्तिकात्। इद्वृद्धौ। अग्नेरिति देवताद्वन्द्वे इति चानुवर्तते। वृद्धिशब्देन वृद्धिमल्लक्ष्यते, देवताद्वन्द्वे केवलवृद्धिरूपोत्तरपदासंभवात्। तदाह—वृद्धिमतीति। इदिति तकार उच्चारणार्थः। प्रयोजनाभावान्नेत्संज्ञा। नापि तपरकरणम्, विधीयमानत्वादेव सवर्णाग्राहकत्वात्। अग्नामरुताविति। अग्निश्च मरुच्चेति विग्रहः। 'देवताद्वन्द्वे च' इत्यानङ्। अग्निमारुतं कर्मेति। 'साऽस्य देवता' इत्यण्। तद्धितान्तप्रातिपदिकावयवत्वात् सुपो लुक्। अग्नीवरुणाविति। 'ईदग्नेः—' इतीत्त्वम्। आग्निवारुणमिति। 'साऽस्य देवता' इत्यण्। ननु 'तद्धितेष्वचामादेः' इत्यादेरचो वृद्धिविधानात् कथमुत्तरपदस्यादिवृद्धिरित्यत आह—देवताद्वन्द्वे चेत्युभयपदवृद्धिरिति। नन्वग्नेरिकारस्य इकारविधिर्व्यर्थ इत्यत आह—आनङ्मीत्त्वं च बाधित्वेति। आग्निमारुतमित्यत्रानङ आग्निवारुणमित्यत्र ईत्त्वस्य च बाधनार्थमग्नेरिकारस्य पुनरिकारविधानमित्यर्थः। ननु 'समर्थानां प्रथमाद्वा' इत्यत्र 'परिनिष्ठितात् तद्धितोत्पत्तिः' इति वक्ष्यते। तथा च अग्नामरुतौ देवते अस्येति, अग्नीवरुणौ देवते अस्येति च विग्रहे अग्नामरुच्छब्दाद् अग्नीवरुणशब्दाच्च आनङीत्त्वाभ्यां परिनिष्ठिताद् देवताद्वन्द्वात् 'साऽस्य देवता' इत्यण् तद्धित उत्पद्यते। ततस्तन्निमित्तकोभयपदवृद्धिः। ततः 'इद्वृद्धौ' इत्यस्य प्रवृत्तिरिति क्रमः। ततश्च तद्धितोत्पत्तेः प्रागेव प्रवृत्तयोरानङीत्त्वयोः कथम् 'इद्वृद्धौ' इत्यनेन बाधः? युगपत्प्रवृत्तावेव बाध्यबाधकभावाभ्युपगमात्। उक्तं च भाष्ये—'भुक्तवन्तं प्रति मा भुङ्क्था इत्युक्ते, किं तेन कृतं स्यात्' इति। अत आह—अलौकिके विग्रहवाक्य इति। अग्निमरुत् औ देवते अस्येति, अग्निवरुण औ देवते अस्येति च तद्धितालौकिकविग्रहवाक्ये आनङीत्त्वे प्रवर्तमाने बाधित्वा इद्विधिः प्रवर्तत इत्यर्थः। यद्यपि तदानीम् उत्तरपदस्य वृद्धिमत्त्वं नास्ति, तद्धिताभावात्, तथाप्युत्तरपदस्य भाव्येव वृद्धिमत्त्वमिह विवक्षितमिति भावः। आग्नेन्द्र इति। अग्निश्च इन्द्रश्च अग्नेन्द्रौ।

---

त्वार्षत्वात्साधुः। यद्वा—मास्तु तदनुवृत्तिः, अग्निसोमौ माणवकावित्यत्र 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः' इति न्यायेनादोषत्वात्। अग्नेः। 'सात्पदाद्योः' इति निषेधेऽयमारम्भः। अग्निष्टुदिति। अग्निः स्तूयतेऽस्मिन् स ऋतुविशेषः। संपदादित्वादधिकरणे क्विप्। अग्निष्टोम इति। अग्नीनां स्तोमोऽग्निष्टोमः। सोमयागस्य संस्थास्वाद्या संस्था उच्यते। इद्वृद्धौ। तकार उच्चारणार्थः। इकारस्येकारविधानं तु बाधकबाधनार्थम्। वृद्धिशब्देनात्र वृद्धिमद् गृह्यते, वृद्धिमात्रस्योत्तरपदस्यासंभवादतो व्याचष्टे—वृद्धिमत्युत्तरपद इति। आनङ्मीत्त्वं च बाधित्वेति। यद्यपि वृद्धेः प्रागेव आनङीत्वयोरन्तरङ्गत्वात्प्रवृत्तिरस्ति, तथापि 'परिहृत्यापवादविषय-

इत्युत्तरपदवृद्धिप्रतिषेधः । 'विष्णौ न' (वा ३९०९) । आग्नावैष्णवम् । दिवो द्यावा । (६-३-२९) देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावा... ९२७ दिवसश्च पृथिव्याम् । (६-३-३०) दिव इत्येव, चाद्द्या... आदेशेऽकारोच्चारणं सकारस्य रुत्वं माभूदित्येतदर्थम् । द्यौश्च पृथिवी च दिव... व्यौ, द्यावापृथिव्यौ । 'छन्दसि दृष्टानुविधिः' । 'द्यावा चिदस्मै पृथिवी' । 'दिव... व्योररतिः' इत्यत्र पदकारा विसर्गं पठन्ति । ९२८ उषासोषसः । (६-३-... उषस्शब्दस्योषासादेशो देवताद्वन्द्वे । उषासासूर्यम् । ९२९ मातरपितरा... चाम् । (६-३-३२) मातरपितरौ । उदीचां किम्—मातापित...

'देवताद्वन्द्वे च' इत्यानङ्, आद्गुणः । अग्नेन्द्रौ देवते अस्येत्याग्नेन्द्रः । 'साऽस्य दे... इत्यण् । आदिवृद्धिः । अत्रेन्द्रशब्दस्योत्तरपदस्य वृद्धिमत्त्वाभावाद् 'इद्वृद्धौ' ... नेति भावः । 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिमाशङ्क्याह—नेन्द्रस्येति । उषा... नेति । विष्णुशब्दे परे अग्नेरिकारो नेति वक्तव्यमित्यर्थः । आग्नावैष्णवमिति... अग्निश्च विष्णुश्च अग्नाविष्णू । 'देवताद्वन्द्वे च' इत्यानङ् । अग्नाविष्णू देवते अस्य... 'साऽस्य देवता' इत्यण् । आग्नावैष्णवं हविः । 'देवताद्वन्द्वे च' इत्युभयपदवृद्धि... इत्वाभावादानङेव । दिवो द्यावा । शेषपूरणेन सूत्रं व्याचष्टे—देवताद्वन्द्वे... इति । द्यावाभूमी इति । द्यौश्च भूमिश्चेति विग्रहः द्यावाक्षामा सिद्ध... 'द्यावाक्षामा रुक्मो अन्तर्विभाति' इति ऋचि पठितमिदम् । द्यावापृथिव्योः... द्यौश्च क्षामा चेति विग्रहः । क्षामाशब्दो भूमिपर्यायो वेद । तत्र द्वन्द्वे दिवो द्यावा... षष्ठयास्तु 'सुपां सुलुक्—' इति डादेशः, 'देवताद्वन्द्वे च' इति पूर्वोत्तर... प्रकृतिस्वर इति वेदभाष्ये स्पष्टम् । दिवसश्च पृथिव्याम् । दिव इत्ये... दिव इत्यनुवर्तत एवेत्यर्थः, स्वरितत्वादिति भावः । तर्हि चकारो व्यर्थ इत्यत... चादिति । तथा च दिव्शब्दस्य दिवसादेशो द्यावादेशश्च स्यात् पृथि... उत्तरपदे परे देवताद्वन्द्वे इत्यर्थः । दिवस्पृथिव्या इत्यत्र सकारादकार... णाद्दिवसादेशस्य सकारान्तत्वावश्यंभावाद् आदेशे सकारादकारोच्चारण... प्रयोजनमित्यत आह—आदेशेऽकारोच्चारणमिति । सामर्थ्यात् 'ससजु... इति रुत्वं नेति भावः । ननु 'द्यावा चिदस्मै पृथिवी सन्तमेते' इत्य... शब्दपृथिवीशब्दयोः कथं द्वन्द्वः ? कथं वा दिवो द्यावादेशः ? उत्तरपद... स्मै इत्यनेन व्यवहितत्वादित्यत आह—छन्दसि दृष्टानुविधिरिति । वाक्यमेतत् । वेदे दृष्टानुसरणमित्यर्थः । यथा दृष्टं तथा प्रक्रिया कल्पनीयेति... पदकारा इति । 'दिवस्पृथिव्योः' इत्यवग्रहे विसर्गं पठन्तीत्यर्थः । ... इत्यनेन पदपाठस्याधुनिकत्वं सूचितम् । तथा च विसर्गपाठः प्रामादिक इति... तम्, अकारोच्चारणेन रुत्वनिवृत्तेरुक्तत्वात् । उषासोषसः । उषासासूर्य...

...मुत्सर्गोऽभिनिविशते' इति न्यायादानङीत्वे न भवत इति भावः । आग्ने... ...मिति । इत्वाभावादानङेव भवति । रुत्वं मा भूदिति । अकारे सति... श्रवणं भवति, तेन प्रयोगे विकाराभावोऽनुमीयत इति भावः । विसर्ग...

९३० द्वन्द्वाच्चुदषहान्तात्समाहारे । (५-४-१०६) चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक्च त्वक्च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम्-प्रावृट्छरदौ ।

इति द्वन्द्वसमासप्रकरणम् ।

—००००—

---

उषाश्च सूर्यश्चेति समाहारद्वन्द्वः । मातरपितरावुदीचाम् । उदीचां मते मातरपितराविति भवतीत्यर्थः । अत्र मातृशब्दस्यारङादेशो निपात्यते । मातापितराविति । अरङभावे 'आनङृतः–' इत्यानङ् । द्वन्द्वाच्चुदष । समासान्ताधिकारस्थं तद्धिताधिकारस्थं चेदं सूत्रम् । टच्स्यादिति । 'राजाहस्सखिभ्यः–' इत्यतस्तदनुवृत्तिरिति भावः । वाक्त्वचमिति । वाक्च त्वक्च इति समाहारद्वन्द्वः । कुत्वस्यासिद्धत्वाच्चवर्गान्तत्वाट्टच् । एवं त्वक्स्रजमित्यत्रापि । त्वक्च स्रक्चेति विग्रहः । शमीदृषदमिति । शमी च दृषच्चेति विग्रहः । दकारान्तत्वाट्टच् । वाक्त्विषमिति । वाक्च त्विट् चेति विग्रहः । षान्तत्वाट्टच्, जश्त्वस्यासिद्धत्वादिति भावः । छत्रोपानहमिति । छत्रं च उपानच्चेति विग्रहः । हान्तत्वाट्टच् । प्रावृट्छरदाविति । प्रावृट् च शरच्चेति विग्रहः । इतरेतरयोगद्वन्द्वत्वान्न टजिति भावः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां द्वन्द्वसमासनिरूपणम् ।

—:○:—

---

तया च 'क्वचिद्विकारो न' इत्येवानुमेयं लक्ष्यानुरोधादिति भावः । उषासासूर्यमिति । उषाश्च सूर्यश्च तयोः समाहारः । मातरपितरौ । मातृशब्दस्यारङादेशो निपात्यते । द्वन्द्वात् । अन्तग्रहणं विस्पष्टार्थम् । चु इति वर्गग्रहणस्य प्रयोजनं ध्वनयति—त्वक्स्रजमिति । बहूनां द्वन्द्वे तु वाक्त्वक्स्रजम् । द्वन्द्वगर्भे द्वन्द्वे तु वाक्त्वचस्रजम् ।

इति तत्त्वबोधिनीव्याख्यायां द्वन्द्वप्रकरणम् ।

—:००००:—

# अथैकशेषप्रकरणम् । २१ ।

अथैकशेषः । 'सरूपाणाम्–' (सू १८८) । रामौ रामाः । 'विरूपाणा-मपि समानार्थानाम्' (वा ७४७) । वक्रदण्डश्च कुटिलदण्डश्च—वक्रदण्डौ । कुटि-दण्डौ । ९३१ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः । (१–२–६५) । सहोक्तौ गोत्रं शिष्यते, गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धः किम् । गर्गगार्ग्यायणौ । यूना किम् । गर्गगार्ग्यौ तल्लक्षणः किम् । भागवित्तिभागवित्तिकौ । कृत्स्नम् किम् । गार्ग्यवा

अथैकशेषो निरूप्यते—तदेवं द्वन्द्वे निरूपिते तदपवादमेकशेषप्रकरण-रभते—अथैकशेष इति । निरूप्यत इति शेषः । तत्रैकशेषसूत्राणि व्याचिख्या-पूर्वं व्याख्यातमपि सूत्रं सन्दर्भशुद्धये आह—सरूपाणामिति । तदुदाहरण-मपि स्मारयति—रामौ रामा इति । विरूपाणामिति । 'सरूपाणाम्–' इति सूत्रेणार्थभेदेऽपि शब्दैकरूप्ये एकशेष उक्तः, एकार्थकत्वे विरूपाणामप्येक-वक्तव्य इत्यर्थः । वक्रदण्डश्चेति । अत्र शब्दवैरूप्येऽप्यर्थैक्याद् अन्यतरः शि-इति भावः । वृद्धो यूना । रूपतोऽर्थतश्च भेदेऽपि प्राप्त्यर्थमिदम् । यूना 'जीवति तु वंश्ये युवा' इति वक्ष्यमाणयुवप्रत्ययान्तेनेत्यर्थः । सहोक्ताविति । अध्या-हारलब्धमेतत् । गोत्रमिति । वृद्धशब्देन 'अपत्यं पौत्रप्रभृति गोत्रम्' इति सूत्र-गोत्रं विवक्षितम् । अपत्यमन्तरितं वृद्धमिति पूर्वाचार्यपरिभाषितत्वादिति भा-गोत्रप्रत्ययन्तमिति यावत् । न च 'गोत्रं यूना' इत्येव कुतो न सूत्रितमिति वाच्य-अपत्याधिकारादन्यत्र गोत्रग्रहणेन लौकिकं गोत्रं विवक्षितमिति सिद्धान्तज्ञापनार्थत्वा-शिष्यत इति । शेष इति कर्मणि घञन्तमनुवर्तत इति भावः । तल्लक्षण इ-स गोत्रप्रत्ययो युवप्रत्ययश्च लक्षणं निमित्तं यस्येति विग्रहः । विशेषो वैलक्षण्य-तथाच गोत्रयुवप्रत्ययान्तयोर्विशेषो वैरूप्यम्, तल्लक्षणश्चेद् गोत्रयुवप्रत्ययनिमित्तक-दित्यर्थः । अन्यनिमित्तको न चेदित्यर्थः सिद्धः, तदाह—गोत्रयुवेति । कृत्स्नमिति एवकारलभ्यमिदम् । गार्ग्यश्चेति । गर्गस्य गोत्रापत्यं गार्ग्यः । गर्गादिभ्यो य-गार्ग्यायण इति । गर्गस्य गोत्रापत्यं गार्ग्यः । तस्यापत्यं युवा गार्ग्यायणः । 'यञिञोश्च' इति फक् । गार्ग्याविति । अत्र गार्ग्यशब्दस्य गार्ग्यायणशब्दस्य च गोत्रयुवप्रत्यय-मेव वैरूप्यमिति गोत्रप्रत्ययान्तो गार्ग्यशब्दः शिष्यत इति भावः । गर्गगार्ग्या-यणाविति । गर्गश्च गार्ग्यायणश्चेति विग्रहः । अत्र गर्गशब्दस्य गार्ग्यायणश-

द्वन्द्वापवादत्वेनाह—अथैकशेष इति । विरूपाणामिति । बोध्यत इति व्युत्पत्त्या सौत्रस्य रूपशब्दस्यार्थपरतयापि व्याख्यानात्सूत्राक्षरैरेव शक्यत इति प्रागेव व्याख्यातम् । वृद्धो यूना । 'अपत्यमन्तर्हितं वृद्धम्' इति चार्यैः परिभाषितस्य पाणिन्युक्तगोत्रापरपर्यायस्येह ग्रहणम्, कृत्रिमेण यूना सा-त्तदाह—गोत्रं शिष्यत इति । 'गोत्रं यूना' इत्येव तु न सूत्रितम् । 'अप-धिकारादन्यत्र लौकिकं गोत्रग्रहणम्' इति सिद्धान्तेन औपगवश्चानन्तरः,

यनौ । ९३२ स्त्री पुंवच्च । (१-२-६६) यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् । गार्गी च गार्ग्यायणौ च गर्गाः । 'अस्त्रियाम्' इत्यनुवर्तमाने 'यञञोश्च' (सू ११०८) इति लुक् । दाक्षी च दाक्षायणश्च दाक्षी ।

---

च युवप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तत्वाभावान्नैकशेष इति भावः । गर्ग-गार्ग्याविति । अत्र गर्गशब्दस्य गार्ग्यशब्दस्य च गोत्रप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यते, यूना सहोक्त्यभावादिति भावः । भागवित्ति-भागवित्तिकाविति । भगवित्तस्य गोत्रापत्यं भागवित्तिः । अत इञ् । भागवित्तेः सौवीरस्यापत्यं युवा कुत्सितो भागवित्तिकः । 'वृद्धाट्ठक् सौवीरेषु–' इति ठक् । अत्र भागवित्तिशब्दस्य भागवित्तिकशब्दस्य च न गोत्रयुवप्रत्ययमात्रकृतं वैरूप्यम्, कुत्सासौवीरत्वकृतस्यापि वैरूप्यस्य सत्त्वात् । अतो गोत्रप्रत्ययान्तो भागवित्तिशब्दो न शिष्यत इति भावः । गार्ग्यवात्स्यायनाविति । गर्गस्य गोत्रापत्यं गार्ग्यः, वत्सस्य गोत्रापत्यं वात्स्यः, गर्गादित्वाद्यञ् । वत्सस्यापत्यं युवा वात्स्यायनः । 'यञिञोश्च' इति फक् । गार्ग्यश्च वात्स्यायनश्चेति विग्रहः । अत्र गार्ग्यशब्दस्य वात्स्यायनशब्दस्य च न गोत्रयुवप्रत्ययमात्रकृतं वैरूप्यम्, प्रकृतिवैरूप्यस्य गोत्रयुवप्रत्ययमात्रकृतत्वाभावात् । अतो गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यत इति भावः । स्त्री पुंवच्च । वृद्धो यूनेत्यनुवर्तते । वृद्धेति स्त्रीलिङ्गेन विपरिणम्यते । तदाह—यूना सहोक्तौ वृद्धा स्त्री शिष्यत इति । गोत्रप्रत्ययान्तः स्त्रीवाचकः शब्दः शिष्यत इति भावः । स्त्रीत्वस्य वैरूप्यकारणस्याधिकस्य सत्त्वात् पूर्वेणाप्राप्ते वचनमिदम् । तदर्थ इति । तस्य शिष्यमाणस्य स्त्रीवाचकगोत्रप्रत्ययान्तस्यार्थः पुमानिव स्यादित्यर्थः । गार्गी चेति । गर्गस्यापत्यं स्त्रीत्यर्थः । गर्गादियञन्ताद् 'यञश्च' इति ङीप् । गार्ग्यायणौ चेति । गर्गाद्यञन्ताद् यून्यपत्ये 'यञिञोश्च' इति फक् । गर्गा इति । अत्र स्त्रीत्वकृतवैरूप्याधिक्येऽपि गोत्रप्रत्ययान्तः स्त्रीवाचको गार्गीशब्दः शिष्यते । स पुंवत् । तर्हि यञ् कुतो न श्रूयत इत्यत आह—अस्त्रियामितीति । उपलक्षण-मिदम् । 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्यतः अस्त्रियामिति, तेनैवेति, बहुष्विति चानुवर्तमाने सतीत्यर्थः । एतेन पुंवदित्यस्य प्रयोजनमुक्तम् । गार्गी च गार्ग्यायणश्चेति विग्रहस्तु न दर्शितः । तथा सति अबहुत्वाद् यञो लुगभावे सति पुंस्त्वे स्त्रीत्वे च रूपं तुल्यम्—गार्ग्याविति, तत्र पुंवत्त्वं निरर्थकं स्यात् । उदाहरणान्तरमाह—दाक्षी चेति । दक्षस्य गोत्रापत्यं स्त्री दाक्षी । 'अत इञ्' इतीञन्ताद् 'इतो मनुष्यजातेः' इति ङीष् । दाक्षायणश्चेति । दक्षस्यापत्यं पुमान् दाक्षिः, तस्यापत्यं

---

युवेत्यत्र नैकशेषः । भागवित्तीति । भागवित्तस्य गोत्रापत्यं भागवित्तिरित्यस्माद्यूनि 'वृद्धाट्ठक् सौवीरेषु बहुलम्' इति कुत्सायां ठक् । इह कुत्सा सौवीरत्वं चाधिकमपेक्ष्यते । न तु युवत्वमात्रकृतं वैरूप्यम् । गार्ग्यवात्स्यायनाविति । इह प्रकृत्यंशे वैरूप्यं न गोत्रादिकृतम् । स्त्री पुंवच्च । वृद्धा स्त्रीति । गोत्रप्रत्ययान्तं स्त्रीवाचकमित्यर्थः । पुंवद्भावकृतवैलक्षण्यं स्फुटीकर्तुं द्विवचनान्तेन विग्रहमाह—गर्गगार्ग्यायणाविति । अनुवर्तमान इति । 'तद्राजस्य बहुषु–' इत्यतः 'पुंवत्' इत्यर्थातिदेशस्य फलमनेन

श्वशुरौ—श्वश्रूश्वशुरौ वा। ९३८ त्यदादीनि सर्वैर्नित्यम् । (१-२-
सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते। स च देवदत्तश्च तौ। 'त्यदादीनां
सहोक्तौ यत्परं तच्छिष्यते' (वा ८०१) स च यश्च यौ. (सा च या च
'पूर्वशेषोऽपि दृश्यते' इति भाष्यम्। स च यश्चः तौ। 'त्यदादितः शेषे
पुंसकतो लिङ्गवचनानि' (वा ७९९)। स च देवदत्तश्च तौ। तच्च देव
यज्ञदत्ता च तानि। पुन्नपुंसकयोस्तु परत्वान्नपुंसक शिष्यते। तच्च देवदत्तश्च
'अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्' (वा ८००)। कुक्कुटमयूर्यौ
मयूरीकुक्कुटाविमौ। तच्च सा च अर्धपिप्पल्यौ ते। ९३९ ग्राम्यपशुसङ्घे

---

'श्वशुरः श्वश्र्वा' इति शब्दग्रहणात्। त्यदादीनि। सर्वैरिति। त्यदादि
रितरैश्चेत्यर्थः। ताविति। अत्र देवदत्तशब्दो निवर्तते। तच्छब्दस्तु नि
तद्देवदत्ताविति न भवति। सर्वैः किम्? प्रत्यासत्त्या त्यदादिभिरेव सहोक्ताविति
भूदित्येतदर्थम्। त्यदादीनां मिथ इति। भाष्ये स्थितमेतत्। तत् परं
त्यदादिगणे यत् परं पठितं तच्छिष्यत इत्यर्थः, शब्दपरविप्रतिषेधाश्रयणादिति
स च यश्च यौ, सा च या च ये इति। त्यदादिगणे यच्छब्दस्य त
दूर्ध्वं पाठात् परत्वात् स एव शिष्यत इति भावः। पूर्वशेषोऽपीति। प
स्येष्टवाचित्वात् क्वचित्पूर्वमपि शिष्यत इति भावः। अत्र 'द्विपर्यन्तनाम्'
भवति। अहं च भवांश्चावमिति भाष्योक्तेः। त्यदादित इति। आद्यादि
षष्ठ्यर्थे तसिः। त्यदादीनां स्त्रीशेषेऽपि सहविवक्षितेषु यः पुमान्, यच्च नपुंसकं,
लिङ्गप्रतिपादकानि भवन्तीत्यर्थः। कानीत्याकाङ्क्षायामर्थात्त्यदादीन्येव सम्ब
सा च देवदत्तश्च ताविति। तत्र तच्छब्दः शिष्यते समभिव्याहृत
शब्दलिङ्गश्च। देवदत्तशब्दस्तु निवर्तत एव। पुन्नपुंसकयोरिति। सहोक्त
शेषः। परत्वादिति। पुंनपुंसकतो लिङ्गवचनानीत्यत्र पुमपेक्षया नपुंसकस्य
परत्वावगमादित्यर्थः। अद्वन्द्वेति। द्वन्द्वतत्पुरुषविशेषणानां त्यदादीनां स्त्रीशेषे
दितः शेषे पुंनपुंसकतो लिङ्गवचनानि' इत्येतन्न भवतीत्यर्थः। द्वन्द्व उदाहर
कुक्कुटमयूर्याविमे इति। अयं च इयं च इमे इत्यत्र 'त्यदादितः शेषे' इति पुं
स्त्वं न भवति, किंतु विशेष्यनिघ्नतैव। यद्यपि द्वन्द्वे उभयपदार्थप्रधानत्वाद् उभ

---

श्वशुरशब्दयोरिव मातृश्वश्रूशब्दयोः केवलयोरुक्तविषये प्रयोगं वारयितुमारम्भ
सूत्रद्वयम्, अनभिधानमाश्रित्य प्रत्याख्यानस्यानुचितत्वादिति। मातापितरावि
'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति स्मृतेर्मातुरभ्यर्हितत्वात्पूर्वनिपातः।
ऋतः—' इत्यानङ्। श्वश्रूश्वशुराविति। 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकी
इति स्मृतेः श्वश्र्वा अभ्यर्हितत्वात्पूर्वनिपातः। त्यदादीनि सर्वैः। सर्वैः
त्यदादिभिन्नैरपि सहोक्तौ यथा स्यात्। प्रत्यासत्त्या 'त्यदादिभिरेव सहोक्तौ'
मा भूत्। यत्परमिति। शब्दपरविप्रतिषेधादिति भावः। त्यदादित
आद्यादित्वात्तसिः। 'त्यदादीनां शेषे सह विवक्षिते यः पुमान्, यच्च नपुंसकम्,
लिङ्गप्रतिपादकानि भवन्ति' इति वाच्यमित्यर्थः। कानीत्याङ्क्षायामर्थात्त्यदादी

तरुणेषु स्त्री। (१-२-७३) एषु सहविवक्षायां स्त्री शिष्यते। 'पुमान् स्त्रिया' (सू ९३३) इत्यस्यापवादः। गाव इमाः। ग्राम्य इति किम्। रुरव इमे।

---

विशेष्यम्, तथापि परवल्लिङ्गम्' इति परपदलिङ्गत्वात्तदधीनतैव विशेषणस्येति बोध्यम्। नच अयं च इयं च इत्यत्र स्त्रीशेष एव न भवति, 'पुमान् स्त्रिया' इत्युक्तत्वात्। अतः पुंनपुंसकतः लिङ्गविधेः प्रसक्तिः कथमिति वाच्यम्, 'परवल्लिङ्गम्' इति हि द्वन्द्वतत्पुरुषयोः परवल्लिङ्गविधिः। अतः द्वन्द्वविशेषणस्य तत्पुरुषविशेषणस्य चानुप्रयोगे तदेव लिङ्गमिति भाष्यकैयटयोः स्थितम्। ततश्च 'कुक्कुटमयूर्याविमे' इति उदाहरणे अयं च इयं च इति विग्रहे 'पुमान् स्त्रिया' इति पुंशेषेऽपि 'परवल्लिङ्गम्' इति विशेषणत्वात् स्त्रीलिङ्गत्वे सति तस्य 'त्यदादितः' इति पुंवत्त्वं प्राप्तमनेन निषिध्यत इति नानुपपत्तिः। क्वचिन्मूलपुस्तकेषु तु मयूरीकुक्कुटाविमावित्यपि दृश्यते। तत्तु प्रकृतानुपयुक्तम्, अत्र मयूरीकुक्कुटाविति द्वन्द्वार्थस्य पुंलिङ्गतया इयं चायं च इमाविति तद्विशेषणस्यानुप्रयुज्यमानस्यापि'पुमान् स्त्रिया' इति परिशिष्टस्य पुंलिङ्गस्य इदम्शब्दस्य स्त्रीत्वाप्रसक्त्या तत्र 'त्यदादितः शेषे' इति पुंस्त्वविधेरप्रवृत्तत्वेन 'अद्वन्द्वतत्पुरुषविशेषणानाम्' इति निषेधस्यानुपयोगात्। तत्पुरुषे उदाहरति—तच्चेति। पिप्पल्या अर्धम् अर्धपिप्पली। 'अर्धं नपुंसकम्' इति तत्पुरुषः। अर्धपिप्पली च पिप्पल्यर्धं च अर्धपिप्पल्यौ। तच्च सा च ते। तत्र पिप्पल्यर्धशब्दविशेष्याभिप्रायं तदिति नपुंसकत्वम्। सेति स्त्रीत्वं तु अर्धपिप्पलीति विशेष्याभिप्रायम्। अत्र 'पुमान् स्त्रिया' इत्यस्य नैव प्रसक्तिः। किंतु 'नपुंसकमनपुंसकेनैकवत्' इति नपुंसकं शिष्टम्। तत्र 'परवल्लिङ्गम्' इति स्त्रीत्वम्। तस्य स्त्रीलिङ्गतया तद्विशेषणस्यापि 'परवल्लिङ्गम्' इति स्त्रीत्वम्। तस्य 'त्यदादितः शेषे' इति नपुंसकत्वं प्राप्तं निषिध्यते। एवं च ते इति स्त्रीलिङ्गमेव सिध्यति। यद्यपि स्त्रीत्वे नपुंसकत्वे वा ते इति द्विवचनस्य न कोऽपि विशेषः तथाप्यर्धपिप्पल्यस्ताः इत्युदाहार्यम्। तच्च तच्च सा चेति विग्रहः। ग्राम्यपशु। एष्विति। तरुणभिन्नेषु ग्राम्याणां पशूनां संघेष्वित्यर्थः। इह अनपुंसकेनेत्यनुवर्तनादाह—पुमान् स्त्रियेत्यस्यापवाद इति। गौश्च गौश्च गौश्च इति पुंलिङ्गस्त्रीलिङ्गेषु गोशब्देषु सहविवक्षितेषु 'पुमान् स्त्रिया' इत्येतद्बाधित्वा स्त्री शिष्यत इति भावः। ननु स्त्रीशेषे पुंशेषे वा न

---

अस्यापवादमाह—अद्वन्द्वेति। द्वन्द्वादिविशेषणानां पूर्वोक्तं नास्ति, किं तु विशेष्यनिघ्नतैवेत्यर्थः। नन्वेवं 'कुक्कुटमयूर्यौ' इत्यत्र उभयपदार्थप्रधानत्वेन उभयोरपि विशेष्यत्वाद् विशेष्यनिघ्नतायामपि 'कुक्कुटमयूर्याविमे' इति नियमतो न स्यादिति चेत्—अत्र नव्याः—'परवल्लिङ्गम्—' इत्यनेन द्वन्द्वतत्पुरुषयोरुत्तरपदलिङ्गवत्त्वादुत्तरपदलिङ्गस्यैव द्वन्द्वतत्पुरुषप्रतिपाद्यत्वेन तल्लिङ्गाधीनतैवानुप्रयोगस्येति न काचिदनुपपत्तिरिति। मयूरीकुक्कुटाविमाविति। प्रकृतानुपयुक्तमप्येतत्प्रसङ्गादुक्तम्। तच्चेति। पिप्पल्यर्धम्। सा चेति। अर्धपिप्पली। तत्पुरुषविशेषणमुदाहरति—अर्धपिप्पल्यौ ते इति। यद्यपि स्त्रीनपुंसकसाधारणतः 'ते' इति प्रयोगः, तथापि 'तच्च तच्च सा च अर्धपिप्पल्यस्ताः' इत्याद्युदाहरणमह्यम्। ग्राम्य। ग्रामे भवा ग्राम्याः। 'ग्रामादखञौ' इति यः। लिङ्गद्वयेऽपि 'गावः' इति रूपस्य समानत्वात् स्त्रीलिङ्गशेषस्य फल-

पशुग्रहणं किम् । ब्राह्मणा इमे । सङ्घेषु किम् । एतौ गावौ । अतरुणेषु कि
वत्सा इमे । 'अनेकशफेष्विति वाच्यम्' (वा ८०५) । अश्वा इमे । इह
त्रैकशेषे कृतेऽनेकसुबन्ताभावाद् द्वन्द्वो न । तेन शिरसी शिरांसि इत्यादौ समा
त्यन्तोदात्तः प्राण्यङ्गत्वादेकवद्भावश्च न । पन्थानौ पन्थानः इत्यादौ समासान्तो

इत्येकशेषप्रकरणम् ।

—:०:—

कोऽपि रूपभेद इत्यत आह—इमा इति । अनुप्रयोगे रूपभेदः फलमिति भा
'त्यदादितः शेषे' इति न भवति, 'गाव इमाः' इति भाष्यप्रयोगादित्याहुः ।
इमे इति । रुरुः कृष्णाख्यो मृगः । अग्राम्यपशुत्वान्न स्त्री शिष्यते । किंतु
स्त्रिया' इत्येकशेषः । ततश्चानुप्रयोगे इमे इति पुंलिङ्गत्वमेव । ब्राह्मणा इमे
ब्राह्मणी च ब्राह्मणाश्चेति विग्रहः । अपशुत्वान्न स्त्री शिष्यते । किंतु 'पुमान् स्त्रि
इत्येकशेषः । अन्यथा ब्राह्मण्यः इमा इति स्यात् । एतौ गावाविति । स्त्री
पुंलिङ्गयोः सहोक्तौ असंघत्वान्न स्त्री शिष्यते । संघशब्दो हि बहूनां समुदाये
अन्यथा एकशेषस्यानेकविषयत्वादेवानेकपरिग्रहे सिद्धे किं तेनेति भावः । स्त्री
एते इति अनुप्रयोगे रूपं स्यात् । वत्सा इमे इति । वत्साश्च वत्साश्च
विग्रहः । तरुणत्वान्न स्त्री शिष्यते । अन्यथा वत्सा इमा इत्यनुप्रयोगः स्या
अनेकशफेष्विति वाच्यम् । वार्तिकमिदम् । एकशफा अश्वादयः, तेषां सङ्घे
ग्राम्यपश्विति न भवति । अश्वा इमे इति । एकशफत्वान्न स्त्री शिष्यते । तत
नुप्रयोगे पुंलिङ्गत्वमिति भावः । ननु 'सरूपाणाम्' इति सूत्रे 'तिष्यपुनर्वस्वोर्नक्षत्र
इत्यतः द्वद्वग्रहणानुवृत्त्या द्वन्द्वे एकशेष इति भाष्यात् कृते द्वन्द्वे एकशेषः स्यादि
आह—इहेति । इहोदाहृतेषु एकशेषविषयेषु सर्वत्र प्रसक्तं द्वन्द्वमनवकाशत्वादे
बाधते । कृते त्वेकशेषेऽनेकाभावाद् द्वन्द्वो नेत्यर्थः । द्वन्द्वसमासे एकशेष इति
तु द्वन्द्वे प्रसक्ते सहविवक्षायामेकशेष इति व्याख्येयम् । ननु कृत एव द्वन्द्वे एक
भवतु, का हानिरित्यत आह—तेनेति । द्वन्द्वात् प्रागेवैकशेषाश्रयणेनेत्यर्थः ।
द्वन्द्वे एकशेषाभ्युपगमे शिरसी इति द्विवचने शिरांसीति बहुवचने च समासस्यान्त

माह—इमा इति । एवं च 'इमे च इमाश्च इमाः' इति स्त्रीलिङ्गशेषः एव भ
न त्वत्र 'त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि' इति पुंलिङ्गशेषः । 'गाव इ
इति भाष्योदाहरणादित्येके । अन्ये तु ग्राम्यपशुसङ्घविषयत्वाविशेषाद् 'गावः' इ
'इमाः' इति च स्त्रीलिङ्गशेष एव स्यादिति नास्ति शङ्कावकाश इत्याहुः । एतौ ग
विति । एकशेषस्यानेकविषयत्वादेवानेकपरिग्रहे सिद्धे सङ्घग्रहणसामर्थ्याद्बहूनां समु
ऽत्र गृह्यत इति भावः । एकशेषे कृत इति । विभक्त्युत्पत्त्यनपेक्षत्वेनान्तरङ्ग
दिति भावः । नन्वेवं विषयभेदाद् 'द्वन्द्वापवाद एकशेषः' इत्युद्घोषः कथं प्रवर्तत
चेत्—अत्राहुः—यद्येकशेषो न स्यात्, तर्हि विभक्तावुत्पद्यमानायां द्वन्द्वः स्
कृते त्वेकशेषे स न भवतीति तार्किकीं प्राप्तिमादायापवादोद्घोष इति । द्वन्द्वो
एतेन 'कृतद्वन्द्वानामेकशेषः' इति भ्रमो निरस्तः । न च तथैवास्तु, फले वि

## अथ सर्वसमासशेषप्रकरणम् । २२ ।

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । परार्थाभिधानं

---

दात्, स्यात्, प्राण्यङ्गत्वात् 'द्वन्द्वश्च प्राणि' इत्यादिना एकवद्भावश्च स्यादित्यर्थः । आदिना शिरोभ्यां शिरोभिरित्यादि संग्रहः । पन्थानाविति । द्वन्द्वे कृते एकशेषाभ्युपगमे पन्थानौ पन्थानः, पथिभ्याम् पथिभिः इत्यादौ 'ऋक्पूः' इत्यप्रत्ययः समासान्तः स्यादिति भावः । नचात्र 'इतोऽत्सर्वनाम' इति सर्वनामस्थाने परेऽकारविधानाल्लिङ्गात् समासान्तः सुपरिहरः । 'इतोऽत्' इत्युक्तेऽपि सावित्यनुवर्त्य पन्था इति सिद्धेरिति वाच्यम्, 'पथो विभाषा' इति समासान्ताभावे अपन्थानावित्यादौ 'इतोऽत्' इति सूत्रस्य सावकाशत्वात् ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायाम् एकशेषप्रकरणं समाप्तम् ।

—०००—

अथ प्रसङ्गात् सर्वसमासोपयुक्तं प्रकीर्णकं प्रकरणमारभते—कृत्तद्धितेति । कृदन्ताः तद्धितघटिताः समासा एकशेषाः सनादिप्रत्ययान्तधातवश्चेति वृत्तयः पञ्चविधा इत्यर्थः । वृत्तिसामान्यलक्षणमाह—परार्थाभिधानं वृत्तिरिति । 'समर्थः पदविधिः' इति सूत्रे भाष्ये स्थितमेतत् । अभिधानमिति करणे ल्युट् । सामान्ये नपुंसकम् । विग्रहवाक्यावयवपदार्थेभ्यः परः अन्यः योऽयं विशिष्टैकार्थः तत्प्रतिपादिका वृत्तिरित्यर्थः । प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन प्रथमविगृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादिका वृत्तिरिति यावत् । समुदायशक्तिश्च 'समर्थः पदविधिः' इति परिभाषया लभ्या । तत्र समासतद्धितयोः पदविधित्वं स्पष्टमेव, 'सुप्सुपा' इत्यनुवर्त्य समासविधानात्, सुबन्तात्तद्धितोत्पत्तेः वक्ष्यमाणत्वात् । कृतामपि केषांचित् 'कर्मण्यण्' इति उपपदनिमित्तकानां पदविधित्वमस्त्येव । 'सुप आत्मनः क्यच्' इत्यादीनामपि पदविधित्वमस्त्येव । एकशेषविधावपि द्वन्द्व इत्यनुवृत्तेः द्वन्द्वः

---

भावादिति वाच्यमित्याह—तेनेति । पन्थानाविति । न चात्र 'इतोऽत्सर्वनामस्थाने' इति लिङ्गात्समासान्तः सुपरिहरः, 'इतोऽत्' इत्युक्तेऽपि 'सौ' इत्यनुवृत्त्या 'पन्थाः' इति सिद्धेरिति वाच्यम् । 'पथो विभाषा' इति समासान्ताभावे 'अपन्थानौ' इत्यादौ 'इतोऽत्–' इति सूत्रस्य सावकाशत्वात् । इति तत्त्वबोधिन्याम् एकशेष प्रकरणम् । प्रसङ्गादाह—

—०००—

कृत्तद्धितेत्यादि । पञ्च वृत्तय इति । पञ्चनां 'वृत्तिः' इति पूर्वाचार्याणां संज्ञा इहाप्याश्रीयत इति भावः । तल्लक्षणमाह—परार्थेति । प्रत्ययान्तर्भावेनापरपदार्थान्तर्भावेन वा यो विशिष्टोऽर्थः स परार्थः । स चाभिधीयते येन तत्परार्था-

वृत्तिः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स द्विविधः । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः । प्रयोगानर्होऽसाधुरलौकिकः । यथा राज्ञः पु राजन् अस् पुरुष सु इति । अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा समासश्चतुर्विध इति तु प्रायोवादः । अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिक बहिर्भूतानामपि 'सह सुपा' (सू ६४९) इति समासविधानात् । पूर्वपद प्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्री उभयपदार्थप्रधानो द्वन्द्वः, इत्यपि प्राचां वादः प्रायोऽभिप्रायः । सूप उन्मत्तगङ्गम् इत्याद्यव्ययीभावे अतिमालादौ तत्पुरुषे, द्वित्राः इत्यादिबहुव्री

---

विषये तद्विधानाद् एकार्थीभावोऽस्त्येव इति मञ्जूषादौ विस्तरः । वृत्त्यर्थावबो मिति । यद्यपि वृत्तावेव समुदायशक्त्या विशिष्टैकार्थप्रतिपादकता, नतु वाक्ये समर्थसूत्रे भाष्ये प्रपञ्चितम् । तथापि समासवृत्तियोग्यविभक्त्यन्तपदानां पृथक्प्र मानानां समूहो विग्रहवाक्यमिति बोध्यम् । परिनिष्ठितत्वादिति । व्याक संस्कृतत्वादित्यर्थः । प्रयोगानर्ह इति । व्याकरणसंस्कृतत्वाभावादित्य यथेत्युदाहरणप्रदर्शने । राज्ञः पुरुष इति । लौकिकविग्रहवाक्यमिति शे राजन् अस् पुरुष सु इति । अलौकिकविग्रहवाक्यमिति शेषः । अवि नित्यसमास इति । लौकिकविग्रहवाक्यरहित इत्यर्थः, समासस्य नित्यत्वा भावः । अस्वपदेति । समस्यमानपदसमानार्थकपदान्तरकृतविग्रहो वा नित्यस इत्यर्थः । संज्ञाविषयसमासे तु वाक्येन संज्ञानवगमेऽपि वृत्तिघटकपदज्ञा समस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव । तत्र समासनित्यत्ववादस्तु वाक् वृत्तिसमानार्थकत्वाभावाद् गौण इत्याहुः । चतुर्विध इति । अव्ययीभावः, तत्पु बहुव्रीहिः, द्वन्द्वश्चेति चतुर्विध इत्यर्थः । प्रायोवाद इति । प्रायस् इत्य बाहुल्ये । बाहुल्याभिप्रायकश्च तस्य चातुर्विध्यप्रवाद इत्यर्थः । कुत इत्यत आह अव्ययीभावेति । बहिर्भूतानामपीति । समासानामिति शेषः । प्रायो प्राय इति । बाहुल्यतात्पर्यक इत्यर्थः । सूपप्रतीति । इह द्वन्द्वे चेत्यन श्रुतमभावादिति पदम् अव्ययीभावे इत्यनन्तरं, तत्पुरुषे इत्यनन्तरं, बहुव्रीहावित्यन चान्वेति । सूपप्रतीत्यव्ययीभावे उत्तरपदार्थप्रधानतया, उन्मत्तगङ्गं देशः, लोहित देशः, इत्यव्ययीभावेऽन्यपदार्थप्रधानतया पूर्वपदार्थप्राधान्याभावादित्यर्थः । अतिमाल तत्पुरुषे पूर्वपदार्थप्रधानतया उत्तरपदार्थप्राधान्याभावादित्यर्थः । द्वित्रा इति बहु उभयपदार्थप्रधानतयाऽन्यपदार्थप्राधान्याभावादित्यर्थः । दन्तोष्ठमित्यादिद्वन्द्वे समाह

---

भिधानम् । अत एव तिङन्तं वृत्तिर्न भवति । तत्रैकार्थीभावानभ्युपगमात् । अ 'मृदु पचति' इत्यादौ फले मृदुत्वान्वयो न स्यात् 'सविशेषणानां वृत्तिर्न भवति, वृ च विशेषणयोगो न' इत्यभ्युपगमादित्येके । समर्थसूत्रे कैयटस्त्वाह—'परस्य शब्द योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः । यथा राजपुरुष इ राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते' इति । अविग्रह इ लौकिकविग्रहरहित इत्यर्थः । अस्वपदेति । समस्यमानयावत्पदाघटित इत्यर्थ

दन्तोष्ठम् इत्यादिद्वन्द्वे चाभावात् । तत्पुरुषविशेषः कर्मधारयः । तद्विशेषो द्विगुः । अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव । तत्पुरुषस्य क्वचिदेवेत्युक्तम् । किं च ।

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥

सुपां सुपा, राजपुरुषः । तिङा, पर्यभूषयत् । नाम्ना, कुम्भकारः । धातुना, कटप्रूः, अजस्रम् । तिङां, तिङा, पिबतखादता । खादतमोदता । तिङां सुपा ।

---

स्यैव प्रधानतया उभयपदार्थप्राधान्याभावादित्यर्थः । तत्पुरुषविशेषः कर्मधारय इति । 'तत्पुरुषः समनाधिकरणः कर्मधारयः' इत्युक्तेरिति भावः । तद्विशेषो द्विगुरिति । कर्मधारयविशेष इत्यर्थः । 'संख्यापूर्वो द्विगुः' इत्यादिरिति भावः । अनेकपदत्वमिति । द्वित्रिचतुरादिपदकत्वमित्यर्थः । 'अनेकमन्यपदार्थे' इति बहुव्रीहिगतस्यानेकग्रहणस्य द्वन्द्वविधावप्यनुवृत्तेरिति भावः । क्वचिदेवेति । द्व्यहृजात इत्यादावित्यर्थः । इत्युक्तमिति । भाष्यादाविति शेषः । किंचेति । अव्ययमिदं विशेषान्तरप्रदर्शने । सुपां सुपेति । सुबन्तानां सुबन्तेन तिङन्तेन प्रातिपदिकेन धातुना च समासः । अथेति पूर्ववाक्यव्यवच्छेदे । तिङामिति । तिङन्तानां तिङन्तेन सुबन्तेन च समास इत्येवं षड्विधः समासो ज्ञेय इत्यर्थः । सुपेति । सुपेत्यस्योदाहरणं वक्ष्यत इत्यर्थः । राजपुरुष इति । राज्ञ इत्यस्य षष्ठ्यन्तस्य पुरुष इति सुबन्तेन समासः । तिङेति । सुपां तिङेत्यस्योदाहरणं वक्ष्यत इत्यर्थः । पर्यभूषयदिति । 'सह सुपा' इत्यत्र सहेति योगविभागात् परीति सुबन्तस्य तिङन्तेन समासः । नाम्नेति । सुपां प्रातिपदिकेन समास उदाहरणं वक्ष्यत इत्यर्थः । कुम्भकार इति । 'उपपदमतिङ्' इति कुम्भस्येति षष्ठ्यन्तस्य कारेति प्रातिपदिकेन समासः, 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इत्युक्तेरिति भावः । धातुनेति । सुपां धातुना समासे उदाहरणं वक्ष्यत इत्यर्थः । कटप्रूरिति । 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च' इति वार्तिकेन 'प्रु गतौ' इति धातुना समासो निपातितः नतु तिङन्तेनोपपदसमास इति भ्रमितव्यम्, क्विब्विधाविह सप्तमीनिर्देशाभावेन उपपदत्वाभावात्। अथ सुपां धातुनोदाहरणान्तरमाह—अजस्रमिति । 'नमिकम्पिस्म्यजसकमिहिंसदीपो रः' इति सूत्रे रप्रत्ययविधौ जसधातुना सह नञ्समासो निपातितः । तिङां तिङेति । समासे उदाहरणं वक्ष्यत इत्यर्थः । पिबतखादतेति । मयूरव्यंसकादित्वात् तिङन्तस्य तिङन्तेन समासः । तिङां सुपेति । समासे उदाहरणं वक्ष्यत

---

द्वन्द्वबहुव्रीह्योरेवेति । अनेकग्रहणतदनुवृत्तिभ्यां तद्विधानाद्बहुपदसमासत्वं तयोरेव संभवतीति भावः । क्वचिदेवेति । द्व्यहृजात इत्यादौ । नाम्नेति । प्रातिपदिकेनेत्यर्थः । कुम्भकार इति । अत्र हि सुबुत्पत्तेः प्रागेवोपपदसमासः । कटप्रूः । अजस्रमिति । 'क्विब्वचिप्रच्छि—' इति वार्तिके 'नमिकम्पि—' इति सूत्रे च 'कटप्रूः'

क्रन्त विचक्षणेति यस्यां क्रियायां सा क्रन्तविचक्षणा । एहीडादयोऽन्यपदार्थे । मयूरव्यंसकादौ पाठात्समासः ।

इति सर्वसमासशेषप्रकरणम् ।

---

## अथ सर्वसमासान्तप्रकरणम् । २३ ।

९४० ऋक्पूरब्धूः पथामानक्षे । (५—४—७४) अ अनक्षे इति च्छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः स्यात्, अक्षे या धूस्तदन्तस्य तु न ।

---

इत्यर्थः क्रन्तविचक्षणेति । हे विचक्षण क्रन्त छिन्द्धीत्यर्थः । इह तिङन्तस्य सुबन्तेन समासः कथमित्यत आह—एहीडादय इति । अत्र सुपां तिङन्तेन तिङां सुबन्तेनेत्यस्यापि ग्रहणात् समासस्य षड्विधत्वं चिन्त्यम् । पञ्चविधत्वं युक्तम्, उभयत्रापि सुप्तिङ्घटितत्वाविशेषादित्याहुः । अन्ये तु सुपां तिङन्तेन सुबन्तपूर्वपदकतिङन्तोत्तरपदकसमासस्य ग्रहणम् । तिङां सुबन्तेनेत्यनेन तु तिङन्तपूर्वपदकसुबन्तोत्तरपदकसमासस्य ग्रहणमित्याहुः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां सर्वसमासशेषप्रकरणं समाप्तम् ।

---

अथ सर्वसमाससाधारणसमासान्ता निरूप्यन्ते—ऋक्पूरब्धूः । छेद इति । सूत्रे अ इति लुप्तप्रथमान्तनिर्देश इति भावः । समासान्ता इत्यधिकृतम् । ऋगादिभिः समासो विशेष्यते । तदन्तविधिः । तदाह—ऋगाद्यन्तस्येति । ऋक्, पुर्, अप्, धुर्, पथिन् एतदन्तस्येत्यर्थः । अप्रत्यय इति । अकारात्मकप्रत्यय इत्यर्थः । अक्षे या धूरिति । अक्षसंबन्धिनी या धूरित्यर्थः । सूत्रे संबन्धिनोऽधिकरणत्व-विवक्षया अनक्षे इति सप्तमी । अनक्षे इति च धूर्शब्देनैव संबध्यते, अन्यैरसंभवात्

---

'अजस्रम्' इति निपातनाद्धातुना समासः । पिबतखादतेति । 'आख्यातमाख्यातेन—' इति मयूरव्यंसकादौ पाठात्समासः ।

इति तत्त्वबोधिन्यां सर्वसमासशेषप्रकरणम् ।

---

ऋक्पूरब्धूः । 'अ' इति लुप्तप्रथमैकवचनान्तं, 'समासान्ताः' इति त्वधिकृतम् । तदाह—समासस्याप्रत्ययोऽन्तावयव इति । 'अनक्षे' इत्येतत् सामान्येन श्रुतमपि धुरैव संबध्यते सामर्थ्यात्, नान्यैरित्याशयेन व्याचष्टे—अक्षे या धूरिति तदन्तस्य तु नेति । सूत्रे संबन्धिनोऽधिकरणत्वविवक्षया सप्तमी । तेन अक्षसंबन्धिनी या धूस्तदन्तस्य नेत्यर्थः । यद्यत्र 'अक्षे पूर्वपदे न' इति व्याख्यायेत, 'दृढधूरक्षः' इत्यत्र निषेधो न स्यात् । यदि तु 'अक्षे समासार्थे न' इति व्याख्यायेत, तदा 'अक्षधूः' इत्यत्र न स्यात् । तस्मादुभयसंग्रहार्थमुक्तव्याख्यानमेव ज्यायः ।

अर्धर्चः । अनृचबह्वृचावध्येतर्येव । नेह, अनृक्साम । बह्वृक्सूक्तम् । विष्णोः पूर्विष्णुपुरम् । क्लीवत्वं लोकात् । विमलापं सरः । ९४१ द्व्यन्तरुपसर्गेभ्योऽप ईत् । (६—३—९७) अप इति कृतसमासान्तस्यानुकरणम् । षष्ठ्यर्थे प्रथमा । एभ्योऽपस्य ईत्स्यात् । द्वयोर्गता आपो यस्मिन्निति द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् । 'समापो देवयजन' मिति तु समा आपो यस्मिन्निति बोध्यम् ।

---

भावः । अर्धर्चं इति । ऋचोऽर्धमिति विग्रहः । 'अर्धं नपुंसकम्' इति समासः । अकारः समासान्तः । 'अर्धर्चाः पुंसि च' इति पुंस्त्वम् । अनृचबह्वृचावध्येतर्येवेति । अविद्यमानाः ऋचः यस्येति विग्रहः । अनृचः केवलयजुरध्येता । बहवः ऋचः यस्येति बह्वृचः ऋक्छाखी इत्युदाहरणम् । अध्येतर्येवेति नियमस्य प्रयोजनमाह—नेहेति । अनृक्सामेति । अविद्यमानाः ऋचः यस्मिन्निति विग्रहः । ऋच्यनध्यूढं प्रजापतेर्हृदयं साम । बह्वृक्सूक्तमिति । बहवः ऋचः यस्मिन्निति विग्रहः । अथ पूरशब्दान्तस्योदाहरति—विष्णोरिति । ननु पूरशब्दस्य स्त्रीत्वात् 'परवल्लिङ्गम्' इति विष्णुपुरशब्दस्य स्त्रीत्वं युक्तमित्यत आह—क्लीवत्वं लोकादिति । अथाप्शब्दान्तस्योदाहरति—विमलापं सर इति । विमलाः आपः यस्मिन्निति विग्रहः । द्व्यन्तरुप । कृतसमासान्तस्येति । अकारप्रत्ययान्तस्येत्यर्थः । एभ्य इति । द्वि अन्तर् उपसर्ग एतेभ्य इत्यर्थः । अपस्येति । अकारप्रत्ययान्तस्याप्शब्दस्येत्यर्थः । ईत्स्यादिति । 'आदेः परस्य' इति परिभाषया आदेरकारस्येत्यर्थः । द्वयोर्गता इति । द्वयोः पार्श्वयोर्गता आपो यस्मिन्निति विग्रहः । व्यधिकरणपदो बहुव्रीहिः । अकारप्रत्ययः, ईत्त्वं, सवर्णदीर्घश्च । अन्तरीपमिति । अन्तर्गता आपो यस्मिन्निति विग्रहः । प्रतीपमिति । प्रतिकूला आपो यस्मिन्निति विग्रहः । उपसर्गात् परत्वाद् ईत्त्वम् । समीपमिति । संगता आपो यस्मिन्निति विग्रहः । उपसर्गात् परस्योदाहरणान्तरमिदम् । समापो देवयजनमिति । श्रुतिरेषा । अत्र उपसर्गात् परत्वाभावाद् ईत्त्वं नेति भावः । देवा ईज्यन्ते अस्मिन्निति देवयजनं यज्ञभूमिः । समाप इयि पुंस्त्वं छान्दसम् । भाष्ये तु समाप ईत्त्वं नेत्युक्त्वा समापं नाम देवयजनमित्युदाहृतम् । तत्र समापशब्दो देवयजनविशेषवाच्येव विवक्षितः, 'समीपसमृद्धि' इति निर्देशात्, समीपमिति भाष्ये उदाहरणाच्च । स्वबिति ।

---

अर्धर्च इति । 'अर्धं नपुंसकम्' इति समासः । 'अर्धर्चाः पुंसि च' इति पुंस्त्वम् । अनृगित्यादि । अनुक्तसमासान्तत्वात् 'शेषाद्विभाषा' इति कप्प्रत्यये 'अनृच्कम्' 'बहृच्कम्' इत्यपि बोध्यम् । विष्णुपुरमिति । यद्यपि पुरशब्देन समासेऽप्येतत्सिध्यति, तथापि 'विष्णुपूः' इत्यनिष्टवारणाय सूत्रे पूर्ग्रहणम् । कृतसमासान्तस्येति । 'येन विधिः—' इति सूत्रे 'आपस्तिष्ठन्ति स्वापस्तिष्ठन्ति' इति भाष्यादिति भावः । अन्तरीपमित्यादि । अन्तर्गताः, प्रतिकूलाः, संगताश्चापोऽस्मिन्निति विग्रहः । उपसर्गग्रहणं प्रादेरुपलक्षणार्थम् । समाप इति । अनुपसर्गत्वान्नेत्वमिति भावः । भाष्ये तु 'समाप ईत्वप्रतिषेधो वक्तव्यः' इत्युक्तम् । स च देवयजनरूपविशेषार्थपरः 'समीपसमृद्धि—' इति निर्देशात्, 'समीपम्' इति भाष्योदाहरणाच्चेति ज्ञेयम् । देवयजनमिति ।

कृतसमासान्तग्रहणान्नेह, स्वप् स्वपी । 'अवर्णान्ताद्वा' ( वा ५०४५ ) । प्रेपम् । प्रापम् । प्रापम् । परापम् । ९४२ ऊदनोर्देशे । (६-३-९८) अनोः परस्या ऊत्स्याद्देशे । अनूपो देशः । राजधुरा । अक्षे तु अक्षधूः । दृढधूरक्षः । सखि रम्यपथो देशः । ९४३ अच्प्रत्यन्ववपूर्वात्सामलोम्नः । (५—४—७५) एतत्पूर्वात्सामलोमान्तात्समासादच्स्यात् । प्रतिसामम् । अनुसामम् । अवसामम् ।

---

शोभना आपो यस्येति विग्रहः । 'न पूजनात्' इति समासान्तनिषेधः । समासान्तत्वादीत्त्वं न । स्वपी इति । प्रथमाद्विवचनमिदम् । अवर्णान्ता अवर्णान्तादुपसर्गात् परस्यापस्य ईत्त्वं वा वक्तव्यमित्यर्थः । प्रेपम्, प्रापमिति प्रगता आपो यस्येति विग्रहः । परेपम्, परापमिति । परागता आपो यस्ये विग्रहः । ऊदनोर्देशे । ईत्वस्यापवादः । ऊत् स्यादिति । 'आदेः पर इति ज्ञेयम् । अनूपो देश इति । अनुकूला आपो यस्मिन्निति विग्रहः । स्ययः, ऊत्त्वं सवर्णदीर्घश्च । अनूप इत्यत्र ऊपोऽवग्रहणार्थं दीर्घोच्चारण भाष्यम् । वह्वृचास्तु अनूपो गोमान् गोभिरित्यत्र नावगृह्णन्ति । तदेवम् 'ऋ इति सूत्रगतः अप्शब्दः प्रपञ्चितः । अथ धूर्शब्दान्तस्योदाहरति—राजधुरे राज्ञो धूरिति विग्रहः । धूर्शब्दोत्र राज्ये लाक्षणिकः । अकारप्रत्ययः । 'प लिलिङ्गम्' इति स्त्रीत्वम् । टाप् । अक्षे त्विति । अक्षसंबन्धिनी या धूस्तद अकारप्रत्ययो न । अक्षधूरिति । अक्षो नाम रथावयवदण्डविशेषः, यद श्चक्रे आसज्येते तस्याक्षस्याग्रं धूः । अनेन 'अक्षे समासार्थे धुरो नाकारप्रत्ययः' व्याख्यानेऽत्र निषेधो न स्यादिति सूचितम् । दृढधूरक्ष इति । दृढा धूर्यस्य विग्रहः । एतेनाक्षे पूर्वपदे धुरो नाकारप्रत्यय इति व्याख्याने अत्र निषेधो न स्यादि सूचितम् । तदेवम् 'ऋक्पूः' इति सूत्रे धूर्शब्दः प्रपञ्चितः । अथ पथिन्शब्दस्यो हरति—सखिपथाविति । सखा च पन्थाश्चेति द्वन्द्वः । अकारप्रत्ययः । 'नस्तद्धि इति टिलोपः । सखिपथ इति पाठे तु सख्युः पन्थाः इति तत्पुरुषः । रम्यपथ इ रम्यः पन्था यस्येति विग्रहः । अच्प्रत्यन्वव । एतत्पूर्वादिति । प्रति, अ अव एतत्पूर्वकादित्यर्थः । प्रतिसाममिति । प्रतिगतं सामेति विग्रहः । 'नस्तद्धिते' इति टिलोपः । अनुसाममिति । अनुगतं सामेति विग्रहः । अच् टिलोपः । अवसाममिति । अवकृष्टं सामेति विग्रहः । अच्, टिलोप प्रतिलोममिति । प्रतिगतं लोमेति विग्रहः । अनुलोममिति । अनु

---

देवा इज्यन्ते अस्मिन्निति व्युत्पत्त्या यज्ञभूमिः । स्वबिति । 'न पूजनात्' इति स सान्ताभावः । अवर्णान्ताद्वेति । 'द्व्यन्तर्—' इति सूत्रे 'ईत्वमनवर्णात्' इ वक्तव्यम् । इह माभूत् 'प्रापं परापम्' इति भाष्योक्तेः, 'गतिश्च' इति सूत्रे परेपम्' इति भाष्योक्तेश्चेति भावः । ऊदनोः । दीर्घोच्चारणं क्वचिच्छाखायाम ग्रहार्थम् । बह्वृचास्तु 'अनूपे गोमान् गोभिः' इत्यत्रानूपशब्दं नावगृह्णन्ति । अ इति । अनुगता आपोऽस्मिन्नित्यनूपो देशः । 'जलप्रायमनूपं स्यात्' इत्यम प्रतिसाममिति । अव्ययीभावः प्रादिसमासो बहुव्रीहिर्वा । एवमनुसामादावप्यूह

लोमम् । अनुलोमम् । अवलोमम् । 'कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते' (वा ५०४६) कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । द्विभूमः प्रासादः । 'संख्याया नदीगोदावरीभ्यां च' (वा ५०४७) । पञ्चनदम् । सप्तगोदावरम् । अच् इति योगविभागादन्यत्रापि । पद्मनाभः । ९४४ अक्ष्णोऽदर्शनात् । (५—४—७६) अचक्षुपर्यायादक्ष्णोऽच्स्यात्समासान्तः । गवामक्षीव गवाक्षः । ९४५ अचतुर-विचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । (५—४—७७) एते पञ्चविंशतिरजन्ता निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि चत्वारि यस्य अचतुरः । विचतुरः । सुचतुरः । 'त्र्युपाभ्यां चतुरोऽजिष्यते' (वा ३३५१) ।

---

लोमेति विग्रहः । अवलोममिति । अवगतं लोमेति विग्रहः । सर्वत्राच्, टिलोपः । कृष्णोदगिति । नेदं वार्तिकम् । किन्त्वच्प्रत्ययेत्यत्र अजिति योगविभागमूलाभियुक्तोक्तिरेषा । कृष्णेति । कृष्णा भूमिः यस्य, उदीची भूमिः यस्य, पाण्डुः भूमिः यस्य, द्वे भूमि यस्य, तिस्रो भूमयः यस्येति च विग्रहः । प्रासादः सर्वत्र विशेष्यः । संख्याया इति । इदमप्यजिति योगविभागमूलकमेव । संख्यायाः परो यो नदीशब्दः गोदावरीशब्दश्च ताभ्यामजिष्यत इत्यर्थः । पञ्चनदमिति । पञ्चानां नदीनां समाहार इति विग्रहः । सप्तगोदावरमिति । सप्तानां गोदावरीणां समाहार इति विग्रहः । 'नदीभिश्च' इत्यव्ययीभावः । अचि 'यस्येति च' इति लोपः । 'नाव्ययीभावात्' इत्यम् । अन्यत्रापीति । अजिति शेषः । पद्मनाभ इति । पद्मं नाभौ यस्येति विग्रहः । वस्तुतस्तु योगविभागस्य भाष्येऽदर्शनात् पृषोदरादित्वमेवोचितम् । अक्ष्णोऽदर्शनात् । अदर्शनादिति च्छेदः । दृश्यतेऽनेनेति दर्शनं चक्षुः । करणे ल्युट् । अचक्षुर्वाचिन इति फलितम् । तदाह—अचक्षुःपर्यायादिति । गवामक्षीवेति । अक्षिशब्दस्तत्सदृशे लाक्षणिक इति सूचयितुमिवशब्दः प्रयुज्यते । मुख्यवृत्त्या चक्षुर्वाचकत्वाभावादच् । पुंस्त्वं लोकात् । अचतुर । आद्यास्त्रयो बहुव्रीहय इति । बहुव्रीहय एवेत्यर्थः । भाष्यवाक्यमिदम् । अचतुर इति । 'नञोऽस्त्यर्थानाम्' इति विद्यमानपदलोपः । विचतुर इति । विगतानि चत्वारि यस्येति विग्रहः । सुचतुर इति । सु शोभनानि चत्वारि यस्येति विग्रहः । 'न पूजनात्' इति निषेधो बाध्यते । त्र्युपाभ्यामिति । वार्तिकमिदम् ।

---

कृष्णोदगिति । 'अच्' इति योगविभागेन गतार्थमिदम् । एवमुत्तरवार्तिकमपि । कृष्णभूम इत्यादयो बहुव्रीहयः । पद्मनाभ इति । 'पद्मं नाभावस्य' इति विग्रहः । गड्वादित्वात्सप्तम्यन्तस्य परनिपातः । 'पद्माकारा नाभिरस्य' इति वा । एवमूर्णनाभोऽपि ज्ञेयः । तत्र तु 'ङ्यापोः संज्ञाछन्दसोः' इति ह्रस्वो विशेषः । अक्ष्णो । दृश्यतेऽनेनेति दर्शनं चक्षुः, तद्वाचिनोऽक्षिशब्दस्य पर्युदासादमुख्यस्य ग्रहणमित्याशयेनाह—अचक्षुःपर्यायादिति । गवाक्ष इति । गावः किरणाः । अक्षिशब्दो रन्ध्रवाची, षष्ठीसमासः । अचतुर । निपात्यन्त इति । निपातनफलं तु समासविशेषनियमः,

त्रिचतुराः । चतुर्णां समीपे उपचतुराः । तत एकादश द्वन्द्वाः । स्त्रीपुं
धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्
दाराश्च गावश्च दारगवम् । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् । निपातनाट्टि
पदष्ठीवम् । निपातनात्पादशब्दस्य पद्भावः । नक्तं च दिवा च नक्तन्दिवम् ।
च दिवा च रात्रिन्दिवम् । रात्रेर्मान्तत्वं निपात्यते । अहनि च दिवा चाहर्दि
वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । सरजसमिति साकल्येऽव्ययीभा

---

त्रि उप आभ्यां परो यश्चतुर्शब्दस्तस्मादजिष्यते । त्रिचतुरा इति । त्रयो
चत्वारो वेति विग्रहः 'संख्ययाव्ययासन्न' इति बहुव्रीहिः । 'बहुव्रीहि संख्येये
इति डचं बाधित्वाऽच् । डचि तु टिलोपः स्यात् । उपचतुरा इति । त्रयः
वेत्यर्थः 'संख्ययाव्यय' इति बहुव्रीहिः । अच् । तत एकादश द्वन्द्वा
द्वन्द्वा एवेत्यर्थः । इदमपि भाष्यवाक्यम् । स्त्रीपुंसाविति । स्त्री च पुमां
विग्रहः । अच् । स्त्रीपुमांसाविति न भवति । धेन्वनडुहाविति । धेनुश्च
वांश्चेति विग्रहः । अच् । धेन्वनड्वाहाविति न भवति । समाहारद्वन्द्वे तु 'द्वन्द्वा
षहान्तात्' इत्येव सिद्धम् । ऋक्सामे इति । ऋक्च साम चेति विग्रहः ।
टिलोपः । ऋक्सामनी इति न भवति । वाङ्मनसे इति । वाक् च मन
विग्रहः । अच् । वाङ्मनसी इति न भवति । अक्षिभ्रुवमिति । अच् 'प्रा
त्वादेकवत्त्वम् । अक्षिभ्रु इति न भवति । दारगवमिति । समाहारद्वन्द्वात्
दारगु इति न भवति । इतरेतरयोगद्वन्द्वे तु दारगावः । ऊर्वष्ठीवमिति । प्रा
त्वादेकवत्त्वम् । ऊरू सक्थिनी । अष्ठीवन्तौ जानुनी । 'सक्थि क्लीबे पुमानूरु'
'जानूरुपर्वाष्ठीवदस्त्रियाम्' इति चामरः । नन्वडित्वादनान्तत्वाच्च कथं टिलोप
आह—निपातनाट्टिलोप इति । पदष्ठीवमिति । पादौ चाष्ठीवन्तौ
द्वन्द्वादच् । प्राण्यङ्गत्वादेकवत्त्वम् । नन्वभत्वात् कथमिह पादशब्दस्य पद्भाव
आह—निपातनादिति । नक्तमिति मान्तमव्ययम् । दिवेत्याकारान्तमव्य
नक्तंदिवेति द्वन्द्वादच् । 'यस्येति च' इत्याकारलोपः, 'अव्ययीभावश्च' इत्यव्य
नपुंसकत्वं च । 'नाव्ययीभावात्' इत्यम्भावः । मान्तत्वमिति । रात्रौ च
चेति द्वन्द्वे कृते सुब्लुकि कृते रात्रेर्मान्तत्वं निपात्यत इत्यर्थः । 'यस्येति च' इति आ
लोपः, अम्भावश्च । अहर्दिवमिति । द्वन्द्वे कृते सुब्लुकि, लुका लुप्ते प्रत्यय
नेति प्रत्ययलक्षणाभावाद् 'रोऽसुपि' इति रत्वम्, अच्, 'यस्येति च' इत्याका
अम्भावश्च । नन्वहन्शब्दार्थस्य दिवाशब्दार्थस्य च एकत्वात् साहित्याभावात्
द्वन्द्वः । अहर्व्यक्तिभेदमादाय द्वन्द्वप्रसक्तावपि 'विरूपाणामपि समानार्थकानाम्'

---

टिलोपादिकं च तदाह—आद्या इति । बहुव्रीहय इति । बहुव्रीहय एवे
तेन तत्पुरुषे अचत्वारो विचत्वार इत्येव भवतीति भावः । एवमुत्तरत्राप्यव
मूह्यम् । त्रिचतुरा इति । त्रयश्चत्वारो वेति विग्रहः । 'संख्ययाव्ययासन्ना—
बहुव्रीहिः । 'बहुव्रीहौ संख्येये' इति डचोऽपवादोऽच् । अक्षिभ्रुवमिति । प्रा
त्वादेकवत् । ऊरू चाष्ठीवन्तौ चेति । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः ।

बहुव्रीहौ तु सरजः पङ्कजम् । निश्चितं श्रेयो निःश्रेयसम् । तत्पुरुष एव । नेह । निःश्रेयान्पुरुषः । पुरुषस्यायुः पुरुषायुषम् । ततो द्विगुः । द्व्यायुषम् । त्र्यायुषम् । ततो द्वन्द्वः । ऋग्यजुषम् । ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपमुपशुनम् । टिलोपाभावः सम्प्रसारणं च निपात्यते । गोष्ठ श्वा गोष्ठश्वः ।

९४६ ब्रह्महस्तिभ्यां वर्चसः । ( ५-४-७८ ) अच्स्यात् । ब्रह्मवर्चसम् ।

---

शेषो दुर्वार इत्यत आह—वीप्सायां द्वन्द्वो निपात्यत इति । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्वचने कृते एकशेषं वाधित्वा द्वन्द्वो निपात्यत इत्यर्थः । सरजसमिति । रजोऽप्यपरित्यज्य इत्यस्वपदविग्रहः । रजः धूलिः । साकल्ये सहशब्दस्य रजश्शब्देनाव्ययीभावः । 'अव्ययीभावे चाकाले' इति सहशब्दस्य सभावः । अच् । अव्ययीभाव इति । भाष्ये तथा वचनाद् अव्ययीभावस्य ग्रहणमिति भावः । सरजः पङ्कजमिति । रजोभिः परागैः सहेति विग्रहे 'तेन सहेति तुल्ययोगे' इति वहुव्रीहिः । 'वोपसर्जनस्य' इति सहस्य सः वहुव्रीहित्वाद् नाच् । निःश्रेयसमिति । कर्मधारयादच् । तत्पुरुष एवेति । तथा भाष्यादिति भावः । निःश्रेयानिति । निश्चितं श्रेयो यस्येति वहुव्रीहित्वान्नाच् इति भावः । 'ईयसश्च' इति निषेधान्न कप् । पुरुषायुषमिति । षष्ठीसमासाद् अजिति भाष्यम् । ततो द्विगुरिति । भाष्यवाक्यमिदम् । द्व्यायुषम्, त्र्यायुषमिति । द्वयोरायुषोः समाहार इति, त्रयाणामायुषां समाहार इति च विग्रहः । 'तद्धितार्थे' इति द्विगोरच् । ततो द्वन्द्व इति । भाष्यवाक्यमिदम् । ऋग्यजुषमिति । ऋचश्च यजूंषि च एषां समाहार इति समाहारद्वन्द्वः । ततस्त्रयः कर्मधारया इति । तथा भाष्यादिति भावः । जातोक्ष इति । जातश्चासावुक्षा चेति विग्रहः । अचि सत्युक्षन् शब्दे टिलोपः । महोक्ष इति । महांश्चासावुक्षा चेति विग्रहः । 'आन्महतः' इत्यात्त्वम् । अचि टिलोपः । वृद्धोक्ष इति । वृद्धश्चासावुक्षा चेति विग्रहः । अचि टिलोपः । उपशुनमिति । अव्ययीभावादच्, तथा भाष्यात् । नन्वत्र 'नस्तद्धिते' इति टिलोपः कुतो न स्यात् । 'अतद्धिते' इति पर्युदासात् 'श्वयुवमघोनामतद्धिते' इति कथं वा संप्रसारणं स्यादित्यत आह—टिलोपाभावः संप्रसारणं च निपात्यत इति । गोष्ठश्व इति । सप्तमीसमासादजिति भाष्यम् । अत एव भाष्यात् सप्तमीसमासः । टिलोपः । 'अतद्धिते' इति निषेधान्न संप्रसारणम् । षष्ठीतत्पुरुषे तु गोष्ठश्वा । ब्रह्म । शेषपूरणेन सूत्रं व्याचष्टे—अच्स्यादिति । ब्रह्मवर्चसमिति । ब्रह्मणो वर्च

---

सपर्वाष्ठीवदस्त्रियाम्' इति च । ऊर्वष्ठीवम् । पदष्ठीवमिति । प्राण्यङ्गत्वादेकवद्भावः । द्वन्द्वो निपात्यत इति । 'विरूपाणामपि—' इत्येकशेषं वाधित्वेति शेषः । सरजसमिति । 'अव्ययीभावे चाकाले' इति सहस्य सभावः । सरजः पङ्कजमिति । 'सरजसमकरन्दनिर्भरासु' इति माघप्रयोगस्तु चिन्त्य इति भावः । निश्श्रेयानिति । 'निश्चितं श्रेयो येन' इति विग्रहः । 'निश्श्रेयस्कः' इति केषांचित्प्रत्युदाहरणमशुद्धम् । 'ईयसश्च' इति कपो निषेधात् गोष्ठे । श्वेति । एतेन 'सप्तमीतत्पुरुष एव' इति नियमो दर्शितः, तेन षष्ठीतत्पुरुषे 'गोष्ठश्वा' इत्येव । ब्रह्मवर्चसमिति । षष्ठी-



१३

हस्तिवर्चसम् । 'पल्यराजभ्यां चेति वक्तव्यम्' (वा ३३५२)। पल्यवर्चसम्
राजवर्चसम् । ९४७ अवसमन्धेभ्यस्तमसः । ( ५–४–७९ ) अवतमसम्
सन्तमसम् । अन्धयतीत्यन्धम्, पचाद्यच्, अन्धं तमोऽन्धतमसम् । ९४८
श्वसो वसीयःश्रेयसः । ( ५–४–८० ) वसुशब्दः प्रशस्तवाची, तत ईयसुन्
वसीयः । श्वस्शब्द उत्तरपदार्थप्रशंसामाशीर्विषयमाह । मयूरव्यंसकादित्वात्समा-
सः । श्वोवसीयसम् । श्वःश्रेयसं ते भूयात् । ९४९ अन्ववतप्ताद्रहसः (५–४–८१)

---

इति विग्रहः । हस्तिवर्चसमिति । हस्तिनो वर्च इति विग्रहः । पल्यराज-
मिति । आभ्यां परो यो वर्चश्शब्दः तस्मादपि अजिति वक्तव्यमित्यर्थः । प
वर्चसमिति । पलं मांसम्, तदर्हतीति पल्यः, मांसभोजीत्यर्थः, तस्य वर्च इति विग्र
राजवर्चसमिति । राज्ञो वर्च इति विग्रहः । अवसमन्धेभ्यस्तमसः ।
सम् अन्ध एभ्यः परो यस्तमश्शब्दस्तस्मादच्स्यादित्यर्थः । अवतमसमि
अवहीनं तम इति विग्रहः । प्रादिसमासः । संतमसमिति । संततं तम
विग्रहः । प्रादिसमासः । अन्धयतीत्यन्धमिति । 'अन्ध दृष्ट्युपघाते' चुरादिः,
प्रतिबध्नातीत्यर्थः । पचाद्यजिति । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति प
दित्वप्रयुक्तोऽच्प्रत्यय इत्यर्थः । अचि णिलोपेऽन्धमिति रूपम् । गाढमित्यर्थः फलं
गाढस्यैव तमसो दर्शनप्रतिबन्धकत्वात् । अन्धतमसमिति । कर्मधारयात्
श्वसः । श्वस् इत्यव्ययात् परो यो वसीयश्शब्दः श्रेयश्शब्दश्च तस्मादच् स्यादि
वसुशब्दः प्रशस्तवाचीति । 'यं कामयेत वसीयान् स्यात्' इत्यादौ तथा द
दिति भावः । तत इति । अतिशयेन वसुरिति विग्रहे 'द्विवचनविभज्योप
इतीयसुनि, 'तुरिष्ठेमेयस्सु' इत्यनुवृत्तौ टेरिति टिलोपे वसीयश्शब्द इत्यर्थः । श्वस्
इति । यद्यपि श्वस्शब्दः कालविशेषवाची, तथापि प्रकृते शब्दशक्तिस्वभावादुत्तर
थंभूतां प्रशंसाम् आशीर्विषयं द्योतयतीत्यर्थः । आशिषो विषय आशीर्विषयः, त
षष्ठीसमासः । प्रशंसाविशेषणम् । विषयशब्दस्य नित्यपुंलिङ्गत्वाद् न स्त्रीलिङ्ग
एवं च श्वस्शब्द उत्तरपदार्थगतप्राशस्त्यद्योतक इति फलितोऽर्थः । ननु
श्वस्शब्दस्योत्तरपदार्थगतप्राशस्त्यद्योतकत्वेऽप्युत्तरपदसामानाधिकरण्याभावा कथं
षणसमास इत्यत आह—मयूरेति । तथाचाशीर्लिङादिप्रयोग एव अस्य साधुत्व
भिप्रेत्योदाहरति—श्वोवसीयसमिति । अतिशयेन प्रशस्तमित्यर्थः । श्वः
मिति । अतिशयेन प्रशस्तमिति विग्रहे प्रशस्तशब्दादीयसुन्, प्रशस्यस्य

---

तत्पुरुष । एवं हस्तिवर्चसमपि । पल्येति । 'पलं मांसमर्हति' इति पल्यो मांस
तदीयं वर्चः पल्यवर्चसम् । अवतमसमित्यादि । अवहीनं संततं च तमः
विग्रहः । अन्धयतीति । 'अन्ध दृष्ट्युपघाते' चुरादिः । अन्धमिति ।
मित्यर्थः । श्वसो । 'वसुशब्दात्प्रशस्तवचनादीयसुन्' इत्याकरविरुद्धं व्याख्या
उपेक्ष्या इति ध्वनयति—वसुशब्द इति । वसीय इति । 'यः कामयेत् व
स्याम्' इति श्रौतप्रयोगोऽप्यत्रानुकूल इति भावः । श्वस्शब्द इति । कालवाच्य
प्रकृते त्वर्थविशेषपरः । शक्तिस्वाभाव्यात्तमेवाह—उत्तरपदार्थप्रशंसामि

अनुरहसम् । अवरहसम् । तप्तरहसम् । ९५० प्रतेरुरसः सप्तमीस्थात् । (५-४-८२) उरसि प्रति प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः । ९५१ अनुगवमायामे । (५-४-८३) एतन्निपात्यते दीर्घत्वे । अनुगवं यानम् । 'यस्य चायामः' (सू ६७०) इति समासः । ९५२ द्विस्तावा त्रिस्तावा वेदिः । (५-४-८४) अच्प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिस्ततो

---

'प्रकृत्यैकाच्' इति प्रकृतिभावान्न टिलोपः, आद्गुणः, श्रेयस् इति रूपम् । श्वस्शब्दस्तु उत्तरपदार्थगतप्रशंसाद्योतकः । 'श्वःश्रेयसं शिवं भद्रम्' इत्यमरः । ते भूयादिति तु उभयत्रापि संबध्यते—श्वोवसीयसं ते भूयात्, श्वःश्रेयसं ते भूयादिति । अन्ववतप्ताद्रहसः । अनु अव तप्त एतेषां समाहारद्वन्द्वः । एभ्यः परो यो रहःशब्दः तस्मादच्स्यादित्यर्थः । रहः अप्रकाशप्रदेशः । अनुरहसमिति । अनुगतं रह इति विग्रहः । अवरहसमिति । अवहीनं रह इति विग्रहः । उभयत्र प्रादिसमासः । तप्तरहसमिति । तप्तं रह इति विग्रहः । प्रतेरुरसः । सप्तम्यर्थे द्योतकतया वर्तत इति सप्तमीस्थम् । सप्तम्यर्थद्योतकात् प्रतेः परो य उरश्शब्दः तस्मादच् स्यादित्यर्थः । उरसीति । अनेन यदुच्यते तदेव प्रत्युरसमित्यनेनोच्यत इत्यर्थः । सप्तम्यर्थद्योतकः प्रति । तस्य विभक्त्यर्थे विद्यमानस्य 'अव्ययं विभक्ति' इत्यादिनाऽव्ययीभाव इति भावः । अनुगवमायामे । एतदिति । अनुगवमित्येतदित्यर्थः । अनुना दीर्घत्वे द्योत्येऽच्प्रत्ययान्तो निपात्यत इत्यर्थः । आयामशब्दो दीर्घपर इति भावः । अनुगवं यानमिति । अनुगोशब्दादचि अवादेश इति भावः । यस्य चेति । 'यस्य चायामः' इत्यव्ययीभावसमासः । तथा च गोदैर्घ्यसदृशदैर्घ्यकं यानमित्यर्थः फलतीति भावः । द्विस्तावा । यावती प्रकृताविति । यतः अङ्गकलापस्यातिदेशः सा प्रकृतिः । अश्वमेधस्य प्रकृतिरग्निष्टोमः, तत्राम्नाताङ्गकलापानामश्वमेधेऽतिदेशात् । तदुक्तं कल्पसूत्रेषु 'सर्वसोमक्रतूनामग्निष्टोमः प्रकृतिः' इति । तस्मिन् अग्निष्टोमे वेदिपरिमाणं श्रुतम् । तत्र च 'त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची षट्त्रिंशत् प्राची चतुर्विंशतिः पुरस्तात्तिरश्ची' इति प्रकृतौ वेदिपरिमाणमुक्तम् । अस्यां तु वेद्यां ततो द्विगुणितं त्रिगुणितं च क्षेत्रपरिमाणमुक्तं कल्पसूत्रेषु 'अष्टाविंशत्यूनं पदसहस्रं महावेदिः' इति । पदग्रहणमत्र प्रक्रमस्याप्युपलक्षणम् । तथा च प्रकृतौ अग्निष्टोमे यावती वेदिः तदपेक्षया द्विगुणा त्रिगुणा वा अश्वमेधादौ वेदिरस्ति, तत्र आश्वमेधिकवेद्यामभिधेयायां द्विस्नावेति त्रिस्तावेति च भवतीत्यर्थः । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' इति द्विशब्दात् क्रियाभ्यावृत्तौ सुचि कृते द्विरिति त्रिरिति च रूपम् । तत् प्राकृतं परिमाणम् अस्या अस्तीति तावती ।

---

उत्तरपदार्थभूतां प्रशंसामित्यर्थः' । आशीर्विषयमिति । षष्ठीसमासः । विषयशब्दस्याजहल्लिङ्गत्वात्पुंलिङ्गनिर्देशः । 'उत्तरपदार्थप्रशंसाया आशीर्विषयतामाह' इति पाठान्तरं क्वचिदस्ति । उभयथापि आशीर्विषयताया द्योतकोऽयमिति फलितोऽर्थः । अन्वव । इह 'रहः' इत्यप्रकाशमुच्यते । 'अनुगतमवहीनं च रहः' इति प्रादिसमासः । अनुगतं रहोऽस्मिन्' इत्यादिबहुव्रीहिर्वा । तप्तरहसमिति । 'तप्तं च तद्रहश्च' इति

द्विगुणा त्रिगुणा वा अश्वमेधादौ तत्रेदं निपातनम् । वेदिरिति किम्-द्विस्ता
त्रिस्तावती रज्जुः । ९५३ उपसर्गादध्वनः । (५-४-८५) प्रगतो
प्राध्वो रथः । ९५४ न पूजनात् । (५-४-६९) पूजनार्थात्परेभ्यः समा
न स्युः । सुराजा । अतिराजा । 'स्वतिभ्यामेव' (वा ३३४६) नेह—परम
पूजनात् किम्—गामतिक्रान्तोऽतिगवः । 'बहुव्रीहौ सक्थ्यक्ष्णोः–' ( सू ८
इत्यतः प्रागेवायं निषेधः । नेह—सुसक्थः, स्वक्षः । ९५५ किमः
(५-४-७०) क्षेपे यः किंशब्दस्ततः परं यत्तदन्तात्समासान्ता न स्युः । कु
राजा किंराजा । किंसखा । किंगौः । क्षेपे किम्-किंराजः, किंसखः, किं
९५६ नञस्तत्पुरुषात् । (५-४-७१) समासान्तो न । अराजा । अस
तत्पुरुषात् किम्—अधुरं शकटम् । ९५७ पथो विभाषा । ( ५-४-

प्राकृतपरिमाणेति यावत् । द्विरिति तच्छब्दार्थे प्रकृतिपरिमाणेऽन्वेति । द्विः ता
विग्रहः । द्विरावृत्तं प्राकृतं यत् परिमाणं तद्वत्याश्वमेधिकी वेदिरित्यर्थः ।
निपातनात् समासः, अच्प्रत्ययः, तावतीशब्दस्य 'भस्याढे–' इति पुंवत्वे ङीपो
प्रत्ययस्याडित्त्वेऽपि प्रकृतेर्नान्तत्वाभावेऽपि टिलोपः । द्विस्तावती त्रिस
रज्जुरिति । अत्र वेद्यामप्रवृत्तेः अच्प्रत्ययटिलोपसमासा न भवन्तीत्यर्थः । त
प्रत्युदाहरणे द्विरिति भिन्नं पदम् । उपसर्गादध्वनः । उपसर्गात् परो यो
शब्दः तस्मादच् स्यादित्यर्थः । प्राध्वो रथ इति । 'अत्यादयः–' इति समा
'नस्तद्धिते' इति टिलोपः । न पूजनात् । परेभ्य इत्यध्याहार्यम् । समासान्ता
पूर्वसूत्रमनुवर्तते । तदाह—पूजनार्थादिति । 'पूजायां स्वतिग्रहणं कर्तव्यम्' इ
वार्तिकमभिप्रेत्योदाहरति—सुराजेति । सु शोभनो राजेति प्रादिसमासः ।
राजेति । पूज्यो राजेत्यर्थः । उभयत्रापि 'राजाहस्सखिभ्यः–' इति टच् न
स्वतिभ्यामेवेति । स्वतिभ्यां परो यो राजन् शब्दः तस्मादेवेत्यर्थः, तथा
दिति भावः । नेहेति । निषेध इति शेषः । परमराज इति । परमश्चासौ
चेति विग्रहः । अतिगव इति । 'अत्यादयः–' इति समासः । अतः पूजना
भावाद् न टचो निषेधः । एवं परमराज इत्यत्रापि । इत्यतः प्रागिति । '
व्रीहिग्रहणं कर्तव्यम्' इति वार्तिकार्थसंग्रहोऽयम् । सुसक्थः स्वक्ष इति
शोभने सक्थिनी यस्य, सु शोभने अक्षिणी यस्येति च विग्रहः । 'बहुव्रीहौ
क्ष्णोः–' इति षच् । किमः क्षेपे । किंराजा । किं सखेति । इह 'रा
खिभ्यः' इति टच् न भवति । 'किं क्षेपे' इति समासः । किंराजः
इति । किंशब्दोऽत्र प्रश्ने । कस्य राजा, को राजेति वा विग्रहः । निन्दाभाव
टचो निषेधः । नञस्तत्पुरुषात् । शेषपूरणेन सूत्रं व्याचष्टे—समासान्तो
नञ्पूर्वपदात्तत्पुरुषात् समासान्तो नेति फलितम् । अधुरं शकटमिति ।
माना धूर्यस्येति विग्रहः । नञ्पूर्वपदत्वेऽप्यतत्पुरुषत्वात् 'ऋक्पूः–' इति समा

विग्रहः । परेणानधिगम्यमित्यर्थः । इत्यतः प्रागिति । 'प्राग्बहुव्रीहिग्रहणं क
इति वार्तिकोक्तेरिति भावः । किमः क्षेपे । क्षेपग्रहणमिह शक्यमवक्तुम्, प्रति

नञ्पूर्वात्पथो वा समासान्तः। अपथम्, अपन्थाः। तत्पुरुषाद् इत्येव, अपथो देशः, अपथं वर्तते।

इति सर्वसमासान्तप्रकरणम्।

---

## अथालुक्समासप्रकरणम्। २४।

९५८ अलुगुत्तरपदे। (६-३-१) अलुगधिकारः प्रागानङः, उत्तरपदाधिकारस्त्वापादसमाप्तेः। ९५९ पञ्चम्याः स्तोकादिभ्यः। (६-३-२) एभ्यः पञ्चम्या अलुक्स्यादुत्तरपदे। स्तोकान्मुक्तः। एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः। उत्तर-

---

न निषेधः। पथो विभाषा। पथ इति। पथिन्शब्दादित्यर्थः। अपथमिति। न पन्था इति विग्रहे नञ्तत्पुरुषः। 'ऋक्पूः—' इत्यप्रत्यये सति 'नस्तद्धिते' इति टिलोपः। 'पथः संख्याव्ययादेः' इति नपुंसकत्वम्। अपन्था इति। अप्रत्ययाभावे रूपम्। तत्पुरुषादित्येवेति। अनुवर्तत एवेत्यर्थः। अपथो देश इति। अविद्यमानः पन्था यस्येति विग्रहः। बहुव्रीहित्वाद् 'ऋक्पूः—' इत्यप्रत्ययस्य पाक्षिको न निषेधः। अपथं वर्तत इति। अर्थाभावेऽव्ययीभावः। अतत्पुरुषत्वाद् 'ऋक्पूः—' इत्यप्रत्ययस्य न पाक्षिको निषेधः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां सर्वसमासान्तप्रकरणं समाप्तम्।

---

अथालुक्समासो निरूप्यते—अलगुत्तरपदे। नायं विधिः, राजपुरुष इत्यादावतिप्रसङ्गात्, 'पञ्चम्याः स्तोकादिभ्यः' इत्याद्यारम्भाच्च। किंतु पदद्वयमधिक्रियते। अस्य कियत्पर्यन्तमनुवृत्तिरित्यत आह—अलुगधिकारः प्रागानङ इति। 'आनङृतः—' इत्यतः प्रागित्यर्थः। उत्तरपदेति। षष्ठस्य तृतीये पादे आद्यमिदं सूत्रम्। इत उत्तरमेतत्पादपरिसमाप्तिपर्यन्तमुत्तरपदाधिकार इत्यर्थः। अत्रोत्तरपदाधिकारनियमे भाष्यमेव प्रमाणम्। पञ्चम्याः स्तोकादिभ्यः। एभ्य इति। स्तोकादिभ्यः परा या पञ्चमी तस्याः 'सुपो धातु—' इति लुङ् न स्यादित्यर्थः।

---

परिभाषया 'किं क्षेपे' इति विहितसमासस्यैव ग्रहणात्। किंराज इत्यादि। किमत्र राजन्ने। षष्ठीसमासः कर्मधारयो वा। नञस्तत्पुरुषात्। 'नञः' इति षष्ठी, नञः संबन्धी यस्तत्पुरुषो नञवयवकस्तस्मादित्यर्थः। अपथमिति। 'नस्तद्धिते' इति टिलोपः। 'अपथं नपुंसकम्' इति क्लीबत्वम्। अपथं वर्तत इति। अर्थाभावेऽव्ययीभावः।

इति तत्त्वबोधिन्यां सकलसमाससाधारणसमासान्तप्रकरणम्।

---

अलुक् स्यादिति। प्रसज्यप्रतिषेधोऽयम्। 'सुपो धातु—' इत्यादिना प्राप्तो लुङ् न भवतीत्यर्थः। स्तोकान्मुक्त इति। समासप्रयोजनमैकपद्यमैकस्वर्यं

पदे किम्-निष्क्रान्तः स्तोकान्निस्स्तोकः 'ब्राह्मणाच्छंसिन उपसंख्यानम्' (वा ३८७८) ब्राह्मणे विहितानि शस्त्राण्युपचाराद् ब्राह्मणानि, तानि शंसतीति ब्राह्मणाच्छंसी ऋत्विग्विशेषः। द्वितीयार्थे पञ्चमी उपसंख्यानादेव। ९६० ओजःसहोऽम्भस्तमसस्तृतीयायाः। ( ६-३-३ ) ओजसाकृतमित्यादि।

उत्तरपद इति। उत्तरशब्दः समासचरमावयवे रूढः, पदे इत्येव सिद्धे उत्तरग्रहणात्। स्तोकान्मुक्त इति। एवमल्पान्मुक्तः। 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः। अत्र पञ्चम्या अलुक्। एवमिति। आदिपदेन समासशास्त्रगृहीतानामन्तिकादीनां ग्रहणादिति भावः। अन्तिकादागतः, अभ्याशादागतः, दूरादागतः, विप्रकृष्टादागतः कृच्छ्रादागतः। निस्स्तोक इति। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः। अत्र स्तोकशब्दस्य उत्तरपदपरकत्वाभावात् पञ्चम्या अलुक् न। स्तोकान्मुक्त इत्यादौ समासप्रयोजनं तु समासस्वरः, सर्वस्मात् स्तोकान्मुक्त इति विशेषणयोगाभावश्च। किंच, स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिरित्यादौ समुदायात्तद्धितोत्पत्तिश्च। स्तोकान्मुक्तौ स्तोकान्मुक्ता इति द्विवहुवचनान्तैः न समासः, अनभिधानादिति भाष्ये स्पष्टम्। ब्राह्मणाच्छंसिन उपसंख्यानमिति। पञ्चम्या अलुक् इति शेषः। ननु ब्राह्मणानि शंसतीत्यर्थे कथं पञ्चमी? विधायकवाक्यानि हि ब्राह्मणशब्देनोच्यन्ते, 'कर्मचोदना ब्राह्मणानि' इति कल्पसूत्रात्, 'शेषे ब्राह्मणशब्दः' इति मन्त्रभिन्नवेदभागे ब्राह्मणशब्दस्य जैमिनिना संकेतितत्वाच्च। एतादृशब्राह्मणानां न क्वापि शंसनं विहितम्—'ऋचः शंसति निविदः शंसति' इति श्रुतिरित्यत आह—ब्राह्मण इति। शस्त्राणीति। ऋचां निविदां च संघः शस्त्रम्। उपचारादिति। लक्षणयेत्यर्थः। द्वितीयार्थ इति। पञ्चम्या अलुगुपसंख्यानबलादेव द्वितीयार्थे पञ्चमीत्यर्थः। ओजस्। ओजस्, सहस्, अम्भस्, तमस् एषां समाहारद्वन्द्वः। एभ्यः परस्यास्तृतीयाया अलुक् स्यादुत्तरपद इत्यर्थः। ओजसाकृतमिति। 'कर्तृकरणे कृता बहुलम्' इति समासः। 'ओजो दीप्तौ बले' इत्यमरः। इत्यादीति। सहसाकृतम्, अम्भसाकृतम्। तमसावृतम्। तमसा

विशेषणयोगाभावश्च। किंच 'स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिः स्तोकान्मुक्तायाः अपत्यं स्तौकान्मुक्तेयः' इति समुदायात्तद्धितोत्पत्तिरपि प्रयोजनम्। न च प्राथमिकसामासिकलुको निषेधेन चरितार्थत्वाद्बाह्यस्तद्धितनिमित्तो लुग् दुर्वार इति शङ्क्यम्, 'सुपो धातु—' इति शास्त्रस्यैकत्वादविशेषण लुग्द्वयस्यापि निषेधाभ्युपगमात्। इह 'स्तोकान्तिक—' इति समासशास्त्रपठिता एव स्तोकादयो गृह्यन्ते न तु 'करणे च स्तोकाल्पकृच्छ्र—' इति सूत्रपठिताः। समासे सुपो लुकि प्रसक्ते विधीयमानेनालुक्शास्त्रेण समासशास्त्रपठितानामविलम्बेनोपस्थितेर्व्याप्तिन्यायाच्च। 'स्तोकान्तिक—' इत्यत्र ह्यर्थग्रहणादन्यान्यपि बहूनि गृह्यन्ते तदेतन्मनसि निधायाह—एवमिति। द्विवचनबहुवचनान्तानां तु समासो नेष्यते, अनभिधानात्। तेन 'स्तोकाभ्यां मुक्तः' इत्यादौ वाक्यमेव। शस्त्राणीति। 'प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्, अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्' इति याज्ञिकानां व्यवहारः। ओजःस। ओजः

उपसङ्ख्यानम्' (वा ३८८०) । अञ्जसाकृतम् । आर्जवेन कृतमित्यर्थः । 'पुंसानुजो जनुषान्ध इति च' (वा ३८८१) । यस्याग्रजः पुमान् स पुंसानुजः । जनुषान्धो जात्यन्धः । ९६१ मनसः संज्ञायाम् । (६-३-४) मनसागुप्ता । ९६२ आज्ञायिनि च । (६-३-५) मनस इत्येव । मनसा ज्ञातुं शीलमस्य मनसाज्ञायी । ९६३ आत्मनश्च । (६-३-६) आत्मनस्तृतीयाया अलुक्स्यात् । 'पूरण इति वक्तव्यम्' (वा ३८८२) पूरणप्रत्ययान्ते उत्तरपद इत्यर्थः । आत्मनापञ्चमः । 'जनार्दनस्त्वात्मचतुर्थ एव' इति बहुव्रीहिर्बोध्यः । पूरणे किम्—आत्मकृतम् । ९६४ वैयाकरणाख्यायां चतुर्थ्याः । (६-३-७)

---

मिति तु असाध्वेव । शेषषष्ठ्या वा समासः । अञ्जस उपसंख्यानमिति । अञ्जश्शब्दात् तृतीयाया अलुक् उपसंख्यानमित्यर्थः । अञ्जसाकृतमिति । अञ्जश्शब्द आर्जवे वर्तते, यथा क्षेत्रज्ञोऽञ्जसा नयतीत्यादौ तथा दर्शनात् । तदाह—आर्जवेनेति । पुंसानुजः । तृतीयाया अलुकि साधुरिति शेषः । यस्येति । यस्य पुमान् पूर्वजः स पुंसा हेतुना अनुजः कनीयाइत्यर्थः । जनुषेति । 'जनुर्जननजन्मानि' इत्यमरः । जनुषा 'जन्मना अन्ध इत्यर्थः । फलितमाह—जात्यन्ध इति । ब्राह्मण्यादिजातितुल्यान्ध्यवानित्यर्थः । उत्पत्तिप्रभृत्यन्ध इति यावत् । मनसः संज्ञायाम् । मनसस्तृतीयाया अलुक् स्यादुत्तरपद इत्यर्थः । मनसागुप्तेति । कस्याश्चित् संज्ञेयम् । असंज्ञायां तु मनोगुप्ता । आज्ञायिनि च । मनस इत्येवेति । अनुवर्तत एवेत्यर्थः । मनसस्तृतीयाया अलुक् स्याद् आज्ञायिनि पर इत्यर्थः । असंज्ञार्थमिदम् । ज्ञातुमिति । प्रेरयितुमित्यर्थः । मनसाज्ञायीति । 'सुप्यजातौ—' इति णिनिः । 'आतो युक्चिण्कृतोः' इति युक् । अत्र सूत्रभाष्ये 'आत्मनश्च पूरण उपसंख्यानम्' इति वार्तिकं पठितम् । तत्रात्मनश्चेत्यंशं व्याख्यातुं पृथगुपादत्ते—आत्मनश्चेति । चकारात्तृतीयाया अलुगिति चानुकृष्यत इत्याह—आत्मनस्तृतीयाया अलुगिति । उत्तरपदे पर इति शेषः । पूरण इति वक्तव्यमिति । नात्र पूरणशब्दो गृह्यते । स्वरितत्वबलेन पूरणाधिकारविहितप्रत्ययग्रहणात् 'प्रत्ययग्रहणे—'इति तदन्तविधिरित्यभिप्रेत्याह—पूरणप्रत्ययान्त

---

कृतमिति । 'कर्तृकरणे कृता—' इति समासः । कथं तर्हि 'सततनैशतमोवृतमन्यतः' इति भारविः । अत्राहुः—'वृतु वर्तने' इत्यस्माद् 'घञर्थे कविधानम्' इति भावे कप्रत्यये तदन्तेन षष्ठीसमासाश्रयणान्न दोष इति । यत्तु केवलपदाधिकार एव तदन्तविधिर्न तूत्तरपदाधिकारे, तथा च 'नैशतमसा' इति तृतीयाया अलुङ् न भवतीति दुर्घटवृत्त्यादावुक्तम् । तन्न । 'पदाङ्गाधिकारे—' इत्यत्र 'इष्टकचितं, पक्वेष्टकचितम्' इति भाष्योदाहरणादुत्तरपदाधिकारेऽपि तदन्तविधिप्रवृत्तेः । जनुषेति । 'जनुर्जननजन्मानि' इत्यमरः । आत्मनापञ्चम इति । 'तृतीया' इति योगविभागात् समासः । इह प्रकृत्यादित्वात्प्रथमार्थे तृतीयेत्यन्ये । 'आत्मना कृतः पञ्चमः' इति करोतिक्रियापेक्षा सेत्यन्ये । बहुव्रीहिर्बोध्य इति । एकस्याप्यौपाधिकभेदं परिकल्प्य वर्तिपदार्थत्व-

---

१ 'जन्मना' इत्यस्याग्रे 'हेतुना' इत्यपि क्वचित् पाठः ।

आत्मन इत्येव, आत्मनेपदम्, आत्मनेभाषाः। तादर्थ्ये चतुर्थी। चतुर्थी योगविभागात्समासः। ९६५ परस्य च। (६-३-८) परस्मैपदम्। परस्मैभाषाः। ९६६ हलदन्तात्सप्तम्याः संज्ञायाम्। (६—३—९) हलन्ताददन्ताच्च सप्तम्या अलुक्संज्ञायाम्। त्वचिसारः। ९६७ गवियुधिभ्यां स्थिरः

इति। आत्मनापञ्चम इति। आत्मा पञ्चम इत्यर्थः। प्रकृत्यादित्वात् प्रकृत्या तृतीया। यद्वा आत्मकृतपञ्चमत्ववानित्यर्थः। करणे तृतीया। करोतिक्रियान्तर्भावात् तस्याः 'तृतीया तत्कृता—' इति समासः। पक्षद्वयमपीदं भाष्ये स्थितम्। संकर्षणप्रद्युम्नानिरुद्धास्त्रयो विष्णुव्यूहाः। जनार्दनस्तु एषां नियन्तेति विष्णुपुराणे स्थितम्। तत्रेदमाहुः पौराणिकाः—जनार्दनस्त्वात्मचतुर्थ एवेति। तत्र तृतीयाया अलुकि आत्मनाचतुर्थ इति भवितव्यमित्यत आह—जनार्दनस्त्विति। बहुव्रीहिरिति। आत्मा चतुर्थो यस्येति विग्रहे बहुव्रीहिरित्यर्थः। एकस्याप्यौपाधिकं भेदं परिकल्प्य वृत्तिपदार्थत्वमन्यपदार्थत्वं च विवक्षणीयमिति भावः। तदिदं स्पष्टम्। वैयाकरणाख्यायाम्। आत्मन इत्येवेति। अनुवर्तत एवेत्यर्थः। च 'आत्मनश्च' इत्यस्य वार्तिकत्वे कथमिह सूत्रे एतदनुवृत्तिरिति वाच्यम् 'सोऽपदादौ' इति सूत्रे पठितस्य 'काम्ये रोरेवेति वाच्यम्' इति वार्तिकस्य 'इणः षः' इति सूत्रेऽनुवृत्तिवदुपपत्तेः। व्याकरणे भवा वैयाकरणी, सा चासावाख्या च वैयाकरणाख्या, तस्यां या चतुर्थी तस्या अलुगित्यर्थः। आत्मनेभाषा पूर्वाचार्यकृतमात्मनेपदस्य संज्ञान्तमिदं धातुपाठे प्रसिद्धम्। तादर्थ्ये चतुर्थी तथा चात्मने इत्यस्यात्मार्थमित्यर्थः। आत्मगामिनि फले प्रायेण तद्विधानादिति भावः। ननु प्रकृतिविकाराभावात् कथमिह तादर्थ्ये चतुर्थ्याः समास इत्यत आह चतुर्थीति। योगविभागादिति। पस्पशाह्निकभाष्ये धर्माय नियमो धर्मनियम इति भाष्यमिह लिङ्गम्। परस्य च। वैयाकरणाख्यायां परशब्दस्यापि चतुर्थ्या अलुगित्यर्थः। हलदन्तात्। त्वचिसार इति। अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। 'वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः' इत्यमरः। हलन्तस्योदाहरणान्तरं वक्ष्यति—युधिष्ठिर इति। अत्र 'अजिरशिशिर' इत्युणादिसूत्रेण स्थाधातोः किरचि स्थिरशब्दो व्युत्पादितः। तत्र 'आदेशप्रत्यययोः' इति षत्वस्य 'सात्पदाद्योः' इति निषेधे प्राप्ते इदमारभ्यते—गवियुधिभ्यां स्थिरः। गवीति युधीति च सप्तम्या अनुकरणम्। स्थिर इति

मन्यपदार्थत्वं च विवक्षणीयमिति भावः। वैयाकरणा। व्याकरणे भवा वैयाकरणी 'अणृगयनादिभ्यः' इत्यण्। सा चासावाख्या चेति कर्मधारयः। आत्मन इत्येवेति इह 'आत्मनः' इत्यननुवर्त्य 'वैयाकरणाख्यायां चतुर्थ्या अलुक्' इति व्याख्याने 'परस्य च' इत्युत्तरसूत्रं त्यक्तुं शक्यमित्याहुः। आत्मनेभाषा इति। यद्यप्येषा माख्या अष्टाध्याय्यां नास्ति, तथापि धातुपाठेऽस्तीति भावः। प्रकृतिविकृतिभावविरहात् 'रन्धनाय स्थाली' इतिवत्समासाभावमाशङ्क्याह—योगविभागादिति। इहार्थविसामर्थ्यादपि समासः सुवचः। परस्य च। परशब्दस्य च या चतुर्थी

(८—३—९५) आभ्यां स्थिरस्य सस्य षः स्यात्। गविष्ठिरः। अत्र गवीति वचनादेवालुक्। युधिष्ठिरः। अरण्येतिलकाः। अत्र 'संज्ञायाम्' (सू ७२१) इति सप्तमीसमासः। 'हृद्द्युभ्यां च' (वा ३८८५)। हृदिस्पृक्। दिविस्पृक्। ९६८ कारनाम्नि च प्राचां हलादौ। (६—३—१०) प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक्। मुकुटेकार्षापणम्। दृषदिमाषकः। पूर्वेण सिद्धे नियमार्थम्, कारनाम्न्येव प्राचामेव हलादावेवेति। कारनाम्नि किम्। अभ्याहितपशुः। कारादन्यस्यैतद्देशस्य नाम। प्राचां किम्—यूथपशुः। हलादौ किम्—अविकटोरणः। हलदन्तात् किम्—नद्यां दोहो नदीदोहः। ९६९ मध्याद् गुरौ। (६—३—११) मध्येगुरुः। 'अन्ताच्च' (वा ३८९४) अन्तेगुरुः। ९७० अमूर्धमस्तकात्स्वाङ्गादकामे। (६—३—१२) कण्ठेकालः।

---

षष्ठ्यर्थं। 'सहेः साडः सः' इत्यस्मात् स इति षष्ठ्यन्तमनुवर्तते। 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम्, तदाह—आभ्यामिति। ननु 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभाषया अवादेशात् पूर्वमेव ङेर्लुकि प्रवृत्ते हलन्तत्वाभावात् कथमिहालुगित्यत आह—अत्र गवीति। युधिष्ठिर इति। युध्धातोर्भावे क्विपि युधशब्दात् सप्तम्येकवचनम्। हलन्तत्वादलुक्, षत्वं च। पाण्डवस्य धर्मपुत्रस्य नामेदम्। तदेवं हलन्तादलुकं प्रपञ्च्य अदन्तादलुकमुदाहरति—अरण्येतिलका इति। ननु तिलकशब्दस्य शौण्डादिगणेऽभावात् कथं तेन सप्तमीसमास इत्यत आह—अत्र संज्ञायामिति। हृद्द्युभ्यां चेति। हृच्छब्दाद् दिव्शब्दाच्च सप्तम्या अलुग्वक्तव्य इत्यर्थः। असंज्ञार्थमिदम्। हृदिस्पृगिति। 'पद्दन्—' इति ङौ हृदयस्य हृदादेशः, हृदयं स्पृशतीत्यर्थः। दिविस्पृगिति। दिवं स्पृशतीत्यर्थः। इहोभयत्रापि सप्तम्या अलुग्विधानबलादेव कर्मणि सप्तमीति भाष्यम्। 'अमूर्धमस्तकात्—' इत्यनेन त्वलुग् न सिध्यति, तत्र संज्ञायामित्यनुवृत्तेः। कारनाम्नि। यत् कारनामेति। राजग्राह्यो भागः करः, स एव कारः, तद्विशेषवाचक इत्यर्थः। नियमार्थमिति। प्राचां देशे हलादौ यदि भवति कारनाम्न्येव, कारनाम्नि हलादौ चेत् प्राचामेव, प्राचां कारनाम्नि चेद् हलादावेवेति नियमत्रयार्थमित्यर्थः। अविकटोरण इति। अविशब्दात् संघाते कटच्, उरणो मेषः। नद्यामिति। नद्युत्तारणे तात्कालिको दोहः करः। मध्याद् गुरौ। गुरुशब्दे परे मध्यशब्दात् सप्तम्यां अलुक् स्यादित्यर्थः। असंज्ञार्थमिदम्। अन्ताच्चेति। सप्तम्या अलुक् स्याद् गुरौ

---

अलुक् स्याद्वैयाकरणाख्यायाम्। गवियुधि। स्थिरशब्दोऽयम् 'अजिरशिशिर—' इत्यौणादिकः किरच्प्रत्ययान्तस्तिष्ठतेर्निष्पन्नः। 'सात्पदाद्योः' इति निषेधे प्राप्ते वचनारम्भः। गवीति वचनादेवेति। न च लुकं बाधित्वा परत्वादन्तरङ्गत्वाच्चावादेशे 'हलदन्तात्सप्तम्याः—' इत्येवालुक् सिध्यतीति वाच्यम्, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति लुको बलीयस्त्वादिति भावः। हृदिस्पृक् दिविस्पृगिति। हृदयं दिवं च स्पृशतीति विग्रहः। अलुग्विधिसामर्थ्यात्कर्मणि सप्तमी, कर्मणोऽधिकरणत्वविवक्षया वा। अविकटोरण इति। 'संघाते कटच्'

उरसिलोमा । अमूर्धमस्तकात् किम्—मूर्धशिखः, मस्तकशिखः । अकामे किं मुखे कामोऽस्य मुखकामः । ९७१ बन्धे च विभाषा । (६—३—१३) हलदन्तात्सप्तम्या अलुक् । हस्तेबन्धः, हस्तबन्धः । हलदन्त इति किम्—गुप्तिबन्धः । ९७२ तत्पुरुषे कृति बहुलम् । (६—३—१४) स्तम्बेरमः, स्तम्बरमः । कर्णेजपः, कर्णजपः । क्वचिन्न—कुरुचरः । ९७३ प्रावृट्छरत्कालदिवां जे । (६—३—१५) प्रावृषिजः । शरदिजः । कालेजः । दिविजः । पूर्वस्यायं प्रपञ्चः । ९७४ विभाषा वर्षक्षरशरवरात् । (६—३—१६) एभ्यः सप्तम्या अलुक् । वर्षेजः, वर्षजः । क्षरेजः, क्षरजः । शरेजः, शरजः । वरेजः, वरजः । ९७५ घकालतनेषु कालनाम्नः । (६—३—१७) सप्तम्या विभाषया लुक् स्यात् । घ—पूर्वाह्णेतरे, पूर्वाह्णतरे । पूर्वाह्णेतमे, पूर्वाह्णतमे काल—पूर्वाह्णेकाले, पूर्वाह्णकाले । तन—पूर्वाह्णेतने, पूर्वाह्णतने । ९७६ शयवासवासिष्वकालात्

---

पर इत्यर्थः । अमूर्धमस्तकात् । मूर्धमस्तकशब्दवर्जितात् स्वाङ्गवाचकात् सप्तम्या अलुक् स्यात्, नतु कामशब्दे उत्तरपद इत्यर्थः । अत्र संज्ञायामित्यनुवर्तते । एव 'हृद्द्युभ्यां च' इत्यत्र हृद्ग्रहणमर्थवत् । कण्ठेकाल इति । शिवस्य नाम । उरसिलोमेति । कस्यचिन्नाम । अत एव ज्ञापकाद् व्यधिकरणपदो बहुव्रीहिः । बन्धे च विभाषा । शेषपूरणेन सूत्रं व्याचष्टे—हलदन्तादिति । हस्ते इति । संज्ञायामिति सप्तमीतत्पुरुषोऽयम् । इह तत्पुरुष इति संबध्यते, बन्ध इति घञन्तम्, अन्यत्र तु 'नेन्सिद्ध–' इति निषेध इति स्पष्टं भाष्ये । तत्पुरुषे कृति । तत्पुरुष सप्तम्या बहुलमलुक् स्यात् कृदन्त उत्तरपदे संज्ञायामित्यर्थः । स्तम्बेरम इति । तृणसमूहः स्तम्बः, तस्मिन् रमत इति स्तम्बेरमो हस्ती । कर्णेजप इति । कर्णे जपति परदोषमुपांश्वाविष्करोतीति कर्णेजपः पिशुनः । 'स्तम्बकर्णयो रमिजपोः' इत्यच् । उपपदसमासः । क्वचिन्नेति । बहुलग्रहणादिति भावः । कुरुचर इति । 'चरेष्टः' इत्यधिकरण उपपदे चरेष्टः । उपपदसमासः । यद्यपि हलदन्तादित्यनुवृत्त्या सिद्धमिदम्, तथापि बहुलग्रहणादेव सिद्धे 'हलदन्ताद्' इति नानुवर्तनीयमिति भावः । प्रावृट्छरत् । प्रावृट्, शरत्, काल, दिव्, एषां सप्तम्या अलुक् स्याद् जे परे संज्ञायामित्यर्थः । ननु 'हलदन्तात्–' इत्येव सिद्धे किमर्थमिदमित्यत आह—पूर्वस्यैवायं प्रपञ्च इति । विस्तर इत्यर्थः । विभाषा वर्ष । शेषपूरणेन सूत्रं व्याचष्टे—एभ्यस्सप्तम्या इति । घकालतनेषु । शेषपूरणेन सूत्रं व्याचष्टे—सप्तम्या इति । घेति । घे पर उदाहरणसूचनमिदम् । 'तरप्तमपौ घः' । पूर्वाह्णेतर इति । अतिशायने सप्तम्यन्तात् तरप्तमपौ । अत एव तत्तद्विभक्त्यन्तात् तरप्तमपाविति विज्ञायते । कालेति । उदाहरणसूचनमिदम् । पूर्वाह्णेकाल इति । अत एव विशेषणादिसमासोऽपि तत्तद्विभक्त्यन्तानामेव । तनेति । उदाहरणसूचनमिदम् । पूर्वाह्णेतन इति । 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति ट्युट्युलौ तुट् च ।

---

इति कटच्प्रत्ययान्तः । उरणो मेषः । बन्धे च विभाषा । बन्ध इति घञन्तम् । हस्तेबन्ध इति । बहुव्रीहिरयम् । तत्पुरुषे तु 'नेन्सिद्धबध्नातिषु च' इति बन्धे ...

(६—३—१८) खेशयः, खशयः । ग्रामेवासः, । ग्रामवासः । ग्रामेवासी, ग्रामवासी । 'हृलदन्तात्' इत्येव, भूमिशयः । 'अपो योनियन्मतुषु' (वा ३८७६) । अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः । अप्सु भवः अप्सव्यः । अप्सुमन्ताज्यभागौ । ९७७ नेन्सिद्धबध्नातिषु च । (६—३—१९) इन्नन्तादिषु सप्तम्या अलुग्न । स्थण्डिलशायी । सांकाश्यसिद्धः । चक्रबद्धः । ९७८ स्थे च भाषायाम् । (६—३—२०) सप्तम्या अलुग्न । समस्थः । भाषायां किम्—कृष्णोऽस्याः खरेष्ठः । ९७९ षष्ठ्या आक्रोशे (६—३—२१) चौरस्य कुलम् । आक्रोशे किम्—ब्राह्मणकुलम् । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' (वा ३८९७)

---

शयवास । शय, वास, वासिन् एतेषु परेषु कालभिन्नात् सप्तम्या अलुक् स्यादित्यर्थः । अपो योनि । योनिशब्दे यत्प्रत्यये मतुपि च परेऽप्शब्दात् सप्तम्या अलुक् स्यादित्यर्थः । अप्सव्य इति । दिगादित्वाद्यत् । 'ओर्गुणः' । 'वान्तो यि–' इत्यवादेशः । अप्सुमन्ताविति । अप्सु इति पदं यदीयमन्त्रयोरस्ति तावप्सुमन्तौ, आज्यभागाविति कर्मविशेषौ । नेन्सिद्धबध्नातिषु च । चक्रबद्ध इति । साधनं कृता इति क्तान्तेन सप्तम्यन्तस्य समासः । स्थे च भाषायाम् । 'अनन्तरस्य–' इति न्यायात् । 'तत्पुरुषे कृति' इत्यस्यैवायं निषेधः । अत एव 'अनेकमन्यपदार्थे' इति सूत्रभाष्ये 'सप्तम्युपमानपूर्वपदस्य–' इति वार्तिकव्याख्यावसरे कण्ठेस्थः कालो यस्येति विग्रहे कण्ठेस्थशब्दस्य समासत्वमभ्युपगम्य उत्तरपदलोप उपन्यस्तः संगच्छते । यदा तु 'अमूर्धमस्तकात्–' इत्यस्याप्ययं निषेधः स्यात्तर्हि तदसंगतिः स्यात्, लुक्प्रसङ्गात् । षष्ठ्या आक्रोशे । अलुगुत्तरपद इति शेषः । आक्रोशो निन्दा । वाग्दिक् । वाक्, दिक्, पश्यत्-एतेभ्यः परस्याः षष्ठ्या अलुक् स्याद् युक्ति,

---

माणेन निषेध एवेत्याहुः । अप्सव्य इति । दिगादित्वाद्यति ओर्गुणे वान्तादेशः । प्राचा तु यतः स्थाने जं पठित्वा 'अप्सुजः' इत्युदाहृतम्, तदाकरविरुद्धम् । 'जे चरे च वक्तव्यम् अप्सुजः अप्सुचरः' इति भाष्ये वचनान्तरदर्शनाच्च । केचित्तु 'अप्सुजः' इत्युक्तोदाहरणद्वयेऽपि 'हृलदन्तात्–' इत्यलुकमाहुः । अप्सुमन्ताविति । कारीर्याम् 'अप्स्वग्ने सधिष्ठव', 'अप्सु मे सोमो अब्रवीत्' इत्याज्यभागमन्त्रौ स्तः । तत्र ह्यप्सुशब्दोऽस्तीति तद्द्वारा आज्यभागयोरप्यप्सुमत्त्वम् । प्राचा तु 'मतिषु' इति पठित्वा 'अप्सुमतिः' इत्युदाहृतम् । अत्र केचित्—अप्स्वित्येतदनुकरणशब्दः, सप्तम्यन्तो वा । आद्ये सप्तम्यन्तात्प्रथमाया अभावेन मतुबेव दुर्लभः । अन्त्ये तु लुकः प्राप्तिरेव नास्ति सप्तम्यभावात् । तथा च 'मतिषु' इति प्राचोक्तः पाठ एव युक्तः । न च स पाठो भाष्यादौ न दृष्ट इति वाच्यम्, 'मतिषु' इति पाठस्य 'अप्सुमतिः' इत्युदाहरणस्य च भाष्यवृत्त्यादिपुस्तकेषु दृश्यमानत्वेन मतुब्विति पाठस्यैव क्वाप्यदर्शनाद् व्यर्थत्वाच्च । 'अस्यवामीयम्' 'कथाशुभीयम्', इत्यादाविव लुकि कर्तव्ये 'प्रकृतिवदनुकरणम्' इत्यतिदेशाप्रवृत्त्यैवेष्टसिद्धेरित्याहुः । नेन्सिद्धब । चक्रबन्ध इति । 'तत्पुरुषे' इत्यनुवृत्तेस्तत्पुरुष एवायं निषेधः । बहुव्रीहौ तु 'बन्धे च विभाषा' इति विकल्प एव । पश्यतोहर इति । 'पश्यन्तमनादृत्य हरति'

वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । 'आमुष्यायणामुष्यपुत्रिकामुष्यकु केति च' (वा ३८९८—३८९९) अमुष्यापत्यमामुष्यायणः । नडादित्वात्फ अमुष्यपुत्रस्य भावः अमुष्यपुत्रिका । मनोज्ञादित्वाद्वुञ् । एवमामुष्यकुलिका 'देवानांप्रिय इति च मूर्खे' (वा ३९००) । अन्यत्र देवप्रियः । 'शेपपुच्छलाङ्गू शुनः' (वा ३९०१) । शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः । 'दिवसश्च दा (वा ३९०२) दिवोदासः । ९८० पुत्रेऽन्यतरस्याम् । (६—३—२२) पष्ठ पुत्रे परेऽलुग्वा निन्दायाम् । दास्याः पुत्रो दासीपुत्रः । निन्दायां किम् । ब्राह्म पुत्रः । ९८१ ऋतो विद्यायोनिसम्बन्धेभ्यः । (६—३—२३) विद्यासंब योनिसंबन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् । होतुरन्तेवासी । होतुःपुत्रः । [illegible]

---

दण्ड, हर एतेषु क्रमादुत्तरपदेषु परेष्वित्यर्थः । वाचोयुक्तिरिति । शब्दप्र इत्यर्थः । दिशोदण्ड इति । अधिकरणस्य शेषत्वविवक्षायां षष्ठी । पश्यतो इति । पश्यन्तमनादृत्य हरतीत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । आमुष्यायणे वार्तिकमिदम् । एते निपात्यन्ते । अमुष्येति । अमुष्यापत्यमित्यर्थे 'नडादिभ्यः फ इति फकि आयन्नादेशे आदिवृद्धौ तद्धितान्तत्वात् प्रातिपदिकतया तदवयवत्व प्राप्तस्य सुब्लुको निषेधे नस्य णत्वे आमुष्यायण इति रूपमित्यर्थः । अमुष्य पु इति विग्रहे षष्ठीसमासे षष्ठ्या अलुकि अमुष्यपुत्रशब्दः । अमुष्यपुत्रस्य भाव इ 'द्वन्द्वमनोज्ञादिभ्यश्च' इति वुञि अकादेशे पुत्रशब्दात् सुपो लुकि आदिवृद्धौ स्त्रीत्व टापि 'प्रत्ययस्थात्—' इतीत्वे आमुष्यपुत्रिकाशब्द इत्यर्थः । एवमिति । अमु कुलमिति षष्ठीसमासे षष्ठ्या अलुकि अमुष्यकुलशब्दाद्वुञादिः पूर्ववदित्यर्थ देवानामिति । वार्तिकमिदम् । मूर्खः अज्ञः । दिवु क्रीडायाम् । देवाः क्रीडा मूर्खाः, तेषां प्रियोऽपि मूर्ख एव, मूर्खप्रियस्यावश्यं मूर्खत्वादिति 'अजेर्वी—' इ कैयटः । शेपपुच्छेति । वार्तिकमिदम् । षष्ठ्या अलुगिति शेषः । संज्ञाया भाष्यम् । शुनश्शेप इति । शुनः शेप इव शेपो यस्येति विग्रहः । 'मेढ्रो मे शेफसी' इत्यमरः । शेफशब्दोऽप्यस्ति, 'शेफाय स्वाहा' इति दर्शनात् । शुनःपु इति । शुनः पुच्छमिव पुच्छं यस्येति विग्रहः । एवं शुनोलाङ्गूल इत्यपि । ऋ विशेषाणां संज्ञा एताः । दिवश्च दास इति । वार्तिकम् । षष्ठ्या अलुगिति दिवोदास इति । कश्चिद्राजर्षिरयम् । पुत्रेऽन्यतरस्याम् । निन्दायामिति आक्रोशे इत्यनुवृत्तिलभ्यमिदम् । स्पष्टं चेदम् 'आनङृतः—' इत्यत्र भा

---

इत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । देवानामिति । मूर्खा हि देवानां जनयन्ति देवपशुत्वादिति मनोरमा । अयं भावः—ब्रह्मज्ञानरहितत्वात्संसारिणो मूर्खा ते तु योगादिकर्माण्यनुतिष्ठन्तः पुरोडाशादिप्रदानद्वारा देवानामत्यन्तं प्रीतिं ज यन्ति । ब्रह्मज्ञानिनस्तु न तथा, तेषां यागाद्यनुष्ठानाभावात् । अतो गवादिस्था पन्नत्वान्मूर्खा एव देवपशव इति । शेपपुच्छेति । शुन इव शेपमस्य शुनःशेप

---

१ 'शेफ' इति क्वचित् पाठः । २ अमरकोशे तु—'शिश्नो मेढ्रं मेहनशेफसी' इति पाठ उपलभ्यते ।

रन्तेवासी। पितुःपुत्रः। 'विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्' (वा ३९०३) नेह—होतृधनम्। ९८२ विभाषा स्वसृपत्योः। (६—३—२४) ऋदन्तात्षष्ठ्या अलुग्वा स्वसृपत्योः परयोः। ९८३ मातुःपितुर्भ्यामन्यतरस्याम्। (८—३—८५) आभ्यां स्वसुः सस्य षो वा स्यात्समासे। मातुःष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा। लुक्पक्षे तु—९८४ मातृपितृभ्यां स्वसा। (८—३—८४) आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे। मातृष्वसा। पितृष्वसा। असमासे तु—मातुःस्वसा, पितुःस्वसा।

इत्यलुक्समासप्रकरणम्।

---

ऋतो विद्या। एकत्वे बहुवचनम्। तदाह—विद्यासंबन्धयोनिसंबन्धवाचिन ऋदन्तादिति। अलुक् स्यादिति। उत्तरपदे परत इति शेषः। विद्यासंबन्धवाचिनमुदाहरति—होतुरन्तेवासीति। ऋग्वेदविहितकर्मविशेषकर्ता होता। अतो होतृशब्दो विद्यासंबन्धप्रवृत्तिनिमित्तक इति भावः। होतुःपुत्र इति। विद्यासंबन्धवाचिन उदाहरणान्तरमिदम्। अथ योनिसंबन्धवाचिनमुदाहरति—पितुरन्तेवासीति, पितुःपुत्र इति च। ननु होतृधनं पितृधनमित्यत्राप्यलुक् स्यादित्यत आह—विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणमिति। विद्यायोनिसंबन्धेभ्य इत्यत्र विद्यासंबन्धयोनिसंबन्धवाचिनोः पूर्वोत्तरपदयोर्ग्रहणमित्यर्थः। पूर्वोत्तरपदयोरुभयोरपि विद्यासंबन्धयोनिसंबन्धान्यतरवाचित्वं विवक्षितमिति भावः। होतृधनं पितृधनमित्यत्र उत्तरपदस्य विद्यासंबन्धयोनिसंबन्धान्यतरवाचित्वाभावाद् न षष्ठ्या अलुगिति भावः। अन्यतरसंबन्धवाचित्वस्य विवक्षितत्वादेव होतुःपुत्र इत्यादि सिद्धम्। विभाषा स्वसृपत्योः। ऋदन्तादिति। विद्यासंबन्धयोनिसंबन्धान्यतरवाचिन इति शेषः। ततश्च भोक्तृस्वसेत्यत्र नातिव्याप्तिः। पूर्वेण नित्ये प्राप्ते विकल्पोऽयम्। अलुक्पक्षे विशेषमाह—मातुः पितुर्भ्यामन्यतरस्याम्। 'मातृपितृभ्यां स्वसा' इति पूर्वसूत्रात् स्वसेत्यनुवर्तते। षष्ठ्यर्थे प्रथमा। 'सहेः साडस्सः' इति सूत्रात् स इति षष्ठ्यन्तं पदमनुवर्तते। 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम्। तदाह-आभ्यामिति। मातुः पितुरिति षष्ठ्यन्ताभ्यामित्यर्थः। समास इति। 'समासेऽङ्गुलेः सङ्गः' इत्यतस्तदनुवृत्तेरिति भाव.। मातुःष्वसा पितुःष्वसेति अलुकि पत्वे रूपम्। मातुःस्वसा पितुःस्वसेत्यलुकि षत्वाभावे रूपम्। लुक्पक्षे त्विति। विशेषो वक्ष्यत इति शेषः। मातृपितृभ्यां स्वसा। स्वसुरिति। सूत्रे षष्ठ्यर्थे प्रथमेति भावः। मातृष्वसा, पितृष्वसेति। लुक्पक्षे नित्यमेव षत्वम्। आदेशप्रत्ययसकारत्वाभावादप्राप्ते षत्वविधिरयम्। षत्वविधौ समासग्रहणानुवृत्तेः फलं

---

यद्यपि शेपस्शब्दः सकारान्तः 'गौलिङ्गं चिह्नशेपसोः' इत्यमरप्रयोगात्। तथापि शीङो निपातनादौणादिके पप्रत्यये अकारान्तोऽप्यस्त्येव। तथा च मन्त्रः 'यस्यामुशन्तः प्रहराम शेपम्' इति। 'चिह्नशेफयोः' इति पाठे तु शेफशब्दस्य सकारान्तत्वशङ्कैव नास्तीति बोध्यम्। शुनःपुच्छ इत्यादावपि बहुव्रीहिः, त्रयोऽप्यमी ऋषिविशेषाणां संज्ञाः। 'मातुःपितुर्भ्याम—' इति सूत्रे 'समासेऽङ्गुलेः सङ्गः' इत्यत समास इत्यनुवर्ति-

# अथ समासाश्रयविधिप्रकरणम् । २५ ।

९८५ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः (६—३—४३) भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्याद्घरूपकल्पप्र येषु परेषु, चेलडादिषु चोत्तरपदेषु । ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणि ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा इत्यादि । ब्रुवः प वचि पच्यादेशगुणयोरभावोऽपि निपात्यते । चेलडादीनि वृत्तिविषये कुत्सनवा

---

दर्शयति—असमासे त्विति । वाक्ये वैकल्पिकं षत्वमपि नास्तीत्यर्थः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायाम् अलुक्समासप्रकरणं समाप्तम् ।

---

अथ समासाश्रयविधिर्निरूप्यते—घरूप । उत्तरपदे इत्यधिकृतं चेल ष्वन्वेति, नतु घरूपकल्पेषु, घशब्दवाच्यतरप्तमपो रूपप्कल्पपोश्च प्रत्ययत्वात् । तदन्तग्रहणे सति तेषूत्तरपदत्वं संभवतीति वाच्यम्, 'हृदयस्य हृल्लेख—' इ उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाभाव इति भाष्य उक्तत्वात् । 'स्त्रियाः पुं इत्यतो भाषितपुंस्कादित्यनुवृत्तम् । ङ्य इति तदन्तग्रहणम्, केवलस्यानेकाच्त्वाभाव तदाह—भाषितपुंस्काद्यो ङी इति । एतदर्थमेव 'स्त्रियाः पुंवत्—' इ भाषितपुंस्कादिति पञ्चम्यन्तमुपात्तम् । तत्र भाषितपुंस्काया इति षष्ठ्यन्तोपाद इह तदनुवृत्तिर्न स्यात्, असंभवात् । नहि ङीप्प्रत्ययस्य तदन्तस्य भाषितपुंस्कत्वम न च तत्रापि नार्थवत्स्याद् अनूङिति पर्युदासात् स्त्रीप्रत्ययलाभेन तदन्तस्य भा पुंस्कत्वाभावादिति वाच्यम्, तत्र स्त्रिया इत्यस्वरितत्वात् स्त्रीप्रत्ययग्रहणं नेत्युक्त ब्राह्मणितरा । ब्राह्मणितमेति । अतिशायने तरप्तमपौ । नच 'तसिलादि इति पुंवत्त्वेन ङीपो निवृत्तिः शङ्क्या, 'जातेश्च' इति निषेधात् । ब्राह्मणिरू प्रशंसायां रूपप् । ब्राह्मणिकल्पेति । 'ईषदसमाप्तौ—' इति कल्पप् । ब्रा चेलीति । 'चिल वसने' तस्मादचि चेलडिति पचादौ पठितम् । टित्वाद् ङ इत्यादीति । ब्राह्मणिमता । ब्राह्मणिहता । ब्रूञ इति । ब्रूञ्धातोरचि कृते, वचिः' इति वच्यादेशस्य लघूपधगुणस्य च अभावो निपात्यत इत्यर्थः । चेल नीति । समासवृत्तिविषये चेलड्ब्रुवगोत्रमतहता इत्युत्तरपदानि कुत्सनवाचीनीति

---

तम्, तत्फलं दर्शयति—असमासे त्विति । वाक्ये वैकल्पिकमपि षत्वं नेत्यर्

इत्यलुक्समासप्रकरणम् ।

---

घरूपकल्प—। 'तरप्तमपौ घः—' । 'प्रशंसायां रूपप्' । 'चिल वस 'चेलट्' इति पचादौ टित्पठ्यते ङीवर्थम् । प्रत्ययेष्विति । लेखग्रहणेन 'उ पदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापयिष्यत इति भावः । णितरेति । 'जातेश्च' इति निषेधात् 'तसिलादिषु' इति न पुंवद्भावः । चेली

ति। तैः 'कुत्सितानि कुत्सनैः' (सू ७३२) इति समासः। ङ्यः किम्—दत्तातरा। भाषितपुंस्कात् किम्—आमलकीतरा, कुवलीतरा। ९८६ नद्याः शेषस्यान्यतरस्याम्। (६—३—४४) अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात्। ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरा। स्त्रितरा, स्त्रीतरा। 'कृन्नद्या न' (वा ३९३८)। लक्ष्मीतरा। ९८७ उगितश्च। (६—३—४५) उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात्। विदुषितरा। ह्रस्वाभावपक्षे तु 'तसिलादिषु—' (सू ८३६) इति पुंवत्। विद्वत्तरा। वृत्त्यादिषु विदुषीतरा इत्युदाहृतम्, तन्निर्मूलम्। ९८८ हृदयस्य हृल्लेखयदण्लासेषु। (६—३—५०) हृदयं लिखतीति हृल्लेखः। हृदयस्य प्रियं हृद्यम्। हृदयस्येदं हार्दम्। हृल्लासः। लेख इत्यणन्तस्य ग्रहणम्। घञि तु हृदयलेखः। लेखग्रहणं ज्ञापकम् 'उत्तर-

---

'कुत्सितानि कुत्सनैः' इति कर्मधारय इत्यर्थः। आमलकीतरेति। आमलकीशब्दस्य वृक्षवाचित्वे नित्यस्त्रीलिङ्गत्वाद् भाषितपुंस्कत्वाभावेन न ह्रस्व इति भावः। ननु 'न पदान्त—' इति सूत्रे भाष्ये बिम्बबदर्यामलकशब्दानां भाषितपुंस्कत्वावगमात् कथमामलकीशब्दस्य वृक्षविशेषे नित्यस्त्रीलिङ्गत्वमित्यरुचेराह—कुवलीतरेति। वृक्षविशेषे नित्यस्त्रीलिङ्गोऽयमिति भावः। अमरस्तु 'कर्कन्धूर्बदरी कोली घोण्टा कुवलफेनिले' इति नपुंसकत्वमाह। नद्याः शेषस्यान्यतरस्याम्। उक्तादन्यः शेषः। ङ्यन्तस्यानेकाच इति पूर्वसूत्रे स्थितम्, तदन्यत्वं च अनेकाचो ङ्यन्तत्वाभावे ङ्यन्तस्यानेकाच्त्वाभावेऽपि संभवति। तदाह—अङ्यन्तनद्या ङ्यन्तस्यैकाचश्चेति। 'ऊङुतः' इति ब्रह्मबन्धुशब्द ऊङन्तः। भाषितपुंस्कस्येति तु नेहानुवर्तत इत्यभिप्रेत्योदाहरति—स्त्रितरेति। कृन्नद्या नेति। कृदन्ता या नदी तस्या ह्रस्वो नेति वाच्यमित्यर्थः। लक्ष्मीतरेति। 'लक्षेर्मुट् च' इति औणादिके ईप्रत्यये मुडागमे च लक्ष्मीशब्दः कृदन्त इति भावः। उगितश्च। विदुषितरेति। 'विदेः शतुर्वसुः' इति वसुप्रत्ययः। उगिदन्तमिदम्। अनेकाच्त्वाद् 'नद्याः शेषस्य—' इत्यस्याप्राप्तेरिदमिति भावः। विद्वत्तरेति। पुंवत्वे ङीपो निवृत्तौ विद्वत्तरेति रूपमित्यर्थः। तन्निर्मूलमिति। पुंवत्वस्य दुर्वारत्वादित्यर्थः। 'विद्वच्छ्रेयसोः पुंवत्त्वं न वक्तव्यम्' इति वृत्तिः। परन्तु वचनमिदं भाष्यादृष्टत्वादुपेक्ष्यमिति भावः। अत्रोगितः परा या नदीति मूलं वर्णयोरेव नदीसंज्ञेति मताभिप्रायकम्। हृदयस्य। लेख, यत्, अण्, लास एषु परेषु हृदयस्य हृदादेश इत्यर्थः। हृदयं लिखतीति हृल्लेखः। कर्मण्यण्। हृदयस्य प्रियं हृद्यमिति। 'हृदयस्य प्रियः' इति यत्प्रत्ययः। हार्दमिति। 'तस्येदम्' इत्यण्, हृदादेशः। हृल्लास इति। घञन्तोऽयमिति भावः।

---

पचादौ 'चेलट्' इति पाठात् 'टिड्ढा—' इति ङीप्। आमलकीति। आमलकीकुवलीशब्दो वृक्षे नित्यस्त्रिलिङ्गौ। नद्याः। उक्तादन्यः शेषः, स च द्विधेत्याह—अङ्यन्तेति। उपलक्षणमेतत्। 'भाषितपुंस्क' इत्यपि नेह संबध्यत इत्याशयेनाह—स्त्रीतरेति। उगितः परा या नदीति। ईदूतोः केवलयोरपि नदीसंज्ञेत्याश्रित्येदमुक्तम्। विदुषितरेति। 'उगितश्च' इति ङीपि 'वसोः संप्रसारणम्'। वृत्त्या-

पदाधिकारे तदन्तविधिर्नास्ति' ( प २६ ) इति । ९८९ वा शोकष्यञोः (६---३---५१) हृच्छोकः, हृदयशोकः । सौहार्द्यम्, सौहृदय्यम् । हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति, तेन सिद्धे प्रपञ्चार्थमि ९९० पादस्य पदाज्यातिगोपहतेषु । (६—३—५२) एषूत्तरपदेषु पद इत्यदन्त आदेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः । तिभ्यां पादे च' ( उ ५७०--५९१ ) इतीण्प्रत्ययः । अजेर्व्यभावो निपातन पदगः । पदोपहतः । ९९१ पद्यत्यतदर्थे । (६---३---५३) पादस्य तदर्थे यति परे । पादौ विध्यन्ति पद्याः शर्कराः । अतदर्थे किम्—पादा पाद्यम् । 'पादार्घाभ्यां च' (सू २०९३) इति यत् । 'इके चरतावुपसं

---

लेखेत्यणन्तस्य ग्रहणमिति । अण्प्रत्ययसाहचर्यादिति प्राञ्चः । व्याख्या तत्त्वम् । तर्हि लेखग्रहणमेव व्यर्थम्, अणैव सिद्धेरित्यत आह—ज्ञापक ज्ञाप्यांशमाह—उत्तरपदाधिकारे तदन्तविधिर्नास्तीति । तत्फलं तु कल्पब्ग्रहणे तदन्तविध्यभावः । वा शोक । सौहार्द्यमिति । ब्राह्मणादि भावे ष्यञि 'हृद्भगसिन्ध्वन्ते—' इत्युभयपदवृद्धिः । सौहृदय्यमिति । भावे हृच्छब्दत्वाभावाद् आदिवृद्धौ च 'यस्येति' इति लोपे रूपमिति भावः । पद । पद इति लुप्तप्रथमाकं पृथक्पदम् । एष्विति । आजि, आति, ग इत्येतेष्वित्यर्थः । अदन्त इति । उत्तरसूत्रे पदिति हलन्तस्य ग्रहणादिति अजतीति । 'अज गतिक्षेपणयोः' । पदातिरिति । पादाभ्यामततीति 'अत गतौ' । अज्यतिभ्यामिति । पादे उपपदे अजधातोरतधातोश्च इण् तदर्थः । अजीत्यस्य 'अजेर्व्यघञपोः' इति वीभावमाशङ्क्याह—अजे निपातनादिति । आजीति निर्देशादित्यर्थः । पदग इति । पादाभ्यां त्यर्थः । 'गमश्च, अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः' इति सूत्रस्थेन 'अन्ये दृश्यते' इति वार्तिकेन गमधातोः डः । तदन्ते गशब्दे परे पादस्यादन्तः पदा दकारान्तादेशे तु पद्ग इति स्यात् । पदोपहत इति । पदाभ्यामुपहत इति अत्रापि दकारातादेशे पदुपहत इति स्यात् । पद्यत्यतदर्थे । पद, यति, इति छेदः । पद्या इति । 'विध्यत्यधनुषा' इति यत् प्रत्ययः । पाद 'पादार्घाभ्यां च' इति तादर्थ्ये यत्प्रत्ययः । इके चरताविति । चरत्यर्थे

---

दिष्विति । प्रक्रियातद्व्याख्यानानि चादिशब्दग्राह्याणि । अणन्तस्य ग्रहण अण्प्रत्ययसाहचर्याल्लेखशब्दोऽणन्त एव निर्दिष्ट इति भावः । नन्वेवं लेख व्यर्थं स्यादण्ग्रहणेनैव सिद्धेरत आह—ज्ञापकमिति । अत एव 'घ तदन्तग्रहणं न' इति व्याख्यातम् । सौहार्द्यमिति । ब्राह्मणादित्वात् ष्यञ् सिन्ध्वन्ते—' इत्युभयपदवृद्धिः । पादस्य पदा । उत्तरसूत्रे पद्ग्रहणात्पदेत्यद सौत्रो विभक्तिलुक् । तदाह—अदन्त आदेश इति । तेन 'पदगः' इत्यादि पद्या इति । 'विध्यत्यधनुषा' इति यत् । पाद्यमिति । 'पादार्घाभ्यां च' यत् । पूर्वसूत्रे आज्यात्यादिषु प्राण्यङ्गस्यैव करणत्वसंभवादिहापि तद्वचन

(वा ३९५८)। पादाभ्यां चरति पदिकः। पर्पादित्वात् ष्ठन्। ९९२ हिमकाषिहतिषु च। (६-३-५४) पद्धिमम्। पत्काषी। पद्धतिः। ९९३ ऋचः शे। (६-३-५५) ऋचः पादस्य पत्स्याच्छे परे। गायत्रीं पच्छः शंसति। पादं पादमित्यर्थः। ऋचः किम्—पादशः कार्षापणं ददाति। ९९४ वा घोषमिश्रशब्देषु। (६-३-५६) पादस्य पत्। पद्घोषः, पादघोषः। पन्मिश्र, पादमिश्रः। पच्छब्दः, पादशब्दः। 'निष्के चेति वाच्यम्' (वा ३९५९)। पन्निष्कः, पादनिष्कः। ९९५ उदकस्योदः संज्ञायाम्। (६-३-५७) उदमेघः। 'उत्तरपदस्य चेति वक्तव्यम्' (वा ३९६९)। क्षीरोदः। ९९६ पेषंवासवाहनधिषु च। (६-३-५८) उदपेषं पिनष्टि। उदवासः। उदवाहनः। उदधिर्घटः। समुद्रे तु पूर्वेण सिद्धम्। ९९७ एकहलादौ पूरयितव्येऽन्यतरस्याम्। (६-३-५९) उदकुम्भः उदककुम्भः। एक इति

---

छनो य इकादेशः तस्मिन् परे पादस्य पत्स्यादित्युपसंख्यानमित्यर्थः। हिमकाषि। एषु परेषु पादस्य पत्स्यादित्यर्थः। पद्धिममिति। पादस्य हिममिति विग्रहः। पत्काषीति। पादौ पादाभ्यां वा कषतीत्यर्थः। 'सुप्यजातौ—' इति णिनिः। पद्धतिरिति। हन्यते इति हतिः। कर्मणि क्तिन्। पादाभ्यां हतिरिति विग्रहः। 'कर्तृकरणे कृता—' इति समासः। ऋचः शे। शस्य शस्प्रत्ययैकदेशस्यानुकरणात् सप्तमीत्यभिप्रेत्योदाहरति—पच्छ इति। 'संख्यैकवचनाच्च वीप्सायाम्' इति पादशब्दात् शस्। 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम्, नत्विह लोमादिशस्य ग्रहणम्, लोमादौ पादशब्दस्य पाठाभावात्। पादशः कार्षापणं ददातीति। कार्षापणाख्यपरिमाण विशेषं सुवर्णादिकं पादं पादं ददातीत्यर्थः। वा घोष। शेषपूरणेन सूत्रं व्याचष्टे—पादस्य पदिति। निष्के चेति। पादस्य पदिति शेषः। उदकस्योदः। उदकशब्दस्य उद इत्यादेशः स्याद् उत्तरपदे संज्ञायामित्यर्थः। उदमेघ इति। उदकपूर्णमेघसादृश्यात् कस्यचिदियं संज्ञा। उत्तरपदस्य चेति। उत्तरपदस्य उदकशब्दस्य उद इत्यादेशः स्यात् संज्ञायामित्यर्थः। क्षीरोद इति। क्षीरम् उदकस्थानीयं यस्येति विग्रहः। क्षीरोदं सर इति त्वसाध्वेव, असंज्ञात्वात्। पेषंवास। पेषमिति णमुलन्तमव्ययम्। तस्मिन्वासवाहनधिषु च परत उदकशब्दस्य उदः स्यादित्यर्थः। असंज्ञार्थं वचनम्। उदपेषं पिनष्टीति। उदकेन पिनष्टीत्यर्थः। 'स्नेहने पिषः' इति णमुल्। 'कषादिषु यथाविध्यनुप्रयोगः। उदवास इति। उदकस्य वास इति विग्रहः। उदवाहन इति। करणे ल्युट्। उदकस्य वाहक इत्यर्थः। उदधिर्घट इति। उदकं धीयतेऽस्मिन्निति विग्रहः। 'कर्मण्यधिकरणे च' इति किप्रत्ययः। असंज्ञात्वस्फोरणाय घट इति विशेष्यम्। समुद्रे त्विति। तत्र उदधिशब्दस्य संज्ञात्वेन 'उदकस्योद—' इति पूर्वसूत्रेण सिद्धमित्यर्थः। एकहलादौ।

---

शब्दो गृह्यते, न परिमाणवचनः। तेन 'द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यम्, त्रिपाद्यम्' इत्यत्र 'पणपादमाष—' इति यति पदादेशो न भवति। एतच्च वृत्तिहरदत्तग्रन्थयोः स्पष्टम्। पत्काषीति। 'सुप्यजातौ—' इति णिनिः। पद्धतिरिति। कर्मणि क्तिन्।

किम्-उदकस्थाली । पूरयितव्ये इति किम्—उदकपर्वतः । ९९८ मन्थौ ... बिन्दुवज्रभारहारवीवधगाहेषु च । ( ६-३-६० ) उदमन्थः, उ... मन्थः । उदौदनः, उदकौदन इत्यादि । ९९९ इको ह्रस्वोऽङ्यो गालव... ( ६-३-६१ ) इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणि... ग्रामणीपुत्रः । इकः किम्—रमापतिः । अङ्य इति किम्—गौरीपतिः । ... 'इयङुवङ्भाविनामव्ययानां ... ग्रहणं पूजार्थम्, अन्यतरस्याम् इत्यनुवृत्तेः । 'इयङुवङ्भाविनामव्ययानां ... नेति वाच्यम्' ( वा ३९६३ ) श्रीमदः । भ्रूभङ्गः । शुक्लीभावः । 'अभ्रूकुं... नामिति वक्तव्यम्' ( वा ३९६४ ) भ्रुकुंसः, भ्रूकुंसः । भ्रुकुटिः, भ्रूकु... 'अकारोऽनेन विधीयते' इति व्याख्यान्तरम् । भ्रकुंसः । भ्रकुटिः । भ्रुवा ...

---

हल्त्वस्य एकैकवर्णधर्मत्वादेव सिद्धे एकग्रहणादसंयुक्तत्वं लभ्यते । पूरयितव्यं पू... कुम्भादि । असंयुक्तहलादौ पूरयितव्यवाचके उत्तरपदे परे उदकस्य उद इत्या... स्यादित्यर्थः । मन्थौदन । उदकस्य उदादेशो वेति शेषः । अपूरयितव्यार्थं वचन... उदमन्थः, उदकमन्थ इति । उदकमिश्रो मन्थ इति विग्रहः । द्रवद्रव्यसंपृ... सक्तवो मन्थः । भर्जितयवपिष्टानि सक्तवः । उदौदनः, उदकौदन इति । उ... मिश्र इत्यर्थः । इत्यादीति । उदसक्तवः, उदकसक्तवः । उदबिन्दवः, उदकबिन्द... उदवज्रःउदकवज्रः । उदभारः, उदकभारः । उदहारः, उदकहारः । उदवीव... उदकवीवधः । उदगाहः, उदकगाहः । वीवधस्तु जलाद्याहरणयोग्य उभयतः... स्कन्धवाह्यः काष्ठविशेषः । इको ह्रस्वः । अङ्य इति च्छेदः । ग्रामणी... इति । कर्मधारयः षष्ठीसमासो वा । नीधातोरीकारोऽयम्, न तु ङीप्प्रत्यय इति भा... ननु गालवग्रहणस्य विकल्पार्थकत्वं किं न स्यादित्यत आह—अन्यतरस्यामि... वृत्तेरिति । इयङुवङ्भाविनामिति । तदर्हाणामित्यर्थः । श्रीमदः । भ्रू... इति । श्रीभ्रूशब्दौ अजादिप्रत्यये परे इयङुवङर्हाविति भावः । शुक्लीभाव इ... अभूततद्भावे च्विप्रत्यये 'अस्य च्वौ' इति ईत्वम् । 'च्वौ' इति दीर्घः । 'ऊ... च्विडाचश्च' इति निपातत्वादव्ययत्वमिति भावः । अभ्रूकुंसादीनामि... भ्रूशब्दस्य उवङ्भावितया प्रायः ह्रस्वनिषेधोयःप्राप्तः स नेत्यर्थः । अकारोऽने... 'अभ्रूकुंसादीनाम्—' इति वार्तिके अ इति लुप्तप्रथमाकं पृथक्पदम् । तथा च भ्रू...

---

ऋचः शे । 'शे' इति शस्प्रत्ययस्येदमनुकरणम्, लोमादिषु पादशब्दस्य ... भावान्मत्वर्थे शो न संभवतीति भावः । पच्छब्द इति । 'संख्यैकवचनाच्च वी... याम्' इति शस् । उदमेघ इति । सादृश्यात्पुरुषस्येयं संज्ञा । उदपेषमि... 'स्नेहने पिषः' इति णमुल् । उदधिरिति । उदकं धीयतेऽस्मिन्निति विग्रहः । ... ण्यधिकरणे च' इति किप्रत्ययः । उदमन्थ इति । द्रवद्रव्यसंस्कृताः सक्तवो म... 'उदकेन मन्थः' इति विग्रहे 'तृतीया' इति योगविभागात्समास इति ह... शुक्लीभाव इति । 'ऊर्यादिच्विडाचश्च' इति च्व्यन्तत्वान्निपातत्वेऽव्ययत्वम् । ... कुंस इत्यादि । 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः' इत्यमरः । तन्द्री ...

भाषणं शोभा वा यस्य स स्त्रीवेषधारी नर्तकः । भ्रुवः कुटिः कौटिल्यम् ।
१००० एक तद्धिते च । ( ६-३-६२ ) एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च । एकस्या आगतमेकरूप्यम् । एकक्षीरम् । १००१ ङ्यापोः संज्ञाछन्दसोर्बहुलम् । ( ६-३-६३ ) रेवतिपुत्रः । अजक्षीरम् । १००२ त्वे च । (६-३-६४) त्वप्रत्यये ङ्यापोर्वा ह्रस्वः । अजत्वम्, अजात्वम् । रोहिणित्वम्, रोहिणीत्वम् । १००३ ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे । (६-१-१३) ष्यङन्तस्य पूर्वपदस्य सम्प्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे । १००४ सम्प्रसारणस्य । ( ६-३-१३९ ) सम्प्रसारणस्य दीर्घः स्यादुत्तरपदे । कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । व्यवस्थितविभा-

---

दीनामवयवो यो भ्रूशब्दः तस्य अकारः अन्तादेशः स्यादिति व्याख्यानान्तरमित्यर्थः । भ्रुवा कुंसो भाषणमिति । तत्तादर्थज्ञापनमित्यर्थः । 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः' इत्यमरः, 'भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्' इति च । एकतद्धिते च । एकेति लुप्तषष्ठीकम् । तदाह—एकशब्दस्येति । स्त्रीप्रत्ययान्तस्येति शेषः, अन्यथा ह्रस्वविधिर्वैयर्थ्यात् । उत्तरपदे चेति । चकारात्तदनुकर्ष इति भावः । एकस्या आगतम् एकरूप्यमिति । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' । एकक्षीरमिति । एकस्याः क्षीरमिति विग्रहः । ङ्यापोः । उत्तरपदे ह्रस्वः स्यादिति शेषः । रेवतिपुत्र इति । कस्यचित्संज्ञेयम् । अथ छन्दस्युदाहरति—अजक्षीरमिति । अजायाः क्षीरमिति विग्रहः । 'परमं वा एतत्पयो यदजक्षीरम्' इति तैत्तिरीये । त्वे च । शेषपूरणेन सूत्रं व्याचष्टे—त्वप्रत्यये ङ्यापोर्वा ह्रस्व इति । अजत्वं रोहिणीत्वमिति । संज्ञात्वाभावात् छन्दस्येवायमिति वृत्तिः, अनुत्तरपदार्थं वचनम् । ष्यङः संप्रसारणम् । प्रत्ययग्रहणपरिभाषया ष्यङ इति तदन्तग्रहणम् । तदाह—ष्यङन्तस्य पूर्वपदस्येति । तस्य सूत्रस्य उत्तरपदाधिकारस्थत्वेऽपि तत्पुरुषग्रहणेन पूर्वपदलाभ इति भावः । उत्तरपदयोरिति । इदमपि तत्पुरुषपदलभ्यम् । यद्वा उत्तरपदाधिकारेण पूर्वपदमाक्षिप्यते । संप्रसारणस्य । दीर्घ इति । 'ढलोपे—' इत्यतस्तदनुवृत्तेरिति भावः । उत्तरपद इति । 'अलुगुत्तरपदे' इति तदधिकारादिति भावः । कौमुदगन्ध्यायाः पुत्र इति । विग्रहवाक्यमिदम् । कुमुदगन्ध इव गन्धो यस्य स कुमुदगन्धिः । 'सप्तम्युपमानपूर्वपदस्य बहु-

---

भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्' इति च । एकतद्धिते च । 'एक' इति लुप्तषष्ठीकम्, तदाह—एकशब्दस्येति । ह्रस्वविधानमस्य टाबन्त एवोपयुज्यते न तु केवले, स्वभावत एव ह्रस्वत्वादतो व्याचष्टे—एकस्या आगतमित्यादि । ष्यङः । इह तत्पुरुषपदेन पूर्वपदमुत्तरपदं चाक्षिप्यते, तत्र ष्यङा पूर्वपदस्य विशेषणात्तदन्तं गृह्यत इत्याह—ष्यङन्तस्येति । पुत्रपत्योरुत्तरपदयोरिति । 'पुत्रपत्यन्तयोः' इति व्याख्याने तु 'कारीषगन्ध्यापरमपुत्रः' इत्यादावतिप्रसङ्गः स्यादिति भावः । संप्रसारणस्य । 'उत्तरपदे' इत्यधिक्रियते । 'ढ्रलोपे—' इत्यतो दीर्घ इत्यनुवर्तते, तदाह—दीर्घः स्यादुत्तरपद इति । 'हलः' इति दीर्घोऽत्र न प्रवर्तते, प्रत्ययस्य लुका

षया ह्रस्वो न। 'स्त्रीप्रत्यये चानुपसर्जने न' (प २७) इति तदादिनियमप्रतिषेधा परमकारीषगन्धीपुत्रः। उपसर्जने तु तदादिनियमान्नेह—अतिकारीषगन्ध्यपुत्रः

१००५ बन्धुनि बहुव्रीहौ। (६—१—१४) बन्धुशब्द उत्तरपदे ष्यङः सम्प्रसारणं स्याद्बहुव्रीहौ। कारीषगन्ध्या बन्धुरस्येति कारीषगन्धीबन्धुः बहुव्रीहौ इति किम्—कारीषन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः। क्लीबनिर्देशः शब्दस्वरूपापेक्षया 'मातञ्मातृकमातृषु वा' (वा ३४४९) कारीषगन्धीमा

---

व्रीहिर्वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहिः, कुमुदगन्धशब्दे पूर्वखण्डे उत्तर गन्धशब्दस्य लोपश्च। 'उपमानाच्च' इति इत्वम्। कुमुदगन्धेरपत्यं स्त्री इत्यर्थे तस्या पत्यमित्यण्। 'अणिञोरनार्षयोः—' इति तस्य ष्यङादेशः। 'यस्येति च' इति इका लोपः। आदिवृद्धिः। यङश्चाप्। कौमुदगन्ध्याशब्द इति भावः। कौमुदगन्ध्याः पुत्र इति षष्ठीसमासः। सुब्लुकि कौमुदगन्ध्यापुत्र इति स्थिते ष्यङः संप्रसारणे यकारस्य इकारः। तस्य तदुत्तराकारस्य च 'संप्रसारणाच्च' इति पूर्वरूपेण इका 'संप्रसारणस्य' इति दीर्घे कौमुदगन्धीपुत्र इति रूपमिति भावः। 'हलः' इति दीर्घ तु नात्र प्रसक्तिः, संप्रसारणात् पूर्वस्य हलः 'संप्रसारणनिरूपिताङ्गावयवत्वाभावा कौमुदगन्धीपतिरिति। कौमुदगन्ध्यायाः पतिरिति विग्रहः। पूर्ववत्प्रक्रिया। 'इ ह्रस्वोऽङ्यो गालवस्य' इति पाक्षिकं ह्रस्वमाशङ्क्याह—व्यवस्थितविभा ह्रस्वो नेति। अत्र तु व्याख्यानमेव शरणम्। स्यादेतत्। करीषं गोमहिषा पुरीषम्, करीषगन्ध इव गन्धो यस्य स करीषगन्धिः, तस्यापत्यं स्त्री कारीषगन्ध्या परमा चासौ कारीषगन्ध्या च परमकारीषगन्ध्या, तस्याः पुत्रः परमकारीषगन्धी इत्यत्रापि ष्यङः संप्रसारणं तस्य दीर्घश्चेति स्थितिः। अत्र संप्रसारणं दुर्लभं ष्यङ; करीषगन्धिशब्दादेव विहितत्वेन परमकारीषगन्ध्याशब्दस्य पूर्वपदस्य ष्यङ त्वाभावात्प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणादित्यत आह स्त्रीप्रत्यये चेति। ष्यङः स्त्रियां विहितत्वात् स स्त्रीप्रत्ययः। ततश्च 'स्त्रीप्र चानुपसर्जने न' इति परिभाषया तदादिनियमाभावात्परमकारीषगन्ध्याशब्द ष्यङन्त एवेति तत्र संप्रसारणे दीर्घे च परमकारीषगन्धीपुत्र इति रूपमिति भाव इयं परिभाषा 'ष्यङः संप्रसारणम्' इति प्रकृतसूत्रे भाष्ये पठिता। तत्रानुपस ग्रहणस्य प्रयोजनमाह—उपसर्जने त्विति। कारीषगन्ध्यामतिक्रान्तः अतिकारी गन्ध्यः, 'अत्यादयः—' इति समासे, उपसर्जनह्रस्वः। तस्य पुत्रः अतिकारीषगन्ध्यपु अत्र 'स्त्रीप्रत्यये तदादिनियमो न' इति निषेधो न भवति, अनुपर्जन एव स्त्रीप्र तस्य निषेधस्य प्रवृत्तेः। ष्यङ् त्वयं स्त्रीप्रत्ययोऽत्र उपसर्जन एव। अतस्तत्र तदा नियमसत्त्वाद, अतिकारीषगन्ध्यशब्दो नैव ष्यङन्त इति न संप्रसारणमिति भा

---

लुप्तत्वेनाङ्गसंज्ञाया अप्रवृत्तेः। कौमुदगन्ध्याया इति। कुमुदगन्धेरपत्यं कौमुदगन्ध्या। 'तस्यापत्यम्' इत्यणि कृते 'अणिञोः' इति ष्यङादेशः, 'यङश्चाप् ननु 'कौमुदगन्धीपुत्रः' इत्यादौ 'इको ह्रस्वोऽङ्यो गालवस्य' इति ह्रस्वेन भाव्

---

१ क्वचित्तु 'संप्रसारणनिमित्तनिरूपिते' इति पाठः। २ 'च सा' इति क्वचि

कारीषगन्ध्यामातः । कारीषगन्धीमातृकः, कारीषगन्ध्यामातृकः । कारीषगन्धीमाता, कारीषगन्ध्यामाता । अत एव निपातनान्मातृशब्दस्य मातजादेशः, 'नद्यृतश्च' (सू ८३३) इति कब्विकल्पश्च । बहुव्रीहावेवेदम्, नेह—कारीषगन्ध्याया माता कारीषगन्ध्यामाता । चित्त्वसामर्थ्याच्चित्स्वरो बहुव्रीहिस्वरं बाधते ।

१००६ इष्टकेषीकामालानां चिततूलभारिषु । (६—३—६५) इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी ।

१००७ कारे सत्यागदस्य । (६—३—७०) मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः ।

---

बन्धुनि बहुव्रीहौ । कारीषगन्धीबन्धुरिति । अत्र पत्युत्तरपदत्वाभावात् तत्पुरुषत्वाभावाच्च पूर्वेण न प्राप्तिः । मातञ्मातृकमातृषु वेति । वार्तिकमिदम् । मातच्, मातृक, मातृ एषु परेषु ष्यङः संप्रसारणं वा वक्तव्यमित्यर्थः । मातचि उदाहरति—कारीषगन्धीमातः, कारीषगन्ध्यामात इति । मातृशब्दस्य मातजादेशः, अदन्तमेतत् । मातृके उदाहरति—कारीषगन्धीमातृकः, कारीषगन्ध्यामातृक इति । 'नद्यृतश्च' इति कप् । मातृशब्दे उदाहरति—कारीषगन्धीमाता, कारीषगन्ध्यामातेति । शैषिककबभावे रूपम् । ननु मातृशब्दस्य मातजादेशे किं प्रमाणम्? 'नद्यृतश्च' इति नित्यविधानात् पाक्षिककप् च दुर्लभ इत्यत आह—अत एवेति । बहुव्रीहावेवेदमिति । 'बन्धुनि बहुव्रीहौ' इति सूत्रे अस्य वार्तिकस्य पठितत्वादिति भावः । मातजिति चित्करणं स्वरार्थमित्याह—चित्त्वसामर्थ्यादिति । इष्टकेषीका । उत्तरपदे इत्यधिकृतम् । तल्लब्धं पूर्वपदमिष्टकादिभिर्विशेष्यते । तदन्तविधिः । व्यपदेशिवद्भावात् तेषामपि ग्रहणम् । उत्तरपदाधिकारस्यापि पदाधिकाराभ्युपगमात् 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति वचनेन वा तेषां ग्रहणम् । 'इको ह्रस्वः—' इत्यतो ह्रस्व इत्यनुवर्तते तदाह—इष्टकादीनां तदन्तानां चेति । इष्टकचितमिति । इष्टकादिभिश्चितमिति विग्रहः । 'कर्तृकरणे कृता—' इति समासः । तदन्तविधेः प्रयोजनमाह—पक्वेष्टकचितमिति । 'इषीकतूलमिति । इषीकायास्तूलमिति विग्रहः । तूलमग्रम्, शष्पमित्यन्ये । मुञ्जेषीकतूलमिति । मुञ्जेषीकायास्तूलमिति विग्रहः । मालभारीति । 'सुप्यजातौ—' इति णिनिः । हारिष्विति पाठान्तरम् । कारे सत्यागदस्य । शेषपूरणेन सूत्रं व्याचष्टे—मुम् स्यादिति । 'अरुर्द्विषत्—' इत्यतस्तदनुवृत्तेरिति भावः । सत्यस्य अगदस्य च कारे परे मुम् स्यादिति फलितम् । मुमि मकार इत् । उकार उच्चारणार्थः । मित्त्वादन्त्यादचः परः । सत्यंकार इति । भावे घञ् । सत्यस्य कार इति विग्रहः । शपथकरणमित्यर्थः । अगदंकार इति । गदो रोगः, तस्या

---

दीर्घविधानं तु पक्षे सावकाशमित्यत आह—व्यवस्थितविभाषयेति । नेहेति । संप्रसारणमिह नेत्यर्थः । अतिकारीषेति । कारीषगन्ध्यामतिक्रान्तोऽतिकारीषगन्ध्यः, तस्य पुत्रः । इष्टकचितमिति । 'कर्तृकरणे कृता—' इति तृतीयासमासः । पक्वेष्टकचितमिति । पदाधिकारात्तदन्तविधिः प्रवर्तत इति भावः । मालभारीति । 'मालां बिभर्ति' इत्यर्थः । 'सुप्यजातौ—' इति णिनिः । 'हारिषु' इति पाठा-

'अस्तोश्चेति वक्तव्यम्' (वा ३९७३) । अस्तुङ्कारः । 'धेनोर्भव्यायाम्' (वा ३९७५) । धेनुम्भव्या । 'लोकस्य पृणे' (वा ३९७६) । लोकम्पृणः । पृण इति मूलविभुजादित्वात्कः । 'इत्येऽनभ्याशस्य' (वा ३९७७) । अनभ्याशमित्यः । दूरतः परिहर्तव्य इत्यर्थः । 'भ्राष्ट्राग्न्योरिन्धे' (वा ३९७८) । भ्राष्ट्रमिन्धः । अग्निमिन्धः । 'गिलेऽगिलस्य' (वा ३९७९) । तिमिङ्गिलः । अगिलस्य किम्—गिलगिलः । 'गिलगिले च' (वा ३९८०) । तिमिङ्गिलगिलः । 'उष्णभद्रयोः करणे' (वा ३९८१) । उष्णङ्करणम् । भद्रङ्करणम् ।

---

भावः अगदः । अर्थाभावेऽव्ययीभावेन सह तत्पुरुषस्य विकल्पोक्तेः । अगदस्य ... इत्यर्थः । अस्तोश्चेति । कारे मुमिति शेषः । अस्तुंकार इति । अस्ति तिङन्तप्रतिरूपकमव्ययमभ्युपगमे वर्तते । धेनोरिति, मुम् वक्तव्य इति शेषः । धेनुंभव्येति । नवप्रसवात् प्रागियमुक्तिः । भविष्यन्ती धेनुरित्यर्थः । 'भव्यगेय—' इति कर्तरि निपातनात् कृत्यप्रत्ययः । धेनुश्चासौ भव्या चेति विग्रहः । मयूरव्यंसकादित्वाद् भव्याशब्दस्य परनिपातः । लोकस्य पृण इति । मुम्वक्तव्य इति शेषः । ननु लोकं पृणातीति विग्रहे कर्मण्यणि लघूपधगुणे रपरत्वे पर्ण इति स्यादित्यत आह—पृण इति मूलविभुजादित्वात् क इति । इत्येऽनभ्याशस्येति । मुम् वक्तव्य इति शेषः । अनभ्याशमित्य इति । अभ्याशः समीपम्, अनभ्याशं दूरम्, द्वितीयान्तमिदम । इण्धातोः प्रापणार्थकाद् 'एतिस्तुशास्—' इत्यादिना क्यप् । 'गम्यादीनामुपसंख्यानम्' इति द्वितीयासमासः । सुब्लुकि मुम् । दूरं प्राप्तव्यः, न तु समीपमित्यर्थं मनसि निधायाह—दूरतः परिहर्तव्य इति । भ्राष्ट्राग्न्योरिन्ध इति । मुम् वक्तव्य इति शेषः । भ्राष्ट्रमिन्ध इति । भ्राष्ट्रं धानादिभर्जनार्हं पात्रम्, तद् इन्धे तापयतीति भ्राष्ट्रमिन्धः, कर्मण्यण्, उपपदसमासः । सुब्लुकि, मुम् । अग्निमिन्ध इति । अग्निं प्रज्वलयतीत्यर्थः । गिलेऽगिलस्येति । अगिलस्येति च्छेदः । गिले परे गिलभिन्नस्य मुम् इत्यर्थः । तिमिङ्गिल इति । 'गॄ निगरणे' । तिमिर्मत्स्यविशेषः । तं गिलति, मूलविभुजादित्वात् कः । 'ॠत इद्धातोः' इति इत्त्वे रपरत्वे 'अचि विभाषा' इति लत्वम्, उपपदसमासः, सुब्लुकि मुम् । गिलगिल इति । अयमपि मत्स्यविशेष...

---

न्तरम् । कारे सत्या । 'अरुर्द्विषत्—' इत्यतोऽनुवर्तनादाह—मुम् स्यादिति । सत्यंकारः शपथकरणम् । अशपथेऽपि 'सत्यादशपथे' इति डाचं बाधित्वा परत्वान्मुमेव । अगदंकारो वैद्यः । अस्तुंकारोऽभ्युपगमः । अस्त्विति तिङन्तप्रतिरूपकमव्ययम् । धेनुम्भव्येति । भविष्यन्ती धेनुरित्यर्थः । 'भव्यगेय—' इति निपातनात्कर्तरि कृत्यः । धेनुश्चासौ भव्या चेति विग्रहः । गौतमस्मृतौ तु 'अधेनुं ...' इत्यत्र 'आर्षत्वान्मुम्न' इति बोध्यम् । लोकम्पृण इति । पृणधातुः प्रीणने । 'पृणतिः पूरणकर्मा' इति तु हरदत्तः । अनभ्याशमित्यत इति । अभ्याशं ... तद्भिन्नमनभ्याशम् । 'एतिस्तुशास्वृदृजुषः' इति इणः क्यप् । भ्राष्ट्रमिन्ध ... कर्मण्यणि उपपदसमासः । एवमग्निमिन्धोऽपि । गिलेऽगिलस्येति । 'गिल...

१००८ रात्रेः कृति विभाषा । (६—३—७२) कृदन्ते परे । रात्रिञ्चरः, रात्रिचरः । रात्रिमटः' रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु 'अरुर्द्विषत्—' (सू २९४२) इति नित्यमेव वक्ष्यते । रात्रिम्मन्यः । १००९ सहस्य सः संज्ञायाम् । (६—३—७८) उत्तरपदे । सपलाशम् । संज्ञायां किम्—सहयुध्वा । १०१० ग्रन्थान्ताधिके च । (६-३-७९) अनयोरर्थयो सहस्य सः स्यात्तदुत्तरपदे । समुहूर्तं ज्योतिषमधीते । सद्रोणा खारी । १०११ द्वितीये चानुपाख्ये ।

---

गिलगिले चेति । अगिलस्य मुम् वाच्य इत्यर्थः । तिमिङ्गिलगिल इति । गिलं गिलतीति गिलगिलः, तिमीनां गिलगिल इति विग्रहः । संबन्धसामान्ये षष्ठी । तिमिषु गिलगिल इति निर्धारणसप्तमी वा । 'संज्ञायाम्' इति सप्तमीसमासः । उष्ण भद्रयोः करण इति । मुम् वाच्य इत्यर्थः । उष्णङ्करणम्, भद्रङ्करणमिति षष्ठीसमासः । रात्रेः कृति विभाषा । अस्य उत्तरपदाधिकारस्थत्वेन 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति तु इह न भवति । कृतो धातुप्रकृतिकत्वेन रात्रेः कृतः असंभवात् तदन्तविधिरित्यभिप्रेत्य आह—कृदन्ते पर इति । रात्रेर्मुम् वा स्यादित्यर्थः । रात्रिञ्चर रात्रिचर इति । सुप्युपपदे चरेष्टः, उपपदसमासः, सुब्लुकि पक्षे मुम् । रात्रिमटः, रात्र्यट इति । सुप्युपपदे मूलविभुजादित्वात् कः । उपपदसमासः । सुब्लुक्पक्षे मुम् । ननु रात्रिम्मन्य इत्यत्रापि मुम्विकल्पः स्यादित्यत आह—अखिदर्थमिदं सूत्रमिति । खिति त्विति । खिति तु इमं मुम्विकल्पं बाधित्वा पूर्वविप्रतिषेधेन 'अरुर्द्विषदजन्तस्य—' इति नित्यमेव मुमो विधानं कृदधिकारे वक्ष्यत इत्यर्थः । रात्रिम्मन्य इति । 'आत्ममाने खश्च' इति खश् । खशः शित्त्वेन सार्वधातुकत्वात् तस्मिन् परे 'दिवादिभ्यः श्यन्' इति श्यनि खित्त्वान्नित्यं मुमिति भावः । सहस्य सः । उत्तरपद इति । शेषपूरणेनोक्तमिदम् । सह इत्यस्य स इत्यादेशः स्यादुत्तरपदे इत्यर्थः । 'वोपसर्जनस्य' इत्यस्यापवादः । सपलाशमिति । 'तेन सह—' इति बहुव्रीहिः । वनविशेषस्य संज्ञेयम् । सहयुध्वेति । 'सहे च' इति क्वनिप् । असंज्ञात्वान्न सभावः । ग्रन्थान्ताधिके च । ग्रन्थान्तश्च अधिकश्चेति समाहारद्वन्द्वः । अनयोरर्थयोरिति । विद्यमानस्येति शेषः । समुहूर्तमिति । मुहूर्तविधिपरग्रन्थपर्यन्तं ज्योतिःशास्त्रमधीत इत्यर्थः । अन्तवचने अव्ययीभावः 'अव्ययीभावे चाकाले' इत्यत्र कालपर्युदासादप्राप्ते सभावे ग्रन्थान्तग्रहणम् । सद्रोणा खारीति । द्रोणपरिमाणादधिकेत्यर्थः । मयूरव्यंसकादित्वात् सहशब्दस्याधिकवाचिनः समासः सभावश्च ।

---

उत्तरपदे अगिलस्य मुम्' इत्यर्थः । तिमिंगिल इति । मत्स्यविशेषः । गिरतेर्मूलविभुजादित्वात्कः । 'अचि विभाषा' इति लत्वम् । गिलगिले चेति । 'गिलं गिलति इति गिलगिलः, तिमीनां गिलगिलः' इति विग्रहे इदमारब्धम् । रात्रेः कृति । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाभावेऽपि रात्रिशब्दापरत्र कृतोऽसंभवात्कृदन्त उत्तरपदे अयं विधिरित्याशयेनोदाहरति—रात्रिचर इति । यद्यप्याचारक्विबन्तात् ण्वुलादिः संभवति, तथापि विलम्बितोपस्थितिकत्वात्स न गृह्यत इति भावः । नित्यमेवेति । पूर्वविप्रतिषेधेनेति भावः । रात्रिम्मन्य इति ।

(६—३—८०) अनुमेये द्वितीये सहस्य सः स्यात्। सराक्षसीका निशा। राक्ष साक्षादनुपलभ्यमाना निशयानुमीयते । १०१२ समानस्य च्छन्दस्य प्रभृत्युदर्केषु । (६—३—८४) समानस्य सः स्यादुत्तरपदे, न तु मूर्धादिषु। भ्राता सगर्भ्यः। अनु सखा सयूथ्यः । यो नः सनुत्यः ।' 'तत्र भवः' इ 'सगर्भसयूथसनुताद्यत्' (सू ३४६०) । अमूर्धादिषु किम्—समानमूर्धा । समा मूर्धा। समानप्रभृतयः। समानोदर्काः। समानस्य इति योगो विभज्यते। सपक्षः साधर्म्यं सजातीयमित्यादि सिद्धमिति काशिका । अथवा सह सदृशवचनोऽस्ति, सदृशः सख्या ससखीति यथा । तेनायमस्वपदविग्रहो

द्वितीये चानुपाख्ये । अप्रधानेऽसहाये द्वितीयशब्दो लाक्षणिकः । उपाख्या प्रतीयते उपलभ्यते इत्युपाख्यम्, तदन्यदनुपाख्यम्, अनुमेयमिति यावत् । तदाह अनुमेय इति । सहायवाचिन्युत्तरपदे परत इत्यर्थः । सराक्षसीका निशे 'तेन सह—' इति बहुव्रीहिः । 'नद्यृतश्च' इति कप् । अनुमेयराक्षसीसहिता निशे तदाह—राक्षसी साक्षादिति । समानस्य । नतु मूर्धादिष्विति । मूर्ध प्रभृति, उदर्क एषु परेषु नेत्यर्थः । सगर्भ्य इति । समाने गर्भे भव इत्य सयूथ्य इति । समाने यूथे भव इत्यर्थः । सनुत्य इति । समाने नुते भव इत्य सर्वत्र 'तद्धितार्थ—' इति समासे समानस्य सभावः । समानमूर्धेति। समानो यस्येति विग्रहः । समानप्रभृतय इति । समानः प्रभृतिराद्यवयवो येषामिति विग्र समानोदर्का इति। समान उदर्को येषामिति विग्रहः । तैत्तिरीये 'सजूरृ सजूर्विधाभिः, सजूर्वसुभिः सजूर्देवैः, सजूरुद्रैः, सजूरादित्यैः, सजूर्विश्वै सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यु सादयतामिह त्वा' इति मन्त्राः सं पञ्च पठिताः। पञ्चस्वपि मन्त्रेषु सजूरृतुभिः सजूर्विधाभिरित्ययमाद्यवयवः देवैर्वयोनाधैरित्यन्तावयवश्च समानः, सजूर्वसुभिः इत्यादिपञ्चानाम् एकैकस्य एकैकस्मिन् मन्त्रे मध्ये निवेश इति याज्ञिकमर्यादा। ननु लोके सपक्षादिशब्देषु समानस्य सभाव इत्यत आह—समानस्येति योगो विभज्य इति। तथा समानस्य सः स्यादिति वाक्यान्तरं संपद्यते। तत्र छदसीत्यभावाल्लोकेऽपि क्वचिद्भ तीति लभ्यत इति भावः। सपक्ष इति। समानः पक्षो यस्येति विग्रहः। साध मिति ।समानो धर्मो यस्य स सधर्मा, समानस्य सभावः। तस्य भावः साधर्म्यं ब्राह्मणादित्वात् ष्यञ् । सजातीयमिति । समाना जातिर्यस्य इति विग्रह समानस्य सभावः। 'जात्यन्ताच्छ बन्धुनि' इति छः। इत्यादीति। संग्राम इत्या

'आत्ममाने खश्च' इति खश् सार्वधातुकत्वात्तस्मिन्परे श्यन् । सहयुध्वेति । 'सह इति क्वनिप् । स्त्रियामपि 'वनो न हशः' इति निषेधात् ङीब्रौ न । समुहूर्तमि अन्तवचनेऽव्ययीभावः । 'अव्ययीभावे चाकाले' इत्यत्र कालपर्युदासादप्राप्ते ग्रन्थान्तग्रहणम् । द्वितीये । 'अप्रधानो यः स द्वितीयः' इति लोकप्रसिद्धम्, रूयं प्रत्यक्षं तद्भिन्नगनमेयं तदाह—अनुमेय इति । सराक्षसीकेति । 'समा नस्य' इति कप् । योगो विभज्यत इति । एतदर्थमेव छन्दसमपि

व्रीहिः । समानः पक्षोऽस्येत्यादि । १०१३ ज्योतिर्जनपदरात्रिनाभिनाम-गोत्ररूपस्थानवर्णवयोवचनबन्धुषु । (६—३—८५) एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् । सज्योतिः । सजनपद इत्यादि । १०१४ चरणे ब्रह्म-चारिणि । (६—३—८६) ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने । चरणः शाखा । ब्रह्म वेदः, तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति ब्रह्मचारी, समानस्य सः, सब्रह्मचारी । १०१५ तीर्थे ये । (६–३–८७)

---

संग्रहः । योगविभागस्य भाष्यादृष्टत्वाद् युक्त्यन्तरमाह—अथवेति । तेनेति । तेन सदृशवचनेन सहशब्देन बहुव्रीहिरित्यन्वयः यथा च 'वोपसर्जनस्य' इति सहस्य सभाव इति भावः । ननु तर्हि समानः पक्षो यस्य इति कथं विग्रहः । सहशब्दस्यैव विग्रहे प्रवेशौचित्यादित्यत आह—अस्वपद इति । वृत्तावेव सहशब्दः सदृशवचन इति भावः । ज्योतिर्जनपद । अच्छन्दोऽर्थं वचनमिदम् । सज्योतिरिति । समानं ज्योतिर्यस्येति विग्रहः । एवं सजनपद इत्यादीति । सरात्रिः, सनाभिः, सनामा, सगोत्रः, सरूपः, सस्थानः, सवर्णः, सवयाः, सवचनः, सबन्धुः । चरणे ब्रह्मचारिणि । समानस्येति स इति चानुवर्तते । उत्तरपद इत्यधिकृतम्, तदाह—ब्रह्मचारिण्युत्तरपदे समानस्य सः स्यादिति । चरणे इति सप्तमी समान-स्येत्यत्रान्वेति । चरणे विद्यमानस्येत्यर्थः । फलितमाह—चरणे समानत्वेन गम्य-मान इति । तत्र चरणपदं व्याचष्टे—चरणः शाखेति । वैदिकप्रसिद्धिरेवात्र मूलम् । ब्रह्मचारिपदं निर्वक्तुमाह—ब्रह्म वेद इति । 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः । तच्चरणार्थमिति । तस्य वेदस्य चरणम् अध्ययनं तच्चरणम्, व्रतमपि ब्रह्मशब्देन विवक्षितमित्यर्थः । गौण्या वृत्त्येति शेषः । तच्चरतीति । तद् व्रतं चरति अनुतिष्ठतीत्यर्थे ब्रह्मचारिशब्द इत्यर्थः । 'सुप्यजातौ—' इति णिनिः समा-नस्य स इति । समानो ब्रह्मचारीति कर्मधारये सति प्रकृतसूत्रेण समानस्य सभावे सति सब्रह्मचारी रूपमित्यर्थः । समानत्वं च वेदद्वारा बोध्यम् । तथाच समानवेदा-ध्ययनार्थं व्रतचारीति फलितोऽर्थः । भाष्ये तु समाने ब्रह्मणि व्रतं चरतीत्यर्थे चरे-र्णिनिः व्रतशब्दस्य लोपश्च अत्र निपात्यत इत्युक्तम् । तीर्थे ये । यशब्दाद् अकारा-न्तात्सप्तम्येकवचनम्, अकारो न विवक्षितः, प्रत्यय इति विशेष्यमध्याहार्यम् ।

---

च्छन्दसि' इति सूत्रमिहोपन्यस्तमिति भावः । बहुव्रीहिरिति । तेन 'वोपसर्जनस्य' इति सहस्य सभावः प्राप्नोतीति भावः । सज्योतिरिति । समानं ज्योतिरस्येति बहुव्रीहिः । यस्मिन् ज्योतिषि आदित्ये नक्षत्रे वा संजातं तदस्तमयपर्यन्तमनुवर्तमान-माशौचं सज्योतिः इत्युच्यते । इह 'समानमध्यमध्यमवीराश्च' इति प्रतिपदोक्त एव समासो न गृह्यते, 'सरूपाणामेकशेषः—' इति लिङ्गात् । किंतु बहुव्रीहिरपि इति हरदत्तः । ब्रह्मचारीति । 'व्रते' इति णिनिः सब्रह्मचारीति । समानो ब्रह्मचारी इत्यर्थः । ब्रह्मचारिश्च समानत्वं ब्रह्मणः समानत्वात् । ततश्च 'समाने ब्रह्मणि व्रति-चारी' इति फलितोऽर्थः । तीर्थे ये । अकारो न विवक्षितः । प्रत्यय इति विशेष्यं तु

तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् । सतीर्थ्यः-एकगुरुः 'समानतीर्थे वासी' (सू १६५८) इति यत्प्रत्ययः । १०१६ विभाषोदरे (६—३—८८) यादौ प्रत्यये विवक्षित इत्येव । सोदर्यः, समानोदर्यः । १०१७ दृग्दृशवतुषु । (६—३—८९) सदृक् । सदृशः । 'दृक्षे चेति वक्तव्यम्' (वा ३९९२) सदृक्षः । वतुरुत्तरार्थः । १०१८ इदंकिमोरीश्की । (६—३—९०) दृग्दृशवतुषु इदम ईश् किमः की स्यात् । ईदृक् । ईदृशः । कीदृक् । कीदृशः । वतुर्वक्ष्यते । 'दृक्षे चेति वक्तव्यम्' (वा ३९९२) ईदृक्षः । कीदृक्षः । 'आ सर्वनाम्नः' (सू ४३०) । 'दृक्षे च' ( वा ३९९२ ) तादृक् । तादृशः । तावान् । तादृक्षः ।

'यस्मिन् विधिः–' इति तदादिविधिः । तदाह—यादौ प्रत्यय इति । नात्र यान्ते तीर्थशब्दे परे इति व्याख्यातुं शक्यते, 'समानतीर्थे वासी' इति समानतीर्थशब्दात् [1]'कृतसमासादेव ([2]वासीति तद्धितार्थे)यप्रत्ययविधानात् । स च यप्रत्ययः अन्तरङ्गे समासे कृत एव भवति । 'समर्थानां प्रथमाद्वा' इति सूत्रेण परिनिष्ठितादेव तद्धितोत्पत्तेः ... माणत्वात् कृतेऽपि सभावे एकदेशविकृतन्यायेन भूतपूर्वगत्या वा समानतीर्थशब्दस्य सत्त्वात् । अतो यप्रत्ययपरकत्वं समानशब्दस्य कथमित्यत आह—विवक्षित इति । सतीर्थ्य इति । समाने तीर्थे वासीत्यर्थः । अत्र सामीप्ये सप्तमी । समानस्त्वेकपर्यायः । तीर्थशब्दो गुरौ, तदाह—एकगुरुक इति । तद्धितार्थे ... प्रवृत्तये तद्धितं दर्शयति—समानेति । 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यमरः । विभाषोदरे । उदरशब्दे परे समानस्य सभावो वा स्यादित्यर्थः । इत्येवेति अनुवर्तत एवेत्यर्थः । दृग्दृशवतुषु । समानस्य स इति शेषः । सदृक्, सदृश इति । समानो दृश्यत इत्यर्थे 'समानान्ययोश्च' इति दृशेः क्विन् कञ् च । दृक्षे चेति समानस्य सत्त्वमिति शेष । सदृक्ष इति । 'क्सोऽपि वाच्यः' इति दृशेः क्सः । वतुरुत्तरार्थ इति । यत्तदेतेभ्यः परिमाणे वतुपः समानशब्दादसंभवादिति भावः । इदंकिमोरीश्की । ईश् की इति द्वे पदे । ईदृक्, ईदृश इति । इदमिव दृश्यत इत्यर्थे त्यदादिषु दृशेः क्विन्कञौ । ईशः शित्त्वं सर्वादेशत्वाय । वक्ष्यत इति । तद्धितप्रकरणे इयान् इत्युदाहरणं वक्ष्यत इत्यर्थः । दृक्षे चेति । इदंकिमोः ईश्की वक्तव्यौ इति शेषः । आ सर्वनाम्न इति । आ इति लुप्तप्रथमाकम् । तादृक्, तादृश इति । तदिव दृश्यत इत्यर्थे 'त्यदादिषु दृशः–' इति क्विन्कञौ । तदो ...

व्याख्यानाल्लभ्यते । तेन 'यस्मिन्विधिः–' इति तदादिविधिरित्याह—यादौ प्रत्यय इति । विवक्षित इति । उत्तरपदमात्रनिमित्तः समासोऽन्तरङ्गः, समासप्रकृतिकात् सुबन्तात्तु यत्प्रत्ययः अतस्तस्य परत्वं न संभवतीत्याशयेनेदमुक्तम् । सोदर्य इति । 'समानोदरे शयितः' इत्यर्थे प्रत्ययात्प्राक् समानस्य सभावे कृते 'सोदराद्यः' इति यः । सभावाभावपक्षे तु 'समानोदरे शयित ओ चोदात्तः' इति यति समानोदर्यः । सदृक् । सदृश इति । 'समानान्ययोश्चेति वक्तव्यम्' इति दृशेः क्विन् ... इति ...

१ 'कृतसमासादेव' इत्यस्यादौ क्वचित् 'तद्धितार्थ—' इति ...
२ अयं कोष्ठान्तर्गतः पाठः क्वचिन्नास्ति ।

दीर्घः, मत्वोत्वे । अमूदृशः । अमूदृक् । अमूदृक्षः । १०१९ समासेऽङ्गुलेः सङ्गः । (८—३—८०) अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्धन्यः स्यात्समासे । अङ्गुलिषङ्गः । समासे किम्—अङ्गुलेः सङ्गः । १०२० भीरोः स्थानम् । (८—३—८१) भीरुशब्दात्स्थानस्य सस्य मूर्धन्यः स्यात्समासे । भीरुष्ठानम् । असमासे तु भीरोः स्थानम् । १०२१ ज्योतिरायुषः स्तोमः । (८—३—८३) आभ्यां स्तोमस्य सस्य मूर्धन्यः समासे ज्योतिष्टोमः । आयुष्टोमः । समासे किम्—ज्योतिषः स्तोमः । १०२२ सुषामादिषु च । (८—३—९८) सस्य मूर्धन्यः । शोभनं साम यस्य सुषामा । सुषन्धिः । १०२३ एति संज्ञायामगात् । (८—३—९९) (ग १८२) सस्य मूर्धन्यः । हरिषेणः । एति किम्—हरिसक्थम् । संज्ञायां किम्—पृथुसेनः । अगकारात् किम्—विष्वक्सेनः । इण्कोः इत्येव । सर्वसेनः । १०२४ नक्षत्राद्वा । ( ८–३–१०० ) ( ग १८३ ) । एति सस्य संज्ञायामगकारान्मूर्धन्यो वा । रोहिणीषेणः, रोहिणीसेनः । अगकारात् किम्–शतभिषक्सेनः । आकृतिगणोऽयम् । १०२५ अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । ( ६–३–९९ ) अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अन्यदीयः । अषष्ठीत्यादि किम्-अन्यस्यान्येन वाशीरन्याशीः । 'कारके छे च नायं

---

ऽस्य आत्वे सवर्णदीर्घः । तावानिति । तत् परिमाणमस्येति विग्रहे 'यत्तदेतेभ्यः–' इति वतुप् । तादृक्ष इति । तदिव दृश्यत इति विग्रहः । अमूदृगित्यत्र प्रक्रियां दर्शयति––दीर्घ इति । अदस आत्वे कृते सवर्णदीर्घः । तत ऊत्वमत्वे इत्यर्थः । अः सेरिति व्याख्यानेऽपि अकारेण आकारस्यापि ग्रहणाद् ऊत्वमत्वे । समासेऽङ्गुलेः सङ्गः । भीरोः स्थानम् । ज्योतिरायुषः स्तोमः । अत्र त्रिसूत्र्याम् अङ्गुलेः सङ्गः, भीरोः स्थानम् , ज्योतिषः स्तोमः, आयुषः स्तोम इत्याद्यर्थे प्रत्यासत्त्या तयोः पदयोः समासे सति उत्तरपदस्थस्य सस्य ष इत्यर्थः । तद् ध्वनयन् प्रत्युदाहरति––अङ्गुलेः सङ्ग इत्यादि । नेह 'इण्कोः' इत्यनुवर्तते, व्याख्यानात् । सुषामादिषु च । स्पष्टम् । एति संज्ञायामगात् । एकारे परे सस्य षः स्यादित्यर्थः । नक्षत्राद्वा । स्पष्टम् । अषष्ठ्यतृतीयास्थस्य । अषष्ठ्याम् अतृतीयायां च परतस्तिष्ठतीति अषष्ठ्यतृतीयास्थः, तस्य अषष्ठीतृतीयान्तस्येत्यर्थः । अषष्ठीतृतीयास्यस्येत्येव सिद्धे नञ्द्वयोपादानं स्पष्टार्थम् । आशीरादिष्विति । आशीः, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग, छ इत्येतेषु इत्यर्थः । दुकि ककार इत् । उकार उच्चारणार्थः । कित्त्वादन्तावयवः । अन्यदाशीरित्यादयः कर्मधारयाः । नायं

---

दीर्घ इति । अदस आत्वे कृते सवर्णदीर्घ इत्यर्थः । एतच्च पूर्वोत्तरोदाहरणान्वयि । भीरोः स्थानमिति । विसर्जनीयव्यवधानेऽपि षत्वप्राप्तिरस्ति । ज्योतिषः स्तोम इति । इह 'ज्योतिःस्तोमोऽयम्' इति प्रत्युदाहर्तुमुचितम् । एति संज्ञायामिति । सुषामाद्यन्तर्गणसूत्रमेतत् । एवं 'नक्षत्राद्वा' इत्यपि । विष्वक्सेन इति । चर्त्वस्यासिद्ध-

निषेधः' (वा ५०४८)। अन्यस्य कारकोऽन्यत्कारः। अन्यस्यायमन्यदीयः। गहादेराकृतिगणत्वाच्छः। १०२६ अर्थे विभाषा। (६-३-१००) अन्यार्थः। १०२७ कोः कत्तत्पुरुषेऽचि। (६-३-१०१) अजादावुत्तरपदे कुत्सितोऽश्वः कदश्वः। कदन्नम्। तत्पुरुषे। किम्—कूष्ट्रो राजा। 'त्रौ च' (३९९८) कुत्सितास्त्रयः कत्त्रयः। १०२८ रथवदयोश्च। (६-३-१०२) कद्रथः। कद्वदः। १०२९ तृणे च जातौ। (६-३-१०३) कत्तृणम्। १०३० का पथ्यक्षयोः। (६-३-१०४) कापथम्। काक्षः। अक्ष तत्पुरुषः अक्षिशब्देन बहुव्रीहिर्वा। १०३१ ईषदर्थे। (६-३-१०५) ईषज्जलं काजलम्। अजादावपि परत्वात्कादेशः—काम्लः। १०३२ विभाषा पुरुषे। (६-३-१०६) कापुरुषः, कुपुरुषः। अप्राप्तविभाषेयम्। ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव। ईषत्पुरुषः कापुरुषः। १०३३ कवं चोष्णे। (६-३-१०७) उष्णशब्दे उत्तरपदे कवं का च वा स्यात्। कवोष्णम्, कोष्णम्, कदुष्णम्।

---

निषेध इति। 'अषष्ठचतृतीयास्थस्य' इति निषेधः कारकच्छयोर्नास्तीत्यर्थः। गहादेरिति ... क्तमिदम्। अर्थे विभाषा। अन्यस्य दुगिति शेषः। कोः कत्तत्पुरुषे। कोः तदिति कत् इति च्छेदः। शेषपूरणेन सूत्रं व्याचष्टे—अजादावुत्तरपद इति। रहितः कदश्वः, कदन्नमिति। 'कुगति—' इति समासः। 'कूष्ट्रो राजेति। कुत्सित उष्ट्रो यस्येति बहुव्रीहित्वाद् न कदादेशः। त्रौ चेति। त्रिशब्दे परे कदादेशो वक्तव्य इत्यर्थः। उत्तरपदस्याजादित्वाभावाद् वचनम्। रथवदयोश्च। 'कोः कत्तत्पुरुषे' इति शेषः। कद्रथः, कद्वद इति। 'कुगति—' इति समासः। वदतीति वदः। कुत्सितो वदः कद्वदः। तृणे च जातौ। तृणशब्दे कोः कत्स्याद् जातौ वाच्यायाम् इति कत्तृणमिति। तृणजातिविशेषोऽयम्। 'अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम्' इत्यमरः। का पथ्यक्षयोः। पथिन्, अक्ष अनयोः परतः कोः का इत्यादेशः स्यादित्यर्थः। कापथमिति। कुत्सितः पन्था इति विग्रहः। 'कुगति—' इति समासः। 'ऋक्पूः—' इत्यप्रत्ययः। 'पथः संख्याव्ययादेः' इति नपुंसकत्वम्। कापथ इति तु बहुव्रीहिः। काक्षशब्दे समासं दर्शयति—अक्षशब्देन तत्पुरुष इति। कुत्सितमक्षमिन्द्रियमिति विग्रहे 'कुगति—' इति समास इत्यर्थः। अक्षिशब्देन बहुव्रीहिः कुत्सिते अक्षिणी यस्येति विग्रहे 'बहुव्रीहौ सक्थ्यक्ष्णोः—' इति षजित्यर्थः। ईषदर्थे। ईषदर्थे विद्यमानस्य कोः का इत्यादेशः स्यादित्यर्थः। ईषज्जलं काजलमिति। ईषद् जलमिति विग्रहे 'कुगति—'इति समासः। नित्यसमासत्वाद् अस्वपदविग्रहप्रदर्शनम्। कुत्सित आम्लः काम्ल इत्यत्र 'कोः कत्तत्पुरुषेऽचि' इति कदादेश...

---

त्वाद्गकारेण व्यवधानमस्तीति भावः। अषष्ठ्च। अन्यदाशीरित्यादयः कर्मधारय... नायं निषेध इति। एतच्च 'अषष्ठीतृतीयास्थस्य—' इत्येव सिद्धे निषेधानि... ज्ञापनार्थाद् द्विर्नञ उपादानाल्लभ्यत इत्याहुः। त्रौ चेति। अनजाद्यर्थमिदं वार्तिकम्... 'कत्र्यादिभ्यो ढकञ्' इति निर्देशेनैव सिद्धम्। कापथमिति। कुत्सितः पन्था...

---

१ 'इत्यजित्यर्थः' इत्यन्यत्र पाठः।

१०३४ पृषोदरादीनि यथोपदिष्टम् । ( ६-३-१०९ ) पृषोदरप्रकाराणि शिष्टैर्यथोच्चरितानि तथैव साधूनि स्युः । पृषदुदरं पृषोदरम्, तलोपः । वारिवाहको वलाहकः, पूर्वपदस्य वः, उत्तरपदादेश्च लत्वम् ।

'भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ।
गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ।'

'दिक्छब्देभ्यस्तीरस्य तारभावो वा' (वा ३९९९) दक्षिणतारम्, दक्षिण-

---

शङ्कयाह—अजादावपीति । विभाषा पुरुषे । कोः का इत्यादेश इति शेषः । अप्राप्तविभाषेति । ननु कोः ईषदर्थकत्वे सति 'ईषदर्थे' इति नित्ये कादेशे प्राप्ते विकल्पसंभव इत्यत आह—ईषदर्थे हीति । वृत्त्यनुसारेणेदमुक्तम्, पूर्वविप्रतिषेधस्य भाष्यानुक्तत्वात् । कवं चोष्णे । कवं का च वेति । विभाषेत्यनुवृत्तेरिति भावः । उभयाभावे कदादेशः । तथाच रूपत्रयम् । तदाह—कोष्णम्, कवोष्णम्, कदुष्णम् इति । पृषोदरादीनि यथोपदिष्टम् । आदिशब्दो न प्रभृतिवाची, गणपाठे पृषोदरादिपाठस्यादर्शनाद् यथोपदिष्टपदस्य वयर्थ्याच्च । किंतु प्रकारवाची, तदाह—पृषोदरप्रकाराणीति । प्रकारः सादृश्यम्, तच्च शास्त्रोक्तलोपागमादेशादिरहितत्वेन बोध्यम् । व्याकरणशास्त्रागृहीतानीति यावत् । उपपूर्वको दिशिरुच्चारणार्थः । भावे क्तः । उपदिष्टमुपदेशः, उच्चारणम्, तदनतिक्रम्य यथोपदिष्टम् । पदार्थानतिवृत्तावव्ययीभावः । शिष्टैरित्यध्याहार्यम् । तथाच फलितमाह—शिष्टैर्यथोच्चारितानि तथैव साधूनीति । शिष्टास्तु शब्दतत्त्वसाक्षात्कारवन्तो योगिन इति भाष्यकैयटयोः स्पष्टम् । तलोप इति । षष्ठीसमासे सुब्लुकि तलोपे 'आद्गुणः' इति भावः । पूर्वपदस्येति । वारिवाहकशब्दे वारिशब्दस्य पूर्वपदस्य वकारः सर्वादेशः । वाहकशब्द उत्तरपदं तदादेर्वकारस्य लकारादेश इत्यर्थः । भवेद्वर्णागमाद्धंस इति । हसधातोः पचाद्यचि अनुस्वारागमे हंस इति रूपमित्यर्थः । हनधातोरचि सगागमे 'नश्चापदान्तस्य—' इति अनुस्वार इत्यन्ये । सिंहो वर्णविपर्ययादिति । 'हिसि हिंसायाम्' इत्यतः पचाद्यचि इदित्वान्नुम् । 'नश्च—' इत्यनुस्वारः । हकारस्य सकारः, सकारस्य हकारश्च । सिंह इति रूपमित्यर्थः । यद्यपि हंससिंहयोरुणादौ व्युत्पत्तिरुक्ता, तथाप्युणादिसूत्राणां शाकटायनप्रणीतत्वेन शास्त्रान्तरत्वादिह व्युत्पादनं न दोष इत्याहुः । गूढोत्मा वर्णविकृतेरिति । गूढ आत्मा यस्येति बहुव्रीहौ उत्तरपदादेराकारस्य उकारे आद्गुणे रूपमिति भावः । वर्णनाशात्पृषोदरमिति । पृषद् उदरमित्यत्र तकारलोपे सति आद्गुणे पृषोदरमिति

---

'ऋक्पूरब्धूः—' इति समासान्तः । 'पथः संख्याव्ययादेः' इति नपुंसकत्वम् । अप्राप्तविभाषेति । 'ईषदर्थे' इत्यस्याननुवृत्तेरिति भावः । पृषोदरप्रकाराणीति । आदिशब्दो हि न व्यवस्थावचनः, यथोपदिष्टपदानर्थक्यादिति भावः । शिष्टैरिति - अध्याहारलभ्यमिदम् । 'यथोपदिष्टम्' इत्यत्र यथार्थेऽव्ययीभावः । उपदिशिरुच्चारणक्रियः । 'यानि यानि शिष्टैरुपदिष्टानि' इत्यर्थः । एवं स्थिते फलितमाह—यथोच्चारितानि तथैवेति । समासपदविषयकमिदम् । उत्तरपदाधिकारात् । निरुक्तादिशास्त्र-

तीरम् । उत्तरतारम्, उत्तरतीरम् । 'दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च' (वा ४००१) दुःखेन दाश्यते दूडाशः । दुःखेन नाश्यते दूणाशः । दुःखेन दभ्यते दूडभः । खल् त्रिभ्यः । दम्भेर्नलोपो निपात्यते । दुःखेन ध्या... दूढ्यः । 'आतश्च—' (सू २८९८) इति कः । ब्रुवन्तोऽस्यां सीदन्तीति बृ... ब्रुवच्छब्दस्य बृ आदेशः । सदेरधिकरणे डट् । आकृतिगणोऽयम् । ... संहितायाम् । ( ६-३-११४ ) अधिकारोऽयम् । १०३६ कर्णे लक्षण...

---

भवतीत्यर्थः । दिक्छब्देभ्यस्तीरस्येति । वार्तिकमिदम् । दुरो दा... इदमपि वार्तिकम् । दुर् इत्यस्य दाश, नाश, दभ, ध्य इत्येतेषु परेषु उत्वम्... पदादेः ष्टुत्वं च वक्तव्यमित्यर्थः । दूडाश इति । दुर् दाश इति स्थिते रेफ... सवर्णदीर्घः, दाशेर्दकारस्य ष्टुत्वेन डकारः । दूणाश इति । दुर् नाश इति ... रेफस्य उत्वं सवर्णदीर्घः । नाशेर्नकारस्य ष्टुत्वेन णत्वम् । दूडभ इति । दु... इति स्थिते रेफस्य उत्वं सवर्णदीर्घः । दभेर्दकारस्य ष्टुत्वेन डकारः । खल्... इति । 'दाशृ दाने' 'णश अदर्शने' ण्यन्तः, 'दभ् हिंसायाम्' इति त्रिभ्यो धा... 'ईषद्दुस्सुषु—' इति खल्प्रत्यय इत्यर्थः । ननु क्ङित्परकत्वाभावात् कथमिह 'अ... ताम्—' इति नलोप इत्यत आह—दम्भेर्नलोपो निपात्यत इति । दूढ्य इ... दुर् ध्य इति स्थिते रेफस्य उत्वं सवर्णदीर्घः, धस्य ष्टुत्वेन ढत्वम् । आतश्चे... 'ध्यै चिन्तायाम्' 'आतश्चोपसर्गे' इति कप्रत्यये 'आदेच उपदेशे—' इति आत्वे ... लोप इटि च' इत्याल्लोपे ध्यशब्द इत्यर्थः । सदेरिति । सद्धातोः अधिकर... डटि डित्वसामर्थ्यादभस्यापि टेर्लोपे स इति रूपम् । ब्रुवत् स इति स्थिते ... समासे सुब्लुकि ब्रुवच्छब्दस्य बृ इत्यादेशे बृसशब्दात् 'टिड्ढ—' इति ङीपि ... रूपमिति भावः । दिक्छब्देभ्य इत्यारभ्य एतदन्तः सन्दर्भः पृषोदरादीनां... प्रपञ्चः । आकृतिगणोऽयमिति । पृषोदरादिरित्यर्थः । तेन कर्तुकामः, ...

---

सिद्धानामसमासपदानाम् 'उणादयो बहुलम्' इत्येव सिद्धेश्च । यद्यपि समासवि... मेवेति नियमो न युज्यते, हंससिंहशब्दयोरपि प्राचां कारिकायामुदाहृतत्वात्, ... तत्कारिकायां यथाशब्दाध्याहारेण दृष्टान्तप्रदर्शनार्थं तयोरुपन्यासः कृतो न तु ... सूत्रोदाहरणत्वेनेति नियमोक्तिः सम्यगेवेत्याहुः । वर्णागमादिति । हन्तेः पचा... समागमः । विपर्ययादिति । हिंसेस्तु पचाद्यचि हकारसकारयोः स्थानव्य... दिक्शब्देभ्य इति । वार्तिकमिदम् । 'दुरो दाशनाश—' इत्यप्येवम् । खल... इति । दाशनाशदभेति त्रयोऽपि 'ईषद्दुःसुषु—' इति खल् प्रत्ययान्ता इत्यर्थः । बृ... 'मुनीनामासनं बृसी' । आकृतिगणोऽयमिति । तेन—'लुम्पेदवश्यमः कृ... काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः । इत्यपि संगृही... कृत्यान्ते उत्तरपदे अवश्यमः अन्तं पुमान् लुम्पेत् । अवश्यगन्तव्यः, अवश्य... तथा तुमः काममनसोः परतः अन्तं लुम्पेत् । गन्तुकामः, गन्तुमनाः । समो... तयोः अन्तं वा लुम्पेत् । सहितः संहितः । सततः संततः । युट् घञ् च ... परो यः पच् धातुः तस्मिन्परे मांसस्यान्तं लुम्पेत् । मांस्पचनी । मांस्पाकः ।

अविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य । (६-३-११५) कर्णशब्दे परे लक्षणवाचकस्य दीर्घः । द्विगुणाकर्णः । लक्षणस्य किम्—शोभनकर्णः । अविष्टादीनां किम्—विष्टकर्णः, अष्टकर्णः, पञ्चकर्णः, मणिकर्णः । भिन्नकर्णः, छिन्नकर्णः, छिद्रकर्णः, स्रुवकर्णः, स्वस्तिककर्णः, । **१०३७ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।** (६-३-११६) क्विबन्तेषु एषु परेषु पूर्वपदस्य दीर्घः । उपानत् । नीवृत् । प्रावृट् । मर्मावित् । नीरुक् । अभीरुक् । ऋतीषट् । परीतत् । क्वौ इति किम्—परिणहनम् । 'विभाषा पुरुषे' (सू १०३२) इत्यतो मण्डूकप्लुत्या विभाषा अनुवर्तते, सा च व्यवस्थिता, तेन गतिकारकयोरेव । नेह—पटुरुक्, तिग्मरुक् । **१०३८ वनगिर्योः संज्ञायां**

---

इत्यादिसंग्रहः । **संहितायाम् ।** सुगमम् । **कर्णे लक्षणस्य ।** दीर्घविधिः, 'ढ्रलोपे—' इत्यतस्तदनुवृत्तेः । यत्पशूनां स्वामिविशेषसंबन्धज्ञानार्थं दात्रशूलचक्राद्याकरचिह्नं क्रियते तल्लक्षणशब्देन विवक्षितम् । तेन लम्बकर्ण इत्यादौ नातिप्रसङ्गः । **द्विगुणाकर्ण** इति । द्विगुणरेखौ कर्णौ यस्येति विग्रहः । अष्टकर्ण इत्यादेरष्टसंख्यालिपिचिह्नकर्ण इत्यादिरर्थः । अष्टसंख्याकरेखाचिह्नकर्ण इति वा । **नहिवृति ।** उपानदिति । 'णह् बन्धने' 'णो नः' सम्पदादित्वात्कर्मणि क्विप् । उपनह्यत इत्युपानत् । पूर्वपदस्य दीर्घः । 'नहो धः' । निवर्तते इति नीवृत् । 'वृतु वर्तने' कर्तरि क्विप्, दीर्घः । प्रवर्षतीति प्रावृट् । 'वृष् सेचने' क्विप्, दीर्घः । मर्माणि विध्यतीति मर्मावित् । क्विप्, 'ग्रहिज्या—'इति संप्रसारणम्, उपपदसमासः, सुब्लुक्, नलोपः, दीर्घः । निरोचत इति नीरुक्, 'रुच् दीप्तौ' क्विप, दीर्घः । ऋतिं सहत इति ऋतीषट् । 'सह् मर्षणे' क्विप्, दीर्घः । 'हो ढः', 'सात्पदाद्योः' इति षत्वनिषेधे प्राप्ते 'पूर्वदात्—' इति षत्वमिति हरदत्तः सुषामादित्वादित्यपरे । परितनोतीति परीतत् । 'तनु विस्तारे' क्विप्, 'गमः क्वौ' इत्यत्र गमादीनामित्युपसंख्यानाद् अनुनासिकलोपः, तुक्, दीर्घः । अथ पटुरुक्, तिग्मरुगित्यादौ दीर्घमाशङ्क्याह— **विभाषेति ।** **पटुरुगिति ।** पटु रोचत इति विग्रहः । उभयत्र कर्तरि क्विप्, पूर्वपदयोर्गतिकारकान्यतरत्वाभावान्न दीर्घः । व्यवस्थितविभाषाश्रयणे व्याख्यानमेव शरणम् । **वनगिर्योः ।** वनगिर्योरिति सप्तमी । कोटरश्च किंशुलुकश्च कोटरकिंशुलुकौ,

---

संयोगान्तलोपोऽपि शिष्टोच्चारणान्नेति बोध्यम् । संहितायाम् । तेन 'द्विगुणाकर्णः' इत्यादौ अवग्रहे दीर्घो न भवतीति सूत्राशयमुत्प्रेक्षयन्ति—अधिकारोऽयमिति । तेन 'विद्मा हि त्वा' इत्यादौ पदकाले 'द्व्यचोतस्तिङः' इति दीर्घो नेत्यादिप्रयोजनान्यूह्यानीति । नहिवृति । 'णह बन्धने', 'वृतु वर्तने', वृषु सेचने', 'व्यध ताडने', 'रुच दीप्तौ', 'षह मर्षणे', 'तनु विस्तारे' । क्विबन्तेष्विति । उत्तरपदेषु इति शेषः । तेन 'दिवसेषु रुक्' इत्यादौ नातिप्रसङ्गः । उपानदिति । संपदादित्वात्कर्मणि क्विप् । निवर्तते इति नीवृत् । प्रवर्षति इति प्रावृट् । मर्माणि विध्यति इति मर्मवित् । व्यधेः 'ग्रहिज्या—' इति संप्रसारणम् । निरोचते इति नीरुक् । ऋतिं सहते ऋतीषट् । 'पूर्वपदात्—' इति षत्वमिति हरदत्तः । 'सहेः पृतनर्ताभ्यां च' इत्यत्र 'सहेः' इति योगविभागाच्चकारस्यानुक्तसमुच्चयाद्वेत्यन्ये । सुषामादेराकृतिगणत्वादित्यपरे । परितनोति

कोटरकिंशुलुकादीनाम् । (६-३-११७) कोटरादीनां वने परे किंशुलुका गिरौ परे च दीर्घः स्यात्संज्ञायाम् । १०३९ वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः । (८-४-४) वनशब्दस्योत्तरपदस्य एभ्य एव नान्येभ्यः । इह कोटरान्ता पञ्च दीर्घविधौ कोटरादयो बोध्याः । तेषां दीर्घाणां णत्वविधौ निर्देशो नियमार्थः । अग्रेशब्दस्य तु विध्यर्थः । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । सारिकावणम् । कोटरावणम् । एभ्य एव

---

तावादी येषामिति विग्रहः । कोटरादीनां किंशुलुकादीनां चेति लभ्यते । यथा मन्वयः । तदाह—कोटरादीनामित्यादिना । पुरगावणमित्युदाहरणानि वक्ष्यन् तत्र णत्वविधिं दर्शयति—वनं पुरगा । वनमिति षष्ठयर्थे प्रथमा इत्यभिप्रेत्याह वनशब्दस्येति । एभ्य इति । पुरगा, मिश्रका, सिध्रका, सारिका, कोटर, इत्येतेभ्य एव परस्य उत्तरपदस्य वनशब्दस्य यो नकारस्तस्य णत्वमित्यर्थः 'रषाभ्याम्–' इत्यतो णो न इत्यनुवृत्तेः । सूत्रे अग्रे इति सप्तम्यन्तस्यानुकरणम् नन्विह भिन्नपदत्वाद् 'अट्कुप्वाङ्–' इति णत्वस्याप्राप्तेः अपूर्वविध्यर्थत्वावश्यकत्वे एभ्य एवेति कथं नियमलाभ इत्यत आह—इह कोटरान्ता इति । इह णत्वविधौ उपात्ताःपुरगा मिश्रका सिध्रका सारिका कोटर इत्येवं पञ्च शब्दाः, त एव वनगिर्योः दीर्घविधौ कोटरादिशब्देन विवक्षिता इत्यर्थः । ततः किमित्यत आह—तेषामिति णत्वविधौ तावत्पुरगादिशब्दाः पञ्च दीर्घान्ता एव निर्दिष्टाः । दीर्घस्तु तेषां संज्ञायामेव वनगिर्योरिति विहितः । एवं च एतेषामसंज्ञायां दीर्घाभावात् संज्ञायामेव पुरगाः' इति णत्वविधिरिति पर्यवस्यति । ततश्च तेषु वनशब्दनकारस्य 'पूर्वपदात्संज्ञायामगः' इत्येव णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधौ निर्देशो नियमार्थः संपद्यत इत्यर्थः । अग्रेशब्दस्य त्विति । णत्वविधौ अग्रेशब्द निर्देशस्तु अग्रेवणशब्दे अपूर्वणत्वविध्यर्थ एव, न तु नियमार्थः । अग्रेवणशब्दस्य संज्ञात्वादिति भावः । न च पुरगावणशब्दे गकारव्यवधानात् 'पूर्वपदात्संज्ञायाम्' इत्यस्य प्राप्त्यसंभवाद् अत्र अपूर्वणत्वविध्यर्थमेव पुरगाग्रहणमिति वाच्यम्, अग हि पञ्चमी । गकारान्तात्पूर्वपदात्परस्य णत्वं नेति लभ्यते । पुरगाशब्दस्त्वयम् रान्त एव, न तु गकारान्त इति, तत्र अग इति निषेधाप्राप्तया 'पूर्वपदात्संज्ञायाम्' इत्येव सिद्धे, पुरगाग्रहणमपि नियमार्थमेवेति भावः । पुरगावणमित्यादयो नरकविशेष

---

इति परीतत् । 'गमः क्वौ, इत्यत्र 'गमादीनामिति वाच्यम्' इत्युक्तनलोपः । पुरगा । व्यत्ययेन षष्ठयर्थे प्रथमा इत्याह—वनशब्दस्येति । एभ्य एवेति कृतदीर्घेभ्यः पुरगादिभ्य एव परस्य णत्वमित्यर्थः । एभ्यो वनस्येव णत्वं नान्यस्य इति विपरीतनियमशङ्का तु न भवति, वनादन्यस्मिन्नुत्तरपदे पुरगादीनां दीर्घत्वासंभवात् । नियमार्थ इति । अयं भावः—'पुरगामिश्रका–' इति दीर्घनिर्देशात् संज्ञायां दीर्घभावेन संज्ञायामेव णत्वमिति फलितम् । एव च 'पूर्वपदात् संज्ञायाम्' इत्यनेनैव वनस्य णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वे निर्देशो नियमार्थ एवेति । विध्यर्थ इति । असंज्ञात्वेन 'पूर्वपदात्संज्ञायाम्' इत्य

किम्—असिपत्रवनम् । वनस्याग्रे अग्रेवणम् । राजदन्तादिषु निपातनात्सप्तम्या अलुक् । प्रातिपदिकार्थमात्रे प्रथमा । किंशुलुकागिरिः । १०४० वले । (६-३-११८) वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम् । कृषीवलः । १०४१ मतौ बह्वचोऽनजिरादीनाम् । (६-३-११९) अमरावती । अनजिरादीनां किम्—अजिरवती । बह्वचः किम्—व्रीहिमती । संज्ञायाम् इत्येव, नेह—वलयवती । १०४२ शरादीनां च । (६-३-१२०) शरावती । १०४३ इको वहेऽपीलोः । (६-३-१२१) इगन्तस्य दीर्घः स्याद्वहे । ऋषीवहम् । कपीवहम् । इकः किम्—पिण्डवहम् । अपीलोः किम्—पीलुवहम् । 'अपील्वादीनामिति वाच्यम्' (वा

---

संज्ञाः । असिपत्रवनमिति । नरकविशेषोऽयम् । अत्र संज्ञात्वेऽपि पूर्वपदात्संज्ञायाम्–' इति णत्वं न भवति, एभ्य एवेति नियमादिति भावः । अग्रेवणमिति । वनशब्दस्य षष्ठ्यन्तस्य अग्रेशब्देन सह षष्ठीसमास इति भावः । ननु तर्हि 'सुपो धातु–' इति सप्तम्या अपि लुक् स्यादित्यत आह—राजदन्तादिष्विति । अनेन वनशब्दस्य परनिपातोऽपि सूचितः । ननु सप्तम्यर्थप्राधान्यात्सप्तमी स्यादित्यत आह—प्रातिपदिकेति । सप्तम्यर्थस्य प्रातिपदिकेऽन्तर्भावादिति भावः । किंशुलुकादीनामुदाहरणमाह—किंशुलुकागिरिरिति । अञ्जनागिरिरित्यप्युदाहार्यम् । वले । कृषीवल इति । कृषिरस्यास्तीति विग्रहे 'रजःकृष्यासुति–' इत्यादिना वलच् । मतौ । मतुप्प्रत्यये बह्वचो दीर्घः स्यात्संज्ञायाम्, न त्वजिरादीनामित्यर्थः । अमरावतीति । इन्द्रनगर्याः संज्ञेयम् । अमरा अस्यां सन्तीति विग्रहः । 'मादुपधायाश्च–' इति 'संज्ञायाम्' इति वा मस्य वः । अजिरवतीति । नदीविशेषस्य संज्ञेयम् । वलयवतीति । अनजिरादित्वेऽप्यसंज्ञात्वान्न दीर्घ इति भावः । शरादीनां च । मतौ दीर्घः संज्ञायामिति शेषः । अबह्वच्कत्वापूर्वेण न प्राप्तिः । शरावतीति । शरा अस्यां सन्तीति विग्रहः । नदीविशेषस्य नाम । इको वहेऽपीलोः । अपीलोरिति च्छेदः । इगन्तस्येति । पूर्वपदस्येति शेषः । उपसर्गस्य । परीपाक इति । पचेर्भावे घञ्, उपधावृद्धिः । 'चजोः कु घि-

---

प्रवृत्तेरिति भावः । न च पुरगाग्रहणमपि विध्यर्थमेव, गकारव्यवधानेन 'पूर्वपदात्संज्ञायाम्' इत्यस्य प्राप्त्यभावादिति वाच्यम् । 'अगः' इत्यस्य पञ्चम्यन्तत्वं स्वीकृत्य 'गान्तात्पूर्वपदात्परस्य णत्वं न' इति व्याख्यानात् । पुरगाशब्दस्य त्वकारान्तत्वाद् 'अगः' इति निषेधस्याप्रवृत्तेः । अतएव 'अगः' इत्यस्य 'ऋगयनम' इत्येकमेवोदाहरणमिति 'अणृगयनादिभ्यः' इति निर्देशाश्रयेण तत्प्रत्याख्यातमाकरे । पुरगावणमित्यादि । नरकविशेषस्य संज्ञा । असिपत्रवनमिति । 'एभ्यो वनस्यैव' इति विपरीतनियमे तु णत्वमत्र दुर्वारमिति भावः । सप्तम्यर्थं प्रातिपदिकार्थे अन्तर्भावादाह—प्रथमेति । किंशुलुकादीनामुदाहरणमाह—किंशुलुकागिरिरिति । आदिशब्दग्राह्यास्तु 'अञ्जनागिरिः' इत्यादयः । किंशुलुकेति किम्, कृष्णगिरिः, रामगिरिः । कृषीवल इति । 'रजःकृष्यासुति–' इत्यादिना मत्वर्थे वलच् । अमरावती । 'मादुपधायाश्च–' इति 'संज्ञायाम्' इति वा मतोर्मस्य वः । घञ्मात्रस्योत्तरपदत्वासंभवा-

(वा ४००५) दाखवहम् । १०४४ उपसर्गस्य घञ्यमनुष्ये बहुलम् (६-३-१२२) उपसर्गस्य बहुलं दीर्घं स्याद्घञन्ते परे, न तु मनु… परीपाकः, परिपाकः । अमनुष्ये किम्-निषादः । १०४५ इकः काशे (६-३-१२३) इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे । नीकाशः । इकः कि… प्रकाशः । १०४६ अष्टनः संज्ञायाम् । (६-४-१२५) उत्तरपदे दीर्घः । … पदम् । संज्ञायां किम्-अष्टपुत्रः । १०४७ चितेः कपि । (६-३-… एकचितीकः । द्विचितीकः । १०४८ नरे संज्ञायाम् (६-३-… विश्वानरः । १०४९ मित्रे चर्षौ । (६-३-१३०) विश्वामित्रः । ऋषौ कि… विश्वमित्रो माणवकः । 'शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो … (वा ५०४९) श्वादन्त इत्यादि । १०५० प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्य… रपीयूक्षाभ्योऽसंज्ञायामपि । (८-४-५) एभ्यो वनस्य णत्वं स्या… प्रवणम । कार्ष्यवणम् । इह षात्परत्वाण्णत्वम् । १०५१ विभाषौषधि…

---

ण्यतोः' इति कुत्वम् । निषाद इति । पुलिन्दी नाम मनुष्यजातिवि… निषीदत्यस्मिन् पापमिति निषादः । 'हलश्च' इत्यधिकरणे घञ् । दौवारिके … हारशब्दे दीर्घस्त्वप्रामाणिकः । यद्वा प्रतीहारो द्वारम्, तत्स्थत्वाद् मनुष्ये … इकः काशे । नीकाश इति । पचाद्यजन्तत्वात् पूर्वेण न प्राप्तिः । अष्टनः … याम् । शेषपूरणेन सूत्रं व्याचष्टे—उत्तरपदे दीर्घ इति । अष्टापद… संज्ञात्वमन्वेषणीयम् । चितेः कपि । दीर्घ इति शेषः । एकचितीक … अग्न्याख्यस्थण्डिलविशेष इति शेषः । एका चितिर्यस्येति विग्रहः । शेषिकः … द्विचितीक इति । द्वे चिती यस्येति विग्रहः । नरे संज्ञायाम् । विश्वस्य … इति शेषः । 'विश्वस्य वसुराटोः' इति पूर्वसूत्राद् विश्वस्येत्यनुवर्तते । मित्रे … मित्रशब्दे परे विश्वस्य दीर्घः स्यात् । ऋषौ वाच्य इत्यर्थः । शुनो दन्त… श्वन्शब्दस्य दन्तादिषु परतो दीर्घ इत्यर्थः । श्वादन्त इति । शुनो दन्त … विग्रहः । श्वादंष्ट्रा, षष्ठीसमासः । दीर्घान्त एव दंष्ट्राशब्दो वार्तिके पठ्यत इति … ह्रस्वापन्त इत्यन्ये । श्वादंष्ट्रः । बहुव्रीहिरयम् । श्वाकर्णः, श्वाकुन्दः, श्वावराहः, श्वापुच्छ… श्वापदः । श्वपुच्छमवनामितमित्यसाध्वेव । प्रनिरन्तः । एभ्य इति । प्र, … अन्तर्, शर, इक्षु, प्लक्ष, आम्र, कार्ष्य, खदिर, पीयूक्षा इत्येतेभ्य … वनस्येति । 'वनं पुरगा-' इत्यतस्तदनुवृत्तेरिति भावः । प्रवणमिति । … वनमिति विग्रहः । प्रादिसमासः । इहेति । कार्ष्यवणमित्यत्र षकारात्परत्वेन … न तु रेफात् परत्वमादाय, अडादिभिन्नषकारेण व्यवधानादिति भावः । एतेन …

---

दाह-घञन्त इति । निषाद इति । पुलिन्दी मनुष्यजातिः 'निषीदत्य… पापम्' इति निषादः, 'हलश्च' इत्यधिकरणे घञ् । कथं तर्हि दौवारिके प्रतीहा… प्रयोग इति चेत् । अत्राहुः—प्रतीहारो द्वारम् । तात्स्थ्यात्ताच्छब्द्यम्… एकचितीक इति । 'शेषाद्विभाषा' इति कप् । 'दंष्ट्रा' इति वार्तिके दीर्घान्तः प… केचित्तु ह्रस्वान्तं पठित्वा 'श्वादंष्ट्रः' इति बहुव्रीहौ दीर्घमाहुः, न तु तत्पुरुषे…

स्पतिभ्यः। (८-४-६) एभ्यो वनस्य णत्वं वा स्यात्। दूर्वावणम्, दूर्वावनम्। शिरीषवणम्, शिरीषवनम्। 'द्व्यच्त्र्यज्भ्यामेव' (वा ४९८४)। नेह—देवदारुवनम्। 'इरिकादिभ्यः प्रतिषेधो वक्तव्यः' (वा ४९८५)। इरिकावनम्। मिरिकावनम्। [1]तिमिरावनम्। १०५२ वाहनमाहितात्। (८-४-८) आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात्। इक्षुवाहणम्। आहितात् किम्—इन्द्रवाहनम्। इन्द्रस्वामिकं वाहनमित्यर्थः। वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात्। १०५३ पानं देशे। (८-४-९) पूर्वपदस्थान्निमि-

त्तव्यशकारमध्यपाठोऽप्रामाणिक इति सूचितम्, तथा सति निमित्ताभावाद् णत्वासंभवात्, अट्कुप्वाङ्भिन्नेन शकारेण व्यवहिततया रेफस्य तन्निमित्तत्वासंभवात्। निर्वणम्, अन्तर्वणम्, शरवणम्, इक्षुवणम्, प्लक्षवणम्, आम्रवणम्, खदिरवणम्, पीयूक्षावणम्। विभाषौषधि। वनस्य णत्वमिति। औषधिवनस्पतिभ्यः परस्य वनस्य यो नकारस्तस्य णत्वं वेत्यर्थः। ओषधिभ्य उदाहरति—दूर्वावणमिति। 'ओषध्यः फलपाकान्ताः' इत्यमरः। अथ वनस्पतिभ्य उदाहरति—शिरीषवणमिति। यद्यपि यः पुष्पैर्विना फलति स एव उदुम्बरादिर्वनस्पतिः, 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' इत्युक्तेः। शिरीषवृक्षश्चायं पुष्पफलवानेव, न वनस्पतिः। तथापि वनस्पतिशब्देनात्र वृक्षसामान्यं विवक्षितम्। अत एव 'लुपि युक्तवद्व्यक्तिवचने' इति सूत्रे भाष्ये शिरीषवणमित्यत्र शिरीषे वनस्पतित्वं व्यवहृतमिति दिक्। द्व्यच्त्र्यज्भ्यामेवेति। परस्य वनस्य णत्वं वाच्यमिति शेषः। देवदारुवनमिति। प्रत्युदाहरणम्। इरिकादिभ्य इति। एभ्यः परस्य वनस्य णत्वप्रतिषेध इत्यर्थः। वाहनमाहितात्। वाहने आधीयते वहनाय यत्, नतु स्वयमेवारोढुं शक्नोति तदाहितम्। तदाह—आरोप्येति। निमित्तादिति। रेफषकारान्यतरस्मादित्यर्थः। वाहननकारस्येति। वाहनस्य यो नकारस्यस्येत्यर्थः। अनेन सूत्रे वाहनमिति षष्ठ्यर्थे प्रथमेति सूचितम्। इक्षुवाहणमिति। इक्षवो वाहनाय परैरारोप्यन्ते, नतु स्वयमेवारोढुं शक्नुवन्ति इति तेषामाहितत्वं बोध्यम्। आरोपितेक्षुयुक्तं शकटादि वाहनमिति यावत्। इन्द्रवाहनमिति। ऐरावतादाविन्द्रस्य स्वयमेवारोहणान्नाहितत्वमिति भावः। यदि कदाचिद् अन्येन वाहने आरोप्यते तदा आहितत्वमिन्द्रस्याप्यस्त्येव। यदा इन्द्रः स्वयमेवारोहति वाहनं तदा प्रत्युदाहरणमिति मनसि निधायाह—इन्द्रस्वामिकमिति। ननु वहेः करणे ल्युटि कथमुपधादीर्घः, ञ्णित्प्रत्ययपरकत्वाभावादित्यत आह—वहेर्ल्युटीति। पानं देशे।

...वेति। 'कार्श्य' इति तालव्यपाठस्त्वनार्ष इति भावः। वनस्पतिभ्यो वनस्य णत्वमुदाहरति—शिरीषवणमिति। ननु 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' इत्यमरकोशाद्यस्य पुष्पं विनैव फलप्रादुर्भावः स वनस्पतिः, स चोदुम्बरादिः। शिरीषस्तु न तथा, तस्य पुष्पफलोभयसत्त्वादतो णत्वमिह कथमिति चेत्। अत्राहुः—वनस्पतिशब्देनात्र वृक्षमात्रमुपलक्ष्यते। अत्र च 'लुपि युक्तवत्—' इति सूत्रस्थं भाष्यं

१ 'तिमिरावनम्' इति क्वचिन्नास्ति।

त्तात्परस्य पानस्य नस्य णत्वं स्याद्देशे गम्ये। क्षीरं पानं येषां ते क्षीर- उशीनराः। सुरापाणाः प्राच्याः। पीयत इति पानम्, कर्मणि ल्युट्। वा भावकरणयोः। (८-४-१०) पानस्य इत्येव। क्षीरपानम्, क्षीरपा- 'गिरिनद्यादीनां वा' (वा ४९८९) गिरिनदी, गिरिणदी। चक्रनितम्बा, णितम्बा। १०५५ प्रातिपदिकान्तनुम्विभक्तिषु च। (८-४-११) पूर्व- न्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा स्यात्। प्रातिपदिकान्ते-माषवा- नुमि-व्रीहिवापाणि। विभक्तौ-माषवापेण। पक्षे माषवापिनावित्यादि।

---

पानमिति षष्ठ्यर्थे प्रथमेत्यभिप्रेत्याह—पानस्येति। उशीनरा इति। बहुवचनान्तोऽयम्। ननु पानशब्दस्य भावल्युडन्तत्वे क्षीरम्पानमिति कथं सा- करण्यमित्यत आह—पीयत इति। वा भावकरणयोः। इत्येवेति। वर्तत एवेत्यर्थः। भावे करणे च यः पानशब्दः तस्य उक्तविषये णो वा स्यादि- अदेशार्थं वचनम्। क्षीरपानम्, क्षीरपाणमिति। क्षीरस्य पानमिति भावे करणे वा ल्युट्। पानक्रिया पानपात्रं वेत्यर्थः। गिरिनद्यादीना- पूर्वपदस्थान्निमित्तात्परस्य उत्तरपदस्थस्य नस्य णो वेत्युपसंख्यानमित्यर्थः। विग्रहः। चक्रनितम्बेति। चक्रमिव नितम्बो यस्याः सा इति विग्रहः। पदिकान्त इति। पूर्वपदस्थादिति। 'पूर्वपदात्संज्ञायाम्–' इत्यतस्तदनु- भावः। एषु स्थितस्येति। प्रातिपदिकान्ते नुमि विभक्तौ च विद्यमानस्य वा स्यादिति। 'वा भावकरणयोः' इत्यतस्तदनुवृत्तेरिति भावः। प्राति- कान्त इति। उदाहरणं वक्ष्यत इति शेषः। माषवापिणाविति। माषान् इति विग्रहः। 'बहुलमाभीक्ष्ण्ये' इति जातावपि सुप्युपपदे णिनिः। उपपद- वापिन्शब्दस्य कृदन्तत्वेन प्रातिपदिकत्वात् तदन्तनस्य णत्वमिति भावः। उदाह्रियत इति शेषः। व्रीहिवापाणीति। कृषीवलकुलानीति शेषः। व्रीहीन् इति विग्रहः। कर्मण्यण्। व्रीहिवापशब्दान्नपुंसकाद् 'जश्शसोश्शिः' 'नपुं- झलचः' इति नुमि 'सर्वनामस्थाने च–' इति दीर्घः। नुमो नस्य णत्वमिति विभक्ताविति। उदाह्रियत इति शेषः। माषवापेणेति। तृतीयाविभक्ति-

---

लिङ्गम्। तत्र हि व्यक्तिवचने किम्। शिरीषाणामदूरभवो ग्रामः शिरीषाः। शिरीषवणमित्यत्र णत्वे कर्तव्ये वनस्पतित्वमप्यतिदिश्येत इत्युक्तम्। तच्च शि- वनस्पतित्वे संगच्छते नान्यथेति तिक्। द्व्यचत्र्यज्भ्यामेवेति। व्यवस्थित- श्रयणादिति भावः। ओषधित्वात्प्राप्ते प्रतिषेधमाह—इरिकादिभ्य इति। व्यवस्थितविभाषाज्ञानादेव सिद्धम्। उशीनरा इति। इह उशीनरशब्द- सिषु भाक्तः। कर्मणि ल्युडिति। 'कृत्यल्युटो बहुलम्' इत्यनेन। वा आदेशार्थं आरम्भ इत्यप्राप्तविभाषा। क्षीरपाणमिति। पीतिः पानम्, इति नपुंसके भावे ल्युट्। पीयते अनेनेति पानम्, करणे ल्युट्। क्षीरस्य पान- पाणम्। गिरिनद्यादीनां वेति। वक्तव्यमिति शेषः। संज्ञायां प्राप्ते अ- प्राप्ते उभयत्र विभाषेत्याहुः। माषवापिणाविति। 'बहुलमाभीक्ष्ण्ये' इति

यत्प्रातिपदिकं तदन्तस्यैव णत्वम्' (वा ४९९०) नेह—गर्गाणां भगिनी गर्गभगिनी । अत एव नुम्ग्रहणं कृतम् । अङ्गस्य नुम्विधानात्तद्भक्तो हि नुम्, न तूत्तरपदस्य । किं च 'प्रहिण्वन्' इत्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणम् । प्रेन्वनम् इत्यादौ तु क्षुभ्नादित्वान्न । 'युवादेर्न' (वा ४९९९) । रम्ययूना ।

---

नस्य णत्वम् । इत्यादीति । णत्वाभावपक्षे माषवापिनौ, माषवापानि, माषवापेन इत्युदाहार्यमिति भावः । ननु गर्गाणां भगिनी गर्गभगिनीत्यत्र ङीप्प्रत्ययप्रकृतिभूतभगिन्शब्दात्मकप्रातिपदिकान्तत्वाद् नकारस्य णत्वविकल्पः कुतो न स्यादित्यत आह—उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वमिति । पूर्वपदेन उत्तरपदमाक्षिप्तम्। तच्च प्रातिपदिकस्यैव विशेषणम्, नतु तदन्तस्य, नापि नुम्विभक्त्योः असंभवादिति भावः । नेहेति । गर्गाणां भगिनी गर्गभगिनीति षष्ठीसमासे भगिनीशब्द उत्तरपदम्, नतु तत्प्रातिपदिकम्, प्रत्ययान्तत्वात् । लिङ्गविशिष्टपरिभाषया प्रातिपदिकग्रहणेन भगिनीशब्दस्य ग्रहणेऽपि तदन्तम् ईकार एव, नतु नकारः, अतो न तस्येदं पाक्षिकं णत्वमिति भावः । प्रातिपदिकस्योत्तरपदत्वविशेषणं सूत्रकारस्य संमतमित्याह—अत एवेति । प्रातिपदिकस्य उत्तरपदत्वविशेषणादेव सूत्रकारेण कृतं नुम्ग्रहणमयवत्, अन्यथा तदनर्थकमित्यर्थः । कुत इत्यत आह—अङ्गस्येति । 'नपुंसकस्य झलचः' इति नुम्विधौ अङ्गस्येत्यनुवृत्तम् । तथा च झलन्तस्याजन्तस्य चाङ्गस्य क्लीबस्य नुम् स्यात् सर्वनामस्थाने इत्यर्थो लभ्यते । माषवापाणीत्यत्र तु सर्वनामस्थानं प्रति माषवापशब्दोऽङ्गम् । तस्य माषवापशब्दस्य विहितो नुमागमस्तदवयव एव भवति, न तु उत्तरपदभूतवापशब्दस्यैवावयवः । तथा च उत्तरपदभूतप्रातिपदिकान्तत्वाभावात् 'प्रातिपदिकान्त–'इत्यनेन णत्वविकल्पस्याप्राप्तौ नुम्ग्रहणम् । प्रातिपदिकस्य उत्तरपदत्वविशेषणाभावे तु माषवापशब्दान्तावयवस्य नुमो माषवापेतिप्रातिपदिकान्तावयवत्वस्य सत्त्वात् 'प्रातिपदिकान्त–' इत्येव सिद्धे नुंग्रहणं व्यर्थं स्यादित्यर्थः । तदेवं प्रातिपदिकस्य उत्तरपदत्वविशेषणे नुंग्रहणं लिङ्गमिति स्थितम् । वस्तुतस्तु नेदं लिङ्गमित्याह—किं च प्रहिण्वन्नित्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणमिति । किं चेति विशेषदर्शने । 'हिवि प्रीणने' भ्वादिः, इदित्त्वाद् नुम्, लटः शत्रादेशः । माषवापाणीत्यत्र नुमो नस्य प्रातिपदिकान्तत्वेऽपि प्रहिण्वन्शब्दे नुमो नस्य प्रातिपदिकान्तत्वाभावात् 'प्रातिपदिकान्त–' इत्यनेन णत्वविकल्पस्याप्राप्तेस्तदर्थं नुम्ग्रहणमावश्यकम् । अतो उत्तरपदत्वस्य प्रातिपदिकविशेषणत्वे कथं नुम्ग्रहणं लिङ्गं स्यात् । तस्मादुत्तरपदविशेषणे भाष्यमेव शरणमिति भावः । ननु माषवापिणावित्यत्र वापिन् इति प्रातिपदिकस्य कथमुत्तरपदत्वम्, 'गतिकारकोपपदानां कृद्भिः सह समासवचनम्–' इति सुबुत्पत्तेः प्रागेव समासप्रवृत्तेरिति चेत्, न—उत्तरपदशब्दस्य समासचरमावयवे रूढत्वादित्यलम् । ननु 'इवि व्याप्तौ' इदित्त्वान्नुम् । ल्युटि अनादेशः । प्रकृष्टमिन्वनम्

---

व्रीहिवापाणीति । कर्मण्यण् । उत्तरपदं यदिति । इष्टानुरोधेन तथा व्याख्यायत इति भावः । गर्गभगिनीति । इह भगिनीशब्द उत्तरपदम्, न तु भगिन्शब्दः । अत्र च व्याख्याने नुम्ग्रहणमेव ज्ञापकमिति भावः । प्राचां मतमाह—अतएवेति ।

परिपक्वानि । 'एकाजुत्तरपदे णः' (सू ३०७) । नित्यम् इत्युक्तम् । वृत्र
हरिं मानयतीति क्विपि हरिमाणी । नुमि–क्षीरपाणि । विभक्तौ–क्षीरपेण,
विणा । १०५६ कुमति च । (८—४—१३) कवर्गवत्युत्तरपदे प्रा

मिति प्रादिसमासे नुमो नकारस्य णत्वविकल्पः स्यादित्य आह—प्रेन्वनमि
युवादेर्नेति । उक्तणत्वविकल्प इति शेषः । वार्तिकमिदम् । रम्ययूनेति।
श्चासौ युवा चेति विग्रहः । प्रातिपदिकान्तनकारत्वात्प्राप्तिः । परिपक्वानीति
नुमो नकारस्य 'प्रातिपदिकान्त–' इति विकल्पं बाधित्वा 'कुमति च' इति नित्यं
प्राप्तम् । तदिह युवादित्वान्निषिध्यते । एकाजुत्तरपदे णः । अजन्तस्त्रीलिङ्ग
भूशब्दनिरूपणे व्याख्यातमपि प्रकरणानुरोधात् स्मर्यते । नित्यमित्युक्तमि
आरम्भसामर्थ्यान्नित्यमिदं णत्वमिति तत्रैवोक्तमित्यर्थः । हरिमाणीति । मनेः
'क्विप् च' इति क्विपि 'गतिकारकोपपदानाम्–' इति सुबुत्पत्तेः प्राक् समासः।
त्वाद् ङीप् । अत्र मान् इति प्रातिपदिकमुत्तरपदं तदन्तत्वाद् नकारस्य णत्वे
प्राप्ते नित्यं णत्वम् । नुमीति । उदाह्रियत इति शेषः । क्षीरपाणीति । क्षी
पदे पा धातोः 'आतोऽनुपसर्गे कः' इति कः, 'आतो लोप इटि च' इत्याल
क्षीरपशब्दाद् 'जश्शसोश्शिः', अजन्तलक्षणो नुम्, दीर्घः । तस्य नित्यं ण
विभक्ताविति । उदाह्रियत इति शेषः । क्षीरपेणेति । विभक्तिस्थत्वान्न
णत्वम् । विभक्तावुदाहरणान्तरमाह—रम्यविणेति । विः पक्षी, रम्यश्चासौ
तेनेति विग्रहः । न चात्र 'पदव्यवायेऽपि' इति निषेधः शङ्क्यः' किमिह प्रत्यय
अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'सुप्तिङन्तम्–' इति पदत्वमभिमतम्, उत
विभक्तौ परतः 'स्वादिषु–' इति पदत्वम् ? नाद्यः, 'उत्तरपदत्वे चापदादिविधौ'
प्रत्ययलक्षणप्रतिषेधात् । न द्वितीयः, 'स्वादिषु–' इत्यनेन हि रम्यविशब्दस्यैव
लभ्यते, न तु विशब्दस्य, तृतीयाविभक्तेः समुदायादेव विधानात् । अत एव पु
मित्यत्र नाभि भूशब्दमात्रस्य पदत्वाभावात् 'पदव्यवायेऽपि' इति निषेधाभावा
मिति प्राञ्चः । अत्र यद्वक्तव्यं तत् 'पदव्यवायेऽपि' इत्यत्रानुपदमेव वक्ष्यते ।
च । प्रागवदिति । प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यादि

तदुक्तं ज्ञापकं विघटयति—किंचेति । परिपक्वानीति । 'कुमति च' इति
णत्वं प्राप्तम् । एकाजुत्तर– । प्राग् व्याख्यातमपि प्रकरणानुरोधेन स्मार्यते ।
हणाविति । वृत्रं हतवन्तौ 'ब्रह्मभ्रूण–' इति क्विप् । हरिमाणीति । मनेः
'क्विप् च' इति क्विप् । 'गतिकारकोपपदानाम्–' इत्यादिना सुबुत्पत्तेः प्राक् समा
कारान्तमुत्तरपदम्, नान्तत्वान्ङीप् । क्षीरपाणीति । पिबतेः कर्मण्युपपदे
ऽनुपसर्गे–' इति कः । 'आतो लोप इटि च' इत्यालोपः । रम्यविणेति ।
श्चासौ विश्चेति विग्रहः । तत 'आङो नास्त्रियाम्' । ननु अन्तर्वर्तिनीं विभक्तिमा
विशब्दस्य पदत्वात् 'पदव्यवायेऽपि' इति णत्वनिषेधः स्यात् । मैवम् । 'उत्तर
चापदादिविधौ–' इति प्रत्ययलक्षणप्रतिषेधेन विशब्दस्य पदत्वाभावात् । 'स्वा
इत्यनेन तु रम्यविशब्दस्यैव पदत्वं न तु विशब्दस्य । यस्मात्स्वादिविधिस्त

हरिकामिणौ । हरिकामाणि । हरिकामेण । १०५७ पदव्यवायेऽपि । (८—४—३८) पदेन व्यवधानेऽपि णत्वं न स्यात् । माषकुम्भवापेन । चतुरङ्गयोगेन ।

---

अनेकाजुत्तरपदार्थमिदम् । हरिकामिणाविति । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । प्रातिपदिकान्तत्वाण्णत्वम् । हरिकामाणीति । अजन्तलक्षणनुमो नित्यं णत्वम् । हरिकामेणेति । विभक्तिस्थस्योदाहरणम् । पदव्यवायेऽपि । पदेन व्यवधान इति । पदेनेत्यनन्तरं निमित्तकार्यिणोरिति शेषः । न स्यादिति । 'न भाभूपूकमिगमि—' इत्यतस्तदनुवृत्तेरिति भावः । माषकुम्भवापेनेति । माषाणां कुम्भो माषकुम्भः, तस्य वाप इति षष्ठीसमासः । अत्र निमित्तकार्यिणोः षकारनकारयोः कुम्भपदेन व्यवधानाद् न णत्वम् । चतुरङ्गयोगेनेति । चत्वारि अङ्गानि रथगजतुरगपदातिरूपाणि यस्य तत् चतुरङ्ग सैन्यम्, तेन योग इति विग्रहः । अत्र निमित्तकार्यिणोरङ्गपदेन व्यवधानान्न णत्वम् । उभयत्रापि कुम्भशब्दस्य अङ्गशब्दस्य च प्रत्ययलक्षणेन अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वं बोध्यम् । 'उत्तरपदे चापदादिविधौ प्रतिषेधः' इति निषेधस्तु नात्र प्रवर्तते, उत्तरखण्डस्य कार्यभाक्त्वे सत्येव तत्प्रवृत्तेः । अत एव च 'न लुमताङ्गस्य' इत्यत्र परमवाचेत्येव तस्याः परिभाषाया उदाहरणमुक्तं भाष्ये । अत्र हि वाक्छब्दस्य उत्तरपदस्य कुत्वरूपकार्यभाक्त्वमस्तीति तस्य अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाभावात् कुत्वं न भवति । अत एव च 'कुमति च' इति सूत्रे भाष्ये माषाणां कुम्भो माषकुम्भः, माषकुम्भस्य वापो माषकुम्भवापः, तेन माषकुम्भवापेनेत्यत्र 'पदव्यवायेऽपि' इति निषेधप्रवृत्तये 'प्रातिपदिकान्त—' इति णत्वप्रवृत्तिरुपन्यस्ता सङ्गच्छते । न चैवं सति रम्यविणा इत्यत्र वि इत्युत्तरखण्डस्य कार्यभाक्त्वाभावाद् 'उत्तरपदत्वे चापदादिविधौ—' इति प्रत्ययलक्षनिषेधस्याप्रवृत्तौ अन्तर्वर्तिविभक्त्याश्रयणेन पदत्वात् 'पदव्यवायेऽपि' इति णत्वनिषेधः स्यादिति वाच्यम्, पदे परे यत्पदं तेन व्यवाये णत्वं नेत्यर्थस्यैव भाष्यसंमतत्वात् । तच्च अनुपदमेव स्पष्टीभविष्यति । रम्यविणेत्यत्र च विशब्दस्यान्तर्वर्तिविभक्त्या पदत्वेऽपि तस्य पदपरकत्वाभावान्न णत्वनिषेधः । एतेन पुनर्भूणा-

---

त्वाभ्युपगमात् । एवं च पुनर्भूणामित्यत्र णत्वं निर्बाधमेव, नामि परतो भूशब्दस्य पदत्वाभावात् । कुमति च । अनेकाजुत्तरपदार्थ आरम्भः । 'कौ' इत्येव तु न सूत्रितम् । 'यस्मिन्विधिः—' इति तदादिविधौ कवर्गाद्युत्तरपद एव हरिकामाणीत्यादावयं विधिः स्यात् न तु वस्त्रयुगेणेत्यादौ, तथा च मतुबन्तनिर्देश आवश्यक इत्याह— कवर्गवतीति । पदेन व्यवधान इति । निमित्तनिमित्तिनोर्मध्ये पदे सति णत्वं नेत्यर्थः । माषकुम्भवापेनेति । माषकुम्भं वपतीति 'कर्मण्यण्' उपपदसमासः । चतुरङ्गयोगेनेति । 'चत्वार्यङ्गान्यस्य, तेन योगः' इति मनोरमायां विगृहीतम् । तदयुक्तम् । 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधादङ्गशब्दस्यापदत्वात् । तस्माद् 'अङ्गानां योगोऽङ्गयोगश्चतुर्णामङ्गयोगः' इत्येव विग्रहीतव्यम् । न च 'चतुरङ्गेन योगः' इति विग्रहेऽप्यङ्गशब्द उत्तरपदं नेति प्रत्ययलक्षणप्रतिषेधो न प्रवर्तत इति शङ्क्यम्, तस्य पूर्वसमासस्योत्तरपदत्वात्, 'उत्तरपदत्वे च—' इति प्रति-

'अतद्धित इति वाच्यम्' (वा ५०१५) । आर्द्रगोमयेण । शुष्कगोमये
१०५८ कुस्तुम्बुरूणि जातिः । (६—१—१४३) अत्र सुण्निपात्यते । कु
रुर्धान्याकम् । क्लीबत्वमतन्त्रम् । जातिः किम्—कुतुम्बुरूणि, कुत्सि
तिन्दुकीफलानीत्यर्थः । १०५९ अपरस्पराः क्रियासातत्ये । (६—१—१
सुण्निपात्यते । अपरस्पराः सार्था गच्छन्ति, सततमविच्छेदेन गच्छन्ती
क्रिया इति किम्—अपरपरा गच्छन्ति, अपरे च परे च सकृदेव गच्छन्ती
१०६० गोष्पदं सेवितासेवितप्रमाणेषु । (६—१—१४५) सुट् सस्य ष

मित्यत्रापि णत्वं निर्बाधम् । अतद्धित इति । अतद्धिते परे यत्पदं तेन व्यव
अयं निषेधः, न तु तद्धितपरकपदेनेत्यर्थः । आर्द्रगोमयेणेति । गोः पुरीषं गो
'गोश्च पुरीषे' इति गोशब्दात् षष्ठ्यन्ताद् मयट् तद्धितः, तद्धितान्तप्रातिपदि
यवत्त्वात् सुपो लुक्, आर्द्रं गोमयमिति कर्मधारयः । यद्यपि प्रत्ययलक्षणेन अन्त
विभक्तिमाश्रित्य गोशब्दो मयटि पदम्, तथापि तस्य तद्धितपरकतया तेन व्यव
ऽपि रेफात्परस्य णत्वं भवत्येव, अस्मिन् प्रकरणे अट्कुप्वाङ्नुम्व्यवायस्य
कत्वात् । शुष्कगोमयेणेति । षात्परस्योदाहरणम् । भाष्ये तु 'पदान्तस्य'
पूर्वसूत्रात्पदग्रहणानुवृत्तिमभिप्रेत्य पदे परतः पदेन व्यवाये णत्वं नेत्याश्रित्य वा
मिदं प्रत्याख्यातम् । अथ 'सुट् कात्पूर्वः' इत्यतः सुडित्यनुवृत्तौ कतिचित्सूत्राणि
ख्यातुमुपक्रमते । कुस्तुम्बुरूणि । अत्रेति । जातिविशेषे वाच्ये कुस्तुम्बुरु
ससुट्को निपात्यत इत्यर्थः । कुस्तुम्बुरुर्धान्याकमिति । गुल्मविशेषे प्रसि
क्लीबत्वमतन्त्रमिति । अविवक्षितमित्यर्थः । वचनमप्यतन्त्रमिति बोध्य
कुतुम्बुरूणीति । धान्याकजातिवाचकत्वाभावाद् न सुडिति भावः । तद
कुत्सितानि तिन्दुकीफलानीत्यर्थ इति । तुम्बुरुशब्दस्य तिन्दुकवा

षेधवचनस्यापि 'उत्तरस्य समासचरमावयवस्य पदत्वे कर्तव्ये पदादिविधिभिन्ने प्र
लक्षणं न प्रवर्तते' इत्यर्थाभ्युपगमाच्च । 'शाकपार्थिवादीनामुत्तरपदलोपः', 'प्राति
धातुजस्य—' इत्यादौ तूत्तरपदशब्देन समासचरमावयवमात्रं गृह्यत इति तत्र प्र
लक्षणप्रवृत्त्यभावेऽपि न क्षतिः । इह तु पदत्वलाभाय प्रत्ययलक्षणाप्रवृत्तिरपेक्षि
एवं च 'माषकुम्भवापेन' इत्यत्रापि कुम्भस्य वापः कुम्भवापः । कुम्भशब्दः
परिमितधान्ये भाक्तः । 'माषाणां कुम्भवापः' इति विग्रहीतव्यमिति नव्याः । के
'अपदादिविधौ' इत्यत्र 'पदान्तविधौ' इत्यर्थं परिकल्प्य 'पदव्यवायेपि' इत्यस्य प
विधित्वाभावान्नास्त्यत्र प्रत्ययलक्षणनिषेध इत्याहुः । तदपरे न क्षमन्ते ।
हि सति लाघवात् 'पदान्तविधौ' इत्येव ब्रूयात्, न तु 'अपदादिविधौ'
दिक् । किंचोत्तरपदत्वे इति वचनस्य पदान्तविधौ कर्तव्ये प्रतिषेध इत्यर्थ
परमदण्डिनाविति 'ङमो ह्रस्वादचि—' इति सूत्रस्थमनोरमाग्रन्थेनैव विरोध
मियता । अतद्धित इति । 'व्यवधायकपदस्य तद्धितश्चेत्परो न भवति
निषेधः' इत्यर्थः । आर्द्रगोमयेणेति । इह गोशब्दः पदम् । 'उत्त
च—' इति निषेधोऽत्र न शङ्क्यः, गोमयशब्दस्योत्तरपदत्वात् । गोशब्द

निपात्यते । गावः पद्यन्तेऽस्मिन्देशे स गोभिः सेवितो गोष्पदः । असेविते—अगोष्पदान्यरण्यानि । प्रमाणे—गोष्पदमात्रं क्षेत्रम् । सेवित इत्यादि किम्—गोः पदं गोपदम् । १०६१ आस्पदं प्रतिष्ठायाम् । (६—१—१४६) आत्मयापनाय स्थाने सुट् निपात्यते । आस्पदम् । प्रतिष्ठायाम् इति किम्—आ पदाद् आपदम् । १०६२ आश्चर्यमनित्ये । (६—१—१४७) अद्भूते सुट् । आश्चर्यं यदि स भुञ्जीत । अनित्ये किम्—आचर्यं कर्म शोभनम् । १०६३ वर्चस्केऽवस्करः । (६—१—१४८) कुत्सितं वर्चो वर्चस्कमन्नलम् । तस्मिन् सुट् । अवकीर्यत इत्यवस्करः । वर्चस्के किम्—अवकरः । १०६४ अपस्करो रथाङ्गम् । (६—१—१४९) अपकरोऽन्यः । १०६५ विष्किरः शकुनौ वा । (६—१—१५०) पक्षे विकिरः । 'वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो मा भूत्' इति वृत्तिः । तन्न, भाष्यविरोधात् ।

---

कोशो मृग्यः । अपरस्पराः क्रियासातत्ये । स्पष्टम् । गोष्पदम् । असेविते गोष्पदशब्दस्य वृत्त्यसंभवाद् नञ्पूर्वकमुदाहरति—अगोष्पदानीति । गवां सञ्चरो यत्र नैव संभवति तत्रापि सुडिति भावः । गोष्पदमात्रं क्षेत्रमिति । क्षेत्रस्याल्पप्रमाणत्वमनेन ज्ञाप्यते । अतो गोष्पदात् क्षेत्रस्याधिक्येऽपि न क्षतिः । आस्पदं प्रतिष्ठायाम् । आत्मेति । आत्मयापनं शरीरसंरक्षणम्, तदर्थं यत् स्थानं तस्मिन् गम्ये सुडित्यर्थः । आपदादापदमिति । आ पदादिति विग्रहे अव्ययीभावे आपदमिति भवतीत्यर्थः । आपदापदमिति पाठे तु आपदमित्यस्य आपदित्यर्थः । आश्चर्यमनित्ये । अद्भुते गम्ये आङ्पूर्वकस्य चरेः सुट् । 'चरेराङि चागुरौ' इति यत् । अनित्यग्रहणमपनीय अद्भुत इति वक्तव्यमिति वार्तिकमभिप्रेत्याह—अद्भुते सुडिति । तेन आश्चर्यं नीला द्यौः, आश्चर्यमन्तरिक्षे यदवन्धनानि नक्षत्राणि न पतन्तीत्यादिसंग्रहः । अनित्ये इत्यनेन कादाचित्कतया अद्भुतं लक्ष्यत इत्युक्ते तु एतन्न सिध्येत् । वर्चस्केऽवस्करः । 'मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम् ।' इत्यमरः । अपस्करो । 'स्याद्रथाङ्गमपस्करः' इत्यमरः । 'चक्रं रथाङ्गम्' इति च । विष्किरः । विकिरतीति विकिरः । 'कॄ विक्षेपे' 'इगुपधज्ञा-' इति कः । शकुनौ गम्ये सुड् वा, 'परिनिविभ्यः—' इति षत्वम् । 'नगोकोवाजिविकिरविविष्किरपतत्त्रयः' इत्यमरः । वा वचनेनैवेति । वृत्तिग्रन्थे विष्किरः शकुनौ विकिरो वा' इति सूत्रपाठः । तत्र वाग्रहणादेव सुड्विकल्पे सिद्धे

---

'स्वादिषु-' इति पदत्वात् । गोष्पदम् । असेविते गोष्पदशब्दस्य वृत्त्यसंभवान्नञ्पूर्वकमुदाहरति—अगोष्पदानीति । गवां संचारो यत्र नैव संभवति तत्रापि सुडागमार्थमसेवितग्रहणमित्याहुः । आत्मयापनायेति । कालक्षेपाय शरीरक्षेपणाय वेत्यर्थः । आश्चर्यमिति । आङः परस्य चरेः सुट् । 'चरेराङि चागुरौ' इति यत् । विष्किरः । 'कॄ विक्षेपे' इत्यस्माद् 'इगुपध–' इत्यादिना कप्रत्यये सुडागमोऽनेन निपात्यते । षत्वं तु 'परिनिविभ्यः–' इत्यनेन । विकिरग्रहणमिति । 'विष्किरः शकुनौ विकिरो वा' इति वृत्तिग्रन्थे पाठः, सूत्रपाठे तु विकिरग्रहणं नास्त्येवेति

१०६६ प्रतिष्कशश्च कशेः । (६—१—१५२) 'कश गतिशासनयोः' इ प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वं च । सहायः पुरोयायी वा प्रति इत्युच्यते । कशेः किम्—प्रतिगतः कशां प्रतिकशोऽश्वः । यद्यपि कशेरेव क तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम् । तेन धात्वन्तरोपसर्ग १०६७ प्रस्कण्वहरिश्चन्द्रावृषी । (६—१—१५३) हरिश्चन्द्रग्रहणममन्त्रार्थं ऋषी इति किम्—प्रकण्वो देशः, हरिचन्द्रो माणवकः । १०६८ मस्करम रिणौ वेणुपरिव्राजकयोः । (६—१—१५४) मकरशब्दोऽव्युत्पन्नः, सुडिनिश्च निपात्यते । वेणु इति किम्—मकरो ग्राहः, मकरी समुद्रः । १० कास्तीराजस्तुन्दे नगरे । (६—१—१५५) ईषत्तीरमस्यास्तीति कास्तीरं नगरम् । अजस्येव तुन्दमस्येति अजस्तुन्दं नाग नगरम् । नगरे किम्—कातीर अजतुन्दम् । १०७० कारस्करो वृक्षः । (६—१—१५६) (ग १५३) करोतीति कारस्करो वृक्षः । अन्यत्र कारकरः । केचित्तु कस्कादिष्विदं प न सूत्रेषु । १०७१ पारस्करप्रभृतीनि च संज्ञायाम् । (६—१— एतानि ससुट्कानि निपात्यन्ते नाम्नि । पारस्करः । किष्किन्धा । 'तद्बृ

---

विकिरग्रहणं विष्किरः विकिर इति शकुनावेवेति नियमार्थम् । अतः शकुने उभयोरपि शब्दयोः प्रयोगो नास्तीति लभ्यत इत्यर्थः । भाष्ये हि 'विष्किरः श वा' इति सूत्रं पठित्वा वाग्रहणेन सुड्विकल्पः, न तु शकुनेरन्यत्र विकिर प्रयोगो नेति स्थितम् । अन्यत्रापि 'विकिरं वैश्वदेविकम्' इत्यत्र दर्शनादिति भा प्रतिष्कशश्च कशेः । कशेरिति कश इत्यत्रान्वेति । तथा च कशधातोर्नि कशशब्दस्य प्रतेः परस्य सुट् स्यादित्यर्थः । कशेरेवेति । कशधातोरेव कश निष्पन्न इत्यर्थः । धात्वन्तरेति । प्रतिगतः कशां प्रतिकश इत्यत्र गमि प्र प्रतिरुपसर्गः, न तु कशिं प्रति, 'यत्क्रियायुक्ताः प्रादयः—' इति नियमादित्य प्रस्कण्वहरिश्चन्द्रावृषी । अमन्त्रार्थमिति । मन्त्रे तु 'ह्रस्वाच्चन्द्रोत्तरपदे इति सूत्रेणैव सिद्धमिति भावः । तत्सूत्रं वैदिकप्रक्रियायां व्याख्यास्यते । मस्करिणौ । यथासंख्यमन्वयः । मस्करिग्रहणात्परिव्राजक एव मस्करि अन्यत्र तु मकरीत्येवेत्याहुः । कास्तीराजस्तुन्दे । कास्तीरशब्दः अजस्तुन्द नगरे निपात्येते इत्यर्थः । कारस्करो वृक्षः । कारं करोतीति विग्रहः । 'कृञो ताच्छील्ये—' इति टः । पारस्करप्रभृतीनि च । पारस्कर इति । पारं करो विग्रहः । पूर्ववट्टः । किष्किन्धेति । किं किमपि वानरसैन्यं धत्त इति किष्कि

---

बोध्यम् । तस्यापीति । विकिरशब्दस्यापीत्यर्थः । कशेरेव कशेति । कश रेव कशाशब्दो निष्पन्न इत्यर्थः । धात्वन्तरेति । 'प्रतिकशः' इत्यत्र प्रति सर्गो, न तु कशेः । 'यत्क्रियायुक्तः प्रादयस्तं प्रत्येव—' इति न्यायादिति भा अमन्त्रार्थमिति । मन्त्रे तु 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इत्यनेनैव सिद्ध्यतीति भ मस्कर । मस्करशब्दादिनिना मत्वर्थीयेनेष्टसिद्धौ मस्करिग्रहणं 'परिव्राजक प्रयोगो यथा स्यात्' इत्येवमर्थमित्याहुः । कातीरमिति । 'ईषदर्थे' इति

करपत्योश्चोरदेवतयोः सुट् तलोपश्च' (वा ३७१३) तात्पूर्वं चत्वँन दकारो बोध्यः । तद्बृहतोर्दकारतकारौ लुप्येते । करपत्योपस्तु सुट् । चोरदेवतयोरिति समुदायोपाधिः । तस्करः । बृहस्पतिः । 'प्रायस्य चित्तिचित्तयोः' (वा ३७१४) । प्रायश्चित्तिः, प्रायश्चित्तम् । वनस्पतिरित्यादि । आकृतिगणोऽयम् ।

इति समासाश्रयविधिप्रकरणम् ।

---

'आतोऽनुपसर्गे कः' । टाप्, निपातनात् किमो द्वित्वम्, मलोपः, सुट्, षत्वं च । रूढशब्दा एते कथञ्चिद् व्युत्पाद्यन्ते । एषामवयवार्थौ न विचारणीयः । तद्बृहतोरिति । पारस्करादिगणसूत्रमेतत् । तद्शब्दे तकारस्यान्त्यस्याभावादाह—तात्पूर्वमपि । तलोपश्चेत्यत्र तकारात्पूर्वमित्यर्थः । तत् चौर्यं करोतीति विग्रहः । 'कृञो हेतुताच्छील्ये—' इति टः । बृहस्पतिरिति । बृहती वाक्, तस्याः पतिरिति विग्रहः । 'कुक्कुटयादीनामण्डादिष्विति पुंवत्त्वम्, तलोपः सुट् । 'वाग्वि बृहती तस्या एष पतिः' इति च्छन्दोगब्राह्मणम् । प्रायस्य चित्तिचित्तयोरिति । गणसूत्रमिदम् । प्रायस्य चित्तिः चित्तं वेति विग्रहः । 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम् ।' इति स्मृतिः । वनस्पतिरिति । वनस्य पतिरिति विग्रहः आकृतिगणोऽयमिति । तेन शतात्पराणि परश्शतानीत्यादि सिद्धम् ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां समासाश्रयविधिप्रकरणं समाप्तम् ।

---

कादेशः । पारस्कर इति । 'पारं करोति' इति विग्रहः । 'कृञो हेतुताच्छील्या—' इति टः । किष्किन्धेति । 'किमपि धने' इति विग्रहे 'आतोऽनुपसर्गे कः' । टाप्, निपातनात् किमो द्वित्वं पूर्वस्य मलोपः सुट् षत्वं च । किं किं दधाति' इति विगृह्णतां तु मते वीप्सायां द्वित्वं सिद्धम् । अन्यत्र तु निपातनादेव वस्तुतस्तु रूढिशब्दा एते कथंचिद्व्युत्पाद्यन्त इत्यवयवार्थे नाग्रहः कार्यः । तद्बृहतोरिति । गणसूत्रमेतत् । तादिति । तलोपश्च' इत्यत्रेति शेषः । प्रायस्येति । गणसूत्रमेतदपि । 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्' इति स्मृतिः । आकृतिगणोऽमिति । तेन शतात्पराणि परश्शतानि कार्याणीत्यादि सिद्धम् । 'सुप्सुपा' इति वा 'पञ्चमी' इति योगविभागाद्वा समासः । राजदन्तादित्वाच्छतशब्दस्य परनिपातः, पारस्करादित्वात्सुट् ।

इति तत्त्वबोधिन्यां समासाश्रयविधिप्रकरणम् ।

---

१ 'कुक्कुटयादीनामण्डादिष्विति' इति क्वचिन्नास्ति ।

# अथ तद्धिताधिकारप्रकरणम् ॥ २६ ॥

## अथापत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ।

१०७२ समर्थानां प्रथमाद्वा । (४-१-८२) इदं पदत्रयमधि-क्रियते । 'प्राग्दिशः–' (सू १९४७) इति यावत् । सामर्थ्यं परिनिष्ठितत्वं कृतसन्धिकार्यत्वमिति यावत् । १०७३ प्राग्दीव्यतोऽण् । (४-१-८३) 'तेन दीव्यति—' (सू १५५०) इत्यतः प्रागणधिक्रियते । १०७४ अश्वपत्या-

---

तदेवं समासप्रपञ्चं निरूप्य तद्धितप्रकरणमारभते । समर्थानां प्रथमा- विधेयस्यादर्शनान्नायं स्वतन्त्रविधिरिति मत्वाह—इदं पदत्रयमधिक्रियत इ- स्वरितत्वप्रतिज्ञाबलादिति भावः । अधिकारस्योत्तरावधिमाह—प्राग्दिश इ- यावदिति । 'प्राग्दिशो विभक्तिः' इति सूत्रम् उत्तरावधिरित्यर्थः । 'समर्थाना- इति निर्धारणाषष्ठी । प्राथम्यं च 'तस्यापत्यम्' इत्यादितत्तत्सूत्रेषु प्रथमोच्चारितत्व- समर्थानां मध्ये प्रथमोच्चारितादित्यर्थः । 'समर्थात्प्रथमाद्वा' इति सुवचम् । कै- बहुवचनबलादनेकसमर्थसमवाय एवास्य प्रवृत्तिः । एवं च 'प्राग्दिशः–' इत्या- स्वार्थिकप्रत्ययविधिषु नास्य प्रवृत्तिरिति लभ्यत इत्याहुः । ननु सुबन्तात्तद्धितो- वक्ष्यमाणत्वेन तद्धितविधीनां पदविधितया 'समर्थः पदविधिः' इति परिभा- एकार्थीभावरूपसामर्थ्यलाभादिह समर्थग्रहणं व्यर्थमित्यत आह—सामर्थ्यं नि- निष्ठितत्वमिति । समर्थः पटुः शक्त इति पर्यायाः । शक्तत्वं च कार्योत्पा- योग्यत्वम् । शब्दस्य च कार्यमर्थप्रतिपादनमेव । तच्छक्तत्वं च कृतेष्वेव संधि- संभवति । तथा च कृतसन्धिकार्यत्वमेव सामर्थ्यमिह पर्यवस्यति । तदाह—कृ- सन्धिकार्यत्वमिति यावदिति । प्राग्दीव्यतोऽण् । 'तेन दीव्यति ख- जयति जितम्' इति सूत्रस्थदीव्यतिशब्दैकदेशस्यानुकरणमिह दीव्यच्छब्दः । च तद्घटितं तत्सूत्रं लक्ष्यते । तदाह—तेन दीव्यतीत्यतः प्रागणधि- इति । तथा च तस्यापत्यमित्याद्युत्तरसूत्रेषु केवलमर्थनिर्देशपरेषु विधेयप्रत्ययवि-

---

अपवादसंगत्या तद्धितान्विवक्षुस्तदीयमधिकारसूत्रमाह—समर्थानामिति । 'अ- तरस्यांग्रहणानुवृत्तेः समासोऽपि' इति वक्ष्यमाणमूलग्रन्थेन समासापवा- सूचितम् विधेयानिर्देशादुत्तरत्र प्रकृतिविशेषाकांक्षासत्त्वाच्च नायं स्वतन्त्रो विधि- त्याह—अधिक्रियत इति । 'पदत्रयम्' इत्यनेन प्रत्येकं स्वरितत्वप्रतिज्ञा सूचि- तत्प्रयोजनं तु कस्यचिन्निवृत्तावप्यपरस्यानिवृत्तिः, तथा च 'प्राग्दिशः–' इति सूत्रे 'समर्थानां प्रथमात्' इति निवृत्तम्, 'वा' इति त्वनुवर्तत एव—इति वक्ष्यमाण- ग्रन्थः संगच्छते ॥ प्राग्दिश इतीति ॥ तत उत्तरेषां प्रत्ययानां स्वार्थिक- 'समर्थानाम्' 'प्रथमात्' इति पदयोः प्रयोजनं नेति भावः । ननु 'समर्थः पदवि- इति परिभाषया गतार्थत्वात् 'समर्थानाम्' इत्येतद् व्यर्थम् । न च पदविधित्वं- शङ्क्यम्, 'घकालतनेषु–' इत्यलुग्विधानात् 'सुबन्तात्तद्धितोत्पत्तिः' इति सिद्धा- सकलसम्मतत्वादत आह—सामर्थ्यमिति । कृतसन्धिकार्यत्वमिति ।

भ्यश्च । (४—१—८४) एभ्योऽण्स्यात्प्राग्दीव्यतीयेष्वर्थेषु । वक्ष्यमाणस्य ण्यस्यापवादः । १०७५ तद्धितेष्वचामादेः । (७—२—११७) ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात् । १०७६ किति च । (७-२-११८) किति तद्धिते च तथा । अश्वपतेरपत्याद्याश्वपतम् । गाणपतम् । 'गाणपत्यो

संयुक्तेषु किं भवतीत्याकाङ्क्षायामणित्युपतिष्ठत इति लभ्यते। कस्माद्भवतीत्याकाङ्क्षायां 'समर्थात्प्रथमात्' इति प्रकृतिविशेषो लभ्यते। यत्र तु विधेयः प्रत्ययविशेष श्रूयते तत्राणिति नोपतिष्ठते, अणित्यस्यौत्सर्गिकतया वैशेषिकेण इञादिना बाधात्। अश्वपत्यादिभ्यश्च । चकारात् 'प्राग्दीव्यतोऽण्' इत्यनुकृष्यते । तदाह—एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेष्विति । दीव्यतः प्राक् प्राग्दीव्यत्, 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । 'झयः' इति टच् तु न, तस्य पाक्षिकत्वात् । प्राग्दीव्यतो भवाः प्राग्दीव्यतीयाः, 'वृद्धाच्छः' । 'अव्ययात्त्यप्' इति तु न अव्ययीभावस्याव्ययत्वे 'लुङ्मुखस्वरोपचारः प्रयोजनम्' इति परिगणनात् । अत एव 'अव्ययानां भमात्रे टिलोपः' इत्यपि न भवति । ननु 'प्राग्दीव्यतोऽण्' इत्येव सिद्धे किमर्थमिदं सूत्रमित्यत आह—वक्ष्यमाणस्येति । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति वक्ष्यमाणस्य पत्युत्तरपदत्वप्रयुक्तण्यप्रत्ययस्य बाधनार्थमित्यर्थः । तद्धितेष्वचामादेः । 'अचो ञ्णिति' इत्यनुवर्तते । 'मृजेर्वृद्धिः' इत्यतो वृद्धिरिति च । अचामिति निर्धारणषष्ठी । तदाह—ञितीति । किति च । तथेति । अचामादेरचो वृद्धिरित्यर्थः । इदं सूत्रं प्रकृतानुपयुक्तमपि व्याख्यासौकर्याय इहोपन्यस्तम् । अपत्यादीति । आदिना समूहाद्यर्थसंग्रहः । आश्वपतमिति । अश्वपतेरणि आदिवृद्धौ 'यस्येति च' इति इकारलोपः । गाणपतमिति । अश्वपत्यादिषु गणपतिशब्दः पठित इति भावः । गाणपत्य इति । गणपतिर्देवता यस्य मन्त्र-

फलं तु 'तस्यापत्यम्' इति सूत्रे मूल एव स्फुटीभविष्यति । इह 'समर्थात्प्रथमाद्वा' इति वक्तुं युक्तम् । महोत्सर्गानाह—प्राग्दीव्यत इत्यादिना । सूत्रे 'दीव्यत्' इत्येकदेशोऽनर्थकोऽप्यवधित्वेनोपात्तः 'प्राग्रीश्वरात्—' इतिवदित्येके । अन्ये त्वाहुः—'दीव्यत्' इति शत्रन्तम् । तेन देवनकर्ता अर्थ एवावधिरिति । प्राग्दीव्यतीयेष्विति । 'दीव्यतः प्राक् प्राग्दीव्यत् । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभाव इति प्राञ्चः । 'प्राग्दीव्यतम्' इति तूचितम्, 'झयः' इति टच्प्रवृत्तेरिति केचित् । तन्न, 'झयः' इति टचः पाक्षिकत्वात् । अन्यथा 'उपसमिधमुपसमित्' इति तत्सूत्रस्थमूलोदाहरणस्यासंगत्यापत्तेः । न चात्र टचोऽभावे 'अव्ययानां भमात्रे—' इति टिलोपे 'प्राग्दीव्यतीय' इति रूपं न स्यादिति शङ्क्यम् । अव्ययीभावस्याव्ययत्वे प्रयोजनं 'लुङ्मुखस्वरोपचारः' इति परिगणनात् । प्राग्दीव्यति भवः प्राग्दीव्यतीयः, 'वृद्धाच्छः' । त्यप् तु न शङ्कनीय एव, 'अमेहक्वतसित्रेभ्य एव' इति परिगणनात् । लुङ्मुखस्वर इत्यादिपरिगणनया अनव्ययत्वाच्च । वक्ष्यमाणस्येति । 'पत्युत्तरपदाण्ण्यः' इति वक्ष्यमाणस्य । तद्धितेष्व । अचां मध्य आदिरजेवेति 'अचोऽञ्णिति' इति सूत्रादच इत्यनुवर्तत इत्याशयेन व्याचष्टे—अच इति । वृद्धिः स्यादिति । 'मृजेर्वृद्धिः'

मन्त्र:' इति तु प्रामादिकमेव । १०७७ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः (४--१--८५) दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यादणोऽपवादः । दैत्यः । अदितेरादित्यस्य वा आदित्यः । प्राजापत्यः । 'यमाच्च' इ

---

स्येति विग्रहः । प्रामादिकमेवेति । प्रमादादायातमित्यर्थः । गणपतिक्षेत्रप दीनामश्वपत्यादिगणे पाठस्य वृत्तौ दर्शनादिति भावः । दित्यदित्यादित्य दित्यादिभ्य इति । दिति, अदिति, आदित्य एतेभ्य इत्यर्थः । पत्युत्तरप दिति । पतिः उत्तरपदं यस्य तस्मादिति विग्रहः । प्राग्दीव्यतीयेष्व ष्विति । प्राग्दीव्यत इत्यनुवृत्तेरिति भावः । अणोऽपवाद इति । विशेषविहि त्वादिति भावः । दैत्य इति । दितेरपत्यमिति विग्रहः । दितेर्ण्यप्रत्ययः । चु इति णकार इत्, आदिवृद्धिः, 'यस्येति च' इति इकारलोपः । अदितेरादित्य स्येति । अपत्यादीति शेषः । आदित्य इति । जाताद्यर्थे ण्ये आदिवृद्धौ 'यस्ये च' इति लोप आदित्य इति रूपम् । आदित्यशब्दाद् ण्ये आदिवृद्धौ 'यस्येति च' इति 'यणो मयः---' इति पूर्वयकारस्य द्वित्वे सति 'हलो यमाम्---' इत्याद्ययकार लोपे द्वियकारं रूपम् । द्वित्वाभावं लोपे चासति द्वियकारमेव । असति द्वित्वे यकार च सत्येकयकारं रूपम् । अनपत्यत्वाद् 'आपत्यस्य च-' इति यलोपो न । अदितेर ण्ये आदित्यशब्दात्पुनरपत्ये ण्ये 'आपत्यस्य च-' इति यलोपः । प्राजापत्य इति पत्युत्तरपदात् प्रजापतिशब्दाद् ण्ये आदिवृद्धौ 'यस्येति च' इति लोपः । दैतेया इ

---

इत्यतोऽनुवर्तत इति भावः । क्विति च । 'वाहीकः' इत्याद्यर्थमपीदं सु व्याख्यानायात्रैवोपन्यस्तम् । 'अचामादेः' इति निर्दिष्टस्थानिकत्वादिक्परिभाषा नोपतिष्ठत इत्याशयेनोदाहरति—आश्वपतमित्यादि । प्रामादिकमेवेति एतच्च हरदत्तग्रन्थे स्थितम् । यदि तु देवतार्थकाण्णन्ताच्चातुर्वर्ण्यादिराकृतिगणत्वा ष्यञिति व्याख्यायते तदा निर्दुष्ट एवायं प्रयोगः । अश्वपति गणपति राष्ट्रप कुलपति गृहपति पशुपति क्षेत्रपतीत्यश्वपत्यादिः । दित्यदित्या । पतिशब्दस्योत्तर पदशब्देन बहुव्रीहिं कृत्वा पश्चाद् द्वन्द्वः कार्यः, न तु द्वन्द्वोत्तरं बहुव्रीहिरित्याह— पत्युत्तरपदाच्चेति । 'पत्यन्तात्' इत्युच्यमाने बह्वच्पूर्वादपि स्यादित्युत्तरपदग्रहणं कृतम् दैत्य इति । ननु दितेर्देवताद्यर्थे ण्यः सावकाशः, 'इतश्चानिञः' इत्यपत्ये ढक् दैतेय इत्या सावकाशः. तथा च दितेरपत्यमित्यत्रोभयप्रसङ्गे परत्वाल्ढक् स्यात्, मैवम् । 'ण्यादयो थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम्' इति भाष्ये पूर्वविप्रतिषेधाश्रयणात् । अर्थ विशेषे इति किम्, औष्ट्रपतम् । उष्ट्रपतिर्नाम पत्रम् । 'तस्येदम्' 'पत्राध्वर्युपरिषदश्च' इत्यञ् । इह पूर्वविप्रतिषेधेन 'तस्येदम्' इत्यर्थे ण्यो न भवति, इदमित्यस्य सामान्या त्वात् । कथं तर्हि 'दैतेयः' इति । अत्राहुः—'कृदिकारात्–' इति ङीषन्तात् 'स्त्रीभ्यो ढक्' । ण्यस्तु न भवति । लिङ्गविशिष्टपरिभाषाया अनित्यत्वात् । न च 'अन्तादिवच्च' इति पूर्वस्यान्तवद्भावेन स्यादेव ण्य इति भ्रमितव्यम् । दितिशब्दान्ङीषि कृते 'यस्येति 'च' इति लोपेन सवर्णदीर्घाभावादिति । आदित्यशब्दाण्ण्यप्रत्यये 'यस्य-' इति लो 'हलो यमां-' इति पाक्षिको यलोपः । न चाल्लोपस्य स्थानिवत्त्वम्, यलोपे 'न पदान्त-

काशिकायाम् । याम्यः । 'पृथिव्या ञाञौ' (वा २५५४) । पार्थिवा, पार्थिवी । 'देवाद्यञञौ' (वा २५५५) । दैव्यम्, दैवम् । 'बहिषष्टिलोपो यञ् च' (वा २५५६) बाह्यः । 'ईकक्च' (वा २५५७) बाहीकः । 'स्थाम्नोऽकारः' (वा २५५९) अश्वत्थामः । पृषोदरादित्वात्सस्य तः । 'भवार्थे तु लुग्वाच्यः' (वा २८८२) । अश्वत्थामा । 'लोम्नोऽपत्येषु बहुष्वकारः—' (वा २५६०) । बाह्वादीञोऽपवादः । उडुलोमाः ।

स्वसाध्वेव । साधुत्वश्रद्धाजाड्ये तु पृषोदरादित्वात् समाधेयम् । काशिकायामिति । भाष्ये त्विदं न दृश्यत इति भावः । याम्य इति । यमस्यापत्यादीति विग्रहः । पृथिव्या ञाञाविति । ञश्चै, अञ् च वक्तव्यावित्यर्थः । पार्थिवेति । पृथिव्या अपत्यादीति विग्रहः । ञाप्रत्यये 'चुटू' इति ञकार इत्, आदिवृद्धिः, 'यस्येति च' इति लोपः । स्त्रियामदन्तत्वाट्टाप् । पार्थिवीति । अञि 'टिड्ढाणञ्—' इति ङीप् । ञाप्रत्ययस्यैव विधौ ङीब् न स्यात् । अम एव विधौ टाव् न स्यात् । तस्मादुभयविधिः । एतत्सूचनाय स्त्रीलिङ्गोदाहरणमिति बोध्यम् । देवादिति । देवशब्दाद् यञ् अञ् च प्रत्ययौ प्राग्दीव्यतीयेष्वर्थेषु वक्तव्यावित्यर्थः । दैव्यम्, दैवमिति । देवस्यापत्यादीति विग्रहः । यञि अञि च आदिवृद्धौ 'यस्येति च' इति लोपः । बहिष इति । बहिस् इति सकारान्तमव्ययम् । तस्मात् प्राग्दीव्यतीयेष्वर्थेषु यञ्, प्रकृतेष्टिलोपश्चेति वक्तव्यमित्यर्थः । बाह्य इति । बहिर्भव इत्यादिविग्रहः । यञि टिलोपे आदिवृद्धिः । अव्ययानां भमात्रे टिलोप इत्यस्यानित्यत्वज्ञापनार्थमिह टिलोपविधानन् । तेन आराद्भव आरातीय इत्यादि सिध्यति । ईकक् चेति । बहिष ईकक् च स्यात् प्रकृतेष्टिलोपश्चेति वक्तव्यमित्यर्थः । बाहीक इति । बहिष ईककि टिलोपे 'किति च' इत्यादिवृद्धिः । स्थाम्न इति । स्थामन्शब्दाद् अकारप्रत्ययः प्राग्दीव्यतीयेष्वर्थेषु वाच्य इत्यर्थः । अणोऽपवादः । अश्वत्थाम इति । अश्वस्येव स्थामा स्थितिर्यस्येति विग्रहः । अश्वत्थाम्नोऽपत्यम्, 'तत्र जात इत्यादिविग्रहः । प्रत्ययविधित्वेऽपि भाष्य उदाहरणात् तदन्तविधिः । अश्वत्थामन्शब्दादकारप्रत्यये 'नस्तद्धिते' इति टिलोपः । अणि तु आदिवृद्धिः स्यात् । ननु उदः परत्वाभावात्कथमिह सकारस्य थकार इत्यत आह—पृषोदरादित्वादिति । भवार्थे तु लुग्वाच्य इति । अकारप्रत्ययस्येति शेषः । लोम्न इति । लोमन्शब्दाद्बहुषु अपत्येषु वाच्येषु अकारप्रत्ययो वक्तव्य इत्यर्थः । बाह्वादीञ इति । बाह्वादित्वप्रयुक्तस्य

इति तन्निषेधात्, 'पूर्वत्रासिद्धे न स्थानिवत्' इत्युक्तेश्च । काशिकायामिति । भाष्ये तु न दृष्टमिति भावः । अणन्तात् स्वार्थिकेन ष्यञा प्रयोगः सूत्रपादः । स्त्रियां ङीष् न भवति, षितां ङीषोऽनित्यत्वात् । ञाञोः फलभेदज्ञापनाय स्त्रीलिङ्गमुदाहरति— पार्थिवा, पार्थिवीति । बहिष इति । टिलोपवचनम् 'अव्ययानां भमात्रे—' इत्यस्यानित्यतां ज्ञापयितुम् । तेन आरातीय इति सिद्धम् । अश्वत्थामा इति । भाष्योदाहरणात्तदन्तविधिः । न च बलवाचिनः स्थामन्शब्दस्यापत्येन योगासम्भवाद्वचनारम्भसामर्थ्यात्तदन्तविधिः स्यादिति वाच्यम्, जाताद्यर्थे तत्सम्भवेन सामर्थ्यो-

१ 'तत्र' इति क्वचिन्नास्ति ।

उडुलोमान् । बहुषु किम्—औडुलोमिः । 'सर्वत्र गोरजादिप्रसङ्गे यत्' । (वा २५६१) गव्यम् । अजादिप्रसङ्गे किम्—गोभ्यो हेतुभ्य आगतं गोरूप्यम्, गोमयम् । १०७८ उत्सादिभ्योऽञ् । ( ४-१-८६ ) औत्सः । 'अग्निकलिभ्यां ढग्वक्तव्यः' (वा २६८९) । अग्नेरपत्यादि आग्नेयम् । कालेयम् ।

इत्यपत्यादिविकारार्थसाधारणाः प्रत्ययाः ।

—:ooooo:—

इञोऽपवाद इत्यर्थः । उडुलोमा इति । उडूनि नक्षत्राणीव लोमानि यस्य उडुलोमा, तस्यापत्यमिति विग्रहः । केवलस्य लोम्नः अपत्ययोगासंभवात्प्रत्ययविधि तदन्तविधिः । अकारप्रत्यये सति 'नस्तद्धिते' इति टिलोपः । औडुलोमिरि उडुलोम्नोऽपत्यमिति विग्रहः । अत्रापत्यबहुत्वभावादकारप्रत्ययो न । किंतु बाह्वादिञि टिलोप इति भावः । सर्वत्र गोरिति । लोम्नोऽपत्येष्विति पूर्ववा दपत्यग्रहणानुवृत्तिनिवृत्त्यर्थं सर्वत्रग्रहणम् । अपत्ये तदन्येषु च प्राग्दीव्यतीये गोशब्दादजादिप्रत्ययप्रसङ्गे सति यत्प्रत्ययो वाच्य इत्यर्थः । गव्यमिति । गवि गोरागतमित्यादि विग्रहः । अणपवादो यत् । गोरूप्यम्, गोमयमिति । हेतुमनु ष्येभ्योऽन्यतरस्याम्–' इति रूप्य इत्यर्थः । 'मयड्वैतयोः–' इति रूप्यमयटौ । हल त्वान्नैतयोर्यप्रत्ययो बाधक इति भावः । उत्सादिभ्योऽञ् । प्राग्दीव्यतीये ष्विति शेषः । अणिञाद्यपवादः । 'दृष्टं साम' इति सूत्रभाष्ये 'सर्वत्राग्निकलि ढग्वक्तव्यः' इति वार्तिकं पठितम् । दृष्टं सामेत्यर्थे ततोऽन्येष्वप्यर्थेषु ढग्व इत्यर्थः । तत्र सर्वत्रेति त्यक्त्वा लाघवात्प्राग्दीव्यतीयेष्वेवेदं वार्तिकं पठित- कलिभ्यामिति । अपत्यादीति । अग्निर्देवता अस्य इत्यादिसंग्रहः । यम् । कालेयमिति । ढकि एयादेशे कित्वादादिवृद्धौ 'यस्येति च' इति लोपः ।

इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ।

—:○:—

पक्षयात् । अश्वस्येव स्थाम यस्येति बहुव्रीहिः । उडुलोमा इति । उडूनि नक्ष णीव लोमान्यस्येति विग्रहः । केवलस्यापत्येन योगासम्भवात्तदन्तविधिस्तोऽकारष्टिलो गोरिति । न केवलमपत्य एवायम्, किं तु प्राग्दीव्यतीयेषु सर्वेष्वर्थेष्विति गव्यमिति । गवि भवम्, गौर्देवता अस्य, गोरिदमित्यादिरर्थः । केचित्तु सर्वत्र ग्रहणात्प्राग्दीव्यतीयेभ्योऽन्यस्मिन्नर्थेऽप्ययं यत् । तेन गवा चरति गव्य इत्या भवतीत्याहुः । गोरूप्यमित्यादि । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' 'मयट् रूप्यमयटौ । उत्सादिभ्योऽञ् । अणस्तदपवादानामिञादीनां चायमपवादः । 'बष्कयासे–' इति गणसूत्रे, असे असमासे, पूर्वाचार्यसंज्ञेयम् । बष्कयस्यापत्यं बाष्कयः । असे किम्, गौबष्कयिः । 'असे' इति निषेधाल्लिङ्गादि तदन्तविधिः धेनुशब्दस्येह पाठादधेनूनां समूह आधेनवमिति सिद्धम् । नन्वेवं धैनुकं गौधेनु त्यत्राञ् प्रवर्तेत, 'अचित्तहस्तिधेनोः–' इति सूत्रे धेनुशब्दग्रहणाद्धैनुकमिति सिद्धा गौधेनुकं न सिद्ध्येदिति चेत् । न । 'धेनुरनञ् इकमुत्पादयति' इति विशेषवच

# अथापत्याधिकारप्रकरणम् ।

**१०७९ स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।** ( ४-१-८७ ) 'धान्यानां भवने-' (सू १८०२) इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः । पौंस्नः । वत्यर्थे न, 'स्त्री पुंवच्च' (सू ९३२) इति ज्ञापकात् । स्त्रीवत् । पुंवत् ।

अथापत्याधिकारो निरूप्यते । स्त्रीपुंसाभ्याम् । [1]भवनशब्देन 'धान्यानां भवने क्षेत्रे खञ्' इति सूत्रं विवक्षितम् । प्राग्दीव्यत इत्यतः प्रागित्यनुवृत्तम्-। तदाह—धान्यानामिति । स्त्रीपुंसाभ्यामिति । 'अचतुर-' इत्यच् । स्त्री शब्दात् पुंस्शब्दाच्चेत्यर्थः । स्त्रैण इति । स्त्रिया अपत्यम्, स्त्रीषु भवः, स्त्रीणां समूह इत्यादिविग्रहः । नञ्, वृद्धिः, णत्वम् । पौंस्न इति । पुंसोऽपत्यम्, पुंसि भवः, पुंसां समूह इत्यादिविग्रहः । पुंस्शब्दात् स्नञि 'स्वादिषु-' इति पदत्वात्संयोगान्तलोपः, आदिवृद्धिः । प्रत्ययसकारस्तु श्रूयते, उभाभ्यामपि नञ्प्रत्ययस्यैव विधौ भाष्ये स्थितत्वात् । इकं ठकमित्यर्थः । अग्निकलिभ्यामिति । अयं भावः 'सास्य देवता' इत्यधिकारे 'अग्नेर्ढक्' इति सूत्रम्, 'दृष्टं साम' इत्यधिकारे 'कलेर्ढक्' इति वार्तिकं चापनीय प्राग्दीव्यतीयेष्विदमेव पठनीयम् । तेनाग्नेरपत्यम्, अग्निना दृष्टं साम, अग्नेरिदम्, अग्नौ भवम्, अग्नेरागतमाग्नेयमिति सिध्यति । तथा कलेरपत्यमित्याद्यर्थे कालेयमपि सिध्यतीति । एतेन 'यदकालयत्तत्कालेयस्य कालेयत्वम्' इति श्रुतावर्थान्तरेऽपि ढको दर्शनात् 'कलेर्ढक्' इति सूत्रमपार्थकमिति मीमांसकोक्तिः परास्ता । वार्तिके सूत्रत्वोक्तिरप्यवैयाकरणमीमांसकप्रतारणार्थेति दिक् ।

इत्यपत्यादिविकारान्तार्थसाधारणप्रत्ययप्रकरणम् ।

—:०००:—

**स्त्रीपुंसाभ्याम्** । प्रागित्यनुवर्तते तदाह—प्रागर्थेष्विति । पौंस्न इति । इह 'स्वादिषु-' इति पदत्वात्संयोगान्तलोपेन पुंसः सस्य निवृत्तावपि प्रत्ययसकारः श्रूयत एव । अतएवोभाभ्यां परतो नञेव न विहितः, पौंस्नमिति रूपासिद्धिप्रसङ्गात् । स्यादेतत्—उभाभ्यामपि प्रकृतोऽञेवास्तु तत्संनियोगेन 'स्त्रीपुंसयोर्नुक् च' इति नुगेव विधीयताम् । न चैवं 'स्त्रैणः, पौंस्नः' इत्यत्र 'यञञोश्च' इति लुक्प्रसङ्गः । स्त्रैणानां संघ इत्यादौ 'सङ्घाङ्कलक्षणेषु' इत्यण्प्रसङ्गश्च स्यादिति वाच्यम्, उभयत्रापि 'गोत्रे' इत्यनुवृत्तेः, प्रवराध्यायप्रसिद्धं हि तत्र गोत्रम् । अन्यथा 'पौत्राः, दौहित्राः' इत्यत्राप्यञो लुक् स्यात् । एवं च 'नञ्स्नञीकक्ख्युन्-' इति वार्तिके नञ्स्नञ्ग्रहणं विना अञन्तत्वादेव ङीप् सिध्यतीत्यपरमप्यनुकूलमिति चेत् । अत्राहुः—नुकि 'नस्तद्धिते' इति टिलोपः स्यात् । न चैवं नुगानर्थक्यम् । टिलोपप्रवृत्त्यैव नुकः सार्थकत्वात् । यद्यपि स्त्रीशब्दे तस्य सार्थक्यं नास्ति, 'यस्येति च' इत्यनेनापीकारलोपसम्भवात् । तथापि 'श्रीर्देवतास्य श्रायं हविः' इत्यत्रेव लोपात्परत्वाद् वृद्धिः स्यात्, नुकि तु टिलोपः प्रवर्तत इति स्त्रीशब्देऽपि नुकः सार्थक्यमस्तु । तस्मान्नञ्स्नञाविति

[1] भवनशब्देनैकदेशेन, इति क, ख,

१०८० द्विगोर्लुगनपत्ये । ( ४-१-८८ ) द्विगोर्निमित्तं यस्तद्धितोऽ
नपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक्स्यात् । पञ्चसु कपालेषु संस्कृतः पुरोडाशः प
कपालः । द्विगोर्निमित्तम् इति किम्—पञ्चकपालस्येदं खण्डं पाञ्चकपा
अजादिः किम्—पञ्चगर्गरूप्यम् । अनपत्ये किम्—द्वयोर्मित्रयोरपत्यं द्वैमि

---

तु पुंसः सकारस्य संयोगान्तलोपे पुन्न इति स्यादिति भावः। वत्यर्थे
'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययो वक्ष्यते । तस्यार्थे स्त्रीपुंसाभ्यां नञ्स्न
भवत इत्यर्थः । कुत इत्यत आह—स्त्री पुंवच्चेति ज्ञापकादिति ।
पुंवदिति निर्देशोऽनुपपन्नः स्यादिति भावः। न च पुंवदिति निर्देशः पुंस्शब्दा
स्नञभावं ज्ञापयेत्, नतु स्त्रीशब्दान्नञभावमपीति वाच्यम्, नञ्स्नञोरेकसूत्रोपा
वत्यर्थे स्नञभावे ज्ञापिते सति स्त्रीशब्दान्नञभावस्यापि लाभाद् ज्ञापकस्य सामा
क्षत्वात्। तदुक्तं भाष्ये 'योगापेक्षं ज्ञापकम्' इति । द्विगोर्लुगनपत्ये । द्विगो
हेतुत्वसंबन्धे षष्ठी। लुक्श्रवणात् प्रत्ययस्येत्युपस्थितम्, प्रत्ययादर्शनस्यैव लुक्त
तथा च द्विगुनिमित्तस्य प्रत्ययस्य लुगिति लभ्यते। द्विगुनिमित्तश्च प्रत्ययस्तद्धि
भवति, तद्धितार्थे विषये तद्विधानात्। ततश्च द्विगुनिमित्तस्य तद्धितस्येति लभ्
प्राग्दीव्यत इत्यनुवृत्तेः प्राग्दीव्यतीयत्वं तद्धितविशेषणम्। 'गोत्रेऽलुगचि' इत्यत
अचीति सप्तम्यन्तस्य गोत्रविशेषणतया तदादिविधिः। अजादावित्यर्थकमचीति प
हापकृष्यते । तच्च षष्ठ्या विपरिणतं तद्धितविशेषणम्, तदाह—द्विगोर्नि
मित्यादिना। पञ्चकपाल इति। 'संस्कृतं भक्षाः' इत्यण्, तद्धितार्थे द्विगुः,
लुक्। प्रत्ययलक्षणाभावान्नादिवृद्धिः । पञ्चकपालस्येदमिति। पञ्चसु क
संस्कृतः पुरोडाश इत्यर्थे अणि विवक्षिते द्विगुसमासे अणो लुकि निष्पन्नात् पञ्च
शब्दात् 'तस्येदम्' इत्यणि आदिवृद्धौ पाञ्चकपालमित्यत्राणो लुङ् न भवति,
द्विगुनिमित्तित्वाभावादिति भावः। पञ्चगर्गरूप्यमिति। पञ्चभ्यो गर्गेभ्य
मित्यर्थे 'हेतुमनुष्येभ्यः—' इति रूप्यप्रत्ययः। 'तद्धितार्थ—' इति द्विगुसमास
त्वेऽपि अजादित्वाभावाद् न लुगिति भावः। द्वैमित्रिरिति। अत्र 'अत इञ्
इञोऽपत्यार्थकत्वान्न लुगिति भावः। न च तिस्रो विद्या अधीयानस्त्रैविद्य इत्य

---

यथान्यासमेव स्वीकर्तव्यमिति। अन्ये तु 'स्त्रीपुंसयोर्नुक् च' इत्यस्तु. आगमे
विवक्षितः। तस्य च 'यस्येति च' इति लोपे कृतेऽपि स्थानिवत्त्वाट्टिलोपो न
ष्यति। एवं च 'टिड्ढाणञ्—' इति सूत्रेणैव ङीप्सिद्धौ नञ्स्नयोरुपसंख्यानं मा
महदेव लाघवमित्याहुः। वत्यर्थ इति। 'स्त्रीपुंसाभ्यां नञ्स्नञौ वत्यर्थे न प्र
सामान्यापेक्षं ज्ञापकमिति भावः। अतएवोदाहरति—स्त्रीवदिति। 'आ च
इति चकारो नञ्स्नञ्भ्यां त्वतलोः समावेशार्थ इति वक्ष्यति। तेन स्त्रीत्वं स्त्रीता
पुंस्तेति सिद्धम्। द्विगोर्लुगनपत्ये। द्विगोरिति षष्ठी, तदर्थश्च हेतुत्वम्, तच्च
नोऽप्युपपद्यते, बुद्ध्याध्यवसायादित्याशयेनाह—द्विगोर्निमित्तमिति ।
रिति। एतच्चोत्तरसूत्राद् 'अचि' इत्यपकर्षाल्लभ्यते, वाग्रहणमनुवर्त्य व्यवस्थि
भाषाश्रयणेन वा। प्राग्दीव्यतीयः किम्, पञ्चभ्यः कपालेभ्यो हितं पञ्चकपाली

१०८१ गोत्रेऽलुगचि । ( ४-१-८९ ) अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक्स्यात् । गर्गाणां छात्राः, 'वृद्धाच्छः' (सू १३३७) । १०८२ आपत्यस्य च तद्धितेऽनाति । ( ६-४-१५१ ) हलः परस्यापत्ययकारस्य लोपः स्यात्तद्धिते परे, न त्वाकारे । गार्गीयाः । प्राग्दीव्यतीये किम्-गर्गेभ्यो हितं गर्गीयम् । अचि किम्-गर्गेभ्य आगतं गर्गरूप्यम् । १०८३ यूनि लुक् ।

लुक् स्यादिति वाच्यम्, अवयवा विद्या त्रिविद्या, शाकपार्थिवादिः । त्रिविद्यामधीते त्रैविद्य इति विग्रहे त्रिविद्याशब्दादणो द्विगुनिमित्तत्वाभावात् । प्राग्दीव्यतीयस्येति किम? पञ्चभ्यः कपालेभ्यो हितं पञ्चकपालीयम् । गोत्रेऽलुगचि । अलुगिति च्छेदः । प्राग्दीव्यत इत्यनुवृत्तेः प्रत्ययाधिकाराच्च प्राग्दीव्यतीये प्रत्यय इति लब्धम् । अचीति तद्विशेषणम्, तदादिविधिः । विषयसप्तम्येषा, नतु परसप्तमी । तदाह—अजादावित्यादिना । गोत्रप्रत्ययस्येति । गोत्रार्थकप्रत्ययस्येत्यर्थः । लुकः प्रत्ययादर्शनत्वात् प्रत्ययस्येति लब्धम् । गर्गाणां छात्रा इति । वक्ष्यमाणोदाहरणविग्रहप्रदर्शनमिदम् । गर्गस्य गोत्रापत्यं गार्ग्यः, 'गर्गादिभ्यो यञ्' । गर्गस्य गोत्रापत्यानीति बहुत्वविवक्षायां यञि कृते तस्य 'यञञोश्च' इति लुकि गर्गा इति भवति । वृद्धाच्छ इति । गार्ग्यशब्दादुक्तेऽर्थे छप्रत्यय इत्यर्थः । छस्य ईयादेशः, तस्मिन्भविष्यति अजादौ परे 'यञञोश्च' इति प्राप्तो लुङ् न भवति । तथा च गार्ग्य ईय इति स्थिते 'यस्येति च' इति यञोऽकारस्य लोपे गार्ग्य् ईय इति स्थिते परिशिष्टस्य यञो यकारस्य लोपमाह—आपत्यस्य च । अनातीति च्छेदः । 'ढे लोपोऽकद्र्वाः—' इत्यतो लोप इत्यनुवर्तते । 'सूर्यतिष्य—' इत्यतो य इति षष्ठ्यन्तमनुवर्तते । 'हलस्तद्धितस्य' इत्यतो हल इति पञ्चम्यन्तमनुवर्तते । तदाह—हलः परस्यापत्ययकारस्येति । अपत्यार्थयकारस्येत्यर्थः । यञो लुकि तु आदिवृद्धिर्न स्यादिति भावः । अल्लोपस्याभीयत्वेऽपि नासिद्धत्वम्, आरम्भसामर्थ्यात् । 'हलस्तद्धितस्य' इति यलोपस्यात्र प्रसक्तावपि न्याय्यत्वादिदमेव भवति । गर्गीयमिति । 'तस्मै हितम्' इति गार्ग्यशब्दाच्छः । तस्य प्राग्दीव्यतीयत्वाभावात् तस्मिन्परे 'यञञोश्च' इनि यञो लुग्भवत्येवेति नादिवृद्धिरिति भावः । गर्गरूप्यमिति । 'हेतुमनुष्येभ्यः—' इनि रूप्यप्रत्ययः, तस्य प्राग्दीव्यतीयत्वेऽप्यजादित्वाभावात्तस्मिन्परे

गोत्रे लुगचि । गोत्रे किम्, गोत्रार्थकप्रत्ययस्यैवालुग्यथा स्यात् । नेह—कुवलस्येदं कौवलम्, बदरस्येदं बादरम् । कुवलीबदरीशब्दौ हि गौरादिङीषन्तौ, ताभ्यां फलरूपे विकारे 'अनुदात्तादेश्च' इत्यञ् । तस्य 'फले लुक्' इति लुक्, तत इदमर्थे अजादिप्राग्दीव्यतीये विवक्षितेऽनेनालुङ्न भवतीति वृद्धत्वाभावाच्छो नेति भावः । विवक्षित इति । अचीति विषयसप्तमी । परसप्तमीत्वे तु अवृद्धत्वाच्छस्याप्राप्तौ अणेव स्यादिति भावः । गर्गाणामिति । अपत्यबहुत्वविवक्षायां 'यञञोश्च' इति लुक्, स चाजादिप्रत्यये चिकीर्षिते अनेन प्रतिषिद्ध इति गार्ग्यशब्दाच्छे कृते तस्य ईयादेशः । 'यस्येति च' इत्यकारलोपे यलोपार्थमाह—आपत्यस्य इति । 'ढे लोपो कद्र्वा', इत्यतो लोप इत्यनुवर्तते, 'सूर्यतिष्य—' इत्यतो य इति, 'हलस्तद्धितस्य' इत्यतो हल इति च तदाह—हलः परस्येत्यादि । आभीयत्वेऽप्यल्लोपो नासिद्धः,

(४-१-९०) अजादौ प्राग्दीव्यतीये प्रत्यये विवक्षिते युवप्रत्ययस्य लु
ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिः। वक्ष्यमाणः फिन्। ततो यून्यण्
कायनः। तस्य च्छात्रोऽपि ग्लौचुकायनः। अणो लुकि वृद्धत्वाभावाच्छो

---

यञः अलुङ् न। यदि तु अजादौ प्राग्दीव्यतीये प्रत्यये परे इति व्याख्यायेत, तर्हि
शब्दाच्छे तस्य ईयादेशे कृते अलुग्विधिः प्रवर्तेत, नतु ततः प्राक्। एवं च छप्रवृत्तेः
'यञञोश्च' इति यञो लुकि कृते आदिवृद्धेर्निवृत्तौ गर्गशब्दस्य वृद्धत्वाभावात् तत
स्यात्। अणि सति गर्गाश्छात्रा इत्येव स्यात्। अजादौ प्रत्यये विवक्षिते इति व्या
तु छप्रत्यये विवक्षिते तत्प्रवृत्तेः प्रागेव यञि अलुग्विधेः प्रवृत्तौ यञन्तस्य वृद्धत्वा
निर्बाधः। यलोपविधौ आपत्यस्येति किम्? सङ्काशेन निर्वृत्तं नगरं साङ्का
'सङ्काशादिभ्यो ण्यः' ततो भवार्थे 'धन्वयोपधात्–' इति वुञ्, साङ्का
तद्धिते किम्? गार्ग्ये, गार्ग्ययोः। अनातीति किम्? गार्ग्यायणः। यूनि
प्राग्दीव्यत इत्यनुवृत्तेः प्रत्ययाधिकाराच्च प्राग्दीव्यतीये प्रत्यये इति लभ्यते।
प्रत्ययविशेषणम्, तदादिविधिः। विषयसप्तम्येषा, नतु परसप्तमी। तदाह—
प्राग्दीव्यतीये विवक्षित इति। युवप्रत्ययस्येति। युवार्थकप्रत्ययस्य
लुकः प्रत्ययादर्शनत्वात् प्रत्ययस्येति लभ्यत इति भावः। ननु ग्लुचुकस्य गो
ग्लुचुकायनिरिति कथम्, 'अत इञ्' इति इञः प्राप्तेः? इत्यत आह—व
इति। 'प्राचामवृद्धात् फिन् बहुलम्' इत्यनेनेति शेषः। आयन्नादेशे ग्लुचुकायनि
रूपमिति भावः। तत इति। ग्लुचुकायनेरपत्यार्थे 'तस्यापत्यम्' इत्यणि आदि
'यस्येति च' इति लोपे ग्लौचुकायन इति रूपमित्यर्थः। तस्येति। ग्लौचुका
छात्र इत्यर्थे तस्येदमित्यणि युवापत्याणो लुकि ग्लौचुकायन इत्येव रूपमित्यर्थः।
युवापत्याणः 'यस्येति च' इति लोपेनैव छात्रार्थे ग्लौचुकायन इति रूपसिद्धे
लुग्विधिरनर्थक इत्यत आह—अणो लुकीति। छात्रार्थकछप्रवृत्तेः प्रागेव यू
यस्याणो लुकि आदिवृद्धेर्निवृत्तौ ग्लुचुकायनिशब्दस्य वृद्धत्वाभावाच् छो न
युवप्रत्ययस्य लुगभावे तु वृद्धत्वात् छः स्यात्। एतदर्थमेव युवप्रत्ययस्य लुग्विधा
त्यर्थः। स्थितश्चातुर्थिको युवप्रत्ययलुक्। तत्प्रसङ्गाद् द्वतीयीको युवप्रत्ययलुगनु

---

आरम्भसामर्थ्यात्। अतएवोपधाया इति नानुवर्तितमिति व्याचष्टे—यकार
आपत्यस्येति किम्, साङ्काश्यकः। काम्पिल्यकः। 'सङ्काशादिभ्यो ण्यः' ततो
योपधात्–' इति वुञ्। तद्धिते इति किम्, गार्ग्यौ। गार्ग्ययोः। अनातीति
गार्ग्यायणः। गार्गीयमिति। 'तस्मै हितम्' इति छः। यूनि लुक्। प्राग्
तीय इति वर्तते, अचीति च, प्रत्ययाधिकाराच्च प्रत्यय इति लभ्यते, तदेतद्
प्राग्दीव्यतीयेऽजादौ प्रत्यय इति। 'प्रत्ययस्य लुक्' इति संज्ञाकरणा
यः प्रत्ययः, स 'यूनि' इत्यनेन विशेष्यते। तथा च 'यूनि यः प्रत्ययस्तस्य
इत्यर्थस्तदाह—युवप्रत्ययस्येति। वक्ष्यमाण इति। 'प्राचामवृद्धात्फिन्
इति वक्ष्यमाणः। अजादौ किम्, ग्लौचुकायनरूप्यम्। प्राग्दीव्यतीये
ग्लौचुकायनीयम्। 'तस्मै हितम्' इति छः। इह 'द्विगोर्लुगनपत्येऽचि' 'यूनि

१०८४ पैलादिभ्यश्च । (२-४-५९) एभ्यो युवप्रत्ययस्य लुक् । 'पीलाया वा' (सू ११२१) इत्यण् । तस्माद् 'अणो द्व्यचः' (सू ११८०) इति फिञ् । तस्य लुक् । पैलः पिता पुत्रश्च । 'तद्राजाच्चाणः' (ग २१) 'द्व्यञ्मगध–' इत्यणन्तादाङ्गशब्दाद् 'अणो द्व्यचः–' (सू ११८०) इति फिञो लुक् । आङ्गः पिता पुत्रश्च । १०८५ इञः प्राचाम् । (२-४-६०) गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक्स्यात् तच्चेद्गोत्रं प्राचां भवति । पन्नागारस्य अपत्यम्, 'अत इञ्'

---

पैलादिभ्यश्च । 'ण्यक्षत्रियार्ष–' इत्यतो यूनि लुक् इत्यनुवर्तते । तदाह—एभ्यो युवप्रययस्य लुगिति । अजादिप्रत्यये अविवक्षितेऽपि प्राप्त्यर्थमिदम् । पीलाया इति । पीलाया गोत्रापत्यमित्यर्थे 'स्त्रीभ्यो ढक्' इति ढकं बाधित्वा 'पीलाया वा' इत्यणित्यर्थः । तस्मादिति । पैलस्यापत्यं युवेत्यर्थे 'पैलादिभ्यश्च' इति लुक् 'अणो द्व्यचः' इति फिञ् इत्यर्थः । पीलाया गोत्रापत्यस्यापत्यं पीलाया युवापत्यमिति पर्यवस्यति । तस्येति । तस्य युवार्थकफिञ्प्रत्ययस्य अनेन लुगित्यर्थः । पीलाया गोत्रापत्ये युवापत्ये च पैलशब्द इत्याह—पैलः पिता पुत्रश्चेति । यूनः पिता युवा चेत्यर्थः । 'तद्राजाच्चाणः' इति पैलादिगणसूत्रम् । तद्राजप्रत्ययात्परस्य युवप्रत्ययस्याणो लुगित्यर्थः । द्व्यञ्मगधेति । अङ्गशब्दो देशविशेषे । तस्य राजा आङ्गः । 'तस्य गोत्रापत्यमप्याङ्गः । 'द्व्यञ्मगध–' इत्यण् । तस्यापत्यं । युवाप्याङ्ग एव । 'अणो द्व्यचः' इति फिञ्, तस्यानेन लुक् । इञ प्राचाम् । इञः इति पञ्चमी । प्रत्ययत्वात्तदन्तग्रहणम् । 'ण्यक्षत्रिय–' इत्यतो यूनि लुगित्यनुवर्तते । इञन्तात्परस्य युवप्रत्ययस्य लुगित्यर्थः । अर्थादिञो गोत्रार्थकत्वं लभ्यते । तदाह—गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुगिति । प्राचाम् इति गोत्रविशेषणम्, न तु विकल्पार्थम्, व्याख्यानात् । तदाह—तच्चेद्गोत्रं प्राचां भवतीति । प्राग्देशीयमित्यर्थः । पन्नागारस्येति । प्राग्देशे पन्नागारो नाम कश्चित्, तस्य गोत्रापत्यमित्यर्थः । 'अत इञ्' इति इञि पान्नागारिः । पान्नागारेरपत्यं युवेत्यर्थे पान्नागारिशब्दाद् 'यञिञोश्च' इति फक्; तस्यानेन लुक् । एवं च पन्नागारस्य गोत्रापत्ये युवापत्ये च पान्नागारिरित्येव

---

न' इत्येव सूत्रयितव्यम् । तथा च 'लुगलुग्ग्रहणं शक्यमकर्तुम्' इति मनोरमायां स्थितम् । तत्र 'फक्फिञोः–' इति सूत्रे 'यूनि' इत्यस्य मण्डूकप्लुतिराश्रयणीयेति क्लेशोऽयं लाघवानुरोधेन सोढव्य इति भावः । पैलादिभ्यश्च । 'ण्यक्षत्रियार्ष–' इत्यतो 'यूनि लुक्' इति वर्तते तदाह—युवप्रत्ययस्य लुगिति । पीलाया वेत्यादि । 'अपत्येऽणि विहिते गोत्रापत्येऽप्यणेव' 'एको गोत्रे' इति वक्ष्यमाणत्वात् । ततोऽणन्तात्पैलशब्दादपत्येऽपि विधीयमानः फिञ् युवापत्ये पर्यवस्यति । तस्य च फिञोऽनेन लुगित्यर्थः एवं च पीलाया अपत्ये गोत्रापत्ये युवापत्ये चावैरूप्येण पैलशब्दः प्रयुज्यत इत्याह—पैलः पिता पुत्रश्चेति । पैलादिषु ये इञन्ताः शालङ्किसात्यकिऔदमेयिपैङ्गलिप्रभृतयस्तेभ्यः 'इञः प्राचाम्' इति लुकि सिद्धे अप्राचामर्थः पाठ इति ज्ञेयम् । तद्राजाच्चाणः । गणसूत्रमिदम् । तद्राजसंज्ञकात्परस्य युवप्रययस्य लुगित्यर्थः । तच्चेद्गोत्रं प्राचां भवतीति । इह प्राचांग्रहणं गोत्रविशेषणम्,

(सू १०९५), 'यञिञोश्च' (सू ११०३) इति फक्, पन्नागारिः पिता पुत्रश्च । प्राचां किम्—दाक्षिः पिता, दाक्षायणः पुत्रः । १०८६ न तौल्वलिभ्यः (२-४-६१) तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुङ् न स्यात् । पूर्वेण प्राप्तः । तुल्वलः, तत इञि फक्—तौल्वलिः पिता, तौल्वलायनः पुत्रः । १० फक्फिञोरन्यतरस्याम् । (४-१-९१) 'यूनि 'लुक्' (सू १०८८) नित्ये लुकि प्राप्ते विकल्पार्थं सूत्रम् । कात्यायनस्य छात्राः कातीयाः, कात्यायनीयाः । यस्कस्यात्यं यास्कः, शिवाद्यण्, तस्यापत्यं युवा यास्कायनिः । 'अणो द्व्यचः' (सू ११८०) इति फिञ् । तस्य छात्रा यास्कीया यास्कायनीयाः । १०

---

रूपमित्यर्थः । प्राचां किमिति । गोत्रविशेषणं किमर्थमित्यर्थः । दाक्षिः पिता दाक्षायणः पुत्र इति । दक्षस्य गोत्रापत्यं दाक्षिः, अत इञ् । तस्यापत्यं युवा दाक्षायणः । 'यञिञोश्च' इति फक् । तस्य लुग् न भवति, दाक्षिशब्दस्य प्राग्देशीय गोत्रप्रत्ययान्तत्वाभावेन न युवप्रत्ययस्य फकः प्राग्देशीयगोत्रार्थकादिञः परत्व न तौल्वलिभ्यः । बहुवचनात्तौल्वल्यादीनां ग्रहणमित्याह—तौल्वल्यादि परस्येति । पूर्वेणेति । 'इञः प्राचाम्' इत्यनेन प्राप्तो लुगनेन प्रतिषिध्यत इत्यर्थः तुल्वल इति । तुल्वलो नाम प्राच्यः कश्चित् । तस्य गोत्रापत्यं तौल्वलिः । इञ् तस्यापत्यं युवा तौल्वलायनः । 'यञिञोश्च' इति फक् । 'इञः प्राचाम्' इति लुङ् नेत्यर्थः । अथ प्रकृतं चातुर्थिकं लुग्विधिमनुसरति । फक्फिञोरन्यतर स्याम् । यूनीत्येवेति । 'यूनि लुक्' इति पूर्वसूत्रमनुवर्तत इत्यर्थः । 'यूनि' इत्युक्तो लुक् फक्फिञोर्वा स्यादित्यर्थः । तदाह—पूर्वेणेति । कात्यायनस्येति । कतस्य गोत्रापत्यं कात्यः गर्गादित्वाद्यञ् । तस्यापत्यं युवा कात्यायनः । 'यञिञोश्च' इति फक् । कात्यायनस्य छात्रा इत्यर्थे 'तस्येदम्' इत्यनुवृत्तौ 'वृद्धाच्छः' इति छः ईयादेशः । अत्र छात्रार्थकच्छत्यये विवक्षिते युवार्थकफको लुकि सति कात्य इति स्थिते 'यस्येति च' इत्यकारलोपे 'आपत्यस्य च—' इति यलोपे कातीया इति रूपम् । फको लुगभावे तु कात्यायनीया इति रूपमित्यर्थः । यस्कस्येति । यस्कस्य गोत्रापत्यमित्यर्थे 'अत इञ्' इति इञपवादः शिवाद्यणित्यर्थः । तस्यापत्यं युवा यास्कस्यापत्यं युवेत्यर्थे 'अणो द्व्यचः' इति फिञि आयन्नादेशे यास्कायनिरिति रूपमित्यर्थः । तस्य छात्रा इति । यास्कायनेश्छात्रा इत्यर्थे 'तस्येदम्' इत्यनुवृत्तौ 'वृद्धाच्छः' इति छः, तस्य ईयादेशः, यास्कायनीया इति रूपम् । अत्र छात्रार्थकच्छ प्रत्यये विवक्षिते युवार्थकफिञो लुकि 'यस्येति च' इति अकारलोपे यास्कीया इति

---

न तु 'प्राचामवृद्धात्—' इत्यादिवद्विकल्पार्थमित्यत्र व्याख्यानं शरणम् । दाक्षिः पि त्यादि । दक्षस्यापत्यं गोत्रापत्यं च पुमान्दाक्षिः । युवापत्यं तु दाक्षायण इति भाव न तौल्वलिभ्यः । बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाद्यर्थविगतिरित्यभिप्रेत्याह तौल्वल्यादिभ्य इति । दैवमित्रि, दैवयज्ञि, श्वाफल्कि, आसुरि, पौष्करसादि, वैकर्णीत्यादितौल्वल्यादिः । कात्यायनस्येति । कतस्य गोत्रा

---

१ क्वचिद् 'यूनि' इत्येव पाठः । २ 'इत्येव पूर्वेण' इति क्वचित् पाठः ।

तस्यापत्यम् । (४-१-९२) षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः । उपगोरपत्यमौपगवः । आदिवृद्धिरन्त्योपधावृद्धी बाधते ।

---

रूपमित्यर्थः । तस्यापत्यम् । तद्धिता इति, प्रत्ययः, परश्च इति चाधिकृतम् । तच्छब्दः सर्वनामतया बुद्धिस्थपरामर्शित्वादुपग्वादिसर्वविशेषबोधकः, तस्य उपग्वादेरपत्यमित्यर्थे तद्धिताः प्रत्ययाः परे भवन्तीति लभ्यते । कस्मात्परे प्रत्यया भवन्तीत्याकाङ्क्षायां 'समर्थानां प्रथमाद्वा' इत्यधिकारात् प्रथमोच्चारितात्समर्थात्तच्छब्दलब्धोपग्वादेरिति लभ्यते । प्रातिपदिकादित्यधिकृतम् । 'घकालतनेषु कालनाम्नः' इति तरप्तमप्तनेषु तद्धितेषु परतः सप्तम्या अलुग्विधानात्सुपस्तद्धितोत्पत्तेर्ज्ञापितत्वात् सुप्शिरस्कात्प्रातिपदिकादिति लभ्यते । सुप् चेह तस्येति प्रथमोच्चारिते पदे उपस्थितत्वात् षष्ठ्येव गृह्यते ततश्च षष्ठ्यन्तादिति फलति । सामर्थ्यं कृतसन्धिकार्यत्वमित्युक्तमेव, तदाह—षष्ठ्यन्तात्कृतसन्धेरिति । 'समर्थः पदविधिः' इति परिभाषया लब्धमाह—समर्थादिति । विशिष्टैकार्थप्रातिपदिकादित्यर्थः । सुबन्तात्तद्धितोत्पत्त्या तद्धितविधीनां पदविधित्वादिति भावः । उक्ता इति । 'प्राग्दीव्यतोऽण्' इत्याद्या औत्सर्गिका इत्यर्थः । वक्ष्यमाणश्चेति । 'अत इञ्' इत्याद्या वैशेषिका इत्यर्थः । वा स्युरिति । 'समर्थानां प्रथमाद्वा' इत्यधिकृतत्वादिति भावः । 'अपत्यं पौत्रप्रभृति गोत्रम्' इति उत्तरसूत्रव्याख्यावसरे अपत्यशब्दो व्याख्यास्यते । औपगव इति । उपगोर्रणि आदिवृद्धिः, ओर्गुणः, अवादेशः । अत्र प्रकृत्यैव उपगोर्लभाद् अपत्यमेव प्रत्ययार्थ इति स्थितिः । ननु उपगु अ इति स्थिते ओर्गुणात्परत्वाद् 'अचो ञ्णिति' इति वृद्धिः स्यात्, ओर्गुणस्य पशव्य इत्यादौ चरितार्थत्वात् । कृते च गुणे अवादेशे सति 'अत उपधायाः' इति वृद्धिर्दुर्निवारा । त्वष्टुरपत्यं त्वाष्ट्रः, मघमतोऽपत्यं माघवत इन्यादौ गणाप्रसक्त्या अन्त्योपधावृद्ध्योर्निर्बाधत्वाच्च । न च परत्वादादिवृद्धौ अन्त्योपधावृद्धी बाध्येते इति वाच्यम्, विप्रतिषेधे हि परस्य पूर्वबाधकता, न चेह विप्रतिषेधोऽस्ति, देशभेदेनोभयसम्भवात् । नाप्यन्त्योपधावृद्ध्योरपवाद आदिवृद्धिरिति वक्तुं शक्यम्, सुश्रुतोऽपत्यं सौश्रुत इत्यादौ अन्त्योपधावृद्ध्योरप्राप्तयोरप्यादिवृद्धेः प्रवृत्तेः, तस्मादादिवृद्धिस्थले अन्त्योपधावृद्धी स्यातामित्यत आह—आदिवृद्धिरिति । 'अचो ञ्णिति' इत्यन्त्यवृद्धिम् 'अत उपधायाः' इत्युपधावृद्धिं च आदिवृद्धिर्बाधत इत्यर्थः । पुष्करसदोऽपत्यमित्यर्थे बाह्वादित्वादिञ्, 'अनुशतिकादीनां च' इत्युभयोः पदयोरादिवृद्धिः । पुष्करसद्शब्दस्य अनुशतिकादौ

---

कात्यः । गर्गादित्वाद्यञ् । ततो यूनि 'यञिञोश्च' इति फक् । कातीया इति । 'आपत्यस्य च–' इति यलोपः । तस्यापत्यम् । 'तस्य' इति न स्वरूपग्रहणम्, किं तु षष्ठ्यन्तमात्रोपलक्षणमित्याशयेनाह—षष्ठ्यन्तादिति । पञ्चम्यर्थोऽध्याहारलभ्यः । अनुकरणात्पञ्चम्याः सौत्रो लुग्वा । उक्ता इति । अण्यादय उक्ताः । वक्ष्यमाणा इति । इञादयः । ननु 'उपगु अ' इति स्थिते ओर्गुणात्परत्वाद् 'अचो ञ्णिति' इति वृद्ध्या भाव्यम् । गुणस्तु पिचव्यादौ सावकाशः । कृते च गुणे अवादेशे च 'अत उपधायाः' इति वृद्ध्या भाव्यमत आह—आदिवृद्धिरिति । परत्वादिति भावः ।

तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् ।

पाठात् । तत्र यद्यादिवृद्धिरन्त्योपधावृद्धी न बाधेत, तदा आदिवृद्ध्या उपधावृद्ध्या
पौष्करसादेः सिद्धत्वाद् अनुशतिकादौ पुष्करसच्छब्दपाठोऽनर्थकः स्यात् ।
कौण्डिन्यन्यायात् सत्यपि सम्भवे बाधनं भवति इति विज्ञायत इति भाष्ये
तस्येदमित्यपत्येऽपीत्यादि । श्लोकवार्तिकमिदम् । तत्र प्रथमचरणस्यायम्
तस्येदमिति विहितः अण् अपत्येऽर्थेऽपि भवति, इदमर्थे तस्याप्यन्तर्भावात् ।
स्तस्यापत्यमित्यण्विधानं व्यर्थमित्याक्षेपः । नच 'अत इञ्' इत्याद्युत्तरसूत्रार्थं
पत्यम्' इत्यावश्यकमिति वाच्यम्, एवं हि सति 'तस्यापत्यमत इञ्'
सूत्रमस्तु । तथा च 'तस्यापत्यम्' इति पृथक्सूत्रकरणं व्यर्थमित्याक्षेपः
अत्र समाधत्ते—बाधनार्थं कृतं भवेदिति । 'तस्येदम्' इत्यणं
'वृद्धाच्छः' इति छः अपत्ये प्राप्तः, तद्बाधनार्थं 'तस्यापत्यम्' इति पृथक्सूत्रं
त्यर्थः । ननु 'वृद्धाच्छः' इति सूत्रं शेषाधिकारस्थम्' अपत्यादिचतुरर्थ्यन्तेभ्यः
शेषः । तथा च अपत्यार्थस्य शेषाधिकारस्थत्वाभावात् तस्मात्तत्र छप्रत्ययस्याप्रसक्तेः

अन्त्योपधावृद्ध्योरवकाशः—गौः, पाचकः । आदिवृद्धेस्तु सुश्रुत् सौश्रुतः ।
जागतः' इत्यादौ तूभयप्रसङ्गे परत्वादादिवृद्धिरेव भवति । लक्ष्यानुरोधेनात्र
न्यायस्यैवाश्रयणात् । अनुशतिकादिषु पुष्करसच्छब्दपाठोऽप्यत्र लिङ्गम् ।
आद्युपधावृद्धिभ्यां पौष्करसादेः सिद्धत्वात्तेषु पाठोऽनर्थकः स्यात् । न च 'पु
चरति' इत्यर्थे ठकि 'पौष्करसादिक' इत्येतदर्थमनुशतिकादिपाठ आवश्यक
णित्येव उपधावृद्धेः स्वीकारान्न तु कितीति वाच्यम्, अनभिधानाट्ठगत्र न
त्यादिसमाधानस्य कैयटे स्थितत्वात् । एतेन भिन्नविषये बाध्यबाधकभावो नोपपद्य
शङ्का निरस्ता । उक्तज्ञापकेन 'सत्यपि सम्भवे बाधनं भवति' इत्यवश्याश्रयणीय
नन्वेवमपि 'जागतः' इत्यादावुपधावृद्धिर्बाध्यताम्, औपगव इत्यत्र त्वादिवृद्धि
वेलायामुपधावृद्धेरप्राप्त्या कथं बाधः स्यादिति चेत् । अत्राहुः—जागत इत्यादौ
वृद्धेर्बाध्यत्वे निर्णीते क्वचित्कालान्तरप्राप्ताया अपि तस्या बाध्यत्वौचित्या
स्यादेतत्—यत्रादिवृद्धिर्न जाता तत्रान्त्योपधालक्षणा वृद्धिः कस्मान्न भवति ।
र्भावो वैयसवम् । 'इगन्ताच्च' इत्यण् । व्यापदि भवं वैयापदम् । 'तत्र भवः'
अत्र कैयटः—तत्राप्यैचौ परत्वात्तद्बाधकाविति सर्वेष्टसिद्धिरिति । शाब्दबोध
सत्त्वेऽपि तदनादरेणाक्षिपति—तस्येदमित्यपत्येऽपीति । इदमर्थे अपत्य
विकारादीनामन्तर्भावादपत्येऽपि 'तस्येदम्' इत्यण् प्रवर्तेत इति किमनेन 'तस्या
इति सूत्रेणेत्यर्थः । यद्यपि 'अत इञ्' इत्याद्यर्थं 'तस्यापत्यम्' इत्येतद्वक्तव्यम् ।
योगविभागः किमर्थं इत्याक्षेपोऽत्र बोध्यः । समाधत्ते—बाधनार्थमिति ।
दम्' इत्यस्य यद्बाधकं 'वृद्धाच्छः' इति तद्बाधनार्थं पृथक् सूत्रं कृतं भवेदित्यर्थः ।
'तस्येदम्' इत्यणस्तदपवादस्य वृद्धाच्छस्य च शैषिकत्वादपत्यार्थे प्रसक्तिरेव
'अपत्यादिचतुरर्थीपर्यन्तेभ्यो योऽन्योऽर्थः स शेषः' इत्यभ्युपगमादत

उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥

(वा २५८१—२५८४) योगविभागस्तु—भानोरपत्यं भानवः। कृतसन्धेः किम्—सौत्थितिः, अकृतव्यूहपरिभाषया सावुत्थितिर्मा भूत्। समर्थपरि-

ग्रहणार्थत्वं 'तस्यापत्यम्' इत्यस्य कथमित्यत आह—उत्सर्गः शेष एवासाविति। उत्सृज्यते अदन्त-बाह्वादिप्रकृतिभ्यो वियुज्यत इत्युत्सर्गः। कर्मणि घञ्। अदन्त-बाह्वादिभिन्नप्रकृतिसम्बद्धः अपत्यार्थोऽसौ शेषो भवत्येवेत्यर्थः। आक्षेप्तुर्हि 'तस्यापत्यमत इञ्' इत्येकसूत्रमभिमतम्। विनियुक्तादन्यः शेषः। अदन्त-बाह्वादिप्रकृति-संयुक्तापत्यार्थं एव विनियुक्तः। न तु तद्भिन्नप्रकृतिसंयुक्तापत्यार्थोऽपि। ततश्च तस्य शेषत्वात्तस्मिन्नपत्ये छस्य प्रसक्तत्वात् तद्बाधनार्थं 'तस्यापत्यम्' इति पृथक्सूत्रम्। सति चास्मिन् पृथक्सूत्रे 'प्रकृतिसामान्यसंयुक्तापत्यार्थस्योपयुक्तत्वादशेषत्वाच्छस्य न प्राप्तिरित्यप्राप्तिसम्पादनद्वारा छबाधकत्वं 'तस्यापत्यम्' इति पृथक्सूत्रस्य सिद्धम्। अयमप्राप्तबाध इत्युच्यते। नन्वेवमपि उपगोरपत्यमित्यत्र उपगोरवृद्धत्वाच् छस्य नैव प्रसक्तिरिति किं पृथक्सूत्रेणेत्यत आह—वृद्धान्यस्य प्रयोजनमिति। भानोरपत्यं भानव इत्यादौ यानि भान्वादिप्रातिपदिकानि वृद्धानि, यानि उपग्वादिप्रातिपदिकानि नामधेयत्वाद् वृद्धानि, तेभ्यश्छप्रत्ययबाधनार्थं 'तस्यापत्यम्' इति पृथक्सूत्रमित्यर्थः। ननु 'तस्येदम्' इत्यणि इदन्त्वेन बोधः। 'तस्यापत्यम्' इत्यणि तु अपत्यत्वेन बोध इति शाब्दबोधे वैलक्षण्यसत्त्वात्, 'तस्येदमित्यपत्येऽपि' इत्याक्षेप एवायमनुपपन्न इति चेद् न—एतद्वार्तिकभाष्यप्रामाण्येन 'तस्येदम्' इति इदंशब्देन अपत्यस्य इदंत्वेन ग्रहणाभावविज्ञानात्। 'प्रदीयतां दाशरथाय मैथिली' इति त्वार्षत्वान्न दुष्यतीत्यास्तां तावत्। कृतसन्धेः किमिति। 'समर्थानां प्रथमाद्वा' इत्यधिकारसूत्रस्थ-समर्थग्रहणलब्धं कृतसन्धेरित्येतत् किमर्थमिति प्रश्नः। सौत्थितिरिति। सु शोभन उत्थितः सूत्थितः। प्रादिसमासे सवर्णदीर्घः सूत्थितस्यापत्यं सौत्थितिः, अत इञ्, सुब्लुक्, आदिवृद्धिः, 'यस्येति च' इत्यकारलोपः। कृतसन्धेरित्यभावे तु सु उत्थित इत्यस्यामेव दशायां सवर्णदीर्घात्परत्वादादिवृद्धौ कृतायामावादेशे सावुत्थितिरिति स्यादिति भावः। नन्वन्तरङ्गत्वात्सवर्णदीर्घे कृते तदुत्तरमेव इञ्प्रत्यय उचितः, परादन्तरङ्गस्य बलवत्त्वात्। ततश्च सन्धेः प्राक् तद्धितोत्पत्तेरप्रसक्तेः कृतसन्धेरिति व्यर्थमेवेत्यत आह—अकृतेति। अन्तरङ्गपरिभाषाया अप्यपवादभूतया अकृतव्यूहपरिभाषया सन्धेः प्रागेव प्रत्ययः स्यात्। ततश्च आदिवृद्ध्यपेक्षया अन्तरङ्गोऽपि सवर्णदीर्घः अकृतव्यूहपरिभाषया आदिवृद्धेः प्राङ् न प्रवर्तते। एवं च सवर्णदीर्घा-

---

उत्सर्गः शेष एवासाविति। असौ अपत्यार्थः। अयं भावः—असति योगविभागे अदन्तबाह्वादिप्रकृतिसंबद्धस्यैवापत्यार्थस्योपयोगादुपग्वादिप्रकृतिसंबद्धोऽपत्यार्थः शेष एव स्यात्। तथा चाणं बाधित्वा भान्वादिभ्यो वृद्धाच्छः प्रसज्येत। योगविभागे तु कृते प्रकृतिसामान्यसंबन्धस्याप्यपत्यार्थस्योपयोगाच्छेषत्वाभावेन छस्य प्राप्तिरेव नास्तीति। ननु उपग्वादेरवृद्धत्वेन छस्य प्रसक्त्यभावान्निष्फलो योगविभाग इत्यत

---

१ 'अदन्तबाह्वादिप्रकृति—' इति क।

भाषया नेह—वस्त्रमुपगोरपत्यं चैत्रस्य। प्रथमात् किम्—अपत्यवाचकात्...

त्प्रागेवादिवृद्धौ आवादेशे सावुत्थितिरिति स्यादित्यर्थः। न च इञि सति कृते सवर्ण... ऊकारस्य जायमानया वृद्धया सवर्णदीर्घनिमित्तस्य कस्यचिद्विनाशाभावादकृत... परिभाषायाः कथमिह प्रवृत्तिरिति वाक्यम्, यदि सवर्णदीर्घो न स्यात्तदा सु उ... इत्यवस्थायां सकारादुकारस्य वृद्धया औकारे सति सवर्णदीर्घनिमित्तस्य अको वि... स्यादिति सम्भावनया अकृतव्यूहपरिभाषायाः प्रवृत्तेरिति कथञ्चिद्योज्यम्। वस्तु... अकृतव्यूहपरिभाषा नास्त्येव, भाष्ये क्वाप्यव्यवहृतत्वात्, प्रत्युत भाष्यविरुद्धत्वा... 'विप्रतिषेधे परं कार्यम्' इति सूत्रभाष्ये हि परादन्तरङ्गं बलीयः इत्यत्र... सौत्थितिरित्यत्र परामप्यादिवृद्धिं बाधित्वा अन्तरङ्ग एकादेश इत्युक्तम्। ... विभज्यान्वाख्याने सु उत्थित इति स्थिते परत्वाद् वृद्धिः प्राप्ता, अन्तरङ्गत्वादे... इति कैयटः। अकृतव्यूहपरिभाषासत्त्वे तदसंगतिः स्पष्टैव। सेदुष इत्यादौ अकृत... परिभाषाफलस्यान्यथासिद्धिस्तु तत्र तत्र प्रपञ्चितैवेत्यास्तां तावत्। विस्तरस्तु शब्द... शेखरे ज्ञेयः। वस्त्रमुपगोरपत्यं चैत्रस्येति। अत्र उपगुशब्दादपत्ये ... भवति, उपगोर्वस्त्रेणैवान्वयात्। यद्यपि तत्सम्बन्ध्यपत्ये प्रत्ययविधानाद् इह च ... तच्छब्दवाच्योपगुसम्बन्धाभावादेव अत्र प्रत्ययस्य न प्रसक्तिः। तथापि ... औपगवमित्यादिवारणाय सामर्थ्यमेकार्थीभावलक्षणमाश्रयणीयमिति भावः। अ... वाचकादिति। उपगुरपत्यमस्य देवदत्तस्येत्यर्थे औपगवो देवदत्त इति मा... त्यर्थः। प्रथमादित्युक्तौ तु 'तस्यापत्यम्' इति सूत्रे षष्ठ्यन्तस्यैव प्रथमोच्चारि...

आह—वृद्धानीति। प्रातिपदिकानीति शेषः। कृतसंधेः किमिति। अ... ङ्गत्वात् संधौ कृतायां तदुत्तरमेव प्रत्ययो भविष्यतीत्यधिकारसूत्रस्थं समर्थपद... किमर्थमिति प्रश्नः। अकृतेति। इयं च परिभाषा समर्थग्रहणेन ज्ञापितेति ह... दयः, लोकतः सिद्धेत्यन्ये। सावुत्थितिर्माभूदिति। अन्तरङ्गपरिभाषाया ... वादभूतया 'अकृत–' इत्यनया अकृतसंधेरेव प्रत्ययः स्यात्। तन्निवारणाय ... पदग्रहणमधिकारसूत्रस्थमावश्यकमिति भावः। यद्यपि तत्र 'सामर्थ्यं परिनिष्ठित... इत्यविशेषेणोक्तम्, तथापि ङ्याप्प्रातिपदिकांशे एव परिनिष्ठितत्वं न तु सुब्विशिष्टे... वधेयम्। तेन औपगवः दण्डिमानित्यादि सिद्धम्। अन्यथा 'औपगवदण्डी... इत्यादि स्यात् 'अश्विमानण्' इत्यादिनिर्देशश्चेह लिङ्गम्। यदि पामादि... 'विष्वगित्युत्तरपदलोपश्च' इत्यत्राकृतसंधिग्रहणेन 'परिनिष्ठितात्तद्धितोत्पत्तिः' इत्य... गम्यते' तर्हि व्यर्थमेव समर्थग्रहणमित्याहुः। प्रथमात्किमिति। 'तस्याप... इत्यत्र निर्दिष्टपदद्वयमध्ये प्राथमिकमेव प्रकृतिसमर्थकम्, न त्वपत्यम्। तथा च प्र... काङ्क्षायां तदेव ग्रहीष्यत इति किं 'प्रथमात्' इत्यनेनेति प्रश्नः। अपत्य... कादिति। 'तस्यापत्यम्' इत्यादिना विहितः प्रत्ययो यथा षष्ठ्यन्तोपगवादि... दभ्युपगम्यते, तथा अपत्यवाचकदेवदत्तादिशब्दात्प्रत्ययो भवत्विति शङ्का ... तद्वारणार्थं प्रथमाद्ग्रहणमावश्यकमिति भावः। ननु 'उपगोरपत्यम्' इति ... वाक्येऽपत्यवाचकस्याप्राथम्येऽपि 'अपत्यमुपगोः' इति वाक्ये प्राथम्यात्स्यादेवापत्य...

मा भूत् । वाग्रहणाद्वाक्यमपि । 'दैवयज्ञि—' ( सू० १२०१ ) इति सूत्राद् 'अन्यतरस्यां' ग्रहणानुवृत्तेः समासोऽपि । उपग्वपत्यम् । जातित्वान्ङीष्—औपगवी । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः । १०८९ अपत्यं पौत्रप्रभृति गोत्रम् । ( ४—१—१६२ ) अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ।

---

डुपगुरिति प्रथमान्ताद् न भवतीत्यर्थः । वाग्रहणाद्वाक्यमपीति । वाग्रहणाभावे हि तद्धितस्य नित्यत्वादुपगोरपत्यमिति वाक्यं न स्यादिति भावः । ननु उपग्वपत्यमिति कथं षष्ठीसमासः, तद्धितानां समासापवादत्वात् । न च तद्धितानां पाक्षिकत्वात्तदभावपक्षे षष्ठीसमासो निर्बाध इति वाच्यम्, 'अपवादेन मुक्ते उत्सर्गो न प्रवर्तते' इति पारे मध्ये षष्ठ्या वा' इति वाग्रहणेन ज्ञापितत्वादित्यत आह—दैवयज्ञीति । सूत्रादिति । जातित्वादिति । अपत्यार्थकाणन्तस्य औपगवशब्दस्य 'गोत्रं च चरणैः सह' इति जातित्वाद् ङीषित्यर्थः । आश्वपत इति । अश्वपतेरपत्यमिति विग्रहः । पत्युत्तरपदलक्षणं ण्यं बाधित्वा 'अश्वपत्यादिभ्यश्च' इत्यणिति भावः । दैत्य इति । दितेरपत्यमिति विग्रहः । 'दित्यदिति—' इति ण्यः अणपवादः । औत्स इति । उत्सः कश्चित् , तस्यापत्यमिति विग्रहः । 'उत्सादिभ्योऽञ्' इत्यञ् इञाद्यपवादः । स्वरे विशेषः । स्त्रैणः पौंस्न इति । स्त्रिया अपत्यम्, पुंसोऽपत्यमिति विग्रहः । 'स्त्रीपुंसाभ्याम्—' इति नञ्स्नञौ अणोऽपवादः । अपत्यम् । अपत्याधिकारात् सिद्धे पुनरपत्यग्रहणं व्यर्थमित्यत आह—अपत्यत्वेन विवक्षितमिति । एवं च पौत्रत्वादिना विवक्षितानां पौत्रादीनां न गोत्रसंज्ञेति भावः ।

---

कात्प्रत्यय इति चेत् । मैवम् । लक्षणापेक्षं प्राथम्यं नियतत्वादत्राश्रीयते, न तु विग्रहापेक्षमनियतम् । अन्यथा 'प्रथमात्' इत्येतन्निरर्थकं स्यादिति । षष्ठ्यर्थे माभूदिति । अयमर्थः—यथा इन्द्रो देवता अस्य हविष इति ऐन्द्रं हविरिति प्रथमान्तात्प्रत्ययो भवति तथा उपगुरपत्यमस्य देवदत्तस्य 'औपगवो देवदत्तः' देवदत्तोऽपत्यमस्योपगोः दैवदत्तिरुपगुः' इति माभूदिति । एतच्च कैयटे स्पष्टम् । नन्वपवादत्वात्तद्धितः समासं नित्यं बाधेत । न च तद्धितस्य वैकल्पिकत्वात्पक्षे सोऽपि भविष्यतीति वाच्यम् । 'यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते, तत्रापवादेन विनिर्मुक्ते उत्सर्गो न प्रवर्तते' इति 'पारेमध्ये—' इत्यत्र वाग्रहणेन ज्ञापितत्वादित्याशङ्क्याह—अन्यतरस्यांग्रहणानुवृत्तेरिति । जातित्वादिति । 'गोत्रं च चरणैः सह' इत्यनेनेति शेषः । प्राचा तु 'अणन्तत्वान्ङीप्' इत्युक्तम् । तद्व्याख्यातृभिश्च 'टिड्ढाणञ्—' इत्यनेनेत्युक्तम् । तदुभयमपि 'गोत्राद्यून्यस्त्रियाम्' इति सूत्रस्थभाष्यानुरोधेन । 'गोत्रं च चरणैः—' इत्यत्र कृत्रिमं गोत्रमेव गृह्यते न त्वपत्यमात्रमित्याशयेन प्रवृत्तमिति बोध्यमित्याहुः । सूत्रस्थानन्महोत्सर्गान्क्रमेणोदाहरति—आश्वपत इत्यादि । औत्स इति । 'उत्सः प्रस्रवणं वारि प्रवाहो निर्झरो झरः' इत्यमरः । तस्य चापत्येन योगस्तु 'गाङ्गेयो भीष्मः' इतिवत् । अपत्यं पौत्र । नन्वपत्यग्रहणं व्यर्थं पौत्रादेरपत्यत्वाव्यभिचारादित्यत आह—अपत्यत्वेन विवक्षितमिति । विवक्षितमिति किम्, वस्तुतः पौत्रप्रभृत्येव यदा शेषत्वेन विवक्ष्यते 'गर्गस्येदम्' इति, तदा मा

१०९० जीवति तु वंश्ये युवा । (४—१—६३) वंश्ये पित्रादौ जी पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव, न तु गोत्रसंज्ञम् । १०९१ भ्रातरि

'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।' इति कोशतः गोत्रशब्दस्य सन्ततिवाचक पुत्रस्यापि गोत्रत्वे प्राप्ते पौत्रादिग्रहणादिह शास्त्रे पुत्रस्य न गोत्रत्वम् । आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं समे ।' इत्यादिकोशाद् अपत्यशब्दस्य पुत्र एव रूढत्वात् कथम् 'अपत्यं पौत्रप्र' इति सामानाधिकरण्यमिति चेत्, मैवम्—अपत्यशब्दो हि नात्मजपर्यायः पुत्रपौत्रादिसंततिपर्यायः, न पतन्ति नरके पितरो येन तदपत्यमिति 'पङ्क्तिविं' इति सूत्रे भाष्ये व्युत्पादितत्वात् । तथा च पौत्रादयोऽपि पितामहादीनां नरकात् इति तेषामप्यपत्यत्वमस्त्येवेति 'एको गोत्रे' इति सूत्रभाष्ये स्पष्टम् । एतच्च महाभा जरत्कार्वाद्युपाख्यानेषु प्रसिद्धमेव । कोशस्तु सूत्रभाष्यादिविरुद्धत्वाद् उपेक्ष्य न चैवमपि गर्गस्य पुत्रोऽपि अङ्गिरसः पौत्रत्वाद्गोत्रं स्यादिति वाच्यम्, पौत्रादिः तस्य तद्गोत्रमिति व्याख्यानादित्यलम् । जीवति । वंश उत्पादक परम्परा, तत्र भवो वंश्यः, दिगादित्वाद्यत्, तदाह—वंश्ये पित्रादौ जीव जीवतीति सप्तम्यन्तम् । पौत्रादेरिति । पूर्वसूत्रात्पौत्रप्रभृति इत्यनुवृत्तं विपरिणम्यत इति भावः । यदपत्यमिति । 'तस्यापत्यम्' इत्यतस्तदनुवृत्तेरिति तुरवधारणे युवेत्यनन्तरं द्रष्टव्यः, तदाह—युवसंज्ञमेवेति । तेन एकसंज्ञा बहिर्भावेऽपि गोत्रसंज्ञाया अपि अस्मिन् न समावेश इति भावः । युवसंज्ञ

भूदित्याहुः । अन्ये तु वस्तुतः पौत्रादीनामेव तत्वेन विवक्षायां संज्ञा मा भूत् त्यत्वेन विवक्षायामेव यथा स्यादित्येवमर्थं तत् । तेन औपगव इत्यादावप गोत्रसंज्ञा सिद्धयति । नह्यणः पौत्रत्वादिकं शक्यतावच्छेदकं किं त्वपत्यत्वमेव । गोत्राधिकारस्थयञाद्यर्थस्यैव गोत्रसंज्ञा स्यादिति । नन्वपत्याधिकारे गोत्रयुवसंज्ञा सामर्थ्यादपत्यमिति लभ्यत एवेति । तेनैवोक्तप्रयोजनसिद्धौ किमनेनात्रापत्यग्र चेत् । अत्राहुः—'ते तद्राजाः' इत्यत्र तच्छब्देन 'जनपदशब्दात् क्षत्रियादञ् दिना विहिता ये अञादयस्त एव गृह्यन्ते न तु ततः प्राक्तनप्रत्ययाः, गोत्रयुवख ण्डेन विच्छिन्नत्वादिति वक्ष्यते । तथा चापत्याधिकारपठनसामर्थ्यस्योपक्षया स्यासम्बन्धशङ्कानिराकरणाय पुनरपत्यग्रहणमिह कृतमिति । पौत्रप्रभृतीति अनन्तरापत्ये मा भूत् । कौञ्जिः, गार्गिः । न चैवमप्यङ्गिरसः पौत्रे गर्गस्य अतिप्रसङ्ग इति वाच्यम् । 'यस्य पौत्रदि तं प्रत्येव गोत्रसंज्ञा' इति स्वीकारात् च गार्गिं प्रत्यनन्तरापत्यत्वेन विवक्षायामपि गर्गं प्रति गोत्रत्वं निष्प्रत्यूहमिति गर्गाद्यञिति दिक् । जीवति तु वंश्ये । पितृपितामहाद्युत्पादकप्रबन्धो वंश भवो वंश्यः । दिगादित्वाद्यत् । 'पौत्रप्रभृति' इत्यनुवृत्तं षष्ठ्या विपरिणम्यते नात् 'गोत्राद्यून्यस्त्रियाम्' इति लिङ्गाच्चेत्याह—पौत्रादेरिति । तुशब्दो भि युवेत्यस्मात्परो बोध्यः । स च एवकारार्थं इति व्याचष्टे—युवसंज्ञमेवेति एकसंज्ञाधिकारबहिर्भूतयोरपि गोत्रयुवसंज्ञयोर्न समावेश इति भावः । नन्वस्तु

ज्यायसि । (४—१—१६४) ज्येष्ठे भ्रातरि जीवति कनीयांश्चतुर्थादिर्युवसंज्ञश्च स्यात् । १०९२ वान्यस्मिन्सपिण्डे स्थविरतरे जीवति । (–४–१—१६५) भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यात् । एकं जीवतिग्रहणमपत्यस्य विशेषणम्, द्वितीयं सपिण्डस्य । तरब्निर्देश

---

गोत्रसंज्ञायाः समावेशे तु शालङ्का इति पैलीया इति च न स्यात् । शलङ्कुः कश्चित् तस्य गोत्रापत्यं शालङ्किः, इञ् । पैलादिगणे शालङ्कीति पाठात् प्रकृतेः शलङ्कादेशश्च । शालङ्केरपत्यं युवापि शालङ्किरेव । 'यञिञोश्च' इति फक् । 'पैलादिभ्यश्च' इति तस्य लुक् । शालङ्केर्यूनश्छात्रा इत्यर्थे 'इञश्च' इत्यणि शालङ्का इति रूपम् । तथा पीलाया गोत्रापत्यं पैलः । 'पीलाया वा' इत्यण् । पैलस्यापत्यं युवापि पैल एव । 'अणो द्व्यचः' इति फिञ् , 'पैलादिभ्यश्च' इति तस्य लुक् । पैलस्य यूनश्छात्रा इत्यथ वृद्धाच्छः । पैलीया इति रूपम् । युवगोत्रसंज्ञयोः समावेशे तु 'गोत्रेऽलुगचि' इति फफिञोरलुक् प्रसज्येतेत्यलम् । भ्रातरि च ज्यायसि । जीवतीत्यनुवर्तते । तदाह—ज्येष्ठे भ्रातरि जीवति कनीयानिति । अनुज इत्यर्थः । पौत्रप्रभृतीत्यनुवृत्तं षष्ठ्या विपरिणम्यते । अपत्यमित्यधिकृतम् । पौत्रादेरपत्यमित्यर्थः । फलितमाह—चतुर्थादिरिति । मृतेष्वपि पित्रादिषु ज्येष्ठे भ्रातरि जीवति युवसंज्ञार्थमिदम् । वाऽन्यस्मिन् । शेषपूरणेन सूत्रं व्याचष्टे—पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यादिति । सपिण्डास्तु स्वयम् , पिता, पितामहः, प्रपितामहः, तस्य पितृपितामहप्रपितामहाश्चेति सप्त पुरुषाः । एवं मातृवंशेऽपीत्यादि धर्मशास्त्रेषु प्रसिद्धम् । स्थविरतरः

---

द्वयस्य समावेशः को दोष इति चेत् । मैवम् । शालङ्काः पैलीया इत्यसिद्धिप्रसङ्गात् । तथा हि । शलङ्कोरपत्यं शालङ्किः । पैलादिषु पाठादिञ्शलङ्कादेशौ । शालङ्केरपत्यम् । शालङ्केर्युवापत्यं 'यञिञोश्च' इति फक्, तस्य 'पैलादिभ्यच' इति लुक्, ततः शालङ्केर्यूनश्छात्रा इत्यर्थविवक्षायाम् 'इञश्च' इत्यणि शालङ्का इति भवति । तथा पीलाया अपत्यं गोत्रापत्यं वा 'पीलाया वा' इत्यणि पैलः । तस्यापत्यं युवा 'अणो द्व्यचः' इति फिञ् । तस्य 'पैलादिभ्यश्च' इति लुक् । ततः पैलस्य यूनश्छात्राः पैलीया इति भवति । तत्र गोत्रयूनोः समावेशे तु 'गोत्रे लुगचि' इति फक्फिञोरलुक् प्रसज्येत । न च परत्वाद्यूनि लुग्भविष्यतीति सिद्धमिष्टमिति वाच्यम् । ततोऽपि परत्वात् 'फक्फिञोरन्यतरस्याम्' इति विकल्पापत्तेः । न च सिद्धान्तेऽपि विकल्पः शङ्क्यः, 'फक्फिञो' इत्ययं हि यूनि लुक एवापवादः, न तु 'पैलादिभ्यश्च' इत्यस्य, 'अनन्तरस्य—' इति न्यायात् । यद्यपि यूनि लुगपवादोऽपि 'फक्फिञोः—' इति विकल्पः परत्वात् 'पैलादिभ्यश्च' इति लुकमपि बाधेतेति वक्तुं शक्यम्, तथापि परादप्यन्तरङ्गस्य बलीयस्त्वात् 'पैलादिभ्यश्च' इति नित्य एव लुगित्याहुः । भ्रातरि च । अवश्यार्थोऽयमारम्भः । भ्राता तु न वंश्यः 'उत्पादकप्रबन्धो वंशः' इत्यभ्युपगमात् । 'अपत्यं पौत्रप्रभृति—' इत्यनुवर्त्य 'पौत्रप्रभृतेः' इति षष्ठ्या विपरिणम्य व्याख्यानात्फलितमाह—चतुर्थादिरिति । अत्रायमर्थः—गर्गादिषु मृतेष्वपि जीवत्यग्रजे अनुजो युवसंज्ञक इति । वान्यस्मिन् । इहत्यं जीवतिपदं तिङन्तम्, न तु सप्तम्यन्तमिति व्याचष्टे—जीवदे-

उभयोरुत्कर्षार्थः । स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहे भ्रातरि वा जीवति गार्ग्यस्यापत्यं गार्ग्यायणः गार्ग्यो वा । स्थविर इति किम्—स्थानवयो गार्ग्य एव । जीवति इति किम्—मृते मृतो वा गार्ग्य एव । 'वृद्धस्य च पूजायामिति वाच्यम्' (वा २६५४) गोत्रस्यैव वृद्धसंज्ञा प्राचाम् । गोत्रस्य युवसंज्ञा पूजायां गम्यमानायाम् । तत्रभवान्गार्ग्यायणः । पूजा इति किम्—गार्ग्यः । 'यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम्' (वा २६५१) । गार्ग्यो जाल्मः । कुत्सा इति किम्—गार्ग्यायणः । १०९३ एको गोत्रे । (४—१—९३) गोत्रे एक एव

---

क्षतिवृद्धः । जीवतीति सप्तम्यन्तमननुवृत्तं सपिण्डे इति सप्तम्यन्तेऽन्वेति । अत्र जीवतिपदं तिङन्तम् अपत्येऽन्वेति—यदपत्यं जीवति तद्युवसंज्ञकमिति । तत्र भ्रातुरन्यस्मिन्वृद्धतमे सपिण्डे जीवति सति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं स्यादिति फलितम् । एकमिति । अत्रत्यमित्यर्थः । द्वितीयमिति । अनवर्तमानमित्यर्थः । उभयोरिति । हेतुत्वसम्बन्धे षष्ठी । उभयहेतुकोत्कर्षवाचकस्तरबिति तदेव विवृणोति—स्थानेन वयसा चेति । स्थानत उत्कृष्टः पितृव्यः, पितृस्थानीयत्वात् । वयसा उत्कृष्टो मातामहः । भ्रातरीति संनिहितत्वान्मातामहभ्रातरीत्यर्थ इति केचित् । पितृव्यपुत्र इत्यन्ये । जीवतीति किमिति । जीवतिद्वयं किं प्रयोजनमिति प्रश्नः । मृते मृतो वा गार्ग्य एवेति । मृते सपिण्डे जीवन् गार्ग्य एव । मृतश्च चतुर्थो गार्ग्य एवेत्यर्थः । वृद्धस्य चेति । वार्तिकमिदम् । तत्र वृद्धपदं विवृणोति—गोत्रस्यैव वृद्धसंज्ञा प्राचामिति । गोत्रमेव वृद्धं प्राचीनाचार्या व्यवहरन्तीत्यर्थः । तथाच वार्तिकस्य फलितमर्थमाह—गोत्रस्य युवसंज्ञा पूजायां गम्यमानायामिति । उदाहरति—तत्रभवान् गार्ग्यायण इति । तत्रभवानिति पूज्यवाची, युवसंज्ञकानामल्पवयस्कत्वेन वृद्धाधीनत्वेन सुतरां च पूजा । तां गोत्रप्रभृतिस्तृतीयोऽपि मन्यते । अत्र युवसंज्ञाविधिसामर्थ्यात् युवप्रत्ययो बोध्यः । गार्ग्यो जाल्म इति । यो वृद्धाननादृत्य स्वातन्त्र्यं भजते स

---

वेति । यो जीवति स युवसंज्ञकः, मृतस्तु स्थविरतरे जीवत्यपि गार्ग्य एव भवति न तु गार्ग्यायण इति भावः । एकमिति । इहत्यमित्यर्थः । द्वितीयमिति अनुवर्तमानं सप्तम्यन्तमित्यर्थः । यदुक्तमुभयोरिति तदेव विवृणोति—स्थानेन वयसा चेति । मातामहे भ्रातरि वेति । संनिहितत्वात् 'भ्रातरि' इति 'मातामहभ्रातरि' इत्येवार्थ इत्येके । 'पितृव्यपुत्रे' इत्यन्ये । वृत्तौ तु 'पितृव्ये पितृभ्रातरि वा' इति पाठः । जीवतीति किमिति । जीवतिद्वयं किमर्थमिति प्रश्नः । अतएव 'मृते मृतो वा' इत्युत्तरं संगच्छते । अन्यस्मिन् किम्, भ्रातरि जीवति जीवतो विकल्पो मा भूत् । पूर्वसूत्रं तु भ्रातरि जीवति मृतस्य कनीयसो युवसंज्ञामिति सावकाशम् । वृद्धस्य चेति । वार्तिकमिदम् । तथा 'यूनश्च' इत्यग्रिमम् । एको गोत्रे । 'गोत्रे' इति जात्यपेक्षया एकवचनम् । एकशब्दः संख्यावाची । 'गोत्रेऽभिधित्सिते अपत्यत्वबोधकप्रत्यय एक एव स्यात्' इत्युक्तेः । गोत्रापत्ये एक एव शब्दः प्रत्ययं लभते नान्यः । यदि त्वनन्तरापत्यप्रत्ययान्तादपि प्रत्ययः स्यात्,

प्रत्ययः स्यात् । उपगोर्गोत्रापत्यमौपगवः । गार्ग्यः । नाडायनः ।

---

षयमिदम् । एको गोत्रे । संख्याविशेषोपादाने तदितरसंख्याव्यवच्छेदस्य स्वभावसिद्धत्वाद् एक एवेति गम्यते । अपत्याधिकारात्प्रत्ययाधिकाराच्च अपत्यप्रत्यय इति तद्विशेष्यलाभः । तदाह—गोत्रे एक एवापत्यप्रत्ययः स्यादिति । औपगव इति । उपगोर्गोत्रापत्ये 'तस्यापत्यम्' इत्यण् । गार्ग्य इति । गर्गस्य गोत्रापत्ये गर्गादिभ्य इति यञ् । नाडायन इति । नडस्य गोत्रापत्ये 'नडादिभ्यः—' इति फक् । गोत्र एक एव प्रत्ययः स्यादित्येवोक्तौ तु अनन्तरापत्यप्रत्ययान्तादौपगवशब्दादिञ्प्रत्ययो न निवार्येत । नियमस्य सजातीयविषयतया गोत्रप्रत्ययान्तादेव गोत्रप्रत्ययो वार्येत । अतोऽपत्यग्रहणमित्याहुः । नन्वेकस्मिन्गोत्रे युगपदनेकप्रत्ययाप्रसक्तेर्व्यर्थमिदं सूत्रमिति चेत् , मैवम्—अपत्यशब्दो हि पुत्र एव रूढ इत्येकः पक्षः । पुत्रादिसाधारण इत्यन्यः पक्ष इति प्रकृतसूत्रभाष्ये स्थितम् । तदेतद् 'अपत्यं पौत्रप्रभृति—' इति सूत्रव्याख्यावसरे प्रपञ्चितं चास्माभिः । तत्र प्रथमपक्षे उपगोः पौत्रे अपत्यप्रत्ययेन बुबोधयिषिते सति तस्य उपगुपुत्रापत्यस्य उपगुं प्रत्यपत्यत्वाभावात् 'तस्यापत्यम्' इत्यण् न संभवति । ततश्च उपगुपुत्रे वाच्ये 'तस्यापत्यम्' इत्यणा औपगवशब्दे व्युत्पादिते सति औपगवस्यापत्ये वस्तुत उपगोस्तृतीये गोत्रे विवक्षिते औपगवशब्दाद् 'अत इञ्' इति इञि औपगविरित्यनेनैव उपगोस्तृतीयो बोधनीयः स्यात् । एवं च उपगोस्तृतीये विवक्षिते उपगोरण् औपगवादिञिति प्रकृतिद्वयात्प्रत्ययद्वयमनिष्टं स्यात् । तत्र यद्यपि उपगोरणिष्टः, तथापि उपगोस्तृतीये विवक्षिते अनिष्टमिञ्प्रत्ययमणप्रत्ययो जनयतीति सोऽप्यनिष्ट एव । तथा च तत्रानिष्टप्रत्ययद्वयनिवृत्तये एको गोत्रे अपत्यप्रत्ययः स्यादित्यनपत्येऽपि उपगोस्तृतीये अपत्यप्रत्ययो विधीयते । स च वस्तुतः अणेव, न त्विञ्, अदन्तत्वाभावात्, विहिते च तस्मिन् औपगवादिञपि निवर्तते, गोत्रे बबोधयिषिते एकस्यैवापत्यप्रत्ययस्य विधेः । अतः प्रत्ययद्वयमाला निवर्तते । एवमुपगोश्चतुर्थे विवक्षिते तस्य उपगुं तत्पुत्रं च प्रत्यपत्य-

---

गोत्रापत्ये एक एव प्रत्ययो न कृतः स्यात् । इत्थं च 'अपत्यप्रत्ययान्तात्प्रतिषेधो वाच्यः' इति वार्तिकार्थोऽप्यनेन संगृहीत इत्याशयेन व्याचष्टे—गोत्रे एक एवेति । अपत्यप्रत्यय इति । एतच्चाधिकाराल्लब्धम् । अन्ये तु एकशब्दः प्रथमपर्यायः प्रथमश्चापत्यप्रत्ययशून्यः, तथा च 'प्रथमा प्रकृतिर्गोत्रे अपत्यप्रत्ययं लभते' इति सूत्रार्थं व्याचक्षते । तत्क्लिष्टम् । अस्यां पङ्क्तावेकमानय इत्युक्ते 'प्रथमम्' इति प्राथम्यार्थस्याप्रतीतेः । वस्तुतस्तु 'प्रथमादित्यधिकाराद्गोत्रे प्रथमादेव प्रातिपदिकादपत्यप्रत्ययः' इति व्याख्यायैकग्रहणमिह त्यक्तुं शक्यमित्याहुः । औपगव इति । 'उपगुशब्द एव प्रत्ययं लभते, न त्वौपगवशब्दः' इति गोत्रापत्येऽप्यनन्तरापत्य इवाणेव भवति, न त्विञ् । गार्ग्य इति । गोत्रापत्ये 'गर्गादिभ्यो यञ्' इति विशिष्य विधानादनन्तरापत्य इवात्र 'अत इञ्' न भवति किं तु यञेव । स च गार्ग्यस्यापत्येऽपि भवति, न त्वत्र यञन्तात्फक् 'एको गोत्रे' इति नियमात् । नाडायन इति । 'नडादिभ्यः फक्' इति गोत्रापत्ये विधानादत्रापि 'अत इञ्' न भवति, किंतु

'गोत्रे स्वैकोनसंख्यानां प्रत्ययानां परम्परा।
यद्वा स्वद्व्युनसंख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते ॥

त्वाभावात् पौत्रं प्रत्येवापत्यत्वादौपगविशब्दाद् 'यञिञोश्च' इति फकि प्रकृति दनिष्टा औपगवायन इति प्रत्ययत्रयमाला स्यात्। उपगोः पञ्चमे विवक्षिते तु औ गवायनशब्दादिञि औपगवायनिरित्येवं प्रकृतिचतुष्टयात् प्रत्ययचतुष्टयमाला स्या षष्ठे तु औपगवायनिशब्दात् फकि औपगवायनायन इत्येवं प्रकृतिपञ्चकात् प्रत्ययाः स्युः। तदेवं फगिञोः परम्परायां मूलप्रकृतेरुपगोः शततमे गोत्रे वि एकोनशतात्प्रकृतिभ्य एकोनशतमनिष्टप्रत्ययाः स्युः। अत्र तृतीयप्रभृति कस्मिं द्गोत्रे विवक्षिते उपगुं प्रत्यनपत्येऽपि तस्मिन् 'एको गोत्रे' इत्यणेव भवति इञादि। यदा त्वपत्यशब्दः पुत्रपौत्रादिसाधारणः तदा यद्यपि उपगोरनन्त पुत्रे इव पौत्रादिष्वपि 'तस्यापत्यम्' इत्यणि औपगव इतीष्टं सिध्यति। तथापि गोरनन्तरापत्ये अणि सति औपगवस्यानन्तरापत्ये उपगोस्तृतीये विविक्षिते अनिष्टः प्रसज्येत। एवमुपगोश्चतुर्थे विवक्षिते सिद्धेऽपि उपगोरणि तस्मादिञि औपगविः, तस्मात्फकि औपगवायनः, इत्येवं प्रत्ययत्रयमपि कदाचि ज्येत। तत्रापि उपगोर्मूलप्रकृतेरणिष्ट एव। इञ्फकौ तु प्रत्ययावनिष्टौ। तथा श्चतुर्थे विवक्षिते द्वितीयस्मादेकः, अनिष्टप्रत्ययः, तृतीयस्मादन्य इत्येवं प्रकृ दनिष्टौ द्वौ प्रत्ययाविति पर्यवस्यति। एवं पञ्चमे प्रकृतित्रयात् त्रयः प्रत्ययाः। प्रकृतिचतुष्टयात् चत्वारः प्रत्यया इत्येवं मूलाच्छततमे गोत्रे अष्टनवतेरष्टनव ष्टप्रत्ययाः स्युः। तत्र 'एको गोत्रे' इति नियमविधिः। गोत्रे एक एव प्र स्यादिति। तत्रापि प्रथमातिक्रमे कारणाभावान्मूलप्रकृतेर्यः प्रत्ययः प्राप्तुं यो एवेति फलति। सूत्रे एकशब्दः प्रथमपर्यायः। 'एके मुख्यान्नकेवलाः' इत्य मुखे भवो मुख्यः प्रथमः। 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।' इति न्तरम्। तथा च मूलप्रकृतेरेव गोत्रे विवक्षिते स्वयोग्यप्रत्ययलाभ इति व्याख्यान गोत्रे एकः प्रथम एवशब्दः प्रत्ययोत्पादक इति। तदेतत्सर्वं श्लोकद्वयेन संगृह गोत्रे स्वैकोनेति। अत्र प्रथमश्लोकान्ते श्रुतं 'प्रसज्यते' इत्येतत्पदं पूर्वार्धे त्यनन्तरमपि संबध्यते। अत्र स्वं गोत्रं मूलपुरुषोपगवपेक्षया यत्संख्याकं तद एकोनसंख्याकानाम् अनिष्टप्रत्ययानां परम्परैवोक्तरीत्या प्रसज्येत। ननु कदा गोत्रे औपगव इत्यणन्तमिष्टं सिध्यतीत्यर्थः। यद्वेति। स्वं गोत्रं तद् मूल

---

फगेव, स च नाडायनस्यापत्येऽपि भवति न तु फगन्तादिञ्, उक्तनियमात्। कस्मिन् गोत्रे युगपदनेकप्रत्ययाप्रसक्तेर्व्यर्थमिदं सूत्रमित्याशङ्क्य सूत्रारम्भफलं व्यवस्थापयति—गोत्रे स्वैकोनेति। 'स्वं गोत्रं तदपेक्षया एकोनसंख्यानां, द्वयोः परम्परा, चतुर्थे त्रयाणां, पञ्चमे तु चतुर्णाम्' इत्यादिपरम्परा इत्यर्थः। तथाहि—उपगोस्तृतीये अणिञोः परम्परा, चतुर्थे त्वणिञ्फकाम्, त्वणिञ्फगिञाम्। यद्यप्यत्र 'यस्येति च' इति लोपेनाणादेरसत्त्वात् 'अणि

---

१ इञ्प्रत्ययः इति युक्तं भाति।

अपत्यं पितुरेव स्यात्ततः प्राचामपीति च ।
मतभेदेन तद्धान्यै सूत्रमेतत्तथोत्तरम् ॥'

पितुरेवापत्यमिति पक्षे ह्युपगोस्तृतीये वाच्ये औपगवादिञ्स्यात् । चतुर्थे त्वजीवज्ज्येष्ठे मृतवंश्ये वा औपगवेः फक् । इत्थं फगिञोः परम्परायां मूलाच्छत-

---

पत्यपेक्षया यत्संख्याकं तदपेक्षया द्व्यूनसंख्याकप्रकृतिभ्यः तावतां प्रत्ययानामनिष्टानामुत्पत्तिरुक्तरीत्या प्रसज्यत इत्यर्थः । ननु कथमिदं पक्षद्वयमित्यत आह—अपत्यमित्यादि मतभेदेनेत्यन्तम् । पुत्र एवापत्यमिति पक्षे प्रथमः पक्ष उन्मिषति । पुत्रपौत्रादिसाधारणोऽपत्यशब्द इति पक्षे तु द्वितीयः पक्ष उन्मिषतीति भावः । तद्धान्यै इति । तस्य उक्तप्रकाराभ्याम् अनिष्टोत्पादनस्य हानिः निवृत्तिः, तदर्थमिदमित्यर्थः । तथोत्तरमिति । 'गोत्राद्यून्यस्त्रियाम्' इत्युत्तरसूत्रमपि तथा योज्यमित्यर्थः । तत्रापत्यशब्दः पुत्र एव रूढ इति पक्ष अनिष्टं प्रपञ्चयति—पितुरेवेत्यादिना । औपगवादिञ् स्यादिति । 'अत इञ्' इत्यनेनेति शेषः । औपगवादेव इञ् स्यात्, न तु उपगोरणित्यर्थः, तृतीयस्य उपगुं प्रत्यपत्यत्वाभावादिति भावः । चतुर्थे त्वित्यतः पूर्वम् उपगोरिति शेषः । अजीवज्ज्येष्ठ इति । जीवन् ज्येष्ठो यस्येति विग्रहः । जीवति तु ज्येष्ठे चतुर्थस्य 'भ्रातरि च ज्यायसि' इति युवसंज्ञया गोत्रत्वं बाध्येतेति भावः । मृतवंश्य इति । मृतो वंश्यो यस्येति विग्रहः । वंश्ये जीवति तु 'जीवति तु वंश्ये युवा' इति युवसंज्ञया गोत्रत्वं बाध्येतेति भावः । औपगवेः फगिति । 'यञिञोश्च' इत्यनेनेति शेषः । एकोनेति । एकोनशता-

---

परम्परा' इत्युक्तिर्न संगच्छते तथापि 'अणन्तादिञुत्पद्यते इञन्तात्फक्' इत्युत्पत्तिमात्राभिप्रायेण प्रत्ययपरम्पराभिधानं बोध्यम् । स्वद्व्यूनसंख्येभ्य इति । स्वं गोत्रं तदपेक्षया द्व्यूनसंख्येभ्यः प्रातिपदिकेभ्यः तृतीये एकस्मादनिष्टोत्पत्तिः, चतुर्थे द्वाभ्यां, पञ्चमे त्रिभ्यः, इत्यादीत्यर्थः । अपत्यं पितुरेवेति । तथा चामरः—'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे' इति । मुख्यमतमाह—ततः प्राचामिति । पित्रपेक्षया ये प्राञ्चः पितामहप्रपितामहादयस्तेषामपीत्यर्थः । अत्रायमाशयः—अपत्यशब्दः क्रियानिमित्तो न त्वात्मजपर्यायः । 'न पतन्त्यनेनेत्यपत्यम्' इति व्युत्पत्तेः 'पङ्क्तिविंशति–' इति सूत्रे भाष्यकृता दर्शितत्वात्, बाहुलकात्करणे यत्प्रत्ययः । 'यन्निमित्तं यस्यापतनं तत्तस्यापत्यम्' इति फलितोऽर्थः । तथा च 'पौत्रादिरपि पितामहादीनामपतनहेतुः' इति तेषामपत्यत्वं भवति । प्रसिद्धं च व्यवहितोऽपि पितामहादीनामुद्धर्तेति जरत्कार्वाद्युपाख्यानेषु । 'अपत्यं पौत्रप्रभृति–' इति सूत्रमप्यत्रानुगुणम् । आद्यपक्षे हि 'अपत्यमिवापत्यम्' इति गौणी वृत्तिराश्रयणीया स्यात् । अमरस्तु सूत्रभाष्यादिविरोधादुपेक्ष्य इति । तद्धान्यै इति । आद्यपक्षे प्रत्ययमालानिवृत्तये, अन्त्ये तु स्वद्व्यूनसंख्येभ्योऽनिष्टोत्पत्तिनिवृत्तये इत्यर्थः । औपगवादिञ् स्यादिति । तृतीयस्य उपगुं प्रति अनपत्यत्वादिति भावः । एवं चासति सूत्रे अस्मिन् पक्षे औपगविरित्यनिष्टमेव स्यात्, औपगव इतीष्टं तु न सिद्ध्यतीति बोध्यम् । अजीवज्ज्येष्ठे इति । जीवज्ज्येष्ठे

तमे गोत्रे एकोनशतं प्रत्ययाः स्युः । पितामहादीनामपीति मुख्यपक्षे तु
वाच्य उपगोरणा इष्टे सिद्धेऽप्यणन्तादिञपि स्यात् । ततश्चतुर्थे फगिति
परम्परायां शततमे गोत्रेऽष्टनवतेरनिष्टप्रत्ययाः स्युः, अतो नियमार्थमिदं
एवमुत्तरसूत्रेऽप्यूह्यम् । १०९४ गोत्राद्यून्यस्त्रियाम् । (४-१-९४)

---

त्प्रकृतिभ्यः एकोनशतं प्रत्यया अनिष्टाः स्युरित्यर्थः । अथापत्यशब्दः पुत्रपौ
साधारण इति पक्षे अनिष्टं प्रपञ्चयति—पितामहादीनामपीति । मुख्य
त्वस्य भाष्ये पूर्वपक्षस्य निराकरणाद् 'अपत्यं पौत्रप्रभृति–' इति सूत्रस्व
बोध्यम् । इष्टे सिद्धेऽपीति । तृतीयादीनामप्यपत्यत्वेन तत्र 'तस्यापत्यम्'
निर्बाधत्वादिति भावः । तत इति । इञन्तादित्यर्थः । अष्टनवतेरिति । प्र
इति शेषः । अनिष्टप्रत्ययाः स्युरिति । अष्टनवतिरिति शेषः । नि
मिति । यद्यप्युपगोस्तृतीयादिषु अपत्यप्रत्ययविध्यर्थत्वमेव प्रथमपक्षे, तथापि
तीयादिषु विवक्षितेषु गोत्रविहितगर्गादियञो गार्ग्यशब्दस्यष्टस्य सिद्धावपि गा
ततः फिञित्येवं प्रत्ययपरम्पराप्यनिष्टा प्राप्नोतीति नियमार्थत्वमपि प्रथमपक्षे
सूत्रस्येति भावः । एवमुत्तरसूत्रेऽप्यूह्यमिति । तत्प्रकारस्तु उत्तरसूत्रे
वक्ष्यते । गोत्राद्यून्यस्त्रियाम् । गर्गस्य गोत्रं गार्ग्यः, गर्गस्य तृतीयः ।

---

जीवद्वंश्ये वा युवसंज्ञायां सत्यां गोत्रसंज्ञा नेति भावः । इष्टे सिद्धे
अस्मिश्च पक्षे औपगवस्य यदपत्यं तदुपगोरप्यपत्यमिति उपगोर्यदा प्रत्ययः
'औपगवः' इतीष्टं यद्यपि सिद्ध्यति, तथाप्यौपगविरित्यनिष्टं प्राप्नोतीत्यर्थः । ततः
इञन्तादित्यर्थः । फगिञोरिति । फगन्तादिञ्, इञन्तात्फक्, तदन्तात्
इत्यादिपरम्परायां सत्यामित्यर्थः । नियमार्थमिति । नन्वाद्यपक्षे तत्तत्पितृवा
देव प्रत्ययः, न तु मूलभूतात्स्यात्, अनन्तरापत्ये । मुख्यसंबन्धे चरितार्थस्यापा
संबन्धेऽपि प्रवृत्तेरन्याय्यत्वात् । तथा चौपगवापत्येन उपगोर्मुख्यसंबन्धा
त्राप्राप्ते विध्यर्थमेवेदं सूत्रम्, न तु नियमार्थमिति औपगवशब्दादपि प्रत्ययो दुर्वा
चेत् । अत्राहुः—गोत्रे बोधनीये क्रमेणानेकप्रत्ययप्रसङ्गे एक एवापत्यप्रत्ययः स्या
सूत्रार्थे कृते औपगवशब्दस्यापत्यप्रत्ययान्तत्वात्पुनरपत्यप्रत्ययस्ततो नो
इत्यगत्या परम्परासंबन्धाभ्युपगमेनोपगोरेव तदुत्पत्तिः, न त्वौपगवशब्दा
सिद्धमिष्टमिति । अत्र केचिद्व्याचक्षते—आद्यपक्षे प्रत्ययपरम्परायां प्राप्तायां
गोत्रे' इत्यनेनैकः प्रत्ययो विधीयते । तथा चैको नामैकजातीय इत्यर्थपर्यवसाना
प्रकृतेर्योऽपत्यप्रत्ययोऽणादिस्तज्जातीय एव गोत्रे बोधनीये तत्तत्पितृवाचक
'अणन्तादण्, इञन्तादिञ्, यञन्ताद्यञ्' इति । न चैवमणिञोः परम्परायां
तायामप्यौपगव इत्यत्राण्प्रत्ययपरम्परा स्यात् । तथा गार्ग्य इत्यादौ यञादिप
वाच्यम् । सत्यामपि तस्यामनिष्टाभावादिति । तच्चिन्त्यम् । फगन्तात्फकि
इत्यादावनिष्टप्रसङ्गादिति दिक् । ऊह्यमिति । 'अपत्यं पितुरेव' इति पक्षे
पत्यरूपे यूनि विवक्षिते 'गोत्राद्यूनि–' इति नियमसूत्रे सत्यसति च गोत्रप्रत्यया
युवप्रत्यय इति द्वयोः परम्परा, सा चेष्टत्वान्न नियमेन व्यावर्त्यते । पञ्चमे

पत्ये गोत्रप्रत्ययान्तादेवापत्यप्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा। गर्गस्य युवा-

दिभ्यः-' इति गोत्रे यञ्। गार्ग्यस्य तृतीयः, स गर्गस्य पञ्चमो युवापत्यम्, तस्मि-न्नवबोधयिषिते गार्ग्यशब्दाद् गोत्रप्रत्ययान्ताद् 'यञिञोश्च' इति फकि गार्ग्यायण इति रूपमिष्यते। तथा षष्ठादिष्वपि युवापत्येषु गार्ग्यायण इत्येवेष्यते। तदिदमपत्य-शब्दः पुत्रपौत्रादिसाधारण इति पक्षे यद्यपि सुलभमेव, गर्गात्तृतीयं गार्ग्यं प्रति पञ्चादीनामप्यपत्यत्वात्। तथापि गर्गस्य पञ्चमाद्यपत्ये यूनि विवक्षिते गर्गान्मूल-प्रकृतेरपि इञ् स्यात्। तथा गर्गस्य अनन्तरापत्ये इञि गार्गिः, तदपत्यत्वेन विवक्षिते गर्गस्य पञ्चमादौ यूनि गार्गेः फकि गार्गायण इत्यपि स्यात्। तथा गर्गस्य चतुर्थे यूनि गोत्रत्वाभावाद् यञभावे इञि गार्गिः। तदपत्यत्वेन विवक्षिते गर्गस्य पञ्चमादौ यूनि गार्गेः फकि गार्गायण इति स्यात्। गोत्रप्रत्ययान्तादेव गार्ग्यशब्दाद् गर्गस्य पञ्च-माद्यपत्ये यूनि फकि गार्ग्यायण इत्येवेष्यते। तदर्थं गोत्रप्रत्ययान्तादेव यूनि प्रत्यय इति नियमः क्रियते—गोत्राद्यूनीति। तदाह—यून्यपत्ये गोत्रप्रत्ययान्तादेवेति। नतु मूलप्रकृतेस्तदनन्तरापत्यप्रत्ययान्ताद् युवप्रत्ययान्ताच्चेनि भावः। नचापत्यशब्दः पुत्र एव रूढ इति पक्षे पञ्चमादौ यूनि चतुर्थाद्यपत्यप्रत्ययान्तादेव प्रत्ययः स्यात्, नतु तृतीयवाचिगोत्रप्रत्ययान्तादिति, तत्र विध्यर्थमेवेदं स्यात्, नतु नियमार्थमिति वाच्यम्, पुत्रपौत्रादिसाधारणोऽपत्यशब्द इत्येव भाष्ये सिद्धान्तितत्वादिति भावः।

नियमाभावे त्रयाणां परम्परा प्रसज्यते। षष्ठे तु चतुर्णामित्यादि। 'ततः प्राचामपि' इति द्वितीयपक्षे तु गर्गाच्चतुर्थे यूनि मूलप्रकृत्यनन्तराभ्यामनिष्टोत्पत्तिः प्रसज्यते। पञ्चमे तु मूलप्रकृत्यनन्तरयुवभ्यः। तथा नडाच्चतुर्थे यूनि पूर्ववद्द्वाभ्यामनिष्टोत्पत्तिः, पञ्चमे तु त्रिभ्यः। उपगोश्चतुर्थे वाच्ये तु मूलप्रकृतेरेकस्मादेवानिष्टोत्पत्तिः। न त्वन-न्तरापत्यवाचकात्। ततो जातेऽप्यत इञि रूपानिष्टाभावादित्यादि यथासंभवं तत्रोह्य-मित्यर्थः। गोत्राद्यूनि। असत्यस्मिन् सूत्रे मुख्यमते पञ्चमादौ यूनि विवक्षिते गोत्रप्रत्ययान्तात् युवप्रत्ययोत्पत्ताविष्टे सिद्धेऽपि मूलप्रकृत्यनन्तरयुवभ्योऽपि स्यादिति पाक्षिकानिष्टे प्राप्ते नियमार्थमिदमित्याशयेनाह—गोत्रप्रत्ययान्तादेवेति। नतु मूलप्रकृत्यनन्तरयुवभ्य इत्यर्थः। मनोरमायां तु युवप्रत्ययान्तादिति प्रथमपक्षेऽर्थ इत्यपि स्थितम्। अत्र वदन्ति—पञ्चमादौ यूनि विवक्षते तस्य पुनस्तृतीयं प्रत्यन-पत्यत्वादप्राप्तौ विध्यर्थमेवेदं स्यात्, नतु नियमार्थमिति युवप्रत्ययान्तात्प्रत्ययो दुर्वारः स्यात्। तस्मादिह 'पितुरेवापत्यम्' इति पक्षो नाश्रयणीय इति। अन्ये त्वाहुः—आद्यपक्षे 'गोत्राद्यूनि-' इत्यावर्त्य एकेनाप्राप्तप्रत्ययं विधाय द्वितीयेन नियम्यते 'यूनि गोत्रादेव' इति। एवं च 'ततः प्राचामपि' इति पक्षेण सहास्यैकरूपता भवतीति। 'गोत्राच्चेद्यून्येव' इति विपरीतनियमस्त्विह न कृतः, व्यावर्त्यालाभात्। नच शैषिका-च्छादयो व्यावर्त्या इति वाच्यम्। 'गोत्रेऽलुगचि' इति लिङ्गात्। स्त्रियां त्विति। यद्यत्र 'अस्त्रियाम्' इत्यस्यैकवाक्यतया 'स्त्रीभिन्ने यूनि गोत्रादेव' इत्यर्थः क्रियते, तर्हि स्त्रीषु युवसंज्ञाया अभिधेधात् युवतिषु प्रत्ययानां परम्परा प्रसज्येत। नच 'एको गोत्रे' इत्यनेन निस्तारः। युवसंज्ञया गोत्रसंज्ञाया बाधात्। अथ 'स्त्रियां न

पत्यं गार्ग्यायणः । स्त्रियां गोत्रत्वादेक एव प्रत्ययः । १०९५ अत इ
(४—१—९५) अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठ्यन्तादिञ्स्याद

---

स्त्रियां तु न युवसंज्ञेति । इह अस्त्रियामिति योगो विभज्यते । यूनि
नुवर्तते । उभयमपि प्रथमया विपरिणम्यते । तथा च स्त्री उक्तयुवसंज्ञिका नेति
तमिति भावः । न च स्त्रीभिन्ने यूनि गोत्रादेवेत्यर्थः कुतो नाश्रीयते, एवं सत्ये
क्यत्वलाभादिति वाच्यम्, पञ्चमादिषु युवतिषु प्रत्ययमालाप्रसङ्गात् । न च
गोत्रे' इति नियमात्तन्निवृत्तिः सम्भवतीति वाच्यम्, युवसंज्ञया गोत्रसंज्ञया बाध
नच सत्यपि योगविभागे स्त्रियां न युवप्रत्यय इति व्याख्यायतामिति वा
गोत्रप्रत्ययेन युवत्यभिधानानापत्तेरित्यलम् । गर्गस्येति । गर्गस्य पञ्चमादि
गार्ग्यशब्दाद् गोत्रे यञन्तात्फकि गार्ग्यायण इति रूपमित्यर्थः । 'स्त्रियां वृ
निषेधस्य प्रयोजनं दर्शयति—स्त्रियामिति । पञ्चमादियुवतीनां युवसंज्ञा
गोत्रत्वाद् 'एको गोत्रे' इति नियमाद्गार्गीत्येव भवति, न तु गार्ग्यायणीति इ
त्यर्थः । स्त्रीभिन्ने यूनि गोत्रादेवेत्यर्थाश्रयणे तु युवसंज्ञया गोत्रसंज्ञाया बाधाद्
गोत्रे' इत्यस्याप्रवृत्तेः प्रत्ययमाला स्यादिति भावः । अत इञ् । प्रातिपदिकाधि
कृतम् अता विशेष्यते, तदन्तविधिः, तदाह—अदन्तं यत्प्रातिपदिकमि
'तस्यापत्यम्' इत्यनुवृत्तं 'समर्थानां प्रथमाद्वा' इति च । ततश्च प्रथमोच्चारित
बोधितात्प्रातिपदिकादिति लब्धम् । सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात् सुबन्त
लभ्यते । सुप्चेहोपस्थितत्वात् षष्ठ्येव विवक्षिता । तथा च षष्ठ्यन्तात्प्रातिपदि
लभ्यते । यद्यपि प्रातिपदिकं न षष्ठ्यन्तम्, प्रत्ययग्रहणपरिभाषया प्रकृति
समुदायस्यैव लाभात् । तथापि प्रातिपदिकप्रकृतिकषष्ठ्यन्तादित्यर्थो विव
तदाह—तत्प्रकृतिकात्षष्ठ्यन्तादिति । दाक्षिरिति । दक्षस्याप
विग्रहः । इञ्, आदिवृद्धिः, 'यस्येति च' इत्यकारलोपः । 'प्रदीयतां दाश
मैथिली' इति त्वार्षमिति 'तस्यापत्यम्' इत्यत्र निरूपितम् । प्रातिपदिकग्रहणान
तु अदन्तात्षष्ठ्यन्तादिति लभ्येत । तथा च दक्षयोरपत्यं दाक्षिरिति न सि

---

युवप्रत्ययः' इति वाक्याभेदेनार्थः क्रियते, तदा गोत्रप्रत्ययेन युवतिर्नाभिधीयेत
तु वाक्यमेव स्यात् । ततश्च गार्ग्यस्यापत्यं स्त्री गार्गी न स्यात् । अतो 'युवसंज्ञा वि
परमेवेदम्' इत्याशयेन व्याचष्टे—न युवसंज्ञेति । अत्रायमाशयः—'अस्त्रि
इति योगो विभज्यते । 'यूनि' इति शब्दस्वरूपमनुवर्तते । परिभाषा चेयम्
युवसंज्ञाविधानं तत्र 'अस्त्रियाम्' इत्युपतिष्ठत इति सिद्धस्य गतिरियम् । 'जीवति
वंश्ये युवाऽस्त्रियाम्' इत्येव सूत्रयितुं युक्तम् । अत इञ् । 'घकालतनेषु—' इति
कात्सुबन्तादेव तद्धितोत्पत्तिरित्यभ्युपगमेऽप्यधिकृतप्रातिपदिकस्य न वैयर्थ्यम्
प्रयोजनमस्तीति ध्वनयति—अदन्तं यत्प्रातिपदिकमिति । अत
सुबन्तविशेषणत्वे तु दक्षयोरपत्यमित्यादिविवक्षायां दाक्षिरित्यादि न सिद्ध्येदिति
तपरः किम्, विश्वपः अपत्यं वैश्वपः । 'प्रदीयतां दाशरथाय—' इत्यत्र तु

---

१ 'स्त्रियो' इति क्वचित् ।

दाक्षिः । १०९६ बाह्वादिभ्यश्च । (४-१-९६) वाहविः । औडुलोमिः । आकृतिगणोऽयम् । १०९७ सुधातुरकङ् च । (४-१-९७) चादिञ् । सुधातुरपत्यं सौधातकिः । 'व्यासवरुडनिषादचण्डालविम्बानां[1] चेति वक्तव्यम्' (वा २६११) । १०९८ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ।

---

भावः । बाह्वादिभ्यश्च । अपत्य इञिति शेषः । बाहविरिति । बाहुर्नाम कश्चिदृषिः, अथ 'ऋषयः' इत्यविकृत्य 'वाहविर्गार्ग्यगौतमौ' इत्याश्वलायनसूत्रे दर्शनात् । बाहोरत्यमिति विग्रहः । इञि, ओर्गुणः । औडुलोमिरिति । उडुलोम्नोऽपत्यमिति विग्रहः । इति 'नस्तद्धिते' इति टिलोपः । आदिवृद्धिः, अदन्तत्वाभावादप्राप्तिः । सुधातुरकङ् च । चादिञिति । सुधातृशब्दात्षष्ठ्यन्तादपत्येऽर्थे इञ्प्रत्ययः प्रकृतेरकङादेशश्चेत्यर्थः । अकङो ङकार इत्, अकार उच्चारणार्थः । ङिच्चेत्यन्तादेशः, तदाह—सौधातकिरिति । व्यासेति । व्यास, वरुड, निषाद, चण्डाल, विम्ब एभ्यश्च इञि प्रकृतेरकङादेश इत्यर्थः । न य्वाभ्याम् । य् च वश्च य्वाविति

---

इत्यण् । अपत्यत्वविवक्षायां त्विञेव । बाह्वादिभ्यश्च । 'वाधृ लोडने' इति धातौ केवलस्य वाहोरपत्ययोगासम्भवात्सामर्थ्यात्तदन्तविधौ सौवाहविः' इति माधवोक्तं चिन्त्यमिति ध्वनयन्नाह—बाहविरिति । 'जानन्ति वाहविर्गार्ग्यगौतम–' इत्याश्वलायनसूत्रप्रयोगाद्भाष्यवृत्त्याद्युदाहरणाच्च वाहुशब्दः संज्ञारूपोऽस्तीति भावः । औडुलोमिरिति । यद्यपि गणे वाहु कृष्ण युधिष्ठिर अर्जुन प्रद्युम्नेत्यादिषु केवलो लोमन्शब्दः पठितः, तथापि सामर्थ्यात्तदन्तग्रहणम् । 'तारकाप्युडु वा स्त्रियाम्' इत्यमरोक्त्या नक्षत्रवाच्युडुशब्दः । उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः । शरा इव लोमानि यस्य तस्यापत्यं शारलोमिः । वहुत्वे तु इञपवादोऽकारः प्रागेवाजन्तेषूक्तः । उडुलोमाः । शरलोमाः । इह प्रतिपदविधानेषु पुराणसिद्धाः संज्ञाशब्दा एव गृह्यन्ते, शीघ्रोपस्थितिकत्वात् । तेन इदानींतनो यो वाहुस्तस्यापत्ये वाहव इत्यणेव, न त्विञ् । उक्तं च हरिणा–'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥' अनर्थकं संदिग्धार्थकमप्रयुक्तं च क्रमेण विशेषणत्रयव्यावर्त्यम् । तदुक्तिषु—तत्सदृशेष्वित्यर्थः । अत एव संज्ञा श्वसुरस्यापत्यं श्वाशुरिरित्यत्र 'राजश्वशुरात्–' इति यन्न । मिमीते माता, तस्याः स्वसा मातृस्वसा । इह 'मातृपितृभ्यां स्वसा' इति षत्वं न । नन्वेवं वाहवः श्वाशुरिरिति पूर्वोक्तौ न सिध्यत इति चेत् । मैवम्, अणिञोर्विधौ शब्दविशेषानुपादानादप्रतिषिद्धेष्वपि तत्प्रवृत्तेः । व्यासेति । वेदान् व्यस्यतीति वेदव्यासः, 'कर्मण्यण्' भीमो भीमसेन इतिवदेकदेशग्रहणम् । न य्वाभ्याम् । य्वाभ्याम् किम् । न अर्थो यस्य नार्थः, तस्यापत्यं नार्थिः । पदान्ताभ्यां किम्, याज्ञिकः । ऐचो विषयप्रदर्शनाय नेति निषेधोक्तिः । तेनेह न—दाध्यश्विमध्विश्विः । न ह्यत्र य्वाभ्यां परस्य वृद्धिप्रसक्तिरस्ति । क्वचित्तु वृद्धिप्रसक्तिसत्त्वेऽपि नेष्यते । द्वे अशीती भृतो भूतो भावी वा

---

1 'चाण्डाल' इति क्वचित्पाठः ।

(७-३-३) पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः । किं तु ता
पूर्वौ क्रमादैचावागमौ स्तः । वैयासकिः । वारुडकिरित्यादि । १०९९
कुञ्जादिभ्यश्च्फञ् । (४-१-९८) ११०० व्रातच्फञोरस्त्रियाम्
(५-३-११३) व्रातवाचिभ्यः च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यात्, न तु स्त्रि
कौञ्जायन्यः । बहुत्वे तद्राजत्वाल्लुग्वक्ष्यते । व्राध्नायन्यः । स्त्रियां कौञ्जाय

---

विग्रहः । वकारादकार उच्चारणार्थः । तदाह—यकारवकाराभ्यामिति । प
रत्यध्याहारलभ्यम् । न वृद्धिरिति । मृजेर्वृद्धिरित्यतस्तदनुवृत्तेरिति भावः । तु
विशेषप्रदर्शनार्थ इत्याह—किन्त्विति । ताभ्यामिति । यकारवकाराभ्यामिति
पूर्वाविति । पूर्वावयवावित्यर्थः । तेन आगमत्वं लभ्यते । तदाह—ऐचावागमा
ऐच् प्रत्याहारः । यथासंख्यं यकारात्पूर्व ऐकारः, वकारात्पूर्वं औकारः । वैयास
रिति । वेदान्व्यस्यति विविधमस्यति शाखाभेदेन विभजतीति वेदव्यासः, कर्म
अत्र नामैकदेशग्रहणम् । व्यासस्यापत्यमिति विग्रहः । इञ्प्रत्ययः प्रकृतेरकङ्
अत्र यकारः पदान्तः । तस्मात्परस्य आकारस्य पर्जन्यवल्लक्षणप्रवृत्त्या आदि
प्राप्ता न भवति । किंतु यकारात्पूर्वं ऐकार आगमः, वैयासकिरिति रूपम् । स
स्यापत्यं सौवश्विरित्यत्र वकारात्परस्य न वृद्धिः, ततः पूर्वं औकारः । नन
वृद्ध्यपवादत्वादेव वृद्ध्यभावसिद्धेस्तन्निषेधो व्यर्थ इति वाच्यम्, यत्र य्वाभ्यां
प्रसक्ताया वृद्धेः निषेधः तत्रैव ऐजागमाविति विषयानिर्देशार्थत्वात् । तेन दाम
रित्यादौ न । वृद्धिनिषेधोऽयं येन नाप्राप्तिन्यायेन आदिवृद्धेरेव । तेन द्व
भृतो द्व्याशीतिक इत्यत्र 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिर्भव
वरुडादयो जातिविशेषाः । वारुडकिः, नैषादकिः, चाण्डालकिः, बैम्बकिः ।
कुञ्ज । स्पष्टम् । इञोऽपवादः । च्फञि चञाविती । व्रातच्फञोः । व्रातस्य
इति द्वन्द्वाद्व्यत्ययेन पञ्चम्यर्थे षष्ठी । तदाह—व्रातवाचिभ्य इति । स्वार्थे
स्यादिति । 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' इत्यतो ञ्य इत्यनुवर्तते । स च स्वा
'ञ्यादयः प्राग्वुनः' इति स्वार्थिकेषु परिगणनादिति भावः । कौञ्जायन्य
कुञ्जस्य गोत्रापत्यमिति विग्रहः । च्फञि चञाविती आयन्नादेशः, आदिवृ
ञ्यः, यकार इत्, 'यस्येति च' इत्यकारलोपः । तद्राजत्वाविति । ञ्य

---

द्व्याशीतिकः । वारुडकिरिति । वरुडादयो जातिविशेषाः । वकारस्यापदा
'न य्वाभ्याम्—' इत्यैज् न । इत्याबीति । नैषादकिः, चाण्डालकिः, बैम्ब
गोत्रे कुञ्जा । इतः प्राक् 'एको गोत्रे' इत्यादि सूत्रद्वयं चेत्पठ्यते तर्ह्यत्रत्यं गो
त्यक्तुं शक्यमित्याहुः । च्फञो ञकारो वृद्ध्यर्थः । कौञ्जायन्यः । चकारस्तु व्रात
इत्यत्र विशेषणार्थः । तेन 'अश्वादिभ्यः फञ्' आश्वायन इत्यत्र ञ्यो न
अत्रेदमवधेयम्—कौञ्जायन्य इत्यादावेकवचने च ञ्यस्य ञित्त्वादाद्युदात्त
बहुत्वे तु ञ्यस्य लुकि च्फञश्चकारयोस्तुल्यबलयोर्विरोधे सति
ञित्स्वरेणाद्युदात्तत्वे प्राप्ते भाष्यादौ 'तद्धितस्य कितः' इत्यत्र योगं विभज्य 'कौञ्
इत्यनुवर्त्य 'तद्धितस्य चितोऽन्तोदात्तत्वम्' इति व्याख्यानात्

गोत्रत्वेन जातित्वान्ङीष् । अनन्तरापत्ये कौञ्जिः । ११०१ नडादिभ्यः फक् । (४-१-९९) गोत्र इत्येव । नाडायनः । चारायणः । अनन्तरो नाडिः । ११०२ हरितादिभ्योऽञः । (४-१-१००) एभ्योऽञन्तेभ्यो यूनि फक् । हारितायनः । इह गोत्राधिकारेऽपि सामार्थ्याद्यून्ययम् । न हि गोत्रादपरो गोत्रप्रत्ययः । विदाद्यन्तर्गणो हरितादिः । ११०३ यञिञोश्च । (४-१-१०१) गोत्रे यौ यञिञौ तदन्तात्फक्स्यात् । 'अनाति' इत्युक्तेः 'आपत्यस्य—' (सू १०८२) इति यलोपो न । गार्ग्यायणः । दाक्षायणः । ११०४ शरद्वच्छुनकदर्भाद्-

---

स्तद्राजाः' इति वचनादिति भावः । लुग्वक्ष्यत इति । 'तद्राजस्य बहुषु–' इत्यनेनेति शेषः । व्राध्नायन्य इति । व्रध्नस्य गोत्रापत्यमिति विग्रहः । चफञादि पूर्ववत् । ञ्यविधावस्त्रियामित्यस्य प्रयोजनमाह—स्त्रियां कौञ्जायनीति । कुञ्जस्यापत्यं स्त्री इति विग्रहः । स्त्रीत्वादिह न ञ्यप्रत्यय इति भावः । अदन्तत्वादिह टापमाशङ्क्याह—गोत्रत्वेनेति । कृतं तु ञ्यप्रत्यये योपधत्वाज्जातिलक्षणङीषभावे टाप् स्यादिति भावः । चफञ्विधौ गोत्रग्रहणस्य प्रयोजनमाह—अनन्तरापत्ये कौञ्जिरिति । नडादिभ्यः फक् । इञोऽपवादः । अनन्तरो नाडिरिति । अनन्तरापत्यस्य गोत्रत्वाभात् फगभावे इञेवेत्यर्थः । 'हरितादिभ्योऽञः' इत्यादि स्पष्टम् यञिञोश्च । गोत्रे इत्यधिकृतं यञिञोर्विशेषणम्, नतु विधेयस्य फकः, व्याख्यानात् । तदाह—गोत्रे यौ यञिञाविति । सामर्थ्याद्यून्ययम् । न हि गोत्रप्रत्ययाद् गोत्रप्रत्ययोऽस्ति, 'एको गोत्रे' इति नियमात् । अनातीति । गर्गस्य गोत्रं गार्ग्यः । गर्गादित्वाद्यञ् । गार्ग्यस्यापत्यं युवेत्यर्थे यञन्तात् फकि आयन्नादेशे अनातीति पर्युदासाद् 'आपत्यस्य च–' इति यलोपाभावे णत्वे गार्ग्यायण इति रूपमित्यर्थः । दाक्षायण इति । दक्षस्य गोत्रापत्यं दाक्षिः, अत इञ्, दाक्षेरपत्यं युवा दाक्षायणः, इञन्तात्फक् । गोत्रे किम् ? सुतङ्गमस्यादूरभव इत्यर्थे 'सुतङ्गमादिभ्य इञ्' इति इञि सौतङ्गमेरपत्ये न फक् । शरद्वच्छुनक । शेषपूरणेन सूत्रं

---

इत्यत्रान्तोदात्ततैव भवति । न चैवं हि फगेवात्रास्तु किमनेन गुरुनिर्देशेनेति वाच्यम्, तथा हि सति 'व्राच्फञोरस्त्रियाम्' इति सूत्रप्रणयनापत्त्या नाडायनादिभ्योऽपि ञ्यः स्यादिति । कुञ्ज, व्रध्न, शङ्ख, शकटेत्यादि । व्रातचफञो । 'पूगाञ्ञ्योऽग्रामणी–' इत्यतोऽनुवर्तनादाह—ञ्यः स्यादिति । व्रातवाचिभ्यः 'कापोतपाक्यः' इत्युदाहरिष्यति । अस्त्रियां किम्, कपोतपाका स्त्री । तद्राजत्वादिति । 'ञ्यादयस्तद्राजाः' इति सूत्रेणेति शेषः । लुग्वक्ष्यत इति । 'तद्राजस्य बहुषु–' इत्यनेनेति शेषः । कौञ्जायनीति । इह सति ञ्यप्रत्यये योपधत्वाद् 'जातेः' इति ङीषभावे टापि रूपे स्वरे च विशेषो बोध्य इत्याहुः । यञिञोश्च । अधिकारप्राप्ते गोत्रग्रहणं यञिञोर्विशेषणं न तु विधेयस्य फकः व्याख्यानात्तदेतदाह—गोत्रे याविति । गोत्र किम्, 'द्वीपादनुसमुद्रं यञ्' द्वीपे भवो द्वैप्यः । सुतंगमादिभ्यश्चातुर्थिक इञ् । सौतंगमिः । तदपत्ये फक् मा भूत् । फक् स्यादिति । सामर्थ्याद्यून्ययम् । शरद्वच्छुनक । भृगुः शरद्वतोऽपत्यं न भवति, पूर्वभावित्वात् । एवं शुनकस्यापत्यं

भृगुवत्साग्रायणेषु । (४-१-१०२) गोत्रे फक् । अञिञोरपवादः । आद्यौ बिदा… शारद्वतायनो भार्गवश्चेत्, शारद्वतोऽन्यः । शौनकायनो वात्स्यश्चेत्, शौन… न्यः । दार्भायण आग्रायणश्चेत्, दार्भिरन्यः । ११०५ द्रोणपर्वतजीव… दन्यतरस्याम् । (४-१-१०३) एभ्यो गोत्रे फग्वा । द्रोणायनः, द्रौणि… पार्वतायनः, पार्वतिः । जैवन्तायनः, जैवन्तिः, अनादिरिह द्रोणः । अश्वत्था… नन्तरे तूपचारात् । ११०६ अनृष्यानन्तर्ये बिदादिभ्योऽञ् । (४-१-१०…) एभ्योऽञ् गोत्रे, ये त्वत्रानृषयः पुत्रादयस्तेभ्य 'अनन्तरे'। सूत्रे स्वार्थे ष्यञ् । बि… गोत्रापत्यं बैदः । अनन्तरो बदिः, बाह्वादेराकृतिगणत्वादिञ् । पुत्रस्यापत्यं पौ…

---

व्याचष्टे—गोत्रे फगिति । आद्यौ बिदादी इति । शरद्वच्छुनकशब्दौ बिदा… अतस्तदुभयविषये अञपवाद इत्यर्थः । दर्भविषये त्विञोऽपवाद इति स्पष्ट… दर्भः कश्चिदृषिः । ऋष्यणं बाधित्वा बाह्वादित्वादिञ् । आग्रायणश्चेति । आ… नाम कश्चिदृषिः । नडादिफगन्तोऽयम् । द्रोणपर्वत । अनादिरिति । अश्वत्था… पिता यो महाभारते कलेरादौ प्रसिद्धः, तदपेक्षया अन्य एवायं अनादिर्द्रोण इत्य… अश्वत्थाम्नीति । द्रोणाचार्यस्यानन्तरापत्ये अश्वत्थाम्नि द्रौणायन इति … इत्यर्थः । तदिदं 'बाह्वादिभ्यश्च' इति सूत्रे भाष्ये स्पष्टम् । अनृष्यान… अनृषि इति लुप्तपञ्चमीकम् । बिदादिभ्योऽञ् इति द्विरावर्तते । तथा च 'अनृष्यान… बिदादिभ्योऽञ्' इति कृत्स्नमेकं वाक्यम् । 'बिदादिभ्योऽञ् इति वाक्यान्तरम्। … द्वितीयं वाक्यं व्याचष्टे—एभ्योऽञ् गोत्र इति । गोत्रे विवक्षिते बिदा… अञ् स्यादित्यर्थः । अत्र प्रथमं वाक्यं कृत्स्नसूत्रं व्याचष्टे—ये त्वि… अनृषिभ्यो बिदादिभ्यः अनन्तरापत्ये अञ् स्यादित्यक्षरार्थः । बि… हि ऋषयः अनृषयश्च पठिताः । तत्र ये अनृषयः तेभ्योऽनन्तरापत्ये अ… फलितमिति भावः । ननु आनन्तर्ये इति श्रवणादनन्तर इति कथ… आह—सूत्रे स्वार्थे ष्यञिति । अनन्तरशब्दादिति शेषः । चतुर्वर्णादित्वा… भावः । बिदस्य गोत्रापत्यं बैद इति । बिदस्य ऋषित्वात्तो…

---

न भवति वत्सः । अतोऽत्र भार्गवश्च वात्स्यश्चाग्रायणश्चेति द्वन्द्वे 'अत्रिभृगु-' … 'यञिञोश्च' इति च यथासम्भवं लुग् बोध्यः । यद्यप्यत्र बहुत्वाभावाद् 'अत्रि… इत्यादिना लुग् दुर्लभः, तथापि युगपदधिकरणवचनतायां वर्तिपदानां बहुर्थत्वा… त्वाद्वा स्यादेव लुक् । अतो व्याचष्टे—भार्गवश्चेदिति । वात्स्यश्चेदिति … अनादिरिति । अश्वत्थाम्नः पिता यो महाभारते प्रसिद्धः, तदपेक्षयाऽन्य … द्रोण इत्यर्थः । अश्वत्थाम्नीत्यादि । द्रोणाचार्यस्यानन्तरापत्ये अश्वत्थाम्नि द्रौ… इति प्रयोगो भाक्त इत्यर्थः । अनृष्या । 'अनृषि' इति पञ्चम्याः सौत्रो … अनृषिभ्य इत्यर्थः । सूत्र इति । [1]आनन्तर्य इत्यत्रेत्यर्थः । स्वार्थं … चातुर्वर्ण्यादेराकृतिगणत्वादिति भावः । बैदिरित्यत्र ऋष्यणमाशङ्क्याह—… रिति । बिद, उर्व, कश्यप, कुशिक, भरद्वाज, उपमन्यु, विश्वानर, 'परस्त्री प…

---

१ 'आनन्तर्य'. इति क्वचित्पाठः ।

दौहित्रः । ११०७ गर्गादिभ्यो यञ् । ( ४-१-१०५ ) गोत्र इत्येव । गार्ग्यः । वात्स्यः । ११०८ यञञोश्च । ( २-४-६४ ) गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक्स्यात्तत्कृते बहुत्वे, न तु स्त्रियाम् । गर्गाः । वत्साः । विदाः । उर्वाः । तत्कृते इति किम्—प्रियगार्ग्याः । स्त्रियां तु गार्ग्यः स्त्रियः । गोत्रे किम्—द्वैप्याः, औत्साः । प्रवराध्यायप्रसिद्धमिह गोत्रम्, तेनेह न—पौत्राः,

एवान्निति भावः । ऋष्यणोऽपवादः । स्वरे विशेषः । ननु अनन्तरापत्ये अञ-भाव इञपवाद ऋष्यणेवोचित इति कथमनन्तरो बैदिरित्यत आह—बाह्वा-देरिति । विदादिगणस्थादनृषेरनन्तरापत्ये अञमुदाहरति—पौत्रः । दौहित्र इति । पुत्रस्यानन्तरापत्यमिति दुहितुरनन्तरापत्यमिति च विग्रहः । यथायथम-णिञोरपवादः अञ् । गर्गादिभ्यो यञ् । गार्ग्यः । वात्स्य इति । गर्गस्य गोत्रापत्यमिति वत्सस्य गोत्रापत्यमिति च विग्रहः । रामो जामदग्न्यः, पाराशर्यो व्यास इत्यादौ तु अनन्तरापत्ये गोत्रत्वारोपाद्यञित्याहुः । यञञोश्च । द्वितीयचतुर्थ-पादे इदं सूत्रम् । न त्विदं चातुर्थिकमपत्याधिकारस्थम् । तत्र प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति सूत्रं तद्राजस्येतिवर्जमनुवर्तते । 'ण्यक्षत्रिय–' इत्यतो 'लुक्' इति 'यस्कादिभ्यो गोत्रे' इत्यतो गोत्रे इति च। तदाह—गोत्रे यदिति । एतयोरिति । यञञोरित्यर्थः । प्रत्ययादर्शनस्यैव लुक्त्वादिति भावः । तत्कृत इति । यञञ्प्रत्ययार्थगतबहुत्वे इति यावत् । गर्गा इति । गर्ग-स्यापत्यानीत्यादिविग्रहः । प्रियगार्ग्या इति । प्रियो गार्ग्यो येषामिति विग्रहः । अत्र यञर्थगतबहुत्वाभावान्न लुगिति भावः । द्वैप्या इति । द्वीपे भवा इत्यर्थः । 'द्वीपादनुसमुद्रम्–' इति यञ् । औत्सा इति । उत्से भवा इत्यर्थः । 'उत्सादि-भ्योऽञ्' इहोभयत्रापि यञञोर्गोत्रवाचित्वाभावान्न लुगिति भावः । ननु पौत्रा दौहित्रा इत्यत्राप्यनृषिविदादिलक्षणाञो लुक् स्यात् । नच तस्यानन्तरापत्यवाचित्वा-द्गोत्रवाचित्वाभावान्न लुगिति वाच्यम्, 'यूनि लुक्' इति सूत्रभाष्ये अपत्याधिकारा दन्यत्र लौकिकमेव गोत्रं गृह्यते इति सिद्धान्तितत्वादित्यत आह—प्रवरेति । 'कश्य-

इत्यादि । गर्गादिभ्यो । गर्ग, वत्स, व्याघ्रपाद्, पुलस्ति, बभ्रु, मण्डु, वतण्ड, कपि, कत, शकल, कण्व, अगस्ति, 'कुण्डिन, याज्ञवल्क, पराशर, जमदग्नि इत्यादि । कथं तर्हि 'रामो जामदग्न्यः' इति । अनन्तरापत्ये ह्ययम् । सत्यम् । अनन्तरेऽपि गोत्रत्वारोपाद्बोध्यः । यञञोश्च । 'ण्यक्षत्रियार्ष–' इत्यतो लुगिति, 'तद्राजस्य–' इति सूत्राद्बहुषु तैनेवास्त्रियामिति चानुवर्तते, 'यस्कादिभ्यो गोत्रे' इत्यतो गोत्र इति च तदाह—गोत्रे यद्यञन्तमित्यादि । प्रवराध्यायप्रसिद्धगोत्रवाचिनौ केवलौ यञञौ न भवत इति 'गोत्र' इत्यनेन तदन्तं विशेषितम् । तदवयवयोरिति । 'निर्दिश्यमानस्यादेशा भवन्ति' इति भावः । प्रवराध्यायेति । एतच्च 'स्त्रीपुंसा-भ्याम्–' इति सूत्रे 'लौकिकस्य गोत्रस्य ग्रहणम्' इति भाष्यमुपादाय कैयटेनोक्तमिति भावः । तेनेह नेति । यद्यलौकिकं गोत्रमपत्यमात्रं गृह्येत, तदास्यादेवातिप्रसङ्ग

१ क्वचित् 'कुण्डिनी' इति पाठः । गणपाठे तु 'कण्डिनी' इति लभ्यते ।

दौहित्राः । ११०९ मधुबभ्र्वोर्ब्राह्मणकौशिकयोः । ( ४-१-१०६ ) यञ् । माधव्यो ब्राह्मणः, माधवोऽन्यः । बाभ्रव्यः कौशिकर्षिः, बाभ्रवः। बभ्रुशब्दस्य गर्गादिपाठात्सिद्धेऽपि नियमार्थमिदम् । गर्गादिपाठफलं तु लोहिता- दिकार्यम् । बाभ्रव्यायणी । १११० कपिबोधादाङ्गिरसे । ( ४-१-१०७ ) गोत्रे यञ्स्यात् । काप्यः । बौध्यः । आङ्गिरसे किम्—कापेयः । बौधिः । ११११ वतण्डाच्च । (४-१-१०८) आङ्गिरस इत्येव । वातण्ड्यः । अनाङ्गिरसे तु गर्गादौ शिवादौ च पाठाद्यञणौ । वातड्यः, वातण्डः । १११२ लुक् स्त्रियाम् । (४-१-१०९) 'वतण्डाच्च' (सू ११११) इति विहितस्य लुक्स्यात्स्त्रियाम् । शार्ङ्गरवादित्वान्ङीन् । वतण्डी । अनाङ्गिरसे तु वातण्ड्यायनी । लोहितादित्वात्ष्फः ।

---

पोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः॥ 'तेषां यदपत्यं तद्गोत्रमित्याचक्षते' इति बोधायनीयादिप्रवराध्यायप्रसिद्धा भा... एवेह गोत्रत्वेन विवक्षिता इत्यर्थः । कैयटेन लौकिकस्य गोत्रस्य ग्रहणमिति... मुपादाय तथैव व्याख्यातत्वादिति भावः । एवं च पौत्रा दौहित्रा इत्यादौ पौत्रदौ... तथाविधगोत्रवाचित्वाभावान्न लुगिति स्थितम् । विस्तरस्तु शब्देन्दुशेखरे... मधुबभ्र्वोर्ब्राह्मणकौशिकयोः । शेषपूरणेन सूत्रं व्याचष्टे—गोत्रे यञि... मधुशब्दाद्बभ्रुशब्दाच्च गोत्रापत्ये यञ् स्याद् ब्राह्मणे कौशिके च यथासंख्य... इत्यर्थः । लोहितादिकार्यमिति । ष्फ इत्यर्थः । लोहितादिर्गर्गाद्यन्तर्गण... भावः । बाभ्रव्यायणीति । बभ्रोर्गोत्रापत्यं स्त्रीति विग्रहः । गर्गादियञ... शब्दात् 'सर्वत्र लोहितादिकतन्तेभ्यः' इति ष्फः । आयन्नादेशः, षित्वाद्... भावः । कपिबोधादाङ्गिरसे । गोत्रे यञ् स्यादिति । शेषपूरणं... कपिशब्दाद्बोधशब्दाच्च आङ्गिरसात्मके गोत्रे गम्ये यञ् स्यादित्यर्थः । कापेय... अत्र गोत्रस्य अनाङ्गिरसत्वाद् यञभावे 'इतश्चानिञः' इति ढक् । बौधि... अत्राप्यनाङ्गिरसत्वाद् यञभावे ऋष्यणं बाधित्वा बाह्वादित्वादिञिति भावः । क... पाठेऽपि आङ्गिरस एवेति नियमार्थं ग्रहणम् । तस्य गर्गादौ पाठस्तु लोहितादि... काप्यायनी । बोधशब्दात्तु अप्राप्ते विधिः । वतण्डाच्च । वतण्डस्य गर्गादौ... च पाठाद् यञणोः प्राप्तयोराङ्गिरसे यञेवेति नियमार्थमिदम् । लुक् स्त्रि...

---

इति भावः । लोहितादीति । 'सर्वत्र लोहितादि–' इत्यादिना ष्फः । ष्फे... स्त्रीत्वे षित्वसामर्थ्याद् ङीषित्याशयेनाह—बाभ्रव्यायणीति । गर्गादिग... 'बभ्रुः कौशिके' इति पाठ्यम् । एवं हि द्विर्बभ्रुग्रहणं न कर्तव्यं भवतीति हरदत्त... कापेय इति । 'इतश्चानिञः' इति ढक् । कपेर्गर्गादिगणपाठो लोहितादिका... तेन काप्यायनीति सिध्यति । बौधिरिति । अनृषित्वादिञ् बाह्वादित्वाद्वा... ण्डाच्च । यञणोः प्राप्तयोराङ्गिरसे यञेवेति नियमार्थं सूत्रम् । लुक् स्त्रि... विहितस्येति । 'परिशेषितस्य वा' इति बोध्यम् । एतच्च 'आङ्गिरसे' इत्य... लभ्यते । यद्यपि 'वतण्डाल्लुक् स्त्रियाम्' इत्येकसूत्रकरणेऽपि 'आङ्गिरसे' इत्य... अनाङ्गिरसे यञणोर्लुगभावात् स्त्रियामिष्टं सिद्ध्यति, तथापि पुंस्याङ्गिरसे यञ...

अणि तु वातण्डी । ऋषित्वाद्वक्ष्यमाणः ष्यङ् न । १११३ अश्वादिभ्यः फञ् । (४-१-११०) गोत्रे । आश्वायनः । 'पुंसि जाते' (ग सू ६) पुंसीति तु प्रकृतिविशेषणम् । जातस्य गोत्रापत्यं जातायनः । पुंसि इति किम्—जाताया अपत्यं जातेयः । १११४ भर्गात्त्रैगर्ते । (४-१-१११) गोत्रे फञ् । भार्गायणस्त्रैगर्तः, भार्गिरन्यः । १११५ शिवादिभ्योऽण् । (४-१-११२) गोत्रे इति निवृत्तम् । शिवस्यापत्यं शैवः । गाङ्गः । पक्षे तिकादित्वात्फिञ् ।

---

वतण्डाच्चेति विहितस्येति । यञ इति शेषः । वतण्डीति । वतण्डस्य गोत्रापत्यं स्त्री आङ्गिरसीति विग्रहः । यञो लुकि आदिवृद्धिनिवृत्तौ ङीनिति भावः । वातण्ड्यायनीति । यञि आदिवृद्धौ लोहितादिलक्षणः ष्फः, षित्वाद् ङीषिति भावः । 'वतण्डाच्च' इति विहितस्येत्यस्य प्रयोजनमाह—अणि तु वातण्डीति । शिवादित्वादिणि गोत्रत्वेन जातित्वाज्जातिलक्षणे ङीषि तस्याणो वतण्डाद्विहितत्वेऽपि 'वतण्डाच्च' इति विहितत्वाभावान्न लुगिति भावः । ननु वतण्डादणि तस्य 'अणिञोरनार्षयोः—' इति वक्ष्यमाणः ष्यङ् स्यादित्यत आह—ऋषित्वादिति । अश्वादिभ्यः । गोत्र इति । शेषपूरणमिदम् । आङ्गिरसे इति निवृत्तम् । आश्वायन इति । अश्वस्य गोत्रापत्यमिति विग्रहः । इञपवादः फञ् । पुंसि जात इति । गणसूत्रम् । प्रकृतिविशेषणमिति । पुंसि विद्यमानो यो जातशब्दः तस्माद्गोत्रे फञित्यर्थः । जातेय इति । स्त्रीभ्यो ढक्' । भर्गात्त्रैगर्ते । इदमपि गणसूत्रम् । त्रिगर्तो नाम भर्गस्य पुत्रः । तस्यापत्यं त्रैगर्तः । ऋष्यण् । तस्मिन्गोत्रे भर्गात् फञ् । शिवादिभ्योऽण् । निवृत्तमिति । वृत्तिकैयटयोस्तथोक्तत्वादिति भावः । 'यूनि लुक्' इति सूत्रस्य भाष्यकैयटयोस्तु गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकार इति लभ्यते । तत्तु मतान्तरमित्येके । तदेव युक्तमिति शब्देन्दुशेखरे प्रपञ्चितम् ।

---

प्राप्तिरनिष्टेति तद्वारणाय पृथक् सूत्रं कृतम् । ऋषित्वादिति । न चैवं 'ऋष्यन्धक—' इत्यणि सिद्धे शिवादिगणे वतण्डपाठो व्यर्थ इति शङ्क्यम् । गर्गादिपाठेन यञा बाधात्तन्निवृत्तये तत्पाठस्यावश्यकत्वात् । ष्यङ् नेति । 'अणिञोरनर्षयोः—' इति सूत्रेणेति भावः । अश्वादिभ्यः । गोत्र इति । इह गणे बैल्य, आनडुह्य, आत्रेय, इति गोत्रप्रत्ययान्तास्त्रयः पठ्यन्ते, तेभ्यस्तु यून्येव । 'एको गोत्रे' 'गोत्राद्यूनि—' इति वचनात् । तत्र विलिर्नाम राजर्षिस्ततो 'वृद्धेत्कोसला—' इति ञ्यङ् । आनडुह्य-शब्दो गर्गादियञन्तः । आत्रेयशब्दो ढगन्त इति ज्ञेयः । पुंसि जात इति । गणसूत्रमिदम् । जातशब्दे पुंसि विद्यमाने फञ् इत्यर्थः । कस्मादित्याकाङ्क्षाया-मर्थाज्जातशब्दादिति लभ्यते । जाताया इति । लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तिः । शिवादिभ्योऽण् । ननु विशेषविहितानिञादीन् बाधित्वा अणेवारम्भसामर्थ्याद्भविष्यति किमनेनाणग्रहणेन । अत्राहुः—ऋष्टिषेण-शब्दोऽत्र गणे पठ्यते, ततः प्राप्तमिञं बाधित्वा परत्वात् 'सेनान्तलक्षण—' इति ण्ये प्राप्ते इह पाठसामर्थ्याद्यथाप्राप्तप्रत्यय इञेव स्यान्न त्वण् । तथा चात्राणग्रहणमावश्यक-मित्येके । अणधिकारादणेव स्यान्नान्य इत्यणग्रहणं स्पष्टप्रतिपत्त्यर्थमित्यन्ये । शिव,

गाङ्गायनिः । शुभ्रादित्वाड्ढक्, गाङ्गेयः । ११९६ अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः । (४-१-११३) अवृद्धेभ्यो नदीमानुषीनामभ्योऽपत्ये ढकोऽपवादः । यामुनः । नार्मदः । चिन्तिताया अपत्यं चैन्तितः । अवृद्धे किम्—वासवदत्तेयः । नदीत्यादि किम्—वैनतेयः । तन्नामिकाभ्यः किम्—शोभनाया अपत्यं शौभनेयः । ११९७ ऋष्यन्धकवृष्णिकुरुभ्यश्च । (४-१-११४) ऋषयो मन्त्रद्रष्टारः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः—श्वाफल्क...

---

अवृद्धाभ्यो नदी । नदीमानुषीशब्दापेक्षमवृद्धाभ्य इति स्त्रीत्वम् । वस्तुतः अवृद्धेभ्यो नदीमानुषीनामभ्य इत्येव सूत्रयितुमुचितमिति व्याचष्टे—अवृद्धेभ्य इत्यादि । ननु 'तस्यापत्यम्' इत्येव सिद्धे किमर्थमिदमित्यत आह—ढकोऽपवाद इति । चिन्तिता नाम काचिन्मानुषी । वासवदत्तेय इति । वासवदत्ता नाम काचिन्मनुष्यस्त्री, तस्या अपत्यमिति विग्रहः । वृद्धसंज्ञकत्वादणभावे ढगिति भावः । वैनतेय इति । विनताया अपत्यमिति विग्रहः । विनता नाम गरुडमाता, न मानुषी, नापि नदीति भावः । शौभनेय इति । शोभनाशब्दोऽयं न नदीमानुषीनामेति भावः । ऋष्यन्धक । प्रलीना वेदास्तपोबलवशाद् यान् अर्षन्ति प्राप्नुवन्ति ते ऋषयः । तथा च तैत्तिरीये श्रुतम्—'अजान्ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्, त ऋषयोऽभवन्, तदृषीणामृषित्वम्' इति । अजा नित्याः पृश्नयः शुक्लाः शुद्धा इति यावत् । तान् तपस्यमानान्—तपश्चरतः, स्वयम्भु-अनादि ब्रह्म—वेदः, अभ्यानर्षत् । 'ऋष गतौ' आभिमुख्येन प्राप्नोत् । तेन वेदस्य दर्शनात् ऋषिशब्दवाच्या अभवन्निति वेदभाष्यम् ।

> 'सर्गादिसमये वेदान्सेतिहासान्महर्षयः ।
> लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥'

इति पुराणेषु प्रसिद्धम् । कात्यायनप्रणीतसर्वानुक्रमणिकाख्यग्रन्थे स्पष्टम् । तदाह—ऋषयो मन्त्रद्रष्टार इति । अन्धकशब्देन वृष्णिशब्देन कुरुशब्देन च अन्धकादिवंश्या विवक्षिताः । ऋषिविशेषवाचिभ्यः अन्धकादिवंश्यवाचिभ्यश्च ...

---

ककुत्स्थ, वतण्ड, जरत्कारु, विपाट्, तक्षन्, विश्रवण, रवण, ऋष्टिषेण, बिल... त्यादि । गोत्र इति निवृत्तमिति । एतच्च वृत्तौ कैयटे च स्पष्टम् । यद्यपि 'गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारः' इति 'यूनि लुक्' इति सूत्रस्थभाष्यकैयटाभ्यां लभ्यते, तथापि तन्मतान्तरमिति भावः । एवं चेतःप्रभृत्यपत्यसामान्ये प्रत्यया भवन्तीति स्थितम् । शुभ्रादित्वान्नित्यढकि प्राप्ते जरत्कारुशब्दोऽत्राणर्थं पठ्यते । जरत्कारवः । ढकि तु 'ढे लोपोऽकद्र्वाः' इत्युलोपः । 'जरत्कारेयः । कुञ्जादित्वाद् 'गोत्रे कुञ्जादिभ्यः—' इति नित्यं च्फञि प्राप्ते विपाट्शब्दोऽत्राणर्थं पठ्यते । वैपाशः वैपाशायन्यः । 'सेनान्तलक्षण—' इति ण्यप्रत्यये 'उदीचाम्—' इतीञि च प्राप्ते तक्षन्शब्दोऽत्राणर्थं पठ्यते, ण्यप्रत्ययेन समावेशोऽत्रेष्यते, न त्विञा । ताक्षणः, ताक्ष्ण्यः । विश्रवणरवणशब्दावत्र पठ्येते, तौ च विश्रवःशब्दस्यादेशौ । विश्रवसोऽपत्यं वैश्रवणः, रावणः । अवृद्धाभ्यो—'अवृद्धेभ्यो नदीमानुषीनामभ्यः—' इत्येव सूत्रयितुं युक्तमित्याह...

वृष्णिभ्यः—वासुदेवः, आनिरुद्धः। 'शौरिः' इति तु बाह्वादित्वात्। कुरुभ्यः—नाकुलः, साहदेवः। इञ एवायमपवादः, मध्येऽपवादन्यायात्। अत्रिशब्दात्तु परत्वाड्ढक्, आत्रेयः। १११८ मातुरुत्संख्यासंभद्रपूर्वायाः। (४-१-११५) संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण्प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। साम्मातुरः। भाद्रमातुरः। आदेशार्थं वचनम्। प्रत्ययस्तूत्सर्गेण सिद्धः। स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः, तेन धान्यमातुर्न। संख्या इति किम्—सौमात्रः। शुभ्रादित्वाद् द्वैमात्रेयः[1]। १११९ कन्यायाः कनीन च। (४-१-११६) ढकोऽपवादोऽण्,

---

अण् स्यादित्यर्थः। इञोऽपवादः। ऋषिभ्य उदाहरति—वासिष्ठः। वैश्वामित्र इति। अन्धकेभ्य इति। अन्धकवंश्यवाचिभ्य उदाह्रियत इत्यर्थः। श्वाफल्क इति। श्वफल्कस्यापत्यमिति विग्रहः। वृष्णिभ्य इति। वृष्णिवंश्यवाचिभ्य उदाह्रियत इत्यर्थः। वासुदेव इति। वसुदेवस्यापत्यमिति विग्रहः। आनिरुद्ध इति। अनिरुद्धस्यापत्यमिति विग्रहः। ननु शूरो नाम कश्चिद् वृष्णिवंश्यः। तस्यापत्यं शौरिः कथम्? अण्प्रसङ्गादित्यत आह—शौरिरिति त्विति। बाह्वादित्वादित्यनन्तरम् इञा समाधेयमिति शेषः। कुरुभ्य इति। कुरुवंश्यवाचिभ्य उदाह्रियत इत्यर्थः। नकुलसहदेवौ प्रसिद्धौ। ननु अत्ररपत्यमित्यर्थे 'इतश्चानिञः' इति ढकि आत्रेय इति कथम्? ऋष्यणा इञ इव ढकोऽपि बाधौचित्यादित्यत आह—इञ एवेति। न तु ढक इत्यर्थः। मातुरुत्संख्यासंभद्रपूर्वायाः। द्वैमातुर इति। द्वयोर्मात्रोरपत्यमिति विग्रहः। 'तद्धितार्थ—' इति समासः। अण्, ऋकारस्योकारः, रपरत्वम्। एवं षाण्मातुर। सांमातुर इति। समीचीना माता संमाता, संमातुरपत्यं सांमातुरः। अण्, उत्, रपरत्वम्। भाद्रमातुर इति। भद्रा चासौ माता चेति विग्रहः। अणादि पूर्ववत्। ननु 'तस्यापत्यम्' इत्येव सिद्धे अण्विधिर्व्यर्थ एवेत्यत आह—आदेशार्थं वचनमिति। उदादेशस्य अण्संनियोगेन विध्यर्थमित्यर्थः। ननु धान्यं यो मिमीते तस्यापि मातुर्ग्रहणं कुतो न स्यात्। तथा च तत्रापि द्वैमातुरादिकं प्राप्नोतीत्यत आह—स्त्रीलिङ्गनिर्देशोऽर्थापेक्ष इति। मातृगतं स्त्रीत्वं शब्दे आरोप्य संख्यासंभद्रपूर्वाया इति निर्दिश्यते। अतः स्त्रीलिङ्गस्य मातृशब्दस्य जननीवाचकस्य ग्रहणमित्यर्थः। तेन धान्यमातुर्नेति। अत्र मातृशब्दस्य परिच्छेत्तृवाचिनः पुंल्लिङ्गत्वादिति भावः। सौमात्र इति। सुमातुरपत्यमित्यर्थे 'तस्यापत्यम्' इत्यण्। संख्यासंभद्रपूर्वत्वाभावाद् नायमण्, उत्वमपि तत्संनियोगशिष्टत्वान्नेति भावः। ननु द्वैमात्रेय इति कथम्, संख्यापूर्वकतया अण उत्वस्य च दुर्वारत्वादित्यत

---

व्याचष्टे—अवृद्धेभ्य इत्यादिना। आत्रेय इति। परत्वादयमृष्यणं बाधत इति भावः। द्वैमातुर इति। 'तद्धितार्थं' इत्यादिना समासः। अत्र 'द्वयोर्मात्रोरपत्यम्' इति विग्रहः, न तु द्विमात्रोरपत्यम्' इति। 'दिक्संख्ये संज्ञायाम्' इति नियमेनासंज्ञायां समासासंभवात्। धान्यमातुर्नेति। 'अभिव्यक्तपदार्थाः—' इत्यनेन जननीवाचिन एव ग्रहणे सिद्धेऽपि तस्य स्पष्टप्रतिपत्त्यर्थः स्त्रीलिङ्गनिर्देश इति भावः।

---

[1] 'वैमात्रेयः' इति बहुत्र पाठः।

चामादेरचो वृद्धिः, पूर्वपदस्य तु वा ढे परे । प्रवाहणस्यापत्यं प्राव प्रवाहणेयः । ११३० तत्प्रत्ययस्य च (७-३-२९) ढप्रत्ययान्तस्य णस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा । प्रवाहणेयस्यापत्यं प्रावा प्रवाहणेयिः । बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुं न इति सूत्रारम्भः । ११३१ 'कल्याण्यादीनामिनङ् । (४-१-१२६)

आवादेशे श्रावेय इति स्यात् । प्रवाहणस्य ढे । उत्तरपदस्येत्यधिकृतम् । 'तद्धि चामादेः' इत्यतः अचामादेरित्यनुवर्तते 'मृजेर्वृद्धिः' इत्यतो वृद्धिरिति 'वर्त माणस्य पूर्वस्य तु वा' इत्यतः पूर्वस्य वेति च । तदाह—प्रवाहणशब्द प्रावाहणेयः, प्रवाहणेय इति । शुभ्रादित्वाद् ढकि पूर्वपदस्य पाक्षिकी वृद्धिः । उत्तरपदस्य नित्यम् । उत्तरपदे आकारस्य वृद्धेः फलं तु प्रवाहणे इत्यत्र 'वृद्धिनिमित्तस्य च–' इति पुंवत्त्वप्रतिषेध एव । तत्प्रत्ययस्य च । यदनुवृत्तं तत्सर्वमिहाप्यनुवर्तते । तच्छब्देन ढप्रत्ययः परामृश्यते । तदाह—ढ यान्तस्येति । प्रावाहणेयिः, प्रवाहणेयिरिति । शुभ्रादिढगन्तादिञ् । पूर्वसूत्रेणैव सिद्धत्वादिदं व्यर्थमित्यत आह—बाह्येति । ढक्प्रत्ययान्ताद् य इञ्, तन्निमित्ता 'तद्धितेष्वचामादेः' इति नित्या आदिवृद्धिः । ढाश्र ढप्रत्यये परे विहितेनेति यावत् । तथाविधेन वृद्धिविकल्पेन पूर्वसूत्रविहितेन बा शक्यते, भिन्ननिमित्तकत्वादित्यर्थः । पूर्वसूत्रं हि केवलढप्रत्ययान्ते ढप्रत्यय मित्तत्वेनाश्रित्य प्रवृत्तम्, ढङ्निमित्तामादिवृद्धिं बाधत इति युक्तम्, न त्विञ्नि मित्तामपि नित्यामादिवृद्धिम् । अतस्तस्या अपि बाधनार्थमिदं सूत्रमित्यर्थ वृद्धिविधिद्वयमपि 'शुभ्रादिभ्यश्च' इत्यत्रैव वक्तुं युक्तम् । कल्याण्यादीना

गोधा, प्रवाहणेत्यादि । आकृतिगणोऽयम् । तेन पाण्डवेय इत्यादि इहादन्तेषु इञ् प्राप्तः, विधवाशब्दात्क्षुद्रालक्षणो ढक्, चतुष्पाज्जातिवाचि गोधाशब्दाद् ढ्रग्वचनात्सोऽपि भवति, क्वचिदौत्सर्गिकोऽण् प्राप्त इति प्रवाहणस्य ढे । उत्तरपदस्येत्यधिक्रियते । 'अधात्परिमाण–' इत्यतः पूर्व वा' इति अनुवर्तते तदाह—उत्तरपदस्याचामादेरित्यादि । नित्यमुत्तर फलं तु 'प्रवाहणेयीभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य–' इति पुंवद्भावप्रतिषेधः । यस्य च । 'प्रवाहणस्य' इत्यनुवर्तते, तच्छब्देन ढप्रत्ययः परामृश्यते ढान्तस्येत्यादि । बाह्यतद्धितनिमित्तेति । ढक्प्रत्ययान्ताद्बहिर्भूतो तन्निमित्तेत्यर्थः । कल्याण्यादीनाम् । इह परस्त्रीशब्दः पठयते । 'परस परस्त्री' इति षष्ठीसमासः । पारस्त्रैणेयः । परभार्यायामुत्पन्न इत्यर्थः । अनत्व त्वादुभयपदवृद्धिः । बिदादिगणे तु 'परस्त्री परशुं च' इति पठयते । प्राप्नोतीति तत्र परा चासौ स्त्री चेति कर्मधारयः । परस्त्रिया अपत्यं पारशवः । ब्राह्मणा

१ 'कल्याण्यादीनामिनङ् च' इति क, ख पाठः । क्वचिदष्टाध्यायीपुस्त चकारो दृश्यते, अथापि बहुषु कौमुद्यष्टाध्यायीपुस्तकेष्वदर्शनाद् व्याख्या व्याख्यातत्वात्, पूर्वसूत्रे चकारदर्शनाच्चेहोपेक्षितः ।

मिनङादेशः स्यात्, ढक्च। काल्याणिनेयः, वान्धकिनेयः । ११३२ कुलटाया वा। (४-१-१२७) इनङ्मात्रं विकल्प्यते। ढक्तु नित्यः पूर्वेणैव। कौलटिनेयः, कौलटेयः। सती भिक्षुक्यत्र कुलटा। या तु व्यभिचारार्थं कुलान्यटति तस्याः 'क्षुद्राभ्यो वा' (सू ११३७) इति पक्षे ढ्रक् । कौलटेरः । ११३३ हृद्भग-सिन्ध्वन्ते पूर्वपदस्य च । (७-३-१९) हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च। सुहृदोऽपत्यं सौहार्दः। सुभगाया अपत्यं सौभागिनेयः । सक्तुप्रधाना सिन्धवः सक्तुसिन्धवः, तेषु भवः साक्तुसैन्धवः । ११३४ चटकाया ऐरक् । (४-१-१२८) 'चटकादिति वाच्यम्'

---

इनङि ङकार इत्। काल्याणिनेय इति। कल्याण्या अपत्यमिति विग्रहः। वान्धकिनेय इति। वन्धक्या अपत्यमिति विग्रहः। अत्र गणे स्त्रीप्रत्ययान्ता एव पठ्यन्ते, तेभ्यो ढक् सिद्ध एव। इनङेव तु विधीयते। कुलटाया वा इनङ्-मात्रमिति। व्याख्यानादिति भावः। पूर्वेणैवेति। 'स्त्रीभ्यो ढक्' इत्यनेनेत्यर्थः। कुलानि गृहाणि अटतीति कुलटा। शकन्ध्वादित्वात्पररूपम्। अत्रेति। 'कुलटाया वा' इति सूत्र इत्यर्थः। पक्षे ढ्रगिति। ढ्रगपि कदाचिद्भवतीत्यर्थः। कौलटेर इति। कुलटाया ढ्रकि ढकारस्य एयादेशे 'लोपो व्योः–' इति यकारलोप इति भावः। हृद्भग। हृदाद्यन्त इति। हृत्, भग, सिन्धु एतदन्तेषु समासेष्वित्यर्थः। चकारादुत्तरपदस्येत्यनुकृष्यते, तदा—पूर्वोत्तरपदयोरिति सौहार्द इति। अणि उभयपदादिवृद्धिः। ऋकारस्य तु आकारो रपरः। सौभागिनेय इति। कल्याण्यादित्वाद् ढकि इनङि उभयपदादिवृद्धिरिति भावः। एतत्प्रसङ्गादेव इदं सूत्रमत्रोपन्यस्तम्। 'महते सौभगाय' इत्यत्र तु उद्गात्रादित्वाद्भावे अञ्। उत्तरपदा-दिवृद्ध्यभावश्छान्दसः। सिन्धव इति। अश्वा इत्यर्थः। चटकाया ऐरक्। चटकाशब्दादपत्ये ऐरक्प्रत्ययः स्यादित्यर्थः। ननु स्त्रीलिङ्गनिर्देशात् पुंलिङ्गान्न स्यादित्यत आह—चटकादिति। सूत्रे चटकाया इत्यपनीय चटकादिति वाच्य-

---

तेनैवोढायामुत्पन्नः। सा च जात्यन्तरयोगात्परस्त्री। न च परश्वादेशस्य स्थानिवद्भावा-त्पारशवेऽपि 'अनुशतिकादीनां च' इत्युभयपदवृद्धिः स्यादिति वाच्यम्, सत्यादेशे पूर्वोत्तरपदसंप्रमोहात्तदप्रवृत्तेः। इह गणे स्त्रीप्रत्ययान्तानां ढकः सिद्धत्वादिनङर्थं ग्रहणम्। अन्येषां तूभयार्थम्। कल्याणी, सुभगा, दुर्भगा, वन्धकी, परस्त्रीत्यादि। कुलटाया वा। शकन्ध्वादित्वात्पररूपमत एव निपातनाद्वा। सती भिक्षुक्य-त्रेति। अत्र इनङ्विधौ। तथा चोक्तममरेण—अथ बान्धकिनेयः स्याद्बन्धुलश्चा-सतीसुतः। कौलटेरः कौलटेयो भिक्षुकी तु सती यदि। तदा कौलटिनेयः स्यात्कौलटेयोऽपि चात्मजः' इति। केचित्तु क्षुद्राया अपि इनङा तृतीयं रूपं कौलटिनेय इतीच्छन्ति। पक्षे ढगिति। ढगपि पक्षे भवत्येवेति भावः। हृद्भग। 'पूर्वपदस्य च' इति चकारेण 'उत्तरपदस्य' इत्यनुकृष्यते तदाह—पूर्वोत्तरपदयोरिति। 'महते सौभगाय' इत्यत्र तूद्गात्रादित्वादञ् छान्दसत्वान्नोत्तरपदवृद्धिरित्याशयः। चटकाया ऐरक्। 'चटकायाः' इति स्त्रीलिङ्गनिर्देशात्पुंसि न स्यादित्याशङ्कयाह—चटकस्येति

(वा २६२४) लिङ्गविशिष्टपरिभाषया स्त्रिया अपि । चटकस्य चटकाया वा चाटकैरः । 'स्त्रियामपत्ये लुग्वक्तव्यः' (वा २६२५) । तयोरेव स्त्र्यपत्यं अजादित्वाट्टाप् । ११३५ गोधाया ढ्रक् । (४-१-१२९) गौधेरः । शुभ्रादि ढक् । गौधेयः । ११३६ आरगुदीचाम् । (४-१-१३०) गौधारः । सिद्ध आकारोच्चारणमन्यतो विधानार्थम् । जडस्यापत्यं जाडारः । 'पण्ड षाण्डारः । ११३७ क्षुद्राभ्यो वा । (४-१-१३१) अङ्गहीनाः शीलही क्षुद्राः, ताभ्यो वा ढ्रक् । पक्षे ढ्रक् । काणेरः, काणेयः । दासेरः, दा ११३८ पितृष्वसुश्छण् । (४-१-१३२) अणोऽपवादः । पैतृष्व ११३९ ढकि लोपः । (४-१-१३३) पितृष्वसुरन्त्यस्य लोपः स्याड्ढ अत एव ज्ञापकाड्ढक् । पैतृष्वसेयः । ११४० मातृष्वसुश्च । (४-१-

मित्यर्थः । तर्हि स्त्रीलिङ्गान्न स्यादत आह—लिङ्गेति । स्त्रिया अपीति । ङ्गादप्यैरगित्यर्थः । तयोरिति । चटकस्य चटकायाश्चेत्यर्थः । ननु चटकेति जातित्वान् ङीष्प्रसङ्गादित्यत आह—अजादित्वादिति । गोधाया गौधेर इति । गोधाया अपत्यमिति विग्रहः । ढ्रकि ढकारस्य एयादेशे व्योः–' इति यलोपः, कित्वादादिवृद्धिरिति भावः । आरगुदीचाम् । आरग्वा स्यादित्यर्थः । अन्यत इति । आकारान्तादन्यद् अदन्तम्, क्वचिद्विधानार्थमित्यर्थः । जाडार इति । रग्विधौ आकारो न श्रूयेतेति षण्डो नपुंसकः, तस्यापत्यं क्षेत्रजातत्वादिना । क्षुद्राभ्यो वा । अङ्गहीना चक्षुरादिकतिपयावयवविकला इत्यर्थः । शीलहीना इति । सद्वृत्तहीना यथेष्टपुरुषसंचारिण्य इति यावत् । 'अनियतपुंस्का अङ्गहीना वा क्षुद्राः, इति पितृष्वसुश्छण् । पैतृष्वस्रीय इति । पितृष्वसुरपत्यमिति विग्रहः । छस्य आदिवृद्धिः । सकारादृकारस्य यण् । ढकि लोपः । पितृष्वसुरित्यनुवर्तते । न्त्यपरिभाषया अन्त्यस्य लोपः । तदाह—पितृष्वसुरन्त्यस्य लोप इति । पितृष्वसुरपत्ये ढक एक दुर्लभत्वात्कथं तस्मिन् परे लोपविधिरित्यत आह एवेति । शुभ्रादित्वाद् ढगित्यन्ये । पैतृष्वसेय इति । ढकि अन्त्यस्य लोपे आदिवृद्धिः । 'मातृपितृभ्यां स्वसा' इति षत्वम् । मातृष्वसुश्च । चकार

वाच्यमिति । एवं च 'चटकादैरक्' इत्येव सांप्रदायिकः पाठ इति न्यासकृदुक्तिव विरोधादुपेक्ष्या । तयोरेवेति । तत्र टाबन्तात्तद्धितलुकि 'लुक्तद्धितलुकि' इति लुकि जातिलक्षणङीषं बाधित्वा अजादिलक्षणष्टाबिति भावः । गोधा । इति । ढस्य एयादेशे कृते 'लोपो व्योः–' इति यलोपः । आरगुदीचाम् । ढ्रग्ढगारकां पर्याये सिद्धे उदीचां ग्रहणं पूजार्थम् । 'अरक्' इति न सूत्रितम् च' इत्याकारलोपे 'गौधरः' इत्यनिष्टप्रसङ्गात् । अन्यत इति । अनाकारान्तात् नुरोधेन कुतश्चिदित्यर्थः । पण्डस्येति । पण्डो नपुंसकः, तस्यापत्यं तु कृत्रि

१ 'पण्ड' इति बहुत्र पाठः ।

पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः, मातृष्वसेयः । ११४१ चतुष्पाद्भ्यो ढञ् । (४-१-१३५) ११४२ ढे लोपोऽकद्र्वाः । (६-४-१४७) कद्रूभिन्नस्योवर्णान्तस्य भस्य लोपः स्याद् ढे परे । कामण्डलेयः । कमण्डलुशब्दश्चतुष्पाज्जातिविशेषे । ११४३ गृष्ट्यादिभ्यश्च । (४-१-१३६) एभ्यो ढञ् स्यात् । अण्ढकोरपवादः । गार्ष्टेयः । मित्रयोरपत्यम्, ऋष्यणि प्राप्ते ढञ् । ११४४ केकयमित्रयुप्रलयानां यादेरियः । (७-३-२) एषां यकारादेरियादेशः स्याद् ञिति णिति किति च तद्धिते परे । इति इयादेशे प्राप्ते । ११४५ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । (६-४-१७४) एतानि

---

ढकि लोपश्चानुकृष्यते । तदाह—पितृष्वसुर्यदुक्तमिति । चतुष्पाद्भ्यो ढञ् । चतुष्पादः पशवः, तद्विशेषवाचिभ्यः अपत्ये ढञित्यर्थः । ढे लोपोऽकद्र्वाः । भस्येत्यधिकृतम् 'ओर्गुणः' इत्यत ओरिति षष्ठ्यन्तेनानुवृत्तेन विशेष्यते । तदन्तविधिः । तदाह—कद्रूभिन्नस्येति । 'अलोऽन्त्यस्य' इत्यन्त्यलोपः । ओर्गुणापवादः । कामण्डलेय इति । कमण्डलोरपत्यमिति विग्रहः । ढकि एयादेशे आदिवृद्धौ उकारलोपः । ननु कमण्डलुशब्दवाच्यस्य जलपात्रस्याचेतनस्य कथमपत्ययोगः, तदाह—कमण्डलुशब्दश्चतुष्पाज्जातिविशेष इति । अत एव 'कमण्डलुपदे आदधीत' इति बह्वृचब्राह्मणं संगच्छत इति भावः । गृष्ट्यादिभ्यश्च । अण्ढकोरिति । गृष्टि, हलि, बलि, कुठि, अगस्ति, मित्रयु—एते गृष्ट्यादयः । अत्र अन्त्योः ऋषित्वादण् प्राप्तः । अन्येभ्यस्तु 'इतश्चानिञः' इति ढक् प्राप्त इति विवेकः । सकृत्प्रसूता मानुष्यादिरपि गृष्टिः, नतु गौरेव । ततश्च 'चतुष्पाद्भ्यः—' इत्यनेन न प्राप्तिः । केकयमित्रयु । 'तद्धितेष्वचामादेः' इत्यतस्तद्धितग्रहणमनुवर्तते । 'अचो-ञ्णिति' 'किति च' इत्यतो ञ्णितीति, कितीति च, तदाह—एषामिति । आदेशे यकारादकार उच्चारणार्थः । केकयस्यापत्यं स्त्री कैकेयी । 'जनपदशब्दात्—' इत्यञ् । मैत्रेयिकया श्लाघते, मित्रयोर्भाव इत्यर्थे 'गोत्रचरणात्—' इति वुञ् । प्रलयादागतं प्रालेयम्, अण् अत्र सर्वत्र यादेरियादेश इत्युदाहरणानि । प्राप्ते इति । मित्रयोरपत्ये ढञि एयादेशे मित्रयु एय इति स्थिते ओर्गुणं बाधित्वा यु इत्यस्य इयादेशे सति आद्गुणे मैत्रेयेय इति प्राप्ते सतीत्यर्थः । दाण्डिनायन । एतानि निपा-

---

रिति । क्षुद्राभ्यः । अर्थगतं स्त्रीत्वं शब्दे आरोप्य स्त्रीलिङ्गनिर्देशः । गृष्ट्यादिभ्यश्च । गृष्टि, हृष्टि, हलि, बलि, कुद्रि, अजगस्ति, मित्रयु । अण्ढकोरपवाद इति । इहान्त्ययोर्द्वयोर्ऋषित्वादङ् प्राप्तः, अन्येभ्यस्तु 'इतश्चानिञः' इति विवेकः । गार्ष्टेय इति । सकृत्प्रसूता सर्वापि गृष्टिः, न तु गौरेव । अतोऽत्र न 'चतुष्पाद्भ्यः—' इत्यनेन ढञ्सिद्धिः । केकय । केकयस्यापत्यं स्त्री कैकेयी । 'जनपदशब्दात्क्षत्रियादञ्' । मैत्रेयिकया श्लाघ्यते । मित्रयूणां भावेनेत्यर्थः । 'गोत्रचरणाच्छ्लाघात्याकार—' इति वुञ् । तत्र हि लौकिकं गोत्रं गृह्यते, लोके च 'ऋषिशब्दो गोत्रमिति प्रसिद्धम्' इति काशिका । एतच्च यदा मित्रयुशब्दोऽभेदोपचारात्तदपत्यसंताने

त्यन्त इति। दाण्डिनो हस्तिनश्चापत्यं दाण्डिनायनः, हास्तिनायनः । नडा-
त्वात्फक् । निपातनाट्टिलोपो न। अथर्वणा प्रोक्तो ग्रन्थ उपचारादथर्वा, तम-
आथर्वणिकः। वसन्तादित्वात् ठक् । निपातनान्न टिलोपः । जिह्माशिनोऽपत्यं जै-
शिनेयः। शुभ्रादित्वाड्ढक् । निपातनान्न टिलोपः । वाशिनोऽपत्यं वाशिनायनिः
'उदीचां वृद्धात्–' इति फिञ् । निपातनान्न टिलोपः। भ्रणहन् धीवन् एतयोः
ष्यञ्, नकारस्य तकारश्च निपात्यते । नच 'हनस्तोऽचिण्णलोः' इत्यनेनैव तकारः
इति शङ्क्यम्, 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति परिभाषया 'हन-
इति तत्वस्य धातुविहितप्रत्यये पर एव प्रवृत्तेः। इदमेव तकारनिपातनमस्यां प-
भाषायां ज्ञापकमिति 'मृजेर्वृद्धिः' इत्यत्र भाष्ये स्पष्टम् । तेन वार्त्रघ्नमित्यत्र तत्वं
सरय्वां भवं सारवम् उदकम् । अणि यू इत्यस्य व इत्यादेशो निपात्यते। इक्ष्वाको-
पत्यमैक्ष्वाकः। जनपदशब्दात्क्षत्रियादञ् । उकारलोपो निपात्यते। बहुषु
तद्राजत्वाल्लुक् । इक्ष्वाकवः । इक्ष्वाकुषु जनपदेषु भवोऽप्यैक्ष्वाकः। कोपधादण्
उकारलोपश्च। सूत्रे ऐक्ष्वाकेत्यत्र अञणन्तयोर्ग्रहणम् । बहुत्वे तद्राजत्वादञः
अणस्तु नेति विशेषः। हिरण्यस्य विकारो हिरण्मयः। मयटि णकाराद्यकारा-
योर्लोपः। इति युलोप इति। मित्रयु एय इति स्थिते यु इत्यस्य लोपो निपा-
दिति भावः। मैत्रेयीति 'टिड्ढाणञ्–' इति ङीप्। यस्कादिभ्यो गोत्रे। इ-
सूत्रमपत्याधिकारस्थम्, किंतु द्वैतीयीकम् । अतो गोत्रशब्देन प्रवराध्यायप्रसि-
गोत्रमिह विवक्षितम्, 'अपत्याधिकारादन्यत्र लौकिकमेव गोत्रं गृह्यते' इति
लुक्' 'स्त्रीपुंसाभ्याम्–' इत्यादिसूत्रभाष्ये सिद्धान्तितत्वात् । 'ण्यक्षत्रियार्ष-' इ-
लुगित्यनुवर्तते। 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति सूत्रं तद्राजवर्जमनुवृ-

वर्तते तदा बोध्यम्, अन्यथा 'मित्रयूनाम्' इति बहुवचनान्तेन विग्रहो न स्या-
प्रलयादागतं प्रालेयम्। इयादेशो वृद्धिं न बाधते 'अचामादेरचो वृद्धिः' 'प्रत्य-
यादेशः' इति भिन्नविषयत्वात्, अङ्गं तूभयोर्विशेषणं न तु कार्यीति हृदय-
आदिवृद्धेरपीदमेव सूत्रं विधायकमस्तु । किमनेन विषयभेदविचारेणेत्य-
दाण्डिनायन। निपात्यन्त इति। दण्डिन्, हस्तिन्, आभ्यां नडादित्वात्
निपातनाट्टिलोपाभावः। वसन्तादिषु 'अथर्वन्' इति पठ्यते। 'अथर्वणा प्रोक्तो
उपचारादथर्वा, तमधीते आथर्वणिकः'। शुभ्रादिषु 'जिह्माशिन्' इति पठ्यते तस्य
जैह्माशिनेयः। वाशिनोऽपत्यं वाशिनायनिः। 'उदीचां वृद्धात्–' इति फिञ्
भ्रूणहन्, धीवन्, अनयोः ष्यञि तकारोऽन्तादेशो निपात्यते। भ्रूणघ्नो
भ्रौणहत्यम्। धैवत्यम्। 'हनस्तोऽचिण्णलोः' इत्यनेनैव हन्तेस्तत्वे सिद्धे त-
निपातनं ज्ञापयति 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति। तेन वार्त्र-
मित्यत्र तत्वं न। नन्वेवं 'प्रसृड्भ्याम्' इत्यादौ 'अनुदात्तस्य च–' इत्यम् न
स्यात्। अम्विधौ धातोः स्वरूपग्रहणाभावात्। अत्राहुः—'मृजेर्वृद्धिः' इति सूत्र-
भाष्यपर्यालोचनया 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति ज्ञापनार्थं त-
निपातनमिति व्याख्येयम्। तेन न कोऽपि दोष इति। सरयू इत्यस्याणि परे स्वा-

निपात्यन्ते। इति युलोपः। मैत्रेयः। मैत्रेयी। ११४६ यस्कादिभ्यो गोत्रे। (२-४-६३) एभ्योऽपत्यप्रत्ययस्य लुक्स्यात्तत्कृते बहुत्वे, न तु स्त्रियाम्। मित्रयवः। ११४७ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च। (२—४—६५) एभ्यो गोत्रप्रत्ययस्य लुक्स्यात्तत्कृते बहुत्वे, न तु स्त्रियाम्। अत्रयः। भृगवः। कुत्साः। वसिष्ठाः। गोतमाः। अङ्गिरसः ११४८ बह्वच इञः प्राच्यभरतेषु। (२-४-६६) बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्तस्य लुक्स्यात्। पन्नागाराः। युधिष्ठिराः। ११४९ न गोपवनादिभ्यः। (२-४-६७) एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात्। बिदाद्यन्तर्गणोऽयम्। गौपवनाः। शैग्रवाः। ११५० तिककितवादिभ्यो द्वन्द्वे। (२—४—६८) एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक्स्याद् द्वन्द्वे। तैकायनयश्च कैतवायनयश्च, 'तिकादिभ्यः फिञ्' (सू ११७८) तस्य लुक्, तिककितवाः। ११५१ उपकादिभ्योऽन्यतरस्याम-

---

तदाह—एभ्योऽपत्यप्रत्ययस्येति। मित्रयव इति। मित्रयोरपत्यानि पुमांस इत्यर्थः। गृष्ट्यादिढको लुकि आदिवृद्धिनिवृत्तिः। अत्रिभृगु। पूर्वसूत्राद्गोत्र इति, तत्र यदनुवृत्तं तच्च सर्वमिहानुवर्तते, तदाह—एभ्यो गोत्रेति। अत्रेः, भृगोः, कुत्सस्य, वसिष्ठस्य, गोतमस्य, अङ्गिरसश्च अपत्यानि पुमांस इति विग्रहाः। तत्र अत्रेः 'इतश्चानिञः' इति ढकोऽनेन लुक्। इतरेभ्यस्तु ऋष्यण इति बोध्यम्। लुकि आदिवृद्धेर्निवृत्तिः। बह्वच इञः। प्राच्ये उदाहरति—पन्नागारा इति। पन्नागारस्यापत्यानीति विग्रहः। अत इञो लुक्। भरतगोत्रे उदाहरति—युधिष्ठिरा इति युधिष्ठिरस्यापत्यानीति विग्रहः। कुरुलक्षणं ण्यं बाधित्वा बाह्वादित्वाद् इञ्, तस्य लुक्। अबहुत्वे तु यौधिष्ठिरिः। न गोपवनादिभ्यः। बिदाद्यन्तर्गणोऽयमिति। ततश्च अञः 'यञञोश्च' इति प्राप्तस्य लुङ् नेति भावः। तिककितव। तैकायनयश्च कैतवायनयश्चेति। द्वन्द्वविग्रहप्रदर्शनम्। तिककितवा इति। द्वन्द्वे

---

निपात्यते। सरय्वां भवं सारवमुदकम्। इक्ष्वाकोरपत्यं ऐक्ष्वाकः। 'जनपदशब्दात्क्षत्रियादञ्'। उलोपो निपातनात्। इक्ष्वाकुषु जनपदेषु भवः 'कोपधादण्' ऐक्ष्वाकः। अत्राप्युलोपो निपातनादेव। अञणन्तयोर्द्वयोरप्येकश्रुत्या पाठात्। बहुत्वे तु 'अञस्तद्राजत्वाल्लुक्' 'अणस्तु न' इति विशेषः। तथा च रघुः 'इक्ष्वाकूणां दुरापेऽर्थे' इति। मुरारिस्त्वाह 'ऐक्ष्वाकेषु च मैथिलेषु च फलन्त्वस्माकमद्याशिषः' इति। हिरण्यस्य विकारो हिरण्मयः। मयटि यादेर्लोपोऽत्र निपात्यते। यस्कादिभ्यो। अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इत्याशयेनाह—अपत्यप्रत्ययस्येति। 'ण्यक्षत्रियार्ष-' इत्यतो लुगित्यनुवर्तते, 'तद्राजस्य-' इति सूत्राद् 'बहुषु तेनैवास्त्रियाम्' इति च, तदाह—लुक् स्यादित्यादि। तत्कृते इति किम्, प्रिययास्काः। बहुत्वे किम्, यास्कः। शिवाद्यण्। यस्क, लुह्य, द्रुह्य, कर्णाटक, वस्ति, कुद्रि, मित्रयु, इत्यादि। अत्रि। गोत्रप्रत्ययस्येति। अत्रिशब्दाद् 'इतश्चानिञः' इति ढक्। इतरेभ्यस्तु ऋष्यणिति बोध्यम्। भरतगोत्रे उदाहरति—युधिष्ठिरा इति। बहुष्वेव लुक्। नेह यौधिष्ठिरिः। कुरुलक्षणं ण्यं बाधित्वा बाह्वादित्वादिञ्।

द्वन्द्वे । (२—४—६९) एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुग्वा स्याद् द्वन्द्वे ऽद्वन्द्वे च । ['औपकायनाश्च लामकायनाश्च, 'नडादिभ्यः फक्' (सू ११०१), तस्य लुक् उपकलमकाः, औपकायनलामकायनाः । भ्राष्ट्रककपिष्ठलाः, भ्राष्ट्रकिकापिष्ठलयः । 'उपकाः, औपकायनाः । लमकाः, लामकायनाः ।] ११५२ आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । (२—४—७०) एतयोरवयवस्य गोत्रप्रत्ययस्य अणो यञश्च बहुषु लुक्स्यात्, अवशिष्टस्य प्रकृतिभागस्य यथासंख्यम् अगस्ति कुण्डिन

इति सप्तमीनिर्देशात् पदद्वयादपि फिञो लुक् । उपकादिभ्यो । चकारमध्याहृत्याद्वन्द्वे चेति । एवं च अस्वरितत्वादेव पूर्वसूत्राद् द्वन्द्वग्रहणानुवृत्त्यैव सिद्धे द्वन्द्वग्रहणं स्पष्टार्थमेव । नच द्वन्द्वे नेति निषेध एव किं न स्यादिति वाच्यम्, द्वन्द्वानामपि गणे पाठात् । तदेतत्सूचयन् द्वन्द्वमुदाहरति—भ्राष्ट्रककपिष्ठला इति । इञो वा लुक् । अद्वन्द्वे उदाहरति—लमकाः, लामकायना इति । यस्का

दिषु यस्कादिगणे ऽयमिति । 'यञञोश्च' इति लुगत्र प्राप्नोतीति भावः । तिककितवादिभ्यो । यद्यपि द्वन्द्वरूपाण्येव गणे पठचन्ते, तिकादीनि पूर्वपदानि कितवादीन्युत्तरपदानि, तथापि 'तिकादिभ्यः' इत्युक्ते पूर्वपदेष्वेव लुगाशङ्क्येत, इष्यते तूत्तरपदेष्वपि, अतः 'तिककितवादिभ्यः' इत्युक्तम् । कितकितवा इति । एवमन्येऽप्यत्रोदाहर्तव्याः—औपकायनाश्च लामकायनाश्च, 'नडादिभ्यः फक्' तस्य लुक् उपकलमकाः । भ्राष्ट्रकयश्च कापिष्ठलयश्च 'अत इञ्' तस्य लुक् भ्राष्ट्रककपिष्ठलाः । कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च 'अत इञ्' तस्य लुक् कृष्णाजिनकृष्णसुन्दरा इत्यादि । उपकादिभ्यो । अद्वन्द्वग्रहणं 'द्वन्द्वे' इत्येतन्नाधिक्रियत इति स्फुटीकरणार्थम् । उपकादीनां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठचन्ते 'उपकलमकाः' इत्यादयः, तेषां पूर्वेण नित्यमेव लुक्, अद्वन्द्वे त्वनेन विकल्प इति ज्ञेयम् । भाष्ये 'भ्राष्ट्रकिकापिष्ठलयः' इत्युदाहरणात्तिककितवादिष्वस्य पाठोऽनार्ष इति कैयटः । तेनात्र द्वन्द्वेऽपि विकल्प एवोचित इत्याशयेनोदाहरति—भ्राष्ट्रककपिष्ठला इत्यादि । तिककितवादिषु पठितानामनेनाद्वन्द्व एव विकल्प इत्याशयेनोदाहरति—लमकाः । लामकायना इति । एवमन्येऽप्युदाहर्तव्याः । उपकाः औपकायनाः, भ्राष्ट्रकाः भ्राष्ट्रकयः इत्यादि । आगस्त्य । अगस्त्यशब्दादृष्यण्, कुण्डिनीशब्दात्तु गर्गादियञ् । कुण्डिनीशब्दस्य यञि 'भस्याढे—' इति पुंवद्भावे 'नस्तद्धिते' इति टिलोपः प्राप्नोति, न च 'संयोगादिश्च' इति प्रकृतिभावः शङ्क्यः, 'अणि' इति तत्रानुवर्तनात् । मैवम्, अस्मादेव निपातनात् तस्याप्रवृत्तेः कौण्डिन्यः सिध्यति । चकारस्त्वन्तोदात्तार्थः । मध्योदात्तः कुण्डिनीशब्दः । कुण्डमस्त्यस्याः इति मत्वर्थीयस्येनेरुदात्तत्वात् आदेशस्यापि कुण्डिनशब्दस्यान्तरतम्यान्मध्योदात्तत्वात् । अवशिष्टस्य प्रकृतिभागस्येति । न च प्रत्ययविशिष्टस्यादेशमात्रं विधीयतां किं लुग्विधानेनेति वाच्यम्

१ बन्धनीघृतः पाठो बालमनोरमायां न व्याख्यातः, अथापि पुस्तकान्तर संवादाद् धृतः । २ नायं मूलपाठो बालमनोरमासंमतः । कौमुदीपुस्तकान्तरेष्वपि क्वचिन्न दृश्यते, क्वचिच्च 'उपकाः, औपका।, लमकाः, लामकाः' इत्येव दृश्यते ।

एतावादेशौ स्तः । अगस्तयः । कुण्डिनाः । ११५३ राजश्वशुराद्यत् । (४—४—१३७) 'राज्ञो जातावेवेति वाच्यम्' (वा २६२७) । ११५४ ये चाभावकर्मणोः । (६—४—१६८) यादौ तद्धिते परेऽन्प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । श्वशुर्यः । जातिग्रहणाच्छूद्रादावुत्पन्नो राजनः । ११५५ अन् । (६—४—१६७) अणि अन् प्रकृत्या स्यात् । इति टिलोपो न । अभावकर्मणोः किम्—राज्ञः कर्म भावो वा राज्यम् । ११५६ संयोगादिश्च । (६—४—१६६) इन् प्रकृत्या स्यादणि परे । चक्रिणोऽपत्यं चाक्रिणः । ११५७ न मपूर्वोऽपत्येऽवर्मणः । (६—४—१७०) मपूर्वोऽन् प्रकृत्या न स्यादपत्येऽणि । भाद्रसामः । मपूर्वः किम्—सौत्वनः । अपत्ये किम्—चर्मणा परिवृतश्चार्मणो रथः । अवर्मणः किम्—चक्रवर्मणोऽपत्यं चाक्रवर्मणः । 'वा हित-

---

म्नो लुग्विकल्पः । उपका औपकायना इत्याद्यप्युदाहार्यम् । आगस्त्य । अगस्तयः । कुण्डिना इति । अगस्त्यशब्दादृष्यणो लुक् । प्रकृतेरगस्त्यादेशः । कौण्डिन्यशब्दो गर्गादियञन्तः । बहुत्वे यञो लुक् । प्रकृतेः कुण्डिनादेशश्च । 'यस्कादिभ्यो गोत्रे' इत्यारभ्य 'आगस्त्यकौण्डिन्ययोः—' इत्यन्तं द्वैतीयीकम् । अथ प्रकृतं चातुर्थिकम् । राजश्वशुराद्यत् । राजन्शब्दात् श्वशुरशब्दाच्चापत्ये यत्प्रत्ययः स्यादित्यर्थः । क्रमेण अणिञोरपवादः । राज्ञो जातावेवेति । जातिः समुदायवाच्या चेदित्यर्थः । ये चाभावकर्मणोः । 'अन्' इति पूर्वसूत्रमनुवर्तते । 'प्रकृत्यैकाच्' इत्यतः प्रकृत्येति । अङ्गाधिकारलब्धप्रत्ययो यकारेण विशिष्यते । तदादिविधिः । तदाह—यादाविति । राजन्य इति । क्षत्रियात् क्षत्रियायां स्वभार्यायामुत्पन्नो राजन्य इति धर्मशास्त्रेषु प्रसिद्धम् । यत्प्रत्यये प्रकृतिभावान्न टिलोपः । शूद्रादाविति । क्षत्रियात् शूद्रायां वा तदन्यस्यां वा अनूढायाम् उत्पन्न इत्यर्थः । राजन इति । अणि रूपम् । तत्र 'नस्तद्धिते' इति टिलोपे प्राप्ते । अन् । 'इनण्यनपत्ये' इत्यतः अणीत्यनुवर्तते, 'प्रकृत्यैकाच्' इत्यतः प्रकृत्येति च, तदाह—अणीति । राज्यमिति । 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ् । टिलोपः । संयोगादिश्च । इन् प्रकृत्येति । 'इनण्यनपत्ये' इत्यतः 'प्रकृत्यैकाच्' इत्यतश्च तदनुवृत्तेरिति भावः । चक्रिणोऽपत्यं चाक्रिण इति । 'इनण्यनपत्ये' इत्यत्रानपत्ये इति पर्युदासादप्राप्तिः । न मपूर्वोऽपत्येऽवर्मणः । भाद्रसाम इति । भद्रसाम्नोऽपत्यमिति विग्रहः । अणि टिलोपः । अनो मपूर्वत्वान्न प्रकृतिभावः । सौत्वन इति । सुत्वनोऽपत्यमिति विग्रहः । मपूर्वत्वाभावात्प्रकृतिभावः । चार्मण इति । 'परिवृतो

---

आगस्तीयाश्छात्रा इत्यनापत्तेः, लुकि हि सति 'गोत्रेऽलुगचि' इति लुकि प्रतिषिद्धे वृद्धत्वाच्छः सिध्यति । प्रत्ययविशिष्टस्यादेशविधौ तु वृद्धत्वापगमे शैषिकोऽणेव स्यात् । कौण्डिनाश्छात्रा इति तूभयथापि सिद्ध्यत्येव । छापवादस्य 'कण्वादिभ्यो गोत्रे' इत्यण्प्रत्ययस्य प्रवृत्त्या तत्र विशेषाभावात् । राजश्वशुराद्यत् । क्रमेणाणिञोरपवादः । जातावेवेति । प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्येत्यर्थः । प्रत्ययस्त्वपत्य एव । एवं च पङ्कजादिवद्योगरूढ इति फलितोऽर्थः । अन् टिलोपो नेति । 'नस्तद्धिते'

नाम्न इति वाच्यम्' (वा ४२१५)। हितनाम्नोऽपत्यं हैतनामः, हैतनामि।
११५८ ब्राह्मो जातौ। (६—४—१७१) योगविभागोऽत्र कर्तव्यः। ब्राह्मः
इति निपात्यतेऽनपत्येऽणि। ब्राह्मं हविः। ततो जातौ। अपत्ये जातौ
ब्रह्मणष्टिलोपो न स्यात्। ब्रह्मणोपत्यं ब्राह्मणः। अपत्ये किम्—ब्राह्मो ओषधि
११५९ औक्षमनपत्ये। (६—४—१७३) अणि टिलोपो निपात्यते। औ
पदम्। अनपत्ये किम्—उक्ष्णोऽपत्यमौक्षणः। ११६० षपूर्वहन्धृतराज्ञा

रथः' इत्यणि टिलोपः। अणः आपत्यत्वाभावात्प्रकृतिभावः। वा हित
इति। 'न मपूर्वः' इति प्रतिषेध इति शेषः। ब्राह्मो जातौ। ब्रह्मन्शब्दा
अणि 'न मपूर्वोऽपत्ये—' इति प्रकृतिभावनिषेधो जातावेवेत्यर्थः फलति। तथा
ब्रह्मणोऽपत्यं ब्राह्मण इति जातिविशेषे न सिध्येत्, 'न मपूर्वः—' इति प्रकृतिभाव
सति 'नस्तद्धिते' इति टिलोपस्य दुर्वारत्वात्। किंच ब्रह्मा देवता अस्य ब्राह्मं हवि
न सिध्येत्, 'न मपूर्व—' इति प्रकृतिभावनिषेधस्य जातावेवेति नियमितत्वेन
इति प्रकृतिभावाट्टिलोपासंभवात्, अत आह—योगविभाग इति। ब्रा
इत्येकं सूत्रम्। तत्र 'इनण्यनपत्ये' इत्यतः अनपत्येऽणीत्यनुवर्तते, तदाह—ब्रा
इति निपात्यते अनपत्येऽणीति। तथा च ब्रह्मन्शब्दादनपत्येऽणि इ
प्रकृतिभावनिवृत्तेष्टिलोपः फलित इति मत्वोदाहरति—ब्राह्मं हविरिति। ब्र
देवता अस्येति विग्रहः। 'सास्य देवता' इत्यण्। ततो जाताविति। ततो
इति सूत्रात्पृथगेव 'जातौ' इति सूत्रं कर्तव्यमित्यर्थः। इह 'न मपूर्वो
ऽवर्मणः' इति सूत्रादपत्ये इति 'प्रकृत्यैकाच्' इत्यतः प्रकृत्येति चानुवर्तते, तदाह
अपत्ये जाताविति। ब्राह्मण इति। ब्रह्मणः सकाशात्सजातीयायां
यामुत्पन्न इत्यर्थः। योगविभागस्त्वयं भाष्ये स्पष्टः। औक्षम्। शेषपूरणे
व्याचष्टे—अणि टिलोपो निपात्यत इति। 'अन्' इति प्रकृतिभावा

इति प्राप्तष्टिलोपो नेत्यर्थः। ब्राह्मो जातौ। योगविभागोऽत्रेति। एक
त्वारम्भसामर्थ्यादनपत्ये जातौ 'ब्राह्मी' इत्यत्र प्राप्तटिलोपसिद्धावपि ब्राह्मण इ
सिद्धचेत्। 'अन्' इति प्रकृतिभावस्य 'न मपूर्वोऽपत्ये—' इति निषेधाट्टिलो
दुर्वारत्वात्। किंच जातौ ब्राह्मणमित्यादि न सिद्धचेत्, 'अन्' इति प्रकृतिभाव
दुर्वारत्वादिति भावः। ब्राह्म इति। इह 'अपत्ये' इति न सम्बध्यते।
निपातनमिदं व्यर्थं स्यात् 'न मपूर्व—' इति प्रकृतिभावनिषेधाट्टिलोपसिद्धेरित्य
नाह—अनपत्येऽणीति। ब्राह्ममिति। 'ब्राह्मो मुहूर्तः, ब्राह्मः स्थालीप
इत्याद्यप्युदाहरणम्। नन्वेवमपि ब्राह्मणो न सिध्यति 'न मपूर्वः—' इति प्रकृति
निषेधादपत्येऽणि 'नस्तद्धिते' इति टिलोपप्रवृत्तेरत आह—जाताविति।
मण्डूकप्लुत्या 'अपत्ये' इत्यनुवर्तते, 'न' इति च तदेतदाह—अपत्ये जातौ
स्याद्विना। अयमत्रार्थः—'अपत्ये जातौ ब्राह्मणशब्दे टिलोपो न भवति' इ
केचिदिह 'अजातौ' इति छित्त्वा 'जातौ न भवति' इति व्याचक्षते। तस्मिंस्तु व्याख्या

१ 'ब्रह्म' इति क, ख।

(६—४—१३५) षपूर्वो योऽन् तस्य हनादेशच भस्यातो लोपोऽणि। औक्षणः। ताक्ष्णः। भ्रौणघ्नः। धृतराज्ञोऽपत्यं धार्तराज्ञः। षपूर्व इति किम्—साम्नोऽपत्यं सामनः। अणि किम्—ताक्षण्यः। ११६१ क्षत्त्राद्घः। (४—४—१३८) क्षत्रियः। जातौ इत्येव, क्षात्त्रिरन्यः। ११६२ कुलात्खः। (४-४-१३९) कुलीनः। तदन्तादपि, उत्तरसूत्रे अपूर्वपदाद् इति लिङ्गात्। आढ्यकुलीनः। ११६३ अपूर्वपदादन्यतरस्यां यड्ढकञौ। (४—४—१४०) कुलाद् इत्येव। पक्षे खः। कुल्यः, कौलेयकः, कुलीनः। पदग्रहणं किम्—बहुकुल्यः, बाहुकुलेयकः, बहुकुलीनः। ११६४ महाकुलादञ्खञौ। (४—४—१४१) अन्यतरस्याम् इत्यनुवर्तते। पक्षे खः। माहाकुलः, माहाकुलीनः, महाकुलीनः। ११६५ दुष्कुलाड्ढक्। (४—१—१४२) पूर्ववत्पक्षे खः। दौष्कुलेयः, दुष्कुलीनः। ११६६ स्वसुश्छः। (४—१—१४३) स्वस्रीयः। ११६७ भ्रातु-

---

इति भावः। औक्षमिति। टिलोपे रूपम्। औक्षण इति। अपत्येऽणि टिलोपाभावे अल्लोप इति भावः। ननु प्रकृतिभावादल्लोपो न स्यादत आह—षपूर्वहन्। 'अल्लोपोऽनः' इत्यनुवर्तते। भस्येत्यधिकृतम्। तदाह—षपूर्व इति। ताक्ष्ण इति। 'तक्ष्णोऽण उपसंख्यानम्' इति कारिलक्षणण्यस्यापवादोऽण्। ताक्षण्य इति। 'सेनान्तलक्षणकारिभ्यश्च' इति ण्यः। क्षत्त्राद्घः। अपत्ये इति शेषः। क्षत्त्रिय इति। घस्य इयादेशे 'यस्येति च' इत्यकारलोपः। क्षात्त्रिरन्य इति। क्षत्त्राच्छूद्रादावुत्पन्न इत्यर्थः। कुलात्खः। अपत्ये इति शेषः। कुलीन इति। खस्य ईनादेशः। ननु 'समासप्रत्ययविधौ—' इति तदन्तविधिनिषेधाद् आढ्यकुलीन इति कथमित्यत आह—तदन्तादपीति। आढ्यकुलीन इति। आढ्यकुलशब्दात्कर्मधारयात्खः। कुल आढ्यत्वप्रतीतिरत्र फलम्। कुलीनशब्देन कर्मधारये तु तदप्रतीतिरिति भेदः। अपूर्वपदादन्यतरस्याम्। कुलादित्येवेति। पूर्वपदरहितात् कुलादपत्ये यड्ढकञौ वा स्त इत्यर्थः। पक्षे ख इति। यड्ढकञोरभावपक्षे इत्यर्थः। बहुकुल्य इति। 'विभाषा सुपः—' इति बहुच्प्रत्ययो न पदम्। अतः पूर्वपदरहितत्वाद् यड्ढकञ्खा भवन्त्येवेत्यर्थः। महाकुलादञ्खञौ। अनुवर्तत इति। अन्यथा महाविभाषाधिकारे अपवादेन मुक्ते उत्सर्गस्याप्रवृत्तेः 'पीलाया वा' इत्यत्रोक्तत्वात्पूर्व-

---

'न' इति नानुवर्तनीयम्। जातौ किम्, ब्राह्मो नारदः। ताक्ष्ण इति। शिवादित्वात्, 'तस्येदम्' इति वाण्। ताक्षण्य इति। कारिलक्षणो ण्यः। कुलात्खः। केवलात्कुलशब्दाद् 'अपूर्वपदात्—' इत्यादिना विशेषविहिताभ्यामपि। यड्ढकञ्भ्यां खो न बाध्यते, तद्विधावन्यतरस्यांग्रहणादित्याशयेनाह—कुलीन इति। लिङ्गादिति। अन्यथा 'ग्रहणवता—' इति तदन्तविधिप्रतिषेधादपूर्वपदग्रहणं व्यर्थं स्यादिति भावः। आढ्यकुलीन इति। आढ्यश्चासौ कुलीनश्चेति कुलीनविशेषणत्वे कुलस्याढ्यत्वं न प्रतीयते। किं च ईकार उदात्त इति स्वरेऽपि विशेषोऽस्तीति भावः। बहुकुल्य इति। 'विभाषा सुपः—' इति बहुच्प्रत्ययो न पदमिति अपूर्वपदत्वात्प्रत्ययत्रयं भवत्येवेति भावः। व्यन्स्याविति। भ्रातुरपत्यं यदि शत्रुः तदा भ्रातृशब्दाद् व्यन्नेव

-र्व्यंच्च । (४—१—१४४) चाच्छः । अणोऽपवादः । भ्रातृव्यः, भ्रात्रीयः। ११६८ व्यन्सपत्ने । (४—१—१४५) भ्रातुर्व्यन् स्यादपत्ये, प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये । भ्रातृव्यः शत्रुः । 'पाप्मना भ्रातृव्येण' इति तूपचारात्। ११६९ रेवत्यादिभ्यष्ठक् । (४—१—१४६) ११७० ठस्येकः । (७-३-५०) अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः । ११७१ गोत्रस्त्रियाः कुत्सने ण च । (४—१—१४७) गोत्रं या स्त्री तद्वाचकाच्छब्दाण्णठकौ स्तः कुत्सायाम् । सामर्थ्याद्यूनि । गार्ग्या अपत्यं गार्गः, गार्गिको वा जाल्मः । ...

सूत्रोक्तः खो न स्यादिति भावः । तदाह—पक्षे ख इति । तथा सति आदिवृद्धिर्न भावः । दुष्कुलाड्ढक् । पूर्ववदिति । अन्यतरस्यांग्रहणानुवृत्तेरिति भावः । स्वसुश्छः । अपत्य इति शेषः । स्वस्रीय इति । छस्य ईयादेशे ऋकारस्य यण् । भ्रातुर्व्यच्च । तकारः 'तित्स्वरितम्' इति स्वरार्थः । बोध्यम् । व्यन् सपत्ने । अपत्य इति । प्रत्ययेनापत्यमुच्यते । भ्रातृशब्दार्थो न विवक्षितः । तथा च 'भ्रातृशब्दोत्तरत्वे व्यन्प्रत्ययार्थः शत्रुः' इति ... स्पष्टम् । ननु 'पाप्मना भ्रातृव्येण' इति कथम्, पाप्मनोऽपत्यत्वाभावादित्यत आह—पाप्मना भ्रातृव्येण इति तूपचारादिति । हिंसकत्वगुणयोगाल्लाक्षणिकः इत्यर्थः । रेवत्यादिभ्यष्ठक् । अपत्य इति शेषः । ढगाद्यपवादः । ठस्येकः । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । तदाह—अङ्गात्परस्य ठस्येति । ठकारान्तस्येत्यर्थः । रैवतिक इति । रेवत्या अपत्यमिति विग्रहः । ठकि ककार इत्, अकार उच्चारणार्थः । ठकारस्य इकः अदन्त आदेशः । अङ्गात्किम् ? कर्मठ इत्यत्र ठस्य इको न भवति । अत्र भाष्ये अङ्गसम्बन्धिठस्येति व्याख्याने कर्मठ इत्यत्र सुपं प्रति कर्मन्शब्दस्याङ्गत्वात्तदीयठस्य इकादेशमाशङ्क्य अङ्गसंज्ञानिमित्तं यष्ठकारस्तस्येको ... तादृशश्च ठकारः प्रत्यय एव भवति, नचेह ठकारः प्रत्यय इति समाहितम् । ... ठकि अकार उच्चारणार्थः, ठकार एव प्रत्यय इति विज्ञायते । 'ठस्येति संघातग्रहणम्' इत्यपि भाष्ये स्थितम् । अस्मिन्पक्षे ठकि अकार उच्चारणार्थो न भवति, संघातस्य प्रत्ययः, इकादेशे अकार उच्चारणार्थ एवेत्यलम् । गोत्रस्त्रियाः । ण इति लुप्तप्रथमाकम् । चात् ठगनुकृष्यते । तदाह—गोत्रं या स्त्री इत्यादिना । सामर्थ्यादिति । 'एको गोत्रे' इति नियमादिति भावः, गार्ग्या अपत्यमिति । गर्गस्य गोत्रापत्यं ...

स्यात् । न तु व्यच्छौ इत्यर्थः । समुदायेनेति । तद्धटितप्रत्ययेन शत्रुशब्दो वाच्य इत्यर्थः । यत्तु वृत्तिकृतोक्तम् 'अपत्यार्थोऽत्र नास्त्येव' इति, तदुपेक्ष्यम् ... विरोधादिति मनसि निधायाह—पाप्मनेति । श्रुतिगतभ्रातृव्यशब्दस्य ... वदति—उपचारादिति । 'अस्त्री पङ्कं पुमान्पाप्मा पापं किल्विषकल्मषम्' इत्यमरः । न हि पापं भ्रातुरपत्यं भवतीत्यतो भाक्त एवायं प्रयोग इति भावः । रेवत्यादि ... रेवती, अश्वपाली, मणिपाली, द्वारपाली, इत्यादि । ठस्येकः । 'अङ्गस्य' इत्यनुवृत्ते... दाह—अङ्गात्परस्येति । 'अङ्गात्' इति ठकारविशेषणादठश्चष्ठकारस्य न भवति ... कर्मठः । गोत्रस्त्रियाः । णित्त्वं तु 'ग्लुचुकायन्या अपत्यं ग्लौचुकायनो ...

तद्धिते' इति पुंवद्भावाद्गार्ग्यशब्दाण्णठकौ । 'यस्य—' (सू ३११) इति लोपः । 'आपत्यस्य—' ( सू १०८२ ) इति यलोपः । ११७२ वृद्धाट्ठक् सौवीरेषु बहुलम् । (४—१—१४८) सुवीरदेशोद्भवाः सौवीराः । वृद्धात्सौवीरगोत्राद्यूनि बहुलं ठक्स्यात्कुत्सायाम् । भागवित्तेः, भागवित्तिकः । पक्षे फक् । भागवित्तायनः । ११७३ फेश्छ च । (४—१—१४९) फिञन्तात्सौवीरगोत्रादपत्ये छः ठक्च कुत्सने गम्ये । यमुन्दस्यापत्यं यामुन्दायनिः, तिकादित्वात्फिञ् । तस्यापत्यं यामुन्दायनीयः, यामुन्दायनिकः । कुत्सने किम्—यामुन्दायनिः । औत्सर्गिकस्याणो 'ण्यक्षत्रिय—' ( सू १२७६ ) इति लुक् । सौवीर इति किम्—तैकायनिः । ११७४ फाण्टाहृतिमिमताभ्यां णफिञौ । ( ४—१—१५० ) सौवीरेषु । नेह यथासंख्यम्, अल्पाच्तरस्य परनिपातात्लिङ्गाद् इति वृत्तिकारः । भाष्ये तु

---

गार्गी । 'गर्गादिभ्यः—' इति यञ् । 'यञश्च' इति ङीप् । 'यस्येति च' इत्यकारलोपः । 'हलस्तद्धितस्य' इति यकारलोपः । गार्ग्या अपत्यं युवेति विग्रहः । पितुरविज्ञाने मात्रा व्यपदेशः कुत्सनम् । यद्यपि णप्रत्यये ठक इकादेशे च 'यस्येति च' इति लोपे गार्गो गार्गिक इति सिध्यति । तथापि वस्तुस्थितिमाह—पुंवद्भावादिति । 'भस्याढे—' इति पुंवत्त्वे सति ङीपो निवृत्तौ भूतपूर्वगत्या स्त्रीवाचकत्वमादाय गार्ग्यशब्दाण्णठकावित्यर्थः । नच 'वृद्धिनिमित्तस्य च—' इति पुंवत्त्वनिषेधः शङ्क्यः, सौत्रस्यैवायं निषेधो न तु 'भस्याढे-' इति वार्तिकस्येत्युक्तत्वात् । 'भस्याढे-' इत्यस्य तद्धिते विवक्षिते प्रवृत्तिमभ्युपगम्य गार्ग्यशब्दादित्युक्तम् । तच्च समूहाधिकारे 'भिक्षादिभ्योऽण्' इत्यत्र स्फुटीभविष्यति । स्त्रियाः किम्? औपगवस्यापत्यं युवा औपगविः । प्रकरणादिगम्या कुत्सा । गोत्रेति किम्? कारिकेयः । णस्य णित्त्वं तु ग्लुचुकायन्या अपत्यं युवा ग्लौचुकायन इत्यत्र वृद्ध्यर्थम् । वृद्धाट्ठक्सौवीरेषु । पूर्वसूत्राद्गोत्रेत्येकदेशोऽनुवर्तते । सौवीरेष्विति प्रकृतिविशेषणम् । तदाह—वृद्धादिति । 'वृद्धिर्यस्याचामादिः—' इति वृद्धसंज्ञकादित्यर्थः । ठग्ग्रहणं णस्य अनुवृत्तिनिवृत्त्यर्थम् । भागवित्तेरिति । भगवित्तस्य सौवीरं गोत्रापत्यं भागवित्तिः, तस्यापत्यं युवेत्यर्थे ठकि इकादेशे भागवित्तिक इति रूपमित्यर्थः । पक्षे फगिति । 'यञिञोश्च' इत्यनेनेति शेषः । फेश्छ च । छेति लुप्तप्रथमाकम् । यमुन्दस्येति । यमुन्दो नाम सुवीरदेशे कश्चित् । यामुन्दायनिरिति । यामुन्दायनेरपत्यं युवेत्यर्थे कुत्सनाभावात् छठगभावे 'तस्यापत्यम्' इत्यण् । 'ण्यक्षत्रियार्ष—' इति तस्य लुगित्यर्थः । तैकायनिरिति । तैकायनेरपत्यं युवेत्यर्थे असौवीरत्वात् छठगभावे 'तस्यापत्यम्' इत्यण् । 'ण्यक्षत्रिय—' इति तस्य लुगिति भावः । फाण्टाहृति । सौवीरेष्विति । शेषपूरणमिदम् ।

---

इत्यत्र फिञन्ताण्णे वृध्द्यर्थमिति बोध्यम् । सामर्थ्याद्यूनीति । 'गोत्रादपरो गोत्रप्रत्ययो न' इत्युक्तत्वादिति भावः । गार्ग्या अपत्यमिति । पितुरसंविज्ञाने मात्रा व्यपदेशात् कुत्सा । गोत्रेति किम्, कारिकेयो जाल्मः । स्त्रियाः किम्, औपगवस्यापत्यम् औपगविर्जाल्मः । कुत्सनेति किम्, गार्गेयो माणवकः । फाण्टाहृति । 'कुत्सने' इति निवृत्तम् । वृत्तिमते णित्त्वस्य फलमस्तीति ध्वनयन्नु-

'यथासंख्यमेव' इति स्थितम्। फाण्टाहृतः, फाण्टाहृतायनिः। मैमतः, मैमतायनिः।
११७५ कुर्वादिभ्यो ण्यः। (४—१—१५१) अपत्ये। कौरव्या ब्राह्मणाः।
वावदूक्याः। 'सम्राजः क्षत्त्रिये' (ग सू ७५)। साम्राज्यः। साम्राजोऽन्यः।
११७६ सेनान्तलक्षणकारिभ्यश्च। (४—१—१५२) एभ्यो ण्यः।
संज्ञायाम्—( सू १०२३ ) इति सस्य षः। हारिषेण्यः। लाक्षण्यः। कारिः
शिल्पी, तस्मात् तान्तुवाय्यः। कौम्भकार्यः। नापित्यः। ११७७ उदीचामिञ्
(४-१-१५३) हारिषेणिः। लाक्षणिः। तान्तुवायिः। कौम्भकारिः।

---

सौवीरगोत्रादित्यर्थः। फाण्टाहृतस्य गोत्रापत्यं फाण्टाहृतिः, अत इञ्। तस्यापत्यं
युवेति विग्रहः। मैमत इति। मिमतस्यापत्यमिति विग्रहः। मिमतशब्दे सौवीर
गोत्रादिति न संबध्यते, व्याख्यानाद्गोत्रत्वाभावाच्चेति भावः। कुर्वादिभ्यो ण्यः।
अपत्ये इति। शेषपूरणमिदम्। सौवीरेष्विति निवृत्तम्। कौरव्या ब्राह्मणा
इति। कुरुर्नाम कश्चिद् ब्राह्मणः। तस्यापत्यानीति विग्रहः। ण्यप्रत्यये ओर्गुणः
अवादेशः, आदिवृद्धिः। यस्तु 'कुरुनादिभ्यो ण्यः' इति ण्यो वक्ष्यते, तस्य तद्राजत्वात्
बहुषु लुकि कुरवः क्षत्त्रिया इति भवति। एतत्सूचनार्थमेव बहुवचनं ब्राह्मणा इति
विशेष्यं चोदाहृतम्। वावदूक्या इति। वावदूकस्यापत्यानीति विग्रहः। सम्राजः
क्षत्त्रिय इति। कुर्वादिगणसूत्रम्। अपत्य इति शेषः। क्षत्त्रिय एवेति नियम
मिदम्। साम्राजोऽन्य इति। सम्राजः शूद्रादौ उत्पन्न इत्यर्थः। सेनान्त। एभ्य
इति। सेनान्तलक्षणकारिभ्य इत्यर्थः। अकुर्वादित्वाद्वचनम्। हारिषेण्य इति।
हरिषेणो नाम कश्चित्। 'एति संज्ञायाम्—' इति षत्वम्, तस्यासिद्धत्वात्सेनान्तत्वात्
ण्यः। लाक्षण्य इति। लक्षणमस्यास्तीति लक्षणः, अर्शआद्यच्, तस्यापत्यमिति
विग्रहः। कारिपदं व्याचष्टे—कारिः शिल्पीति। तस्माविति। कारिशब्द
वाचिनो ण्ये सतीत्यर्थः। तान्तुवाय्य इति। तन्तुवायस्यापत्यमिति विग्रहः।

---

दाहरति—मैमत इति। न च भाष्यमतेऽपि 'फाण्टाहृताभार्यः' इत्यत्र ...
निमित्तस्य—' इति पुंवद्भावनिवृत्तिर्णित्वफलमस्तीति वाच्यम्, 'अस्त्रियाम्'
युवसंज्ञानिषेधाद् गोत्रसंज्ञासद्भावाद् 'एको गोत्रे' इति नियमादिञन्तात्फाण्टाहृतिशब्...
दन्यस्यापत्यप्रत्ययस्याभावात्फाण्टाहृताशब्दस्यैवासत्त्वादिति भावः। कुर्वादिभ्यो...
'सौवीरेषु' इत्यपि निवृत्तम्। कौरव्या ब्राह्मणा इति। यत्तु 'कुरुनादिभ्यो ण्यः'
इति वक्ष्यति तस्य तद्राजत्वाद्बहुषु लुकि 'कुरवः क्षत्त्रियाः' इति भवति, ...
'कौरव्याः' इति भावः। वावदूक्या इति। वदेर्यङन्तादूकप्रत्ययः। स ...
गणे निपातनादित्याहुः। कुरु, गर्ग, वावदूक। सम्राजः क्षत्त्रिय इति। ...
शब्दाद् ण्य इत्यर्थः। वामरथस्य कण्वादिवत्स्वरवर्जम्। यञन्तस्य कार्यम् ...
यत्कार्यं तत् ण्यप्रत्ययान्तस्य वामरथ्यशब्दस्य स्यात्, आद्युदात्तं विनेत्यर्थः। ...
'यञञोश्च' इति लुक्। वामरथाश्छात्राः। 'कण्वादिभ्यो गोत्रे' इति छापवादो ...
वामरथी। वामरथ्यायनी स्त्री। 'यञश्च'। 'प्राचां ष्फ तद्धितः' इति ङीष् ...
वामरथानि सङ्घाङ्कलक्षणानि 'सङ्घाङ्कलक्षणेषु' इति छापवादोऽण्। ...

नापितात्तु परत्वात्फिञेव । नापितायनिः । 'तक्ष्णोऽण उपसंख्यानम्' (वा २५४०) 'षपूर्व-' (सू ११६०) इत्यनोऽकारलोपः । ताक्ष्णः पक्षे ताक्षण्यः । ११७८ तिकादिभ्य फिञ् । (४-१-१५४) तैकायनिः । ११७९ कौसल्यकार्मार्याभ्यां च । (४-१-१५५) अपत्ये फिञ् । इञोऽपवादः । परमप्रकृतेरेवायमिष्यते । प्रत्ययसन्नियोगेन प्रकृतिरूपं निपात्यते । कोसलस्यापत्यं कौसल्यायनिः । कर्मारस्यापत्यं कार्मार्यायणिः 'छागवृषयोरपि' ( वा २६४३ ) । छाग्यायनिः । वार्ष्यायणिः । ११८० अणो द्व्यचः । (४-१-१५६) अपत्ये फिञ् । इञोऽपवादः । कार्त्र्यायणिः । अण इति किम्—दाक्षायणः । द्व्यचः किम्— औपगविः । [ 'त्यदादीनां फिञ्वा वाच्यः' (वा ५०५०) । त्यादायनिः, त्यादः ] ।

---

कौम्भकार्य इति । कुम्भकारस्यापत्यमिति विग्रहः । नापित्य इति । नापितस्यापत्यमिति विग्रहः उदीचामिञ् । सेनान्तलक्षणकारिभ्य इञ् स्यादुदीचां मते इत्यर्थः । नापितात्तु परत्वात् फिञेवेति । उदीचां वृद्धादित्यनेनेति शेषः । तक्ष्णोऽण उपसंख्यानमिति । उदीचां मत इति शेषः । ताक्ष्ण इति । अणि प्रकृतिभावान्न टिलोपः । अल्लोपस्तु 'षपूर्वहन्-' इति वचनाद्भवति । पक्षे ताक्षण्य इति । प्राचां मते कारित्वलक्षणो ण्य इत्यर्थः । 'ये चाभावकर्मणोः' इति प्रकृतिभावान्न टिलोपः । तिकादिभ्यः फिञ् । इञोऽपवादः । तैकायनिरिति । फिञि आयन्नादेशः । कौसल्य । परमप्रकृतेरेवेति । कोशलकर्माराभ्यां फिञ्, तस्य युट् चेत्यर्थः । भाष्ये स्पष्टमेतत् । छागवृषयोरपीति । फिञ् तस्य युट् चेति वक्तव्यमित्यर्थः । अणो द्व्यचः । अपत्ये फिञिति । शेषपूरणमिदम् । द्व्यचः अण्प्रत्ययान्तादपत्ये फिञित्यर्थः । कार्त्र्यायणिरिति । कर्तुश्छात्रः कार्त्रः, 'तस्येदम्' इत्यण् । कार्त्रस्यापत्यं कार्त्र्यायणिः । फिञि आयन्नादेशे णत्वम् । दाक्षायण इति । दक्षस्यापत्यं दाक्षिः । अत इञ् । दाक्षेरपत्यं दाक्षायणः । 'यञिञोश्च' इति फक् अण्णन्तत्वाभावान्न फिञिति भावः । औपगविरिति ।

---

वल्मीकार, वुद्धिकार, इत्यादि । हारिषेण्य इति । 'एतिसंज्ञायाम्—' इति षत्वस्यासिद्धत्वात्वात्सेनान्तोऽयम् । ताक्ष्ण इति । उदीचामिञोपवादोऽयमण् । अस्मादुपसंख्यानाच्छिवादिषु तक्षन्शब्दपाठोऽनार्ष इति गम्यते । वृत्तिकारस्तु— तक्षन्शब्दं शिवादिषु पठित्वा 'कारिलक्षणमुदीचामिञमयमण् बाधते, ण्यस्य तु बाधो नेष्यते' इत्याह । तदनुरोधेनास्माभिरपि तत्र तथैव व्याख्यातम् । फले विशेषाभावात् । कौशल्य । परमप्रकृतेरेवायमिति । यदि तु 'वृद्धेत्कोसला—' इति ञ्यङन्तात्कोसलशब्दात् कारिलक्षण्यन्तात्कर्मारशब्दाच्चायं विधिः स्यात्, तदा यूत्र्येव प्रसज्येतेति भावः । छागेति । दगुशब्दस्याप्युपलक्षणमेतत् । फिञ्प्रकरणे 'दगुकोसलकर्मारच्छागवृषाणां युट चादिष्टस्य' इति वार्तिकात् । आदिष्टस्य आयन्नादेशस्येत्यर्थः । अन्यथा, प्रतिपदोक्ते युटि कृते प्रत्ययादित्वाभावात् कौशल्यायनिरित्यादौ फस्यायन्नादेशो न स्यात्, युकि कृते तु 'दागव्यायनिः इत्यत्र ओर्गुणः, अन्यत्राल्लोपश्च न स्यादिति भावः । कार्त्र्यायणिरिति । कर्तुरपत्यं कार्त्रस्तस्यापत्यं तु कार्त्र्यायणिः ।

**११८१ उदीचां वृद्धादगोत्रात् ।** (४-१-१५७) आम्रगुप्तायनिः । प्रा...
तु आम्रगुप्तिः । वृद्धात् किम्-दाक्षिः । अगोत्रात् किम्-औपगविः । ११...
**वाकिनादीनां कुक् च ।** (४-१-१५८) अपत्ये फिञ्वा । वाकिन...
वाकिनकायनिः, वाकिनिः **११८३ पुत्रान्तादन्यतरस्याम् ।** (४-१-१...
अस्माद्वा:, फिञ्सिद्धः, तस्मिन्परे पुत्रान्तस्य वा कुग्विधीयते । गार्गीपुत्रका...
गार्गीपुत्रायणिः, गार्गीपुत्रिः । **११८४ प्राचामवृद्धात्फिन्बहुलम्**
(४-१-१६०) ग्लुचुकायनिः । **११८५ मनोर्जातावञ्यतौ षुक् च ।**

---

उपगोर्गोत्रापत्यमौपगवः । तस्यापत्यमौपगविः युवा । वृद्धत्वाभावान्न फिञिति ना...
कर्तुरपत्ये तु कुर्वादिगणे पाठाद् ण्य एवेति बोध्यम् । 'त्यददीनां फिञ्वा वा...
त्यादायनिः त्यादः ।' इति क्वचित्पुस्तके दृश्यते । तत्तु प्रामादिकम्, 'त्यदादी...
इति त्यदादीनां वृद्धत्वाद् 'उदीचां वृद्धात्–' इत्येव सिद्धेः, भाष्ये अस्य वार्ति...
अदर्शनाच्च । **उदीचां वृद्धादगोत्रात् ।** वृद्धसंज्ञकाद् अगोत्रप्रत्ययान्तात्फिञ् स्...
उदीचां मत इत्यर्थः । **आम्रगुप्तायनिरिति ।** आम्रगुप्तस्यापत्यमिति विग्र...
प्राचां त्विति । मत इति शेषः । **आम्रगुप्तिः ।** अत इञ् । **औपगविरि...**
उपगोर्गोत्रापत्यम् औपगवः, तस्यापत्यं युवा औपगविः । औपगवस्य गोत्रत्वा...
यूनि फिञभावेत इञेवेति भावः । **वाकिनादीनाम् ।** शेषपूरणेन सूत्रं व्याचष्...
अपत्ये फिञ्वेति । चकाराद् उदिचाम् इति फञिति चानुवर्तत इति ना...
तथा च वाकिनादिभ्यः फिञ् वा स्यात्, प्रकृतीनां कुगागमश्चेति फलि...
**पुत्रान्तादन्यतरस्याम् ।** स्पष्टम् । **प्राचामवृद्धात् ।** अवृद्धसंज्ञकाद् ...
बहुलं फिन् स्यादित्यर्थः । प्राचां ग्रहणं पूजार्थम् । **ग्लुचुकायनिरिति ।** ग्लुचुक...
पत्यमिति विग्रहः । अवृद्धात्किम् ? राजदन्तिः । बहुलग्रहणान्नेह–दाक्षि...
**मनोर्जातौ ।** मनुशब्दाद अञ् यत् एतौ प्रत्ययौ स्तः, तयोः परयोः मनुश...

---

अत्र व्याचक्षते—कर्तृशब्दः कुर्वादिषु पठ्यते । तथा च 'कार्त्र्यः' इत्येव वर्ण...
नोदाहृतम् । तस्मादिह भर्तृहर्त्राद्युदाहार्यमिति । **दाक्षिरिति ।** 'वा नामधे...
इति वृद्धसंज्ञाभावपक्षे प्रत्युदाहरणमिदम् । पक्षान्तरे तु फिञ् भवत्येव । 'दाक्षा...
ऽश्विनीत्यादि ताराः' इत्यमरः । **वाकिनादीनाम् ।** यदि हि वृद्धमगोत्रं स्यात्...
तत्रागमार्थमेवेदं वचनमन्येषां तूभयार्थम् । 'उदीचाम्' इत्यनुवर्तनाद्विकल्पः फ...
इत्याह—फिञ्वा स्यादिति । **वाकिनकायनिरिति ।** वचनं वाकः सोऽ...
स्तीति वाकिनः । अतएव निपातनादिनन् । अगारे एधत इति गारेधः पृषोद...
त्वादादिलोपः शकन्ध्वादित्वात्पररूपम् । गारेधकायनिः । चर्मिवर्म्मिणौ तूभयत्र...
चर्मवर्मशब्दाभ्यां व्रीह्यादित्वादिनिः । 'चर्मिवर्मिणोर्नलोपश्च' । इति गणसूत्र...
चार्मिकायणिः । वार्मिकायणिः । कुकि कृते नकारस्यानन्त्यत्वान्नलोपाप्राप्तौ वच...
न च कुक्परादिरस्त्विति वाच्यम्, फस्यानादित्वादायनादेशाभावप्रसङ्गात् । ...
निरिति । 'अत इञ्' । फिञभावे तत्संनियोगशिष्टः कुगत्र न भवति । एवं गारे...
चर्मिण इत्याद्यूह्यम् । **पुत्रान्तात् ।** 'उदीचां वृद्धात्–' इत्यनुवर्तते इत्याचक्ष...

(४-१-१६१) समुदायार्थो जातिः । मानुषः, मनुष्यः । ११८६ जनपदशब्दात् क्षत्रियादञ् । (४-१-१६८) जनपदक्षत्रिययोर्वाचकादञ् स्यादपत्ये 'दाण्डिनायन–' (सू ११४५) इति सूत्रे निपातनाट्टिलोपः । ऐक्ष्वाकः । ऐक्ष्वाकौ । 'क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्' (वा २६६९) । तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात् । पञ्चालानां राजा पाञ्चालः ।

षुगागमश्च प्रकृतिप्रत्ययसमुदायेन जातौ गम्यायामित्यर्थः, तदाह—समुदायार्थो जातिरिति । नात्रापत्यग्रहणं संबन्ध्यत इति भावः । अन्यथा मानुषा इत्यत्र 'यञञोश्च' इति लुक् स्यादिति बोध्यम् । जनपदशब्दात् । जनपदो देशः, तद्वाचकशब्दो जनपदशब्दः, तथाभूतो यः क्षत्रियवाचकशब्दः, तस्मादित्यर्थः । फलितमाह—जनपदक्षत्रिययोरिति । ऐक्ष्वाक इति । इक्ष्वाकुर्नाम देशः, राजा च । तस्य राज्ञोऽपत्यमिति विग्रहे अञ्, अणोऽपवादः । स्वरे विशेषः । ओर्गुणं बाधित्वा 'दाण्डिनायन–' इति सूत्रे निपातनादुकारस्य टेर्लोपः । ऐक्ष्वाकाविति । बहुवचने तु लुग्वक्ष्यत इति भावः । क्षत्रियसमानेति । क्षत्रियवाचकशब्देन समानशब्दो जनपदवाचकः, तस्मात् षष्ठ्यन्ताद् राजन्यर्थे अपत्यवत्प्रत्यया भवन्तीत्यर्थः । वार्तिकमेतत्सूत्रसिद्धार्थकथनपरमित्याह—तद्राजमिति । 'जनपदशब्दात्–' इत्यादिविहितानामञादीनां तद्राजसंज्ञा विहिता 'ते तद्राजाः' इति । प्रत्ययानां तद्राजत्वं तद्वाचकत्वाद्गौणम् । एवं च तद्राजवाचकस्तद्राजा इत्यन्वर्थसंज्ञैषा, तु टिघुभादिवदवयवार्थरहिता । तथा च अञादिप्रत्ययानां तद्राजसंज्ञकानां राजवाचकत्वमपि विज्ञायत इति राजन्यपि वाच्ये ते भवन्तीति विज्ञायत इत्यर्थः । पञ्चालानामिति । बहुवचनान्तमिदं देशविशेषनाम, भाष्ये तथैव प्रयोगदर्शनात् । 'द्व्यञ्मगध–' इत्यत्र भाष्ये 'नेषो नाम जनपदः' इति दर्शनाद्देशवाचिनोऽप्येकवचन-

वा फिञ् सिद्ध इति । तेनैव सूत्रेण फिञि सिद्धे अनेन कुगेव वा विधीयत इति भावः । प्राचामवृद्धात् । प्राचांग्रहणं पूजार्थम् । अवृद्धादिति किम्, राजदन्तिः । बहुलग्रहणान्नेह । दाक्षिः । मानुषः । मनुष्य इति । जातिशब्दावेतौ 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥' णत्वविधानार्थमिदम् । अणः सिद्धत्वात् । अनधीतवेदत्वान्मूढत्वं विहिताननुष्टानाच्च कुत्सितत्वम् । इदं च वचनं 'ब्राह्मणमाणव–' इति णत्वनिपातनाल्लब्धमित्याहुः । जनपद । जनपदक्षत्रियेति । जनपदवाची सन् यः क्षत्रियवाचीत्यर्थः । यद्यपि पञ्चालादयो जनपदे बहुवचनान्ताः, क्षत्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्योभयवाचित्वमक्षतमेवेति बोध्यम् । जनपदशब्दात्किम्, द्रुह्योरपत्यं द्रौह्यवः । केवलक्षत्रियवाच्यम् । क्षत्रियादिति किम्, ब्राह्मणस्य पञ्चालस्यापत्यं पाञ्चालिरिति वृत्तिकारादयः । बाह्वादिष्वस्य पाठादिदं प्रत्युदाहरणं चिन्त्यमित्यन्ये । क्षत्रियसमानशब्दादिति । समानः शब्दो यस्य जनपदस्य सोऽयं समानशब्दो जनपदः । क्षत्रियेण समानशब्दक्षत्रियसमानशब्दस्तस्मात्, 'तस्य' इति षष्ठीसमर्थाद्राजनि वाच्ये अपत्यवत्प्रत्ययो भवतीत्यर्थः । पाञ्चालानां राजेति ।

'पूरोरण्वक्तव्यः (वा २६७०) पौरवः । 'पाण्डोर्ड्यण्' (वा २६७१) पाण्ड्यः । ११८७ साल्वेयगान्धारिभ्यां च । (४-१-१६९) आभ्यामञ् । 'वृद्धेत्-' (सू ११८९) इति ञ्यङोऽपवादः । साल्वेयः । गान्धारः । तस्य राजन्यप्येवम् । ११८८ द्व्यञ्मगधकलिङ्गसूरमसादण् (४—१—१७०) अञोपवादः । द्व्यच्—आङ्गः, वाङ्गः, सौह्मः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यप्येवम् । ११८९ वृद्धेत्कोसलाजादाञ्ञ्यङ् । (४—१—१७१) वृद्धात्—आम्बष्ठ्यः, सौवीर्यः । इत्—आवन्त्यः, कौन्त्यः, कौसल्यः । अजादस्यापत्यमाजाद्यः । ११९० कुरुनादिभ्यो ण्यः

मिति ज्ञेयम् । जनपदशब्दादिति किम् ? द्रुह्योरपत्यं द्रौह्यवः, अणेव, तद्राजाभावाद्बहुत्वे न लुक्, द्रौह्यवाः । क्षत्त्रियादिति किम् ? पञ्चालो नाम कश्चिद् ब्राह्मणः तस्यापत्यं पाञ्चालिः । वैदेहिः । पूरोरणिति । पूरुशब्दस्य जनपदवाचित्वाभावात्प्राग्दीव्यतीये अणि सिद्धे तद्राजसंज्ञार्थं वचनम् । देशवाचित्वे तु 'द्व्यञ्मगध-' इत्येव सिद्धम् । पाण्डोर्ड्यणिति । वाक्य इति शेषः । इह श्वेतगुणवाचिनो युधिष्ठिरपितुश्च पाण्डोर्न ग्रहणम्, जनपदादित्युक्तेः, तस्य च पाण्डुदेशाधिपतिराजत्वाभावात् । पाड्य इति । पाण्डोरपत्यं पाण्डोर्देशस्य राजा वेत्यर्थः । साल्वेय । साल्वेयगान्धारिशब्दौ अव्युत्पन्नौ देशक्षत्त्रियोभयवाचिनौ । ताभ्यां जनपदादिञि सिद्धे किमर्थमिदमित्यत आह—वृद्धेदिति । ञ्यङोऽपवाद इति । द्व्यञ्मगध । अञोऽपवाद इति । जनपदशब्दादिति विहितस्याञोऽपवाद इत्यर्थः । द्व्यजिति । उदाह्रियत इति शेषः । अङ्ग, वङ्ग, सुह्म इति द्व्यचो देशक्षत्त्रियवाचिनः । अङ्गस्यापत्यमिति विग्रहः । तस्य राजन्यप्येवमिति । अङ्गादिदेशस्य राजेति विग्रहः । वृद्धेत्कोसलाजादाञ्ञ्यङ् । जनपदक्षत्त्रियोभयवाचकाद् वृद्धसंज्ञकाद् इदन्तात् कोसलाद् अजादाच्चापत्ये ञ्यङ् इत्यर्थः । वृद्धादिति । उदाह्रियत इत्यर्थः । आम्बष्ठ्यः, सौवीर्य इति । आम्बष्ठसौवीरशब्दौ जनपदक्षत्त्रियोभयवाचकौ । इदिति । इदन्तोदाहरणमिदम् । आवन्त्य इति । अवन्तिशब्दो देशे राजनि च । कौसल्य इति । कोसलशब्दो देशे राजनि च । अजादस्यापत्यमिति । राजवाचकत्वे विग्रहोऽयम् । देशवाचकत्वे तु अजादानां राजेति विग्रहः । कुरुनादिभ्यो ण्यः । कुरुशब्दाद् नकारादिभ्यश्च जनपदक्षत्त्रियवाचकेभ्योऽपत्ये राजनि च

इह 'अवृद्धादपि बहुवचनविषयात्' इति प्राप्तो वुञ् बाध्यते । पूरोरिति । पूरुशब्दो न जनपदवाचीति प्राग्दीव्यतीये अणि सिद्धे तद्राजसंज्ञार्थं वचनम् । जनपदवाचित्वे तु 'द्व्यञ्मगध-' इत्येव सिद्धम् । पाण्डोर्ड्यणिति । णित्करणं 'पण्ड्याभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य-' इति पुंवद्भावप्रतिषेधार्थम् । युधिष्ठिरपितुः शुक्लगुणवाचिनश्च पाण्डोर्नेह ग्रहणम्, 'जनपदशब्दात्-' इत्युक्ते तदधिपतिवाचिनः जनपदस्थानात् । वृद्धेत् । तपरकरणं किम्, कौमारः । कुमारीशब्दो हि जनपदः द्व्यज्लक्षणः ... । कुरुशब्दाद

(४—१—१७२) कौरव्यः, । नैषध्यः । 'स नैषधस्यार्थपतेः' इत्यादौ तु शैषिकोऽण् । ११९१ साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् । (४—१—१७३) साल्वो जनपदस्तवयवा उदुम्बरादयस्तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ् । अञोऽपवादः । औदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । राजन्यप्येवम् । ११९२ ते तद्राजाः (४—२—१७४) अञादय एतत्संज्ञाः स्युः । ११९३ तद्राजस्य बहुषु तेनैवास्त्रियाम् । (२—४—६२) बहुष्वर्थेषु तद्राजस्य लुक्स्यात्तदर्थकृतबहुत्वे, न तु स्त्रियाम् । इक्ष्वाकवः, पञ्चाला इत्यादि । कथं तर्हि 'कौरव्याः पशवः' 'तस्यामेव रघोः पाण्ड्याः' इति च । कौरव्ये पाण्ड्ये च साधव इति समाधेयम् । 'रघूणामन्वयं वक्ष्ये'

---

त्यादित्यर्थः । कौरव्य इति । कुरोरपत्यं कुरूणां राजेति वा विग्रहः । नैषध्य इति । निषधशब्दो देशे राजनि च । शषिक इति । तस्येदमित्यनेनेति शेषः । साल्वावयव । उदुम्बरादय इति ।

'उदुम्बरास्तिलखला मद्रकारा युगन्धराः । भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः ॥'

इति प्रसिद्धः । 'द्व्यञ्मगध—' इति भाष्ये तु बुध आजमीड अजक्रन्दा अपि गृहीताः । ते तद्राजाः । ते इत्यनेन जनपदशब्दादित्याद्यारभ्य विहिता अञादयः परामृश्यन्ते । तदाह—अञादय इति । तद्राजस्य । 'ण्यक्षत्त्रियार्ष—' इत्यतो लुगित्यनुवर्तते । तेनेत्यनन्तरं कृते बहुत्वे इत्यध्याहार्यः । तदाह—बहुष्विति । तदर्थकृतबहुत्व इति । अञादिप्रत्ययान्तमात्रार्थगतबहुत्वे सतीत्यर्थः । तेनेति किम् ? प्रियो वाङ्गो येषां ते प्रियवाङ्गाः इत्यत्र बहुत्वस्यान्यपदार्थगतत्वाद् वाङ्गशब्दात्परस्य न लुक् । यद्यपि वर्तिपदार्थविशिष्टान्यपदार्थगतं बहुत्वं वर्तिपदार्थगतमपि भवति, तथापि अञ्प्रत्ययान्तार्थवाङ्गमात्रगतं न भवतीति लुक् । एतदर्थमेवकारग्रहणम् । इक्ष्वाकवः, पञ्चाला इति । 'जनपदशब्दात्—' इति विहितस्य अञो लुकि आदिवृद्धिनिवृत्तिः । इत्यादीति । अङ्गाः, वङ्गा इत्यादि बोध्यम् । कथं तर्हीति । कौरव्या इत्यत्र ण्यप्रत्ययस्य पाण्ड्य इत्यत्र ड्यण्प्रत्ययस्य च तद्राजतया बहुषु लुक्प्रसङ्गादित्यर्थः । साधव इतीति । कौरव्यशब्दात् पाण्ड्यशब्दाच्च 'तत्र साधुः' इति यत्प्रत्यये 'यस्येति च' इत्यकारलोपे यत्प्रत्ययस्य तद्राजत्वाभावान्न लुगित्यर्थः । ननु रघुयदुशब्दयोर्जनपदवाचित्वाभावात् प्राग्दीव्यतीयेऽणि तस्य तद्राजत्वाभावात् कथं बहुषु तस्य लुगित्याशङ्क्य परिहरति—

---

प्राप्ते, नादिभ्यस्त्वञि प्राप्ते च वचनम् । उदुम्बरादय इति । 'उदुम्बरास्तिलखला मद्रकारा युगन्धराः । भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिकाः' इति वृत्तिः । औदुम्बरिरिति । तैलखलिः । माद्रकारिः । यौगन्धरिरित्याद्युदाहरणान्युदाहर्तव्यानि । ते तद्राजाः । अञादय इति । ततः प्राचीनास्तु तच्छब्देन न परामृश्यन्ते गोत्रयुवसंज्ञाकाण्डेन विच्छेदात् । एतदर्थमेवेदं न तत्काण्डमध्ये कृतमाचार्येणेत्याहुः । वस्तुतस्तु 'तद्राज' इत्यधिकृत्य 'जनपदशब्दात्क्षत्रियादञ्' इत्यादिसूत्राणामारम्भे गोत्रयुवसंज्ञाकाण्डस्य मध्ये पाठाभावेऽपि न क्षतिरित्यन्ये । तद्राजस्य ।

'निरुध्यमाना यदुभिः कथञ्चित्' इति तु रघुयदुशब्दयोस्तदपत्ये लक्षणया
११९४ कम्बोजाल्लुक् । (४—१—१७५) अस्मात्तद्राजस्य लुक् । कम्बोजः
कम्बोजौ । 'कम्बोजादिभ्य इति वक्तव्यम्' (वा २६७४) । चोलः । श
द्व्यज्लक्षणस्याणो लुक् । केरलः । यवनः । अञो लुक् । 'कम्बोजाः समरे' इ
पाठः सुगमः । दीर्घपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः । 'सिन्धुतक्षशिला
भ्योऽणञौ' (सू १४७३) इत्यण् । ११९५ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च
(४—१—१७६) तद्राजस्य लुक्स्यात् । अवन्ती । कुन्ती । कुरूः । ११
अतश्च । (४—१—१७७) तद्राजस्याकारस्य स्त्रियां लुक्स्यात् । शूरसे

---

रघूणामिति । लक्षणयेति । प्रयोग इति शेषः । ततश्च नेदमपत्यप्रत्ययान्त
भावः । लक्षणाबीजं तु रघुयदुसमानवृत्तिकत्वं बोध्यम् । कम्बोजाल्लुक् । त
इत्यनुवृत्तं षष्ठ्या विपरिणम्यते । कम्बोजात्परस्य तद्राजस्य लुक् स्यादित्य
अबहुत्वार्थं सूत्रम् । तदाह—कम्बोजः कम्बोजाविति । जनपदशब्दादि
विहितस्य अञो लुक् । चोलः, शक इति । चोलशकौ देशविशेषौ राजवि
च । द्व्यज्लक्षणस्येति । 'द्व्यञ्मगध—' इति विहितस्येत्यर्थः । केरल इ
केरलयवनशब्दौ देशराजोभयवाचिनौ । अञो लुगिति । जनपदशब्दा
विहितस्येति शेषः । ननु काम्बोज इति कथम्, लुक्प्रसङ्गादित्यत आह—कम्बोजाः
समर इति । दीर्घपाठे त्विति । अचां मध्ये आदेरचो दीर्घभूतस्य
त्वित्यर्थः । अभिजन इति । यत्र पूर्वैरुषितं[1] सोऽभिजन इत्यग्रे वक्ष्य
सिन्धुतक्षेति । सिन्ध्वादौ कम्बोजशब्दस्य पाठादिति भावः । स्त्रियामव
अवन्ती कुन्तीति । अवन्तेः कुन्तेश्चापत्यं स्त्री राज्ञी वेति विग्रहः । 'वृद्धेत्को
इति ञ्यङोऽनेन लुकि 'इतो मनुष्यजातेः' इति ङीष् कुरूरिति । कु
दिभ्यः—' इति ण्यस्य लुक् । अतश्च । तद्राजस्याकारस्येति । अत इति

---

तदर्थेति । तद्राजप्रत्ययार्थेन कृत इत्यर्थः । तेनैवेति किम्, प्रियपाञ्चालाः
इतीति । तथा च 'तत्र साधुः' इति यत्प्रत्ययस्य तद्राजत्वाभावाल्लुङ् नेति भा
रघुयदुशब्दयोर्जनपदवाचित्वाभावादाभ्यां परस्य तद्राजसंज्ञा नेति लुकोऽप्र
राघवाणां यादवैरित्येव भवितव्यमित्याशङ्कयाह—रघुयदुशब्दयोरिति । ल
येति । ततश्चोक्तार्थत्वादपत्यप्रत्ययो नात्रोत्पन्न इति भावः । कम्बोजाल्लुक् । 'तद्रा
बहुषु—' इति प्रकरण एवेदं न कृतम्, द्व्येकार्थवाचकस्याञो लुगभावप्रसंगात् ।
लुगधिकारे पुनर्लुग्विधानसामर्थ्याद् द्व्येकयोरप्यञो लुग्भविष्यत्येवेति वक्तुं
तथाप्यतद्राजस्यापि लुक्प्रसङ्गशङ्कापत्तेर्लाघवाभावाच्च तत्प्रकरणे न कृतमित्याहुः
चात्र आपत्ये लक्षणयैव 'कम्बोजः कम्बोजौ' इत्यादिरूपसिद्धौ किमनेन सू
शङ्कयम्, काम्बोज इत्यादिपाक्षिकानिष्टवारणाय सूत्रस्यावश्यकत्वात् । सिन्धुत
कम्बोजशब्दस्य सिन्ध्वादित्वादण् । तस्य तु तद्राजत्वाभावाल्लुङ् नेति भा
अवन्ती । कुन्तीति । 'वृद्धेत्' इति ञ्यङो लुकि 'इतो मनुष्यजातेः' इति ङी

१ 'पूर्वम्' इति क्वचित् पाठः ।

द्री। कथं 'माद्रीसुतौ' इति—'ह्रस्व एव पाठः' इति हरदत्तः। भर्गादित्वं वा कल्प्यम्। ११९७ न प्राच्यभर्गादियौधेयादिभ्यः। (४—१—१७८) एभ्यस्तद्राजस्य न लुक्। पाञ्चाली। वैदर्भी। आङ्गी। वाङ्गी। मागधी। एते प्राच्याः। भार्गी। कारूशी। कैकेयी। केकयीत्यत्र तु जन्यजनकभावलक्षणे पुंयोगे ङीष्। युधा शुक्रा आभ्यां 'द्व्यचः' (सू ११२४) इति ढक्। ततः स्वार्थे 'पर्श्वादियौधेयादिभ्योऽणञौ' (सू २०७०) इत्यञ्। 'शार्ङ्गरवाद्यञः–' (सू ५२७) इति ङीन् 'अतश्च' (सू ११९६) इति लुकि तु ढगन्तत्वान्ङीप्युदात्तनिवृत्तिस्वरः

विशेषणम्। तद्राजात्मकस्य अकारस्येत्यर्थः। शूरसेनीति। अञो लुगि प्रत्ययलक्षणमाश्रित्य अपत्यप्रत्ययान्तत्वेन जातित्वान् ङीष्। 'न लुमता–' इति निषेधस्तु न, ङीष्विधेरङ्गकार्यत्वाभावात्। एवं मद्री। न प्राच्य। एभ्य इति। प्राच्येभ्यः-भर्गादिभ्यः, यौधेयादिभ्यश्चेत्यर्थः। एते प्राच्या इति। क्षत्रिया इति शेषः। यथायथम्, अञः अणश्च लुक्। भर्गादीनुदाहरति—भार्गी, कारूशी, कैकेयीति। जन्यजनकभावेति। अत्र यद्वक्तव्यं तत् 'पुंयोगादाख्यायाम्' इत्यत्रोक्तम्। अथ यौधेयादिभ्यो लुक्प्रतिषेधं दर्शयितुमाह—युधा, शुक्रा इत्यादिना। ढगिति। युधाया अपत्यं शुक्राया अपत्यमिति विग्रहे तन्नामिकाणं बाधित्वा 'द्व्यचः' इति ढकि एयादेशे 'यस्येति च' इत्यकारलोपे आदिवृद्धिः। यौधेयशब्दात् शौक्रेयशब्दाच्च 'पर्श्वादियौधेयादिभ्योऽणञौ' इति स्वार्थे तद्राजसंज्ञके पाञ्चमिके अञि 'यस्येति च' इत्यकारलोपे 'शार्ङ्गरवाद्यञः–' इति ङीनि यौधेयी शौक्रेयीति रूपमिति

कुरुरिति। ण्यस्य लुक् 'ऊङुतः' इत्यूङ्। अतश्च। इह तद्राजेन अकारो विशेष्यते, न त्वकारेण तद्राजः। विशेषणेन तदन्तविधौ ञ्यङ्ण्यादीनामप्यदन्ततद्राजत्वादनेनैव लुकि सिद्धे अवन्तिकुन्तिकुरुभ्यो लुग्विधायकस्य 'स्त्रियामवन्ति–' इति सूत्रस्य वैयर्थ्यापत्तेः। न चेष्टापत्तिः। कौसल्येति रूपासिद्धिप्रसङ्गादतो व्याचष्टे—तद्राजस्याकारस्येति। सूत्रे तपरकरणं विस्पष्टार्थमिति भावः। शूरसेनीति। अञो लुकि 'जातेः' इति ङीष्। न त्वञन्तलक्षणो ङीन्, 'अञो योऽकारस्तदन्तात्' इति व्याख्यानात्। कारूशीति। कृञ उः करुः, तं वष्टि करूशः। 'वश कान्तौ' मूलविभुजादित्वात्कः। 'ग्रहिज्या–' इति संप्रसारणम्। तस्यापत्यं राजा वा कारूशः। स्त्रियां कारूशी। एतेन मूर्धन्योपधः पाठो निरस्तः। यौधेयादिभ्यो लुक्प्रतिषेधमुदाहर्तुमाह—युधा। शुक्रेत्यादि। अतश्चेति लुकि त्विति। 'ञ्यादयस्तद्राजाः' इति वक्ष्यमाणत्वादञोऽस्य तद्राजत्वमस्तीति भावः। योपधत्वान् ङीषः प्राप्तिर्नेत्याशयेनाह—ङीपीति। उदात्तनिवृत्तिस्वर इति। 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीबुदात्तः स्यादित्यर्थः। सिद्धान्ते त्वञो लुगभावाद् ङीनाद्युदात्तत्वमिति ज्ञेयम्। स्यादेतत्। 'अतश्च–' इति सूत्रेण विधीयमानो लुक् चातुरर्थिकानामेव तद्राजानां भवतु, संनिधानात्, न 'ञ्यादयस्तद्राजाः' इति पाञ्चमिकानामपि तद्राजानामिति किमनेन यौधेयादिग्रहणेन। सत्यम् 'व्याप्तिन्यायेन पाञ्चमिकस्यापीह ग्रहणम्' इति ज्ञापयितुं यौधेयादिग्रहणम्। तेन पार्श्वाद्यणः स्त्रियां

स्यात् । यौधेयी । शौक्रेयी । ११९८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे । (४—१—७८) त्र्यादीनामन्त्यमुत्तमम्, तस्य समीपमुपोत्तमम् । यावणिञौ विहितावनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङ् स्यात् । 'निर्दिश्यमानस्यादेशा भवन्ति' (प १३) इत्यणिञोरेव । पञ्चानि

भावः । नन्वत्र 'अतश्च:' इति अञो लुकि सत्यपि 'टिड्ढ–' इति ङीपि, शौक्रेयमीति सिद्धेरिह यौधेयादिग्रहणमनर्थकमित्यत आह—अतश्चेति लुकि ति उदात्तनिवृत्तीति । 'अनुदात्तस्य च यत्रोदात्तलोपः–' इत्येनन ङीबुदात्तः सिद्धान्ते त्वञन्तत्वाद् ङीनि आद्युदात्तत्वमिति भावः । अणिञो । त्र्यादीना स्यमुत्तममिति । तथा भाष्यादिति भावः । तस्य समीपमुपोत्तममिति सामीप्येऽव्ययीभाव इति भावः । गुरु उपोत्तमम् उत्तमसमीपवर्ति ययोरिति वि प्रातिपदिकादित्यधिकृतं षष्ठीद्विवचनेन विपरिणम्यते । उपोत्तमगुरुवर्णकयोः पदिकयोरिति लभ्यते । 'अणिञोः–' इत्यनेन प्रत्ययग्रहणपरिभाषया अणिञन्त ग्रहणम् । गोत्रे इत्येतद् अणिञोरन्वेति । ऋषेरविहितौ अनार्षौ । इदमपि अ विशेषणम् । स्त्रियामित्त्यधिकृतम् । तदाह—गोत्रे यावणिञावित्यादि आदेशः स्यादिति । स्थानषष्ठीनिर्देशादादेशत्वलाभः । ननु अणिञन्त ष्यङादेशोऽयमनेकाल्त्वात् सर्वादेशः स्यादित्यत आह—निर्दिश्यमानस्येति । च अणिञोरेवायमादेश इति भावः । 'ङिच्च' इत्यन्तादेश इति तु न युक्तम्, ङि

लुक् सिध्यति । तथा हि पर्शुः क्षत्रियो जनपदेन समानशब्दः । तस्यापत्यं 'द्वयञ्मगध–' इत्यण्, तस्य 'अतश्च' इति लुक् । पुनः पर्श्वादिलक्षणः स्वार्थिक तस्यापि लुकि 'ऊङुतः' पर्शूः । एवं रक्षसः क्षत्रियस्यापत्यं स्त्री रक्षाः । पूर्ववदण्‌ लुकि 'अत्वसन्तस्य–' इति दीर्घः । उक्तं च वार्तिककृता—'पार्श्वादिभ्यो लुग यौधेयादिप्रतिषेधो वा ज्ञापकः पार्श्वादिलुकः' इति । यौधेयीत्यादि । शुक्राया अपत्यं स्त्रीति विग्रहः । अणिञोः । उत्तममिति । अव्युत्पन्नं पदिकमिदम् । न तूच्छब्दात्तमप्, तद 'किमेत्तिङव्ययघात्–' इत्याम् न गोत्रे यावित्ति । 'अपत्याधिकारादन्यत्र लौकिकं गोत्रम्' इति नेह शास्त्रीयं तथा च 'अनार्षयोः' इति पर्युदासादेव सिद्धे गोत्रग्रहणमिह त्यक्तुं न चात्र गोत्रग्रहणसामर्थ्यात् शास्त्रीयमेव गोत्रं गृह्यत इति वाच्यम् । याज्ञदत्त्येत्यादीनामनन्तरापत्येऽपीष्यमाणत्वात् । अतएवानुपदं वक्ष्यति 'कुमु रपत्यं स्त्री कौमुदगन्ध्या' इति । इदं च कौस्तुभानुसारि व्याख्यानमत्रत्यमूलग्र 'दैवयज्ञि–' सूत्रस्थेन 'अगोत्रार्थमिदम्' इत्यादिमूलग्रन्थेन सह विरुध्यत इति स्फुटीभविष्यति । यद्यपि स्त्रीप्रत्ययाः प्रकृताः तथापि 'पत्युर्नो यज्ञसंयोगे' नकारस्येव ष्यङ आदेशत्वमेवोचितम् 'अणिञोः–' इति षष्ठीस्वरसादित्यभिप्रे ष्यङादेशः स्यादति । ष्यङः प्रत्ययत्वेऽपि लक्ष्यसिद्धिरप्रत्यूहेति मत्वा स्थितम् । नन्वयं 'ङिच्च' इत्यन्तादेशं बाधित्वा परत्वात्सर्वादेशः स्यात् । 'यङ्श्चाप्' इत्युक्तावप्यन्ते ... सानुबन्धस्य ...

'यङश्चाप्' (सू ५२८) । कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या । वाराह्या । अनार्षयोः किम्—वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोः किम्—औपगवी । जातिलक्षणो ङीष् । गोत्रे किम्—अहिच्छत्रे जाता आहिच्छत्री । ११९९ गोत्रावयवात् । (४-१-७९) गोत्रावयवा गोत्राभिमताः कुलाख्याः, ततो गोत्रे विहितयोरणिञोः

'ष्यङः सम्प्रसारणम्—' इत्यादौ चरितार्थत्वात् । कुमुदगन्धेरिति । कुमुदगन्ध इव गन्धो यस्येति विग्रहः । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च' इति बहुव्रीहिः, पूर्वखण्डे उत्तरपदस्य गन्धशब्दस्य लोपश्च । 'उपमानाच्च' इति इत्वम् । कुमुदगन्धेरपत्यं स्त्रीति विग्रहे अण् । 'यस्येति च' इकारलोपः, आदिवृद्धिः, कौमुदगन्धशब्दः, तत्र धकारादणोऽकार उत्तमः । तत्समीपवर्ती गुरुः गकारादकारः, 'संयोगे गुरु' इत्युक्तेः । नचानुस्वारधकारव्यवहितत्वात्कथमुत्तमसमीपवर्तित्वं गकारादकारस्येति वाच्यम्, 'येन नाव्यवधानं तेन व्यवहितेऽपि' इति न्यायेन हला व्यवधानस्यादोषत्वात् । नह्यणि परे अव्यवहितो गुरुः क्वचिदस्ति । एवं च गुरूपोत्तमं प्रातिपदिकं कौमुदगन्धेत्यणन्तम्, तदवयवस्य अणः ष्यङादेशे 'यङश्चाप्' इति चापि कौमुदगन्ध्याशब्द इत्यर्थः । इञन्तस्योदाहरति—वाराह्येति । वराहस्यापत्यं स्त्रीति विग्रहः, अत इञ्, अकारलोपः, वाराहिशब्दः । तत्र इकार उत्तमः । रेफादाकार उत्तमसमीपवर्ती गुरुः । इञ इकारस्य ष्यङादेशः, चाविति भावः । वासिष्ठी । वैश्वामित्रीति । ऋष्यणन्तावतौ । औपगवीति । अणन्तत्वेऽपि गुरूपोत्तमत्वाभावान्न ष्यङ । जातिलक्षण इति । 'गोत्रं च चरणैः सह' इति जातित्वम् । आहिच्छत्रीति । जातार्थे अणयम्, नतु गोत्र इति न ष्यङ् । नच ष्यङ्प्रत्यय एव कुतो न विधीयत इति वाच्यम्, तथा सति उदमेयस्यापत्यं स्त्री इति विग्रहे अत इञि ष्यङि चापि औदमेय्या, तस्या अपत्यं औदमेयेय इति न सिध्येत्, अस्यापत्यप्रत्ययत्वाभावेन यलोपाप्राप्तेरिति स्पष्टं भाष्ये । गोत्रावयवात् । गोत्रावयवशब्दं व्याचष्टे—गोत्रावयवा गोत्राभिमता इति । गोत्रं कुलम्

विशेषणार्थतया सप्रयोजनत्वादित्याशङ्क्याह—निर्दिश्यमानस्येति । षङाविताविति । अनुबन्धद्वयकरणं ञ्यङ इव ष्यङोऽपि 'यङश्चाप्' इत्यत्र सामान्यग्रहणार्थम् । न च 'ष्यङः संप्रसारणम्' इत्यत्र विशेषणार्थं तयोरुपयोगोऽस्ति । अन्यथा पाश्यापुत्रः पाश्यापतिरित्यत्र 'पाशादिभ्यो यः' इति यप्रत्ययेऽपि संप्रशारणप्रसङ्ग इति वाच्यम् । 'ष्यङः संप्रसारणम्' इत्येकानुबन्धेनापि तद्वारणात् । लोलूयापतिरित्यत्र त्वकारप्रत्ययेन व्यवधानात्संप्रसारणाभावः । कौमुदगन्धीपुत्र इत्यत्र त्वेकादेशस्य पूर्वान्तत्वेव ग्रहणान्नास्ति व्यवधानमिति संप्रसारणं सिध्यति । कौमुदगन्ध्येति । अणः ष्यङ् । वाराह्येति । इञः ष्यङ् । अणिञोः किम्, ऋतभागस्यापत्यमार्तभागी । बिदादित्वादञ् 'शार्ङ्गरवाद्यञः' इति ङीन् । 'टिड्ढा—' इत्यादिना ङीबिति तु वृत्तिकारः । 'अणिञोः—' इत्यत्र तु लौकिकं गोत्रं गृह्यते । 'गोत्रं च चरणैः—' इत्यत्र तु पारिभाषिकमेव गृह्यते । तेन जातित्वाभावान्ङीनः प्राप्तिर्नास्तीति स्थितस्य गतिमाहुः । गोत्रावयवात् । अवयवशब्दोऽप्रधानवाची' अवयवश्चासौ गोत्रं चेति कर्मधारयः,

स्त्रियां ष्यङादेशः स्यात् । अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । भौणि
१२०० कौडचादिभ्यश्च । (४-१-८०) स्त्रियां ष्यङ्प्रत्ययः स्यात् । अगु
त्तमार्थोऽनणिञन्तार्थश्चारम्भः । कौडचा । व्याडचा । गौकक्ष्या[1] । 'सूत युव
(ग सू ५५) सूत्या । 'भोज क्षत्रिये' (ग सू ५६) भोज्
१२०१ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम् । (४-१
एभ्यश्चतुर्भ्यः ष्यङ्वा । अगोत्रार्थमिदं गोत्रेऽपि परत्वात्प्रवर्तते । पक्षे

---

अभिमत प्रख्यातं याभिरिति विग्रहः । कुलप्रख्यातिकृत इत्यर्थः । कुलख्या
इति यावत् । तदाह—कुलाख्या इति । कुलम् आख्यायते व्यपदिश्यते आभि
कुलाख्याः । कुलनामानीत्यर्थः । पुणिकादिशब्दैर्हि कुलं व्यपदिश्यते—पु
वयम्, भुणिका वयमित्यादि । अवपूर्वकाद् 'यु मिश्रणे' इति धातोरुपसर्गवशेन प्र
त्यर्थकात् पचाद्यचि अवयवशब्दः । कुलस्यावयवः प्रख्यापकशब्दः कुलावयव इति
इति भावः । ननु पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह—अगुरूपोत्तमार्थ इ
गोत्रादवयुतं मिश्रितम् अनन्तरापत्यं तदर्थमित्यपि भाष्ये स्पष्टम् । एवं च
अपत्याधिकारबहिर्भूतेऽपि पारिभाषिकमेव गोत्रं गृह्यत इति भाष्यस्व
पौणिक्येति । पुणिकस्यापत्यं स्त्रीति विग्रहे अत इञन्तात् ष्यङि चाप् ।
भौणिक्या । मनुष्यनामत्वे तन्नामिकाणः ष्यङ् । कौडचादिभ्यश्च । 'प्रत्ययः
इति भाष्योक्तं पक्षान्तरमाश्रित्याह—ष्यङ्प्रत्यय इति । पूर्वेण सिद्धे कि
मिदमित्यत आह—अगुरूपोत्तमार्थोऽनणिञन्तार्थश्चेति । कौडचे
क्रोडस्यापत्यं स्त्रीति विग्रहे अत इञन्तात्ष्यङ्, चाप् । इह 'त्र्यादीनामन्त्यमु
इत्युक्तेर्न गुरूपोत्तमत्वम् । मनुष्यनामत्वे त्वण् । गौकक्ष्यशब्दो गर्गादियञन्तः
अनणिञन्तत्वेऽपि ष्यङ् । सूत युवत्यामिति । गणसूत्रमिदम् । सूत
युवत्यां ष्यङं लभत इत्यर्थः । सूत्येति । प्राप्तयौवनेत्यर्थः । जातौ तु सूता

---

निपातनाद् गोत्रशब्दस्य पूर्वनिपातः । गोत्राभिमता इति । गोत्रमित्येवमभि
गोत्रवाचित्वेन देशविशेषे प्रसिद्धाः, न तु प्रवराध्याये पठिता इत्यर्थः । प्रवरा
पाठाच्चाप्राधान्यम् । कुलाख्या इति । कुलमाख्यायते यैरिति कुलाख्याः पु
भुणिकमुखरप्रभृतयः तैर्हि कुलमाख्यायते 'पुणिका वयं गोत्रेण' 'भुणिका वयं गो
इति । तत इति । गोत्रावयवादित्यर्थः । कौडचादिभ्यश्च । पञ्चमीनिर्देशा
त्वमेवेहाश्रीयत इत्याह—ष्यङ प्रत्यय इति । क्रौडि, व्याडि, आपिशलि, गौ
इत्यादि । गौकक्ष्यशब्दो गर्गादियञन्तस्तदर्थमाह—अनणिञन्तार्थश्चेति । सू
गणसूत्रम् । सूतशब्दो ष्यङं लभते युवत्यां वाच्यायामित्यर्थः । सूत्येति । प
'यङश्चाप्' । अन्यत्र तु क्रियाशब्दाट्टाप् । सूतजातिवाचिनस्तु ङीप्, सू
भोजेति । इदमपि गणसूत्रम् । जातिलक्षणङीषोऽपवादः ष्यङ्, क्रियाश
टाबेव । भोजयतीति भोज्या । दैवयज्ञि । चतुर्भ्य इति । इञन्तेभ्य इति दै
देवा यज्ञा यष्टव्या यस्य स देयज्ञः । शुचिर्वृक्षो यस्य शुचिवृक्षः । सत्यमुग्र

---

१ नास्ति क, ।

मनुष्य-' (सू ५२०) इति ङीष्। दैवयज्ञ्या, दैवयज्ञी इत्यादि।

इत्यपत्याधिकारप्रकरणम्।



प्रोजक्षत्त्रिये। इदमपि गणसूत्रम्। दैवयज्ञि। अगोत्रार्थमिति। अनन्तरापत्यार्थमित्यर्थः। प्रवर्तत इति। विकल्प इति शेषः। पक्ष इति। ष्यङभावपक्ष इत्यर्थः। दैवयज्ञीति। देवयज्ञस्यापत्यं स्त्री विग्रहे अत इञन्तात् ष्यङ्विकल्पः। इत्यादीति। शुचिवृक्षस्यापत्यं स्त्री शौचिवृक्ष्या, शौचिवृक्षी। सत्यमुग्रः, निपातनान्मुम्। सत्यमुग्रस्यापत्यं स्त्री सात्यमुग्र्या, सात्यमुग्री। काण्डेन विद्धः काण्डेविद्धः। निपातनादेत्वम् काण्डेविद्धस्यापत्यं स्त्री काण्डेविद्ध्या, काण्डेविद्धी। काण्ठेविद्धीति पाठान्तरम्। [1]'कण्ठे विद्धं वेधो यस्यापत्यम्, काण्ठेविद्धिः।

इति श्री वासुदेव दीक्षितविदुषा विरचितायां सिद्धान्तकौमुदी-
व्याख्यायां बालमनोरमायामपत्याधिकारप्रकरणम्।

---

सत्यमुग्रः। निपातनाद्विशेष्यस्य पूर्वनिपातो मुमागमश्च। काण्डेन विद्धः काण्डेविद्धः। 'कर्तृकरणे कृता-' इति समासः। निपातनात्काण्डशब्दस्य एकारः। पाठान्तरे कण्ठे विद्धमस्य, कण्ठे वा विद्धः कण्ठेविद्धः। 'अमूर्धमस्तकात्-' इत्यलुक्। एभ्यः सर्वेभ्योऽपत्ये 'अत इञ्'। गोत्रेऽपि। परत्वादिति। तथा चोभयत्र विभाषेति भावः। अत्रेदमवधेयम्—'अणिञोः-' इति सूत्रे यदि शास्त्रीयं गोत्रं गृह्यते तदा 'अगोत्रार्थमिदम्' इत्यादिग्रन्थः स्वरसतः संगच्छते। यदि तु लौकिकं गोत्रमेव तत्र गृह्यते तदा 'अणिञोः-' इति नित्ये प्राप्ते विकल्पार्थमिदमित्येव व्याख्यातुमुचितमिति।

इति तत्त्वबोधिन्यामपत्याधिकारप्रकरणम्।

---

१ कण्ठेविद्धमित्यारभ्य काण्ठेविद्धिरितियावत् पाठः क्वचित् पुस्तके नास्ति।

# अथ तद्धितेषु चातुरर्थिकप्रकरणम् । २७ ।

१२०२ तेन रक्तं रागात् । (४-२-१) रज्यतेऽनेनेति रागः, ... रक्तं वस्त्रं काषायम् । माञ्जिष्ठम् । रागात् किम्–देवदत्तेन रक्तं वस्त्रम् । ... लाक्षारोचनाट्ठक् । (४-२-२) लाक्षिकः, रौचनिकः । 'शकलकर्दमा... मुपसंख्यानम् ।' (वा २६७९) । शाकलिकः । कार्दमिकः । 'आम्यां... इति वृत्तिः । शाकलः । कार्दमः । 'नील्या अन्' (वा २६८०) नील्या ... नीलम् । 'पीतात्कन्' (वा २६८१) । पीतकम् । 'हरिद्रामहारजनाभ्या... (वा २६८२) । हारिद्रम् । महारजनम् । १२०४ नक्षत्रेण युक्तः का... (४-२-३) पुष्येण युक्तं पौषमहः । पौषी रात्रिः । १२०५ लुबवि...

---

अथ तद्धितचातुरर्थिकप्रकरणं निरूप्यते । तेन रक्तं ... रज्यत इति । रज्यते वर्णान्तरं प्राप्यते अनेनेत्यर्थे रञ्जेः करणे घञि कृते ... च भावकरणयोः' इति नलोपे 'चजोः कुघिण्ण्यतोः' इति कुत्वे उपधावृद्धौ राग... इत्यर्थः । तथा च रागशब्देन रञ्जनसाधनं द्रव्यमुक्तं भवति । तेनेति सामान्यनि... तथाच तेन रक्तं वर्णान्तरं प्राप्तमित्यर्थे रागाद् रञ्जनद्रव्यवाचकात् तृतीयान्ता... स्यादित्यर्थः, 'प्राग्दीव्यतोऽण्' इत्यधिकारात् । कषायेणेति । कषायो ... विशेषो रञ्जनद्रव्यम्, तेन रक्तं वर्णान्तरं प्राप्तं काषायमित्यर्थः । माञ्जिष्ठमि... मञ्जिष्ठा नाम रञ्जनद्रव्यविशेषः लाक्षारोचनाट्ठक् । अणोऽपवादः । ला... इति । पट इति शेषः । लाक्षया रक्त इति विग्रहः । रौचनिक इ... रोचनया रक्त इति विग्रहः । शाकलिक इति । शकलं रागद्रव्यवि... वृत्तिरिति । भाष्ये तु नैतद् दृष्टम् । नील्या अनिति । वक्तव्य इति ... अणोऽपवादः । नीली ओषधिविशेषः । 'पीतात्कन्' अणोऽपवादः । पीतं ... तालकादि द्रव्यम् । हरिद्रामहेति । अणोऽपवादः । स्वरे विशेषः । हरिद्रा प्र... महारजनं नाम रागद्रव्यविशेषः । इति रक्ताधिकारः ।

नक्षत्रेण । अस्मिन्नर्थे प्रथमोच्चारिताद् नक्षत्रवाचकाच्छब्दात् प्राग्दी... तीयाः प्रत्यया यथायथं स्युरित्यर्थः । नक्षत्रयुक्तश्चन्द्रमाः नक्षत्रशब्देन विवक्षि... पुष्येण युक्तमिति । पुष्ययुक्तचन्द्रमसा युक्तमित्यर्थः । पौषम् अह... पुष्यशब्दादणि 'तिष्यपुष्ययोर्नक्षत्राणि यलोपः' इति यलोपः । पौषी रात्रि... पुष्ययुक्तचन्द्रमसा युक्तेत्यर्थः । अणि यलोपे 'टिड्ढ–' इति ङीप् । नक्षत्रे...

---

तेन रक्तम् । तृतीयान्तात्समर्थाद्यथाविहितं प्रत्ययाः स्युः । र... नेनेतीति । बाहुलकात्करणे घञ् । राग इति । रञ्जकद्रव्यमित्यर्थः । ... वर्णान्तरापादनमिह रञ्जेरर्थः । लाक्षारोचनात् । वृत्तिकृता तु वार्तिकस्थौ ... कर्दमौ सूत्रे प्रक्षिप्तौ । 'शकलं त्वचि खण्डे च रागवस्तुनि वल्कले' इति वि... वृत्तिकार इति । भाष्ये तु नैतद् दृष्टमिति भावः । नील्येति । नीली ओ... विशेषः । अणपवादोऽयम् । नक्षत्रेण । नक्षत्रवाचकाः शब्दा वृत्तिविषये ...

(४-२-४) पूर्वेण विहितस्य लुप्स्यात् षष्टिदण्डात्मककालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः। कथं तर्हि 'पुष्ययुक्ता पौर्णमासी पौषी' इति। 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' (सू १२२५) इति निर्देशेन पौर्णमास्यामयं लुब्नेति ज्ञापितत्वात्। श्रवणशब्दात्तु अत एव लुब् युक्तवद्भावाभावश्च। अबाधकान्यपि निपातनानि। श्रावणी। १२०६ संज्ञायां श्रवणाश्वत्थाभ्याम्। (४-२-५) विशेषार्थोऽयमारम्भः। श्रवणा रात्रिः। अश्वत्थो मुहूर्तः। संज्ञायां किम्-श्रावणी, आश्वत्थी। १२०७ द्वन्द्वाच्छः। (४-२-६) नक्षत्रद्वन्द्वा-

---

किम्? चन्द्रेण युक्ता रात्रिः। कालः किम्? पुष्येण युक्तश्चन्द्रमाः। लुबविशेषे। षष्टिदण्डेति। षष्टिघटिकापरिच्छिन्ने काले एकैकस्मिन् एकैकेन नक्षत्रेण चन्द्रमा युज्यत इति स्थितिः। तस्य षष्टिदण्डस्य कालस्य अवान्तरविशेषः अहर्वा रात्रिर्वेति न गम्यते चेदित्यर्थः। अद्य पुष्य इति। अद्येत्यव्ययम् अहोरात्रवाचि अधिकरणशक्तिप्रधानम्, इह तु अधिकरणशक्तिविनिर्मुक्तः अहोरात्रकालो विवक्षितः। तथा च अयमहोरात्रः पुष्ययुक्तचन्द्रमसा युक्त इत्यर्थः। अहर्वा रात्रिर्वेति विशेषानवगमादणो लुप्। कथं तर्हीति। पौर्णमास्याः षष्टिदण्डात्मिकाया अवान्तरविशेषानवगमादिह लुप् स्यादित्याक्षेपः। समाधत्ते—विभाषेति। फाल्गुनीकार्तिकीचैत्रीशब्दानां नक्षत्राण्विशिष्टानां पौर्णमास्यां प्रयोगदर्शनेन पौर्णमास्यां नक्षत्रयुक्तायां 'लुबविशेषे' इत्ययं लुब् नेति ज्ञापितत्वात् पौषी पौर्णमासीत्यत्र न लुबित्यर्थः। ननु तर्हि श्रवणयुक्तपौर्णमास्यां लुबभावात् कथं श्रवणेति निर्देश इत्यत आह—श्रवणशब्दात्त्वत एव लुबिति। श्रवणेति निपातनादेव पौर्णमास्यां लुबित्यर्थः। ननु 'कृत्तिका श्रवणः पुष्यः चित्रास्वात्योर्यदन्तरम्।' इत्यादौ श्रवणशब्दस्य पुंल्लिङ्गत्वदर्शनेन तस्मादणो लुपि कृते 'लुपि युक्तवद्व्यक्तिवचने' इति पुंल्लिङ्गत्वावश्यंभावाच्छ्रवणेति कथं स्त्रीलिङ्गतेत्यत आह—युक्तवद्भावाभावश्चेति। निपातनादिति शेषः। ननु तर्हि श्रावणीति नैव स्यादित्यत आह—अबाधकान्यपि निपातनानीति। इयं परिभाषा वृत्तौ स्थिता। सर्वादिसूत्रभाष्ये तु 'बाधकान्येव निपातनानि' इत्युक्तम्। संज्ञायाम्। श्रवणाश्वत्थाभ्यां परस्य नक्षत्रप्रत्ययस्य लुप् स्यात्संज्ञायामित्यर्थः। ननु

---

चन्द्रमसमभिधानाः प्रत्ययं लभन्ते। पुष्येणेति। पुष्यसमीपस्थेन चन्द्रमसेत्यर्थः। एवं च पौषमहः, इत्यादिव्यवहारः सङ्गच्छते। सर्वेषामप्यह्नां पुष्ययोगसत्त्वेऽपि तत्समीपस्थचन्द्रमसा योगस्यासार्वत्रिकत्वात्। नक्षत्रेणेति किम्, चन्द्रेण युक्ता रात्रिः। कालः किम्, पुष्येण युक्तश्चन्द्रः। लुबविशेषे। पूर्वसूत्रस्यानुवर्तनादिह 'नक्षत्रेण युक्तस्य कालस्याविशेषे गम्ये' इत्यर्थः उपलभ्यते तदाह—षष्टिदण्डेति। 'अद्य पुष्यः' इत्युक्त्या 'न ह्यो, न श्वः' इति विशेषे गम्यमानेऽपि अहोरात्रात्मककालस्यावान्तरविशेषानवगमाल्लुब् भवत्येवेति भावः। 'अविशेषे' इत्यत्र प्रसज्यप्रतिषेधाश्रयणात् 'पौषोऽहोरात्रः' इत्यत्र लुब् न भवति, षष्टिदण्डसमुदायरूपकालस्य प्रतीतावप्यवयवद्वयात्मकस्य विशेषस्य प्रतीतेरित्याशयेनाह—विशेषश्चेन्नेति। अद्य पुष्य इति। 'मूलेनावाहयेद्देवीं श्रवणेन' इत्यप्युदाहरणं बोध्यम्। द्वन्द्वाच्छः।

युक्ते काले छः स्याद्विशेषे सत्यसति च। तिष्यपुनर्वसवीयमहः। राधानु... रात्रिः १२०८ दृष्टं साम। (४-२-७) तेनेत्येव। वसिष्ठेन दृष्टं ... साम। 'अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः' (वा २६९०)। उशनसा दृष्ट... औशनसम्। १२०९ 'कलेढंक्। (४-२-८) (वा २६८९)। ... दृष्टं कालेयं साम। १२१० वामदेवाड्ड्यड्ड्यौ। (४-२-९) वा... दृष्टं साम वामदेव्यम्।

---

'लुबविशेषे' इत्येव सिद्धे किमर्थमिदमित्यत आह—विशेषार्थोऽयमारम्भ इ... श्रवणा रात्रिरिति। श्रवणयुक्तचन्द्रमसा युक्ता रात्रिरित्यर्थः। 'विभाषा फा... श्रवणा—' इति सूत्रे श्रवणेति निर्देशस्य सामान्यापेक्षत्वाद् अपौर्णमास्... युक्तवद्भावो नेति विज्ञायते। अतः श्रवणा रात्रिरिति सिद्धमिति प्रकृतसूत्रे ... स्पष्टम्। अश्वत्थो मुहूर्त इति। अश्वत्थो नाम अश्विनीनक्षत्रम्। तेन युक्तः ... मुहूर्तविशेषो ज्यौतिषे प्रसिद्धः। द्वन्द्वाच्छः। तिष्यपुनर्वसवीयमहरिति... तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू, ताभ्यां युक्तमहरिति विग्रहः। छस्य ईयादेशे ... राधानुराधीया रात्रिरिति। राधेति विशाखानक्षत्रमुच्यते। राधा च अनुराधा... राधानुराधाः, तद्युक्ता रात्रिरित्यर्थः। दृष्टं साम। तेनेत्यवेति। अनुवर्तत एव... तेन दृष्टं सामेत्यर्थे तृतीयान्तादणादयः स्युरित्यर्थः। अस्मिन्नर्थ इति। दृष्टं ... इत्यर्थे यः अण् स डिद्वेत्यर्थः। औशनमिति। अणि टिलोपपक्षे रूपम्। कले... वामदेवाड्ड्यड्ड्यौ। वामदेव्यमिति। डित्त्वाट्टिलोपः, तित्त्वं स्वरार्थम्। ... 'यस्येति च' इति लोपेन सिद्धे किमर्थमिह डित्करणमिति चेत्, सत्यम्—... विधौ 'ययतोश्चातदर्थे' इति नञः परस्य ययदन्तस्यान्तोदात्तस्वरविधौ ग्रहणं ... स्यात्, तदभावार्थं डित्करणम्। डित्करणे सति तु स्वरविधावनयोर्नग्रहणम्, 'नि... वन्धकग्रहणे सति न सानुबन्धकस्य ग्रहणम्' इति परिभाषया 'तदनुबन्धक... सति नातदनुबन्धकस्य' इति परिभाषया च तन्निवृत्तिर्भवति। एते तु परिभाषे ...

---

विशेषे उदाहरणमाह—तिष्येत्यादि। अविशेषे तूदाहर्तव्यम् 'अद्य राधानुरा... धीयम्' इति। न चात्र 'लुबविशेषे' इति अण इव छस्यापि लुप्स्यादिति वाच्यम्... मध्येऽपवादन्यायरीत्या पूर्वोपस्थितस्याण एव तत्प्रवृत्तेः। यत्तु 'लुपं परत्वाद्... इति वृत्तिकृतोक्तम्। तन्न। द्वयोर्युगपत्प्राप्त्यभावात्। दृष्टं साम। तृतीयान्ताद् ... दृष्टमित्यर्थेऽणादयः स्युर्यद्दृष्टं तच्चेत्साम। अस्मिन्नर्थ इति। तथा च ... वार्तिकम्—'दृष्टे सामनि जाते वाप्यण् डिद् द्विर्वा विधीयते। तीयादीकक् ... विद्याया गोत्रादङ्कवदिष्यते।' इति जातेऽर्थे यो द्विरण् स च वा डिदित्यर्थः... शतभिषजि जातः शताभिषः, शातभिषजः। इह हि 'प्राग्दीव्यत—' इति प्राप्... कालाट्ठञा बाधितः, स च 'सन्धिवेलादि—' सूत्रेण प्रतिप्रसूयते इत्ययं द्विरण्... तीयादीति। तीयादीकक् स्वार्थे भवतीत्यर्थः। द्वैतीयकः, तार्तीयकः। न वि... इति। विद्यावाचकात्तीयान्तादीकङ् न भवतीत्यर्थः। द्वितीया विद्या। गोत्रादङ्कवदि...

---

१ इदं वार्तिकमिति शेखरे।

'सिद्धे यस्येति लोपेन किमर्थं ययतौ ङितौ ।
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥' इति भाष्यम् ।

१२११ परिवृतो रथः । (४-२-१०) वस्त्रैः परिवृतो वास्त्रो रथः । रथः किम्—वस्त्रेण परिवृतः कायः । समन्ताद्वेष्टितः परिवृत उच्यते । तेनेह न—छात्रैः परिवृतो रथः । १२१२ पाण्डुकम्बलादिनिः । (४-२-११) पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली । पाण्डुकम्बलशब्दो राजास्तरणवर्णकम्बलस्य वाचकः । मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम् । १२१३ द्वैपवैयाघ्रादञ् । (४-२-१२) द्वीपिनो विकारो द्वैपम् । तेन परिवृतो द्वैपो रथः । एवं वैयाघ्रः ।

---

ज्ञाप्यते । तथा च अवामदेव्यमित्यत्रायं स्वरो न भवति । एतत्संग्राहकं भाष्यस्थं श्लोकं पठति—सिद्धे यस्येत्यादि । अत्र पूर्वार्धमाक्षेपपरम् । 'यस्य–' इति लोपेन सिद्धे यतौ किमर्थं ङितौ कृतावित्यर्थः । ग्रहणमिति । वामदेव्यशब्दस्य नञ्स्वरे नञाश्रयस्वरविधौ अतदर्थे 'ययतोश्चातदर्थे' इति सूत्रे अनयोर्ड्यड्ड्योग्रहणं मा भूदित्येतदर्थं ङित्करणमित्यर्थः । परिवृतो रथः । तेनेत्यनुवर्तते । तेन परिवृतो रथ इत्यर्थे तृतीयान्तादणादयः स्युरित्यर्थः । ननु छात्रैः परिवृतो रथ इत्यत्रापि स्यादित्यत आह—समन्ताद्वेष्टितः परिवृत इत्युच्यत इति । रथस्य समन्तादाच्छादनार्थं यद्वस्त्रादिकं रथावयवभूतं तद्वाचकादेवेत्याशयः, एकान्तग्रहणमिति वार्तिकात् । पाण्डुकम्बलादिनिः । 'तेन' इति परिवृतो रथ इति चानुवर्तते । इनिप्रत्यये नकारादिकार उच्चारणार्थः । ननु 'अत इनिठनौ' इति मत्वर्थीयेन इनैव सिद्धे किमर्थमिदमित्यत आह—अणो निवृत्त्यर्थमिति । द्वैपवैयाघ्रादञ् । 'तेन' इति परिवृतो रथ इति चानुवर्तते तृतीयान्ताद् द्वैपशब्दाद्वैयाघ्रशब्दाच्च परिवृतो रथ इत्यर्थे अञ् स्यादित्यर्थः अणोऽपवादः । स्वरे विशेषः । द्वीपिन इति । द्वीपी व्याघ्रः, तस्य विकारः चर्मेत्यर्थे 'प्राणिरजतादिभ्यः' इत्यञि टिलोपे द्वैपशब्द इत्यर्थः । एवं वैयाघ्र इति । व्याघ्रस्य

---

गोत्रप्रत्ययान्तादङ्के यः प्रत्ययः स दृष्टे सामान्यपि भवति । औपगवेन दृष्टमौपगवकम् । इह 'गोत्रचरणाद् वुञ्' इति वुञ् । वामदेवात् । ग्रहणं माऽतदर्थ इत्यादि । अतदर्थे 'ययतोश्चातदर्थे' इति विहिते नञ्स्वरे नञाश्रितस्वरे ङ्यड्ड्यतोर्ग्रहणं मा भूदित्यर्थः । 'ययतोश्च–' इति सूत्रेण विधीयमानं नञः परस्य यत्पदन्तस्योत्तरपदस्यान्तोदात्तत्वं वामदेव्यशब्दे मा भूत् । किंतु——अव्ययपूर्वपदस्वर एव यथा स्यादित्येतदर्थं ङित्करणमिति फलितोऽर्थः । न च कृतेऽपि ङित्त्वे 'ययतोः–' इत्यस्य प्रवृत्तिः कुतो नेति शङ्क्यम् । 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषयोः सत्त्वात् । इमे च परिभाषे इहैव ङित्त्वेन ज्ञाप्यते । तत्राद्यायाः प्रयोजनं 'पूरणगुण–' इति सूत्रे तव्यग्रहणे तव्यतोऽग्रहणम् । द्वितीयस्यास्तु अङ्ग्रहणे चङोऽग्रहणम् । 'श्वयतेरः' अङि परे इति शेषः । अश्वत् । चङि परे तु न, अशिश्वियत् । परिवृतो । तृतीयान्तात्परिवृत इत्यर्थेऽणादयः स्युर्यः परिवृतः स चेद्रथो भवति । रथाच्छादनार्थं यद्वस्त्रकम्बलादिकं तत एव सर्ववेष्टनं भवति, न तु च्छत्रादिभ्य इत्याशयेनाह—समन्ताद्वेष्टित इति । परिः सर्वतोभावे

१२१४ कौमारापूर्ववचने । (४—२—१३) कौमार इत्यविभक्तिको नि अपूर्वत्वे निपातनमिदम् । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः । अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या । १२१५ तत्रोद्धृतममत्रे (४—२—१४) शरावे उद्धृतः, शाराव ओदनः । उद्धरतिरिहोद्धर निधाने वर्तते । तेन सप्तमी । उद्धृत्य निहित इत्यर्थः । १२१६ स्थ च्छयितरि व्रते । (४—२—१५) तत्र इत्येव । समुदायेन चेद् व्रतं स्थण्डिले शेते स्थाण्डिलो भिक्षुः । १२१७ संस्कृतं भक्षाः (४—२— सप्तम्यन्तादण्स्यात्संस्कृतेऽर्थे, यत्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रे संस्कृता यवाः । अष्टसु कपालेषु संस्कृतोऽष्टाकपालः पुरोडाशः । १२१८ शूलोखा

---

चर्म वैयाघ्रम् । अञ् 'न य्वाभ्याम्—' इत्यैच् । तेन परिवृतो वैयाघ्र इति कौमारापूर्ववचने । 'तेन' इति परिवृतो रथ इति च निवृत्तम् । अविभक्तिक लुप्तप्रथमाक इति भावः । अपूर्वशब्दो भावप्रधान इत्याह—अपूर्वत्वे नि मिदमिति । न पूर्वः पतिर्यस्याः सा अपूर्वपतिः, तां कुमारीमुपयतवान् पति द्वितीयान्तात् कुमारीशब्दादण् स्यादित्येकोऽर्थः । कुमारी अपूर्वं पतिमुपपन्नेत्यर्थे न्तात्कुमारीशब्दादण् स्यादित्यन्योऽर्थः । आद्ये उदाहरति—अपूर्वपतिमि द्वितीये उदाहरति—पद्वेत्यादि । आद्ये उपयन्तरि प्रत्ययः । द्वितीये उप स्वार्थे प्रत्यय इति विवेकः । तत्रोद्धृतम् । तत्रोद्धृतमित्यर्थे अमत्रवाचक सप्तम्यन्तात् प्रत्ययः स्यादित्यर्थः । अमत्रं भाजनं शरावादि । ननु उद्धरणे पूर्व शरावस्यापादानत्वात् कथं सप्तमीत्यत आह—उद्धरतिरिहेति । 'सास्मिन्पौर्ण इत्यतः प्राक् 'तत्र' इत्यनुवर्तते । स्थण्डिलाच्छयितरि । स्थण्डिलशब्दात्सप्त व्रतनिमित्तकशयनकर्तरि वाच्ये प्रत्ययः स्यादित्यर्थः । संस्कृतं भक्षाः । इति भक्षाः, कर्मणि घञ् । तत्रेत्यनुवर्तते । तदाह—सप्तम्यन्तादिति । बहुवचनं च सामान्याभिप्रायम्, 'जात्याख्यायामेकस्मिन्बहुवचनम्-' इत्युक्तेरित्य यत्संस्कृतं भक्षाश्चेत्ते स्युरिति । संस्कारो नाम पाकादिना गुणविशेषा अष्टाकपाल इति । 'तद्धितार्थ—' इति समासः । भक्षा इति किम् ? पुष्पपुटे

---

वर्तत इति भावः । कौमारा । तेनेति निवृत्तम् । 'अपूर्व' इति भावप्रधानो इत्याह—अपूर्वत्व इति । अपूर्वत्वं तु स्त्रिया एवेष्यते, पुरुषस्तु अपूर्वभा वा मा वेत्यनाग्रहः । अपूर्वपतिमिति । न पूर्वः पतिर्यस्या इति बहु कौमारः पतिरिति । द्वितीयान्तात्कुमारीशब्दादुपयन्तरि प्रत्ययः । कौमारी इह कुमारीशब्दात्प्रथमान्तात्स्वार्थे प्रत्ययः, 'टिड्ढाण—' इति ङीप् । तत्रोद्धृ 'सास्मिन्पौर्णमासी—' इति सुत्रात्प्राक् 'तत्र' इत्यधिकारः । पात्रवाचिभ्यः न्तेभ्य उद्धृतमित्यर्थे यथाविहितं प्रत्ययाः स्युः । शाराव इति । भुक्तो इत्यर्थे इति वृत्तिकृत् । अवशिष्ट इति तदर्थः । 'उच्छिनष्टि, न सर्वं जुहोति' कल्पसूत्रव्यवहारात् । सप्तमीति । निधानक्रियापेक्षया अधिकरणत्वादिति स्थण्डिलात् । व्रतं शास्त्रेण विहितो नियमः तस्मिन्समुदायेन गम्ये सप्तम्य

(४—२—१७) अणोऽपवादः। शूले संस्कृतं शूल्यं मांसम्। उखा पात्रविशेषः। तस्यां संस्कृतमुख्यम्। १२१९ दध्नष्ठक्। (४—२—१८) दध्नि संस्कृतं दाधिकम्। १२२० उदश्वितोऽन्यतरस्याम्। (४—२—१९) ठक् स्यात्। पक्षेऽण्। १२२१ इसुसुक्तान्तात्कः। (७—३—५१) इस् उस् उक् त् एतदन्तात्परस्य ठस्य कः स्यात्। उदकेन श्वयति वर्धते इत्युदश्वित्। तत्र संस्कृतः, औदश्वित्कः, औदश्वितः। इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह। आशिषा चरत्याशिषिकः। उषा चरति औषिकः। 'दोष उपसंख्यानम्' (वा ५०५१) दोष्यं

---

वस्त्रम्। शूलोखाद्यत्। समाहारद्वन्द्वात्पञ्चमी। 'तत्र' इति 'संस्कृतं भक्षा' इति चानुवर्तते। सप्तम्यन्ताच्छूलशब्दादुखाशब्दाच्च 'संस्कृतं भक्षाः' इत्यर्थे यत् स्यादित्यर्थः। उखा पात्रविशेष इति। 'पिठरं स्थाल्युखा कुण्डम्' इत्यमरः। दध्नष्ठक्। सप्तम्यन्ताद्दधिशब्दात् संस्कृतं भक्षा इत्यर्थे ठक् स्यादित्यर्थः। अणोऽपवादः। दाधिकमिति। ठकि इकादेशे 'यस्येति च' इति इकारलोपः। इह दध्नि अधिकरणे संस्कारो लवणादिना भवति। प्राग्वहतेरित्यत्र तु 'संस्कृतम्' इति तृतीयान्ताद् ठग्वक्ष्यते। उदश्वितोऽन्यतरस्याम्। ठक् स्यादिति। शेषपूरणमिदम्। उक्तविषये उदश्विच्छब्दाट्ठग्वा स्यादित्यर्थः। इसुसुक्तान्तात्कः। इसुसुक्ताः अन्ता यस्येति विग्रहः। तकारादकार उच्चारणार्थः। ठस्य कः स्यादिति। ठकि ककार इत्, अकार उच्चारणार्थः, ठकारस्य शिष्टस्य ककार आदेश इति 'ठस्येकः' इत्यत्रोक्तम्। श्वयतीत्यस्य विवरणम्—वर्धते इति। 'टु ओ श्वि गतिवृद्ध्योः' इति धातुरिह वृद्ध्यर्थक इति भावः। उदश्विदिति। क्विपि तुक्। 'उदकस्योदः संज्ञायाम्' इत्युदादेशः। 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इत्यमरः। प्रतिपदोक्तयोरिति। इस्प्रत्ययस्य उस्प्रत्ययस्य च उणादौ प्रतिपदोक्तयोरिह ग्रहणमित्यर्थः। यथा सार्पिष्कः, धानुष्कः इति। आशिषिक इति। चरतीति ठक्। शासुधातोः क्विपि 'आशासः क्वौ—' इत्युपधाया इत्वम्। उषा चरति औषिक इति। वसधातोः क्विपि सम्प्रसारणे उषेति तृतीया-

---

विहितः प्रत्ययो भवति शयितर्यर्थे। अष्टाकपाल इति। 'द्विगोर्लुगनपत्ये' इत्यणो लुक्। शूलोखात्। 'संस्कृतं भक्षाः' इत्यनुवर्तते। कथम् 'उख्योग्निः' इति। न ह्यसौ भक्ष इति चेत्। अत्राहुः—दिगादित्वाद्भावार्थे यदिति। दध्नष्ठक्। दध्नीति। संस्कारस्त्विह लवणादिना, दधि त्वधिकरणमात्रम्। यस्तु 'प्राग्वहतेः' इत्यत्र 'संस्कृतम्' इति ठग्वक्ष्यते स तृतीयान्ताद्बोध्यः। तेन दध्ना संस्कृतमपि दाधिकमेव। इसुसुक्तान्तात्। 'तात्' इत्युक्तेऽप्यङ्गविशेषणेनैव तान्तादिति लब्धे अन्तग्रहणं प्रत्ययोपदेशकाले यस्तान्तस्तस्मात्परस्य ठस्य कादेशो यथा स्यादित्येवमर्थम्। तेन 'माथितिकः' इत्यत्र ठस्य इकादेशो 'यस्य—' इति लोपे च कृते तान्तत्वेऽपि इकस्य कादेशो न भवतीति 'ठस्येकः' इति सूत्रे कैयटः। संनिपातपरिभाषयैव इकस्य कादेशो न स्यादित्यन्तग्रहणं त्यक्तुं शक्यमित्यन्ये। उदश्विदिति। श्वयतेः क्विपि तुक्। 'उदकस्योदः—' इत्युदादेशः। इहैव निपातनात्संप्रसारणाभावः। सास्मिन्। सेति

चरति दौष्कः। १२२२ क्षीराड्ढञ्। (४—२—२०) अत्र संस्कृतम् सम्बध्यते, न तु भक्षा इति। तेन यवाग्वामपि भवति। क्षैरेयी। सास्मिन्पौर्णमासीति । ( ४-२-२१ ) इतिशब्दात् 'संज्ञायाम्' लभ्यते। पौषी पौर्णमास्यस्मिन्पौषो मासः। १२२४ आग्रहायण्यश्वत्थाट्ठक् (४-२-२२) अग्रे हायनमस्या इत्याग्रहायणी । प्रज्ञादेराकृतिगणत्वात् 'पूर्वपदात्संज्ञायाम्–' (सू ८५७) इति णत्वम् । आग्रहायणी पौर्णमास्य आग्रहायणिको मासः। अश्वत्थेन युक्ता पौर्णमास्यश्वत्थः । निपातनात्पौर्णमा मपि लुप् । आश्वत्थिकः । १२२५ विभाषा फाल्गुनीश्रवणाकार्ति चैत्रीभ्यः। (४-२-२३) एभ्यष्ठग्वा। पक्षेऽण् । फाल्गुनिकः, फाल्गुनो मासः । श्रावणिकः, श्रावणः । कार्तिकिकः । कार्तिकः । चैत्रिकः, चै

---

न्तम्। 'शासिवसिघसीनां च' इत्युभयत्र षत्वम् । दोष इति। दोष ठस्य कः स्यादित्यर्थः । दौष्क इति। तरतीति ठक् । क्षीराड्ढञ् । क्षैरे क्षीरे संस्कृता यवागूरित्यर्थः। भक्षग्रहणानुवृत्तौ त्विह न स्यात्, यवा पेयत्वेन खाद्यत्वाभावात्। सास्मिन्पौर्णमासीति। 'तत्र' इति, 'संस्कृतं इति च निवृत्तम्। सा पौर्णमासी अस्मिन्नित्यर्थे प्रथमान्तात्प्रत्ययः स्यादि इतिशब्दादिति । एतच्च भाष्ये स्थितम्। पौषीति। पुष्येण युक्ता पौर्णमासी, सा यस्मिन्मासे स पौषो मासः। पौषीशब्दादणि 'यस्येति च' इकारलोपः। एवं मघाभिर्युक्ता पौर्णमासी माघी, सा यस्मिन्स माघो मासः। फाल्गुन इत्यादि। संज्ञायां किम् ? पौषी पौर्णमासी अस्मिन्पञ्चदशरात्रे। आग्र ण्यश्वत्थाट्ठक् । पूर्वसूत्रविषये आग्रहायणीशब्दादश्वत्थशब्दाच्च ठक् दित्यर्थः । अणोऽपवादः । हायनमिति । संवत्सर इत्यर्थः । 'संव वत्सरोऽब्दो हायनोऽस्त्री' इत्यमरः। यस्या ऊर्ध्वं संवत्सरस्यारम्भः सा पौर्ण आग्रहायणीत्यर्थः । तर्हि आग्रहायणेति स्यादित्यत आह—प्रज्ञादेरिति। 'प्र दिभ्यश्च' इति स्वार्थे अणि 'टिड्ढ–' इति ङीबित्यर्थः। अश्वत्थेनेति। नीनक्षत्रेणेत्यर्थः । अश्वत्थ इति। नक्षत्राणः 'लुबविशेषे' इति लुबिति ननु 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' इति निर्देशेन पौर्णमास्यां विशेषे, इत्यस्याप्रवृत्तेरुक्तत्वात् कथमिह लुबित्यत आह—निपातनात्पौर्ण मपि लुबिति । तथा च पौर्णमास्यां लुब् नेति ज्ञापनमेतद्व्यतिरिक्तविषय भावः । विभाषा फाल्गुनी । एभ्यष्ठग्वेति । 'सास्मिन्–' इत्यनु इति शेषः । फाल्गुनिकः फाल्गुनो वा मास इति । फाल्गुनी पौर्ण स्मिन्निति विग्रहः। एवं श्रावणिक इत्यादि। इति युक्ताद्यर्थकाः।

---

प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे प्रत्ययः स्याद्यः प्रथमान्तार्थः स चेत्पौ भवति। इति शब्दादिति। स हि लौकिकीं विवक्षामनुसारयति। वृत्ति सूत्रे एव 'संज्ञायाम्' इति प्रक्षिप्तम्। पौर्णमासीति। पूर्णो मासोऽस्यां तिथ बहुव्रीहौ प्रज्ञादित्वात्स्वार्थिकोऽणिति [illegible] । 'तदस्मिन्वर्तते' इत्यर्थ

१२२६ साऽस्य देवता । (४-२-२४) इन्द्रो देवता अस्येति ऐन्द्रं हविः। पाशुपतम् । बार्हस्पत्यम् । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता, मन्त्रस्तुत्या च। ऐन्द्रो मन्त्रः। 'आग्नेयो वै ब्राह्मणो देवतया' इति तु शैषिकेऽर्थे 'सर्वत्राग्नि-' (वा २६८९) इति ढक् । १२२७ कस्येत् । (४-२-२५) कशब्दस्येदादेशः स्यात्प्रत्ययसंनियोगेन । 'यस्य-' (सू ३११) इति लोपात्परत्वादादिवृद्धिः । को ब्रह्मा देवता अस्य कार्यं हविः । श्रीर्देवता अस्य श्रायम् १२२८ शुक्राद्घन् ।

---

साऽस्य देवता । अस्मिन्नर्थे प्रथमान्तादणादयः स्युरित्यर्थः । ऐन्द्रं हविरिति । इन्द्रात्मकदेवतासम्बन्धीत्यर्थः । पाशुपतमिति । पशुपतिर्देवता अस्येति विग्रहः । ननु देवताशब्दस्य लोकप्रसिद्धजातिविशेषवाचकत्वे पितरो देवता अस्य पित्र्यमित्याद्यनुपपन्नमित्यत आह—त्यज्यमानद्रव्ये उद्देश्यविशेषो देवतेति । हविश्शेषमृत्विग्भ्यो ददाति, विप्राय गां ददाति इत्यादौ ऋत्विग्विप्रादेर्देवतात्वव्यावृत्तये विशेषग्रहणम् । त्यज्यमानहविस्साध्यः अस्मदाद्यप्रत्यक्षः यस्तृप्त्याद्युपकारः तदाश्रयो देवतेति यावत् । मन्त्रस्तुत्या चेति । 'अग्निमीडे पुरोहितम्' इत्यादिमन्त्रेषु यज्ञपुरोहितत्वादिगुणविशिष्टत्वेन या प्रतिपाद्यते सापि देवतेत्यर्थः । ऐन्द्रो मन्त्र इति । इन्द्रस्तुत्यको मन्त्र इत्यर्थः । ननु 'आग्नेयो वै ब्राह्मणो देवतया' इत्यत्र कथं देवतातद्धितः । अत्र अग्नेर्हविरुद्देश्यत्वस्य मन्त्रस्तुत्यत्वस्य चाभावादित्यत आह—आग्नेयो वै इति । शैषिकेऽर्थे इति । शेषे इति सूत्रलब्धे तदभिमानिकत्वे गम्ये इत्यर्थः । अग्निर्नाम यो देवताजातिविशेषो लोकवेदसिद्धः तदभिमानिको ब्राह्मण इति बोधः । कस्येत् । प्रत्ययसंनियोगेनेति । 'साऽस्य देवता' इति विहिते कशब्दादण्प्रत्यये परे तत्संनियोगेन प्रकृतेरिकारोऽन्तादेश इत्यर्थः । तथा च कशब्दादणि प्रकृतेरिकारे अन्तादेशे वृद्धौ आयादेशे कायमिति सिद्धम् । तत्र कि अ इति स्थिते 'यस्येति च' इति इकारलोपमाशङ्क्याह—यस्येति लोपात्परत्वादादिवृद्धिरिति । कशब्दस्य विवरणं ब्रह्मेति । यद्यप्यत्र इत्त्वविधिबलादेव लोपो न भवतीति भाष्यम् । तथापि वस्तुस्थितिकथनमिदम् । तस्य प्रयोजनमाह—श्रीर्देवता अस्य श्रायं हविरिति । अत्रेदमवधेयम् । 'कस्येत्' इत्यत्र कशब्दस्य अकारान्तस्य षष्ठ्येकवचनमित्येकः पक्षः । सर्वादिगणपठितस्य किंशब्दस्य षष्ठ्येकवचनमिति पक्षान्तरम् । आद्यपक्षे हविःप्रचारे 'कायानुब्रूहि' इति प्रैष इति निर्विवादम्. सर्वादिगणवहिर्भूतत्वेन स्मैभावासंभवात् । द्वितीयपक्षे तु किंशब्दस्य प्रजापतिनामत्वेन

---

'पुंमासादण् वक्तव्यः' इति वार्तिकं न कर्तव्यमिति तदाशयः । सास्य । 'सेति प्रकृतं संज्ञासम्बद्धम्-' इति पुनः साग्रहणं कृतमित्याहुः । इहैव सूत्रे निपातनाद्देवशब्दात्स्वार्थे तल् । मन्त्रस्तुत्येति । मन्त्रेण स्तुत्या । 'एतिस्तुशास्-' इत्यादिना क्यपि तुक् टाप् । आग्नेयो वै ब्राह्मण इति । इहाग्न्युद्देशेन ब्राह्मणो न त्यज्यत इति कथमयं प्रयोग इति न शङ्क्यमिति भावः । परत्वादादिवृद्धिरिति । इदं च समाधानं श्रायमित्यत्रावश्यकमिति तेनैव परिहारसम्भवादित्वविधानसामर्थ्य-

चरति दौष्कः। १२२२ क्षीराड्ढञ्। (४—२—२०) अत्र संस्कृतम् इत्येव सम्बध्यते, न तु भक्षा इति। तेन यवाग्वामपि भवति। क्षैरेयी। १२२३ सास्मिन्पौर्णमासीति। (४-२-२१) इतिशब्दात् 'संज्ञायाम्' इति लभ्यते। पौषी पौर्णमास्यस्मिन्पौषो मासः। १२२४ आग्रहायण्यश्वत्थाट्ठक्। (४-२-२२) अग्रे हायनमस्या इत्याग्रहायणी। प्रज्ञादेराकृतिगणत्वादण्। 'पूर्वपदात्संज्ञायाम्–' (सू ८५७) इति णत्वम्। आग्रहायणी पौर्णमास्यस्मिन्नाग्रहायणिको मासः। अश्वत्थेन युक्ता पौर्णमास्यश्वत्थः। निपातनात्पौर्णमास्यामपि लुप्। आश्वत्थिकः। १२२५ विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः। (४-२-२३) एभ्यष्टग्वा। पक्षेऽण्। फाल्गुनिकः, फाल्गुनो वा मासः। श्रावणिकः, श्रावणः। कार्तिकिकः। कार्तिकः। चैत्रिकः, चैत्रः।

---

न्तम्। 'शासिवसिघसीनां च' इत्युभयत्र षत्वम्। दोष इति। दोष्शब्दात् ठस्य कः स्यादित्यर्थः। दौष्क इति। तरतीति ठक्। क्षीराड्ढञ्। क्षैरेयीति। क्षीरे संस्कृता यवागूरित्यर्थः। भक्षग्रहणानुवृत्तौ त्विह न स्यात्, यवाग्वाः पेयत्वेन खाद्यत्वाभावात्। सास्मिन्पौर्णमासीति। 'तत्र' इति, 'संस्कृतं भक्षाः' इति च निवृत्तम्। सा पौर्णमासी अस्मिन्नित्यर्थे प्रथमान्तात्प्रत्ययः स्यादित्यर्थः। इतिशब्दादिति। एतच्च भाष्ये स्थितम्। पौषीति। पुष्येण युक्ता पौर्णमासी, सा यस्मिन्मासे स पौषो मासः। पौषीशब्दादणि 'यस्येति च' इतीकारलोपः। एवं मघाभिर्युक्ता पौर्णमासी माघी, सा यस्मिन्स माघो मासः। एवं फाल्गुन इत्यादि। संज्ञायां किम्? पौषी पौर्णमासी अस्मिन्पञ्चदशरात्रे। आग्रहायण्यश्वत्थाट्ठक्। पूर्वसूत्रविषये आग्रहायणीशब्दादश्वत्थशब्दाच्च ठक् स्यादित्यर्थः। अणोऽपवादः। हायनमिति। संवत्सर इत्यर्थः। 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री' इत्यमरः। यस्या ऊर्ध्वं संवत्सरस्यारम्भः सा पौर्णमासी आग्रहायणीत्यर्थः। तर्हि आग्रहायणेति स्यादित्यत आह—प्रज्ञादेरिति। 'प्रज्ञादिभ्यश्च' इति स्वार्थे अणि 'टिड्ढ–' इति ङीबित्यर्थः। अश्वत्थेनेति। अश्विनीनक्षत्रेणेत्यर्थः। अश्वत्थ इति। नक्षत्राणः 'लुबविशेषे' इति लुबिति भावः। ननु 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' इति निर्देशेन पौर्णमास्यां 'लुबविशेषे, इत्यस्याप्रवृत्तेरुक्तत्वात् कथमिह लुबित्यत आह—निपातनात्पौर्णमास्यामपि लुबिति। तथा च पौर्णमास्यां लुब् नेति ज्ञापनमेतद्व्यतिरिक्तविषयमिति भावः। विभाषा फाल्गुनी। एभ्यष्ठग्वेति। 'सास्मिन्–' इत्युक्तविषये इति शेषः। फाल्गुनिकः फाल्गुनो वा मास इति। फाल्गुनी पौर्णमास्यस्मिन्निति विग्रहः। एवं श्रावणिक इत्यादि। इति युक्ताद्यर्थकाः।

---

प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे प्रत्ययः स्याद्यः प्रथमान्तार्थः स चेत्पौर्णमासी भवति। इति शब्दादिति। स हि लौकिकीं विवक्षामनुसारयति। वृत्तिकृता तु सूत्रे एव 'संज्ञायाम्' इति प्रक्षिप्तम्। पौर्णमासीति। पूर्णो मासोऽस्यां तिथाविति बहुव्रीहौ प्रज्ञादित्वात्स्वार्थिकोऽणिति हरदत्तादयः। 'तदस्मिन्वर्तते' इत्यधि-

१२२६ साऽस्य देवता । (४-२-२४) इन्द्रो देवता अस्येति ऐन्द्रं हविः। पाशुपतम् । बार्हस्पत्यम् । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता, मन्त्रस्तुत्या च। ऐन्द्रो मन्त्रः। 'आग्नेयो वै ब्राह्मणो देवतया' इति तु शैषिकेऽर्थे 'सर्वत्राग्नि-' (वा २६८९) इति ढक् । १२२७ कस्येत् । (४-२-२५) कशब्दस्येदादेशः स्यात्प्रत्ययसंनियोगेन । 'यस्य-' (सू ३११) इति लोपात्परत्वादादिवृद्धिः । को ब्रह्मा देवता अस्य कायं हविः। श्रीर्देवता अस्य श्रायम् १२२८ शुक्राद्घन् ।

साऽस्य देवता । अस्मिन्नर्थे प्रथमान्तादणादयः स्युरित्यर्थः । ऐन्द्रं हविरिति । इन्द्रात्मकदेवतासम्बन्धीत्यर्थः। पाशुपतमिति । पशुपतिर्देवता अस्येति विग्रहः । ननु देवताशब्दस्य लोकप्रसिद्धजातिविशेषवाचकत्वे पितरो देवता अस्य पित्र्यमित्याद्यनुपपन्नमित्यत आह—त्यज्यमानद्रव्ये उद्देश्यविशेषो देवतेति । हविश्शेषमृत्विग्भ्यो ददाति, विप्राय गां ददाति इत्यादौ ऋत्विग्विप्रादेर्देवतात्वव्यावृत्तये विशेषग्रहणम् । त्यज्यमानहविस्साध्यः अस्मदाद्यप्रत्यक्षः यस्तृप्त्याद्युपकारः तदाश्रयो देवतेति यावत् । मन्त्रस्तुत्या चेति। 'अग्निमीडे पुरोहितम्' इत्यादिमन्त्रेषु यज्ञपुरोहितत्वादिगुणविशिष्टत्वेन या प्रतिपाद्यते सापि देवतेत्यर्थः । ऐन्द्रो मन्त्र इति । इन्द्रस्तुत्यको मन्त्र इत्यर्थः । ननु 'आग्नेयो वै ब्राह्मणो देवतया' इत्यत्र कथं देवतातद्धितः । अत्र अग्नेर्हविर्देयत्वस्य मन्त्रस्तुत्यत्वस्य चाभावादित्यत आह—आग्नेयो वै इति। शैषिकेऽर्थे इति । शेषे इति सूत्रलब्धे तदभिमानिकत्वे गम्ये इत्यर्थः। अग्निर्नाम देवताजातिविशेषो लोकवेदसिद्धः तदभिमानिको ब्राह्मण इति बोधः। कस्येत्। प्रत्ययसंनियोगेनेति । 'साऽस्य देवता' इति विहिते कशब्दादण्प्रत्यये परे तत्संनियोगेन प्रकृतेरिकारोऽन्तादेश इत्यर्थः । तथा च कशब्दादणि प्रकृतेरिकारे अन्तादेशे वृद्धौ आयादेशे कायमिति सिद्धम् । तत्र किं अ इति स्थिते 'यस्येति च' इति इकारलोपमाशङ्क्याह— यस्येति लोपात्परत्वादादिवृद्धिरिति । कशब्दस्य विवरणं ब्रह्मेति। यद्यप्यत्र इत्त्वविधिबलादेव लोपो न भवतीति भाष्यम्। तथापि वस्तुस्थितिकथनमिदम् । तस्य प्रयोजनमाह—श्रीर्देवता अस्य श्रायं हविरिति। अत्रेदमवधेयम्। 'कस्येत्' इत्यत्र कशब्दस्य अकारान्तस्य षष्ठ्येकवचनमित्येकः पक्षः । सर्वादिगणपठितस्य किंशब्दस्य षष्ठ्येकवचनमिति पक्षान्तरम् । आद्यपक्षे हविःप्रचारे 'कायानुब्रूहि' इति प्रैष इति निर्विवादम्. सर्वादिगणबहिर्भूतत्वेन स्मैभावासंभवात् । द्वितीयपक्षे तु किंशब्दस्य प्रजापतिनामत्वेन

'पूर्णमासादण् वक्तव्यः' इति वार्तिकं न कर्तव्यमिति तदाशयः । सास्य । 'सेति प्रकृतं संज्ञासम्बद्धम्-' इति पुनः साग्रहणं कृतमित्याहुः। इहैव सूत्रे निपातनाद्देवशब्दात्स्वार्थे तल् । मन्त्रस्तुत्येति । मन्त्रेण स्तुत्या । 'एतिस्तुशास्-' इत्यादिना क्यपि तुक् टाप्। आग्नेयो वै ब्राह्मण इति । इहाग्न्युद्देशेन ब्राह्मणो न त्यज्यत इति कथमयं प्रयोग इति न शङ्क्यमिति भावः । परत्वादादिवृद्धिरिति । इदं च समाधानं श्रायमित्यत्रावश्यकमिति तेनैव परिहारसम्भवादित्वविधानसामर्थ्य-

(४-२-२६) शुक्रियम् १२२९ अपनोनप्त्रपांनप्तृभ्यां घः (४-२-
अपोनप्त्रियम्, अपांनप्त्रियम् । अपोनपात्, अपांनपाच्च देवता । प्रत्ययसंनि
तूक्तं रूपं निपात्यते । अत एव 'अपोनपाते अपांनपातेऽनुब्रूहि' इति प्रै
१२३० छ च । (४-२-२८) योगविभागो यथासंख्यनिवृत्त्यर्थः । अपोन
प्त्रीयम्, अपांनप्त्रीयम् । ('छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम्'
२७०१) । पैङ्गाक्षीपुत्रीयम् । तार्णविन्दवीयम्) । 'शतरुद्राद्घश्च'
२७०२) । चाच्छः । शतं रुद्रा देवता अस्य शतरुद्रियम्, शतरुद्री
घच्छयोर्विधानसामर्थ्याद् 'द्विगोर्लुगनपत्ये' (सू १०८०) इति न लु
१२३१ महेन्द्राद्घाणौ च । (४-२-२९) चाच्छः । महेन्द्रियम्
माहेन्द्रम्, महेन्द्रीयम् । १२३२ सोमाट्ट्यण् । (४-२-३०) सौम्य
टित्त्वान्ङीप्, सौमी ऋक् । १२३३ वाय्वृतुपित्रुषसो यत् । (४-२-

---

असर्वनामत्वान्न स्मैभावः, अन्वर्थसंज्ञावलेन एकार्थवृत्तेः संज्ञाशब्दस्य सं
त्वाभावात् । तथा च 'कायानुब्रूहि' इत्येव प्रैषः । यद्वा प्रजापतेः सर्वात्मकत्वेन
किंशब्दस्य सर्वनामत्वात् 'कस्मा अनुब्रूहि' इत्येव संप्रैष इति भाष्ये प्रपञ्चि
एवं च विष्णुसहस्रनामसु 'विश्वं विष्णुः' इति, 'एको नैकः सवः कः कि
त्पदमनुत्तमम् ।' इति च पठितविश्वादिशब्देष्वप्ययं न्यायस्तुल्यः । तथा च वि
स्मै नमः, विश्वाय नम इत्यादि प्रयोज्यमित्यास्तां प्रासङ्गिकम् । शुक्राद्
'साऽस्य देवता' इत्यर्थे इति शेषः । शुक्रियमिति । शुक्रो देवता अ
विग्रहः । अपोनप्त्रपांनप्तृभ्यां घः । प्रत्ययसंनियोगेनेति । घप्रत्यय
योगेन अपोनपाच्छब्दस्य अपोनप्तृभावः, अपांनपाच्छब्दस्य अपांनप्तृ
निपात्यत इत्यर्थः । अत एवेति । घप्रत्ययसंनियोगेनैव उक्तादेशविवक्ष
अत्र घप्रत्ययाभावान्नोक्तादेशाविति भावः । छ च । उक्तविषये छोऽपि
ननु अपोनप्त्रपांनप्तृभ्यां घच्छौ इत्येवास्तु । तत्राह—योगविभाग इति ।
ङ्गाक्षीपुत्रीयमिति । पैङ्गाक्षीपुत्रो देवता अस्येति विग्रहः । तार्णविन्द
मिति । तार्णविन्दुः देवता अस्येति विग्रहः । शतरुद्राद्घश्चेति । शत
मिदम् । शतरुद्रियमिति । घस्य इयादेशः । शतरुद्रीयमिति । छस्य
देशः । उभयत्र 'तद्धितार्थ-' इति द्विगुसमासः । 'द्विगोर्लुगनपत्ये' इति
माशङ्क्याह—घच्छयोरिति । महेन्द्राद्घाणौ च । महेन्द्रियमिति ।
देवता अस्येति विग्रहः । घस्य इयादेशः । माहेन्द्रमिति । अणि
महेन्द्रीयमिति । छस्य ईयादेशः । सोमाट्ट्यण् सौम्यमिति । सोमो
अस्येति विग्रहः । टित्त्वस्य प्रयोजनमाह—टित्त्वान्ङीबिति । सौमीति ।

---

मिह नाश्रितम् । उक्तं रूपमिति । 'नपात्' इत्यस्य 'नप्तृ' इति रूपमि
शतं रुद्रा इति । शतशब्दोऽनन्तवचनः । सौमीति । 'हलस्तद्धितस्य'

---

१ कोष्ठकान्तर्गतः पाठो बहुत्र मूले नोपलभ्यते । बालमनोरमानुरोध
स्थाप्यते । २ क्वचिद् 'घ च' इति चकाररहितः पाठः ।

वायव्यम्। एवम् ऋतव्यम् । १२३४ रीङृतः । (७-४-२७) अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः स्यात् । 'यस्येति च' (सू ३११) पित्र्यम् । उषस्यम् । १२३५ द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च । (४-२-३२) चाद्यत् । द्यावापृथिवीयम्, द्यावापृथिव्यम् । शुनासीरीयम्, शुनासीर्यम् । १२३६ अग्नेर्ढक् ।

देवता अस्या ऋच इति विग्रहः। ङीपि 'हलस्तद्धितस्य' इति यलोपः । वाय्वृतुपित्रुषसो यत् । वायु, ऋतु, पितृ, उषस् एभ्यो यदित्यर्थः । वायव्यमिति। वायुर्देवता अस्येति विग्रहः । यति ओर्गुणः। 'वान्तो यि-' इत्यवादेशः। एवम् । ऋतव्यमिति । ऋतुः देवता अस्येति विग्रहः । रीङृतः । अङ्गस्येत्यधिकृतम् ऋता विशेष्यते, तदन्तविधिः। 'अयङ् यि क्ङिति' इत्यतो 'यि' इत्यनुवर्तते। 'अकृत्सार्वधातुकयोः-' इत्यतः 'अकृत्सार्वधातुकयोः' इति 'च्वौ च' इति सूत्रं च तदाह—अकृदित्यादिना । पित्र्यमिति। पितरो देवता अस्येति विग्रहः। यति पितृशब्दस्य रीङ्। 'ङिच्च' इत्यन्तादेशः। 'यस्येति च' इति ईकारलोपः। क्यचि पित्रीयतीत्यादौ 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति वचनाद् 'अकृत्सार्वधातुकयोः-' इति दीर्घे अप्राप्ते इकारोच्चारणम् । उषस्यमिति। उषो देवता अस्येति विग्रहः। भत्वेन पदत्वाभावात् सकारस्य न रुत्वादि। द्यावापृथिवी । द्यावापृथिवी, शुनासीर, मरुत्वत्, अग्नीषोम, वास्तोष्पति, गृहमेध एतेभ्यः,[1] छो यच्च स्यादित्यर्थः अणः सत्युत्तरपदव्यस्य चापवादः । द्यावापृथिवीयम्, द्यावापृथिव्यमिति । द्यावापृथिवी देवता अस्येति विग्रहः। छस्य ईयादेशः । उभयत्र 'यस्येति च' इति लोपः । शुनासीरीयमिति । शुनो वायुः, सीरः आदित्यः, शुनश्च सीरश्च शुनासीरौ। 'देवताद्वन्द्वे च' इत्यानङ् । शुनासीरावस्य स्तं इति शुनासीरः। 'वाय्वादित्यवानिन्द्रो विवक्षितः' इति वेदभाष्ये भट्टभास्करः शुनासीरो देवता अस्येति विग्रहः। मरुत्वान् देवता अस्य मरुत्वतीयम्, मरुत्वत्यम्। अग्नीषोमौ देवता अस्य अग्नीषोमीयम्। वास्तुनः पतिः वास्तोष्पतिः रुद्रः । निपातनादलुक् षत्वं च । 'रुद्रः खलु वै वास्तोष्पतिः' इति ब्राह्मणम् । अमरस्तु इन्द्रपर्यायेषु 'वास्तोष्पतिः सुरपतिः' इत्याह । वास्तोष्पतिर्देवता अस्य वास्तोष्पतीयम्, वास्तोष्पत्यम्। गृहमेधो

यलोपः। रीङृतः। अङ्गवृत्तपरिभाषया 'अकृत्सार्व-' इति दीर्घो न प्रवर्तत इति रीङ्ग्रहणमित्याहुः । यस्येति चेति । पित्रीयतीत्यत्र रीङ्विधिः सावकाश इति भावः। उषस्यमिति । उषस्शब्दः स्त्रीलिङ्गो दिवो दुहितरं देवतां ब्रवीति। द्यावापृथिवी । अण्ण्यओरपवादः । शुनासीरीयमिति । शुनश्च सीरश्चेति द्वन्द्वे 'देवताद्वन्द्वे च' इत्यानङ्। शुनो वायुः, सीर आदित्य इति वृत्तिकृत्। हरदत्तास्तु शुनासीरशब्द इन्द्रस्य गुणवाचीत्यन्ये मन्यन्त इत्याह। तथा च मन्त्रः—'इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे' इति। मरुतो यस्य सन्तीति मरुत्वानिन्द्रः, मरुत्वतीयम्, मरुत्वत्यम्। अग्नीषोमीयम्, अग्नीषोम्यम्। 'इदग्नेः सोमवरुणयोः'। वास्तुनः पतिः

१ 'षड्भ्यः' इत्यधिकः पाठः क्वचित्।

(४-२-३३) आग्नेयम् । १२३७ कालेभ्यो भववत् । (४-२-३४) मासिकम् । प्रावृषेण्यम् । १२३८ महाराजप्रोष्ठपदाट्ठञ् । (४-२-३५) माहाराजिकम् । प्रौष्ठपदिकम् । १२३९ देवताद्वन्द्वे च (७-३-२१) पूर्वोत्तरपदयोराद्यचो वृद्धिः स्याद् ञिति णिति किति च परे । आग्निमारुतम् । १२४० नेन्द्रस्य परस्य । (७-३-२२) परस्येन्द्रस्य वृद्धिर्न स्यात् । सौमेन्द्रः । परस्य किम्-ऐन्द्राग्नः । १२४१ दीर्घाच्च वरुणस्य । (७-३-२३) दीर्घात्परस्य वरुणस्य न वृद्धिः । ऐन्द्रावरुणम् । दीर्घात् किम्-आग्निवारुणम् । आग्निवारुणीमनड्वाहीमालभेत । 'तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसं

---

देवता अस्य गृहमेधीयम्, गृहमेध्यम् । अग्नेर्ढक् । आग्नेयमिति । प्रावृष येष्वर्थेष्वयम् । 'सर्वत्राग्निकलिभ्याम्–' इति वचनात् । कालेभ्यो भववत् कालवाचिभ्यो भवेऽर्थे येन विशेषणेन ये प्रत्यया वक्ष्यन्ते, ते 'साऽस्य देवता' इत्यर्थे कालवाचिभ्यस्तेनैव विशेषणेन भवन्तीत्यर्थः । मासिकमिति । मा देवता अस्येति विग्रहः कालाट्ठञ् । प्रावृषेण्यमिति । प्रावृड् देवता अस्येति विग्रहः । प्रावृष एण्यः । महाराजप्रोष्ठपदाट्ठञ् । माहाराजिकमिति महाराजो वैश्रवणः स देवता अस्येति विग्रहः । प्रौष्ठपदिकमिति । प्रोष्ठ देवता अस्येति विग्रहः । वृत्तः 'साऽस्य देवता' इत्यधिकारः । अथ प्रासङ्गिकम् देवताद्वन्द्वे च । 'मृजेर्वृद्धिः' इत्यतो 'वृद्धिः' इत्यनुवर्तते । 'अचो ञ्णिति' इति 'ञ्णिति' इति, 'किति च' इति सूत्रं चानुवर्तते । 'तद्धितेष्वचामादेः' इत्यतः 'अचा मादेः' इति 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्यतः 'पूर्वपदस्य' इति, 'उत्तर पदस्य च' इति सूत्रं चानुवर्तते । तदाह—अत्रेत्यादिना । आग्निमारुतमिति अग्निश्च मरुच्च अग्नामरुतौ, 'देवताद्वन्द्वे च' इत्यानङ् । अग्नामरुतौ देवता अ आग्निमारुतम् । अणि अनेन उभयपदादिवृद्धिः । अलौकिके विग्रहवाक्ये आनङं बाधित्वा 'इद् वृद्धौ' इति इत्वम् । नेन्द्रस्य परस्य । 'देवताद्वन्द्वे इत्युक्ता उभयपदवृद्धिः उत्तरपदस्य इन्द्रशब्दस्य नेत्यर्थः । सौमेन्द्र इति । रिति शेषः । तैत्तिरीये 'सोमेन्द्रं श्यामाकं चरुम्' इति छान्दसम् । दीर्घा वरुणस्य । ऐन्द्रावरुणमिति । इन्द्रावरुणौ देवता अस्येति विग्रहे द्वन्द्वः । अ इन्द्रावरुणशब्दादणि दीर्घाकारात्परत्वाद् वरुणस्य नादिवृद्धिः । आग्निवारुणमिति 'इद् वृद्धौ' इत्यग्नेरानङं बाधित्वा इत्वे कृते दीर्घात्परत्वाभावान्निषेधाभावे 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिरिति भावः । इति प्रासङ्गिकम् । अथ प्रकृतम् तदस्मिन्निति । 'महाराजप्रोष्ठपदाट्ठञ्' इति सूत्रे वार्तिकमिदम् । 'तद

---

वास्तोष्पतिः । इहैव सूत्रे निपातनात्साधुः । 'वेश्मभूर्वास्तुरस्त्रियाम्' वास्तोः वास्तोष्पत्यम् । गृहमेधीयं गृहमेध्यम् । गृहमेधशब्दोऽकारान्तः । तथा च लायनः—'मरुद्भ्यो ग्रहमेधेभ्यः' इति । कालेभ्यो । कालवाचिभ्यो यं स्वार्थे वक्ष्यन्ते ते 'सास्य देवता' इत्यस्मिन्नर्थेऽनेनातिदिश्यन्ते । वत्करणं सादृश्यार्थम् । तेन [illegible] एव भवति न्यान्यः । तथैवोदाह

व्यम्' (वा २७०६) । नावयज्ञिकः कालः । पाकयज्ञिकः । 'पूर्णमासादण्वक्तव्यः' (वा २७०७) । पूर्णो मासोऽस्यां वर्तत इति पौर्णमासी तिथिः । १२४२ पितृव्यमातुलमातामहपितामहाः । (४-२-३६) एते निपात्यन्ते । 'पितुर्भ्रातरि व्यत्' (वा २७०८) । पितुर्भ्राता पितृव्यः । 'मातुर्डुलच्' (वा १७०८) मातुर्भ्राता मातुलः । 'मातृपितृभ्यां पितरि डामहच्' (वा २७०९) । मातुः पिता मातामहः । पितुः पिता पितामहः । 'मातरि षिच्च' (वा २७१०) । मातामही । पितामही । 'अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः' (वा २७१२) । सकारपाठसामर्थ्यान्न षः । अविसोढम् । अविदूसम् । अविमरीसम् । 'तिलान्निष्फलात्पिञ्जपेजौ' (वा २७१३) । पिलपिञ्जः । तिलपेजः । वन्ध्यस्तिल

---

वर्तते' इत्यर्थे नवयज्ञादिभिः प्रथमान्तेभ्यः ठञ् उपसंख्यानमित्यर्थः । नावयज्ञिकः काल इति । नवयज्ञो नूतनधान्यद्रव्यको यज्ञः—आग्रयणाख्यः स यस्मिन्काले वर्तते स नावयज्ञिकः, आग्रयणकाल इति यावत् । पाकयज्ञिक इति । पाकयज्ञ औपासनाग्निसाध्यः पार्वणस्थालीपाकादिः, स यस्मिन्काले वर्तते स पाकयज्ञिकः । पूर्णमासादिति । तदस्मिन्वर्तत इत्यर्थे पूर्णमासशब्दात्प्रथमान्तादण् वक्तव्य इत्यर्थः । पूर्णो मासोऽस्यामिति । मासश्चन्द्रमाः पूर्णश्चासौ मासश्च पूर्णमासः, पूर्णचन्द्रः, स यस्यां तिथौ वर्तते सा पौर्णमासी तिथिरित्यर्थः । अणि 'टिड्ढाणञ्–' इति ङीप् । यद्यपि पूर्णो माः चन्द्रः पूर्णमाः, तस्येयमित्यर्थे 'तस्येदम्' इत्यणि पौर्णमासीति सिद्धम्, तथापि ईदृश एवार्थे अयं साधुरिति भावः । पितृव्यमातुल । कस्मिन् [1]अर्थे किं निपात्यत इत्यत आह—पितुर्भ्रातरि व्यदित्यादिना । मातुल इति । मातृशब्दाद् डुलचि 'टेः' इति टिलोपः । मातामह इति । मातृशब्दाद् डामहचि टिलोपः । एवं पितामहः । मातरि षिच्चेति । मातृपितृभ्यां मातरि डामहच्, स च षिद्भवतीत्यर्थः । षित्त्वस्य फलं ङीषित्याह—मातामही, पितामहीति । अवेरिति । अवेर्दुग्धमित्यर्थे अविशब्दात् सोढ, दूस, मरीसच् एते प्रत्यया वक्तव्या इत्यर्थः । सोढसकारस्य प्रत्ययावयवत्वात् षत्वमाशङ्क्याह—सकारपाठसामर्थ्यान्न ष इति । अन्यथा षोड इत्येवोपदिशेदिति भावः । तिलादिति । तिलशब्द ओषधिविशेषे मुख्यः । तत्फले तु गौणः । तत्र यदा तिलशब्दो निष्फले ओषधिविशेषे वर्तते, तदा तस्मात्स्वार्थे पेज, पिञ्ज इति प्रत्ययौ स्त इत्यर्थः । इति देवतार्थकाः ।

---

मासिकम् । प्रावृषेण्यमिति । 'कालाट्ठञ् ।' प्रावृष एण्यः । डामहजिति । एतच्च वृत्त्याद्यनुरोधेनोक्तम् । भाष्ये तु आनङादेशो महच् प्रत्ययश्च निपात्यते । तेनावग्रहः सिद्ध्यतीत्युक्तम् । सकारपाठेति । अन्यथा प्रक्रियालाघवाय षकारमेव पठेदिति भावः । एतच्च मनोरमायां स्थितम् । अन्ये तूक्तरीत्या 'अविसोढम्' इत्यत्र षत्वनिवारणेऽपि 'अविदूसम्' इत्यादौ स्यादेव षत्वम् । तत्र हि ण्यन्तात्क्विपि 'अविदूः' इत्यादिरूपसिद्धये सकारपाठसामर्थ्यस्योपक्षीणत्वात् । तस्माद् 'अविसोढम्'

---

१ 'अर्थे' इत्यस्य स्थाने 'शब्दे' क ।

इत्यर्थः 'पिञ्जश्छन्दसि डिच्च' (वा २७१४) तिलिपिञ्जः । १२४३ तस्य समूहः । (४-२-३७) काकानां समूहः काकम् । वाकम् । १२४४ भिक्षादिभ्योऽण् (४-२-३८) भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । इह 'भस्याढे–' इति पुंवद्भावे कृते । १२४५ इनण्यनपत्ये (६-४-१६४) अनपत्यार्थेऽणि परे इन्प्रकृत्या स्यात् । तेन 'नस्तद्धिते' (सू ६७९) इति टिलोपो न । युवतीनां समूहो यौवनम् । शत्रन्तादनुदात्तादेरञि यौवनम्

---

तस्य समूहः । 'इनित्रकट्यचश्च' इति यावदिदमनुवर्तते । अस्मिन् प्रथमोच्चारितात् षष्ठ्यन्तात्प्राग्दीव्यतीया अणादयो यथासम्भवं स्युरित्यर्थः । 'अचित्तहस्तिधेनोष्ठक्' इत्याद्यपवादविषयं परिहृत्योदाहरति—काकम् । वाकमिति । समूहप्रत्ययान्तानां नपुंसकत्वं लोकात् । भिक्षादिभ्योऽण् । तस्य समूह इत्येव । भैक्षमिति । अत्र 'अचित्तहस्ति–' इति वक्ष्यमाणठगपवादोऽण् । गार्भिणमिति । गर्भशब्दान्मत्वर्थीये इन्प्रत्यये कृते 'प्रत्ययः' 'परश्च' 'आद्युदात्तश्च' इति इकारस्य उदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इति शिष्टस्यानुदात्तत्वे गर्भिन्शब्दः अनुदात्तादिः । ततो नान्तलक्षणङीपि तस्य 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वे गर्भिणीशब्दोऽप्यनुदात्तादिरेव । ततः समूहेऽर्थे 'अनुदात्तादेरञ्' इति वक्ष्यमाणे अञि प्राप्ते भिक्षादित्वादणिति भावः । अणि प्रत्ययस्वरेणान्तोदात्तत्वम् । अञि तु 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वमिति स्वरे विशेषः । अणि टिलोपाभावोऽपि प्रयोजनमिति दर्शयति—इह भस्येति । गर्भिणीशब्दादणि सति 'भस्याढे–' इति पुंवत्त्वेन ङीपो निवृत्तौ गर्भिन् अ इति स्थिते 'नस्तद्धिते' इति टिलोपे प्राप्ते सतीत्यर्थः । इनण्यनपत्ये । इन् अणीति छेदः । प्रकृत्येति । 'प्रकृत्यैकाच्' इत्यतस्तदनुवृत्तिरिति भावः । टिलोपो नेति । अञि तु प्रकृतिभावाप्रवृत्तेः टिलोपः स्यादिति भावः । यौवनमिति । 'कनिन्युवृषितक्षि–' इत्यौणादिककनिन्प्रत्ययान्तो नि

---

इत्यादिभाष्यकृदुदाहरणेषु सकारपाठसामर्थ्यादिति व्याख्येयमित्याहुः । तस्य समूहः । इह 'अचित्ताठ्ठक्', 'अनुदात्तादेरञ्', गोत्रान्ताद् वुञ्, 'केदाराद्यञ्च' इत्यादि प्रतिपदं यञादींश्च वक्ष्यति । तथा च चित्तवदाद्युदात्तमगोत्रान्तं प्रतिपदोक्तप्रत्यय-रहितमिहोदाहरणमित्याशयेनोदाहरति—काकम् । बाकमिति । एवं वार्कम् । काकवकवृकशब्दाः 'प्राणिनां कुपूर्वाणाम्' इति फिट्सूत्रेणाद्युदात्ताः । प्राणिवाचिनाम् आदिभूताः कवर्गात्पूर्वे तेषामुदात्तः स्यादिति सूत्रार्थः । 'अथादिः प्राक् शकटेः' इत्यधिकारात् । यत्तु वृत्तिन्यासयोः शौकमित्युदाहृतं तदुपेक्ष्यम् । खण्डिकादिषु शुकशब्दस्य पाठात्तत्राञा भाव्यमिति । हरदत्तादयः । भिक्षादिभ्योऽण् । भैक्षमिति । अचित्तत्वाट्ठक् प्राप्तः । गार्भिणमिति । अनुदात्तादित्वादञ् प्राप्ते सति हि तस्मिन्नाद्युदात्तटिलोपौ स्याताम् । न च 'भस्याढे–' इति पुंवद्भावेऽपि देशान्न टिलोपः स्यादिति वाच्यम् । हस्तिनीनां समूहो हास्तिकमित्यत्रापि टिलोपा-नापत्तेः । तस्मात् स्त्रीप्रत्ययनिवृत्तिमात्रपरं तत्, न तु रूपातिदेशकमिति बोध्यम् । यौवनमिति । युवतिशब्दस्यानुदात्तादित्वादञि प्राप्ते अण्यर्थमिह पाठः । पुंवद्भा

१२४६ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् । (४—२—३९) एभ्यः समूहे वुञ् स्यात् । लौकिकमिह गोत्रम्, तच्चापत्यमात्रम् । १२४७ युवोरनाकौ । (७—१—१) यु वु एतयोरनुनासिकयोः क्रमाद् अन अक एतावादेशौ स्तः । ग्लुचुकायनीनां समूहो ग्लौचुकायनकम् । औक्षकमित्यादि । 'आप-

---

रेणाद्युदात्तः । ततः स्त्रियां 'यूनस्तिः' इति तिप्रत्ययस्य प्रत्ययस्वरेणोदात्तत्वे सति शिष्टस्वरेण युवतिशब्दस्यानुदात्तादित्वादञि प्राप्ते भिक्षादित्वादणि कृते सति 'भस्याढे—' इति पुंवत्त्वे तिप्रत्ययस्य निवृत्तौ 'अन्' इति प्रकृतिभावाट्टिलोपाभावे यौवनमिति रूपम् । अञि तु प्रकृतिभावस्याप्रवृत्तेष्टिलोपः स्यादिति भावः । वस्तुतस्तु 'भस्याढे तद्धिते' इत्यस्य अढे तद्धिते विवक्षिते सति ततः प्रागेव पुंवदित्यर्थः । ततश्च तद्धितोत्पत्तेः प्रागेव युवतिशब्दस्य पुंवत्त्वे तिप्रत्ययस्य निवृत्तौ युवन्शब्दस्य कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वादनुदात्तादित्वाभावादञभावे 'तस्य समूहः' इत्यणि प्रकृतिभावाट्टिलोपाभावे यौवनमिति सिद्धमेवेति युवतिशब्दो भिक्षादिगणे प्रत्याख्यातो भाष्यकैयटयोरित्यलम् । शत्रन्तादिति । प्रत्ययस्वरेण मध्योदात्तत्वादनुदात्तादिरयं युवच्छब्दः । तत उगिल्लक्षणङीपः पुंवत्त्वेन निवृत्तौ युवच्छब्दादनुदात्तादेरञि यौवतमिति रूपमिति भावः । गोत्रोक्षोष्ट्र । एभ्य इति । गोत्र, उक्षन्, उष्ट्र, उरभ्र, राजन्, राजन्य, राजपुत्र, वत्स, मनुष्य, अज एतेभ्य इत्यर्थः । लौकिकमिह गोत्रमिति । ननु पारिभाषिकमित्यर्थः । अत्र लौकिकं गोत्रं किमित्यत आह—तच्चापत्यमात्रमिति । प्रवराध्याये परिगणितं पुत्रपौत्रादि कृत्स्नापत्यमित्यर्थः । 'अपत्याधिकारादन्यत्र लौकिकमेव गोत्रं गृह्यते, नतु पारिभाषिकं गोत्रमिष्यते' इति 'स्त्रीपुंसाभ्याम्—' इत्यादिसूत्रभाष्ये सिद्धान्तितत्वादिति भावः । युवोरनाकौ । युश्च वुश्च युवु । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । तदाह—यु वु एतयोरिति । 'अनुनासिकयोरिष्यते' इति वार्तिकलब्धमेतत् । अनुनासिकयोः किम् ? ऊर्णायुः । ग्लुचुकायनीनामिति । 'प्राचामवृद्धात्' इति ग्लुचुकशब्दादपत्ये फिन्, 'इतो मनुष्यजातेः' इति ङीष्, समूहे वुञ् । अकादेशः, आदिवृद्धिः, 'यस्येति च' इतीकारलोपः । औक्षकमिति । उक्ष्णां समूह इति विग्रहः । वुञ्, अकादेशः, टिलोपः, आदिवृद्धिः । उष्ट्राणां समूह इति विग्रहः, औष्ट्रकम् । उरभ्रा मेषाः, तेषां समूह औरभ्रकम् । राजकम्, राजन्यकम् । वात्सकम् । मानुष्य-

---

तिप्रत्ययनिवृत्तिः । 'अन्' इति प्रकृतिभावः । ननु 'भस्याढे—' इत्यत्र 'अढे तद्धिते विवक्षिते पुंवद्भावः' इत्यभ्युपगमात्तद्धितोत्पत्तेः प्रागेव तिप्रत्ययनिवृत्तौ सत्यां 'कनिन् युवृषि—' इति कनिनन्ततया आद्युदात्तत्वादण् सिद्ध एवेति चेत् । सत्यम्, अतएव भाष्ये भिक्षादिषु युवतिशब्दपाठः प्रत्याख्यातः । 'इह युवतिशब्दपाठसामर्थ्यात्पुंवद्भावो न' इति वृत्तिकारोक्तिरप्यत एव निरस्ता । नन्वेवं 'गार्भिणं यौवतं गणे' इत्यादिप्रयोगा भाष्यमते न संगच्छेरन्नित्याशङ्क्याह—शत्रन्तादिति । युवोः । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । उकारस्तूच्चारणार्थो नेत्संज्ञकः । तेन नन्दनः । कारकः, नन्दना, कारिका इत्यत्रोगिल्लक्षणौ नुम्ङीपौ न स्तः । अनुनासिकयोरिति किम्, ऊर्णायुः ।

त्यस्य च–' (सू १०८२) इति यलोपे प्राप्ते 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' (वा ४२१४) राजन्यकम् । मानुष्यकम् । 'वृद्धाच्चेति वक्तव्यम्' (वा २७१६) वार्द्धकम् । १२४८ केदाराद्यञ्च । (४—२—४०) चाद्वुञ् । कैदार्यम्, कैदारकम् । 'गणिकाया यञिति वक्तव्यम्' (वा २७१९) । गाणिक्यम् । १२४९ ठञ्कवचिनश्च । (४—२—४१) चात्केदारादपि । कवचिनां समूहः कावचिकम् । कैदारिकम् । १२५० ब्राह्मणमाणववाडवाद्यन् । (४—२—४२) ब्राह्मण्यम् । माणव्यम् । वाडव्यम् । 'पृष्ठादुपसंख्यानम्' (वा २७२०) पृष्ठ्यः षडहः । १२५१ ग्रामजनबन्धुभ्यस्तल् । (४—२—४३) ग्रामता । जनता । बन्धुता ।

---

कम् । आजकम् । यलोपे प्राप्त इति । राजन्यशब्दाद् वुञि अकादेशे 'आपत्यस्य च—' इति यकारस्य लोपे प्राप्ते सतीत्यर्थः प्रकृत्याऽके राजन्यमनुष्ययुवान इति । अके परे राजन्य, मनुष्य, युवन् एते प्रकृत्या स्युरिति वक्तव्यमित्यर्थः । यूनो भावो यौवनकम् । मनोज्ञादित्वाद् वुञ् । प्रकृतिभावान्न टिलोपः । 'वृद्धाच्च' इति वृद्धशब्दस्वरूपमेव गृह्यते, नतु 'वृद्धिर्यस्याचामादिः—' इति वृद्धसंज्ञकम्, भाष्ये वृद्धशब्दस्यैवोदाहरणात् । तदाह—वार्द्धकमिति । वृद्धानां समूह इति विग्रहः । केदराद्यञ् च । कैदार्यम्, कैदारकमिति । केदाराणां समूह इति विग्रहः । गणिकाया यञ् । यञ्ग्रहणाद् वुञो निवृत्तिः । गाणिक्यमिति । गणिकानां समूह इति विग्रहः । ठञ् कवचिनश्च । केदारादपीति । कवचिन्शब्दात् केदारशब्दाच्च समूहे ठञ् स्यादित्यर्थः । कावचिकमिति । ठञ् इकादेशे टिलोपः । ब्राह्मणमाणववाडवाद्यन् । ब्राह्मण्यमित्यादि । ब्राह्मणानां माणवानां वाडवानां च समूह इति विग्रहः । मनोरपत्यं माणवः । अणि नस्य णत्वम् ।

'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यः तेन सिध्यति माणवः ॥'

इति 'मनोर्जातावञ्यतौ षुक्च' इति सूत्रे भाष्यम् । पृष्ठादिति । यत् इति शेषः । पृष्ठ्यः षडह इति । षण्णाम् अह्नां समाहारः षडहः, समाहारे द्विगुः । 'राजाहस्सखिभ्य–' इति टचि टिलोपः । रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानि षट् पृष्ठाख्यस्तोत्राणि, तद्युक्तान्यहानि लक्षणया पृष्ठानि, तेषां समूह' इति विग्रहः । ग्रामजन । समूह इत्येव । ग्रामतेत्यादि । ग्रामाणां जनानां बन्धूनां च समूह इति विग्रहः । तलन्तानां स्त्रीत्वं लोकात्, 'तलन्तं

---

प्रकृत्याऽक इति । इह राजन्यमनुष्यग्रहणं व्यर्थम् । रूढिशब्दत्वेन 'आपत्यस्य च–' इति यलोपस्य प्राप्त्यभावात् । अतएव 'गोत्रोक्षोष्ट्र–' इत्यत्र तयोर्ग्रहणं सार्थकम् । अन्यथा गोत्रग्रहणेनैव सिद्धे तयोर्ग्रहणं न कुर्यादित्याहुः । यूनो भावो यौवनिकमिति मनोज्ञादित्वाद् वुञ् । वार्धकमिति । यदि वृद्धत्वेऽपि वार्धकमिति प्रयोगोऽस्ति, तर्हि मनोज्ञादित्वं कल्पनीयमित्याहुः । ब्राह्मणमाणव । ननु त्रयोऽप्यमी वृद्धाः । तेभ्यः प्रकृतो यञेवास्तु, वृद्धाद्यति यञि वा रूपे विशेषाभावात् । नापि स्वरे विशेषः उभयथाप्याद्युदात्तत्वात् । स्त्रियां विशेषस्तु न शङ्क्य एव, नपुंसकत्वात् । 'यञ्

गजसहायाभ्यां चेति वक्तव्यम्' (वा २७२१) गजता, सहायता । 'अह्नः खः क्रतौ' (वा २७२२-२७२३) । अहीनः । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । क्रतौ किम्-आह्नः । इह खण्डिकादित्वादञ् । 'अह्नष्टखोरेव' (सू ७८९) इति नियमाट्टिलोपो न । 'पर्श्वा णस् वक्तव्यः' (वा २७२४) । १२५२ सिति च । (१-४-१६) सिति परे पूर्वं पदसंज्ञं स्यात् । अभत्वादोर्गुणो न । पर्शूनां समूहः पार्श्वम् । १२५३ अनुदात्तादेरञ् । (४-२-४४) कापोतम् । मायूरम् । १२५४ खण्डिकादिभ्यश्च (४-१-४५) अञ्स्यात् । खण्डिकानां समूहः खाण्डिकम् । १२५५ चरणेभ्यो धर्मवत् । (४-२-४६) काठकम् । छान्दो-

स्त्रियाम्' इति लिङ्गानुशासनसूत्राच्च । गजसहायाभ्यां चेति । आभ्यामपि समूहे तलिति वक्तव्यमित्यर्थः । अह्नः खः क्रतौ इति । वार्तिकमिदम् । क्रतौ वर्तमानाद् अहन्शब्दात् समूहेऽर्थे खप्रत्ययो वाच्य इत्यर्थः । अहीन इति । अहश्शब्देन सौत्यान्यहानि विवक्षितानि । तेषां समूह इति विग्रहः । अहन्शब्दात् खः, ईनादेशः । 'अह्नष्टखोरेव' इति टिलोप इति भावः । फलितमाह—अहर्गणेति । आह्न इति । अह्नां समूह इति विग्रहः । इह क्रत्वप्रतीतेर्न ख इति भावः । 'अचित्तहस्तिधेनोः—' इति ठकमाशङ्क्याह—इहेति । 'खण्डिकादिभ्यश्च' इत्यञित्यर्थः । नन्वेवं सति 'अन्' इति प्रकृतिभावस्याणि विहितस्यात्रासंभवाट्टिलोपः स्यादित्यत आह—अह्नष्टखोरेवेति । टिलोपाभावे सति 'अल्लोपोऽनः' इत्यकारलोपे आह्न इति रूपमिति भावः । पर्श्वा णसिति । अणोऽपवादः । पर्शुशब्द उकारान्तस्त्रीलिङ्गः पार्श्वगतमस्थिवाची । तस्माद् णसि ओर्गुणे प्राप्ते—सिति च । 'सुप्तिङन्तं पदम्' इत्यतः पदमित्यनुवर्तते तदाह—सिति परे पूर्वपदसंज्ञमिति । सकार इद् यस्य स सित् । 'स्वादिष्वसर्वनामस्थाने' इत्येव सिद्धे भसंज्ञापवादोऽयम् । अभत्वादिति । पदत्वेनानेन भत्वस्य बाधादिति भावः । पर्शूनां समूहः पार्श्वमिति । पर्शु अ इति स्थिते 'इको-ऽसवर्णे—' इति शाकल्यह्रस्वप्रकृतिभावयोः 'सिति च' इति तत्रत्यवचनान्तरेण तन्निषेधे यणादेशे पार्श्वमिति रूपमिति भावः । अनुदात्तादेरञ् । समूह इत्येव । कापोतम् । मायूरमिति । 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति कपोतमयूरशब्दौ मध्योदात्ताविति भावः । खण्डिकादिभ्यश्च । शेषपूरणेन सूत्रं व्याचष्टे—अञ् स्या-

इत्यत्रापत्यग्रहणाच्च । ठञ् तु नानुवर्तिष्यते अस्वरितत्वादिति चेत् । सत्यम्, अवृद्धादपि कुतश्चिद्विधानार्थं यद्वचनम् । तत्सिद्धार्थानुवादकं वार्तिकमाह—पृष्ठादिति । पृष्ठं स्तोत्रविशेषः । पृष्ठ्य इति । पृष्ठानां समूहः पृष्ठ्यः षडह इति तु मत्वर्थलक्षणया बोध्यम् । ग्रामजन । वृत्तिकृता तु वार्तिकस्थसहायशब्दोऽपि सूत्रे प्रक्षिप्तः । अनुदात्तादेरञ् । आपूपिकं शाष्कुलिकमित्यादौ परत्वाद् 'अचित्तहस्तिधेनोः—' इति ठगेवेत्याशयेनेह सूत्रे चित्तवन्तमुदाहरति—कापोतमिति । 'लघावन्ते—' इति फिट्सूत्रेण कपोतमयूरशब्दौ मध्योदात्तौ । न च 'शकुनीनां च लघु पूर्वम्' इत्याद्युदात्ताविमाविति शङ्क्यम् । 'अन्त्यात्पूर्वं लघूदात्तम्' इति तत्र व्याख्यानादित्याहुः । खण्डिका । आद्युदात्तार्थमचित्ताट्ठको बाधनार्थं च वचनम् ।

यम्। १२५६ अचित्तहस्तिधेनोष्ठक् । (४-२-४७) साक्तुकम्। हास्तिकम्। धैनुकम् । १२५७ केशाश्वाभ्यां यञ्छावन्यतरस्याम् । (४-२-४८) ठगणौ। कैश्यम्, कैशिकम् । अश्वीयम्, आश्वम्। १२५८ पाशादिभ्यो यः (४-२-४९) पाश्या । तृण्या। धूम्या । वन्या । वात्या । १२५९ खलगो रथात्। (४-२-५०) खल्या । गव्या । रथ्या। १२६० इनित्रकट्यचश्च (४-२-५१) खलादिभ्यः क्रमात्स्युः। खलिनी। गोत्रा। रथकट्या। 'खलादिभ्य इनिर्वक्तव्यः' (वा २७३५)। डाकिनी। कुटुम्बिनी। आकृतिगणोऽयम्

---

दिति। समूह इति शेषः। आद्युदात्तार्थमिदम्। चरणेभ्यो धर्मवत्। चरणः शाखाध्येतारः। धर्मेऽर्थे याभ्य प्रकृतिभ्यो ये प्रत्ययाः वक्ष्यन्ते ते ताभ्यः प्रकृतिभ्यः समूहे स्युरित्यर्थः। काठकमिति। कठानां समूह इति विग्रहः। 'गोत्रचरणाद्वुञ्' इति धर्मे वक्ष्यमाणो वुञ् समूहेऽपि भवति। छान्दोग्यमिति। छन्दोगाः सामशाखिनः, तेषां समूह इति विग्रहः। 'छन्दोगौक्थिकयाज्ञिकवह्वृचनटाद् ञ्यः' इति धर्मे वक्ष्यमाणो ञ्यः समूहेऽपि भवति। अचित्तहस्ति। अचित्ता अप्राणीनः, तद्वाचिनः हस्तिशब्दाद् धेनुशब्दाच्च समूहे ठक् स्यादित्यर्थः। साक्तुकमिति। सक्तूनां समूह इति विग्रहः। 'इसुसुक्तान्तात्कः' इत्युकः परत्वात् ठस्य कः। आदिवृद्धिः। हास्तिकमिति। हस्तिनां समूह इति विग्रहः, ठक्, इकः, टिलोपः, आदिवृद्धिः। धैनुकमिति। धेनूनां समूह इति विग्रहः। उकः परत्वात् ठस्य कः। आदिवृद्धिः। केशाश्वाभ्याम्। समूह इत्येव। केशाद्यञ् वा, अश्वाच्छो वेत्यर्थः। पक्षे इति। केशाद्यञभावे 'अचित्त–' इति ठक्। अश्वाच् छाभावे अणित्यर्थः। कैश्य कैशिकमिति। केशानां समूह इति विग्रहः। क्रमेण यञ्ठकौ। अश्वीय आश्वमिति। क्रमेण छाणौ। पाशादिभ्यो यः। समूह इत्येव। पाश्येत्यादि पाशानां तृणानां धूमानां वनानां वातानां च समूह इति विग्रहः। स्त्रीत्वं लोकात्। खलगोरथात्। समूह इत्येव। ख्व, गो, रथ एभ्यो यः स्यादित्यर्थः। खल्या गव्या रथ्येति। खलानां गवां रथानां च समूह इति विग्रहः। यद्यपि पाशादिष्वेव एषां पाठो युक्तः। तथापि उत्तरसूत्रे एषामेवानुवृत्त्यर्थं पृथक् पाठः। इनित्रकटचचश्च। स्युरिति। इनि त्र कटचच् एते स्युरित्यर्थः। खलिनीति। खलानां समूह इति विग्रहः। इनिप्रत्यये नकारादिका उच्चारणार्थः। स्त्रीत्वं लोकात्। नान्तत्वान्ङीप्। गोत्रेति। गवां समूह इति विग्रहः। गोशब्दात् त्र। स्त्रीत्वं लोकात्, टाप्। रथकट्येति। रथानां समूह इति विग्रहः। कट्य ककारस्य नेत्वम्, अतद्धित इत्युक्तेः स्त्रीत्वाट्टाप्। खलादिभ्य इनिर्वक्तव्य इति। 'इनित्रकटचचश्च' इति सूत्रे इनिग्रहणमकृत्वा 'गोरथात्त्रकटचचौ' इत्येव कृत्वा 'खलादिभ्य इनिः' इति पृथक्कर्तव्यमित्यर्थः।

---

चरणेभ्यः। यस्याः प्रकृतेर्यः प्रत्ययो धर्मे वक्ष्यते, स तस्याः प्रकृतेः समूहे स्यादित्यर्थः। वुञादयो हि चरणेभ्यो वक्ष्यन्ते। तत्र 'चरणाद्धर्माम्नाययोः' इति वार्तिकम्। तदर्थ्यनेनैवातिदेशसूत्रेण ज्ञाप्यते। काठकमित्यादि। गोत्रचरणाद्

१२६१ विषयो देशे । (४-२-५२) षष्ठ्यन्तादणादयः स्युरत्यन्तपरिशीलितेऽर्थे स चेद्देशः । शिबीनां विषयो देशः शैवः । देशे किम्-देवदत्तस्य विषयोऽनुवाकः । १२६२ राजन्यादिभ्यो वुञ् । (४-२-५३) राजन्यकः । १२६३ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ । (४-२-५४) भौरिकीणां विषयो देशो भौरिकिविधम् । भौलिकिविधम् । ऐषुकारिभक्तम् । सारसायनभक्तम् । १२६४ सोऽस्यादिरिति च्छन्दसः प्रगाथेषु । (४-२-५५) अण् ।

---

विषयो देशे । समूह इति निवृत्तम् । तस्येत्यनुवर्तते । तस्य विषय इत्यर्थे प्रथमोच्चारितात् षष्ठ्यन्तात्प्रत्ययाः स्युरिति लभ्यते । तदाह—षष्ठ्यन्तादिति । विषयशब्दं व्याचष्टे—अत्यन्तपरिशीलितेऽर्थे इति । देवदत्तविषयोऽनुवाक इत्यत्र तथा दर्शनादिति भावः । तर्हि तत्रातिव्याप्तिः स्यादित्यत आह—स चेदिति । सः अत्यन्तपरिशीलितोऽर्थो देशश्चेदित्यर्थः । एवं च अत्यन्तपरिशीलिते देशे गम्ये प्रत्ययाः स्युरिति फलितम् । विषयशब्दो ह्ययं क्वचित् ग्रामसमूहात्मके जनपदे वर्तते । तद्यथा—सामन्तस्य राज्ञो विषयोऽनेन लब्ध इति । क्वचिदिन्द्रियग्राह्ये वर्तते । तद्यथा चक्षुर्विषयो रूपमिति । क्वचिदन्यत्रावृत्तौ वर्तते । यथा मत्स्यानां विषयो जलमिति । अन्यत्र नास्तीति गम्यते । प्रकृते तु देवदत्तविषयोऽनुवाक इतिवदत्यन्तपरिशीलिते वर्तते । तत्र विषयशब्देन अत्यन्तपरिशीलितेऽर्थे अवगते सति अनुवाकादिव्यावृत्त्यर्थं देशग्रहणम् । शिबीनां विषयो देश इति । अत्यन्तपरिचितो देश इत्यर्थः । देवदत्तस्य विषय इति । अत्यन्तपरिचितोऽनुवाक इत्यर्थः ।, अत्र देशस्यानवगमाद् न प्रत्यय इति भावः । विषय इति किम्—देवदत्तस्य कदाचिद्गन्तव्यो मार्गः । न च देवदत्तस्य गृहमित्यत्र अत्यन्तपरिचितदेशत्वात् प्रत्ययः स्यादिति वाच्यम्, जनपदसमूहात्मकात्यन्तपरिशीलितदेशस्यैवात्र विवक्षितत्वात् । राजन्यादिभ्यो वुञ् । तस्य विषयो देश इत्यर्थे राजन्यादिभ्यः षष्ठ्यन्तेभ्यो वुञ् स्यादित्यर्थः । अणोऽपादः । राजन्यक इत्यत्र राजन्यानां विषयो देश इत्यर्थः । भौरिक्याद्यैषु । भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च षष्ठ्यन्तेभ्यो यथाक्रमं विधल्, भक्तल्, एतौ प्रत्ययौ स्तो विषयो देश इत्यर्थे । भौरिकिविधमिति । भौरिकीणां विषयो देश इत्यर्थः । भौलिकिविधमिति । भौलिकीनां विषयो देश इत्यर्थः । ऐषुकारिभक्तमिति । ऐषुकारीणां विषयो देश इत्यर्थः । सारसायनभक्तमिति । सारसायनानां विषयो देश इत्यर्थः । इह नपुंसकत्वं लोकात् । सोऽस्यादिः । ऋग्द्वयमाम्नातं पादावृत्त्या ऋक्त्रयं संपद्यते । स च संप्रगाथ इति छन्दोगसूत्रे बह्वृचसूत्रे प्रसिद्धम् । षष्ठ्येक-

---

छान्दोग्यमिति । 'छन्दोगौक्थिक—' इति ञ्यः । यञ्छाविति । यथासंख्यं स्तः । ठगणाविति । केशशब्दादचित्तत्वेन ठक् । विषयो देशे । 'तस्य' इत्यनुवर्तत इत्याह—षष्ठ्यन्तादिति । विषयशब्दार्थमाह—अत्यन्तेति । भौरिक्या । आभ्यां गणाभ्यां यथासंख्यमेतौ प्रत्ययौ स्तः । भौरिकिविधमित्यादि । क्लीबत्वं लोकात् । सोऽस्यादिरिति । छन्दो नामाक्षरेयत्तानिबन्धनपङ्क्तयादिरिह विवक्षितः । तद्वाचकात्प्रथमान्तादस्येत्यादिमति प्रत्ययः स्यात्, य आदिमान्स प्रगाथ-

पङ्क्तिरादिरस्येति पाङ्क्तः प्रगाथः । 'स्वार्थे उपसंख्यानम्' (वा २७४) त्रिष्टुबेव त्रैष्टुभम् । १२६५ संग्रामे प्रयोजनयोद्धृभ्यः । (४-२-५६) 'सोऽस्य' इत्यनुवर्तते । सुभद्रा प्रयोजनमस्य सङ्ग्रामस्येति सौभद्रः । भरता योद्धारोऽस्य संग्रामस्य भारतः । १२६६ तदस्यां प्रहरणमिति क्रीडायां णः (४-२-५७) दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा । १२६७ घञः सास्यां क्रियेति ञः । (४-४-५८) घञन्तात्क्रियावाचिनः प्रथमान्ताद- मिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः स्यात् । घञ इति कृद्ग्रहणाद्गतिकारकपूर्वस्या- ग्रहणम् । १२६८ श्येनतिलस्य पाते ञे । (६-३-७१) श्येन ति- एतयोर्मुमागमः स्याद् ञप्रत्यये परे पातशब्दे उत्तरपदे । श्येनपातोऽस्यां वर्तते श्यैनम्पाता मृगया । तलिपातोऽस्यां वर्तते तैलम्पाता स्वधा । श्येनति-

---

वचनस्थाने सप्तमीबहुवचनमार्षम् । सोऽस्य प्रगाथस्य आदिरित्यर्थे प्रथमान्तात् छन्- विशेषवाचकाद् अणादिप्रत्ययाः स्युरित्यर्थः । अक्षरयत्ताविशेषो गायत्र्यादिश्छन्- पङ्क्तिरादिरिति । पङ्क्तिच्छन्दस्का ऋग् आदिर्यस्य प्रगाथस्य स पाङ्क्तः प्र- इत्युच्यत इत्यर्थः । स्वार्थे इति । छन्दोवाचिभ्यः स्वार्थे अणादिप्रत्ययसं- संख्यानमित्यर्थः । त्रैष्टुभमिति । क्लीबत्वं लोकात् । संग्रामे । अनु- इति । तथा च संग्राम इति सप्तम्यन्तं षष्ठ्या विपरिणतम् अस्येत्यनेनान्वेति- संग्रामस्य प्रयोजनम्, तेऽस्य संग्रामस्य योद्धार इत्यर्थे प्रयोजनयोद्धृवाचिभ्यः प्रथमा- न्तेभ्यः अणादयः स्युरित्यर्थः तदस्याम् । तद् अस्यां क्रीडायां प्रहरणमित्यर्थे प्रथमा- न्तात् प्रहरणवाचकाद् णप्रत्ययः स्यादित्यर्थः । प्रह्रियते अनेनेति प्रहरणम् आयुधम् दाण्डेति । अणि तु ङीप् स्यादिति भावः । मौष्टेति । मुष्टिः प्रहरणमस्यां क्रीडा- मिति विग्रहः । घञः सास्याम् । अस्यामित्यनन्तरं मृगयायामित्यादि स्त्रीलिङ्ग- व्यमध्याहार्यम् । सा क्रिया अस्यां मृगयादिक्रियायामित्यर्थे घञन्तप्रकृतिप्रथमान्ता- यावाचिनो ञः स्यादित्यर्थः । फलितमाह—घञन्तादित्यादिना । कृद्ग्रहणादिति तत्प्रयोजनमनुपदमेव वक्ष्यते । श्येनतिलस्य पाते ञे । मुमागम इति । 'अ- द्विषत्–' इत्यतः तदनुवृत्तेरिति भावः । ञप्रत्यय इति । ञप्रत्यये परे यः पातश-

---

श्चेत् । प्रग्रथ्यत इति प्रगाथः 'ग्रन्थ संदर्भे' इत्यस्माद् 'अकर्तरि च कारके-' कर्मणि घञ् । पृषोदरादित्वाद्रेफनकारयोर्लोपः । अन्ये तु प्रगीयत इति प्रगाथः 'गै शब्दे' इत्यतः 'उषिकुषिगार्तिभ्यः स्थन्' इत्याहुः । यत्र द्वे ऋचावावृत्त्या तिस्रः क्रियन्ते स प्रगाथः—त्रैष्टुभमिति । 'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति न्यायेन क्लीबतेति भावः । संग्रामे । ननु 'प्रथमात्' इत्यधिकारात्प्रथमो- रितसंग्रामवाचिन एव प्रत्ययः प्राप्नोति, न प्रयोजनयोद्धृभ्य इत्यत आह—सोऽस्ये- तीति । एवं च प्रथमान्तविशेषणद्वारा प्रयोजनयोद्धृणां प्रकृतित्वम् 'अस्य' इति प्रत्ययार्थशिषणद्वारा संग्रामस्य प्रत्ययार्थत्वं वक्तुं शक्यमिति भावः । तथा चार्थि- सूत्रार्थः—प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्योऽस्येति षष्ठ्यन्तार्थे स्यात्, स च षष्ठ्यन्तार्थः संग्रामश्चेदिति । तदस्याम् । प्रथमान्तात्प्रहरणोपा-

दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता तिथिः । १२६९ तदधीते तद्वेद । (४-२-५९) व्याकरणमधीते वेद वा वैयाकरणः । १२७० क्रतूक्थादिसूत्रान्ताट्ठक् । (४-२-६०) क्रतुविशेषवाचिनामेवेह ग्रहणम् । ...भ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि । आग्निष्टोमिकः ।

---

...निवृत्त्यर्थः । उत्तरपद इति । 'अलुगुत्तरपदे' इति तदधिकारादिति भावः । ...पात इति । पतनं पातः । भावे घञ् । श्यैनंपातेति । श्येनपातशब्दाद् ...न्ताद् ञः । यद्यपि पातशब्द एव घञन्तः तथापि कृद्ग्रहणपरिभाषया ...पातशब्दस्यापि ग्रहणं बोध्यम् । श्येनस्य पात इति कृद्योगषष्ठ्या समासः । ... च श्येनपातशब्दस्यादिवृद्धिः । तैलंपाता स्वधेति । स्वधाशब्दः ...लिङ्गः पित्र्यक्रियायां वर्तते, 'नमः स्वधायै' इत्यादिदर्शनात् । स्वधेत्यनेन ...डायामिति नानुवर्तत इति सूचितम्, तदस्यामिति प्रकृते पुनरस्यामिति ...हणात् । तदधीते । तदधीते इत्यर्थे तद्वेत्तीत्यर्थे च द्वितीयान्तादणादयः ...त्यर्थः । गुरुमुखादक्षरानुपूर्वीग्रहणमध्ययनम् । शब्दार्थज्ञानं वेदनम् । एतेन ...यनविधिरर्थज्ञानपर्यन्त इति कतिपयमीमांसकोक्तिः परास्ता, पृथग्ग्रहणवैयर्थ्यात् । ...न्ततया अध्वरमीमांसाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः । वैयाकरण इति । ... 'न य्वाभ्याम्–' इत्यैजागमः । क्रतूक्थादि । 'तदधीते तद्वेद' ...त्ययोः क्रतु, उक्थादि, सूत्रान्त एभ्यः ठक् स्यादित्यर्थः । क्रतुविशेषवा-...नामेवेति । न तु क्रतुशब्दस्यैवेत्यर्थः । अन्यथा उक्थादिगण एव क्रतुशब्दमपि ...इति भावः । ननु क्रतुविशेषाणां कथमध्ययनम् । अक्षरग्रहणात्मकत्वाभावादित्यत ...–तेभ्य इति । अग्निष्टोमादिशब्दाः क्रतुविशेषेषु मुख्याः । तत्प्रतिपादकग्रन्थेषु ...णाः । तत्र क्रतुविशेषात्मकमुख्यार्थकेभ्यः अग्निष्टोमादिशब्देभ्यो वेदितरि प्रत्ययाः । ...ग्निष्टोमादिक्रतुप्रतिपादकग्रन्थेषु लक्षणया विद्यमानेभ्यस्तु तेभ्यः अध्येतरीत्यर्थः । ...ग्निष्टोमिक इति । अग्निष्टोमं क्रतुं वेत्ति तत्प्रतिपादकग्रन्थमधीत इति वार्थः । ...शब्दः सामसु मुख्यः । सामलक्षणग्रन्थे प्रातिशाख्ये तु गौणः । तत्र गौणार्थका-

---

...सप्तम्यन्तार्थेण् स्यात् स चेत्सप्तम्यन्यार्थः क्रीडा भवति । प्रहरणं किम्, ... भूषणमस्याम् । क्रीडायां किम्, खड्गः प्रहरणमस्यां सेनायाम् । घञः । ...ग्रहणादिति । तेन 'श्यैनंपाता' इत्यत्र 'ञ्णिति' इत्यङ्गस्य विधीयमाना वृद्धिः ...। श्येनपातस्यापि घञन्तत्वादिति भावः । घञः किम्, श्येनपतनमस्यां वर्तते । ...या किम्, प्रकारोऽस्यां वर्तते । 'तदस्याम्' इति प्रकृते पुनः 'सास्याम्' इत्युक्तिः ...क्रीडायाम्' इत्यस्य निवृत्तिर्यथा स्यादिति । अतएवाह––दण्डपातोऽस्यां ...वर्तते । तदधीते । द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यात् । ...द्ग्रहणमधीयाने विदुषि च प्रत्येकं विधानार्थम् । तेनोत्तरत्र क्रतुवसन्तादयः ...दास्तत्प्रतिपादकग्रन्थे गौणा अप्यधीयानेऽपि प्रत्ययं प्राप्नुवन्ति । अन्यथा तेषामध्य-...नासम्भवेन वेदितर्येव प्रत्ययः स्यादिति भावः । क्रतूक्थादि । क्रतुविशेषेति । ...स्वरूपस्य तु न ग्रहणम् । तथात्वे सत्युक्थादिष्वेव क्रतुशब्दः पठ्येत, नापि क्रतुपर्या-

वाजपेयिकः । उक्थं सामविशेषः, तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थम्, तदधीते वेद वा औक्थिकः । 'मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्येते' । न्यायम्—नैयायिकः । वृत्तिम्—वार्त्तिकः । लोकायतम्—लौकायतिक इत्यादि । 'सूत्रान्ताट्ठकल्पादेरेवेष्यते' (वा २७४४) । सांग्रहसूत्रिकः । अकल्पादेः किम्—काल्पसूत्रः । 'विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्' (वा २७४...) वायसविद्यिकः । गौलक्षणिकः । आश्वलक्षणिकः । पाराशरकाल्पिकः । 'अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्' (वा २७४५) । आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रिविधा विद्या त्रिविद्या, तामधीते वेद वा त्रैविद्यः । 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च' (वा २७४६) यवक्रीतमधिकृत्य कृतमाख्यानमुपचाराद्यवक्रीतम्, तदधीते वेत्ति वा यावक्रीतिकः । वासवदत्तामधिकृ...

---

देव उक्थशब्दात् ठगित्याह—उक्थं सामविशेष इति । 'अग्निष्टोमस्तोत्रा... यत्साम गीयते' इति वृत्तिकृदुक्तेरिति भावः । भाष्ये तु सामशब्दपर्याय उक्थ... इति लभ्यते । मुख्यार्थादिति । सामवाचिन उक्थशब्दात्तु न ठक् । तस्मिन्नि... तदधीते इत्यण् च न भवतीत्यर्थः । भाष्ये तु मुख्यार्थकादुक्थशब्दात् ... नेत्येव [1]लक्ष्यते । उक्थादिगणपठिताद् न्यायादिशब्दात् ठकमुदाहरति—... मिति । अधीते वेद वेति शेषः । नैयायिक इति । ठकि ऐजागमः । वृत्तिमि... अधीते वेद वेति शेषः । वार्त्तिक इति । ठकि आदिवृद्धौ रपरत्वम् । सां... सूत्रिक इति । संग्रहाख्यं सूत्रमधीते वेत्ति वेत्यर्थः । विद्यालक्षणेति । वि... लक्षण, कल्प एतदन्तादपि उक्तेऽर्थे ठगित्यर्थः । अङ्गेति । अङ्ग, क्षत्रधर्म, त्रि... एतत्पूर्वकाद्विद्यान्तात् समासात् ठग् नेत्यर्थः । ततश्च अणेव । त्रिविधा वि... त्रिविद्या इति । शाकपार्थिवादित्वाद्विधाशब्दस्य लोप इति भावः । ... विद्यास्त्रिविद्या इति न विग्रहः, 'दिक्संख्ये संज्ञायाम्' इति नियमात् । नापि ... विद्या अधीते वेद वेति तद्धितार्थे द्विगुः, तथा सति तद्धितस्य द्विगुनिमित्त... 'द्विगोर्लुगनपत्ये' इति लुगापत्तेः । 'तिसृणां विद्यानां समाहार इति द्विगुरप्यत्र ... एव । आख्यानेति । आख्यान, आख्यायिका, इतिहास, पुराण एभ्यश्च ... ठग्वक्तव्य इत्यर्थः । तत्र आख्यानशब्देन आख्यायिकाशब्देन च आख्यान... वाचिन आख्यायिकाविशेषवाचिनश्च ग्रहणम् । इतिहासपुराणशब्दयोस्तु ... योरेव ग्रहणम् । आख्यानं नाम कथाप्रबन्धः । 'आख्यायिकोपलब्धार्था पु... पञ्चलक्षणम्' इत्यमरः । इतिहासः पुरावृत्तम्' इति च ।

---

याणामुक्थादिगणे यज्ञशब्दपाठादिति भावः । अध्येतरीति । [2]अध्येतर्यपि... आग्निष्टोमिक इति । संस्थाविशेषवाचकस्याप्यग्निष्टोमशब्दस्य तत्संस्थाके ... निरूढप्रयोगः । तल्लक्षणेत्यादि । तत्प्रतिपादकप्रातिशाख्यमित्यर्थः । नेष्येते ...

---

१ 'लभ्यते इति क.। २ एवं सति 'त्रिविद्यम्' इति जाते विद्या... त्वाभावादुदाहरणं न संभवेदिति चिन्त्यमिदम् । अपिशब्दस्वारस्याद् 'न ... इति पाठः प्रतीयते ।

आख्यायिका वासवदत्ता। 'अधिकृत्य कृते ग्रन्थे' (सू १४६७) इत्यर्थे 'वृद्धाच्छः' (सू १३३७)। तस्य 'लुबाख्यायिकाभ्यो बहुलम्' इति लुप्। ततो- ऽण् ठक्। वासवदत्तिकः। ऐतिहासिकः। पौराणिकः 'सर्वादेः सादेश्च लुग्वक्तव्यः' (वा २७४८) सर्ववेदानधीते सर्ववेदः। सर्वतन्त्रः। सवार्तिकः। द्विगोलुक्'— (सू १०८०) इति लुक्। द्वितन्त्रः। 'इकन्पदोत्तरपदाच्छतषष्टेः 'षिकन्पथः' (वा २७४९-२७५०) पूर्वपदिकः। उत्तरपदिकः। शतपथिकः, शतपथिकी। षष्टिपथिकः, षष्टिपथिकी। १२७१ क्रमादिभ्यो वुन्। (४-२-६१) क्रमकः। क्रम पद शिक्षा मीमांसा क्रमादिः। १२७२ अनुब्राह्मणादिनिः।

'सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम्॥'

तत्र आख्यानादुदाहरति। यवक्रीतमिति। आख्यायिकाया उदाहरति— वासवदत्तामिति। लुग्वक्तव्य इति। उक्तप्रत्ययस्येति शेषः। सर्ववेद इति। अणो लुकि आदिवृद्ध्यभावः। सर्वतन्त्र इति। सर्वतन्त्राण्यधीते वेद वेत्यर्थः। सवार्तिक इति। वार्तिकेन सह सवार्तिकम्। तेन बहुव्रीहिः। 'वोपसर्जनस्य' इति सभावः। सवार्तिकं सूत्रमधीत इत्यर्थः। द्विगोरिति। द्वे तन्त्रे अधीते वेत्ति वेत्यर्थे तद्धितार्थे द्विगुनिमित्तत्वादणो लुकि आदिवृद्ध्यभावे द्वितन्त्र इति रूपमित्यर्थः। इकन् पदोत्तरपदादिति। पदशब्द उत्तरपदं यस्य स पदोत्तरपदः, तस्मादुक्तेऽर्थे इकन्प्रत्ययो वक्तव्यः। शतषष्टेः षिकन्पथ इति। शतशब्दात् षष्टिशब्दाच्च परो यः पथिन्शब्दः तस्माद् उक्तेऽर्थे षिकन्प्रत्ययो वक्तव्य इत्यर्थः। पूर्वपदिक इति। पूर्वपदमधीते वेत्ति वेत्यर्थः। एवमुत्तरपदिकः। शतपथिक इति। शतपथं नाम वाजसनेयिब्राह्मणम्। तदधीते वेत्ति वेत्यर्थः। शतपथिकीति। [1]टित्त्वाद् ङीबिति भावः। एवं षष्टिपथिकः षष्टिपथिकीति। क्रमादिभ्यो वुन्। तदधीते तद्वेद इत्यर्थे इति शेषः। क्रमक इति। क्रममधीते वेत्ति वेत्यर्थः। क्रमादिगणं पठति—क्रमेत्यादि।

अभिधानादिति भावः। त्रिविधेति। 'तिस्रो विद्या अधीते' इति विग्रहे तु तद्धितार्थे द्विगौ 'त्रिविद्यः' इत्येव स्याद् 'द्विगोर्लुगनपत्ये' इति लुक्प्रवृत्तेरिति भावः। आख्यायिकेति। गद्यपद्यरूपो ग्रन्थविशेष इत्यर्थः। 'सर्वादेरिति। 'सादेः' इत्येव सिद्धे सर्वादिग्रहणमर्थवत्परिभाषाज्ञापनार्थम्। सवार्तिक इति। वार्तिकासहितमधीत इत्यर्थः। अन्तवचने अव्ययीभावः। 'अव्ययीभावे चाकाले' इति सहस्य सभावः। इकन्निति। पदशब्द उत्तरपदं यस्य तस्मादिकन्। शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात्तु षिकन् वाच्य इत्यर्थः। शतपथिक इति। वृत्तिकृता तु वार्तिके 'बहुलम्' इति पूरयित्वा 'शातपथः' इत्यणन्तमप्युदाहृतम्। तत्तु भाष्ये न दृष्टम्। षित्त्वफलं दर्शयति—शतपथिकीति। अणबाधनार्थमिति। भाष्ये।

१ 'टिकन् पथः' इति क. ख.। अयमेव पाठो बालमनोरमासंमतः प्रतीयते, परं कौमुदीपुस्तकानामसंवादबाहुल्यादिह षिकन् निवेशितः। २ 'षिकन्' इति पाठानुरोधेन 'षित्वात्' इति युक्तं स्यात्।

(४-२-६२) 'तदधीते तद्वेद' (सू १२६९) इत्यर्थे। ब्राह्मणसदृशो ग्रन्थो-ऽनुब्राह्मणम्, तदधीतेऽनुब्राह्मणी। मत्वर्थीयेनैव सिद्धेऽण्बाधनार्थमिदम्। १२७३ वसन्तादिभ्यष्ठक्। (४-२-६३) वासन्तिकः। अथर्वाणमधीते आथर्वणिकः। 'दाण्डिनायन-' (सू ११४५) इति सूत्रे निपातनाट्टिलोपो न। १२७४ प्रोक्ताल्लुक्। (४-२-६४) प्रोक्तार्थकप्रत्ययात्परस्याध्येतृवेदितृप्रत्ययस्य लुक्स्यात्। पणनं पणः। 'घञर्थे कविधानम्' इति कः, सोऽस्यास्तीति पणी। तस्य गोत्रापत्यं पाणिनः। १२७५ गाथिविदथिकेशिगणिपणिनश्च। (६-४-१६५) एतेऽणि प्रकृत्या स्युः। इति टिलोपो न। ततो यून्यपत्ये इञ्, पाणिनिः। १२७६ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः (२-४-५८)

---

क्रमादिरिति। अयं क्रमादिगण इत्यर्थः। पदकः शिक्षकः मीमांसक इत्युदाहरणानि। अनुब्राह्मणादिनिः। शेषपूरणेन सूत्रं व्याचष्टे—तदधीते तद्वेदेत्यर्थे इति। इनिप्रत्यये नकारादिकार उच्चारणार्थः। तथा च नकारस्योपदेशेऽन्त्यत्वाभावान्नेत्संज्ञा। ननु 'अत इनिठनौ' इति मत्वर्थे इनिनैव सिद्धत्वादिदं व्यर्थमित्यत आह—अण्बाधनार्थमिति। भाष्ये तु प्रत्याख्यातमेवेदम्। वसन्तादिभ्यष्ठक्। 'तदधीते तद्वेद' इत्येव। वासन्तिक इति। वसन्तवर्णनपरग्रन्थो वसन्तः तमधीते वेत्ति वेत्यर्थः। अथर्वाणमिति। अथर्वणा प्रोक्तो वेदो लक्षणया अथर्वा तमित्यर्थः। वस्तुतस्तु प्रोक्तप्रत्ययस्य 'ऋषिभ्यो लुग्वक्तव्यः' इति वचनाल्लुक्। आथर्वणिक इत्यत्र 'नस्तद्धिते' इति टिलोपमाशङ्क्याह—दाण्डिनायनेति। वान्तसंयोगपूर्वकत्वात्तु नाल्लोपः। अथ पाणिनिशब्दं व्युत्पादयितुमुपक्रमते-प्रोक्ताल्लुक्। प्रोक्तशब्देन प्रोक्तार्थप्रत्ययो विवक्षितः। अध्येतृवेदितृप्रत्ययस्य प्रकृतत्वाल्लभ्यते, तदाह—प्रोक्तार्थकेति। पणनं पण इति। स्तुतिरित्यर्थः। 'हलश्च' इति घञि उपधावृद्धिः स्यादित्यत आह—घञर्थे इति। पणीति। 'अत इनिठनौ' इति मत्वर्थे इनिः। तस्येति। पणिनो गोत्रापत्ये तस्यापत्यमित्यणि पाणिन इति रूपमित्यर्थः। अत्र अणः अपत्यत्वात्तस्मिन् परे 'इनण्यनपत्ये' इति प्रकृतिभावाभावाट्टिलोपे प्राप्ते। गाथिविदथि। 'इनण्यनपत्ये' इत्यतः 'अणि' इत्यनुवर्तते। 'प्रकृत्यैकाच्' इत्यतः 'प्रकृत्या' इति च। तदाह—एतेऽणि प्रकृत्या स्युरिति। गाथिन्, विदथिन्, केशिन्, गणिन्, पणिन् एत इत्यर्थः। अपत्येऽप्यणि प्रकृतिभावार्थमिदम्। ततो यून्यपत्य इति। मूलप्रकृतिः पणी

---

तु प्रत्याख्यातमेवेदं सूत्रं तद्रीत्या त्वणिष्यत इति, अनभिधानान्नेति वा बोध्यम्। वसन्ता। उक्थादिष्वेव वसन्तादीन् पठित्वा, वसन्तादिषु वा उक्थादीन् पठित्वा अन्यतरच्छक्यमवक्तुम्। अथर्वाणमिति। अथर्वणा प्रोक्त उपचारादथर्वा। यद्वा 'तेन प्रोक्तम्' इत्यधिकारे 'ऋषिभ्यो लुग्वक्तव्यः' वसिष्ठो विश्वामित्रोऽनुवाकः इत्युदाहृत्य 'अथर्वणो वा' 'अथर्वा' 'आथर्वणः' इति भाष्योक्तः सार्थः। गाथिविदथि। 'इनण्यनपत्ये' इति सिद्धे अपत्येऽप्यणि प्रकृतिभावार्थमयमारम्भः।

त्ययान्तात्क्षत्त्रियगोत्रप्रत्ययान्तदृष्यभिधायिनो गोत्रप्रत्ययान्ताद् ञितश्च पर-
युवाभिधायिनोरणिञोर्लुक्स्यात् । कौरव्यः पिता, कौरव्यः पुत्रः । श्वाफल्कः
पिता, श्वाफल्कः पुत्रः । वासिष्ठः पिता, वासिष्ठः पुत्रः । तैकायनिः पिता,
तैकायनिः पुत्रः । 'एभ्यः' किम्—शिवाद्यण् । कौहडः पिता । तत इञ् । कौहडिः
पुत्रः । 'यूनि' किम्—वामरथ्यस्य च्छात्रा वामरथाः, इत्यणो लुक्तु न भवति,
आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् । पाणिनिना प्रोक्तं पाणिनीयम् ।

---

अपेक्षया चतुर्थेऽपत्ये यूनि विवक्षिते पाणिनशब्दाद् गोत्राणन्ताद् अत इञि
पाणिनिरिति रूपमित्यर्थः । पाणिनशब्दस्य अनन्तरापत्यप्रत्ययान्तत्वे तु ततोऽनन्त-
रापत्ये मुलप्रकृतिपण्यपेक्षया तृतीये गोत्रापत्ये इञ् न संभवति, 'एको गोत्रे' इति
नियमात् । नापि मूलप्रकृत्यपेक्षया चतुर्थापत्ये यूनि पाणिनशब्दादनन्तरापत्यप्रत्य-
यान्तादिञ् संभवति, 'गोत्राद्यून्यस्त्रियाम्' इति यून्यपत्ये गोत्रप्रत्ययान्तादेवापत्यप्रत्यय-
विधानात् । अतो गोत्राणप्रत्ययान्तात् पाणिनशब्दाद्यूनि इञ्प्रत्यय इत्युक्तमिति बोध्यम् ।
तत इञो लुकमाशङ्कितुमाह—ण्यक्षत्रियार्ष । ण्यादयः सर्वे गोत्रप्रत्यया
एव गृह्यन्ते, 'गोत्राद्यूनि' इत्युक्तेः । तदाह—गोत्रप्रत्ययान्तादित्यादि । ण्य-
प्रत्ययस्योदाहरति—कौरव्य इति । कुरोः गोत्रापत्यं कौरव्यः । कुर्वादिभ्यो
ण्यः । कौरव्यस्यापत्यं युवेत्यर्थे अत इञ् । तस्यानेन लुक् । क्षत्त्रियप्रत्ययस्यो-
दाहरति—श्वाफल्क इति । श्वफल्कस्य गोत्रापत्यं श्वाफल्कः । 'ऋष्यन्धक–'
इत्यण् । श्वाफल्कस्यापत्यं युवेत्यर्थे अत इञ् । तस्यानेन लुक् । आर्षप्रत्ययस्यो-
दाहरति—वासिष्ठ इति । वसिष्ठस्य गोत्रापत्यं वासिष्ठः । ऋष्यण् । वासिष्ठ-
स्यापत्यं युवेत्यर्थे इञ् । तस्यानेन लुक् । ञित उदाहरति—तैकायनिरिति ।
तिकस्य गोत्रापत्यं तैकायनिः । तिकादिभ्यः फिञ् । तैकायनेरपत्यं युवेत्यर्थे तस्या-
पत्यमित्यण् । तस्यानेन लुक् । वामरथ्यस्येति । वामरथस्य गोत्रापत्यं वाम-
रथ्यः । कुर्वादिभ्यो ण्यः । वामरथ्यस्य छात्रा इत्यर्थे 'कण्वादिभ्यो गोत्रे' इति
तस्येदमित्यर्थे अण्, तस्यानेन लुङ् न भवति, तस्य युवार्थकत्वाभावादिति भावः ।
तस्याणो लुक्तु न भवतीति । 'ण्यक्षत्त्रिय––' इति सूत्रेण पाणिनिरित्यत्र
इञो लुङ् न भवतीत्यर्थः । कुत इत्यत आह—आर्षग्रहणेनेति । पाणिनि-
शब्दे पणिन्शब्दादण्प्रत्ययस्य औत्सर्गिकस्य वस्तुगत्या ऋषिवाचित्वेऽपि ऋषौ
प्रतिपदोक्तत्वाभावान्न ततः परस्य इञो लुगिति भावः । न च पणिन्शब्दाद्गोत्रा-
पत्ये 'ऋष्यन्धक–' इत्यणेव कुतो न स्यादिति वाच्यम्, यत्र औत्सर्गिकस्य अण

---

गाथिनः । वैदथिनः । कैशिनः । गाणिनः । पाणिनः । ण्यक्षत्रियार्षः । कौरव्य
इति । 'कुर्वादिभ्यो ण्यः' तत इञो लुक् । कौरव्यः पुत्रः । ननु तिकादिषु
कौरव्यशब्दः पठ्यते, तथा च कौरव्यायणिरिति फिञा भाव्यम्, न त्विञेति चेत् ।
सत्यम्, 'कुरुनादिभ्यो ण्यः' इति क्षत्त्रियगोत्रे विहितो योण्यस्तदन्तं तत्र पठ्यते ।
प्रकृते तु ब्राह्मणगोत्रप्रत्ययान्तमित्यवधेयम् । श्वाफल्क इति । 'ऋष्यन्धक–'
इत्यण् । तत इञो लुक्, श्वाफल्कः पुत्रः । वासिष्ठ इति । ऋष्यण तत इञो

'वृद्धाच्छः' (सू १३३७)। 'इञश्च' (सू १३३२) इत्यण् तु न। गोत्रे य इञ्। तदन्तादिति वक्ष्यमाणत्वात्। ततोऽध्येतृवेदित्रणो लुक्। स्वरे स्त्रियां च विशेषः। पाणिनीयः। पाणिनीया। १२७७ सूत्राच्च कोपधात्। (४-२-६५) सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक् स्यात्। अप्रोक्तार्थं आरम्भः।

---

इञादिना बाधः प्रसक्तः, तत्रैव तद्बाधनार्थम् ऋष्यणः प्रवृत्तेः। वस्तुतस्तु 'वान्यस्मिन्त्सपिण्डे—' इति सूत्रभाष्ये अत्रिशब्दाद् 'इतश्चानिञः' इति ढकि आत्रेयशब्दादिञो 'ण्यक्षत्रियार्ष—' इति लुगित्युक्तत्वादिदमुपेक्ष्यम्। 'ण्यक्षत्रिय-' इत्यत्र तु ऋषिवाचकस्य रूढस्यैव ग्रहणम्। पणिन्शब्दः, तदपत्ये पाणिनशब्दश्च न ऋषिवाचकौ। अत औत्सर्गिकाणन्त एव पाणिनशब्द इति शब्देन्दुशेखरे प्रपञ्चितम्—पाणिनिनेति। पाणिनिना प्रोक्तमित्यर्थे 'तेन प्रोक्तम्' इत्यणं बाधित्वा 'वृद्धाच्छः' इति छप्रत्यये ईयादेशे पाणिनीयशब्द इत्यर्थः। ननु पाणिनिशब्दात्तद्धिते विवक्षिते 'यूनि लुक्' इति इञो लुकि सत्यपि प्रत्ययलक्षणेन इञन्तत्वमाश्रित्य छापवादः अण् स्यादित्यत आह—इञश्चेत्यण् तु नेति। पाणिनिशब्दे इञ् युवापत्यार्थक एव, न तु गोत्रार्थकः युवसंज्ञया गोत्रसंज्ञाया बाधादिति भावः। यद्यपि अपत्याधिकारादन्यत्र न पारिभाषिकं गोत्रमित्युक्तम्, तथाप्यत्र पारिभाषिकमेव गोत्रं गृह्यत इति उपरिष्टाद् 'इञश्च' इति सूत्रे वक्ष्यते। तत इति। पाणिनीयशब्दादित्यर्थः। पाणिनीयमधीते वेत्ति वेत्यर्थे पाणिनीयशब्दादणि 'प्रोक्ताल्लुक्' इति तस्य लुगिति भावः। ननु असत्यपि अध्येतृवेदितृप्रत्ययस्याणो लुकि पाणिनीयशब्दः सिध्यत्येवेत्यत आह—स्वरे स्त्रियां च विशेष इति। अध्येतृवेदितृप्रत्ययस्याणो लुगभावे प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप् स्यात्। लुकि तु सति छादेशस्य ईयादेशस्य ईकारः प्रत्ययस्वरेणोदात्तः टाप् च सिध्यति। तदाह—पाणिनीयः, पाणिनीयेति। सूत्राच्च कोपधात्। ककारोपधादित्यनन्तरं परस्येति शेषः। ननु 'प्रोक्ताल्लुक्' इत्येव सिद्धे किमर्थमिदमित्यत आह—अप्रोक्तार्थं आरम्भ इति।

---

लुक्। वासिष्ठः पुत्रः। तैकायनिरिति। 'तिकादिभ्यः फिञ्' ततोऽणो लुक्। तैकायनिः पुत्रः। वामरथा इति। कुर्वादित्वाद् ण्यः। ततो वृद्धाच्छं बाधित्वा 'कण्वादिभ्यो गोत्रे' इति शैषिकोऽण्। इतीति। 'ण्यक्षत्रियार्ष—' इत्युदाहृतसूत्रे इत्यर्थः। ऋष्यण एवेति। पाणिनशब्दे तु औत्सर्गिक एवाणिति भावः। बाधित... 'वान्यस्मिन् सपिण्डे—' इति सूत्रस्थभाष्यकैयटाभ्यां विरुध्यते। अत्रेर्युवापत्यानि पुमांसोऽत्रयः, 'इतश्चानिञः' इति ढक्, तदन्ताद्यूनि 'अत इञ्' तस्य 'ण्यक्षत्रिय-' इति लुक्, 'अत्रिभृगुकुत्स—' इति ढकोऽपि लुक् इत्युक्तत्वात्। 'ऋष्यन्धक-' इति एव ग्रहणे तु ढकोऽग्रहणात्ततः परस्येञो लुङ् न स्यादित्याहुः। वस्तुतस्तु 'दाक्षीपुत्रस्य पाणिनेः' इति भाष्यप्रयोगादस्य साधुत्वमिति ज्ञेयम्। इञश्चेतीति। 'यूनि लुक्' इति लुक्यपि प्रत्ययलक्षणेन इञन्तमस्तीति भावः। गोत्रे य इति। 'गोत्रं शास्त्रीयम्, न तु लौकिकमिति तत्र वक्ष्यते' इति भावः। स्वर इति।

संयोगान्तलोपस्यासिद्धत्वं न भवति, बहुलग्रहणात् । तथा च 'श्वन्नुक्षन्—' (उ १५७) इति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रं प्रत्याख्यातमाकरे । 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति भट्टिः । मघवन्तौ, मघवन्तः । हे मघवन् । मघवन्तम्, मघवन्तौ, मघवतः ।

---

संयोगान्तलोपस्यासिद्धत्वाद् नान्तत्वाभावात् पचन्नित्यादाविव दीर्घो न संभवतीत्यत आह—इह दीर्घे कर्तव्य इति । बहुलग्रहणादिति ।

'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
शिष्टप्रयोगाननुसृत्य लोके विज्ञेयमेतद्बहुलग्रहे तु ॥' इति स्थितिः ।

अत्र दीर्घे कर्तव्ये संयोगान्तलोपस्य नासिद्धत्वम्, पचन्नित्यादौ तु असिद्धत्वमिति बहुलग्रहणाल्लभ्यत इत्यर्थः । ननु त्रादेशपक्षे मघवन्नित्येवास्तु, बहुलग्रहणेन संयोगान्तलोपस्यासिद्धत्वाभावकल्पनायां प्रमाणाभावात् । वेदे तु यज्ञेन मघवानित्यादिप्रयोगः छान्दसो भविष्यतीत्यत आह—तथा चेति । त्रादेशपक्षे संयोगान्तलोपस्यासिद्धत्वाभावमभ्युपगम्यैवेत्यर्थः । निपातनादिति । कनिप्रत्ययस्य, अवुगागमस्य, घत्वस्य च त्रयाणां निपातनादित्यर्थः । तथा न नान्तो मघवन्शब्दः सिध्यतीति भावः । मघशब्दादिति । धनपर्यायादित्यर्थः । मघः धनमस्यास्तीत्यर्थे मतुपि 'मादुपधायाश्च—' इति वत्वे तान्तो मघवच्छब्दः सिद्ध इति भावः । भाषायामपीति । लोके छन्दसि चेत्यर्थः । शब्दद्वयेति । मघवन्शब्दो मघवच्छब्दश्चेति शब्दद्वयम् 'मघवा बहुलम्' इत्यस्य फलम् । तस्य सिद्धिमाश्रित्येत्यर्थः । आकर इति । 'केशाद्वः—' इति सूत्रस्थो कैयटग्रन्थ इत्यर्थः । तत्र ह्येवमुक्तम्—'मघवा बहुलम्' इत्येतन्न कर्तव्यम्, 'श्वन्नुक्षन्—' इति निपातनाद् मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वात्' इति । त्रादेशपक्षे संयोगान्तलोपस्यासिद्धत्वाद् दीर्घाभावाश्रयणे मघवन्निति रूपम्, मतुपि तु 'अत्वसन्तस्य—' इति दीर्घे मघवानिति रूपमिति रूपभेदापत्या तदसंगतिः स्पष्टैवेति भावः । किञ्च त्रादेशपक्षे तु कन्यन्तस्य प्रत्ययस्वरेणान्तोदात्तत्वम्, मतुपि तु 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वस्य 'न गोश्वन्—' इति प्रतिषेधे सति पित्त्वादनुदात्तत्वे घकारादकारस्य फिट्स्वरेण उदात्तत्वमिति फलभेदात् कैयटग्रन्थश्चिन्त्य एव । मघवानिति दीर्घः शिष्टसंमत इत्याह—हविरिति । मखेषु यज्ञेषु निश्शङ्कः असौ मघवान् हविर्जक्षिति—भक्षयतीत्यर्थः ।

---

ननु कुर्वन्नित्यादाविव संयोगान्तलोपस्यासिद्धत्वेन नान्तत्वाभावाद्दीर्घत्वं न स्यादित्याशङ्क्याह—इह दीर्घे कर्तव्य इति । बहुलग्रहणादिति । क्वचिदन्यदेवेत्यर्थकादित्यर्थः । बहूनर्थान् लातीति बहुलम् । 'आतोऽनुपसर्गे—' इति कर्मण्युपपदे कः । श्वन्नुक्षन्निति । 'श्वन्नुक्षन्पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्धन् मज्जन् अर्यमन् विश्वप्सन् परिज्मन् मातरिश्वन् मघवन्' इत्युणादिसूत्रेणेत्यर्थः । निपातनादिति । महेर्हकारस्य घकारः, अवुगागमः कनिप्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः । प्रत्याख्यातमाकर इति । एवं च फलभेदे त्रादेशस्य प्रत्याख्यानासंभवाद् आदेशपक्षेऽपि दीर्घो भाष्यादिसंमत एवेति बहुलग्रहणात्संयोगान्तलोपस्य नासिद्धत्वमित्युक्तम् । यत्त्वाहुः—मतुप्पक्षेऽपि छान्दसत्वान्न दीर्घ इत्येव भाष्याशय इति । तन्न । मतुवन्तस्य छान्द—

वृद्धाच्छं परत्वादयं बाधते। दाक्षिकर्षुकः। १३४४ वृद्धात्प्राचाम्। (४-२-१२०) प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम्। आढकजम्बुकः। शाक- जम्बुकः। नेह—मल्लवास्तु, माल्लवास्तवः १३४५ धन्वयोपधाद् वुञ्। (४-२-१२१) धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद् वुञ् स्यात्। ऐरावतं धन्व, ऐरावतकः। साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादि—(सू १२९९) सूत्रेण ण्यान्तौ। साङ्काश्यकः। काम्पिल्यकः। १३४६ प्रस्थपुरवहान्ताच्च (४-२-१२२) एतदन्ताद् वृद्धाद्देशवाचिनो वुञ्स्यात्। छस्यापवादः। माल- प्रस्थकः। नान्दीपुरकः पैलुवहकः। पुरान्तग्रहणमप्रागर्थम्। प्राग्देशे तूत्तरे- सिद्धम्। १३४७ रोपधेतोः प्राचाम्। (४-२-१२३) रोपधादीकारान्ता- प्राग्देशवाचिनो वृद्धाद् वुञ्स्यात्। पाटलिपुत्रकः। ईतः, काकन्दकः। १३४ जनपदतदवध्योश्च। (४-२-१२४) जनपदवाचिनस्तदवधिवाचिन- वृद्धाद् वुञ्स्यात्। आदर्शकः। त्रैगर्तकः। १३४९ अवृद्धादपि बहुवच-

ग्राम इति शेषः। नैषादकर्षुक इति। उगन्तात्परत्वात् कादेशः। वृद्धात्प्रा- चाम्। 'ओर्देशे ठञ्' इत्यनुवर्तते। प्राचामिति देशविशेषणम्, नतु विकल्पार्थं व्याख्यानात्। पूर्वेण सिद्धे नियमार्थमिदम्। तदाह—प्राग्देशेत्यादिना। आढ- जम्बुक इति। आढकजम्बूर्नाम कश्चिद् ग्रामः। तत्र भव इत्यर्थः। उगन्ता- परत्वात् ठस्य कः। 'केऽणः' इति ह्रस्वः। एवं शाकजम्बुकः। मल्लवास्तिवति कश्चित् प्राच्यो ग्राम इति शेषः। धन्वयोपधाद् वुञ्। ऐरावतं धन्वेति ऐरावताख्यं धन्वेत्यर्थः। धन्व मरुप्रदेशः। 'समानौ मरुधन्वानौ' इत्यमरः। आ- नाम धन्व इति भाष्यान्नपुंसकत्वमपि। ऐरावतक इति। ऐरावताख्ये मरु- भव इत्यर्थः। वुञ्, अकादेशः। साङ्काश्यकः। काम्पिल्यक इति। साङ्का- काम्पिल्ये च भव इत्यर्थः। प्रस्थपुरवहान्ताच्च। एतदन्तादिति। प्रस्थ, पुर, वह एतदन्तादित्यर्थः। ननु पुरान्तग्रहणं व्यर्थम्, नान्दीपुरक इत्यत्र 'रोपधेतोः प्राचाम्' इत्युत्तरसूत्रेण सिद्धत्वादित्यत आह—पुरान्तेति। रोपधेतोः प्राचा- रोपधश्च, ईच्च तयोरिति द्वन्द्वः। षष्ठी पञ्चम्यर्थे। प्राचामिति देशविशेषण- तदाह—रोपधादित्यादिना। ईत इति। उदाह्रियत इति शेषः। का-

आपदादीति। गणसूत्रमिदम्। वृद्धादेवेति। 'वृद्धाच्चेत्प्राचामेव' इति विप- नियमस्तु न भवति, अप्राग्देशवाचिनो वृद्धस्य उवर्णान्तस्याभावात्। धन्वयोपधा- धन्वेति न स्वरूपपर्याययोर्ग्रहणम्, वृद्धत्वासम्भवादित्याशयेनाह—धन्वविशे- ऐरावतं धन्वेति। यद्यपि 'समानौ मरुधन्वानौ' इत्यमरेण पुंस्त्वमुक्तम्, त- 'आष्टकं नाम धन्व' इति भाष्ये ह्रस्वपाठान्नपुंसकोऽपि धन्वशब्दोऽस्त्येवेति बो- उत्तरेणेति। रोपधत्वादिति भावः। जनपद। स चासौ अवधिश्चेति कर्मधा- ज्जनपदरूप एवावधिर्लभ्यते। न च जनपदत्वादेव सिद्धे अवधिग्रहणं व्य- 'वुञेव यथा स्यान्नान्यत्' इत्येतदर्थं तस्यावश्यकत्वात्। अत एव जनपदावधि- स्त्रिगर्तशब्दाद् 'गर्तोत्तरपदात्—' इति छो न भवति, किंतु 'अवृद्धादपि ब-

वुञ्स्यात्। (४-२-१२५) अवृद्धाद् वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयात्प्रातिपदिकाद् वुञ्स्यात्। अवृद्धादणो वृद्धाच्छस्यापवादः। अवृद्धाज्जनपदात्, आङ्गकः। अवृद्धाज्जनपदावधेः, आजमीढकः। वृद्धाज्जनपदात्, दार्वकः। वृद्धाज्जनपदावधेः, कालञ्जरकः। 'विषय' ग्रहणं किम्—एकशेषेण बहुत्वे मा भूत्—वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, तासु भवो वार्तनः। १३५० कच्छाग्निवक्त्रवर्तोत्तरपदात्। (४-२-१२६) देशवाचिनो वृद्धादवृद्धाच्च वुञ्स्यात्। दारुकच्छकः। काण्डाग्नकः। सैन्धुवक्त्रकः। बाहुवर्तकः। १३५१ धूमादिभ्यश्च। (४-२-१२७) देशवाचिभ्यो वुञ्। धौमकः। तैर्थकः। १३५२ नगरात्कुत्सनप्रावीण्ययोः। (४-२-१२८) नगरशब्दाद्वुञ्स्यात्कुत्सने प्रावीण्ये च गम्ये। नागरकश्चौरः शिल्पी वा। 'कुत्सन' इति किम्—नागरा ब्राह्मणाः। १३५३ अरण्यान्मनुष्ये। (४-२-१२९) वुञ्। 'अरण्याण्णः' (वा २७८२) इत्यस्यापवादः। 'पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्' (वा २८१९) आरण्यकः पन्था अध्यायो न्यायो विहारो मनुष्यो हस्ती वा। 'वा गोमयेषु' (वा २८२०)। आरण्यका आरण्या वा गोमयाः।

---

...। काकन्दी नाम देशः, तत्र भव इत्यर्थः। जनपदतदवध्योश्च। ...र्तक इति। आदर्शो नाम जनपदः। तत्र भव इत्यर्थः। त्रिगर्तो नाम जनपदविशेषस्यावधिः। जनपदत्वेन सिद्धावपि त्रिगर्तशब्दे परमपि गर्तोत्तरपदाच्छं बाधितुमिह तदवधिग्रहणम्। तदाह—त्रैगर्तक इति। अवृद्धादपि बहुवचनविषयात्। अवृद्धाज्जनपदादिति। उदाह्रियत इति शेषः। आजमीढक इति। अजमीढेषु भव इत्यर्थः अजमीढाख्यो जनपद। कस्यचिज्जनपदस्यावधिः। वृद्धाज्जनपदादिति। उदाह्रियत इति शेषः। दार्वक इति। दार्वा इति बहुवचनान्तो जनपदविशेषे वर्तते। तत्र भव इत्यर्थः। कालञ्जरक इति। कालञ्जरेषु भव इत्यर्थः। कच्छाग्नि। कच्छ, अग्नि, वक्त्र, वर्त एतदुत्तरपदादित्यर्थः। शेषपूरणेन सूत्रं व्याचष्टे—देशवाचिन इति। छाणोरपवादः। दारुकच्छक इति। दारुकच्छे भव इत्यर्थः। काण्डाग्नक इति। काण्डाग्नौ भव इत्यर्थः। ...कादेश 'यस्येति च' इति इकारलोपः। सैन्धुवक्त्रक इति। सिन्धुवक्त्रे भव इत्यर्थः। बाहुवर्तक इति। बहुवर्ते भव इत्यर्थः। धूमादिभ्यश्च। देशवाचिभ्यो वुञिति शेषपूरणम्। नगरात्कुत्सन। नागरा ब्राह्मणा इति। कत्त्र्यादिषु माहिष्मतीसाहचर्येण संज्ञाभूतस्यैव नगरशब्दस्य ग्रहणम्, अतो न ढकञ्। 'प्राचां ग्रामनगराणाम्' इति सूत्रभाष्ये नागरा इत्युदाहरणात्। अरण्यान्मनुष्ये। आरण्यक इति। पन्थाः अध्यायो न्यायो विहारो मनुष्यो हस्ती वा। वा

---

विषयात्' इत्युत्तरसूत्रेण वुञेव भवतीत्याशयेनोदाहरति—त्रैगर्तक इति। 'जनपदतदवध्योः—' इति सूत्रे जनपदावधिवाचिन उदाहरणं तु 'श्यामायनकः' इत्यादि बोध्यम्। नागरा ब्राह्मणा इति। कत्त्र्यादिषु माहिष्मतीति संज्ञाशब्दसहचर्यात्संज्ञाभूतनगरशब्दस्यैव ढकञा नागरेयक इति भाव्यमिति भावः।

१३५४ विभाषा कुरुयुगन्धराभ्याम् । (४—२—१३०) वुञ् । कौरवकः, कौरवः । यौगन्धरकः, यौगन्धरः । १३५५ मद्रवृज्योः कन् । (४—२—१३१) जनपदवुञोऽपवादः । मद्रेषु जातो मद्रकः । वृजिकः । १३५६ कोपधादण् । (४—२—१३२) माहिषिकः । १३५७ कच्छादिभ्यश्च । (४—२—१३३) देशवाचिभ्योऽण् । वुञादेरपवादः । काच्छः । सैन्धवः । १३५८ मनुष्यतत्स्थयोर्वुञ् । (४—२—१३४) कच्छाद्यणोऽपवादः । कच्छे जातादिः काच्छको मनुष्यः । काच्छकं हसितम् । 'मनुष्य' इति किम्—काच्छो गौः । १३५९ अपदातौ साल्वात् । (४—२—१३५) साल्वशब्दस्य कच्छादित्वाद् वुञि सिद्धे नियमार्थमिदम्, अपदातावेवेति । साल्वको ब्राह्मणः । 'अपदातौ' किम्—साल्वः पदातिर्व्रजति । १३६० गोयवाग्वोश्च । (४—२—१३६) साल्वाद् वुञ् । कच्छाद्यणोऽपवादः । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् । १३६१ गर्तोत्तरपदाच्छः । (४—२—१३७) देशे । अणोऽपवादः । वृकगर्तीयम् । उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम् । १३६२ गहादिभ्यश्च । (४—२—१३८) छः स्यात् । गहीयः । 'मुखपार्श्वतसोर्लोपश्च' (ग सू ७८) । मुखतीयम् । पार्श्व...

---

गोमयेष्विति । वार्तिकमिदम् । विभाषा कुरु । कुरुयुगन्धरौ जनपदौ । अवृद्धाभ्यामपि ताभ्याम् 'अवृद्धादपि—' इति नित्यं प्राप्ते विकल्पः । मद्रवृज्योः कन् । मद्रो वृजिश्च जनपदविशेषः । जनपदवुञोऽपवादः । कोपधादण् । माहिषिक इति । महिषिको नाम जनपदः, तत्र भव इत्यर्थः । 'प्रस्थोत्तरपद—' इत्यादिना सिद्धे जनपदवुञ्बाधनार्थमिदम् । कच्छादिभ्यश्च । काच्छ इति । अत्र वुञोऽपवादोऽण् । सैन्धव इति । ओर्देशे ठञोऽपवादः । मनुष्यतत्स्थयोर्वुञ् । कच्छादिभ्य इत्यनुवर्तते । तदाह—कच्छादीति । अपदातौ साल्वात् । नियमार्थमिति । साल्वाच्चेदपदातावेवेति नियमार्थमित्यर्थः । गोयवाग्वोश्च । जातत्वादिना विवक्षितयोरित्यर्थः । गर्तोत्तरपदाच्छः । देश इति । शेषपूरणम् । देशवाचिन इति यावत् । वृकगर्तीयमिति । वृकगर्तो नाम देशः । तत्र भव इत्यर्थः । ननु गर्ताच्छ इत्येतावतैव केवलगर्तशब्दस्य देशवाचित्वाभावाद् 'गर्तोत्तरपदात्' इति सिद्धे उत्तरपदग्रहणं व्यर्थमित्यत आह—उत्तरपदग्रहणमिति । गहादिभ्यश्च । गहीय इति । गहो देशविशेषः । मुखपार्श्वेति । गहादिगणसूत्रम् । मुखपार्श्वेति लुप्तषष्ठीकं पदम् । तसन्तयोरेत...

---

विभाषा कुरु । कुरुशब्दः कच्छादिषु पठ्यते, तत्सामर्थ्यात्पक्षेऽण् सिद्ध इति परिशेषाद्विभाषाग्रहणं युगन्धरार्थमेव । 'अवृद्धादपि—' इति नित्यप्राप्तो वुञनेन विकल्प्यते । मनुष्यतत्स्थयोस्तु परत्वान्नित्य एव वुञ् । कौरवको मनुष्यः । कौरवकं हसितम् । एतदर्थमेवास्य कच्छादौ पाठः । अन्यथा अनयैव विभाषया वुञणोः सिद्धेः किं तेनेति भावः । सैन्धव इति । 'ओर्देशे—' इति ठञ् प्राप्तः । वुञि इति । 'मनुष्यतत्स्थयोः—' इत्यनेन । गहादिभ्यश्च । एभ्यो देशवाचिभ्यश्छः स्यात् । पूर्वपाक्षादिशब्देभ्यस्तु देशवाचित्वाभावेऽपि पाठसामर्थ्याच्छः । मुखपा...

कीयम्। अव्ययनां भमात्रे टिलोपस्यानित्यतां ज्ञापयितुमिदम्। 'कुग्जनस्य परस्य च' (ग सू ८९)। जनकीयम्। परकीयम्। 'देवस्य च' (ग सू ९०)। देवकीयम्। 'स्वस्य च' 'स्वकीयम्। 'वेणुकादिभ्यश्छण्वाच्यः' (ग सू ९१)। वेणुकीयम्। वैत्रकीयम्। औत्तरपदकीयम्। १३६३ प्राचां कटादेः। (४-२-१३९) प्राग्देशवाचिनः कटादेश्छः स्यात्। अणोऽपवादः। कटनगरीयम्। कटघोषीयम्। कटपल्वलीयम्। १३६४ राज्ञः क च। (४-२-१४०) वृद्धत्वाच्छे सिद्धे तत्संनियोगेन कादेशमात्रं विधीयते, राजकीयम्। १३६५ वृद्धादकेकान्तखोपधात्। (४-२-१४१) 'अक' 'इक' एतदन्ता-खोपधाच्च वृद्धाद्देशवाचिनः छः स्यात्। ब्राह्मणको नाम जनपदः, यत्र ब्राह्मणा आयुधजीविनः, तत्र जातो ब्राह्मणकीयः। शल्मलिकीयः। अयोमुखीयः। १३६६ कन्थापलदनगरग्रामह्रदोत्तरपदात्। (४-२-१४२) कन्थादि-पञ्चकोत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात्। ठञ्ञिठादेरपवादः। दाक्षि-

---

त्यस्य लोपश्च। चाच्छः। असंभवादत्र जनपदस्येति न सम्बध्यते। कुग्जनस्येति। गणसूत्रमिदम्। जनशब्दस्य परशब्दस्य च कुगागमः स्यात्, चाच्छः। अत्रापि देश इति न सम्बध्यते। देवस्य च। इदमपि गणसूत्रम्। चात्कुक् छश्च। 'देवाद्यञञौ' इत्यस्यापवादः। दैवानुग्रह इति भाष्यप्रयोगाद्दैवमित्यपि साधु। स्वकीयमिति। गहादित्वाच्छः कुक्च। स्वशब्दोऽपि गहादिः, आगमशास्त्रानित्यत्वात् स्वीयम्। प्राचां कटादेः। कटनगरीयमिति। कटनगरो नाम प्राच्यो देशः। राज्ञः क च। राजन्शब्दात् छः स्यात्, ककारश्चान्तादेशः। वृद्धादकेकान्तखो-पधात्। ब्राह्मणकीय इति। कोपधाणोऽपवादः छः। शाल्मलिकीय इति। शाल्मलिको नाम देशः। तत्र भव इत्यर्थः। इकान्तोदाहरणमिदम्। कोपधाणपवादः। अयोमुखीय इति। 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठयोरपवादः छः। कन्था-पलद। ठञ्ञिठादेरपवाद इति। नगरान्ते 'रोपधेतोः–' इति वुञोऽपवादः।

---

जनपरयोरिति। गणसूत्रमिदम्। सप्तम्यन्ताभ्यामाभ्यामाद्यादित्वात्तसिः। मुखतीय-मिति। मुखे जातमित्याद्यर्थे तसन्ताच्छः। 'अलोऽन्त्यस्य' इति तसः सकारस्य लोपे 'यस्येति च' इत्यकारलोपः। कुग्जनस्येति। इदमपि गणसूत्रम्। स्वकीयमिति। स्वार्थिककन्नन्तात्स्वशब्दाद्गहादेराकृतिगणत्वाच्छः, देशवाचित्वाभावेऽपि पूर्वपक्षादि-त्वं बोध्यः। अतएव लुब्योगाप्रख्यानादिति सूत्रे 'न हि स्वकीयस्यैव प्रत्याख्यानम्' इति न्यासकारोक्तिः संगच्छते। केवलात्स्वशब्दादणेव। सौवम्। एतच्च 'द्वारादीनां च' इत्यत्र आकरे उदाहृतम्। स्वीयमित्यत्र तु 'प्राक्क्रीताच्छः'। अन्तरशब्दात्तु गहादि-त्वाच्छे तदन्तेन नशब्दस्य समासे स्वार्थे कनि च 'नान्तरीयकम्' इति भवति। अविनाभूतमित्यर्थः। वृद्धादके। ब्राह्मणकीय इति। 'कोपधादण्' इत्यण् प्राप्तः। अयोमुखीय इति। वाहीकग्रामलक्षणौ ठञ्ञिठाविह प्राप्तौ। ठञ्ञिठादेरिति।

---

१ स्वार्थिककन्नन्तात्स्वशब्दाद् गहादेराकृतिगणत्वाच्छः—इति मनोरमातत्त्व-बोधिन्यौ। गहादौ तु 'स्वस्य च' इति नोपलभ्यते।

कन्थीयम् । दाक्षिपलदीयम् । दाक्षिनगरीयम् । दाक्षिग्रामीयम् । दाक्षिह्रदीयम् ।
१३६७ पर्वताच्च । (४-२-१४३) पर्वतीयः । १३६८ विभाषाऽमनुष्ये । (४-२-१४४) मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात् । पक्षेऽण् । पर्वतीयानी, पार्वतानि वा फलानि । अमनुष्ये किम्—पर्वतीयो मनुष्यः ।
१३६९ कृकणपर्णाद्भारद्वाजे । (४-२-१४५) भारद्वाजदेशवाचिभ्यामाभ्यां छः । कृकणीयम् । पर्णीयम् । भारद्वाजे किम्—कार्कणम् । पार्णम् ।
१३७० युष्मदस्मदोरन्यतरस्यां खञ् च । (४-३-१) चाच्छः । पक्षेऽण् । युवयोः युष्माकं वा अयं युष्मदीयः । अस्मदीयः । १३७१ तस्मिन्नणि च ...

---

इतरत्र 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठयोरपवाद इति विवेकः । पर्वताच्च । इत्यादि स्पष्टम्[1] । युष्मदस्मदोरन्यतरस्यां खञ् च । युष्मदस्मच्छब्दयोरिह शब्दस्वरूपपरत्वात् 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषो न भवति । पञ्चम्यर्थे षष्ठी । युष्मच्छब्दादस्मच्छब्दाच्च जाताद्यर्थेषु खञ् स्यादित्यर्थः । चाच्छः । गर्तोत्तरपदादिति धिकृतः छः चकारेण समुच्चीयत इत्यर्थः । पक्षेऽणिति । अन्यतरस्यांग्रहणादिति भावः । अत्र 'युष्मदस्मदोः' इति योगो विभज्यते । आभ्यां छो भवतीत्यर्थः । 'खञ् च' इति योगान्तरम् । आभ्यां खञ् च भवतीत्यर्थः 'अन्यतरस्याम्' इति योगान्तरम् । आभ्यां छखञौ वा स्तः, पक्षेऽणित्यर्थः । अतो न यथासंख्यमिति भाष्ये स्पष्टम् । युष्मदीय इति । द्विवचनान्ताद्बहुवचनान्ताच्च छः । ईयादेशः सुब्लुकि युवादेशस्य विवृत्तिः, तस्य विभक्तौ परे विधानात् । प्रकृत्यर्थैकत्वे विभक्तेर्लुप्तत्वेऽपि त्वादेशो वक्ष्यते । अस्मदीय इति । आवयोरस्माकं वा अयमित्यर्थः । अथ खञि अणि च विशेषमाह—तस्मिन्नणि च । पूर्वसूत्रे निर्दिष्टः खञ् तच्छब्दे

---

आदिशब्देन 'रोपधेतोः—' इत्यादिना प्राप्तस्य वुञः । पर्वतीय इति । 'तत्र ... रघोर्घोरं पार्वतीयैर्गणैरभूत्' इत्यत्र तु 'पर्वतीयस्य राज्ञ इमे' इत्यर्थे छान्तद... कृकण । भारद्वाजशब्दोऽत्र देशवचनः, स च न प्रत्ययार्थः, किं तु प्रकृतिविशेषणमित्याह—भारद्वाजदेशेत्यादिना । युष्मदस्मदोः । 'त्यदादीनि च' इति वृद्धत्वान्नित्ये छे प्राप्ते खञणोरपि विधानार्थमिदम् । पक्षे अणिति । अन्यतरस्यांग्रहणादिति भावः । तथा चैते त्रयः प्रत्यया इति वैषम्याद्यथासंख्यं न भवन्तीति केचित् । मनोरमायां तु यथासंख्यनिवारणाय योगविभागः कृतः, तथा हि 'युष्मदस्मदोरन्यतरस्याम्' । आभ्यां छो वा स्यात् । 'त्यदादीनि च' इति वृद्धत्वान्नित्ये छे प्राप्ते विकल्पोऽयम् । ततः 'खञ्च' । एवमुत्तरसूत्रेऽपि योगविभागो बोध्यः । तेन आदेशयोः खञणभ्यां यथासंख्यं नेत्यादि । युवयोरित्यादि । एकवचने तवकममकादेशविधानादेकवचनान्तेन विग्रहोऽत्र न कृतः । तस्मिन्नणि च । तस्मिन्निति साक्षान्निर्दिष्टः खञ् निर्दिश्यते न तु चानुकृष्टः । निमित्तयोरादेशौ प्रति यथासंख्यं तु न ...

---

१ इह मूले टीकायां च 'इति चतुर्थस्य द्वितीयः पादः' इत्याद्यधिकं ... क. ख. पुस्तकयोः, परं प्रथमपादान्ते तथा लेखादर्शनान्मूलपुस्तकान्तरेष्वदर्शनात् सोऽत्रोपेक्षितः ।

युष्माकास्माकौ । (४-३-२) युष्मदस्मदोरेतावादेशौ स्तः, खञ्यणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः । १३७२ तवकममकावेकवचने । (४-३-३) एकार्थवाचिनो युष्मदस्मदोस्तवकममकौ स्तःखञ्यणि च । तावकीनः, तावकः । मामकीनः, मामकः । छे तु । १३७३ प्रत्ययोत्तरपदयोश्च । (७-२-९८) मपर्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च । त्वदीयः । मदीयः । उत्तरपदे पु त्वत्पुत्रः, मत्पुत्रः । १३७४ अर्धाद्यत् । (४-३-४) अर्ध्यः । १३७५ परावराधमोत्तमपूर्वाच्च । (४-३-५) परार्ध्यम् । अवरार्ध्यम् । अधमार्ध्यम् । उत्तमार्ध्यम् । १३७६ दिक्पूर्वपदाट्ठञ्च । (४-३-६) चाद्यत् । पौर्वार्धिकम्, पूर्वार्ध्यम् । १३७७ ग्रामजनपदैकदेशादञ्ठञौ । (४-३-७) ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः । इमे अस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः, पौर्वार्धिकाः । ग्रामस्य पूर्वस्मिन्नर्धे भवा इति तद्धितार्थे

---

समासः स्यते । तदाह—खञि अणि चेति । अत्र स्थानिनोरादेशयोश्च यथासंख्यम्, न तु परनिमित्तयोः, 'तस्मिन्नणि' इति व्यस्तनिर्देशात् । यौष्माकीण इति । युवयोर्युष्माकं वा अयमिति विग्रहः । खञ्, ईनादेशः, युष्माकादेशः, आदिवृद्धिः णत्वम् । आस्माकीन इति । आवयोरस्माकं वा अयमिति विग्रहः । अणि उदाहरति—यौष्माकः, आस्माक इति । तवकममकौ । 'एकवचने' इति युष्मदस्मदोः प्रकृत्योर्विशेषणम् । एकस्य वचनम् उक्तिः एकवचनम् । एकस्योक्तौ व्याप्रियमाणयोरिति लभ्यते । तदाह—एकार्थवाचिनोरिति । छे त्विति । एकार्थवृत्तयोर्विशेषो वक्ष्यत इति शेषः । प्रत्ययोत्तरपदयोश्च । साप्तमिकमिदम् । त्वमावेकवचने इत्यनुवर्तते । 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते । मपर्यन्तस्येत्यधिकृतम्, तदाह—मपर्यन्तयोरित्यादि । त्वदीयः । मदीय इति । छे लुग्लुकि तवममयोर्निवृत्तौ मपर्यन्तयोः त्वदिति मदिति च आदेशौ । विभक्तिपरत्वाभावान्न शेषे लोपः । उत्तपदे तु परे त्वत्पुत्रो मत्पुत्रो मत्पुत्र इत्युदारणम् । अर्धाद्यत् । अर्ध्य इति । अर्धे जातादिरित्यर्थः । 'सपूर्वपदाट्ठञ् वाच्यः' इति वार्तिकं भाष्ये स्थितम् । वालेयार्धिकः । परावर । अर्धाद्यदिति शेषः । अवरशब्दो दन्तोष्ठ्यवकारमध्यः । दिक्पूर्वपदाद् ठञ् च । अर्धादित्येव परावरपूर्वनिर्देशात्पूर्वसूत्रेण यदेव, विशिष्य विहितत्वात् । ग्रामजनपद । ननु अञ् चेत्येतावतैव चकारात् ठञोऽनुकर्षसिद्धेः ठञ्ग्रहणं व्यर्थमित्य आह—ठञ्ग्रहणमिति । ननु अञ् चेत्युक्तेऽपि चकाराट्ठञोऽनुकर्षः स्पष्ट एवेत्यत आह—अञ्

---

ठञणोः-' इति वक्तव्ये पृथग्विभक्तिनिर्देशसामर्थ्यात् । स्थान्यादेशयोस्तु इष्यत एव तत् । तवक । इह पूर्ववदेव निमित्तयोः खञणोरादेशौ प्रति यथासंख्यं न भवति, किंतु स्थान्यादेशयोरेवेत्याशयेनोदाहरति—तावकीनः । मामकीन इति । परावरा । 'परावराधमोत्तमेभ्यः' इत्येव वक्तव्ये पूर्वग्रहणं पूर्वविप्रतिषेधसूचनार्थम् । तेन दिक्शब्दयोः परावरयोरर्धशब्देन समासे उत्तरसूत्रेण प्राप्तावपि

समासः । ठञ्ग्रहणं स्पष्टार्थम् । अञ्चेत्युक्ते यतोऽप्यनुकर्षः सम्भाव्येत । १३७८ मध्यान्मः । (४-३-८) मध्यमः । १३७९ अ सांप्रतिके । (४-३-९) मध्यशब्दादकारप्रत्ययः स्यात्सांप्रतिकेऽर्थे । उत्कर्षापकर्षहीनो मध्यो वैयाकरणः । मध्यं दारु । नातिह्रस्वं नातिदीर्घमित्यर्थः १३८० द्वीपादनुसमुद्रं यञ् । (४-३-१०) समुद्रस्य समीपे यो द्वीपस्तद्विषयाद् द्वीपशब्दाद्यञ् स्यात् । द्वैप्यम् द्वैप्या । १३८१ कालाट्ठञ् । (४-३-११) कालवाचिभ्यष्ठञ् स्यात् । मासिकम् । सांवत्सरिकम् । सायंप्रातिकः । पौनःपुनिकः । कथं तर्हि 'शार्वरस्य

---

चेत्युक्त इत्यादि । मध्यान्मः । स्पष्टम् । अ सांप्रतिके । अ इति लुप्तप्रथमाकम् । मध्यादित्यनुवर्तते । तदाह—मध्यशब्दादित्यादि । संप्रतीत्यव्ययम् उत्कर्षापकर्षहीनत्वात्मकसाम्ये वर्तते, तैत्तिरीये 'अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रोऽथ एष संप्रति यज्ञो यत्पञ्चरात्रः' इत्यत्र तथा दर्शनात्। पञ्चरात्रो न न्यूनो नाप्यतिरिक्तः सम इत्यर्थः । संप्रतिशब्दात् स्वार्थे विनतादित्वाट्ठञि सांप्रतिकम् । प्रज्ञादित्वात् स्वार्थे अणि तु सांप्रतमित्यपि भवति । 'एतर्हि संप्रति' इति कोशादिदानीमित्यर्थेऽपि प्रकृते तु साम्यं विवक्षितम् । द्वीपादनु । अनुसमुद्रमिति सामीप्ये अव्ययीभावः अनुसमुद्रमिति सप्तम्यन्तम्, विद्यमानादित्यध्याहार्यम्, तदाह—समुद्रस्य समीपे इति । द्वैप्येति । 'यञश्च' इति ङीप् तु न, अनपत्याधिकारस्थाद् नेति तन्निषेधात् । कालाट् ठञ् । 'कालशब्दस्यैव न ग्रहणम्, किन्तु कालशब्दस्य कालविशेषवाचकानां च ग्रहणम्' इति 'तदस्य परिमाणम्' 'संख्यायाः—' इति सूत्रभाष्ये स्पष्टम् । तदाह—कालवाचिभ्य इति । सायंप्रातिकः । पौनःपुनिक । इति ।

---

ठञ्यतौ बाधित्वा यदेव भवति । दिक् । पूर्वपदग्रहणं स्वरूपवधिनिरासार्थमित्याहुः असांप्रतिके । सम्प्रतीत्यव्ययं न्याय्ये वर्तते 'अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रः स वा एष सम्प्रति यज्ञो यत्पञ्चरात्रः' इत्यत्र तथा दर्शनात् । न न्यूनो नातिरिक्तः सम इत्यर्थः । इदानीमित्यर्थे तु प्रसिद्धमेव । 'एतर्हि संप्रतीदानीम्' इत्यमरात् । तत्र प्रज्ञादित्वात्स्वार्थेऽण्, विनयादित्स्वार्थे ठगपि । तेन सांप्रतं सांप्रतिकमिति पर्यायौ । उत्कर्षेत्यादि । न्याय्ये विद्यमान एव संप्रतिशब्दोऽत्र गृह्यत इति भावः द्वीपादनु । समुद्रं समया अनुसमुद्रम् । 'अनुर्यत्समया' इत्यव्ययीभावः । सप्तम्यन्तं चेदम् । विद्यमानक्रियाद्वारा द्वीपविशेषणमित्याशयेनाह—समुद्रसमीपे यो द्वीप इति । कच्छाद्यणो मनुष्यवुञश्चापवादोऽयम् । अनुसमुद्रं किम्, द्वैपमन्यत् । कच्छादित्वात् द्वैपको मनुष्यः 'मनुष्यतत्स्थयोः—' इति वुञ् । द्वैप्येति 'यञश्च' इति ङीप् न भवति । 'अत्याधिकारस्थादेव यञो ङीप्' इति प्रागेवोक्तत्वात् । कालाट्ठञ् । स्वरूपस्यैव न ग्रहणं संधिवेलादिसूत्रेण संधिवेलात्रयोदशीचतुर्दशीप्रभृतिभ्योऽवृद्धेभ्यो ठञ्बाधनार्थमण्विधानात् । किंतु सर्वेषामपि कालचिनां ग्रहणमित्याशयेनाह—कालवाचिभ्य इति । यत्तु स्वरूपस्य पर्यायाणां च न ग्रहणमिति पदमञ्जर्यामुक्तं स्थितम्, तदसत् 'कालिकः सम्बन्धः, कालिकी व्याप्तिः' इत्यादिप्रयोगानापत्तेः । न च विशेषाणामेव ग्रहणे सन्धिवेलादिसूत्रेण सन्धिवेलादिभ्योऽण्विधानं ज्ञापकमिति

[illegible]तो निषिद्धये' इति कालिदासः । 'अनुदितौषसरागा' इति भारविः । [illegible]नकालीनं प्राक्कालीनमित्यादि च । 'अपभ्रंशा एवैते' इति प्रामाणिकाः । [illegible] जातः' (सू १३९३) इति यावत्कालाधिकारः । १३८२ श्राद्धे शरदः । (४-३-१२) ठञ् स्यात् । ऋत्वणोऽपवादः । शारदिकं श्राद्धम् । १३८३ विभाषा रोगातपयोः । (४-३-१३) शारदिकः शारदो वा रोग आतपो वा । 'एतयोः' किम्—शारदं दधि । १३८४ निशाप्रदोषाभ्यां च (४-३-१४) वा ठञ् स्यात् नैशिकम्, नैशम् । प्रादोषिकम्, प्रादोषम्, । १३८५ श्वसस्तुट् च । (४-३-१५) श्वस्शब्दाठ्ठञ् वा स्यात् । तस्य तुडागमश्च । १३८६ द्वारादीनां च । (७-३-४) द्वार, स्वर, [1]स्वाध्याय, व्यल्कश,

---

[illegible]व्ययानां भमात्रे—' इति टिलोपः । 'सायंचिरम्—' इति ट्युट्युलौ तु न भवतः, [illegible]त्तद्धिते' इति सूत्रभाष्ये तथा प्रयोगदर्शनात् । शार्वरस्येति । शार्वरिकस्येति [illegible]व्यमिति भावः । अनुदितौषसेति । औषसिकेति भाव्यमिति भावः । [illegible]नेति । समानकालिकं प्राक्कालिकमिति भाव्यमित्यर्थः । प्रामाणिका इति । केचित्तु अमुकः पुरतः परेद्युरित्यादिवद् एतेऽपि शब्दा अव्युत्पन्नाः, [illegible]षोदरादयो वा साधव इत्याहुः । इति यावदिति । व्याख्यानादिति भावः । श्राद्धे शरदः । ठञ् स्यादिति । शेषपूरणमिदम् । ननु 'कालाट्ठञ्' [illegible]त्येव सिद्धे किमर्थमिदमित्यत आह—ऋत्वण इति । 'संधिवेलाद्यृतु-नक्षत्रेभ्योऽण्' इति वक्ष्यमाणस्येत्यर्थः । शारदिकमिति । शरदि ऋतौ [illegible]वमित्यर्थः । शरच्छब्दस्य संवत्सरवाचित्वे तु पूर्वेणैव सिद्धम् । विभाषा रोगातपयोः । 'ठञ्' इति 'शरद' इति चानुवर्तते । शारदं दधीति । ऋत्वणिति [illegible]वः । निशाप्रदोषाभ्यां च । वा ठञ् स्यादिति । शेषपूरणम् । 'काला ठञ्' इति नित्यं प्राप्ते विकल्पोऽयम् । श्वसस्तुट् च । तस्येति । प्रत्ययस्येत्यर्थः ।

---

[illegible]च्यम्, तस्य स्वरूपमात्रग्रहणनिरासत्वेनापि साफल्यात् । गौणमुख्यन्यायस्त्विह [illegible]श्रीयते । तेन कदम्बपुष्पसाहचर्यात्कदम्बपुष्पः कालः, व्रीहिपलालसाहचर्याद् व्रीहि-[illegible]लः कालः, तत्र भवं कादम्बपुष्पिकं व्रैहिपलालिकमित्याकरः । अत्र हि प्रमाणं [illegible]न्धिवेलादिसूत्रे अनेन कालग्रहणेन नक्षत्राणां विशेषणमेवेत्याहुः । न च पुष्यादि-[illegible]शब्दानां कालो मुख्य एवार्थः, 'लुबविशेषे' इति व्युत्पादनात् । तथा च कालविशेषण-[illegible]र्थं न प्रमाणमिति वाच्यम्, पुष्यादिसमीपस्थचन्द्रमसा युक्ते काले पुष्यादिशब्दानां [illegible]गत्वात् । 'लुबविशेषे' इति शास्त्रमपि गौणवृत्तित्वान्वाख्यापकमेवेति दिक् । एवं [illegible]स्थिते 'कालवाचिभ्यः—' इति मूलस्य 'कालप्रतिपादकेभ्यः' इति फलितोऽर्थः । [illegible]श्राद्धमिति । भक्त्या क्रियमाणं पित्र्यं कर्मेत्यर्थः । 'प्रज्ञाश्रद्धार्चाभ्योऽणः' इति [illegible]त्वर्थीयेन व्युत्पादितः श्रद्धावान्पुरुषस्तु न गृह्यते, अनभिधानात् । श्वसस्तुट् च । [illegible]विभाषेत्यनुवर्तनादाह—ठञ् वा स्यादिति । 'ऐषमो ह्यः—' इत्यादिना त्यबपि

---

१ क्वचित् 'स्वानाम' शब्दपाठोऽप्यत्रोपलभ्यते । क्वचिच्च 'स्वाध्याय' शब्दस्यापि पाठो नास्ति ।

स्वस्ति, स्वर्, स्फ्यकृत्, स्वादु, मृदु, श्वस्, श्वन्, स्व एषां न वृद्धिरैजागमश्च। शौवस्तिकम् । १३८७ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । (४-३-१६) सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् । सन्धिवेलायां भवं सान्धिवेलम् । ग्रैष्मम् । तैषम् । सन्धिवेला, सन्ध्या, अमावस्या, त्रयोदशी, चतुर्दशी, पौर्णमासी, प्रतिपत् । 'संवत्सरात्फलपर्वणोः' (ग सू ९२)। सांवत्सरं फलं पर्व वा । सांवत्सरिकमन्यत् । १३८८ प्रावृष एण्यः (४-३-१७) प्रावृषेण्यः । १३८९ वर्षाभ्यष्ठक् ( ४-३-१८ ) वर्षासु साधु वार्षिकं वासः। 'कालात्साधुपुष्प्यत्पच्यमानेषु' (सू १४१८) इति साध्वर्थे । १३९० सर्वत्राण् च

---

तुटि टकार इत् । उकार उच्चारणार्थः । द्वारादीनां च । 'न य्वाभ्याम्-' इति सूत्रं 'पदान्ताभ्याम्' इतिवर्जमनुवर्तते, 'मृजेर्वृद्धिः' इत्यतो 'वृद्धिः' इति च, तदाह- एषां न वृद्धिरजागमश्चेति । द्वारादीनां नादिवृद्धिः, किन्तु यकारवकाराभ्यां पूर्वौ ऐजागमौ स्त इत्यर्थः । अत्र यकारवकारयोरपदान्तत्वाद् 'न य्वाभ्यां पदान्ताभ्याम्—' इत्यप्राप्ते वचनमिदम् । शौवस्तिकमिति । श्वस् इत्यव्ययाद् जाताद्यर्थे ठञि इकादेशे तुडागमे वकारात्पूर्वमैजागमेन औकारः । अकारस्य न वृद्धिः । संधिवेला। कालवृत्तिभ्य इति । 'कालाट्ठञ्' इत्यतस्तदनुवृत्तेरिति भावः । ठञोऽपवादः । तैषमिति । तिष्ये भवादीत्यर्थः । 'तिष्यपुष्ययोर्नक्षत्राणि-' इति यलोपः । तिष्ये जात इत्यर्थे 'श्रविष्ठाफल्गुनी-' इति लुग्वक्ष्यते । सन्धिवेलादिगणं पठति- संधिवेलेत्यादि । संवत्सरात्फलपर्वणोरिति । गणसूत्रमिदम् । प्रावृष एण्यः । ऋत्वणोऽपवादः । प्रावृषेण्य इति । प्रावृड् वर्षर्तुः, तत्र भवादित्यर्थः। जाते तु ठप् वक्ष्यते । प्रक्रियालाघवार्थं णकारोच्चारणम् । वर्षाभ्यष्ठक् । तृतीयर्थे

---

विकल्पेन विहितः, आभ्यां मुक्ते टघुटघुलावपि स्त एव । शौवस्तिकमिति । नन्वन्तरङ्गत्वात् । तुटि ठस्य प्रत्ययादित्वाभावात्कर्मठ इत्यत्र ठच इवेकादेशो न स्यात् । न च परत्वादिकादेशे तस्य तुडिति वाच्यम्, आदेशात्प्रागेवान्तरङ्गत्वात्तुटः प्रवृत्तेः । इकादेशस्य त्वाङ्गत्वेन वहिरङ्गत्वात् । सूत्रभङ्गेन तुकि हि क्रियमाणे तु 'इसुसुक्तान्तात्-' इति कादेशप्रसङ्ग इति चेत् । सत्यम्, वुञ्छणादिषु ठचश्चित्त्वेन 'एकादेशोऽन्तरङ्गोऽ बलवान्' इति ज्ञपितत्वात् । अन्यथा प्रत्ययाद्युदात्तत्वे कृते एकादेशः स्यादिति हि ठचश्चित्त्वेन । कृते त्विकादेशे प्रत्ययस्वरबाधनाय चित्त्वं प्रयुज्यत इति मनोरमायां स्थितम् । संधिवेला । अण्ग्रहणं तु छबाधनार्थम् । अन्यथा 'सन्धिवेलादिभ्यो यथाविहितं प्रत्ययाः स्युः' इत्युक्ते पौर्णमासीशब्दाद् 'वृद्धाच्छः' स्यात् । वचनं तु ठञ् बाधनाय स्यादिति भावः । तैषमिति । तिष्याद्भवादावण् । जातार्थे तु 'श्रविष्ठाफल्गुनी-' इति लुक् स्यात् । 'सूर्यतिष्य-' इत्यत्र 'तिष्यपुष्ययोर्नक्षत्रादि' इति वचनाद्यलोपः । प्रावृष एण्यः । ऋत्वणोऽपवादः । प्रवर्षतीति प्रावृट्, 'नहिवृति-' इति दीर्घः । तत्र भवः । जाते तु ठञं वक्ष्यति । 'रषाभ्याम्-' इति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणमित्याहुः । किंच प्रावृषेण्यमाचक्षाणः प्रावृ इत्यत्र णकारश्रवणार्थमपि तत् । ण्यन्तात्क्विपि टिलोपणिलोपयलोपाः । सर्वत्राण

तलोपश्च । (४-३-२२) हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः । चकारात्पक्षे ऋत्वण् । हैमनम्, हैमन्तम् । १३९१ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च (४-३-२३) सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यः ट्युट्युलौ स्तः तयोस्तुट् च । तुटः प्रागनादेशः, 'अनद्यतने-' ( सू २१८५ )

---

वर्षाशब्दो नित्यं बहुवचनान्तः, 'अप्सुमनःसमासिकतावर्षाणां बहुत्वम्' इति लिङ्गानुशासनसूत्रात् । 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । वर्षाशब्दाज्जाताद्यर्थे ठगित्यर्थः । वर्षासु साध्विति । हितकारीत्यर्थः । ननु 'तत्र साधुः' इति साध्वधिकारस्य शेषाधिकारबहिर्भूतत्वात्कथं साध्वर्थेऽयं प्रत्यय इत्यत आह— कालादिति । साध्वर्थ इति । साध्वर्थेऽपि ठगित्यर्थः । अस्य जाताद्यर्थेषु शैषिकेष्वन्तर्भावादिति भावः । सर्वत्राण्च । छन्दसीत्यनुवृत्तिनिवृत्त्यर्थं सर्वत्रग्रहणम् । लोके वेदे चेत्यर्थः । 'हेमन्ताच्च' इति पूर्वसूत्राद् हेमन्तादित्यनुवर्तते । तदाह— हेमन्तादित्यादिना । ननु 'सर्वत्राण् तलोपश्च' इत्येव सिद्धे प्रथमचकारो व्यर्थ इत्यत आह—चकारादिति । हैमनमिति । हेमन्तेत्यत्र तकारात्प्राग् नकारस्यानुस्वारपरसवर्णौ स्थितौ । तत्र तकाराकारसमुदायस्य लोप इति पक्षे अनिति प्रकृतिभावान्न टिलोपः । तकारस्यैव लोप इति पक्षे तु अकारस्य 'यस्येति च' इति लोपे तस्य आभीयत्वेनासिद्धत्वात् स्थानिवत्त्वाद्वा न टिलोपः । हैमन्तमिति । ऋत्वणि रूपम् । अत्र न तलोपः, तस्य एतत्सूत्रप्रतिपदोक्ताणा संनियोगशिष्टत्वादिति भावः । सायंचिरम् । चतुर्भ्य इति । सायं चिर. प्राह्णे प्रगे इत्येभ्य इत्यर्थः । कालवाचिभ्य इति । 'कालाट्ठञ्' इत्यतस्तदनुवृत्तेरिति भावः । तयोरिति । ट्युट्युलोरित्यर्थः । ननु सायंतनमित्यादौ कथं योरनादेशः । 'युवोरनाकौ' इति ह्यङ्गाधिकारस्थम् । अङ्गात्परयोः यु वु इत्येतयोरनाकौ विधीयेते । प्रकृते च अन्तरङ्गत्वात्तुटि यु इत्यस्य अङ्गात्परत्वाभावादनादेशो न संभवति । नच तदागमास्तद्ग्रहणेन गृह्यन्ते' इति न्यायेन त्यु इत्यस्यापि युग्रहणेन ग्रहणात्तस्या-

---

हेमन्तादिति । एतच्च 'हेमन्ताच्च' इत्यतोऽनुवृत्तमिति भावः । हैमनमिति । अकारविशिष्टस्य तशब्दस्य लोपे 'अन्' इति प्रकृतिभावाद् 'नस्तद्धिते' इति टिलोपो न । तकारस्यैव लोप इति पक्षे तु 'यस्येति च' इत्यल्लोपस्याभीयत्वेनासिद्धत्वात्स्थानिवद्भावाद्वा टिलोपो नेति बोध्यम् । हैमन्तमिति । ऋत्वणि तकारलोपो न भवति, तस्य 'सर्वत्राण्-' इति प्रतिपदोक्तेन अणा संनियोगशिष्टत्वात् । एतच्च प्रत्याख्यातं भाष्ये । तथाहि हेमन्तपर्यायो हेमन्शब्दोप्यस्ति 'हेमन्नागनीगन्ति कर्णौ' इत्यादिप्रयोगात्, ततश्च हेमन्हेमन्तशब्दाभ्यामृत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धम् । छन्दसि तु 'हेमन्ताच्च' इति ठञा हैमन्तिकमिति तृतीयमपि रूपं सिध्यति । न च विशेषविहितेन ठञा अणो बाधः शङ्क्यः, छन्दसि सर्वविधीनां वैकल्पिकत्वात् । वृत्तिकृता तु 'हेमन्ताच्च' इति सूत्रे सर्वत्रग्रहणमपकृष्य लोकेऽपि हैमन्तिकमिति स्वीकृतम् । सायंचिरं । नन्वन्तरङ्गत्वात्प्रथमं तुटि 'मृत्युः' इत्यादाविव त्युशब्दस्य प्रत्ययतया अङ्गसंज्ञानिमित्तं यो युस्तस्य विधीयमानोऽनादेशो न स्यात् । न चैवं

इत्यादिनिर्देशात् । सायंतनम् । चिरंतनम् । प्राह्णप्रगयोरेदन्तत्वं निपात्यते। प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् । 'चिरपरुत्परारिभ्यस्त्नो वक्तव्यः' (वा २८४२) । चिरत्नम् । परुत्नम् । परारित्नम् । 'अग्रादिपश्चाड्डिमच्' (वा २८४४) । आग्रिमम् । आदिमम् । पश्चिमम् । 'अन्ताच्च' (वा २८४५)

---

ङ्गात् परत्वं निर्बाधमिति वाच्यम्, 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषया योरेवाऽनादेशप्राप्तेः तस्य च तुटा व्यवहितत्वादङ्गात्परत्वाभावादित्य आह—तुटः प्रागनादेश इति । कुत इत्यत आह—अनद्यतने इत्यादिनिर्देशादिति । आदिना 'घकालतनेषु–' इत्यत्र तनेति ग्राह्यम् । सायंतनमिति । 'षो अन्तकर्मणि' इति धातोर्घञि सायशब्दो दिवसावसाने रूढः, तस्माट्ट्युट्युलौ, तयोरनादेशे तुट् प्रकृतेर्मान्तत्वं निपात्यते । यत्तु सायमिति स्वरादिपठितमव्ययम्, तस्याव्ययत्वादेव ट्युट्युलौ सिद्धौ । चिरंतनमिति । अत्रापि प्रकृतेर्मान्तत्वं निपात्यते । अस्मादेव लिङ्गाच्चिरमित्यस्याव्ययेषु पाठः अप्रामाणिक इति गम्यते । प्राह्णेतनमिति । प्राह्णः सोढोऽस्येति विग्रहः, 'तदस्य सोढम्' इत्यर्थस्य निर्देक्ष्यमाणत्वात् । प्राह्णे जात इत्याद्यर्थे तु 'घकालतनेषु–' इति अलुका एदन्तत्वं सिद्धम् । प्रगेतनमिति । प्रगच्छतीति प्रगः, तस्मिन् जातादिरित्यर्थः । यत्तु प्रगे इत्यव्ययमेदन्तं प्रातरित्यर्थे तस्य त्वव्ययत्वादेव सिद्धम् । अव्ययेष्व उदाहरति—दोषातनमिति । दोषेत्याकारान्तमव्ययं रात्रौ । दिवातनमिति । दिवेत्याकारान्तमव्ययमह्नि । चिरपरुदिति । चिर, परुत्, परारि एभ्यः त्न प्रत्यय इत्यर्थः । चिरत्नमिति । ट्युट्युलोरेव प्राप्तयोर्वचनम् । त्नप्रत्ययपक्षे मान्तत्वं न भवति, ट्युट्युलाभ्यां तस्य संनियोगशिष्टत्वात् । परुदिति परारीति चाव्ययं पूर्वस्मिन् पूर्वतरे च वत्सरे क्रमाद्वर्तते । अग्रादीति । वार्तिकमिदम् । अग्र, आदि, पश्चाद् एभ्यो डिमच् स्यादित्यर्थः । पश्चिममिति । 'अव्ययानां भमात्रे-

---

तुगेव क्रियतामिति वाच्यम्, तस्य पूर्वान्तत्वेन विसर्गाभावात्प्रातस्तनमित्य सत्वाभावप्रसङ्गात्, अत आह—तुटः प्रागिति । इत्यादीति । आदिशब्देन 'घकालतनेषु–' इति ग्राह्यम् । सायंतनमिति । स्यतेर्घञि सायशब्दोऽकारान्तो दिवसावसाने रूढः, तस्य प्रत्ययसंनियोगेन मान्तत्वं निपात्य इति वार्तिककृन्मतम्। भाष्यकृता तु 'मान्ताव्ययम्' इत्याश्रित्य सायंग्रहणं प्रत्याख्यातम् । न चैवं सायशब्दात्कालाट्ठञि अनिष्टरूपप्रसङ्गः । तस्य कालवाचित्वाभावादनभिधानाद्वेत्याहुः । चिरंतनमिति । चिरशब्दस्यापि प्रत्ययसंनियोगेन मान्तता निपात्यत इति भावः। अत्र वदन्ति—स्वरादौ पाठादव्ययत्वादेव सिद्धे सूत्रे चिरमित्येतद्व्यर्थम् । न चादन्ताच्चिरशब्दाट्ठञ् स्यादिति वाच्यम्, त्नेन बाधादिति । एदन्तत्वमिति । प्राह्णः सोढोऽस्य प्राह्णेतनम् । इत्याद्यर्थम् । तत्र हि सप्तमी नास्ति । जातार्थे 'घकालतनेषु–' इत्यलुकापि सिद्धेः । चिरत्नमिति । सूत्रे चिरशब्दस्योपादानात् ट्युट्युलावपि स्तः। न चैवं सूत्रे चिरशब्दस्य प्रत्याख्यानं न सम्भवतीति वाच्यम्, मान्ताव्ययादेः ट्युट्युल्विधौ तत्सम्भवात् । परुत् पूर्वस्मिन् वत्सरे । परारि पूर्वतरे । अग्रादीति

[ह्लि]तनम् । १३९२ विभाषा पूर्वाह्णापराह्णाभ्याम् । (४-३-२४) आभ्यां [ट्युट्यु]लौ वा स्तः, तयोस्तुट् च । पक्षे ठञ् । पूर्वाह्णेतनम् । अपराह्णेतिनम् । [घकाल]तनेषु—' (सू ९७५) । इत्यलुक् । पूर्वाह्णः सोढोऽस्येति विग्रहे तु [पूर्वाह्]णतनम् । अपराह्णतनम् । पौर्वाह्णिकम् । आपराह्णिकम् । १३९३ तत्र [जात]ः । (४-३-२५) सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । [स्रुघ्]ने जातः स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीण इत्यादि । १३९४ [प्रावृ]षष्ठप् (४-३-२६) एण्यस्यापवादः । प्रावृषि जातः प्रावृषिकः । १३९५ [संज्ञा]यां शरदो वुञ् । (४-३-२७) ऋत्वणोऽपवादः । शारदकाः [दर्भ]विशेषा मुद्गविशेषाश्च । १३९६ उत्तरपदस्य । (७-३-१०) अधिकारो-[ऽय]म्, 'हनस्तः—' (सू २५७४) इत्यस्मात्प्राक् । १३९७ अवयवादृतोः । [(७]-३-११) अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यात् [ञि]ति णिति किति च तद्धिते परे । पूर्ववार्षिकः । अपरहैमनः । 'अवयवात्'

---

[इ]ति टिलोपः । अन्ताच्च । इदमपि वार्तिकम् । विभाषा पूर्वाह्ण । पक्षे [ठञि]ति । तथा सति न तुट्, तस्य ट्युट्युल्भ्यां संनियोगशिष्टत्वादिति भावः । [इदं] 'राष्ट्रावार-' इत्यारभ्य एतदन्तैः सूत्रैः राष्ट्रादिप्रकृतिविशेषेभ्यो घादयः प्रत्यय-[विशे]षा अनुक्रान्ताः । अथ तेषां प्रत्ययानामर्थविशेषान् प्रकृतीनां च विभक्तिविशेषान् [दर्श]यितुमुपक्रमते । तत्र जातः । सप्तमीसमर्थादिति । सप्तम्यन्तात्कृतसंघेरि-[त्य]र्थः । तत्रेत्यनेन सप्तम्यन्तस्यैव प्रथमानिर्दिष्टत्वादिति भावः । अणादय इति । [अण]त्यादिविकारान्तार्थसाधारणा इत्यर्थः । घादय इति । 'राष्ट्रावारपार-' इत्या-[दि]भिः विशेषविहिता इत्यर्थः । प्रावृषष्ठप् । ठपः पित्त्वम् 'अनुदात्तौ सुप्पितौ' [इ]ति स्वरार्थम् । एण्यस्येति । 'प्रवृष एण्यः' इति विहितस्येत्यर्थः । एवं च ['प्रा]वृष एण्यः' इति सूत्रं जातादन्यार्थमिति पर्यवस्यति । संज्ञायां शरदो वुञ् । [सं]ज्ञायामित्येतत् 'कृतलब्धक्रीत—' इत्येतत्पर्यन्तमनुवर्तत इति केचिदिति वृत्ति-[कृ]तः । उत्तरपदस्य । अधिकारोऽयमिति । सप्तमे आदिवृद्धिप्रकरणे एत-

---

[द]ञ्चो ङित्वं स्पष्टार्थम् । तत्र जातः । ननु शेषे इत्यस्य लक्षणत्वोक्तेः 'चाक्षुषं [रूप]म्, श्रावणः शब्दः' इत्यादाविव जातादिष्वर्थेष्वणादयः सिद्धाः, अधिकाराच्च घादयो-[ऽपी]ति । न च 'जातादिष्वेवाणादयः' इति नियमार्थं जाताद्यर्थनिर्देश आवश्यकः, [अन्य]था 'तत्रास्ते, तत्र शेते' इत्याद्यर्थेऽपि प्रत्ययः स्यादिति वाच्यम्, चाक्षुष, [इ]त्याद्यसिद्ध्यापत्तेः । 'स्रुघ्ने आस्ते, स्रुघ्ने शेते' इत्यादौ त्वनभिधानादेव तद्धितो न [भ]विष्यति, अङ्गुल्या खनति, वृक्षमूलादागत इत्यादौ यथा । समर्थविभक्तयस्त्वापेक्षादेव [ल]प्स्यन्ते । चाक्षुषमित्यत्र तृतीया यथा, तस्मात् 'तत्र जातः' इत्याद्यर्थनिर्देशो व्यर्थ [इ]ति चेत् । मैवम्, 'प्रावृषष्ठप्' इत्याद्यपवादार्थं तदावश्यकत्वात् । ये तु निरपवादा [अ]र्थनिर्देशाः 'कृतलब्धक्रीतकुशलाः' इत्यादयः, ये तु व्यर्था एवेति दिक् । संज्ञायां [श]रदः । समुदायेन चेत्संज्ञा गम्यत इत्यर्थः । संज्ञायां किम्, शारदं सस्यम् । ['सं]ज्ञायाम्' इत्येतत् 'कृतलब्ध-' इत्येतत्पर्यन्तं केचिदनुवर्तयन्तीति वृत्तिकृत् ।

किम्—पूर्वासु वर्षासु भवः पौर्ववर्षिकः । 'ऋतोर्वृद्धिमद्विधाववयवानाम्' (वा ५६०) इति तदन्तविधिः पूर्वत्र । इह तु न, अवयवत्वाभावात् । १३५
सुसर्वार्धाज्जनपदस्य । (७-३-१२) उत्तरपदस्य वृद्धिः । सुपाञ्चालकः सर्वपाञ्चालकः । अर्धपाञ्चालकः । 'जनपदतदवध्योः—' (सू १३४८) इति वुञ् । 'सुसर्वार्धदिक्छब्देभ्यो जनपदस्य' (वा ५५९) इति तदन्तविधिः । १३

---

दादिसूत्राणि । अवयवादृतोः । पूर्वपदादिति । परस्येति शेषः । ऋतुवाचिन इति । उत्तरपदस्येति शेषः । पूर्ववार्षिक इति । ऋतुविशेषे वर्षाशब्दो नित्यस्त्रीलिङ्गो बहुवचनान्तः । वर्षाणां पूर्वं पूर्ववर्षाः, तत्र जात इत्यर्थः । 'पूर्वापराधरोत्तरम्—' इत्येकदेशिसमासः । अपरहैमन इति । हेमन्तस्यापरम् अपरहेमन्तः । तत्र जातादिरित्यर्थः । एकदेशिसमासः । 'सर्वत्राण्च तलोपश्च' इत्यण् तलोपश्च, उत्तरपदादिवृद्धिः । पूर्वासु वर्षास्विति । 'तद्धितार्थे-' इति समासः । आदिवृद्धिरेव, न तु उत्तरपदादिवृद्धिः, पूर्वपदस्य अवयववृत्तित्वाभावात् । ननु कथमिह 'वर्षाभ्यष्ठक्, इति ठक्, प्रत्ययविधौ तदन्तविधिप्रतिषेधात्, तत्राह—ऋतोरिति । अवयववाचकानां शब्दानामुपरि स्थिताद् ऋतुवाचकाद् वृद्धिनिमित्तकप्रत्ययविधाने चर्तव्ये तदन्तविधिर्वाच्य इत्यर्थकेन 'येनविधिः—' इति सू भाष्यस्थितवचनेन पूर्वत्र पूर्वमुदाहृते उदाहरणे तदन्तविधिरित्यर्थः । तथा च पूर्ववार्षिक इत्यत्र पूर्वहैमन इत्यत्र चोदाहरणे 'वर्षाभ्यष्ठक्' इति ठक्, 'सर्वत्राण् च तलोपश्च' इत्यण् च सिध्यन्ति । इह तु नेति । प्रत्युदाहरणे तु तदन्तविधिर्नास्ति । पूर्वासु वर्षास्विति सामानाधिकरण्येन पूर्वशब्दस्य अवयववृत्तित्वाभावादित्यर्थः । ततश्च प्रत्युदाहरणे पौर्ववर्षिक इत्यत्र 'कालाट्ठञ्' इति ठञेव, नतु ठक्, स्वरे विशेषः । पौर्वहैमन इत्यत्रापि ठञेवेति भावः । सुसर्वार्धाज्जनपदस्य । सु, सर्व, अर्ध इत्येतत्पूर्वस्य जनपदवाचिन इत्यर्थः । उत्तरपदस्य वृद्धिरिति । शेषपूरणम् । सुपाञ्चालक इति । सुपञ्चालेषु जात इत्यर्थः । जनपदेति । 'जनपदतदवध्योः' इत्यनुवृत्तौ 'अवृद्धादपि बहुवचनविषयात्' इति वुञित्यर्थः । ननु 'अवृद्धादपि—' इति प्रत्ययविधौ कथं तदन्तविधिः स्यात आह—सुसर्वेति । सु, सर्व, अर्ध, दिक्शब्द एभ्यः परस्य जनपदवाचिन उपरि प्रत्ययविधौ तदन्तविधिरित्यर्थकेन 'येन विधिः—' इति सूत्रभाष्यपठितवचनेन तदन्त

---

पूर्ववार्षिक इत्यादि । वर्षाणां पूर्वः, हेमन्तस्यापर इति विग्रहे 'पूर्वापराधरोत्तरम्' इत्येकदेशिसमासः । पूर्वास्विति । तद्धितार्थे समासः । ऋतोर्वृद्धिमद्विधाविति । ऋतुवाचिनः शब्दाद् वृद्धिनिमित्तकप्रत्ययविधाने तदन्तविधिर्वाच्यः, स चेदृतुशब्दोऽवयवेभ्यः पर इत्यर्थः । पूर्वत्रेति । पूर्ववार्षिकः, अपरहैमन इत्यत्र । च 'वर्षाभ्यष्ठक्', 'सर्वत्राण् च तलोपश्च' इत्याभ्यां क्रमेण ठगणौ भवतः । वृद्धिमद्विधौ किम्, पूर्वप्रावृषम् । 'प्रावृष एण्यः' इत्यत्र तदन्तविध्यभावादिह ऋत्वण् । इह त्विति । पौर्ववार्षिक इत्यत्र । तथा चेह 'कालाट्ठञ्' इति ठञेवेति । अवयवत्वाभावादिति । अन्यथा पूर्वासु वर्षास्विति सामानाधिकरण्यं न संगच्छेदिति भावः । जनपदतदवध्योरितीति । तस्मिन्ननुवर्तमाने 'अवृद्धादपि बहुवचनविषयात्'

द्व्येकसङ्ख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ च न ॥ ४ ॥

त्वां मां वा अतिक्रान्त इति विग्रहे अतित्वम्, अत्यहम् । अतित्वाम्, अतिमाम् । अतियूयम्, अतिवयम् । अतित्वाम्, अतिमाम् । अतित्वाम्, अतिमान् । अतित्वान्, अतिमान् । अतित्वया, अतिमया । अतित्वाभ्याम्, अतिमाभ्याम् । अतित्वाभिः, अतिमाभिः । अतितुभ्यम्, अतिमह्यम् । अतित्वाभ्याम्, अतिमाभ्याम् । अतित्वभ्यम्, अतिमभ्यम् । ङसिभ्यसोः—अतित्वत्, अतित्वत् । अतिमत्, अतिमत् । भ्यामि प्राग्वत् । अतितव, अतिमम । अतित्वयोः, अतिमयोः । अतित्वाकम् अतिमाकम् । अतित्वयि, अतिमयि । अतित्वयोः, अति-

एकसंख्य इति । चतुर्थश्लोकेऽस्मिन् यदा तदेत्यध्याहार्यम् । यदा युष्मान् अस्मान् वा अतिक्रान्तौ अतिक्रान्त इति विग्रहे समासे सति द्वित्वैकत्वविशिष्टः समासार्थः समासस्य अर्थविशेष्यभूतः, युष्मदस्मदी तु बह्वर्थके, तदा युवावौ त्वमौ च न स्तः, तयोः युष्मदाद्योः द्वित्वैकत्वविशिष्टार्थकत्वाभावात् । युवावविधौ त्वमविधौ च युष्मदस्मदोर्द्वित्वैकत्वविशिष्टवाचित्वे सत्येव प्रवृत्तेराश्रयणात् । द्विवचने एकवचने च प्रत्यये परत इत्याश्रयणे तत्रातिव्याप्तिः स्यादित्यर्थः । अत्र 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे भाष्ये 'त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणम्' इति वार्तिकव्याख्यावसरे 'युवावौ द्विवचने' 'त्वमावेकवचने' इत्यत्र द्विवचनैकवचनशब्दयोर्यौगिकत्वाश्रयणमुपक्षिप्य युवाम् आवां वा अतिक्रान्तः,अतिक्रान्तौ, अतिक्रान्ता इति विग्रहान् प्रदर्श्य, त्वाम् मां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति च विग्रहान् प्रदर्श्य, अतियुष्मदत्यस्मच्छब्दयोः सुजसङेङस्भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु सर्वत्र युवावादेशौ त्वमादेशौ च उदाहृत्य प्रदर्शितौ । सुजसङेङस्सु तु त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ इत्येत एवादेशा उदाहृताः । तदिदं श्लोकचतुष्टयेन संगृहीतम् । तदिदानीं तत्प्रपञ्चनमरभाष्यानुसारेणोदाहृत्य प्रदर्शयति—त्वां मां वा अतिक्रान्त इत्यादिना । अतिक्रान्तौ अतिक्रान्ता इति च विग्रहयोरुपलक्षणमिदम् । विग्रहे इत्यनन्तरं 'रूपाणि वक्ष्यन्ते' इति शेषः । सुजसङेङस्भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु मपर्यन्तस्य त्वमावेव भवतः । अवशिष्टप्रक्रियास्तु केवलयुष्मदस्मद्वज्ज्ञेयाः । सुजसङेङस्सु तु त्वाहौ, यूयवयौ, तुभ्यमह्यौ, तवममौ इत्येते एवादेशाः पूर्वप्रतिषेधात् त्वमौ बाधित्वा भवन्ति । ततश्च सुजसङेङस्सु केवलयुष्मदस्मद्वदेव रूपाणीति निष्कर्षः । अतित्वाकम् । अतिमाकमिति । ननु 'साम आकम्' इति

विधिर्युवावयोर्बाधः, त्वमौ तु तेभ्यः परौ कथं तैर्बाध्येतामित्यत आह—त्वमावपीति । 'विप्रतिषेधे परम्—' इत्यत्र परशब्दस्येष्टवाचित्वादिति भावः । अतित्वाम्, अतिमामिति । त्वां मां वा अतिक्रान्ताविति विग्रहः । अतियूयम्, अतिवयमिति । त्वां मां वा अतिक्रान्ता इति विग्रहः । एवमग्रेऽप्यूह्यम् । अतित्वाकम्, अतिमाकमिति । अत्रान्त्यलोपपक्ष त्वङ्गवृत्तपरिभाषया नुडागमो निवार्यः । 'ह्रस्वनद्यापः' इत्यत्र ह्रस्वान्ताद्विहितस्यामो नुडिति व्याख्यानाद्वा । नन्वेवं भिन्नविषयतया सुटो नुडभावादत्वाभावेनावर्णान्तसर्वनामभ्यो विहितस्यामो नुडेव परत्वात् स्यात्, न तु सुडा-

मयोः। अतित्वासु, अतिमासु ॥ युवाम् आवां वा अतिक्रान्त इति विग्रहे सुजस्ङे ङस्सु प्राग्वत्। औअम्औट्सु—अतियुवाम्, अतियुवाम्, अतियुवाम्। अत्यावाम्, अत्यावाम्, अत्यावाम्। अतियुवान्, अत्यावान्। अतियुवया, अत्यावया। अतियुवाभ्याम् ३, अत्यावाभ्याम ३। अतियुवाभिः, अत्यावाभिः। भ्यसि—अतियुवभ्यम्, अत्यावभ्यम्। ङसिभ्यसोः—अतियुवत्, अतियुवत्, अत्यावत्, अत्यावत्। ओसि—अतियुवयोः, अतियुवयोः। अत्यावयोः, अत्यावयोः। अतियुवाकम्, अत्यावाकम्। अतियुवयि, अत्यावयि। अतियुवासु, अत्यावासु ॥ युष्मानस्मान्वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत्। औ

---

ससुट्कनिर्देशाद्यत्र आमः सुट्संभवः तत्रैवाकम्, न चात्र सुट् संभाव्यते। 'इह युष्मदस्मदोरुपसर्जनत्वेन सर्वनामत्वाभावात्। सुटः सर्वनाम्नः परस्यामो विहितत्वादिति चेन्मैवम्—ससुट्कत्वस्य संभावनामात्रविषयत्वात्। एवं च सुड् यत्र संभविष्यति तत्र सुनिवृत्त्यर्थं ससुट्कनिर्देशः। यत्र तु सुड् न संभवति, तत्र केवलस्य आमः सुट्। अत्र च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे अतित्वाकमतिमाकमिति भाष्ये तदुदाहरणं प्रमाणमित्यास्तां तावत्। तदेवमुपसर्जनयोः युष्मदस्मदोरेकार्थवाचित्वे उदाहरणान्युक्त्वा द्व्यर्थवाचित्वे उदाहरति—युवाम् आवां वा अतिक्रान्त इति। अतिक्रान्तौ, अतिक्रान्ता इति विग्रहयोरुपलक्षणम्। अत्र युष्मदस्मदोर्द्व्यर्थवृत्तित्वात् सुजस्ङेङस्सु अन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु मपर्यन्तस्य युवावावेव भवतः अवशिष्टाः प्रक्रियाः केवलयुष्मदस्मद्वद् ज्ञेयाः। सुजस्ङेङस्सु तु त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ इत्येत एवादेशाः परत्वाद्युवावादेशौ बाधित्वा प्रवर्तन्ते। सुजस्ङेङस्सु केवलयुष्मदस्मद्वदेव रूपाणीति निष्कर्षः। अथ युष्मदस्मदोरुपसर्जनयोर्बह्वर्थवाचित्वे उदाहरत्याह—युष्मान् अस्मान्वेति। युष्मानस्मान्वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति विग्रहेष्वित्यर्थः। 'द्व्येकसंख्यः समासार्थः' इति चतुर्थश्लोकस्योदाहरणान्येतानि। अत्र युष्मदस्मदोरेकद्व्यर्थवाचित्वाभावात् सुजस्ङेङस्भ्योऽन्यत्र मपर्यन्तस्य क्वापि न त्वमौ नापि युवावौ। 'ङे प्रथमयोः—' इत्याद्यास्तु भवन्त्येव। सुजस्ङेङस्सु त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ इत्येते भवन्त्येव, तेषामेकद्व्यर्थविशेषनिबन्धनत्वाभावात्। प्राग्वदिति। केवलयुष्मदस्मद्वदित्यर्थः।

---

गमः, स्तस्य येषां केषामित्यादौ सावकाशत्वादिति चेत्। अत्राहुः—'त्यदादेरामि सुट्' इति वक्तव्ये 'आमि सर्वनाम्नः—' इति सर्वनामग्रहणसामर्थ्याद् 'हलि सर्वेषाम्' इत्यादिनिर्देशाच्च अवर्णान्तसर्वनामभ्योऽप्यामः सुडेव भवति, न तु नुट्। 'शस्प्रभृतिषु' इति च विषयसप्तमी, तेन पदादिष्वप्यामि न नुडिति। एवं च साम इति ससुट्कनिर्देशेन युष्माकमस्माकमित्यत्र सुडागमाभावेऽपि नुडागमो दुर्वार इत्याशङ्काया अपि निरवकाश एवेति बोध्यम्। यत्तु वदन्ति—'साम आकम्' इत्यत्र यद्यपि सुड्ग्रहणं स्थानिविशेषणम्, बाधात्, तथापि उपलक्षणं भवति। तेन यस्यामः सुडग्रे भावी तस्यैवाम आकमा भवितव्यम्, न चैतद्गौणत्वे संभवतीत्याकम्न प्रवर्तते, तथा च अतित्वयाम् अतिमयामित्येव रूपम्, न त्वतित्वाकमतिमाकमिति। तदसत्, आकमापहृत

न्वौट्सु—अतियुष्माम्, अतियुष्माम्, अतियुष्माम् । अत्यस्माम्, अत्य-स्माम्, अत्यस्माम् । अतियुष्मान्, अत्यस्मान् । अतियुष्मया, अत्यस्मया । अतियुष्माभ्याम् ३, अत्यस्माभ्याम् ३ । अतियुष्माभिः, अत्यस्माभिः । भ्यसि— अतियुष्मभ्यम्, अत्यस्मभ्यम् । ङसिभ्यसोः—अतियुष्मत् २, अत्यस्मत् २ । ओसि—अतियुष्मयोः, अतियुष्मयोः । अत्यस्मयोः, अत्यस्मयोः । अतियुष्माकम्, अत्यस्माकम् । अतियुष्मयि, अत्यस्मयि । अतियुष्मासु, अत्यस्मासु । ४०१ पदस्य । (८-१-१६) ४०२ पदात् । (८-१-१७) । ४०३ अनुदात्तं

---

पदस्य । पदात् । अनुदात्तं सर्वमपादादौ । इत्यधिकृत्येति । विधयो वक्ष्यन्त इति शेषः । अष्टमस्य प्रथमे पाद इमानि सूत्राणि पठितानि । तत्र 'पदस्य' इत्येतद् 'अपदान्तस्य मूर्धन्यः' इत्यतः प्रागधिक्रियते । 'पदात्' इत्येतत्तु 'कुत्सने च सुप्यगोत्रादौ' इत्यतः प्रागधिक्रियते । 'अनुदात्तं सर्वमपादादौ' इति पदत्रयं तु आ

---

नुदात्ताभावात् । आकमः सुड् भावीति चेत्तर्हि तमेवोपलक्षयेत् । आदेशद्वारकेण परम्परासंबन्धेन स्थानिनमुपलक्षयति चेदेवं तर्हि युष्माकमित्यादौ सुट् श्रूयेत । साम इति निर्देशसामर्थ्यान्न श्रूयेतेति चेन्न । निर्देशस्य गौणव्यावृत्त्या चरितार्थत्वेन सामर्थ्या-भावादित्यन्यत्र विस्तरः । गुणभूतयोर्युष्मदस्मदोरेकार्थत्वे उदाहरणान्युक्त्वा संप्रति द्व्यर्थवाचित्वे उदाहरति—युवामावां वा अतिक्रान्त इत्यादिना । बह्वर्थयोस्तू-दाहरति—युष्मानस्मान्वेति । पदस्य । 'अपदान्तस्य मूर्धन्यः' इति विरोध-निर्देशात्प्राक् पदस्येत्ययमधिकारः । तेन राजा राजभ्यामित्यादौ 'नलोपः प्रातिपदि-कान्तस्य' इति नलोपः सिध्यति, न तु राजानौ राजान इत्यत्र । तथा गोमान् यव-मानित्यादौ संयोगान्तलोपः, न तु गोमन्तौ यवमन्तावित्यादौ । तथा 'मो नो धातोः' इति नत्वं प्रशान्भ्यामित्यादौ भवति, न तु प्रशामौ प्रशाम इत्यत्र । तथा हरिं वन्दे इत्यादौ 'मोऽनुस्वारः' प्रवर्तते; न तु गम्यत इत्यादौ । न च 'उभि च पदे' इत्यतः पदे इत्यधिकारात्पदे परतो मस्यानुस्वारः स्यात्, न तु गम्यत इत्यत्रेति किमिह पद-स्येत्यधिकारेणेति वाच्यम्, पुंस्विति रूपासिद्धिप्रसङ्गात् । तस्मात् 'मोऽनुस्वारः' इत्यत्र पदस्येत्यनुवर्तनीयमेव, पदे इत्यस्योत्तरसूत्रेऽप्युपयोगो नास्तीति 'उभि च पदे' इत्यत्रा-पेक्षाम । इह पदस्येति संबन्धसामान्ये षष्ठी, सा तूत्तरेषु यथायोगं संबन्धविशेषे अव-तिष्ठते, क्वचित् स्थानेषष्ठी, क्वचिद् अवयवषष्ठीति । तत्र 'संयोगान्तस्य लोपः' 'मो नो धातोः' 'मोऽनुस्वारः' इत्यादौ पदस्येति स्थानषष्ठी, अवयवषष्ठ्यां तूक्तातिप्रसङ्गात् । 'मादुपधायाः—' इत्यादौ त्ववयवषष्ठी, अन्यथा वृक्षवानित्यत्रैव मतुपो मस्य वत्वं स्यात्, न तु वृक्षवन्तौ वृक्षवन्त इत्यत्र, एतच्चानुपदमेवोपपादयिष्यते । यद्यपि 'षष्ठी स्थानेयोगा' इति परिभाषया 'पदस्य' इत्यत्र स्थानषष्ठ्येव लभ्यते, न त्ववयवषष्ठी, तथापि नलोप-सूत्रे अन्तस्येति ग्रहणाज्ज्ञापकादवयवषष्ठ्यपि लभ्यते । यदि तु पदस्येति स्थानषष्ठ्येव स्यात्तर्हि नान्तस्य पदस्य लोपो भवन्नलोऽन्त्यस्य स्यादिति अन्तग्रहणमनर्थकं स्यात् । अवयवषष्ठ्यङ्गीकारे तु अन्तस्येति ग्रहणं सार्थकम् । तद्यथा—नलोपसूत्रे प्रातिपतिकान्त-स्येत्यसमासनिर्देशः । प्रातिपदिसंज्ञकस्य पदस्य अन्तावयवो यो नकारस्तस्य लोप इति

सर्वमपादादौ । (८-१-१८) इत्यधिकृत्य । ४०४ युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ । (८-१-२०) पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वां नौ इत्यादेशौ स्तः । तौ चानुदात्तौ । ४०५ बहुवचनस्य वस्नसौ । (८-१-२१) उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः । वांनावोरपवादः । ४०६ तेमयावेकवचनस्य । (८-१-२२) उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः । ४०७ त्वामौ द्वितीयायाः ।

---

पादसमाप्तेः अधिक्रियत इति भाष्यादिषु स्पष्टम् । युष्मदस्मदोः षष्ठी । षष्ठ्यादिविशिष्टयोरिति । षष्ठीचतुर्थीद्वितीयाभिः सह तिष्ठत इति षष्ठीचतुर्थीद्वितीयास्थौ, तयोरिति विग्रहः । षष्ठ्यादिविशिष्टयोरिति यावत् । षष्ठीचतुर्थीद्वितीयासु परतः तिष्ठत इति विग्रहस्तु न भवति । 'पदस्य' इत्यधिकारविरोधात् । पदस्येत्यनुवृत्तं हि द्विवचनेन विपरिणतं षष्ठीचतुर्थीद्वितीयास्थयोरित्यस्य विशेषणम् । न हि षष्ठ्यादिविभक्तिषु परतः पदत्वमस्ति, भ्यामादौ तत्सत्त्वेऽपि तदितरत्र द्वितीयादौ तदभावात् । स्थग्रहणस्य प्रयोजनं मूल एव वक्ष्यते । बहुवचनस्य वस्नसौ । उक्तविधयोरिति । षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोरित्यर्थः । तेमयावेकवचनस्य । षष्ठीचतुर्थ्येकवचनान्तयोरिति । अत्र द्वितीयाग्रहणं नानुवर्तते, तत्र त्वामादेशयोर्वक्ष्यमाणत्वात् । 'तेमयौ' इति सूत्रे तेश्च मेश्च तेमयाविति विग्रह इति भावः । अयमपि वांनावोरपवादः । त्वामौ द्वितीयायाः । त्वाश्च माश्चेति विग्रहः । एकवचनस्येत्यनुवर्तते । तदाह—द्वितीयैकवचनस्य त्वादिना ।

---

सूत्रार्थं इति । नन्वेवमन्तस्येतिग्रहणमवयवषष्ठीत्वज्ञापनार्थमिति स्वीकारात्पदसंज्ञायां कथं नाम स्थानषष्ठीलाभः, संबन्धविशेषस्य निर्धारितत्वेन स्थानषष्ठीपरिभाषाया अप्रवृत्तेः स्थितेः । अत्राहुः—प्रयोगमूलत्वाद्व्याकरणस्मृतेर्लक्ष्यानुरोधेन स्थानषष्ठ्यपि स्वीक्रियते । ज्ञापकसिद्धा अवयवषष्ठी न सर्वत्र स्वीक्रियते, इति नलोपसूत्रे मनोरमायामन्तग्रहणं त्यक्तुं शक्यमित्युक्तम् । भाष्यादौ तु 'पदस्य' इत्यधिकृतस्यावयवषष्ठ्यन्तत्वमप्यनुगम्यते, न तु स्थानषष्ठ्यन्तत्वमेवेति ज्ञापनार्थमन्तग्रहणम्, तेन वृक्षवन्तौ वृक्षवन्त इत्यत्र 'मादुपधायाः–' इति वत्वं सिध्यति, पदावयवस्य मतुपः सत्त्वात् । अन्यथा पदस्येत्यस्य विशेष्यत्वे मतुपा तदन्तविधौ मत्वन्तं यत्पदं तदवयवस्य मतुपो मादुपधायाः परस्य मस्य वत्वं भवतीत्यर्थः स्यात् । तथा च वृक्षवानित्यत्रैव स्यात्, न तु वृक्षवन्तौ वृक्षवन्त इत्यत्रेति स्थितम् । पदात् 'कुत्सने च सुप्यगोत्रादौ' इत्यतः प्रागयमधिकारः । यदि तु 'कुत्सने च सुपि–' इत्यत्रापि पदादित्यनुवर्तते, तदा देवदत्तः पचति पूतीत्यत्रैव निघातः स्यान्न तु पचति पूतीत्यत्र । अनुदात्तं सर्वमपादादौ इदं पदत्रयमापादपरिसमाप्तेरधिक्रियते—षष्ठीचतुर्थीति । 'अल्पाच्तरम्' इति पदस्य पूर्वनिपातः । षष्ठ्यादिविशिष्टयोरिति । ननु युस्मदस्मदोरित्युक्तत्वात्तयोर्वांनावादय आदेशाः स्युः । न च 'पदस्य' इत्यधिकाराद्विभक्त्यन्तस्यैव पदत्वात्षष्ठ्यादिविशिष्टयोरेव स्युरिति वाच्यम्, उक्तरीत्या वस्नसादौ दोषाभावेऽपि भ्यामादौ परे युष्मदस्मदोः पदत्वात्केवलयोर्वांनावादेशप्रसङ्गस्य दुर्वारत्वात्, तथा च 'सुखं वां

(८-१-२३) द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः।

श्रीशस्त्वावतु मापीह दत्तात्ते मेऽपि शर्म सः।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः॥ १ ॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः।
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥२॥

पदात्परयोः किम्—वाक्यादौ मा भूत्, त्वां पातु, मां पातु । अपादादौ —'वेदैरशेषैः संवेद्योऽस्मान्कृष्णः सर्वदाऽवतु ।' स्थग्रहणाच्छ्रूयमाणविभ-

---

अथ विभक्तिक्रमक्लृप्तद्वितीयाचतुर्थीषष्ठीक्रमेण एकद्विबहुवचनक्रमेण चोदा- —श्रीश इत्यादि श्लोकद्वयेन । तत्र 'श्रीशस्त्वावतु मापीह' इति प्रथमः । श्रिया ईशः—पतिः विष्णुः त्वा मा अपि पातु इत्यन्वयः । अत्र त्वाम्, माम् द्वितीयैकवचनान्तयोः त्वा मा इत्यादेशौ । दत्तात्ते मेऽपि शर्म स इति । श्रीशः ते मे अपि शर्म—सुखं दत्तादित्यन्वयः । 'डु दाञ् दाने' आशिषि लोटि दत्ता- रूपम् । दद्यादिति क्वचित् पाठः । अत्र तुभ्यम् मह्यम्- इति चतुर्थ्येकवचनान्तयोः मे इत्यादेशौ । स्वामी ते मेऽपि स हरिरिति । अत्र तव मम इति षष्ठ्येक- वचनान्तयोः ते मे आदेशौ । पातु वामपि नौ विभुरिति । विभुः—सर्वव्यापकः वां अपि पातु इत्यन्वयः । अत्र युवाम् आवाम् इति द्वितीयाद्विवचनयोः वां नौ इत्या- देशौ । सुखं वां नौ ददात्वीश इति । नौ इत्यनन्तरमपिशब्दोऽध्याहार्यः । अत्र युवाभ्याम् आवाभ्याम् इति चतुर्थीद्विवचनान्तयोः वांनावौ । पतिर्वामपि नौ हरि- रिति । अत्र युवयोः आवयोरिति षष्ठीद्विवचनान्तयोः वांनावौ । सोऽव्याद्वो न इति । स हरिः वः नः अपि अव्यात्—रक्षताद् इत्यर्थः । अत्र युष्मान् अस्मान् इति द्वितीयाबहुवचनान्तयोः वस्नसौ । शिवं वो नो दद्यादिति । शिवमिति शुभमुच्यते । न इत्यनन्तरम् अपीत्यध्याहार्यम् । अत्र युष्मभ्यम्, अस्मभ्यम् इति चतुर्थीबहुवचना- न्तयोः वस्नसौ । सेव्योऽत्र वः स न इति । स हरिः वः नः अपि सेव्यः—भज- नीय इत्यर्थः । 'कृत्यानां कर्तरि वा' इति षष्ठी । अत्र युष्माकम्, अस्माकम् इति षष्ठीबहुवचनान्तयोः वस्नसौ । त्वां पातु, मां पात्विति । अत्र युष्मदस्मदोः पदात् पर- त्वाभावात् 'त्वामौ द्वितीयायाः' इति न भवतीत्यर्थः । यद्यप्यत्र अस्मच्छब्दस्य पात्विति पदात् परत्वमस्ति, तथापि भिन्नकालं वाक्यद्वयमिह विवक्षितमित्यदोषः । संवेद्यो-

---

ऽस्मान्कृष्णः' इति प्रयोगो न संगच्छेत । नापि 'द्वितीयास्थयोः' इति स्थग्रहणसामर्थ्या- द्विभक्तिविशिष्टयोरेव आदेशा भवेयुरिति वाच्यम्, स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव इति वक्ष्यमाणतया तत्सामर्थ्यस्योपक्षयात् । मैवम्, 'अनुदात्तं सर्वम्—' इति सर्वग्रहणा- दधिकारात्सर्वस्यैव विभक्तिविशिष्टस्य आदेशा भवन्तीति आकरे स्पष्टत्वात् । यदि तु 'सर्वस्य द्वे' इत्यतः सर्वस्येति पदमनुवर्तते, तदा सर्वग्रहणमिह त्यक्तुं शक्यमित्याहुः । स्थानादेशान्वचनक्रमेणोदाहरति—श्रीश इत्यादिना । स्वामी ते मेऽपीति । 'स्वामीश्वराधिपति-' इति षष्ठीसप्तम्योर्विधानादिह षष्ठी । द्विवचनान्तयोरुदाहरणमाह— पातु वामित्यादिना । बहुवचनान्तयोस्तु—सोऽव्याद्वो न इत्यादि । सेव्योऽत्र

क्तिकयोरेव । नेह-इति युष्मत्पुत्रो ब्रवीति, इत्यस्मत्पुत्रो ब्रवीति । 'समानवाक्ये

ऽस्मानिति । अत्रास्मच्छब्दस्य पादादौ स्थितत्वान्नादेशः । यद्यप्यनुष्टुप्छन्दस्कोऽयं श्लोकः । तत्र एकैकः पादः अष्टाक्षर इति स्थितिः । तत्र सन्ध्यभावे 'अस्मान् कृष्ण सर्वदाऽवतु' इत्यस्य नवाक्षरत्वान्न पादत्वम् । कृते तु सन्धौ ओकारस्य परादित्वे अष्टाक्षरत्वव्याघातः। संवेद्य इत्यस्य पदत्वाभावाद् अस्मदः पदात् परत्वाभावश्च । पूर्वा-न्तत्वे तु स्मानित्यस्य पादादिस्थितस्य नास्मच्छब्दरूपता । तथापि संवेद्यो इत्येकादेश-विशिष्टस्य पूर्वान्तत्वात् पदत्वम् । स्मानित्यस्य तु एकदेशविकृतन्यायेन द्वितीयान्तास्म-च्छब्दरूपत्वम् । वस्तुतस्तु ओकारस्य पूर्वान्तत्वात् संवेद्यो इत्यस्य पदत्वम्, स्मानित्यस्य-रष्टाक्षरत्वं च । परादित्वाच्चास्मच्छब्दरूपता । 'उभयत आश्रयणे नान्तादिवत्' इति तु नास्तीति इण्धातौ निरूपयिष्यामः । केचित्तु 'अपादादौ किम्, युष्मान् रक्षतु गोवि-न्दोऽस्मान् कृष्णस्सर्वदाऽवतु' इति प्रत्युदाहरन्ति । तन्न, युष्मानित्यस्य पदात् परत्वाभा-वादेवाप्राप्तेः । अस्मानित्यस्य तु पदात् परत्वेऽपि समानवाक्यस्थपदात् परत्वाभावात् ।

ननु 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयान्तयोः' इत्येव सूत्र्यताम्, किं स्थग्रह-णेन । स्थग्रहणेऽपि कथञ्चित्तस्यैवार्थस्य लाभादित्यत आह—स्थग्रहणादिति । स्थाधातुः अहानौ वर्तते । 'समये तिष्ठ सुग्रीव' इति यथा । समये-मर्यादायां विद्य-अनुवृत्तिं मा हासीरिति गम्यते । ततश्च षष्ठीचतुर्थीद्वितीयाः तिष्ठतः-न परित्यज-इति व्युत्पत्तिर्विवक्षिता । षष्ठ्यादिविभक्तीरपरित्यजतोरित्यर्थः । अलुप्तषष्ठ्यादिवि-भक्तिविशिष्टयोरिति फलतीति भावः । इति युष्मत्पुत्र इति । पदात् परत्वं सम्पादयितु-इति शब्दः । युवयोर्युष्माकं वा पुत्रः, आवयोरस्माकं वा पुत्र इति विग्रहः । अत्र विभक्तेर्लुका लुप्तत्वात् श्रूयमाणविभक्तिकत्वाभावान्नादेशप्रवृत्तिः । तव पुत्रो मम पु-इति विग्रहस्तु न, 'प्रत्ययोत्तरपदयोश्च' इति तत्र त्वमादेशयोर्वक्ष्यमाणत्वात् । समानवाक्य-

वः स न इति । 'अर्हे कृत्यतृचश्च' इति ण्यत्, 'कृत्यानां कर्तरि वा' इति षष्ठी । वेदैरशेषैरिति । 'युष्मान् रक्षतु गोविन्दः' इति प्राचः पाठस्तूपेक्षितः, युष्मा-नित्यस्य तु पदात्परत्वाभावादेवाप्राप्तेः, अस्मानित्यस्य तु पदात्परत्वेऽपि समानवाक्य-स्थपदात्परत्वाभावात् । ननु 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयानाम्' इति सूत्र्यताम्, विशेषणेन तदन्तविधौ षष्ठ्याद्यन्तयोर्युष्मदस्मदोः पर्यवस्यति । न च स्थग्रहणाभावे युष्म-दस्मदोः संबन्धिनीनां षष्ठीचतुर्थीद्वितीयानामित्यर्थः स्यादिति वाच्यम्, 'सर्वस्य' 'पदस्य' इत्यनुवर्तनादतो व्याचष्टे—स्थग्रहणादिति । तिष्ठतिरिहाहानौ वर्तते, 'समये तिष्ठ सुग्रीव' इति समयं मा हासीरिति गम्यते । तेन षष्ठ्यादीनविजहतोरेव युष्म-दस्मदोरादेशा इत्यर्थः । इति युष्मत्पुत्र इति । युवयोः पुत्रो युष्माकं पुत्र इति विग्रहः, न तु तव पुत्र इति । तथा हि सति त्वत्पुत्र इत्येव स्यात् । एवमस्मत्पुत्र इत्य-त्राप्यूह्यम् । पदात्परत्वं संपादयितुमितिशब्दः । ननु राज्ञः पुरुषो राज्ञां पुरुष इति विग्रहे राजपुरुष इति नेष्यत इति सिद्धान्तविरोधाद्युष्मत्पुत्रोऽस्मत्पुत्र इत्यत्र युवयो-र्युष्माकमित्यादिविग्रहो न संभवतीति चेत् । अत्राहुः—यत्र वृत्तौ संख्याविशेषवाचि प्रमाणं नास्ति तत्रैवैकत्वसंख्याऽऽश्रीयते यथा राजपुरुष इति । न हि राजपुरुष इत्य-

# अथ हलन्तनपुंसकलिङ्गप्रकरणम् । १३ ।

स्वमोर्लुक् । दत्वम् । स्वनडुत्, स्वनडुद्, स्वनडुही । 'चतुरनडुहोः–' (सू ३३१) इत्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥ इति हान्ताः ॥ 'दिव उत्' (सू ३३७) अहर्विमलद्यु । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्डस्यापि पदसंज्ञायां प्राप्तायाम् 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' (वा ४८०)

---

अथ हलन्तनपुंसकलिङ्गे हकारान्ता निरूप्यन्ते । सु–शोभनाः अनड्वाहो यस्य कुलस्येति बहुव्रीहौ स्वनडुहशब्दाद् नपुंसकलिङ्गात् सुवुत्पत्तिः । ननु तत्र सुपरतः 'चतुरनडुहोः–' इत्याम्, 'अम् संबुद्धौ' इत्यम्, 'सावनडुहः' इति नुम् च स्यात्, हल्ङ्यादिना सुलोपेऽपि प्रत्ययलक्षणसत्त्वादित्यत आह—स्वमोर्लुगिति । परत्वाद् हल्ङ्यादिलोपं बाधित्वा 'स्वमोर्नपुंसकात्' इति लुक् । ततश्च लुका लुप्तत्वेन प्रत्ययलक्षणाभावादामादि न भवतीति भावः । दत्वमिति । 'वसुस्रंसु–' इत्यनेनेति शेषः । दत्वविधेः पदाधिकारस्थत्वेन तदन्तेऽपि प्रवृत्तेरिति भावः । न च तत्रापि 'न लुमता–' इति निषेधः शङ्क्यः, दत्वस्य सुवन्तत्वरूपपदत्वनिमित्तकतया अङ्गकार्यत्वाभावादित्याहुः । स्वनडुदिति । दत्वे चर्त्वविकल्पः । 'उरःप्रभृतिभ्यः कप्' इति तु न शङ्क्यम्, तत्र अनड्वानित्येकवचनस्यैव पाठादिति बहुव्रीह्यधिकारे मूल एव वक्ष्यते । स्वनडुही इति । 'नपुंसकाच्च' इत्यौङः शीभावः । स्वनड्वांहीति । 'जश्शसोः शिः' इति शिभावे, तस्य सर्वनामस्थानत्वात् 'चतुरनडुहोः–' इत्यामि, 'नपुंसकस्य झलचः' इति नुमि, 'नश्च–' इत्यनुस्वार इति भावः । अत्र यद्वक्तव्यं तत्पुंल्लिङ्गनिरूपणे उक्तम् ॥ इति हान्ताः ॥

अथ वकारान्ता निरूप्यन्ते । विमला द्यौः–आकाशं यस्य अह्न इति बहुव्रीहौ सुब्लुकि, विमलदिव्शब्दात् सोर्लुक् । एतावत् सिद्धवत्कृत्य आह—दिव उदिति । अहर्विमलद्यु इति । वस्य उत्वे इकारस्य यणिति भावः । अहर्ग्रहणं नपुंसकत्वसूचनार्थम् । ननु विमलदिव् औ इति स्थिते 'नपुंसकाच्च' इति शीभावे विमलदिवी इति रूपं वक्ष्यति । तदयुक्तम्, 'दिव उत्' इत्युत्वप्रसङ्गात् । न च विमलदिवी इति समुदायस्यैव सुवन्ततया पदत्वान्न वकारस्य दिव्शब्दरूपपदान्तत्वमिति वाच्यम्, 'सुपो धातु–' इति लुप्तां दिव्शब्दोत्तरां विभक्तिं प्रत्ययलक्षणेनाश्रित्य दिव् इत्यस्य पदत्वात् । न च लुका लुप्तत्वाद् न प्रत्ययलक्षणमिति वाच्यम्, पदसंज्ञायाः सुवन्तधर्मतया अङ्गधर्मत्वाभावेन तत्र 'न लुमता–' इति निषेधाप्रवृत्तेः अन्यथा राज्ञः पुरुषः-राजपुरुष इत्यादौ पूर्वभागे नलोपादिकं न स्यादित्याशङ्क्य आह—अन्तर्वर्तिनीमित्यादि । उत्तरपदत्वे चेति । समासे उत्तरखण्डस्य पदसंज्ञायां कर्तव्यायाम् अन्तर्वर्तिविभक्तिनिमित्तं प्रत्ययलक्षणप्रतिषेधो वक्तव्यः पदादिविधिं वर्जयित्वा इत्यर्थः । वार्तिकमेतत् ।

---

दत्वमिति । 'वसुस्रंसु–' इति दत्वमनडुच्छब्दान्तेऽपि प्रवर्तते, पदाधिकारस्थत्वादिति भावः । पूर्वपदस्येवेति । अन्यथा राजपुरुषो वागाशीरित्यादौ नलोपकुत्वादिकं यथासंभवं न स्यादिति भावः । उत्तरपदत्वे चेति । उत्तरशब्देनोत्तरखण्डमुच्यते । उत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः ।

इति प्रत्ययलक्षणं न । विमलदिवी, विमलदिवि । 'अपदादिविधौ' किम्-दधि-सेचौ । इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव । चकारस्य कुत्वे तु न ॥ इति वान्ताः ॥ वाः, वारी । अझलन्तत्वान्न नुम्, वारि । चत्वारि ॥ इति रेफान्ताः ॥ 'न लुमता-'

---

विमलदिवी इति । औङि रूपम् । विमलदिवि इति । शसि सति 'जश्शसोः शिः' इति शिभावे रूपसिद्धिः अझलन्तत्वान्न नुम् ।

दधिसेचाविति । सिञ्चतेः क्विप् । दध्नः सेचौ दधिसेचौ । समासे पूर्वोत्तरपदयोः वसुपोर्लुकि समासात् पुनः सुबुत्पत्तिरिति स्थितिः । तत्र उत्तरखण्डादुत्तरां विभक्तिं लुप्तां प्रत्ययलक्षणेनाश्रित्य सेच् इत्यस्य पदत्वेन तत्सकारस्य पदादितया 'सात्पदाद्योः' इति षत्वनिषेध इष्टः । 'उत्तरपदत्वे प्रत्ययलक्षणप्रतिषेधः' इत्येतावत्येवोक्ते तु सेच् इत्युत्तरखण्डस्य पदसंज्ञायां कर्तव्यायां प्रत्ययलक्षणप्रतिषेधः स्यात् । तथा च सेच् इत्यस्य सुबन्तत्वाभावेन अपदतया तत्सकारस्य पदादित्वाभावेन षत्वनिषेधो न स्यात् । इत्यत अपदादिविधावित्युक्तम् । षत्वनिषेधस्य पदादिविधितया तस्मिन् कर्तव्ये 'प्रत्ययलक्षण-माश्रित्य सेच् इत्यस्य पदत्वात् तत्सकारस्य 'सात्पदाद्योः' इति षत्वनिषेधो निर्बाधः । ननु सेच् इत्युत्तरखण्डस्य पदत्वे चकारस्य कुत्वं स्यादित्यत आह—चकारस्य कुत्वे तु नेति । कुत्वे कर्तव्ये तु सेच् इत्यस्य पदत्वं नास्त्येव, कुत्वस्य पदान्तविधितया पदादिविधिभिन्नतया तस्मिन् कर्तव्ये प्रत्ययलक्षणप्रतिषेधसत्त्वेन पदत्वाभावादिति भावः । ननु दधि सिञ्चत इति सोपपदाद्विचि उपपदसमासे षत्वं दुर्वारम्, 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति वक्ष्यमाणत्वेन सेच् इत्यस्य अन्तर्वर्तिसुबभावेन अपदान्ततया 'सात्पदाद्योः' इति निषेधस्य तत्राप्रवृत्तेरिति चेत्, अत्र सोपपदात् सिचेः विचः अनभिधानमिति भाव इति कैयटः समाहितवान् । पदाद् वा पदादिरिति पक्षे तु उपपदसमासेऽपि षत्वं सुपरिहरम् । न चैवमपि परमश्चासौ दण्डी च परमदण्डी, स प्रियो यस्य स परमदण्डिप्रिय इत्यत्र अवान्तरतत्पुरुषस्य उत्तरखण्डे नलोपानुपपत्तिः, 'उत्तरपदत्वे च-' इति प्रत्ययलक्षणप्रतिषेधेन तस्य पदत्वाभावादिति वाच्यम्, मध्यपदत्वानाक्रान्तस्यैव उत्तरखण्डस्य विवक्षितत्वादित्यास्तां तावत् । इति वान्ताः ॥

अथ रेफान्ता निरूप्यन्ते । वारिति । वार्शब्दो रेफान्तो नपुंसकलिङ्गः 'आपः स्त्री भूम्नि वार् वारि' इत्यमरः । वार्शब्दात् स्वमोर्लुक्, रेफस्य विसर्ग इति भावः । चत्वारीति । चतुर्शब्दो नित्यं बहुवचनान्तः, तस्य जश्शसोः शिः, सर्वनामस्थानत्वात् 'चतुरनडुहोः-' इति प्रकृतेः आम् । स च मित्त्वादन्त्यादचः परः, उकारस्य यण्, अझलन्तत्वान्न नुम् इति भावः ॥ इति रेफान्ताः ॥

---

एतेन सुधियौ सुधिय इत्यत्रान्तर्वर्तिसुपा पदत्वात्पक्षे शाकलप्रसङ्ग इत्याशङ्का परास्ता । उक्तरीत्या प्रत्ययलक्षणनिषेधात् । उत्तरपदत्वे किम्, राजपुरुष इत्यादौ नलोपो न स्यात् । पश्यति दधीत्यादावपि दधिशब्दस्य पदत्वे प्रत्ययलक्षणं भवत्येव । अन्यं-पदस्य समासावयवे रूढत्वात् । दधिसेचाविति । सिञ्चत इति सेचौ 'अन्येभ्यो-

---

१ अत उत्तरम 'प्रत्ययलक्षणप्रतिषेधाभावेन' इत्यधिकः पाठः । क ।

(सू २६३) इति कादेशो न। किम्, के, कानि। इदम्, इमे, इमानि। 'अन्वादेशे नपुंसके एनद्वक्तव्यः' (वा १५६९)। एनत्, एने, एनानि। एनेन। एनयोः। एनयोः॥ इति मान्ताः॥ ब्रह्म, ब्रह्मणी, ब्रह्माणि। 'सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः'। हे ब्रह्मन्, हे ब्रह्म। 'रोऽसुपि' (सू १७२)। अहर्भाति। 'विभाषा

---

अथ मकारान्ता निरूप्यन्ते। किम्शब्दात् स्वमोर्लुकि प्रत्ययलक्षणमाश्रित्य विभक्तिपरकत्वात् कादेशमाशङ्क्य आह—न लुमतेति। सोरमश्चान्यत्र कादेशो नपुंसकवद्रूपाणीत्याह—के, कानीति। इदमिति। स्वमोर्लुकि रूपम्। 'इदमो मः' 'दश्च' इत्यादिविधयो न भवन्ति, 'न लुमता–' इति निषेधादिति भावः। इमे इति। औङि अत्वम्, पररूपम्, 'दश्च' इति दस्य मः, 'नपुंसकाच्च' इति शीभावः, इति भावः। इमानीति। जश्शसोश्शिः, अत्वम्, पररूपम्, 'दश्च' इति मः, 'नपुंसकस्य झलचः' इति नुम्, 'सर्वनामस्थाने च–' इति दीर्घ इति भावः। अन्वादेशे नपुंसके एनद्वक्तव्य इति। 'इदमेतदोः' इति शेषः। इदं च अम्येव भवति। तथा च भाष्ये 'एनदिति नपुंसकैकवचने वक्तव्यम्' इति पठित्वा 'कुण्डमानय प्रक्षालयैनत्' इत्युदाहृतम्। औट्शसोः टायाम् ओसि च 'द्वितीयाटौस्स्वेनः' इत्येनादेश एव इति मत्वा आह—एने इत्यादि। वस्तुतस्तु 'द्वितीयाटौस्स्वेनत्' इत्येव सूत्र्यताम्। नपुंसके अमो लुकि एनदिति सिध्यति। एनम्, एनौ, एनान्। एनेन, एनयोः–इति तु त्यदाद्यत्वेन सिद्धमिति भाष्ये स्थितम्। परमार्थतस्तु नपुंसकैकवचने अमि एनदादेशः। एनम्, एनौ इत्याद्यर्थं 'द्वितीयाटौस्स्वेनः' इत्यत्र एनादेशो विधातव्यः। येन नाप्राप्तिन्यायेन एनदादेशस्य त्यदाद्यत्वापवादत्वेन त्यदाद्यत्वासंभवादिति शब्देन्दुशेखरे स्थितं भाष्यप्रदीपोद्योते प्रपञ्चितं च॥ इति मान्ताः॥

अथ नकारान्ता निरूप्यन्ते। ब्रह्मेति। वेदादौ वाच्ये ब्रह्मन्शब्दो नपुंसकलिङ्गः। 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः।' इत्यमरः। स्वमोर्लुकि नलोप इति भावः। ब्रह्मणी इति। औङः शी, 'अटकुप्वाङ्–' इति णत्वम्। 'विभाषा ङिश्योः' इत्यल्लोपस्तु न, 'न संयोगाद्वमन्तात्' इति निषेधादिति भावः। ब्रह्माणीति।

---

दृश्यन्ते' इति क्विप्। दध्नः सेचाविति षष्ठीसमासः। उपपदसमासे तु प्राक् सुबुत्पत्तेः समासविधानात् सेच्शब्दस्य पदसंज्ञा नास्तीति पदादित्वं सकारस्य न स्यात्। नन्वेवमुपपदसमासे षत्वं दुर्वारमिति चेत्। अत्राह कैयटः—अनभिधानात्सोपपदाद्विजभावः, दधिसेचाविनि प्रयोगाभावात्' इति। वस्तुतस्तु पदस्यादिः पदादिरिति पक्षे उपपदसमासेऽपि षत्वं सुपरिहरम्। अन्वादेश इति। अम्येवेदं विधीयते, नत्वौट्शसादिषु, फलाभावात्। 'स्वमोर्नपुंसकात्' इत्यमो लुका लुप्तत्वेऽपि प्रत्ययलक्षणमिह प्रवर्तते, वचनसामर्थ्यादित्याहुः। वस्तुतस्तु 'द्वितीयाटौःसु–' इति सूत्र एव एनद्वक्तव्यः। एनम्। एनौ। एनानित्यादि तु त्यदाद्यत्वेन सिद्धम्। क्लीबे अमि लुका लुप्तत्वेऽपि तकारोच्चारणसामर्थ्यादेनदादेशः। न चैवमेतच्छ्रितमित्यत्राप्येनदादेशापत्तिः। द्वितीयाश्रिता–' इति समासे कृते सुपो लुकि द्वितीयादिविभक्तिपरत्वाभावात्। न च तकारोच्चारणसामर्थ्यादेनदादेशो इत्युक्तमिति वाच्यम्। एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि

ङिश्योः' (सू २३७)। अह्नी, अहनी, अहानि। ४४३ अहन्। (८-२-६८)
'अहन्' इत्यस्य रुः स्यात्पदान्ते। अहोभ्याम्, अहोभिः। इह 'अहः' 'अहोभ्याम्'
इत्यादौ रत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते 'अहन्' इत्यावर्त्य एकेन नलोपाभावं
निपात्य द्वितीयेन रुर्विधेयः। तदन्तस्यापि रत्वरुत्वे, दीर्घाण्यहानि यस्मिन् स
दीर्घाहा निदाघः, इह हल्ङ्यादिलोपे प्रत्ययलक्षणेन 'असुपि' इति निषेधात्...

---

जश्शसोः शिः, तस्य सर्वनामस्थानत्वाद् नान्तलक्षणो दीर्घः। हे ब्रह्मन्निति। 'न ङिसम्बुद्ध्योः'... नपुंसकानाम्–' इति नलोपविकल्प इति भावः। अथ अहन्शब्दात् स्वमोर्लुकि 'अहन्' इति रुत्वे प्राप्ते आह—रोऽसुपीति। लुका लुप्तत्वेन प्रत्ययलक्षणाभावादिति भावः। अहर्भातीति। अत्र रुत्वे तु 'हशि च' इत्युत्वे गुणे अहो भातीति स्यात्। रेफादेशे तस्य उत्वं न, रोरित्युकारानुबन्धग्रहणादिति भावः। अहानीति। जश्शसोः शिः, सर्वनामस्थानत्वाद् उपधादीर्घः। अल्लोपस्तु न, सर्वनामस्थानत्वादिति भावः। टादावचि अल्लोपः–अह्ना, अह्ने इत्यादि। भ्यामादौ हलि विशेषमाह—अहन्। 'ससजुषो रुः' इत्यतो रुरित्यनुवर्तते, 'स्कोः संयोगाद्योः–' इत्यतः अन्त इति च, पदस्येत्यधिकृतम्। 'अहन्' इति लुप्तषष्ठीकम्। तदाह—अहन्नित्यस्येत्यादिना। अहोभ्यामिति। नकारस्य रुत्वे, 'हशि च' इत्युत्वे, गुण इति भावः। ननु अहः, अहोभ्यामित्यत्र रत्वरुत्वयोरसिद्धत्वाद् न लोपः स्यात्। न च रत्वरुत्वे नलोपापवादाविति वाच्यम्, 'न ङिसम्बुद्ध्योः' इति नलोपनिषेधस्थले हे अहरित्यत्र, दीर्घाणि अहानि यस्मिन् स दीर्घाहाः, हे दीर्घाहो निदाघ इत्यत्र च नलोपे असत्यपि रत्वरुत्वयोरारम्भाद् इत्याशङ्कां निराकरोति—इहेति। एकेनेति। आवृत्तयोः प्रथमेन 'अहन्' इति सूत्रेण 'पदान्ते अहन्नित्येव स्यात्, न तु नलोप' इत्यर्थकेनेत्यर्थः। द्वितीयेनेति। 'अहन्नित्यस्य रुः स्यात् पदान्ते' इत्यर्थकेनेत्यर्थः। एवं च 'अह्नो नलोपप्रतिषेधः' इति वार्तिकं न कर्तव्यमिति भावः। तदन्तस्यापीति। अहन्शब्दान्तस्यापि रत्वरुत्वे भवतः, पदाधिकारस्थत्वादिति भावः। 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति निषेधस्तु प्रत्ययविधिमात्रविषय इति 'असमासे निष्कादिभ्यः' इति सूत्रे भाष्यकैयटयोः स्पष्टम्। तदन्ते रुत्वप्रवृत्तिं दर्शयति—दीर्घाहा निदाघ इति दीर्घाहन्शब्दात् पुंलिङ्गात् सौ परत्वादुपधादीर्घे कृते हल्ङ्यादिना सुलोपः। 'अहन्' इति रुत्वे, 'भोभगो–' इति पूर्वत्वाद्यत्वे 'हलि सर्वेषाम्' इति यलोपे रूपमिति भावः। ननु सुलोपे कृते 'रोऽसुपि' इति रत्वे तस्य यत्वं न भवति, यत्वविधौ 'रोः' इत्युकारानुबन्धग्रहणात्। तथा च दीर्घाहार्निदाघ इत्येव युक्तमित्यत आह—इह हल्ङ्यादीत्यादि। ननु नान्तलक्षणस्य दीर्घस्य परत्वेऽपि अकृतव्यूहपरिभाषया हल्ङ्यादिलोपात् प्राक् प्रवृत्तिर्न सम्भवति...

---

चरितार्थत्वेन बहिरङ्गे सामासिके लुकि तदप्रवृत्तेरिति मनोरमायां स्थितम्। ब्रह्मणी इति। इह 'विभाषा ङिश्योः' इत्यल्लोपो न, 'न संयोगाद्वमन्तात्' इति निषेधात्। रोऽसुपि। अहर्भातीति। 'अहन्' इति रुत्वे कृते तु 'हशि च' इत्युत्वप्रवृत्तौ अहो भातीति स्यादिति भावः। नलोपाभावं निपात्येति। 'अहन्' इत्यत्र वर्णान्तरं प्रश्लिष्य नान्तस्य अहन्शब्दस्य रुरिति व्याख्यायामपि रुत्वरत्वयोर्नकार...

...ति रुः, तस्याद्धित्वान्नान्तलक्षण उपधादीर्घः । सम्बुद्धौ तु हे दीर्घाहो निदाघ, दीर्घाहानौ, दीर्घाहानः । दीर्घाह्ना, दीर्घाहोभ्याम् । दण्डि, दण्डिनी, दण्डीनि । स्रग्वि, स्रग्विणी, स्रग्वीणि । वाग्मि, वाग्मिनी, वाग्मीनि । बहुवृत्रह, बहुवृत्रघ्नी, बहुवृत्रहणी, बहुवृत्रहाणि । बहुपूष, बहुपूष्णी, बहुपूषणी, बहुपूषाणि । बह्वर्यम, बह्वर्यम्णी, बह्वर्यमणी, बह्वर्यमाणि ॥ इति नान्ताः ॥ असृजः पदान्ते ...त्वम्, सृजः क्विनो विधानात् । विश्वसृडादौ तु न । 'सृजिदृशोः–' (सू २४०५)

...त्र नकारस्य विनाशोन्मुखत्वादित्यत आह—तस्यासिद्धत्वादिति । प्रवृत्तस्य ...तस्यासिद्धत्वान्नान्तलक्षणो दीर्घो निर्बाध इति भावः । वस्तुतस्तु अकृतव्यूहपरिभाषाया ...त्वादिह हल्ङ्यादिलोपात् पूर्वमेव परत्वादुपधादीर्घ इत्येवोचितमित्यलम् । सम्बुद्धौ ...ति । सोरत्र हल्ङ्यादिलोपात् प्रत्ययलक्षणमाश्रित्य 'असम्बुद्धौ' इति प्रवृत्तेः उपधा-...र्घाभावे रुत्वे, 'हशि च' इत्युत्वे, आद् गुणे, हे दीर्घाहो निदाघ इति रूपमित्यर्थः । ...त्र 'रोऽसुपि' इति रत्वविधेस्तदन्तेऽपि प्रवृत्तौ फलं तु नपुंसके दीर्घाह्निदाघजाल-...त्यादि बोध्यम् ।

दण्डीति । दण्डोऽस्यास्तीत्यर्थे 'अत इनिठनौ' इति इनिः, दण्डिन्शब्दात् स्वमोर्लुक्, नस्य लोप इति भावः । दण्डिनी इति । औङश्शी । असर्वनामस्थान-...त्वाद् 'इन्हन्' इति नियमाच्च न दीर्घ इति भावः । दण्डीनीति । 'जश्शसोः शिः' 'इन्हन्–' इति दीर्घ इति भावः । स्रग्वीति । 'अस्मायामेधास्रजो विनिः' इति ...शब्दाद् मत्वर्थीयो विनिः । स्रज् इत्यस्य अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाद् ...त्र कुत्वम्, स्रग्विन्शब्दात् सुबुत्पत्तिः । दण्डिवद्रूपाणि । अत्र इनः अनर्थकत्वेऽपि 'इन्हन्–' इत्यत्र ग्रहणं भवत्येव, 'अनिनस्मन्–' इति वचनादिति बोध्यम् । वाग्मीति । 'वाचो ग्मिनिः' इति ग्मिनिः । तद्धितत्वान्न गकार इत्, चकारस्य जश्त्वम्, कुत्वम्, वाग्मिन्शब्दात् सुबुत्पत्तिः, स्रग्विवद्रूपाणि । बहवो वृत्रहणो यस्मिन् मन्वन्तरे इति बहुव्रीहौ बहुवृत्रहन्शब्दात् स्वमोर्लुकि, नलोपे, बहुवृत्रहेति रूपम् । औङः श्याम्, अल्लोपे, 'हो हन्तेः–' इति कुत्वे, वृत्रघ्नी इति रूपम् । 'अत्पूर्वस्य' इति नियमान्न ...त्वम् । एतावत्सिद्धवत्कृत्य जश्शसोराह—बहुवृत्रहाणीति । शेः सर्वनामस्थानत्वेन ...स्मिन् परे अल्लोपाभावाद् 'इन्हन्–' इत्युपधादीर्घ 'एकाजुत्तरपदे णः' इति णत्वमिति भावः । बहुपूषाणीति । बहवः पूषणो यस्मिन्निति बहुव्रीहिः । बहुपूष, बहुपूष्णी ...भ्याम्–' इति णत्वम् । जश्शसोस्तु शिः, शौ दीर्घः, 'अट्कुप्वाङ्–' इति णत्वम् । ...र्यमाणीति । बहवः अर्यमणो यस्मिन्निति बहुव्रीहिः, बहुपूषवद्रूपाणि ॥ इति नान्ताः ॥

अथ जकारान्ता निरूप्यन्ते । शरीरं यदा उत्पद्यते तदैव येन[1] सृज्यते, ...न्तादिवन्मध्ये इत्यर्थे सृज्धातोः नञ्पूर्वात्सम्पदादित्वात् क्विप्, उपपदसमासे 'नलोपो

...विकल्पं सेत्स्यतीति बोध्यम् । तदन्तस्यापीति । पदाधिकारस्थत्वादिति भावः । ...न चात्र प्रत्ययलक्षणन्यायेन अन्तर्वर्तिनीं विभक्तिमाश्रित्य समासैकदेशस्याप्यहन्शब्दस्य ...पदत्वाद्रुत्वं स्यादेव, किमनेन तदन्तविध्याश्रयणेनेति शङ्क्यम्, 'उत्तरपदत्वे चापदया

१ 'येन' इति नास्ति । क ।

इति सूत्रे 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात् । यद्वा 'व्रश्च–' (सू २९४) इति सूत्रे नृजियज्योः पदान्ते षत्वं कुत्वापवादः । स्रगृत्विक्छन्दयोस्तु निपातनादेव कुत्वम् । असृक्छब्दस्तु अस्यतेरौणादिके ऋज्प्रत्यये बोध्यः । असृक्, ...

नत्रः' इति नकारलोपे असृज्शब्दो रक्तपर्यायो नपुंसकलिङ्गः । रुधिरासृग्लोहितास्रक्तक्षतजशोणितम्' इत्यमरः । तस्य स्वमोर्लुकि विशेषमाह—असृज इति कुत्वमिमि । 'क्विन्प्रत्ययस्य–' इति कुत्वस्यासिद्धत्वात् 'चोः कुः' इति प्राप्तं कुत्वं बाधित्वा तदपवादे व्रश्चादिषत्वे कृते, तस्य 'क्विन्प्रत्ययस्य' इति कुत्वेन खकारः, ... श्वासविवारमहाप्राणत्वसाम्यादित्यर्थः । न च षत्वस्य निरवकाशत्वं शङ्क्यम् ... मित्यादौ अपदान्ते 'क्विन्प्रत्ययस्य कुः' इति कुत्वाभावस्थले षत्वस्य चारितार्थ्यात् । ननु क्विन्नन्तत्वाभावादिह 'क्विन्प्रत्ययस्य–' इति कुत्वं कुत इत्यत आह—सृजेः ... विधानादिति । ऋत्विगादिसूत्रेणइति शेषः । तथा च क्विन् प्रत्ययो यस्मात् ... अतद्गुणबहुव्रीह्याश्रयणादिहापि कुत्वं निर्बाधमिति भावः । भाष्यप्रयोगादिति ... न च रज्जुसृड्भ्याम् इति भाष्यप्रयोगाद् विश्वसृडादौ कथं कुत्वाभाव इति वाच्यम् ... ज्ञापकस्य सामान्यापेक्षत्वात् । न चैवं सति असृज्शब्देऽपि कुत्वं न स्यादिति वाच्यम् ... अनव्ययपूर्वपदस्यैव सृजेर्भाष्यप्रयोगतः कुत्वाभावबोधनादिति भावः । ननु उदाहृत ... भाष्यप्रयोगाद् विश्वसृड्रज्जुसृडादौ षत्वसिद्धावपि देवान् यजतीति देवेड् इत्यादौ ... कुः' इति कुत्वस्यासिद्धत्वाद् व्रश्चादिना षत्वे, तस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वं दुर्वार ... मित्यस्वरसादाह—यद्वेति । षत्वं कुत्वापवाद इति । यद्यपि सृष्टमित्यादौ अपदान्ते षत्वं सावकाशम्, तथापि यजिसृज्योः पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्य विधानात् ... त्वान्निरवकाशत्वाच्च पदान्तविषये षत्वं कुत्वापवादः । तथा च विश्वसृडादौ देवेडादौ ... षत्वं निर्बाधम् । अत एव 'सृजिदृशोः–' इति सूत्रे रज्जुसृड्भ्यामिति कार्यनिर्वाह ... उपपद्ल्स्यतीति च भाष्यप्रयोगः संगच्छत इति भावः । नन्वेवं सति स्रगृत्विक्छब्दयो रपि 'क्विन्प्रत्ययस्य–' इति कुत्वं बाधित्वा व्रश्चादिना षत्वं स्यादित्यत आह—स्रगृत्वि क्छब्दयोरिति । ऋत्विगादिसूत्रे ऋत्विक् स्रक् इति निपातनादेव कुत्वमित्यर्थः । न च स्रष्टा यष्टा इत्यादौ अपदान्ते निपातनात् कुत्वापत्तिरिति वाच्यम्, निपातनेन हि ... अपवादभूतषत्वस्य अप्रवृत्तिमात्रं बोध्यते । कुत्वं तु स्वशास्त्रेणैव यथायथं भवतीति न दोषः । ननु तर्ह्यसृक्छब्देऽपि कुत्वापवादःषत्वं स्यात्, ऋत्विगादिसूत्रे स्रक्छब्द ...

दिविधौ–' इति प्रतिषेधेन प्रत्ययलक्षणाप्रवृत्तेः सृजिदृशोरिति सूत्र इति । ... च्चोपलक्षणम् । 'मृजेर्वृद्धिः' इति सूत्रेऽपि तत्प्रयोगात् रज्जुसृड्भ्यामिति ... ननु भ्यांप्रत्ययो झलादिरकिद् भवतीति 'सृजिदृशोः–' इत्यमागमः स्यात् । ... धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । न चैवमपि 'अनुदात्तस्य चर्दुपधस्य–' इति वैकल्पिकः प्राप्नोति, तद्विधौ धातोः स्वरूपेणानुपादानादिति शङ्क्यम्, धातोर्विधीय मानं कार्यं तत्प्रत्यय एवेति परिष्कारात् । एवं च प्रसृड्भ्याम्, प्रसृड्भिरित्यादौ न दोषः प्रसज्यते । एतच्च 'मृजेर्वृद्धिः' इति सूत्रे भाष्ये स्पष्टम् । ननु धातोर्विधीयमानं कार्यं तत्प्रत्यय एवेति चेद् धियौ धियः, भुवौ भुव इत्यादावियङुवङौ न स्याताम् ...

१६०३ किसरादिभ्यः ष्ठन् । (४-४-५३) किसरं पण्यमस्य किसरिकः । षित्वान्ङीष् । किसरिकी । किसर, उशीर, नलद इत्यादिकिसरादयः सर्वे सुगन्धिद्रव्यविशेषवाचिनः । १६०४ शलालुनोऽन्यतरस्याम् । (४—४—५४) ष्ठन् स्यात्, पक्षे ठक् । शलालुकः, शलालुकी । शालालुकः, शालालुकी । शलालुः सुगन्धिद्रव्यविशेषः । १६०५ शिल्पम् । (४-४-५५) मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । १६०६ मड्डुकझर्झरादणन्यतरस्याम् (४-४-५६) मड्डुकवादनं शिल्पमस्य माड्डुकः, माड्डुकिकः । झार्झरः, झार्झरिकः । १६०७ प्रहरणम् । (४-४-५७) 'तदस्य' इत्येव । असिः प्रहरणमस्य आसिकः । धानुष्कः । १६०८ परश्वधाट्ठञ्च । (४-४-५८) पारश्वधिकः । १६०९ शक्तियष्ट्योरीकक् (४-४-५९) शाक्तीकः । याष्टीकः । १६१० अस्ति नास्ति दिष्टं मतिः । (४-४-६०) 'तदस्य' इत्येव । अस्ति

---

लावणिक इति । लवणमस्य पण्यमित्यर्थः । किसरादिभ्यः ष्ठन् । 'तदस्य पण्यम्' इत्येव । ष्ठन्निति च्छेदः, तदाह— षित्वान्ङीषिति । शलालुनोऽन्यतरस्याम् । ष्ठन्निति शेषः । 'तदस्य पण्यम्' इत्येव । शलालुक इति । शलालुः पण्यमस्येति विग्रहः । उकः परत्वाट्ठस्य कः । षित्वस्य फलमाह—शलालुकीति । शिल्पम् । तदस्य शिल्पमित्यर्थे प्रथमान्तात् ठगित्यर्थः । क्रियासु कौशलं शिल्पम् । ननु मार्दङ्गिक इत्युदाहरणं वक्ष्यति, तत्र मृदङ्गं शिल्पमिति कथं विग्रहः, मृदङ्गस्य शिल्पत्वासंभवात्, तत्राह—मृदङ्गवादनमिति । मृदङ्गवादनविषयकमित्यर्थः । मृदङ्गशब्दो लक्षणया मृदङ्गवादनविषयक इति भावः । मड्डुकझर्झरात् । 'तदस्य शिल्पम्' इत्येव । पक्षे ठक् । मड्डुकझर्झरौ वाद्यविशेषौ । प्रहरणम् 'तदस्य' इत्येव । प्रहरणवाचिनः प्रथमान्तात्तदस्येत्यर्थे ठगित्यर्थः । प्रह्रियतेऽनेनेति प्रहरणम्, आयुधम् । धानुष्क इति । धनुः प्रहरणमस्येति विग्रहः । उसन्तात्परत्वाट्ठस्य कः । 'इणः षः' इति षः । परश्वधाट्ठञ् च । 'तदस्य प्रहरणम्' इत्येव । चात् ठक् । 'परशुश्च परश्वधः' इत्यमरः । शक्तियष्ट्योरीकक् । शक्तियष्टिशब्दाभ्यां प्रथमान्ताभ्यां प्रहरणवाचिभ्यामस्येत्यर्थे ईकक् स्यादित्यर्थः । अस्ति नास्ति । तदस्येत्येवेति । अस्तीति मतिरस्यास्ति, नास्तीति मतिरस्यास्ति, दिष्टमिति मतिरस्यास्तीत्यर्थेषु क्रमेण अस्तीत्यस्माद् नास्तीत्यस्माद् दिष्टमित्यस्माच्च प्रथमान्ताट्ठगित्यर्थः । अस्तिनास्तिशब्दौ निपातौ । यद्वा वचना-

---

धर्मादनपेतं धर्म्यम् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत् । अवक्रयः । अवक्रीयते अनेनेति करणे 'एरच्' । पण्यमिति । पणितव्येऽर्थे 'अवद्यपण्य—' इति यदन्तो निपातितः । शलालुक इति । 'इसुसुक्तान्तात्कः' । ठक्पक्षे त्वादिवृद्धिः । शालालुकः । मार्दङ्गिक इति । मृदङ्गशब्देन मृदङ्गवादनं लक्ष्यते । मुख्यार्थे तु प्रयोगो न भवति, अनभिधानादिति भावः । शिल्पं कौशलम् । तच्च मृदङ्गवादनविषयकम्, तेन मृदङ्गवादनविषयके मृदङ्गशब्दस्य लक्षणेति निष्कर्षः । प्रहरणम् । प्रह्रियते अनेनेति प्रहरणमायुधम् । धानुष्क इति । 'इसुसुक्तान्तात्कः' 'इणः षः' इति

परलोक इत्येवं मतिर्यस्य स आस्तिकः। नास्तीति मतिर्यस्य स नास्तिकः। दिष्टमिति मतिर्यस्य स दैष्टिकः। १६११ शीलम् (४-४-६१) अपूपभक्षणं शीलमस्य आपूपिकः। १६१२ छत्रादिभ्यो णः। (४-४-६२) गुरोर्दोषाणामावरणं छत्रम्, तच्छीलमस्य छात्रः। १६१३ कार्मस्ताच्छील्ये। (६—४—१७२) कार्म इति ताच्छील्ये णे टिलोपो निपात्यते। कर्मशीलः कार्मः। 'नस्तद्धिते' (सू ६७९) इत्येव सिद्धे 'अण्कार्यं ताच्छीलिके णेऽपि'। तेन चौरी, तापसी इत्यादि सिद्धम्। ताच्छील्ये किम्—कार्मणः। १६१४ कर्माध्ययने वृत्तम्। (४—४—६३) प्रथमान्तात्षष्ठचर्थे ठक्स्यादध्ययने वृत्त

देव अख्यातात्प्रत्ययः। 'दैवं दिष्टम्—' इत्यमरः। शीलम्। अस्येत्यर्थे शीलवाचिनः प्रथमान्ताट्ठगित्यर्थः। शीलं स्वभावः। अपूपभक्षणमिति। अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः। छत्रादिभ्यो णः। एभ्यः प्रथमान्तेभ्यः अस्य शीलमित्यर्थे णप्रत्ययः स्यादित्यर्थः। छत्रं शीलमस्य छात्रः इत्युदाहरणं वक्ष्यति। तत्र छत्रस्य शीलत्वानुपपत्तेः छत्रपदं गुरुदोषावरणे गौण-मित्याह—गुरोरिति। शीलमित्यर्थे छत्रादित्वाद् णप्रत्यये कृते। कार्मस्ताच्छील्ये। तत् शीलं यस्य स तच्छीलः, तस्य भावः ताच्छील्यम्। तस्मिन्वाच्ये कार्म इति भवतीत्यर्थः। णप्रत्यये परे टिलोपः स्यादिति यावत्, तदाह—टिलोप निपात्यत इति। णेऽपीत्यनन्तरम् इति ज्ञापनार्थमिदमिति शेषः। अत्र टिलोपविधिर्हि 'अन्' इति प्रकृतिभावनिवृत्त्यर्थः। ततश्च अणि विहितस्य प्रकृतिभावस्य णप्रत्यये परतः प्रतिषेधादण्कार्यकारित्वं णप्रत्ययस्य ज्ञाप्यत इति भावः। तेनेति। चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे चुरातपःशब्दाभ्यां छत्रादित्वाण्णप्रत्यये सति तदन्ताभ्यामणन्तकार्ये ङीपि चौरी तापसीति सिद्ध-मित्यर्थः। कार्मण इति। 'तस्येदम्' इत्यणि 'कार्मस्ताच्छील्ये' इत्यस्याप्रवृत्तेः 'अन्' इति प्रकृतिभावान्न टिलोप इति भावः। कर्माध्ययने वृत्तम्। 'तदस्य पण्यम्' इत्यतः 'तदस्य' इत्यनुवर्तते। 'तदस्य कर्माध्ययने वृत्तम्' इत्यर्थनिर्देशः। तत्र तदित्यनेन विशेष्येण कर्म वृत्तमित्यन्वेति। कर्मशब्दः क्रियापरः। वृत्तमित्यस्य जातमित्यर्थः। वृत्तं कर्म प्रति विशेष्यसमर्पकं तदिति प्रथमोच्चारित

विसर्गस्य षः। परश्वधाट्ठञ्। चाट्ठक्। 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः'। परलोक इति। एतच्चाभिधानशक्तिस्वाभाव्याल्लभ्यते। आस्तिक इति। अस्ति-नास्तिशब्दौ निपातौ। यद्वा वचनसामर्थ्यादस्तीत्याख्यातात् नास्तीति निपातात्-समुदायाच्च प्रत्ययः। दिष्टमिति। 'दैवं दिष्टं भागधेयम्' इत्यमरः। 'नाल्पदैष्टिकताम्' इति माघः। 'प्रमाणानुगा मतिर्दिष्टा' इति प्राचोक्तिस्तूपेक्ष्या। दिष्टशब्दस्य स्त्रीत्वे प्रमाणानुगमात्स्त्रीवाचकत्वे चोक्तकोशविरोधादिति दिक्। छत्रादिभ्यो णः। 'छत्रादिभ्योऽण्' इत्येव सुवचमिति 'कार्मस्ताच्छील्ये' इति सूत्रे कैयटः। ताच्छील्ये ण इति। कर्मन्शब्दस्य छत्रादित्वादिति भावः। चौरीत्यादि। चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे णप्रत्यये सति तदन्ताद्ङीप् सिद्ध्यतीत्यर्थः। कार्माध्ययने

या क्रिया सा चेत्प्रथमान्तस्यार्थः । एकमन्यद् वृत्तमस्य ऐकान्यिकः । यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातम्, सः । १६१५ बह्वच्पूर्वपदाट्ठच्[1] । (४—४—६४) प्राग्विषये । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । द्वादशापपाठा अस्य जाता इत्यर्थः । १६१६ हितं भक्षाः । (४—४—६५) अपूपभक्षणं हितमस्मै आपूपिकः । १६१७ तदस्मै दीयते नियतम् । (४—४—६६) अग्रभोजनं नियतं दीयते अस्मै आग्रभोजनिकः । १६१८ श्राणामांसौदनाट्टिठन् । (४—४—६७) श्राणा नियतं दीयतेऽस्मै श्राणिकः, श्राणिकी । मांसौदनग्रहणं सङ्घातविगृहीतार्थम् । मांसौ-

---

तदस्य अस्य अध्ययनविषये तत्कर्म वृत्तमित्यर्थे तच्छब्दगम्यविशेष्यवाचकात् प्रथमान्ताट्ठक् स्यादित्यर्थः । तदाह—प्रथमान्तादिति । वृत्तं कर्म प्रति विशेष्यसमर्पकादिति शेषः । अध्ययने वृत्तेति । विषयसप्तम्येषा । या क्रियेति । अनेन कर्मशब्दः क्रियापर इति सूचितम् । प्रथमान्तस्यार्थ इति । अनेन कर्म वृत्तमित्येतत् तदित्यस्य प्रथमान्तस्य विशेषणमिति सूचितम् । तदित्यननुवृत्तौ कर्मशब्दस्यैव सूत्रे प्रथमानिर्दिष्टत्वात् तत एव प्रत्ययः स्यात्, नतु तद्विशेष्यवाचकात्, तस्य प्रथमानिर्दिष्टत्वाभावादित्यभिप्रेत्योदाहरति—एकमन्यद्वृत्तमस्य ऐकान्यिक इति । 'तद्धितार्थ—' इति समासे एकान्यशब्दाट्ठगिति भावः । द्वैयन्यिकः, त्रैयन्यिकः । ऐजागमो विशेषः । बह्वच्पूर्वपदाट्ठक् । 'तदस्य कर्माध्ययने वृत्तम्' इत्यनुवर्तते । तदाह—प्राग्विषय इति । द्वादशान्यिक इति । 'तद्धितार्थ—' इति समासः । एवं त्रयोदशान्यिकः । चित्त्वान्नादिवृद्धिः । हितं भक्षाः । 'तदस्य' इत्यनुवृत्तम् । तत्र षष्ठी चतुर्थ्या विपरिणम्यते, हितयोगात् । तद् अस्मै हितमित्यर्थे प्रथमान्ताट्ठक् स्याद् हितं भक्षाश्चेत् ते स्युरित्यर्थः । संस्कृतं भक्षाः इतिवद्व्याख्येयम् । अपूपभक्षणमिति । अनेन अपूपशब्दः अपूपभक्षणे लाक्षणिक इति सूचितम् । अपूपो हितमित्यर्थे तु न ठक्, अभिधानस्वाभाव्यादिति भावः । तदस्मै दीयते नियतम् । अस्मिन्नर्थे प्रथमान्ताट्ठगित्यर्थः । नियुक्तमिति पाठान्तरम्, नियतमित्यर्थः । श्राणामांस । तदस्मै दीयते नियतमित्येव । श्राणा यवागूः । 'यवागूरुष्णिका श्राणा विलेपी

---

'तदस्य' इत्यनुवर्तते, ठगिहाधिक्रियत एव तदाह—प्रथमान्तादित्यादि । ऐकान्यिक इति । एकमन्यदिति विगृह्य 'तद्धितार्थ—' इति समासः, ततष्ठक् । एवं द्वैयन्यिकः, त्रैयन्यिक इत्युदाहार्यम् । इह तु वृद्धिं बाधित्वा 'न य्वाभ्याम्—' इत्यैच् । हितं भक्षाः । 'अस्य' इति प्रकृतमपीह हितयोगाच्चतुर्थ्या विपरिणम्यते, 'तदस्मै—' इत्यस्यापकर्षो वेत्याशयेनाह—अपूपभक्षणं हितमस्मा इति । अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः । श्राणा । 'यवागूरुष्णिका श्राणा विलेपी तरला

---

१ इह 'ठच्' इति पाठो बालमनोरमासंमतः । काशिकायामपि तथैवोपलभ्यते । कौमुदीपुस्तकान्तरेषु तु 'ठञ्' इति पाठ उपलभ्यते, मुद्रितेष्वष्टाध्यायीपुस्तकेष्वपि प्रायेण 'ठञ्' इत्येवोपलभ्यते ।

परलोक इत्येवं मतिर्यस्य स आस्तिकः। नास्तीति मतिर्यस्य स नास्तिकः। दिष्टमिति मतिर्यस्य स दैष्टिकः। १६११ शीलम् (४-४-६१) अपूप-भक्षणं शीलमस्य आपूपिकः। १६१२ छत्रादिभ्यो णः। (४-४-६२) गुरोर्दोषाणामावरणं छत्रम्, तच्छीलमस्य छात्रः। १६१३ कार्मस्ताच्छील्ये। (६—४—१७२) कार्म इति ताच्छील्ये णे टिलोपो निपात्यते। कर्मशीलः कार्मः। 'नस्तद्धिते' (सू ६७९) इत्येव सिद्धे 'अण्कार्यं ताच्छीलिके णेऽपि'। तेन चौरी, तापसी इत्यादि सिद्धम्। ताच्छील्ये किम्—कार्मणः। १६१४ कर्माध्ययने वृत्तम्। (४—४—६३) प्रथमान्तात्षष्ठ्यर्थे ठक्स्यादध्ययने वृत्त-

---

देव अख्यातात्प्रत्ययः। 'दैवं दिष्टम्–' इत्यमरः। शीलम्। अस्येत्यर्थे शीलवा-चिनः प्रथमान्ताट्ठगित्यर्थः। शीलं स्वभावः। अपूपभक्षणमिति। अपूपश-स्तद्भक्षणे लाक्षणिक इति भावः। छत्रादिभ्यो णः। एभ्यः प्रथमान्ते-भ्यः अस्य शीलमित्यर्थे णप्रत्ययः स्यादित्यर्थः। छत्रं शीलमस्य छात्र इत्युदाहरणं वक्ष्यति। तत्र छत्रस्य शीलत्वानुपपत्तेः छत्रपदं गुरुदोषावरणे ल-मित्याह—गुरोरिति। शीलमित्यर्थे छत्रादित्वाद् णप्रत्यये कृते। कार्मस्ता-च्छील्ये। तत् शीलं यस्य स तच्छीलः, तस्य भावः ताच्छील्यम्। तस्मिन्वाच्ये कार्म इति भवतीत्यर्थः। णप्रत्यये परे टिलोपः स्यादिति यावत, तदाह—टिलो-निपात्यत इति। णेऽपीत्यनन्तरम् इति ज्ञापनार्थमिदमिति शेषः। अ-टिलोपविधिर्हि 'अन्' इति प्रकृतिभावनिवृत्त्यर्थः। ततश्च अणि विहितस्य प्रकृ-भावस्य णप्रत्यये परतः प्रतिषेधादण्कार्यकारित्वं णप्रत्ययस्य ज्ञाप्यत इति भावः। तेनेति। चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे चुरातपःशब्दाभ्यां छत्रादित्वाण्णप्रत्यये सति तदन्ताभ्यामणन्तकार्ये ङीपि चौरी तापसीति सि-मित्यर्थः। कार्मण इति। 'तस्येदम्' इत्यणि 'कार्मस्ताच्छील्ये' इत्यस्याप्रवृत्तेः 'अन्' इति प्रकृतिभावान्न टिलोप इति भावः। कर्माध्ययने वृत्तम्। 'तदस्य पण्यम्' इत्यतः 'तदस्य' इत्यनुवर्तते। 'तदस्य कर्माध्ययने वृत्तम्' इत्यर्थनिर्देशः। तत्र तदित्यनेन विशेष्येण कर्म वृत्तमित्यन्वेति। कर्मशब्दः क्रियापरः। वृत्तमित्यस्य जातमित्यर्थः। वृत्तं कर्म प्रति विशेष्यसमर्पकं तदिति प्रथमोच्चारितम्।

---

विसर्गस्य षः। परश्वधाट्ठञ्। चाट्ठक्। 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः'। परलोक इति। एतच्चाभिधानशक्तिस्वाभाव्याल्लभ्यते। आस्तिक इति। अस्ति-नास्तिशब्दौ निपातौ। यद्वा वचनसामर्थ्यादस्तीत्याख्यातात् नास्तीति निपाताख्यात-समुदायाच्च प्रत्ययः। दिष्टमिति। 'दैवं दिष्टं भागधेयम्' इत्यमरः। 'नालम्बते दैष्टिकताम्' इति माघः। 'प्रमाणानुगा मतिर्दिष्टा' इति प्राचोक्तिस्तूपेक्ष्या। दिष्टशब्दस्य स्त्रीत्वे प्रमाणानुगमात्स्त्रीवाचकत्वे चोक्तकोशविरोधादिति दिक्। छत्रादिभ्यो णः। 'छत्रादिभ्योऽण्' इत्येव सुवचमिति 'कार्मस्ताच्छील्ये' इति सूत्रे कैयटः। ताच्छील्ये ण इति। कर्मन्शब्दस्य छत्रादित्वादिति भावः। चौरीत्यादि। चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे णप्रत्यये सति तदन्तान्ङीप् सिद्ध्यतीत्यर्थः। कार्मणवत्-

[त]त् क्रिया सा चेत्प्रथमान्तस्यार्थः । एकमन्यद् वृत्तमस्य ऐकान्यिकः । यस्याध्ययने [प्र]वृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातम्, सः । १६१५ [ब]ह्वच्पूर्वपदाट्ठच्[1] । (४—४—६४) प्राग्विषये । द्वादशान्यानि कर्माण्यध्ययने [वृ]त्तान्यस्य द्वादशान्यिकः । द्वादशापपाठा अस्य जाता इत्यर्थः । १६१६ हितं [भ]क्षाः । (४—४—६५) अपूपभक्षणं हितमस्मै आपूपिकः । १६१७ तदस्मै [दी]यते नियतम् । (४—४—६६) अग्रभोजनं नियतं दीयते अस्मै आग्र-[भो]जनिकः । १६१८ श्राणामांसौदनाट्टिठन् । (४—४—६७) श्राणा नियतं [दी]यतेऽस्मै श्राणिकः, श्राणिकी । मांसौदनग्रहणं सङ्घातविगृहीतार्थम् । मांसौ-

[त]दस्य अस्य अध्ययनविषये तत्कर्म वृत्तमित्यर्थे तच्छशब्दगम्यविशेष्यवाचकात् [प्र]थमान्ताट्ठक् स्यादित्यर्थः । तदाह—प्रथमान्तादिति । वृत्तं कर्म प्रति [वि]शेष्यसमर्पकादिति शेषः । अध्ययने वृत्तेति । विषयसप्तम्येषा । या क्रियेति । [अ]नेन कर्मशब्दः क्रियापर इति सूचितम् । प्रथमान्तस्यार्थ इति । [अ]नेन कर्म वृत्तमित्येतत् तदित्यस्य प्रथमान्तस्य विशेषणमिति सूचितम् । [त]दित्यननुवृत्तौ कर्मशब्दस्यैव सूत्रे प्रथमानिर्दिष्टत्वात् तत एव प्रत्ययः स्यात्, नतु [त]द्विशेष्यवाचकात्, तस्य प्रथमानिर्दिष्टत्वाभावादित्यभिप्रेत्योदाहरति—एकमन्यद्वृत्त-[म]स्य ऐकान्यिक इति । 'तद्धितार्थ—' इति समासे एकान्यशब्दाट्ठगिति [भा]वः । द्वैयन्यिकः, त्रैयन्यिकः । ऐजागमो विशेषः । बह्वच्पूर्वपदाट्ठक् । 'तदस्य [क]र्माध्ययने वृत्तम्' इत्यनुवर्तते । तदाह—प्राग्विषय इति । द्वादशान्यिक इति । ['त]द्धितार्थ—' इति समासः । एवं त्रयोदशान्यिकः । चित्त्वान्नादिवृद्धिः । हितं भक्षाः । ['त]दस्य' इत्यनुवृत्तम् । तत्र षष्ठी चतुर्थ्या विपरिणम्यते, हितयोगात् । तद् अस्मै हित-[म]ित्यर्थे प्रथमान्ताट्ठक् स्याद् हितं भक्षाश्चेत् ते स्युरित्यर्थः । संस्कृतं भक्षाः [इ]ति तद्व्याख्येयम् । अपूपभक्षणमिति । अनेन अपूपशब्दः अपूपभक्षणे [ल]ाक्षणिक इति सूचितम् । अपूपो हितमित्यर्थे तु न ठक्, अभिधानस्वा-[भ]ाव्यादिति भावः । तदस्मै दीयते नियतम् । अस्मिन्नर्थे प्रथमान्ताट्ठ-[ग]ित्यर्थः । नियुक्तमिति पाठान्तरम्, नियतमित्यर्थः । श्राणामांस । तदस्मै [दी]यते नियतमित्येव । श्राणा यवागूः । 'यवागूरुष्णिका श्राणा विलेपी

'तदस्य' इत्यनुवर्तते, ठगिहाधिक्रियत एव तदाह—प्रथमान्तादित्यादि । ऐका-[न्यि]क इति । एकमन्यदिति विगृह्य 'तद्धितार्थ—' इति समासः, ततष्ठक् । एवं [द्वै]यन्यिकः, त्रैयन्यिक इत्युदाहार्यम् । इह तु वृद्धिं बाधित्वा 'न य्वाभ्याम्—' इत्यैच् । हितं भक्षाः । 'अस्य' इति प्रकृतमपीह हितयोगाच्चतुर्थ्या विपरिणम्यते, 'तदस्मै—' [इ]त्यस्याकर्षो वेत्याशयेनाह—अपूपभक्षणं हितमस्मा इति । अपूपशब्दस्तद्[भ]क्षणे लाक्षणिक इति भावः । श्राणा । 'यवागूरुष्णिका श्राणा विलेपी तरला

१ इह 'ठच्' इति पाठो बालमनोरमासंमतः । काशिकायामपि तथैवोप-[ल]भ्यते । कौमुदीपुस्तकान्तरेषु तु 'ठञ्' इति पाठ उपलभ्यते, मुद्रितेष्वष्टाध्यायी-पुस्तकेष्वपि प्रायेण 'ठञ्' इत्येवोपलभ्यते ।

दनिकः, मांसिकः, ओदनिकः । १६१९ भक्तादणन्यतरस्याम् । (४—४—६८) पक्षे ठक् । भक्तमस्मै नियतं दीयते भाक्तः भाक्तिकः । १६२० तत्र नियुक्तः । (४-४-६९) आकरे नियुक्त आकरिकः । १६२१ अगारान्ताट्ठन् । (४-४-७०) देवागारे नियुक्तो देवागारिकः । १६२२ अध्यायिन्यदेशकालात् । (४—४—७१) निषिद्धदेशकालवाचकाट्ठक्स्यादध्येतरि । श्मशानेऽधीते श्माशानिकः । चतुर्दश्यामधीते चातुर्दशिकः । १६२३ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति । (४—४—७२) 'तत्र' इत्येव । वंशकठिने व्यवहरति वांशकठिनिकः । वंशा वेणवः कठिना यस्मिन्देशे स वंशकठिनः । तस्मिन्देशे या क्रिया यथा अनुष्ठेया तां तथैवानुतिष्ठतीत्यर्थः । प्रास्तारिकः । सांस्थानिकः । १६२४ निकटे वसति । (४—४—७३) नैकटिको भिक्षुः । १६२५ आवसथात् ष्ठल् । (४—४—७४) आवसथे वसति आवसथिकः । षित्त्वान्ङीष् । आवसथिकी ।

---

तरला च सा' इत्यमरः । टित्त्वं ङीबर्थम्, तदाह—क्षाणिकीति । संज्ञाविगृहीतार्थमिति । ठकैव सिद्धे ओदनिक इत्यत्र आदिवृद्ध्यभावार्थं प्रत्ययान्तरविधानमिति भावः । भक्तादणन्यतरस्याम् । तदस्मै दीयते नियतमित्येव । तत्र नियुक्तः । अस्मिन्नर्थे सप्तम्यन्ताट्ठक् स्यादित्यर्थः । नियुक्तः अधिकृतः । संरक्षणादौ प्रेरित इति यावत् । आकरिक इति । आकरो रत्नाद्युत्पत्तिस्थानम् । अगारान्ताट्ठन् । तत्र नियुक्त इत्येव । नित्त्वान्नादिवृद्धिः । तदाह—देवागारिक इति । अध्यायिन्यदेशकालात् । निषिद्धेति । अदेशकालेत्यत्र 'नञ्' निषिद्धे वर्तत इति भावः । श्माशानिकः । चातुर्दशिक इति । देशकालभिन्नादिति व्याख्याने तु इह न स्यादिति भावः । कठिनान्तप्रस्तार । अस्मिन्नर्थे कठिनान्त, प्रस्तार, संस्थान एभ्यः सप्तम्यन्तेभ्यः ठगित्यर्थः । वंशकठिन शब्दं विवृणोति—वंशा इति । व्यवहरणम् उचितक्रिया, तदाह—यस्मिन्देशे इति । प्रस्तारसंस्थानशब्दौ अवयवसंनिवेशपर्यायौ । निकटे वसति । अस्मिन्नर्थे सप्तम्यन्तान्निकटशब्दाट्ठगित्यर्थः । नैकटिको भिक्षुरिति । 'ग्रामात्क्रोशे भिक्षुणा वस्तव्यम्' इति शास्त्रमुल्लङ्घ्य निकटे यो भिक्षुर्वसति तत्रैवायं ठगिति भावः । अत्र व्याख्यानमेव शरणम् । आवसथात्ष्ठल् । 'तत्र' 'वसति' इत्यर्थे आवसथात् सप्तम्यन्तात् ष्ठलित्यर्थः । आवसथं गृहम् । षित्त्वं ङीषर्थम् । तदाह—आवस-

---

च सा' इत्यमरः । टिठनिति । इकार उच्चारणार्थः । टा ङीबर्थः । सङ्घातविगृहीतार्थमिति । ओदनिक इत्यत्र हि वृद्धिनिवारणाय टिठन्नारब्धः । अन्यथा लाघवात् ठञमेव ब्रूयादिति भावः । आकरिक इति । 'खनिः स्त्रियामाकारः स्यात्' इत्यमरः । अध्यायिन्य । अदेशकालात् किम्, काश्यामधीते, पूर्वाह्णे अधीते । कठिनान्त । प्रस्तारसंस्थानशब्दौ संनिवेशपर्यायाविति बहवः । प्रस्तारो यज्ञः । 'प्रेस्त्रो यज्ञे' इति घञ् । संस्थानं संनिवेश इत्येके । नैकटिको भिक्षुरिति । संन्यासी हि ग्रामनिकटे वसन् भिक्षार्थमेव ग्रामे प्रविशति, न तु तत्र वसतीति भावः । आवसथात्

'आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।
आवसथात्किसरादेः षितः षडेते ठगधिकारे ॥'

(वा २९५५) षडिति सूत्रषट्केन विहिता इत्यर्थः । प्रत्ययास्तु सप्त ।

इति तद्धितेषु ठगधिकारप्रकरणम् ।

—:○:—

षिकीति । आकर्षादित्यादि । श्लोकवार्तिकमिदम्—- 'प्राग्वहतेष्ठक्' इत्यादौ ठगिति वा ष्ठगिति छेद इति संशयनिवृत्त्यर्थम् 'आकर्षात्ष्ठल्' इति सूत्रभाष्ये पठितम् । तत्र आकर्षादित्यनेन 'आकर्षात्ष्ठल्' इति सूत्रं विवक्षितम् । पर्पादिभ्य इत्यनेन 'पर्पादिभ्यः ष्ठन्' इति सूत्रं विवक्षितम् । भस्त्रादिभ्य इत्यनेन 'भस्त्रादिभ्यः ष्ठन्' इति सूत्रं विवक्षितम् । कुसीदसूत्रादित्यनेन 'कुसीददशैकादशात् ष्ठन्ष्ठचौ' इति सूत्रं विवक्षितम् । आवसथादित्यनेन 'आवसथात् ष्ठल्' इति सूत्रं विवक्षितम् । किसरादेरित्यनेन 'किसरादिभ्यः ष्ठन्' इति सूत्रं विवक्षितम् । 'प्राग्वहतेष्ठक्' इत्यधिकारे एतैः सूत्रैर्विहिताः षट् प्रत्ययाः षित इत्यर्थः । ननु 'कुसीद—' इति सूत्रे प्रत्ययद्वयविधानाद् एतत्सूत्रषट्कविहिताः सप्त प्रत्यया लभ्यन्त इति षट् षित इति कथमित्यत आह—षडितीति । षडित्यनेन सूत्राभिप्रायं षट्त्वं विवक्षितमिति भावः ।

इति तद्धितेषु प्राग्वहतीयप्रकरणम् ॥

—:○:—

षकारः स्वरार्थः । आवसन्त्यस्मिन्नित्यावसथः । 'उपसर्गे वसेः' इत्यथ प्रत्ययः । कुसीदसूत्रादिति । 'कुसीददशैकादशात्—' इति सूत्रोपात्ताभ्यां प्रकृतिभ्यामित्यर्थः । इह 'नौ द्वयचष्ठन्' इत्यत्रेव येषां षकारः सांहितिक इति सम्भाव्यते तेषामेव गणने ष्ठलादेः षित्त्वमनार्षमिति भ्रमः स्यादतः श्लोकवार्तिककारः षित्प्रत्ययान्सर्वानपि पर्यजीगणत् ।

इति तत्त्वबोधिन्यां ठगधिकारप्रकरणम् ।

—:○○:—

# अथ तद्धितेषु प्राग्घितीयप्रकरणम् । ३१ ।

१६२६ प्राग्घिताद्यत् । (४—४—७५) 'तस्मै हितम्' (सू १६६५) इत्यतः प्राग्यदधिक्रियते । १६२७ तद्वहति रथयुगप्रासङ्गम् । (४—४—७६) रथं वहति रथ्यः । युग्यः । वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते स प्रासङ्गः, तं वहति प्रासङ्ग्यः । १६२८ धुरो यड्ढकौ (४—४—७७) 'हलि च' (सू ३५४) इति दीर्घे प्राप्ते । १६२९ न भकुर्छुराम् । (८—२—७९) भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् । धुर्यः, धौरेयः । १६३० खः सर्वधुरात् । (४—४—७८) सर्वधुरां वहतीति सर्वधुरीणः । १६३१ एकधुराल्लुक्च । (४—४—७९) एकधुरां वहति एकधुरीणः, एकधुरः । १६३२ शकटादण् । (४—४—८०) शकटं वहति शाकटो गौः । १६३३ हलसीराट्ठक् ।

---

अथ प्राग्घितीयप्रकरणं निरूप्यते—प्राग्घिताद्यत् । हितशब्दः तद्घटितसूत्रपरः । तदाह—तस्मै हितमिति । तद्वहति रथ । रथादि वहतीत्यर्थे द्वितीयान्ताद् रथ युग प्रासङ्ग इति त्रयाद् यत्स्यादित्यर्थः । युग्य इति । रथादिवहनकाले अश्वादिस्कन्धेषु तिर्यग् यत् काष्ठमीषत्प्रोतमासज्यते तद्युगम्, तद्वहतीत्यर्थः । दमनकाल इति । रथादि वहने सुशिक्षितावश्वौ नियुज्य तत्स्कन्धवाह्ययुगे यद्युगान्तरमासज्य तस्मिन्नशिक्षिता अश्वादयो वहनशिक्षार्थं नियुज्यन्ते स प्रासङ्ग इत्यर्थः । 'प्रासङ्गो ना युगाद्युगे' इत्यमरः । धुरो यड्ढकौ । धुरशब्दाद् द्वितीयान्ताद् वहतीत्यर्थे यत् ढक् च स्यादित्यर्थः । यड्ढञाविति पाठान्तरम् । हलि चेतीति । 'धुर्वी हिंसायाम्' 'भ्राजभास–' इति क्विप् । 'राल्लोपः' इति लोपः । अश्वादिस्कन्धवाह्यप्रदेशो युगावयवो धूः । धुर्शब्दाद् यति 'हलि च' इति दीर्घे प्राप्ते सतीत्यर्थः । न भकुर्छुराम् । 'र्वोरुपधायाः–' इत्यत 'उपधायाः' इति 'दीर्घः' इति चानुवर्तते, तदाह—भस्येत्यादिना । 'धूर्वहे धुर्यधौरेयधुरीणाः' इत्यमरः । खः सर्वधुरात् । सर्वा धूः सर्वधुरा । 'पूर्वकाल–' इति तत्पुरुषः । 'ऋक्पूः–' इति समासान्तः 'परवल्लिङ्गम्–' इति स्त्रीत्वाट्टाप् । इह तु शब्दस्वरूपापेक्षया नपुंसकनिर्देशः । द्वितीयान्तात्सर्वधुराशब्दाद् वहतीत्यर्थे खः स्यादित्यर्थः । सर्वधुरीण इति । सर्वधुरां वहतीत्यर्थः । 'स तु सर्वधुरीणो यो भवेत् सर्वधुरावहः' इत्यमरः । एकधुराल्लुक् च । एकधुराशब्दाद् द्वितीयान्ताद्वहतीत्यर्थे खः स्यात् । तस्य पक्षे लुगित्यर्थः ।

---

युग्य इति । युगं रथाङ्गं वहतीत्यर्थः । प्रासङ्ग इति । प्रासज्यते असाविति कर्मणि घञ् । धुरो । 'धुरो ढक् च' इत्येव सुवचम् । न भ । उपधाया इति । 'उपधायां च' इति पूर्वसूत्रादेतल्लभ्यत इति भावः । उपधायाः किम्, प्रतिदीव्नः । इह नान्तस्य भत्वेऽपीकारस्यानुपधात्वान्निषेधो न प्रवर्तते । खः सर्वधुरात् । सर्वधुराद् इति वक्तव्ये नपुंसकनिर्देशः शब्दस्वरूपापेक्षया 'बन्धुनि बहुव्रीहौ' इतिवत् । सर्वा धुरामिति । 'पूर्वकालैक–' इति समास 'ऋक्पूरब्धूः–' इति समासान्ते अजन्तत्वे टाप् । एकधुराल्लुक् च । चात्खः । एवं च प्राकरणिकस्य यतो लुक्, खस्य तु

(४—४—८१) हलं वहति हालिकः। सैरिकः। १६३४ संज्ञायां जन्याः[1]। (४—४—८२) जनी वधूः। तां वहन्ति प्रापयन्ति जन्याः। १६३५ विध्यत्यधनुषा। (४—४—८३) द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यात्, न चेत्तत्र धनुः करणम्। पादौ विध्यन्ति पद्याः शर्कराः। १६३६ धनगणं लब्धा।

---

एकधुरीणः, एकधुर इति। एकधुरां वहतीत्यर्थः। शकटादण्। द्वितीयान्ताच्छकटशब्दाद् वहतीत्यर्थे अण् स्यादित्यर्थः। यतोऽपवादः। हलसीराट्ठक्। आभ्यां द्वितीयान्ताभ्यां वहतीत्यर्थे ठगित्यर्थः। संज्ञायां जन्याः। जनीशब्दाद् द्वितीयान्ताद् वहतीत्यर्थे यत्स्यात्संज्ञायामित्यर्थः। जनी वधूरिति। जायतेऽस्यां गर्भं इत्यथ जनिघसिभ्यामिति जनधातोः इणि 'जनिवध्योश्च' इति वृद्धिप्रतिषेधे कृदिकारात्–' इति ङीषि जनीशब्दस्य निष्पत्तेरिति भावः। 'समा स्नुषाजनीवध्वः' इत्यमरः। वहन्तीत्यस्य विवरणं प्रापयन्तीति। वरगृहमिति शेषः। ।जन्या इति। जामातुर्वयस्या इति शेषः। 'जन्याः स्निग्धा वरस्य ये' इत्यमरः। विध्यत्यधनुषा। यद् इति' द्वितीयान्तमनुवर्तते। 'अधनुषा' इति सप्तम्यर्थे तृतीया। धनुषः अभावः अधनुः, तस्मिन्सतीत्यर्थः। अर्थाभावे नञ्तत्पुरुषः। अर्थाभावे अव्ययीभावेन अयं विकल्प्यत इत्युक्तत्वात्। द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्याद्धनुषः करणस्याभावे सतीत्यर्थः। न चेत्तत्रेति। तत्र वेधने धनुः करणं न चेदित्यर्थः। पद्या इति। पादशब्दाद्यति 'पद्यत्यतदर्थे' इति पद्भावः। 'अधनुषा' इति किम्? धनुषा चोरं विध्यति देवदत्तः। अत्र चोराद्यन्न भवति। न चासामर्थ्यादेवात्र यन्नेति वाच्यम्, विध्यतीत्यस्य प्रत्ययार्थत्वेन प्रधानतया तस्य सापेक्षत्वेऽपि सामर्थ्याविघातात्। अन्यथा औपगवो देवदत्तउपगुनप्तृत्वाद् इत्यादौ वनादिकं न स्यात्। प्रत्ययार्थैकदेशस्य व्यधनस्य करणविशेषनित्यसापेक्षत्वाच्च इति शब्देन्दुशेखरे विस्तरः। धनगणं लब्धा। धनशब्दाद् गणशब्दाच्च द्वितीया-

---

विधानसामर्थ्याच्छ्रवणमिति फलितम्, तदाह—एकधुरीण इत्यादि। शाकटो गौरिति। ननु 'तस्येदम्' इत्यणा सिद्धम्। यो हि शकटं वहति शकटस्यासौ भवति। अत्राहुः—आरम्भसामर्थ्यादत्र तदन्तविधिः। तेन द्वे शकटे वहति द्वैशकट इत्यत्र 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयो लुङ् न भवति, 'तस्येदम्' इत्यणि तु स्यादेव लुगिति। हलसीरात्। ननु 'तस्येदम्' इत्युपक्रमे 'हलसीराट्ठक्' इति पठितम्। तथा च तेनैव शैषिकेण हालिकः सैरिक इति सिद्धौ किमनेनेति चेत्। सत्यम्, आरम्भसामर्थ्यादत्रापि तदन्तविधिः, तेन द्वैहलिको द्वैसीरिक इति भवति, शैषिके ठकि तु प्राग्दीव्यतीयो लुक् स्यात्। संज्ञायां जन्या। जायते अस्यां गर्भ इति व्युत्पत्तिमाश्रित्य आह—जनी वधूरिति। 'जनिघसिभ्यामिण्'। 'जनिवध्योश्च' इति न वृद्धिः। 'कृदिकारात्–' इति ङीष्। ततोऽनेन सूत्रेण यति जन्या जामातुर्वयस्याः[2]। सा हि विवाहादिषु वधूं जामातृसमीपं प्रापयति। कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्त–

---

१ 'जन्या' इति निर्विसर्गः पाठः क्वचिदुपलभ्यते।

२ 'मातुर्वयस्या' इति क्वचित्।

(४—४—८४) तृन्नन्तमेतत्। धनं लब्धा धन्यः। गणं लब्धा गण्यः। १६३७ अन्नाण्णः। (४—४—८५) अन्नं लब्धा आन्नः। १६३८ वशं गतः (४—४—८६) वश्यः परेच्छानुसारी १६३९ पदमस्मिन्दृश्यम् (४—४—८७) पद्यः कर्दमः। नातिशुष्क इत्यर्थः। १६४० मूलमस्यावर्हि। (४—४—८८) आवर्हणमावर्हं उत्पाटनम्, तदस्यास्तीत्यावर्हि, मूलमावर्हि येषां ते मूल्या मुद्गाः। १६४१ संज्ञायां धेनुष्या (४—४—८९) धेनुशब्दस्य षुगागमो यप्रत्ययश्च स्वार्थे निपात्यते, संज्ञायाम्। 'धेनुष्या बन्धके स्थिता'। १६४२ गृहपतिना संयुक्ते ञ्यः। (४—४—९०) गृहपतिर्यजमान', तेन संयुक्तो गार्हपत्यो

---

न्ताल्लब्ध्वेत्यर्थे यत्स्यादित्यर्थः। ननु लब्धृशब्दस्य तृजन्तस्य कृदन्तत्वात्तद्योगे कर्मणि षष्ठी स्यादित्यत आह—तृन्नन्तमेतदिति। तथा च 'न लोक-' इति नि[षे]धान्न षष्ठीति भावः। अन्नाण्णः। लब्धेत्यर्थे द्वितीयान्तादिति शेषः। वशं गतः। वशशब्दाद् द्वितीयान्ताद्गत इत्यर्थे यदित्यर्थः। वश्य इति। वशं ग[तः] इति विग्रहः। 'वश कान्तौ'। कान्तिरिच्छा। वशनं वशः। 'वशिरण्योरुपसंख्यान[म्]' इत्यप्। वशम् इच्छां गतः प्राप्तः, इच्छाधीन इत्यर्थः। वशधातुः छान्दस इ[ति] लुग्विकरणे वक्ष्यते, तत्प्रायिकमिति भावः। सर्वस्यापि स्वेच्छानुसारित्वादाह—परेच्छानुसारीति। पदमस्मिन्दृश्यम्। प्रथमान्तात्पदशब्दाद् दृश्[यम्] इत्यर्थे यदित्यर्थः। अत्र 'तत्' इति द्वितीयान्तमनुवृत्तं प्रथमया विपरिणम्यते मूल[म्]मस्यावर्हि। आवर्हणमिति। उत्पाटनमित्यर्थः। उपसर्गवशाद् 'वृहू उद्यमने' इति धातोरुत्पाटने वृत्तिः। मूल्या मुद्गा इति। मूलत उत्पाटनीया इत्यर्थः। संज्ञायां धेनुष्या। यप्रत्ययश्चेति। यति तु तित्स्वरः स्यादिति भावः। धे[नु]ष्येति। या धेनुर्दोहनार्थमुत्तमर्णाय अधमर्णेन दीयते तस्या इयं संज्ञा. तदाह—बन्धके स्थितेति। अमरवाक्यमिदम्। संज्ञायामित्यापादपरिसमाप्तेरधिकार[ः।] संज्ञा हि रूढिविवक्षिता। गृहपतिना। अस्मिन्नर्थे गृहपतिशब्दात् तृतीयान्ता[त्] ञ्यः स्यादित्यर्थः। गार्हपत्योऽग्निरिति। अग्निर्विशेष इत्यर्थः। तत्र पत्नी

---

'यातेति जन्यानवदत्कुमारी' इति। जनीं वहन्तीति जन्यास्तानित्यर्थः। पद्या इति। 'पद्यत्यतदर्थे' इति पद्भावः। अधनुषा किम्, चोरं विध्यति। सम्भाव्यते चोरव्यधने धनुषः करणता। तदा तु धनुषेति प्रयुज्यते तदा सापेक्षत्वादेव भवति। एवं च 'न चेत्तत्र धनुः करणम्' इत्यत्र 'सम्भाव्यते' इति शेषो बोध्यः। तृन्नन्तमिति। एवं च 'न लोका—' इत्यादिना कृद्योगषष्ठ्या निषेधाद् 'धनगण[म्]' इति प्रयोगो निर्बाध इति भावः। वशं गतः। वशनं वश इच्छा। 'वशिरण्योरु[प]पसंख्यानम्' इत्यप्। मूलमस्यावर्हि। प्रथमान्तादावर्हि इत्युपाधिकान्मूलशब्दा[त्] दस्येति षष्ठ्यर्थे यत्स्यात्। आवर्ह इति। 'वृहू उद्यमने' दन्त्योष्ठ्यादिरयम्, पवर्गादिः। 'उद्वृह रक्षः सहमूलमिन्द्र' इत्यादिप्रयोगदर्शनात्। मूल्या मुद्गा इति। मूलोत्पाटनं विना संग्रहीतुमशक्याः, मध्यतो लूयमानेषु कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ताः। सुष्ठु शुष्का इति यावत्। यप्रत्यय इति। तेन धेनुष्या

र्णः । १६४३ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्याना-म्यसमसमितसंमितेषु । (४—४—९१) नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेनानाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया सम्मितं तुल्यम् ।

जेषु अग्निहोत्रे च गृहपतिदेवताकहोमस्य क्रियमाणत्वाद् गृहपतियागः । पि देवसूहविःषु 'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति' इति विर्होम आहवनीये क्रियते, तथापि संज्ञाधिकारादाहवनीये नास्य प्रयोगः । नौवयोधर्म । नौ, वयस्, धर्म, विष, मूल, मूल, सीता, तुला एभ्योऽष्टभ्यः त् तार्ये, तुल्ये, प्राप्ये, वध्ये, आनाम्ये, समे, समिते, संमिते चार्थे यत्स्यादित्यर्थः । वान्तेभ्य इत्यर्थाद् गम्यते । तार्यादियोगे करणे कर्तरि हेतौ तुल्यादियोगे न तस्या एव संभवात् । अत्र मूलशब्दयोर्यथासंख्यप्रवृत्तये नैकशेषः । अन्यथा नानां प्रकृतीनाम् एकैकस्या अष्टस्वप्यर्थेषु प्रत्यय इति भ्रमः स्यात् । तार्यमिति । तुं शक्यमित्यर्थः । 'ऋहलोर्ण्यत्' । वयसा तुल्य इति । मित्रे एवायं वयो नतु शत्रौ, संज्ञाधिकारात् । मूलेनानाम्यमिति । पटादेरुत्पत्त्यर्थं वणि-र्विनियुक्तं द्रव्यं मूलम् । तेन सह यदधिकं द्रव्यम् आनम्यते विक्रेतुः संमती-रर्पणं लभ्यते तन्मूल्यमित्यर्थः । लोकास्तु विक्रेतुर्लब्धं सर्वं द्रव्यं मूल्यमिति व्यवहरन्ति । तत्र लक्षणा बोध्या । सा च सांप्रतिकी निरूढा वा । सीतयेति । सीता लाङ्गलपद्धतिः । तया समितं संगतमित्यर्थः । कृष्टमिति यावत् । तुलयेति ।

द्योऽन्तउदात्तः । यति तु तित्स्वरः स्यादिति भावः । संज्ञायामिति । ऋणप्रत्य-र्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयम् । गार्हपत्य इति । गृहपतिना—' इति निर्देशादेव तृतीयान्तात्प्रत्ययः । 'संज्ञायाम्' इत्यनुवृत्तेराहवनीयादौ तिप्रसङ्गः । नौवयोधर्म । नावादिभ्योऽष्टभ्यो यथासंख्यं तार्यादिष्वष्टस्वर्थेषु त्स्यात् । इह तार्यादियोगे यथासम्भवं करणे कर्तरि हेतौ तुल्यार्थयोगे च तृतीया वतीति सैवेह समर्थविभक्तिरर्थाल्लभ्यते । अत्र प्रथमं मूलान्तानां पञ्चानां द्वन्द्वं कृत्वा द्वितीयमूलादिद्वन्द्वेन सह समाहारद्वन्द्वः । मूलान्तानां द्वित्राणां वा मूलादीनामेव वा द्वन्द्वं कृत्वा नावादिषु द्वन्द्वः । तेन सारूप्याभावादेकशेषो न भवति । नावा तार्यमिति । शक्यार्थे 'ऋहलोर्ण्यत्' करणे तृतीया । वयस्य इति । 'स्निग्धो वयस्यः सवयाः' इत्यमरः । 'वयसा तुल्यः शत्रुः' इत्यत्र तु भवति, संज्ञाधिकारात् । विषेण वध्य इति । विषेण वधमर्हतीत्यर्थः । 'दण्डादिभ्यः—' इति सूत्रेण वधशब्दा-र्थे यद्विधानात् । मूलेनानाम्यमिति । मूलं नाम पटादीनामुत्पत्त्यर्थं वणि-र्विनियुक्तं द्रव्यम् । तेन स्वस्मादतिरिक्तं लाभाख्यं यद् द्रव्यमात्मानं प्रति शेषी-क्रियते आत्मन उपकारकं क्रियते तद् आनाम्यम् । आङ्पूर्वको नमिरभिभवे वर्तते, तस्मात् 'पोरदुपधात्' इति यति प्राप्ते अतएव निपातनाण्ण्यत्, तथा चानाम्यमभि-भवनीयम् आत्मानं प्रति शेषीकर्तव्यम् । स च लाभाख्यो भाग एव । लोके तु यावता द्रव्येण पटादिकं विक्रीयते तत्रैव समुदाये मूल्यशब्दः प्रसिद्धः, न तु मूलाति-

१६४४ धर्मपथ्यर्थन्यायादनपेते । (४-४-९२) धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् । १६४५ छन्दसो निर्मिते । (४-४-९३) छन्दसा निर्मितं छन्दस्यम् । इच्छया कृतमित्यर्थः । १६४६ उरसोऽण् च । (४—४—९४) चाद्यत् । उरसा निर्मितः पुत्र औरसः, उरस्यः । १६४७ हृदयस्य प्रियः । (४—४—९५) हृद्यो देशः । 'हृदयस्य हृल्लेख-' (सू ९८४) इति हृदादेशः । १६४८ बन्धने चर्षौ । (४-४-९६) हृदयशब्दात्षष्ठ्यन्ताद् बन्धने यत्स्याद्वेदेऽभिधेये । हृदयस्य बन्धनं हृद्यो वशीकरणमन्त्रः । १६४९ मतजनहलात्करणजल्पकर्षेषु । (४-४-९७) मतं ज्ञानम्, तस्य करणं

---

तुला घटा, तया उन्मितमित्यर्थः । धर्मपथ्यर्थ । धर्म, पथिन्, अर्थ, न्याय एभ्यः अनपेतमित्यर्थे यदित्यर्थः। औचित्यात्पञ्चम्यन्तेभ्य इति लभ्यते । धर्मादनपेतमिति । अप्रच्युतमित्यर्थः । पथ्यमिति । पथः अनपेतमित्यर्थः । न्याय्यमिति न्यायादनपेतमित्यर्थः । छन्दसो निर्मिते । छन्दश्शब्दात्तृतीयान्ताद् निर्मिते यदित्यर्थः । इच्छयेति । छन्दःशब्दः इच्छावाचीति भावः । 'छन्दः पद्येऽभिलाषे च' इत्यमरः । उरसोऽण् च । तृतीयान्तान्निर्मित इत्यर्थ इति शेषः । उरस्य इति । 'अङ्गादङ्गात्संभवसि हृदयादधिजायसे' इति श्रुतेरिति भावः । पुत्र इति संज्ञाधिकाराल्लब्धम् । हृदयस्य प्रियः । षष्ठ्यन्ताद् हृदयशब्दात् प्रिय इत्यर्थे यत्स्यादित्यर्थः । बन्धने चर्षौ । मतजनहलात् । यथासंख्यम्

---

रिक्तभागमात्रे व्युत्पादितः । एवं च लाभमात्रे व्युत्पादितस्य मूल्यशब्दस्य तद्‌ सङ्घाते निरूढलक्षणा बोध्या । सीतेति । सीता हलाग्रम् । सम्पूर्वादिणः क्तः, संगतं निम्नोन्नतादिरहितं कृतमित्यर्थः, समीकृतमिति यावत् । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिः । परमसीत्यम् । द्वाभ्यां सीताभ्यां समितमिति तद्धितार्थे समासे यत् । द्विसीत्यम् । तुलया संमितमिति । सम्मितं परिच्छिन्नम् । रूढिशब्दोऽयं 'संज्ञायाम्' इत्यधिकारात् । अतएव 'तुल्यम्' इति सदृशमात्रे प्रयुज्यते, न तुलायामाग्रहः क्रियते । पथ्यमिति । संज्ञाधिकारादभिधेयनियमः, तेन शास्त्रीयात्पथोऽनपेतमेव पथ्यम् । न तु मार्गादनपेतश्चोरोऽपि । छन्दसो । 'छदि संवरणे' इति चुरादिरिच्छायामपि वर्तते, धातूनामनेकार्थत्वात् । ततो घञि इच्छापर्यायश्छन्दशब्दः प्रसिद्ध एव 'स्वच्छन्दोच्छलदच्छकच्छ-' इत्यादौ । असुनि तु यः सान्तः सोऽत्र प्रकृतिस्तत्र निर्माणे इच्छायाः करणत्वात्सामर्थ्यात्तृतीयान्तात्प्रत्ययः । इच्छया कृतमिति । यद्यपि वेदे त्रिष्टुबादिषु च सान्तश्छन्दःशब्दोऽस्ति, तथापीह न गृह्यते संज्ञाधिकारात्, किं त्विच्छापर्याय एव स गृह्यत इति भावः । पुत्र इति । संज्ञाधिकारान्नेह । उरसा निर्मितं सुखम् । हृदयस्य । प्रीणातीति प्रियः, 'इगुपध-' इति कः । कृद्योगात्कर्मणि षष्ठी, अलौकिके तद्धितप्रकृतिभागे तु वचनसामर्थ्यादि एवमन्यत्रापि बोध्यम् । बन्धने । बध्यतेऽनेनेति बन्धनः । करणे ल्युट् । करणमन्त्र इति । तेन हि परहृदयं वशीक्रियते । संज्ञाधिकाराद्वसिष्ठादावृषौ यत् । मत । तस्य करणमिति । कर्मणि षष्ठी । कृतिः करणम्, क्रियतेऽनेन

...वा मत्यम्। जनस्य जल्पो जन्यः। हलस्य कर्षो हल्यः। १६५० तत्र ... । (४-४-९८) अग्रे साधुः अग्र्यः। सामसु साधुः सामन्यः। 'ये चाभावकर्मणोः' (सू११५४) इति प्रकृतिभावः। कर्मण्यः। शरण्यः। १६५१ प्रतिजनादिभ्यः खञ्। (४-४-९९) प्रतिजनं साधुः प्रातिजनीनः। ...। सार्वजनीनः। वैश्वजनीनः। १६५२ भक्ताण्णः। (४-४-१००) भक्ते साधवो भाक्ताः शालयः। १६५३ परिषदो ण्यः। (४-४-१०१) पारिषद्यः। परिषद इति योगविभागाण्णोऽपि। पारिषदः। १६५४ कथादिभ्यष्ठक् (४-४-१०२) कथायां साधुः काथिकः। १६५५ गुडादिभ्यष्ठञ्। (४-४-१०३) गुडे साधुर्गौडिक इक्षुः। ...को यवः। १६५६ पथ्यतिथिवसतिस्वपतेर्ढञ्। (४-४-१०४) ... साधु पाथेयम्। आतिथेयम्। वसनं वसतिः, तत्र साधुर्वासतेयी रात्रिः।

...यदिति शेषः। मतं ज्ञानमिति। मनधातोः भावे क्त इति भावः। ... भावः साधनं वेति। कृञ्धातोर्भावे करणे वा ल्युटि करणशब्दः। तेन ...क्रिया वा जननसाधनं वा विवक्षितमित्यर्थः। मत्यमिति। ज्ञानस्य जननक्रिया ...साधनं वेत्यर्थः। तत्र साधुः। सप्तम्यन्तात्साधुरित्यर्थे यत्स्यादित्यर्थः। ...इति। अग्रे साधुरित्यर्थः। साधुरत्र प्रवीणो गृह्यते, नतु हितः, तत्र 'तस्मै हितम्' इति वक्ष्यमाणत्वात्। प्रतिजनादिभ्यः खञ्। 'तत्र साधुः' इत्येव। ...न्तेभ्य एभ्यः साधुरित्यर्थे खञ् स्यादित्यर्थः। प्रातिजनीन इति। ...जनमिति वीप्सायामव्ययीभावः। तत्र साधुरित्यर्थः। एवं वैश्वजनीनः। भक्ता-...। सप्तम्यन्तादस्मात् साधुरित्यर्थे इति शेषः। परिषदो ण्यः। सप्तम्यन्तात्सा-...र्थे इति शेषः। योगेति। 'परिषदः' इति प्रथमो योगः। परिषदो णः ...दित्यर्थः। ततः 'ण्यः' इति द्वितीयो योगः। परिषदो ण्यः स्यादित्यर्थः। ...दिभ्यष्ठक्। इत्यादि स्पष्टम्। गुडादिभ्यष्ठञ्। साक्तुको यव इति। ...षु साधुः इत्यर्थः। गुडादित्वाट्ठञ्, उगन्तत्वाट्ठस्य कः। पथ्यतिथि। इत्यादि

...करणमित्याशयेनाह—भावः साधनं वेति। जल्पशब्दो भावसाधनः। कर्तरि ...ष्ठी। हलस्येति। कर्षणं कर्षस्तद्योगात्कर्मणि षष्ठी। करणस्य कर्तृत्वविवक्षायां ...रि षष्ठी वा। 'रथसीता—' इति तदन्तविधिः। द्विहल्यः। त्रिहल्यः। तत्र साधुः। ...रिह प्रवीणो योग्यो वा गृह्यते, नोपकर्ता। तत्र हि परत्वात् 'तस्मै हितम्' ...नेन भाव्यम्। संज्ञाधिकारादुपकर्ता न गृह्यत इत्यन्ये। प्रातिजनमिति। ...नं जन इति प्रतिजनम्। वीप्सायामव्ययीभावः। प्रतिजन, इदंयुग, संयुग, ...कुल, परस्यकुल, अमुष्यकुल, सर्वजन, विश्वजन, पञ्चजन। 'परस्यामुष्य—' इति ...ष्ठ्योर्निपातनादलुक्। भक्त इति। 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः। गुडादिभ्यष्ठञ्। गुड, कुल्माष, सक्तु, अपूप, माष, ओदन, इक्षु, वेणु, संग्राम, ...हान, प्रवास, निवास, वृत्। वसतिरिति। 'वसेश्च' इत्यतिप्रत्ययः। स्वस्य पतिः

१ 'स पार्थदैरम्बरमापुपूरे' इति जाम्बवतीजये पाणिनिस्तु पृषोदरादित्वात्समाधेयः।

स्वापतेयं धनम् । १६५७ सभाया यः । (४—४—१०५) सभ्यः । १६…
समानतीर्थे वासी । (४-४-१०७) 'साधुः' इति निवृत्तम् । …
वासी । समाने तीर्थे गुरौ वसतीति सतीर्थ्यः । १६५९ समानोदरे श…
ओ चोदात्तः । (४-४-१०८) समाने उदरे शयितः स्थितः समानो…
भ्राता । १६६० सोदराद्यः । (४-४-१०९) सोदर्यः, अर्थः प्राग्…

इति तद्धितेषु चतुर्थस्य चतुर्थपादे प्राग्घितीयप्रकरणम् ।

---

स्पष्टम् । समानतीर्थे वासी । समानतीर्थशब्दात्सप्तम्यन्ताद् वस… यत्स्यादित्यर्थः । वसतीति वासीति । ग्राह्यादेराकृतिगणत्वाण्णिनिः । … शब्दस्य विवरणं 'गुरौ' इति । सतीर्थ्य इति । समानतीर्थशब्दाद्यति … ये' इति समानस्य सभावः । समानोदरे शयितः । समानोदर… सप्तम्यन्तात् शयित इत्यर्थे यत्स्याद् ओकारश्च उदात्त इत्यर्थः । शयित … विवरणं 'स्थितः' इति । कुशेशयं जलेशयम् इत्यादौ तथा दर्शनादिति … समानोदर्य इति । समानमुदरमिति विग्रहे 'पूर्वापरप्रथम–' इत्यादिना समा… कृते तित्स्वरापवाद ओकारस्योदात्तः । 'विभाषोदरे–' इति सभावे असति … सोदराद्यः । सप्तम्यन्तात् शयित इत्यर्थ इति शेषः । तित्वाभावात्… णान्तोदात्तोऽयम् । 'विभाषोदरे–' इति सभावः 'अपन्थानं तु गच्छन्तं सोद… विमुञ्चति' इत्यत्र तु समानपर्यायसहशब्दस्य बहुव्रीहौ 'वोपसर्जनस्य' इति … बोध्यः । एवं 'यत्र भ्राता सहोदरः' इत्याद्यपि सिद्धम् । इति तद्धितेषु चतुर्…

---

स्वपतिराढ्यस्तस्मिन्साधु स्वापतेयम् । सभाया यः । यति तु तित्स्वरः स्यात् … भंवत्युक्थ्यः' इतिवत् । न च 'यतो नावः' इत्याद्युदात्तता शङ्क्या । 'यदुत्पत्ति… द्व्यच्कस्य यदन्तस्यादिरुदात्तः' इति वेदभाष्ये स्थापितत्वात् । पक्षान्तरे तु … शष्प्याय च फेन्याय च' इत्यादिवाद्युदात्तः स्यात् । एवं च व्याख्यानद्वय… वश्यकत्वे लक्ष्यानुरोधेन क्वचित्किंचिद्व्याख्येयमिति तत्त्वम् । समानतीर्थे … निपातनाण्णिनिः, ग्रहादेराकृतिगणत्वान्नन्दिग्रहीत्यनेन वा । सतीर्थ्य … 'तीर्थे ये' इति समानस्य सभावः । तरन्त्यनेनेति तीर्थम् । 'तरतेस्थक्' । … शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । योनौ जलावतारे च' इति विश्वः । इह तु … वाचिन एवं ग्रहणं नान्यस्य, संज्ञाधिकारात् । शयितः स्थित इति । … स्थित्यर्थे वर्तते । 'जलाशयः' 'कुशेशयम्' इति प्रयोगादिति भावः । समानम… 'पूर्वापरप्रथम–' इत्यादिना तत्पुरुषः, ततो यत्, तित्स्वरापवाद ओकारस्या… सोदराद्यः । 'ओ चोदात्तः' इति नानुवर्तते । 'विभाषोदरे' इति समानस्य … तत्र 'तीर्थे ये' इत्यतोऽनुवृत्तं ये इत्येतद्विषयसप्तमी । तेन सोदर इत्यस्माद्यः … प्राग्वदिति । समानोदरे शयित इत्येवार्थ इत्यर्थः । कथं तर्हि 'अपन्थानं तु … सोदरोऽपि विमुञ्चति' इति मुरारिरिति चेत् । अत्राहुः —सह समानमुदरं यस्य … 'वोपसर्जनस्य' इति सहस्य सभावः । तस्य च वैकल्पिकत्वाद् 'यत्र भ्राता … इत्याद्यपि सिद्धमिति । इति तत्त्वबोधिन्यां प्राग्घितीयप्रकरणम् ।

# अथ तद्धितेषु छयद्विधिप्रकरणम् । ३२ ।

१६६१ प्राक् क्रीताच्छः । (५—१—१) 'तेन क्रीतम्' (सू १७०२) [इतः] प्राक्छोऽधिक्रियते । १६६२ उगवादिभ्यो यत् । (५–१–२) 'प्राक् [क्री]तात्' इत्येव । उवर्णान्ताद्गवादिभ्यश्च यत्स्याच्छस्यापवादः । 'नाभि नभं च' [ग] सू ९५) । नभ्योऽक्षः । नभ्यमञ्जनम् । रथनाभावेवेदम् । 'शुनः

---

अथ पञ्चमाध्यायः । प्राक्क्रीताच्छः । क्रीतशब्दस्तद्घटितसूत्रपरः । [त]दाह—तेन क्रीतमिति । 'तेन क्रीतम्' इत्यतः प्राग् येषु सूत्रेषु अर्था एव [निर्दिश्य]न्ते नतु प्रत्ययाः, तेषु छः इत्युपस्थितं भवतीति यावत् । उगवादिभ्यो यत् । [उ]त् गवादयश्च इति द्वन्द्वात् पञ्चमी । उवर्णान्तादिति । प्रातिपदिक-[विशेष]णत्वात् तदन्तविधिः । 'उगिद्वर्णग्रहणवर्जम्' इत्युक्तेः । प्रत्ययविधावपि [तदन्त]विधिरिति भावः । इदमपि सूत्रं प्राक्क्रीताद्वक्ष्यमाणसूत्रेषु प्रत्ययविशेषानु-[वाद]न उपतिष्ठते । नाभि नभं चेति । गवादिगणसूत्रम् । नाभिशब्दो नभादेशं [प्रत्य]यं च प्राप्नोतीत्यर्थः । नभ्योऽक्ष इति । यत्र अक्षदण्डः प्रवेश्यते तच्च-[क्रमध्य]गतच्छिद्रं नाभिरित्युच्यते । तस्मै हितः अक्षदण्डः, स हि अनुगुणत्वाद् [नाभ]ये हितः । नभ्यमञ्जनमिति । अञ्जनं तैलसेकः । नाभेरञ्जने कृते तत्र प्रोतं [चक्र]ं सुपरिवर्तनं भवतीति नाभेः परिवर्तनात्मककार्यक्षमताधायकत्वादञ्जनं नाभये [हि]तम् । अत्र शरीरावयवविशेषवाचिनाभिशब्दो न गृह्यते, भाष्ये रथनाभेरेव ग्रह-[ण]मित्यभिप्रेत्य आह—रथनाभावेवेदमिति । शरीरावयवविशेषवाचिनाभिशब्दात्तु

---

प्राक् क्रीताच्छः । इत्यतः प्रागिति । इहार्थोऽवधित्वेन गृह्यते, न तु [प्रत्य]यः प्रकृतिर्वा । तेनार्था एवावधिमन्त इति प्राक्क्रीताद्येऽर्था हितादयस्तेष्वस्यो-[प]स्थानम् । अवधिसजातीयो ह्यवधिमान् भवति । यथा 'मासान्त्यः' इति कालः [प्र]तीयते, 'ग्रामात्पूर्वः' इति देशः, 'अलोऽन्त्यात्पूर्व–' इत्यलेव । एवं च समानेऽर्थे [प्र]कृतिविशेषादुत्पद्यमानो यदादिः प्रकृत्यन्तरे सावकाशं छं तक्रकौण्डिन्यन्यायेन [बाध]ते । अन्यथा छस्य यदादेश्च संनिधानाविशेषात्तव्यत्तव्यानीयरामिव पर्यायः [स्या]त् । अतोऽत्रार्थोवधित्वेन गृह्यते । ननु यदादिविषये छो न भविष्यति 'विभाषा [हवि]रपूपादिभ्यः' इति विभाषाग्रहणाल्लिङ्गात् । तथा च प्रत्ययस्य प्रकृतेर्वा अवधित्व-[स्वी]कारेऽपि न क्षतिः । उक्तज्ञापकेनोगवादिप्रभृतिभ्यश्छस्यातिप्रसङ्गनिरासादिति चेत् । [अत्र]ाहुः—एवं सति 'छः' इत्येवाधिकारोऽस्तु नार्थोऽवधिनिर्देशेन । 'प्राग्वतेष्ठञ्' [इत्य]ादिके तु प्रकरणे नास्याधिकारः, अधिकारान्तरेणोपष्टब्धत्वात् । स्पष्टप्रतिपत्त्यर्थं-[म]वधिनिर्देशः । अन्यथा प्रतिपत्तिगौरवं स्यादिति चेत् । तर्हि 'विभाषा हवि–' [इ]त्यादिज्ञापकाश्रयणे प्रतिपत्तिगौरवादर्थ एवावधित्वेन निर्देष्टुमुचित इति । उगवा-[दि]भ्यो । उवर्णादेर्गवशब्दादेश्च यत्स्यादित्यर्थो न भवति, गवादिगणपाठात् । गवाद्यन्त-[र्गत]सूत्राण्याह—नाभि नभं चेति । नाभिशब्दो यतं लभते नभादेशं चेत्यर्थः । [न]भ्योऽक्ष इति । रथाङ्गं सच्छिद्रं नाभिः । तदनुप्रविष्टः काष्ठविशेषोऽक्षः । स च

सम्प्रसारणं वा च दीर्घत्वम्' (ग सू ९६) शून्यम्, शुन्यम्। 'ऊधसोऽनङ् च' (ग सू ९७)। ऊधन्यः। १६६३ कम्बलाच्च संज्ञायाम्। (५-१-३) यत्स्यात्। कम्बल्यमूर्णापलशतम्। 'संज्ञायाम्' किम्—कम्बलीया ... १६६४ विभाषा हविरपूपादिभ्यः। (५-१-४) आमिक्ष्यं ... आमिक्षीयम्। पुरोडाश्यास्तण्डुलाः, पुरोडाशीयाः। अपूप्यम्, अपूपीयम् ... १६६५ तस्मै हितम्। (५-१-५) वत्सेभ्यो हितो वत्सीयो गोधुक्। ... हितं शङ्कव्यं दारु। गव्यम्। हविष्यम्। १६६६ शरीरावयवाद्यत्...

'शरीरावयवाद्यत्' इति वक्ष्यमाणः केवलो यत्, न तु नभादेश इति भावः। ... संप्रसारणमिति। गवादिगणसूत्रम्। श्वन्शब्दाद्यत्स्यात् प्रकृतेः संप्रसारणम्, ... संप्रसारणस्य पाक्षिकं दीर्घत्वमित्यर्थः। शून्यम्, शुन्यमिति। शुने हितमित्यर्थः ... ऊधसोऽनङ् चेति। इदमपि गणसूत्रम्। ऊधश्शब्दाद् यत्स्यात् प्रकृतेरनङा- देशश्चेत्यर्थः। आदेशे ङकार इत्, नकारादकार उच्चारणार्थः, ङित्त्वादन्तादेशः। कम्बलाच्च। कम्बलशब्दाद् यत्स्यात् प्राक्क्रीतीयेष्वर्थेषु संज्ञायामित्यर्थः। कम्बल्यम् ऊर्णापलशतमिति। कम्बलाय हितमित्यर्थः। विभाषा हवि... हविर्विशेषवाचिभ्यः अपूपादिभ्यश्च प्राक्क्रीतीयेष्वर्थेषु यद्वा स्यादित्यर्थः। पक्षे छः ... आमिक्ष्यं दधीति। आमिक्षायै हितमित्यर्थः। तप्ते पयसि दध्नि निक्षिप्ते ... यद् घनीभूतं निष्पद्यते स आमिक्षेत्युच्यते। तस्मै हितम्। अस्मिन्नर्थे ...

तदनुगुणत्वात्तस्मै हितः। अञ्जनं तैलाभ्यङ्गः, तदपि स्नेहनत्वान्नाभये हितम्। ... भावेवेति। शरीरावयवे तु नाभ्यमित्येव, परेण 'शरीरावयवाद्यत्' इत्यनेन ... बाधादिति भावः। शून्यमिति। चकारस्यानुक्तसमुच्चयार्थत्वाद् 'नस्तद्धिते' ... टिलोपो न भवति। 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु दुर्लभः, संप्रसारणे ... च कृते अन्रूपाभावात्। दीर्घपक्षे तु तद्विधानसामर्थ्यादपि टिलोपाभावः सुपरिहरः ... नङ् चेति। लाघवात्। 'नश्च' इति सुवचमिति मनोरमा। अन्ये त्वाहुः—ऊधन्... 'तत्करोति तदाचष्टे' इति णिचि 'णाविष्ठवत्' इति टिलोपे णिजन्तात्कर्तरि क्विपि णिलोपयलोपयोः कृतयोः 'अनुनासिकस्य क्वि—' इति दीर्घे ततः क्विबन्तादाचारे ... ऊधानते इत्यादावात्मनेपदार्थं नङो ङित्करणमावश्यकमिति। ऊधन्यमिति। ... चा—' इति प्रकृतिभावः। कम्बलाच्च संज्ञायाम्। प्राक्क्रीतीयेष्वर्थेषु यत्स्यात्... छस्यापवादः। विभाषा हविरपूपादिभ्यः। गवादिषु हविःशब्दस्य पाठेऽपि ... हविर्विशेषाणां ग्रहणम्। न च गवादिष्वेव हविर्विशेषाणां ग्राहणं किं न स्यादिति वाच्यम्, असंजातविरोधित्वेन तत्र स्वरूपग्रहणस्य न्याय्यत्वात्। अपूपादिभ्यः... अपूपेभ्यो हितं चूर्णमित्यर्थः। अपूप, तण्डुल, पृथुक, मुसल, कर्णवेष्टकेत्यादिः ... गणे 'अन्नविकारेभ्यश्च' इति पठ्यते। अन्नविकारा अन्नप्रकारा अदनीयविशेषाः ... यद्वा स्यादिति तदर्थः। ओदन्या ओदनीयास्तण्डुलाः। एवं चानेनैव गणसूत्रेण ... अपूपादीनां केषांचिद्गणे पाठः प्रपञ्चार्थः। 'हविरपूपादिभ्यो विभाषया उगवादि... यत्पूर्वविप्रतिषेधेन' सक्तव्या धानाः। चरव्यास्तण्डुलाः। चरुर्नाम हविरिति कश्चित्...

१—६) दन्त्यम् । कण्ठ्यम् । 'नस्नासिकायाः' (वा ३४९७) । नस्यम् । म् । १६६७ ये च तद्धिते । (६—१—६१) यादौ तद्धिते परे शब्दस्य शीर्षन्नादेशः स्यात् । शीर्षण्यः । 'तद्धिते' किम्—शिर इच्छति ति । 'वा केशेषु' (वा ३४९३) । शीर्षण्याः शिरस्या वा केशाः । 'अचि इति वाच्यम्' (वा ३४९४) अजादौ तद्धिते शिरसः शीर्षादेशः । शिरस इदं स्थौलशीर्षम् । १६६८ खलयवमाषतिलवृषब्रह्मणश्च । १—७) खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । म् । चाद्रथ्या । १६६९ अजाविभ्यां थ्यन् । (५—१—८) अजथ्या

---

विहितं प्रत्ययाः स्युः । वत्सीय इति । छे रूपम् । यो गोधुग् वत्सेभ्यः शिष्ट्वा दोग्धि स एवमुच्यते । शङ्कव्यमिति । शङ्कवे हितमित्यर्थः । उवर्णा-वत् । गव्यमिति । गोभ्यो हितं तृणादिकमित्यर्थः । गवादिलक्षणो यत् । र्यमिति । हविषे हितमित्यर्थः । हविःशब्दो गवादिः । 'विभाषा हविः—' इत्यत्र विशेषवाचिनामेव ग्रहणम्, व्याख्यानात् । शरीरावयवाद्यत् । शरीरावय-ववाचकात् चतुर्थ्यन्ताद् हितमित्यर्थे यत्स्यादित्यर्थः । छस्यापवादः । नस्यमिति । कायै हितमित्यर्थः । 'पद्दन्—' इति नस्, प्रभृतिग्रहणस्य प्रकारार्थत्वात् । भाष्ये 'नासिकाया यत्तसक्षुद्रेषु नस्' इति पठितम् । नाभ्यमिति । नाभये मित्यर्थः । नाभिरत्र शरीरावयवः । रथावयवत्वे तु नभादेश उक्तः । ये च ते । शीर्षन्नादेश इति । 'शीर्षन् छन्दसि' इत्यतः तदनुवृत्तेरिति भावः । ण्य इति । शिरसे हित इत्यर्थः । शरीरावयवत्वाद्यति शीर्षन्नादेशे 'ये चाभावकर्मणोः' इति प्रकृतिभावान्न टिलोपः । शिरस्यतीति । शिर आत्मन इच्छतीत्यर्थे 'सुप आत्मनः—' इति क्यचि, 'नः क्ये' इति नियमात् परत्वाभावान्न म् । वा केशेषु । केशेषु वाच्येषु यो यकारादिस्तद्धितः तस्मिन्परे शिरसः शीर्षन्ना-देशो वा स्यादित्यर्थः । प्रसङ्गादाह—अचीति । खलयव । खलादिभ्यश्चतुर्थ्यन्तेभ्यो हितमित्यर्थे यत्स्यादित्यर्थः । वृषशब्दोऽत्र अकारान्त एव गृह्यते, नतु नकारान्तः । वृष्णे हितमिति वाक्यमेव । ब्रह्मन्शब्दो ब्राह्मणवाच्येव गृह्यते, नतु वेदादिवाची । ब्रह्मणे वेदाय हितमिति वाक्यमेवेति भाष्ये स्पष्टम् । ब्रह्मण्यमित्यत्र 'ये

---

वचनस्य चरुशब्दस्य तत्रत्ये हविषि उपचाराद् वृत्तिरिति कैयटादयः । नस्य-। नासिकायै हितम् । 'नासिकायां भवम्' इति विग्रहे तु 'शरीरावयवाच्च' इति । नस्यम् । तस्युदाहरणं नस्तः । 'अपादाने चाहीयरुहोः' इति तसिः । क्षुद्रे तु नासिकायाः क्षुद्रो नःक्षुद्रः । 'सुप्सुपा' इति समासः । नाभ्यमिति । 'नाभि नभं च' नभादेशो रथनाभावेव प्रवर्तते । तस्य गवादियता संनियोगशिष्टत्वादिति । 'शीर्षंश्छन्दसि' इत्यतोऽनुवर्तनादाह—शीर्षन्नादेश इति । शीर्षण्य इति । चाभाव—' इति प्रकृतिभावः । शिरस्यतीति । 'नः क्ये' इति नियमेन पदत्वा-भावान्नलोपाभावः । खलयव । अत्र वृषशब्दोऽकारान्तो गृह्यते न तु नकारान्तः । शा ह्यसन्देहार्थं नलोपमकृत्वैव निर्दिशेत् । 'आत्मन्विश्वजन—' इति यत् । वृषाय

यूथिः । अविथ्या । १६७० आत्मन्विश्वजनभोगोत्तरपदात्खः । (५—१—९) १६७१ आत्माध्वानौ खे । (६—४—१६९) एतौ खे प्रकृत्या स्तः । आत्मने हितमात्मनीनम् । विश्वजनीनम् । कर्मधारयादेवेष्यते । षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छ एव । विश्वजनीयम् । 'पञ्चजनादुपसंख्यानम्' (वा २९९६) पञ्चजनीनम् । 'सर्वजनाट्ठञ् खश्च' (वा २९९७) । सार्वजनिकः । सर्वजनीनः । 'महाजनाट्ठञ्' ( वा २९९८ ) । माहाजनिकः । मातृभोगीणः ।

चाभावकर्मणोः' इति प्रकृतिभावान्न टिलोपः । चाव्रथ्येति । चकारस्यानुक्तसमुच्चयार्थत्वादिति भावः । अजाविभ्यां थ्यन् । अजश्च अविश्चेति द्वन्द्वः । अविशब्दस्य घित्वेऽपि 'अजाद्यदन्तम्' इत्यजशब्दस्य पूर्वनिपातः । अजथ्या यूथिरिति । अजेभ्यः अजाभ्यो वा हितेत्यर्थः । लिङ्गविशिष्टपरिभाषया अजाशब्दादपि थ्यन् । 'तसिलादिषु-' इति पुंवत्त्वम् । अविथ्येति । अविभ्यो हितेत्यर्थः । स्त्रीत्वं लोकात् । आत्मन्विश्वजन । आत्मन् । विश्वजन, भोगोत्तरपद एभ्यो हितार्थे खः स्यादित्यर्थः । आत्मनीनमित्युदाहरणं वक्ष्यति । तत्र टिलोपे प्राप्ते— आत्माध्वानौ खे । प्रकृत्या स्त इति । 'प्रकृत्यैकाच्' इत्यतस्तदनुवृत्तेरिति भावः । कर्मधारयादेवेति । विश्वजनशब्दादिति शेषः । अत्र व्याख्यानं शरणम् । विश्वजनीयमिति । विश्वस्य जनो विश्वजनः साधारणो वैद्यादिः, विश्वो जनो यस्येति बहुव्रीहिर्वा, तस्मै हितमिति विग्रहः । पञ्चजनीनमिति । ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा रथकारजातिश्चेत्येते पञ्च जनाः । तेभ्यो हितमिति विग्रहः । सर्वजनाट्ठञ् खश्चेति । वक्तव्य इति शेषः । 'पञ्चाधिकरणादिति वक्तव्यम्' इति वार्तिकं भाष्ये स्थितम् । महाजनाट्ठञिति । वक्तव्य इति शेषः । विश्वजनप्रसङ्गादिदं वार्तिकद्वयमुपन्यस्तम् । अथ भोगोत्तर-

हितम् वृष्यम् । नान्तात्वति तु वृषण्यमिति स्यात् । ब्रह्मण्यमिति । ब्रह्मन् ब्राह्मणपर्यायः । प्रकृतिभावस्तु 'ये चा—' इत्यनेन पूर्ववत् । इह वृषन्शब्दाद्ब्रह्मन्शब्दाच्च यतः प्राप्तिरेव नास्ति । छोऽप्यनभिधानान्नेत्याकरः । तेन वृषभ्यो ब्राह्मणेभ्यो हितमिति वाक्यमेव । चाव्रथ्येति । गवादिषु रथशब्दो न पठितः, हितार्थ एव रथ्येति यथा स्यात्, अर्थान्तरे मा भूदिति । अजाविभ्याम् । अवि-शब्द इह पुंल्लिङ्ग उपात्तः, अतएव 'द्वन्द्वे घि' इत्यविशब्दस्य पूर्वनिपाते बाधिते 'अजाद्यदन्तम्' इति अजशब्दस्य पूर्वनिपातः कृतः । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि-' इति स्त्रीलिङ्गादपि थ्यन् । तसिलादिषु थ्यनः परिगणनात्पुंवद्भावे तुल्यम् । अजथ्येति । अजेभ्यो अजाभ्यो वा हितेति विग्रहः । कर्मधारयादेवेति व्याख्यानादिति भावः । विश्वजनीयमिति । विश्वस्य जनः सर्वसाधारणो वैद्यादिः, विश्वो जनोऽस्येति बहुव्रीहावपि स एवान्यपदार्थस्तस्मै हितमिति विग्रहः । पञ्चजनीनमिति । रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनास्तेभ्यो हितम् । 'दिक्संख्ये संज्ञायाम्'

१ तेन 'सर्वेषां जनाय ( सर्वसाधारणाय वेश्यादिजनाय ) हितः सर्वजनीनः' इत्यादौ न । इति भा० ।

नेत् । चण् । कच्चित् । किंचित् । यत्र । नह । हन्त । माकिः । माकिम् । नकिः । माकिम् । नकिम्) । माङ । नञ् । यावत् । तावत् । त्वै । द्वै । (न्वै) । रै । श्रौषट् ।

---

नेत् शङ्कायाम्, प्रतिषेधविचारसमुच्चयेषु च । चेत् यद्यर्थे । चण् अयं चेदर्थे णित्, चादिष्वननुबन्धकः । स्वरे भेदः फलम् । कच्चित् इष्ट प्रश्ने । यत्र अनवक्लृप्त्य-मर्षगर्हाश्चर्येषु । नावकल्पयामि. न मर्षये, गर्हे, आश्चर्यं वा यत्र भवान् वृषलं याजयेत् । नह प्रत्यारम्भे । हन्त हर्षे, विषादे, अनुकम्पायाम्, वाक्यारम्भे च । माकिः, माकिम्, नकिः, इदं त्रयं वर्जने । माङनञौ स्वरादिपूक्तौ । अन्यतरत्र पाठ इति उचितम् । उभयत्र पाठस्तु व्यर्थ एव । न च निपातस्वरार्थं इह पाठ इति वाच्यम्, 'फिषोऽन्त उदात्तः' इत्येव तत्सिद्धेः । न च सत्त्ववचनत्वेऽप्यव्ययत्वार्थं स्वरादिपाठ इति वाच्यम्, तथा सति लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः । तस्माच्चादिष्वेव माङनञौ पाठ्यावित्याहुः । यावत् तावत्, इदं द्वयं साकल्यावधिमानावधारणेषु । त्वै विशेषवितर्कयोः । द्वै वितर्के, न्वै इति पाठान्तरम् । रै दाने, अनादरे च । श्रौषट्

---

...च्छन्दे । प्रकाममित्यतिशये । भूय इति पुनरर्थे । साम्प्रतमिति न्याय्ये । ...मिति किंत्वर्थे । साक्षात् प्रत्यक्षे । साचीति तिर्यगर्थे । सत्यमित्यर्धाङ्गीकारे । मङ्क्षु आशु एतौ शैघ्र्ये । संवत् वर्षे । अवश्यं निश्चये । उषेति रात्रौ । ओमित्यङ्गीकारे ब्रह्मणि च । भूरिति पृथिव्याम् । भुव इत्यन्तरिक्षे । झटिति, ...िति, तरसा एते शैघ्र्ये । सुष्ठु प्रशंसायाम् । दुष्ठु निकृष्टे । सु पूजायाम् । ...इति कुत्सितेषदर्थयोः । अञ्जसेति तत्त्वशीघ्रार्थयोः । मिथु इति द्वावित्यर्थे । अस्त-मिति विनाशे । स्थाने इति युक्ते । वरमिति ईषदुत्कर्षे । सुदि शुक्लपक्षे । वदि ...पक्षे इत्यादि । चादीनुदाहरति—चेत्यादिना । चेति समुच्चयान्वाचयेतरेतरयोग-समाहारेषु । 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये' । हेति प्रसिद्धौ । अहेति ...याम् । एवेत्यवधारणेऽनवक्लृप्तौ च । एवमित्युक्तपरामर्शे । नूनमिति निश्चये ...र्के च । शश्वदिति पौनःपुन्ये नित्ये सहार्थे च । युगपदित्येककाले । भूयस् ...र्थे आधिक्ये च । कूपदिति प्रश्ने प्रशंसायां च । कुविदिति भूर्यर्थे प्रशंसायां च । नेदिति शङ्कायां प्रतिषेधविचारसमुच्चयेषु च । चेदिति यद्यर्थे । चण् अयं ...र्थे । णानुबन्धस्तु 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्—' इति विशेषणार्थः । समुच्च-...ति त्वननुबन्धकः । कच्चिदितीष्टप्रश्ने । यत्रेति अनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नाव-कल्पयामि न मर्षये । गर्हे आश्चर्यं वा यत्र भवान् वृषलं याजयेत् । नहेति प्रत्यारम्भे । हन्तेति हर्षे विषादेऽनुकम्पायां वाक्यारम्भे च । माकिः, माकिं, नकिरिति ...ऽपि वर्जने । माङनञौ स्वरादिषूक्तौ । इह पाठस्तु निपातत्वार्थः, तेनाद्युदात्तत्वं ...सिध्यतीति केचित् । तदसत्, फिट्स्वरेणापीष्टसिद्धेः । अन्ये त्वाहुः—सत्त्व-वचनानामप्यव्ययसंज्ञार्थं स्वरादिपाठ इति । तदप्यसत्, लक्ष्मीवाचकस्यापि माशब्द-स्याव्ययत्वापत्तेः । तस्मादुभयत्र पाठश्चिन्त्यप्रयोजनः । यावत्तावदेतौ साकल्यावधि-मानावधारणेषु । साकल्ये—यावत्कार्थं तावत्कृतम् । अवधौ—यावद्गन्तव्यं तावत्तिष्ठ । माने—यावद्दत्तं तावद्भुक्तम् । अवधारणे—यावदमत्रं तावद्ब्राह्मणानामन्त्रयस्व ।

वौषट् । स्वाहा । स्वधा । वषट् । (ओम्) । तुम् । तथाहि । खलु । किल । अथो । अथ । सुष्ठु । स्म । आदह । 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' (ग १६) । अवदत्तम् । अहंयु । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु ।

---

वौषट्, स्वाहा इदं त्रयं देवहविर्दाने । स्वधा पितृदाने । श्रौषडादीनामनेकाचां त्रयाणां स्वरभेदार्थं उभयत्र पाठः । तुम् तुङ्कारे । तथा हि निदर्शने खलु निषेधवाक्यालङ्कारनिश्चयेषु । किल इवार्थे, वार्तायाम्, अलीके च । अथ अयं मङ्गलानन्तरारम्भप्रश्नकात्स्न्यधिकारप्रतिज्ञासमुच्चयेषु । अयं स्वरादावपि । तेन मङ्गलवाचकस्य सत्त्वार्थकत्वेऽव्ययत्वम् । तथा च श्रीहर्षः—'यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम्' इति । अथ स्नपयाम्बभूव इत्यस्य मङ्गलस्नानं कारयामासेत्यर्थः । निपातश्चाथशब्दः मृदङ्गादिध्वानवद् मङ्गलम् । सुष्ठु स्वरभेदार्थः पुनः पाठः । स्म अतीते, पादपूरणे च । आदह उपक्रमहिंसाकुत्सनेषु । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । चादिगणसूत्रमेतत् । उपसर्गप्रतिरूपकाः विभक्त्यन्तप्रतिरूपकाः अच्प्रतिरूपकाश्च चादिषु पाठ्या इत्यर्थः । तत्रोपसर्गप्रतिरूपकमुदाहरति—अवदत्तम् इति । अत्र अवेत्युपसर्गप्रतिरूपकम्, न तूपसर्गः । ततश्च 'अच उपसर्गात्तः' इति तो न भवति । तादृशे तु अवत्तमिति स्यात् । अहंयुरिति । अहमिति सुबन्तप्रतिरूपकम्, अहङ्कारे । 'अहंशुभमोर्युस्' इति मत्वर्थीयो युस् । अत्र अहमिति न अस्मच्छब्दस्य प्रथमैकवचनम्, तथा सति 'प्रत्योत्तरपदयोश्च' इति मपर्यन्तस्य मदादेशे मद्युरित्यापत्तेः । अस्तिक्षीरेति । अस्ति क्षीरं यस्याः इति बहुव्रीहिः, अत्र अस्तीति तिङन्तप्रतिरूपकमव्ययम्, न तु तिङन्तम् । तथा सति बहुव्रीह्यनुपपत्तेः 'अनेकमन्यपदार्थे' इति बहुव्रीहिविधौ सुबित्यनुवृत्तेः । एवं च बहुव्रीहिविधौ 'अस्तिक्षीरेत्युपसंख्यानम्' इति वार्तिकं न कार्यमिति 'अनेकमन्यपदार्थे' इति सूत्रे भाष्ये स्पष्टम् । स्वरप्रतिरूपकानुदाहरति—अ इत्यादिना । अ सम्बोधने । आ वाक्यस्मरणयोः । इ सम्बोधनजुगुप्साविस्मयेषु ।

---

त्वै विशेषवितर्कयोः । द्वै वितर्के । न्वै इति पाठान्तरम् । रै दाने अनादरे च । ... करोति ददातीत्यर्थः । त्वं रै किं करिष्यसि । श्रौषट्, वौषट् एतौ हविर्दाने । स्वाहा देवताभ्यो दाने । स्वधेति पितृभ्यः । श्रौषडादीनामनेकाचामुभयत्र पाठः स्वरभेदार्थः । तुमिति तुंकारे । गुरुं तुंकृत्य हुंकृत्य । तथाहीति निदर्शने । खल्विति निषेधवाक्यालंकारनिश्चयेषु । किलेति वार्तायामलीके च । अथो अथेति मङ्गलानन्तरारम्भप्रश्नकात्स्न्यधिकारप्रतिज्ञासमुच्चयेषु । अयं स्वरादावपि । तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिध्यति । अत एव श्रीहर्षः—'उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे । यथाकुलाचारमथावणीन्द्रजां पुरन्ध्रिवर्गः स्नपयांबभूव ताम्' इति । अत्र हि अथ स्नपयांबभूवेत्यस्य मङ्गलस्नपनं चकारेत्यर्थः । निपातस्तु स्वरूपेणैव मङ्गलं मृदङ्गध्वनिवत् । सुष्ठु स्वरभेदार्थं पाठः । स्मेत्यतीते पादपूरणे च आदहेत्युपक्रमहिंसाकुत्सनेषु । 'आदह स्वधामन्वि' त्यत्र तु पदकारा आदिति पृथक् पदं पठन्ति । अवदत्तमिति । इह अवस्यानुपसर्गत्वात् 'अच उपसर्गात्तः' इति न भवति । अहमिति सुबन्तप्रतिरूपकमहंकारे । एवं 'गेये केन विनीतौ

शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । हैं । है । भोः । अये । द्य । विषु । एकपदे । युत् । आतः । चादिरप्याकृतिगणः ।। इति चादयः ।। ४४८ तद्धितश्चासर्वविभक्तिः ।

ई, उ, ऊ, ए, ऐ, ओ, औ, इति सप्तकं सम्बोधने । पशु सम्यगर्थे । शुकम् शैघ्रये । यथाकथाच सङ्घातोऽयमनादरे । पाट्, प्याट्, अङ्ग, हैं, है, भोः, अये एते सप्त सम्बोधने । द्य हिंसाप्रतिलोम्यपादपूरणेषु । विषु नानार्थे । एकपदे अकस्मादित्यर्थे । युत् कुत्सायाम् । आत इतोऽर्थे । चादिराकृतिगण इति । यत् तत् द्वयं हेतौ । आहोस्वित् विकल्पे । सम् सर्वतोभावे । कम् पादपूरणे । शुकम् अतिशये । अनु वितर्के । शम्वत् अन्तःकरणे, आभिमुख्ये च । व पादपूरणे इवार्थे च । चटु चाटु, द्वयं प्रियवाक्ये । हुम् भर्त्सने । इव् सादृश्ये । अद्यत्वे इदानीमित्यर्थे—इत्यादि । अत्र स्वरादिचाद्योराकृतिगणत्वेऽपि येषां निपातस्वरः इष्टः ते चादिषु, अन्ये तु स्वरादिषु, स्वरद्वयभाजस्तु उभयत्र बोध्याः।। इति चादयः ।।

अथ स्वरादिचादिभिन्नान्यव्ययान्याह—तद्धितश्चासर्वविभक्तिः । असर्वविभक्तिरिति बहुव्रीहिः । तत्र सर्वाः विभक्तयः यस्मान्न भवन्तीति बहुवचनान्तविग्रहो न संभवति, अव्ययेभ्यः सप्तानां विभक्तीनामुत्पत्त्यभ्युपगमात् । तथा हि 'तद्धितश्च' इति प्रकृतसूत्रे भाष्ये तावद् 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति सूत्रविन्यासं भङ्क्त्वा 'एकवचनम्, द्वयोर्द्विवचनम् बहुषु बहुवचनम्' इति सूत्रन्यासं कृत्वा एकवचनमुत्सर्गतः करिष्यते, द्विबह्वोरर्थयोः तस्य द्विवचनबहुवचने बाधके इत्यादि स्थितम् । ततश्च एकवचनमित्यनेन ङ्याप्प्रातिपदिकाद् एकवचनं भवतीति सामान्यविधिना द्वित्वबहुत्वाभावे एकवचनमिति लभ्यते । एवं च द्विबहुत्वाभावे सति एकत्वे तदभावे च एकवचनमिति फलति । तत्र द्वित्वबहुत्वयोः द्विवचनबहुवचनोक्त्यैव ततोऽन्यत्र एकवचनस्य सिद्धत्वाद् 'एकवचनम्' इति सूत्रं कर्मत्वाद्यभावेऽपि प्रापणार्थं संपद्यते । तथा च अलिङ्गसंख्येभ्योऽव्ययेभ्य एकवचनं प्रवर्तमानं विनिगमनाविरहात् सर्वविभक्त्येकवचनं भवति । अत एव 'अव्ययादाप्सुपः' इत्यत्र प्रत्याहारग्रहण-

वाम्' इति । युवामित्यर्थः । सुबन्तप्रतिरूपकमव्ययम् । अस्तीति तु तिङन्तप्रतिरूपकम् । एवं 'त्वामस्मि वच्मि—' इत्यत्रास्मीत्यहमर्थे तिङन्तप्रतिरूपकम् । आहेत्युवाचेत्यर्थे । आसेति बभूवेत्यर्थे । इत्यादि बोध्यम् । अहंयुरिति । 'अहंशुभमोर्युस्' । यदि तु 'त्वाहौ सौ' इति मपर्यन्तस्याहादेशे शेषलोपे च कृते निष्पन्नो योऽहंशब्दस्तस्माद्युस्प्रत्ययः क्रियेत तर्हि सुपो लुपि अस्माद्युसिति स्थिते मदीय इत्यत्रेव मपर्यन्तस्य मादेशे सति मद्युरिति स्यादिति भावः । अस्तिक्षीरेति । तिङन्तत्वे तु बहुव्रीहिसमासोऽयं नोपपद्यत इति भावः । अ इति संबोधनेऽधिक्षेपे निषेधे च । आ इति वाक्यस्मरणयोः । इ संबोधनजुगुप्साविस्मयेषु । ई उ ऊ ए ऐ ओ औ संबोधने । पशु सम्यगर्थे । 'पशु मन्यमानाः' । शुकं शैघ्र्ये । यथाकथाचेत्यनादरे । पाट्प्रभृतयः सप्त संबोधने । द्येति हिंसाप्रातिलोम्यपादपूरणेषु । विषु नानार्थे । एकपदे इत्यकस्मादित्यर्थे । युत् कुत्सायाम् । आत इति इतोऽपीत्यर्थे । आकृतिगण इति तद्यथा । यत्तदिति हेतौ । आहोस्विद्विकल्पे । सीम सर्वतोभावे । शुकमतिशये ।

(१-१-३८) यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात्। परिगणनं कर्तव्यम्—तसिलादयः प्राक्पाशपः, शस्प्रभृतयः प्राक्समासान्तेभ्यः, अम्, आम्, कृत्वोऽर्थाः, तसिवती, नानाञाविति। तेनेह न—पचतिकल्पम्। पचतिरूपम्।

४४९ कृन्मेजन्तः। (१—१—३९) कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात्।

---

मर्थवत्। तस्मात्सर्वा विभक्तयो यस्मादिति न विग्रहः। किन्तु सर्वशब्दोऽत्र सर्वः पटो दग्ध इतिवद् अवयवकात्स्र्न्ये वर्तते, एवं च सर्वा वचनत्रयात्मिका विभक्तिः यस्मान्नोत्पद्यते, किन्त्वेकवचनान्येवोत्पद्यन्ते, स तद्धितान्तोऽव्ययसंज्ञः स्यादिति फलतीत्यभिप्रेत्याह—यस्मादिति। सर्वेति। वचनत्रयात्मिकेत्यर्थः। नोत्पद्यत इति। किन्त्वेकवचनान्येवोत्पद्यन्ते इति शेषः। स्यादेतत्—तिङश्चेत्यनुवृत्तौ 'प्रशंसायां रूपप्' इति रूपप्प्रत्यये 'ईषदसमाप्तौ कल्पप्' इति कल्पप्प्रत्यये च पचतिरूपं पचतिकल्पमिति रूपम्। प्रशस्तं पचति, ईषत् पचतीत्यर्थः। अत्राप्यव्ययत्वं स्यात्, असर्वविभक्तितद्धितान्तत्वात्। किञ्च उभयशब्दे अतिव्याप्तिः, तस्याप्यसर्वविभक्तितद्धितान्तत्वादित्यत आह—परिगणनमिति। वार्तिकमेतत्। तसिलादय इति। 'पञ्चम्यास्तसिल्' इत्यारभ्य 'द्वित्र्योश्च धमुञ्' इत्यन्ता इत्यर्थः। शस्प्रभृतय इति। 'बह्वल्पार्थात्' इत्यारभ्य 'अव्यक्तानुकरणात्' इति डाजन्ता इत्यर्थः। अम्, आमिति। 'अमु च च्छन्दसि' इत्यम्, 'किमेत्तिङव्यय—' इत्याम् च गृह्यते। कृत्वोऽर्था इति। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्, द्वित्रिचतुर्भ्यःसुच्, विभाषा बहोर्धा' इति त्रय इत्यर्थः। तसिवती इति। 'तेनैकदिक्, तसिश्च' इति तसिः 'तेन तुल्यम्—' इत्यादिविहितो वतिश्च गृह्यते। 'प्रतियोगे पञ्चम्यास्तसिः' इत्यस्य तु शस्प्रभृतित्वादेव सिद्धम्। एवं च स्वरादिषु वदित्यस्य प्रयोजनं चिन्त्यम्। नानाञाविति। 'विनञ्भ्यां नानाञौ न सह' इति विहितौ नानाञौ—इति परिगणनं कर्तव्यमित्यन्वयः। गणे परिगणनेनैव सिद्धेः 'तद्धितश्च—' इति सूत्रं न कर्तव्यमिति भावः। कृन्मेजन्तः। कृत् मेजन्त इति छेदः।

---

अनुकं वितर्के। शम्बट् अन्तःकरणे आभिमुख्ये च। व पादपूरणे इवार्थे च। विष्टचेत्यानन्दे। चटु चाटु प्रियवाक्ये। हुमिति भर्त्सने। इवेति सादृश्ये। अद्यत्वे इति इदानीमित्यर्थे इत्यादि। अत्र स्वरादिचाद्योराकृतिगणत्वाविशेषेऽपि येषां निपातस्वर इष्टस्ते चादिषु अन्ये तु स्वरादिषु स्वरद्वयभाजस्तूभयत्र बोध्याः। तद्धितश्चासर्वविभक्तिः। सर्वेति। वचनत्रयात्मिकेत्यर्थः। नोत्पद्यत इति। किन्त्वेकवचनमेवोत्पद्यत इति भावः। तद्धितः किम्, एकः। द्वौ। त्रयः। असर्वेत्यादि किम्, औपगवः। ननु पञ्चालाः गोदौ वरणा इत्यादावतिप्रसङ्गः। न च 'लुब्योगाप्रत्याख्यानात्' इति वदतां नैषां तद्धितान्तत्वमङ्गीकृतमिति नातिप्रसङ्ग इति वाच्यम्। एवमपि पचतिकल्पं पचतिरूपमित्यादावतिव्याप्तेर्दुर्वारत्वादित्याशङ्क्याह—परिगणनं कर्तव्यम्। तसिलादय इति। 'पञ्चम्यास्तसिल्' इति विहितो यस्तसिल् तदादयो 'याप्ये पाशप्' इति विहितपाशप्प्रत्ययपर्यन्ता इत्यर्थः। शस्प्रभृतय इति। 'बह्वल्पार्थात्–' इति विहितो यः शस्तदादयः 'समासान्ताः' इति सूत्रपर्यन्ताः। कृत्वोऽर्था इति। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति विहिताः कृत्वसुजादयस्त्रयः।

स्मारं स्मारम् । जीवसे । पिबध्यै । ४५० क्त्वातोसुन्कसुनः । (१-१-४०)
तदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः । ४५१ अव्ययीभावश्च ।

न च एच्च मेचौ, तौ अन्ते यस्येति बहुव्रीहिः । तदाह—कृद्यो मान्त इति । तद-
न्तमिति । केवलस्य कृतः प्रयोगानर्हत्वात् संज्ञाविधावपि तदन्तविधिरिति भावः ।
स्मारं स्मारमिति । 'आभीक्ष्ण्ये णमुल् च' इति स्मृधातोर्णमुल्, 'अचो ञ्णिति'
इति वृद्धिः, रपरत्वम्, 'नित्यवीप्सयोः' इति द्वित्वम्, मान्तकृदन्तत्वादव्ययत्वम् ।
जीवसे इति । 'तुमर्थे सेसेनसे–' इत्यादिना असेप्रत्ययः । पिबध्यै इति । 'तुमर्थे
से–' इत्यादिना शध्यैप्रत्ययः, शित्त्वात् सार्वधातुकत्वम्, 'पाघ्राध्मास्थाम्नादाण्दृश्यर्ति-
सर्त्तिशदसदाम्–' इति पिबादेश इति भावः । शप् तु न, कर्त्रर्थे सार्वधातुके तद्विधेः,
'तव्ययकृतो भावे' इति सिद्धान्तादित्याहुः । क्त्वातोसुन्कसुनः । कृत्वेति । 'समा-
नकर्तृकयोः' इति क्त्वा । उदेतोरिति । उत्पूर्वादिणः 'भावलक्षणे–' इत्यादिना
तोसुन् । विसृप इति । 'सृपितृदोः कसुन्' । अव्ययीभावश्च । अव्ययसंज्ञः स्या-
दिति शेषः । अधिहरीति । विभक्त्यर्थेऽव्ययीभावः, हरावित्यर्थः । अव्ययादा-

तसिवती इति । न च तसेः परिगणनं व्यर्थम्, शस्प्रभृतित्वादेव 'प्रतियोगे पञ्चम्या-
स्तसिः' इत्यस्य लाभादिति वाच्यम् । 'तेनैकदिक्' 'तसिश्च' इत्येतदर्थतया तस्यावश्य-
कत्वात् । 'तेन तुल्यम्–' इति वतिः । नानाञाविति । 'विनञ्भ्यां नानाञौ नसह'
इति विहितौ । पचतिकल्पमिति । अव्ययसंज्ञायां हि सत्यां सुपो लुक् स्यादिति
भावः । कृन्मेजन्तः । अत्र मेजन्त इत्येतच्छ्रुतत्वात् कृत एव विशेषणं न कृदन्तस्या-
श्रुतस्य । अन्यथा प्रतामौ प्रतामः । लवमाचष्टे णौ क्विपि णिलोपे वस्योठि वृद्धौ च
लौः । अत्रापि प्रसज्येतेति भावः । भवति ह्येतत्प्रत्ययलक्षणेन कृदन्तं मेजन्तं च श्रूयते
इति, तदाह—कृद्यो मान्त एजन्त इति । स्मारंस्मारमिति । स्मरतेः
'आभीक्ष्ण्ये णमुल् च' इति णमुल्, वृद्धिः, रपरत्वम् । 'नित्यवीप्सयोः' इति
द्वित्वम् । जीवसे इति । 'तुमर्थेसेसेन–' इत्यसेप्रत्ययः । पिबध्यै इति । 'तुमर्थे–'
इत्यनेनैव शध्यैप्रत्ययः । 'पाघ्रा–' इति पिबादेशः । 'येन विधिस्तदन्तस्य' इत्यनेनैव
सिद्धे सूत्रे अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम्, तेनेह न, आधये, चिकीर्षवे । लक्षण-
प्रतिपदोक्तसंनिपातपरिभाषाभ्यां सिद्धे तयोरनित्यत्वज्ञापनायेदमिति मनोरमायां स्थितम्।
एतच्च 'अव्ययादाप्सुपः' इत्यत्र 'अव्ययात्परस्य सुपो लुक्' इति यथाश्रुतव्याख्यानम-
भिप्रेत्योक्तम् । अव्ययाद्विहितस्येति व्याख्याने त्वाधये इत्यादौ अव्ययसंज्ञायामनिष्टा-
पत्तेरमूह्यम् । क्त्वातोऽसुन्कसुनः । कृत्वेति । 'समानकर्तृकयोः–' इत्यादिना
क्त्वा । उदेतोरिति । उत्पूर्वादिणो 'भावलक्षणे स्थेण्–' इत्यादिना तोसुन् । विसृप
इति । 'सृपितृदोः कसुन्' । अव्ययीभावश्च । अव्ययसंज्ञः स्यात् । इह लुकि
मुखस्वरोपचारयोर्निवृत्तौ चेति परिगणनं कर्तव्यम् । लुक्युदाहरणम्—उपाग्नि । 'अव्य-
याद्–' इति सुपो लुक् । मुखस्वरनिवृत्तौ उदाहरणम्—उपाग्निमुखः, प्रत्यग्निमुखः ।
'मुखं स्वाङ्गम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नाव्ययदिक्शब्द–' इत्यादिना प्रतिषेधः ।
तथा च 'बहुव्रीहौ प्रकृत्या–' इति पूर्वशब्दप्रकृतिस्वर एव भवति, पूर्वपदं च समास-

(१—१—४१) अधिहरि । ४५२ अव्ययादाप्सुपः । (२—४—८२) अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् । तत्र शालायाम् । विहितविशेषणान्नेह—अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति, तथापि न गौणे । 'आब्ग्रहणं व्यर्थमलिङ्गत्वात्' (वा १६३३) ।

---

प्सुपः । आप् च सुप् च आप्सुप्, तस्य आप्सुपः, समाहारद्वन्द्वात् षष्ठी । 'ण्यक्षत्रियार्ष–' इत्यतो लुगित्यनुवर्तते । तदाह—अव्ययाद्विहितस्येति । तत्र शालायामिति । तत्रेत्यस्याव्ययत्वाद् आपो लुक् । स्त्रीत्वबोधनाय शालायामिति । अर्थेति । अत्र सुपो लुक् । विहितेति । अव्ययात्परस्येत्यनुक्त्वा अव्ययाद्विहितस्येति व्याख्यानादिति भावः । अत्युच्चैसाविति । उच्चैरतिक्रान्त इति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । अधिकरणशक्तिप्रधानान्यव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि भवन्ति, यथा दोषामन्यमहः, दिवाभूता रात्रिरिति । अतो द्वितीयासम्भवाद् 'अत्यादयः–' इति द्वितीयासमासस्याविरोधः । अत्र समासाद्विहितस्य सुपः अव्ययभूतादुच्चैश्शब्दात् परत्वेऽपि ततो विहितत्वाभावाद् न लुक् । अत्युच्चैरिति समुदायस्य तु नाव्ययत्वम्, स्वरादिगणे उच्चैश्शब्दस्य केवलस्य पाठादिति भावः । ननु स्वरादिगणे केवलोच्चैश्शब्दस्य पाठेऽपि 'स्वरादिनिपातमव्ययम्' इति अव्ययसंज्ञा भवत्येव, 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति वचनादित्याशङ्कते—अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्तीति । परिहरति—तथापि न गौण इति । सर्वनामसंज्ञायामुपसर्जनस्य नेति प्रकृतः प्रतिषेधः अव्ययसंज्ञाविधावनुवर्तत इति 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे भाष्ये स्पष्टमिति भावः । आब्ग्रहणं व्यर्थमिति । 'अव्ययादा-

---

स्वरेणान्तोदात्तम् । विसर्गस्थानिकस्य सकारस्य उपचार इति प्राचां संज्ञा तन्निवृत्तावुदाहरणम् । उपपयःकारः । उपपयःकामः । इह 'अतः कृकमि–' इति प्राप्तं सत्त्वम् 'अनव्ययस्य' इति पर्युदस्यते । परिगणनं किम्, उपाग्न्यधीयान । इह 'सुबामन्त्रिते' इति पराङ्गवद्भावेन षाष्ठम् 'आमन्त्रितस्य च' इत्याद्युदात्तत्वं यथा स्यात् । पराङ्गवद्भावे हि अव्ययानां प्रतिषेध उपसंख्यातः, उपाग्न्यधीयानेत्यादौ मा भूदिति । तथा उपाग्निकमित्यादौ 'अव्ययसर्वनाम्नाम्–' इत्यकच्च न । उपकुम्भंमन्यः । 'खित्यनव्ययस्य' इति वर्तमाने 'अरुर्द्विषदजन्तस्य–' इति विहितो यो मुम् तस्येह प्रतिषेधो न । उपकुम्भीभूतः । इह 'अस्य च्वौ' इतीत्वस्य प्रतिषेधो न । इत्वविधौ हि 'अव्ययस्य च्वावितीत्वं न' इति प्रतिषेध उच्यते दोषाभूतमहः, दिवाभूता रात्रिरित्यत्र मा भूदिति । स्यादेतत्, स्वरादित्वेनैव सिद्धत्वात् 'तद्धितश्च–' इत्यादि चतुःसूत्री व्यर्था । तत्र हि 'तसिलादिस्तद्धित एधाच्पर्यन्तः' इत्यादिना 'च्व्यर्थाश्च' इत्यन्तेनासिप्रत्ययमौणादिकं वर्जयित्वा 'तद्धितश्चासर्वविभक्तिः' इत्यस्यार्थः संगृह्यते । 'कृन्मकारसंध्यक्षरान्तः' इत्यनेन 'कृन्मेजन्तः' इत्यस्यार्थः संगृह्यते । 'क्त्वातोऽसुन्कसुनः' 'अव्ययीभावश्च' इति सूत्रद्वयं तु स्वरूपेणैव पठ्यत इति अत्राहुः—पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेन प्राग्भ्रुक्तं 'लुङ्मुखस्वरोपचाराः' इति परिगणनं लभ्यते । 'पुरा सूर्यस्योदेतोराधेयः' । 'पुरा क्रूरस्य विसृपो विरप्शिन्' इत्यादिसिद्धये, 'न लोकाव्यय–' इत्यत्र 'अव्ययप्रतिषेधे तोसु-

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥'

इति [ भाष्योक्ता ] श्रुतिर्लिङ्गकारकसंख्याभावपरा ॥
'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।

---

सुपः' इति सूत्रे इति शेषः । अलिङ्गत्वादिति । अव्ययानां लिङ्गाभावादित्यर्थः । तथा च वार्तिकम्, 'अव्ययादाब्लुग्वचनानर्थक्यं लिङ्गाभावात्' इति । तथा 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे भाष्येऽप्युक्तम्—स्त्रीपुंनपुंसकत्वानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च । एतानर्थान् ये न वियन्ति तदव्ययमिति । ननु अव्ययानां लिङ्गाभावे 'सदृशं त्रिषु लिङ्गेषु–' इत्याथर्वणश्रुतिविरोध इत्याशङ्क्य परिहरति—सदृशमिति । त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु सर्वेषु वचनेषु च यद् न व्येति– विकारं न प्राप्नोति, किन्तु सदृशम् एकप्रकारमेव भवति, तदव्ययमिति आथर्वणश्रुतियोजना । अत्र विभक्तिवचनशब्दौ कारकसंख्यापरौ, न तु प्रत्ययपरौ, अन्यतरग्रहणवैयर्थ्यात् । लिङ्गकारकेति । लिङ्गकारकसंख्याभावः परः तात्पर्यविषयभूतो यस्या इति विग्रहः । लिङ्गेष्वित्यादिषु सप्तमी हि 'षष्ठी चानादरे' इति विहिता । तथा च लिङ्गकारकसंख्याः अनादृत्य यत् व्येति–विकारं न प्राप्नोति, किन्तु सदृशम्–एकप्रकारमेव भवति, तदव्ययमित्युदाहृतश्रुतेरर्थः । 'तद्धिश्चासर्वविभक्तिः' इति सूत्रभाष्ये 'स्त्रीपुंनपुंसकत्वानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च एतानर्थान् ये न वियन्ति तदव्ययम्' इत्युपक्षिप्य तत्र प्रमाणतया अस्याः श्रुतेरुदाहृतत्वादिति भावः । अयं च लिङ्गकारकसंख्याभावनियमो निपातानामेव, स्वरादीनां तु कतिपयानां लिङ्गकारकसंख्यान्वयोऽस्त्येव 'स्वरादिनिपातमव्य-

---

यं कसुनोरप्रतिषेध इति वक्ष्यते तदप्यनेनैव लभ्यत इति । अव्ययादाप्सुपः । 'ण्यक्षत्रियार्ष–' इति सूत्राल्लुगत्रानुवर्तत इत्याह—लुक् स्यादिति । अव्ययमिति महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थम् । न व्येति विविधं विकारं न गच्छति । सत्त्वधर्मान् लिङ्गसंख्यादीन्न गृह्णातीति यावत् । तेनात्युच्चैसौ अत्युच्चैसः इत्यादिसिद्धिः । अतिक्रान्तप्रधानत्वेन सत्त्वधर्मपरिग्रहादव्ययसंज्ञाया अत्राभावात् । नन्वेवमप्युच्चैःशब्दस्याव्ययत्वानपायात् सुपो लुक् दुर्वार इत्यत आह—विहितविशेषणादिति । अत्युच्चैसाविति । ननु अत्यादयः क्रान्ताद्यर्थे द्वितीयान्तेन समस्यन्ते, उच्चैः शब्दस्त्वधिकरणशक्तिमत्प्रधान इति कर्मत्वायोगान्न तस्य द्वितीयान्तता । सत्यम्, शक्तिप्रधानान्यपि कानिचिदव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि क्वचिद् भवन्ति । यथा दोषामन्यमहः । दिवामन्या रात्रिरिति । ततश्च प्रकियादशायामुच्चैः शब्दस्य द्वितीयान्तत्वं संभवतीति दिक् । ननु स्वरादिषु उच्चैःशब्दः पठ्यते तत्र कथं तदन्तस्य प्रसङ्ग इति चेन्न । अन्वर्थसंज्ञयैव तदन्तविधेरपि ज्ञापनात् । अन्यथा उपसर्जने प्रसङ्गाभावेन तन्निवृत्त्यर्थया अन्वर्थसंज्ञाया वैयर्थ्यापत्तेः । तेन परमस्वः परमोच्चैरित्यादौ सत्त्वधर्मापरिग्रहादव्ययत्वं सिद्धम्, तदेतदाह—अव्ययसंज्ञायां यद्यपीत्यादि । 'अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात्' इति वार्तिकं मनसि निधायाह—आब्ग्रहणं व्यर्थमिति । सूत्रस्योक्तिसंभवस्तु 'स्त्रियाम्' इति सूत्रे स्त्रीसमानाधिकरणादिति पक्षं गृहीत्वेति बोध्यः । स च

आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥'

वगाहः—अवगाहः । पिधानम्—अपिधानम् ॥

इत्यव्ययप्रकरणम् ।

---

यम्' इति सूत्रे भाष्ये 'चादीनामसत्त्ववचनानामेव संज्ञा । स्वरादीनां तु सत्त्ववचनानामसत्त्ववचनानां च' इत्युक्तत्वात्, स्वस्ति वाचयति, स्वस्ति वाच्य इति, क्षीणे पुण्ये स्वः पतति, प्रातर्यजते इत्यादौ कर्मकारकयोगदर्शनाच्च । अथ प्रसङ्गादाह—वष्टीति । अव अपि इत्युपसर्गयोः अकारस्य लोपं हलन्तानाम् आपं च भागुरिनामक आचार्यो वष्टि, इच्छतीत्यर्थः । एवशब्दस्तु पादपूरणः । अवेत्युपसर्गे आदेरेवाकारस्य लोपो नान्त्यस्य अपिना साहचर्यात् । भागुरिशब्दं दन्त्योष्ठ्यादिं केचित्पठन्ति । तत्त्वबोधिन्यां तु पवर्गचतुर्थादिः पठितः । शब्देन्दुशेखरेऽप्येवम् । यथा वाचेति । परिगणनमिति केचित्। उदाहरणमात्रमित्यन्ये । यद्यपि 'वश कान्तौ' इत्यस्य छन्दोमात्रविषयत्वं वक्ष्यते, तथापि अस्मादेव लिङ्गाल्लोकेऽपीत्याहुः । वस्तुतस्तु वष्टि भागुरिरिति श्लोको भाष्ये न दृश्यते। प्रत्युत 'ङ्याप्प्रातिपदिकात्' इति सूत्रस्थभाष्यपर्यालोचनया नास्तीत्येव युक्तम् । तत्र ह्येवमुक्तम्—'आब्ग्रहणं न कार्यम्, खट्वा मालेत्यादौ अन्तवत्त्वेन प्रातिपदिकत्वादेव सिद्धम् इत्युक्त्वा, क्रुञ्चा उष्णिहा देवविशेति हलन्तात् टापः स्वाद्यर्थमाब्ग्रहणमस्त्विति आक्षिप्य 'क्रुञ्चानालभेत उष्णिहककुभौ देवविशं च' इति अकारान्तादेव तत्रापि टाबित्युक्त्वा 'डाबुभाभ्यामत्यतरस्याम्' इति बहुराजा, बहुराजे, बहुराजाः इत्यर्थम् आब्ग्रहणमिति समाहितम् । तस्मात् 'आपं चैव हलन्तानाम्' इत्याश्रित्य वाचा निशा दिशेत्युक्तम् । अत्र निश्दिशोरिगुपधलक्षणे के अदन्तत्वाट्टापि निशा इत्यादिरूपसंभवेऽपि वाचाशब्दः असाधुरेवेति शब्देन्दुशेखरे स्थितम् ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां-
बालमनोरमाख्यायाम् अव्ययनिरूपणं समाप्तम् ।

---

न स्थितः, भूतमियं ब्राह्मणीत्यादावतिव्याप्तेः । यदि तु 'आमः' इति सूत्रानन्तरं 'सुपो धातुप्रातिपदिकयोः अव्ययात्' इति सूत्र्यते तदा सुब्ग्रहणमपि व्यर्थम्, सुप इत्यनुवृत्तिसंभवादिति नव्याः । अलिङ्गत्वे आथर्वणप्रणवविद्यागतश्रुतिविरोधमाशङ्क्याह—सदृशमिति । एतेषु यन्न व्येति किन्तु सदृशम् एकप्रकारं तदव्ययमिति योजना। यद्वा, यस्मान्न व्येति तदव्ययम् । लिङ्गसंख्याकारकेति । विभक्तिवचनशब्दौ कारकसंख्यापराविति भावः । यद्यप्यव्ययीभावस्य लिङ्गसंख्याकारकयोगोऽस्ति तथापि वचनादव्ययत्वम् । अव्ययविशेषे कार्यान्तरमाह—वष्टीति । भागुरिराचार्यः । आपं चैवेति । वष्टीत्यनुषज्यते । यथा वाचेति । परिगणनमिदमित्येके । अन्ये तूदाहरणमात्रमित्याहुः । वगाह इति । अपिना साहचर्यादादिरेवाकारो लुप्यते नान्त्य इति भावः ।

॥ इति तत्त्वबोधिन्यामव्ययप्रकरणम् ॥

# अथ स्त्रीप्रत्ययप्रकरणम् ।१५।

४५३ स्त्रियाम् । (४-१-३) अधिकारोऽयम् । समर्थानामिति यावत् ।

अथ स्त्रीप्रत्यया निरूप्यन्ते । तदेवम् 'ङ्याप्प्रातिपदिकात्' इत्यधिकृत्य 'स्वौजसमौट्–' इति सूत्रं सप्रपञ्चं निरूप्य तदुत्तरमनुक्रान्तान् स्त्रीप्रत्ययान्निरूपयितु- –स्त्रियाम् । अधिकारोऽयमिति । 'अजाद्यतष्टाप्' इत्याद्युत्तरसूत्रेष्वनु- र्तमिदं सूत्रम्, न तु स्वतन्त्रविधिरित्यर्थः । कियत्पर्यन्तमयमधिकार इत्यत आह— ति । यावदित्यवधौ । 'समर्थानां प्रथमात्–' इत्यतः प्रागित्यर्थः । अत्रेदमवधेयम्–

'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥'

इति लक्षणलक्षितम् अवयवसंस्थानविशेषात्मकं लौकिकं स्त्रीपुंसयोर्लिङ्गम् । तद- तयोरुभयोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकमित्यर्थः । तदिदं लौकिकं स्मिन् शास्त्रे नोपयुज्यते, तस्य अचेतने खट्वामालादौ बाधात् स्त्रीप्रत्ययानापत्तेः, नित्यादौ 'तस्माच्छसो नः पुंसि' इति नत्वानापत्तेश्च । किं तु सत्त्वरजस्तमसां गुणानां वृद्धिः पुंस्त्वम्, अपचयः स्त्रीत्वम्, स्थितिमात्रं नपुंसकत्वम् । अत एव र्षापकर्षसत्त्वेऽपि स्थितिमात्रमादाय सामान्ये 'नपुंसकम्' इति प्रवादः । उत्कर्षा- साम्यात्मकावस्थात्रयसाधारणस्थितिमात्रविवक्षायां नपुंसकं भवतीति तदर्थः । ईदृश त्रयं केवलान्वयि, अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु–इति व्यवहारस्य सार्वत्रि तात् । तच्चेदं लिङ्गमर्थनिष्ठमेव । तदुक्तं भाष्ये–'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्य- यवयवान्यत्वाच्च' इति । एकस्मिन्नेवार्थे पुष्यः, तारका[1] नक्षत्रम् इति शब्दनाना- नात्, कुटीकुटीरादौ रेफाद्यवयवोपजनने लिङ्गभेददर्शनाच्च स्तनकेशाद्यतिरिक्तमेव ङ्गमित्यर्थ इति कैयटः । पुंलिङ्गः शब्द इत्यादिव्यवहारस्तु वाच्यवाचकयोर- पचाराद्बोध्यः । न च उपचयादिधर्माणां विरुद्धत्वादेकत्र समावेशायोगादेकस्य लिङ्गताऽनापत्तिरिति वाच्यम्, एकैकस्मिन् वस्तुनि क्षणभेदेन त्रयाणां णामपि समावेशोपपत्तेः । उक्तं च भाष्ये–'कश्चिदपि सत्त्वादिधर्मः क्वचिन्मुहूर्त- नावतिष्ठते, यावदनेन वर्धितव्यमपायेन वा युज्यते' इति । न चैवं सति द् द्विलिङ्गत्वानापत्तिरिति वाच्यम्, न हि व्यवहारे स्वसमकालिकपदार्थसत्ता योजिका, तथा सति भूतभविष्वद्व्यवहारोच्छेदापातात् । तत्र कश्चिच्छब्दः लिङ्गविशिष्ट एवार्थे प्रयोज्यः, कश्चित्तु द्विलिङ्गे, कश्चित्तु त्रिलिङ्गे इत्येतत्तु ङ्गानुशासनशास्त्रादवगन्तव्यम् एषां पुंस्त्रीनपुंसकशब्दानां वृद्ध्यादिशब्दवदस्मिन् संकेतश्च लिङ्गानुशासनत एव ज्ञेयः । उक्तं च भाष्ये 'अवश्यं तावत् त् स्वकृतान्त आस्थेयः' इति, वैयाकरणसिद्धान्त इत्यर्थः । 'कृतान्तौ यम- द्धान्तौ' इत्यमरः । तत्र टिघुभादिसंज्ञावल्लघुसंज्ञामकृत्वा महासंज्ञाकरणसामर्थ्यात् संभवे स्तनकेशवतीत्यादिलौकिकं लिङ्गमप्यत्राश्रीयते । अन्यथा 'पशुना यजेत, त्र स्त्रीव्यक्तावपि सत्त्वाद्युपचयात्मकपुंस्त्वाद्यनपायाद् 'आङो नाऽस्त्रियाम्' इति

१ पुष्यस्तारका तारकं नक्षत्रम्–इति क ।

४५४ अजाद्यतष्टाप् (४-१-४) अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं त
द्योत्ये टाप् स्यात् । अजाद्युक्तिर्ङीषो ङीपश्च बाधनाय । अजा । अतः, खट्वा ।

नाभावस्याविरोधात् स्त्रीपशुरप्यालभ्येत । तदेतच्चतुर्थस्य प्रथमपादे 'तथालिङ्गम्' इ
धिकरणे अध्वरमीमांसाकुतूहलवृत्तावबोचाम । त्रिविधमपि एतल्लिङ्गं जातिव्यक्तिवत्
तिपदिकार्थं एव । प्रत्यार्थत्वे प्राधान्यपत्तौ अजा, खट्वा इत्यादौ स्त्रीत्वविशिष्टतादात्म्ये
वच्छिन्नाजादिबोधोऽनुभवसिद्धो विरुध्येत । किं च मातृदुहितृस्वसृगवादिशब्देषु विन
टावादिप्रत्ययं स्त्रीत्वविशिष्टार्थस्य बोधात् प्रातिपदिकस्य तत्र शक्त्यावश्यकत्वे टावा
नामपि शक्तिकल्पने गौरवम् । 'ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः, प्रावृड्विप्
रुक्त्विषः' इत्यादिलिङ्गानुशासनसूत्राण्यपि प्रकृतिविषयाण्येव दृश्यन्ते । अत एव च 'इ
कारादक्तिनः' इत्यत्र अक्तिन इत्येतदर्थवत् । अन्यथा क्तिनैव स्त्रीत्वस्योक्तत्वाद् ङी
ऽप्राप्तेः तद्वैयर्थ्यं स्पष्टमेव । न चैवमपि प्रकृत्यैव स्त्रीत्वस्योक्तत्वात् कथं टावाद
वाच्यम्, द्वावित्यादिवत् प्रकृत्युक्तस्याव्यावर्तकत्वात्, अन्यथा टावादिविधिवैयर्थ्यं
तथा च स्त्रीत्वमिह प्रातिपदिकस्यैव वाच्यम्, टावादयस्तु तद्द्योतकाः । तथा
टावादिषु सत्सु अवश्यं स्त्रीत्वबोध इति नियमः, न तु टावादिषु सत्स्वेवेति नि
इति । अजाद्यतष्टाप् । अजः आदिर्येषां ते अजादयः ते च अच्चेति स
हारद्वन्द्वात् षष्ठी । 'ङ्याप्प्रातिपदिकात्' इत्यतः प्रातिपदिकादित्यनुवृत्तं षष्ठ्या विप
तम् अजादिभिः अता च विशेष्यते, तदन्तविधिः । तत्राद्विषये 'समासप्रत्ययवि
तदन्तविधेः प्रतिषेधो वक्तव्यः' इति निषेधो न, 'उगिद्वर्णग्रहणवर्जम्' इत्यु
ङ्याब्ग्रहणं तु नानुवर्तते, 'स्त्रियाम्' इत्यधिकारे तयोर्विधेयत्वात् । न च अजादि
प्रातिपदिकस्य विशेषणेऽपि तदन्तविधिर्नास्ति, 'समासप्रत्ययविधौ-' इति निषे
'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति च निषेधादिति वाच्यम्, 'शूद्रा
महत्पूर्वा जातिः' इत्यत्र अमहत्पूर्वेति वचनेनात्र तदन्तविधिज्ञापनात् । किं च लि
व्यक्तौ गम्यमानायामिति नार्थः, तर्हि अजा खट्वेत्यादौ अजत्वाद्याकारेण वस्तुतः
व्यक्तौ गम्यमानायां टावादिप्रत्ययाः स्युः । ततश्च टावादिप्रत्ययेषु प्रयुज्यमानेषु स्त्रीत्व
भानं न नियतं स्यात् । अतः स्त्रियामिति भावप्रधानो निर्देशः—स्त्रीत्वे इति याव
तदाह—अजादीनामित्यादिना । अजाद्यन्तानामित्यर्थः । द्योत्ये इति । उक्तरी
स्त्रीत्वस्य प्रातिपदिकार्थत्वादिति भावः । उक्तं च भाष्ये—'स्त्रियां यत् प्रातिपदि
वर्तते तस्माट्टावादयो भवन्ति स्वार्थे' इति । टाप् स्यादिति । प्रत्ययः, परश्च इत्य
कृतम् । कस्मात् परो भवतीत्याकाङ्क्षायां सन्निधानाद् अजादिभ्यः अदन्ताच्चेति बोध्
ननु अजादिगणे अज, अश्व इत्याद्यदन्तपाठो व्यर्थः, अदन्तत्वादेव सिद्धेरित्यत आ
अजाद्युक्तिरिति । 'वयसि प्रथमे' 'जातेरस्त्रीविषयात्-' इत्यादिवक्ष्यमाणस्य ङी

अजाद्यतः । अजशब्दः आदिर्यस्येति बहुव्रीहिः । अच् आदिर्यस्येति
नार्थः । 'ऋचि' इति निर्देशात्, गणपाठसामर्थ्याच्च । अदिति न स्वरूपग्रह
'संख्याया-' इति लिङ्गात्, अजादिभ्यः पृथक्पाठसामर्थ्याच्च । इह 'ङ्याप्प्राति
कात्' इत्यधिकारेऽपि ङ्यापौ न संबध्येते इहैव तयोर्विधेयत्वात्, अपि तु प्राति

[...]स्य अदन्तटावपवादस्य बाधनार्थमजादिग्रहणमित्यर्थः। एवं च अदन्तटावपवादौ [...]षौ, तयोरप्यजादिटावपवाद इति फलति। अजशब्दः छागजातौ वर्तते। 'अजा [...] तुभच्छागवस्तच्छगलका अजे' इत्यमरः। अज शब्दात् टाप्, टपावितौ, सवर्ण- [...]। व्यपदेशिवत्त्वाद् अजान्तत्वम्। अत इति। उदाहरणं वक्ष्यत इति शेषः। [...]ति। 'खट कांक्षायाम्' 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' खट्वशब्दः [...], तस्मात् टापि सवर्णदीर्घः। 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः। [...] 'प्रत्ययः परश्च' इत्यनुवृत्तौ दिग्योगपञ्चम्या युक्तत्वाद् अजादिभ्यः अतश्च टाप् [...] स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः। तथा च 'अजाद्यतः' षष्ठ्याश्रयणमयुक्तमित्यत

---

[...]। तच्चाकारेण विशिष्यते विशेषणेन तदन्तत्वलाभः, तदाह—अजादीनाम- [...]न्तस्य चेति। सूत्रे 'अतः' इति षष्ठी। तदर्थश्च वाच्यवाचकभावः। स्त्रिया- [...] नु धर्मप्रधानो निर्देश इत्याशयेनाह— वाच्यं यत् स्त्रीत्वमिति। एतच्च लिङ्गं [...]दिकार्थं इति पक्षाभिप्रायेणोक्तम्। कस्माद्भवतीत्याङ्क्षायां सन्निधानादजादि- [...]कारान्तच्चेति बोध्यम्। 'इको यणचि' इत्यत्र कस्मादचि पर इत्याकाङ्क्षाया- [...] इति यथा। टापः पकारः स्वरार्थः, 'औङ आपः', 'आङि चापः', 'याडापः', [...]दौ सामान्यग्रहणार्थश्च। तद्विधानार्थष्टकारः। आबित्युक्ते हि तदनुबन्धपरिभाषया [...]ङ आपः' इत्यादावयमेव गृह्येत, डाप्चाषोस्तु ग्रहणं न स्यात्। नन्वत इत्वेव सिद्धे [...]जादिग्रहणं व्यर्थम्। न च क्रुञ्चा उष्णिहा देवविशा इत्यादिषु हलन्तत्वादप्राप्ते विध्यर्थं [...]ति वाच्यम्। तथा हि सति क्रुञ्चेत्यादिरेव गृह्येत, न त्वजादिरतो व्याचष्टे— [...]बुक्तिर्ङीषो ङीपश्चेति। खट्वेति। 'खट् काङ्क्षायाम्' 'अशूप्रुषिलटिखटि- [...]विशिभ्यः क्वन्'। नन्वचेतनानां खट्वादिशब्दानां कथं लिङ्गव्यवस्थेति चेत्। [...]च्यते—लोकप्रसिद्धं स्तनाद्यवयवसंस्थानविशेषात्मकं लिङ्गं न व्याकरणे आश्री- [...], दारानित्यादौ नत्वाभावप्रसङ्गात्, तटस्तटी तटमित्यादौ यथायथं लिङ्गत्रितयनि- [...]बन्धनकार्याणामसिद्धिप्रसङ्गाच्च, किन्तु पारिभाषिकमेव लिङ्गत्रयम्। तच्च केवलान्वयि। [...]समयं इयं व्यक्तिरिदं वस्त्विति शब्दानां सर्वत्राप्रतिबद्धप्रसरत्वात्। तत्र कश्चिच्छब्द [...]स्मिँल्लिङ्गे शक्तः कश्चिद् द्वयोः कश्चित् त्रिषु इति लिङ्गानुशासनादिभ्यो निर्णयम्। [...]मारब्राह्मणादिशब्दास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः। लौकिकस्त्रीत्व- [...]शिष्टे च शास्त्रीयस्त्रीत्वे। कथमन्यथा कुमारी कुमार इत्यादयः प्रयोगा व्यवतिष्ठेरन्। [...]रेणुरिस्यां स्त्री नेमे' इत्यमरस्याप्ययमेवार्थः। नन्वेवं पशुनेति पुंस्त्वं विवक्षित- [...]मिति मीमांसकोद्घोषः कथं योज्यः। पारिभाषिकस्याव्यावर्तकतया तद्विवक्षाया अकि- [...]ञ्चित्करत्वात्। लौकिकस्य तु लिङ्गस्य पशुशब्दादप्रतीतेरिति चेत्। अत्राहुः—'छागो [...] मन्त्रवर्णात्' इति षष्ठान्त्याधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यश्छागशब्दस्य [...]लौकिकपुंस्त्वविशिष्टपारिभाषिके शक्तत्वादिति। तच्च जातित्रयमित्येके। उक्तं च [...]हरिणा—'तिस्रो जातय एवैताः केषाञ्चित्समवस्थिताः। अविरुद्धा विरुद्धाभिर्गोमनुष्या- [...]दिजातिभिः'। भाष्ये तु प्रकारान्तरमुक्तम्—'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृता- [...]न्ततः। संस्त्याने स्त्यायतेर्ड्ट् स्त्री सूतेः सप् प्रसवे पुमान्। उभयोरन्तरं यच्च तदभावे

अजादिभिः स्त्रीत्वस्य विशेषणान्नेह—पञ्चाजी । 'द्विगोः' (सू ४७९) इति ङीप् । अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् । अजा । एडका । अश्वा । चटका । मूषिका ।

आह—अजादिभिरिति । अजाद्यत इति षष्ठीमाश्रित्य अजादीनाम् अदन्तानां वाच्ये स्त्रीत्वे टाबित्येवम् अजादिभिः स्त्रीत्वस्य विशेषणादित्यर्थः । पञ्चाजीति । पञ्चानामजानां समाहारः इति विग्रहे 'तद्धितार्थ—' इत्यादिना द्विगुः, 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वम्, 'द्विगोः' इति ङीप्, 'यस्येति च' इत्यकारलोपः । नन्वत्र समासे अजशब्दसत्त्वाद्वाच्यमेव स्त्रीत्वमित्यत आह—अत्रेति । हि यतः अत्र पञ्चाजशब्दे समासार्थभूतो यः समाहारः तन्निष्ठं स्त्रीत्वं पञ्चाजेति समुदायस्य वाच्यं नत्वजशब्दस्य, अतोऽत्र न टाबित्यत्यर्थः । न चोक्तरीत्या तदन्तविधिसत्त्वादजशब्दान्तस्य पञ्चाजेति समासस्य ग्रहणात् तद्वाच्यत्वं स्त्रीत्वस्येति वाच्यम्, सत्यपि तदन्तविधौ अजादीनां श्रुतत्वेन स्त्रीत्वस्य तद्विशेषणताया एव न्याय्यत्वात् । अजादिभिः स्त्रीत्वे द्योत्ये इति व्याख्याने तु स्त्रीत्वस्य अजादिशब्दवाच्यत्वालाभात् समाहारनिष्ठमपि स्त्रीत्वमादाय टाप् स्यादिति भावः ।

अथाजादीनुदाहरति—अजेत्यादिना । एडकेति । 'मेढोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः । अस्य स्त्रीत्वे कोशान्तरं मृग्यम् । अश्वेति 'वामी वडवा' इत्यमरः । चटकेति । चटकः पक्षिजातिविशेषः । अस्य जातिशब्दस्य स्त्रीत्वं मृग्यम् । अमरस्तु 'चटकः कलविङ्कः स्यात्तस्य स्त्री चटका' इत्याह । मूषिकेति ।

नपुंसकम्' इति । अस्यायमर्थः—संस्त्यानं स्त्रीसत्त्वरजस्तमोलक्षणानां गुणानामपचयः, प्रसवो गुणानामुपचयः । सप् पुमान् । सूतेर्धातोः सप् सकारस्य पकारादेश इत्यर्थः औणादिकोमसुन्प्रत्ययो ह्रस्वश्च बाहुलकादिति कैयटः । 'पूञो डुमसुन्' इति माधवः । तयोरुपचयापचययोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकं 'नभ्राणनपाद—' इति निपातनादिति भावः । तथावस्थितिसाम्यं नपुंसकम् । तत एवाविर्भावतिरोभावयोरवस्थितिसामान्यविवक्षासंभवान्नपुंसकलिङ्गं सर्वनामेति सिद्धान्तः । स्त्रीपुमान्नपुंसकमिति शब्दाश्च शुक्लादिशब्दवद्धर्मे धर्मिणि च वर्तन्ते । स्वकृतान्तत इति—वैयाकरणसिद्धान्तत इत्यर्थः । 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः । पञ्चाजीति । पञ्चानामजानां समाहार इति 'तद्धितार्थ—' इत्यादिना द्विगुः । 'अकारान्तोत्तरपदः—' इति स्त्रीत्वम्, 'द्विगोः' इति ङीप् । न चात्र प्रत्ययविधौ तदन्तविधिविरहादेव टापोऽप्रवृत्तौ इदं व्यर्थं स्यादिति वाच्यम् । अमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च स्त्रीप्रत्ययेषु तदन्तविधेर्ज्ञापनाट्टाप्प्राप्तेः सत्त्वात् । समासार्थसमाहारनिष्ठमिति । नन्वजहत्स्वार्थायां वृत्तौ समाहारोऽप्यजाद्यर्थ एवेति चेत् । मैवम्, तथापि तस्य पदान्तरसमभिव्याहारापेक्षया बहिरङ्गत्वात्, टाब्विधेस्त्वन्तरङ्गे चरितार्थत्वात् । कथं तर्हि परमाजेति ? प्रागुत्पन्नस्यैव टापस्तत्र श्रवणात् । अत्यजा निरजेत्यत्र त्वदन्तत्वप्रयुक्तष्टाबिति न च पञ्चाजीत्यत्रापि तथास्त्विति वाच्यम् । 'द्विगोः' इति ङीपा बाधितत्वात् । एडकेति । न चात्र 'प्रत्ययस्थात्—' इतीकारः शङ्क्यः । 'चटकाया ऐरक्' इति निर्देशादिहैव निपातनाद्वा तदप्रवृत्तेः । एवं च क्षिपकादिषु चटकेति पठनं नातीवावश्यकम् ।

जातिलक्षणो ङीष् प्राप्तः। वाला। वत्सा। होढा। मन्दा। विलाता। एषु ...सि प्रथमे' (सू ४७८) इति ङीप् प्राप्तः। 'सम्भस्त्राजिनशणपिण्डेभ्यः फलात् ...२४९९)। सम्फला। भस्त्रफला 'ङ्यापोः—' (सू १००१) इति ह्रस्वः। 'सद-...प्रान्तशतैकेभ्यः पुष्पात्' (वा १४२६)। सत्पुष्पा। प्राक्पुष्पा। प्रत्यक्पुष्पा।

...न्दरी गन्धमूषी दीर्घदेही तु मूषिका' इत्यमरः। एषु जातीति। अजादिपञ्चसु ...तस्त्री—' इति ङीष् प्राप्तः। सः अजादिटापा वाध्यत इत्यर्थः। वालादयः प्रथम-...वचनाः, तत्र होढादित्रयस्य प्रथमवयोवाचित्वे कोशो मृग्यः। एष्विति। वालादि...षु,'वयसि प्रथमे' इति ङीप् प्राप्तः। सः अजादिटापा वाध्यत इत्यर्थः। सम्भस्त्रेति। ...कर्ण—' इति सूत्रभाष्ये पठितमिदं वार्तिकमर्थतः संगृहीतम्। सम्, 'भस्त्र, अजिन ...पिण्ड, एतेभ्यः परो यः फलशब्दः तस्मादपि 'पाककर्ण—' इति ङीष् न भवति, ...तु टावेवेत्यर्थः। सम्फलेति। समृद्धानि फलानि यस्या इति विग्रहः। भस्त्र-...ति। भस्त्रेव फलानि यस्या इति विग्रहः। 'भस्त्रा चर्मप्रसेविका' इत्यमरः। ननु ...शब्दस्य नित्यस्त्रीत्वाद् भाषितपुंस्कत्वाभावात् 'स्त्रियाः पुंवत्—' इति पुंवत्त्वस्या-...तः कथं ह्रस्व इत्यत आह—ङ्यापोरिति। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्व ...र्थः। अजिनफला, शणफला, पिण्डफला, ओषधिविशेषसंज्ञाः। सदच्काण्ड। ...मपि 'पाककर्ण—' इति सूत्रपठितवार्तिकार्थसंग्रहः। सत्, अच्, काण्ड, प्रान्त, शत, ...एतेभ्यः परो यः पुष्पशब्दः तस्मादपि 'पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च' ...ङीष् न भवति, किन्तु टावेवेत्यर्थः। सत्पुष्पेति। सन्ति पुष्पाणि यस्या इति ...ग्रहः। अच् इति लुप्तनकारः, अञ्चुधातुः गृह्यत इत्यभिप्रेत्य उदाहरति—प्राक्पुष्पेति। ...ञ्चि पुष्पाणि यस्या इति विग्रहः। प्रत्यक्पुष्पेति। प्रत्यञ्चि पुष्पाणि यस्या इति ...ग्रहः। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा।

...याः। मूषकेति। 'वृश्चिकृषोः किकन्' इत्यधिकारे 'मुषेर्दीर्घश्च' इति किकनि इकार-...न्तो मूषिकाशब्दः। यस्तु 'मूष स्तेये' इति दीर्घोपधात्संज्ञायां क्वुनि मूषकशब्दो ...नवेनोक्तस्ततोऽप्ययं टाप्। प्रत्ययस्थादितीत्वं तु विशेषः। केचित्तु क्वुन्नन्तोऽसाव-...जादिगणेपाठं न प्रयुङ्क्ते, गणे तत्पाठस्य जातिलक्षणङीप्बाधनार्थत्वात्संज्ञायाश्चाजाति-...त्वान्। तथा चादन्तत्वादेव क्वुन्नन्ताट्टाप् सिध्यतीत्याहुः। तच्चिन्त्यम, व्याघ्रीत्यादि-...संज्ञात्वेऽपि जातित्वानपायात्। भस्त्रफलेति। भस्त्रेव फलानि यस्या इति विग्रहः। ...यापोरिति। एतच्च 'फल निष्पत्तौ' इति धातौ माधवग्रन्थे स्थितम्। पाककर्ण—' ...सूत्र भाष्ये तु दीर्घ एव दृश्यते। सदच्काण्डेति। सत्प्राक्काण्डेति पाठो नादर्तव्य ...ति ध्वनयन्नुदाहरति—प्रत्यक्पुष्पेति। अत्र नव्याः—'संभस्त्रा—' इत्यादि वचन-...मूलान्नञः' इति वक्ष्यमाणं च 'पाककर्ण—' इत्यनेन प्राप्तस्य ङीषो निषेधार्थं तत्रव ...भाष्ये पठितमपि फले विशेषाभावादिहैव ग्रन्थकारैः पठितम्। न चैतावताऽजा-...दिगणसूत्राणीति भ्रमः कार्यः। अथात्वे मानाभावात्। किं तु वार्तिकान्येवमानी-

१ 'भस्त्रा' इति क।

'शूद्रा चामहत्पूर्वा जातिः' (वा २४००–२४०१) पुंयोगे तु शूद्री । 'अमहत्पूर्वा' किम्—महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्टा, कनिष्ठा, मध्यमेति पुंयोगेऽपि । कोकिला जातावपि । 'मूलान्नञः' (वा २५००) । अमूला । 'ऋन्नेभ्यो ङीप्'

शूद्रा चामहत्पूर्वा जातिः । 'अजाद्यतः–' इति प्रकृतसूत्रे पठितं वार्तिकमेतत् । शूद्रजातिः वाच्या चेद् अमहत्पूर्वः शूद्रशब्दः स्त्रियां टापं लभते । जातिलक्षणङीषोऽपवादः । शूद्रात् स्वभार्यायां विधिना ऊढायामुत्पन्ना स्त्री शूद्रा । जातित्वप्रयोजनमाह—पुंयोगे त्विति । शूद्रस्य स्त्री इत्येवं पुंयोगात् स्त्रियां 'वृत्ती जातित्वाभावान्न टाप्, किन्तु 'पुंयोगादाख्याम्' इति ङीषेवेत्यर्थः । महाशूद्रीति महती च सा शूद्रा चेति विग्रहः । कर्मधारयः । 'पुंवत् कर्मधारय–' इति पुंवत्त्वम् । अत्र महत्पूर्वत्वान्न टाप्, किन्तु जातिलक्षणङीषेव । 'आभीरी तु महाशूद्री जातिपुंयोगयोः समा'[2] इत्यमरः । नृपाच्छूद्रायामुत्पन्ना उग्रा, तस्यां ब्राह्मणादुत्पन्नः आभीरः, तस्य स्त्री चेदाभीरी । अत्र जातिग्रहणस्य अमहत्पूर्वग्रहणस्य च प्रयोजनविचारः शब्देन्दुशेखरे भाष्यप्रदीपोद्द्योते च स्फुटः । क्रुञ्चेति । क्रुञ्चशब्दः चकारान्तः 'ऋत्विक्–' इत्यादिना क्विन्नन्तः पक्षिजातिविशेषे वर्तते । 'यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्' इति रामायणे । उष्णिह्शब्दो हकारान्तः, छन्दोविशेषे 'ऋत्विक्–' इत्यादिना क्विन्नन्त एव । देवविश्शब्दः शकारान्तः. गणविशेषात्मकमरुत्सु वर्तते, 'मरुतो वै देवानां विशः' इति श्रुतेः । एतेषामदन्तत्वाभावादप्राप्ते टापि तद्विधानार्थमजादिषु पाठः । 'ङ्याप्प्रातिपदिकात्' इति सूत्रभाष्ये त्वेषां त्रयाणामदन्तत्वम् आस्थितमिति 'वष्टि भागुरिरल्लोपम्' इति श्लोकव्याख्यावसरे प्रपञ्चितमनुपदमेव । ज्येष्ठेति । यदा ज्येष्ठादिशब्दाः प्रथमोत्पन्नादौ वर्तन्ते, तदा अदन्तत्वादेव टाप् सिद्धः । यदा तु ज्येष्ठस्य स्त्रीत्यादिविवक्षा, तदापि पुंयोगलक्षणं ङीषं बाधित्वा टाबर्थमिह पाठ इत्यर्थः । कोकिलेति । कोकिलशब्दस्य जातावपि जातिलक्षणङीषं बाधित्वा टाबर्थमिह पाठ इत्यर्थः । मूलान्नञ इति । 'पाककर्ण–' इति सूत्रे पठितं वार्तिकमेतत् । नञः परो यः मूलशब्दः तस्मात् 'पाककर्ण–' इति ङीष् न भवति, किन्तु टावेवेत्यर्थः । अमूलेत्याहुः ।

शूद्रा चेति । शूद्रशब्दष्टापमुत्पादयति जातिश्चेत् । महत्पूर्वस्तु न जातिश्चेदितीहापि संबध्यते । तेन महती शूद्रा महाशूद्रेति भवत्येव । पुंयोगे त्विति । पुंयोगो दाम्पत्यरूप एवेति न नियमः, किं तु जन्यजनकभावोऽपि गृह्यते । तथा च स्मृतिः 'वैश्याशूद्रयोस्तु राजन्यान्महिष्योग्रौ सुतौ स्मृतौ' इति । महाशूद्रीति । 'आभीरी तु महाशूद्री जातिपुंयोगयोः समा' इत्यमरः । इह 'अमहत्पूर्वा' इति व्यर्थम्, महाशूद्रशब्दो हि समुदित एवाभीरत्वजातौ वर्तते । तत्रावयवस्यानर्थकतया शूद्रशब्दार्थसम्बन्धिस्त्रीत्वाभावेन टापः प्रसक्त्यभावात् । न च तदन्तविधिज्ञापनाय तदिति वाच्यम् । उपसर्जनाधिकारेणैव तदन्तविधिज्ञापनादिति दिक् । अत्र नव्याः—'शूद्रा च–' इति वचनम् 'अजाद्यतः–' इति सूत्रस्थं वार्तिकमेव, न त्विदं गणसूत्रमित्याहुः । क्रुञ्चेत्यादि । त्रयोऽमी हलन्ता इत्येके । भाष्ये तु 'क्रुञ्चानालभेत' 'उष्णिहककुभौ'

१ व्यक्तौ–क । २ 'समे' क, ख ।

[अग्]निष्टोमिकी । वाजपेयिकी १७६० तत्र च दीयते कार्यं भववत् । [(४-]३-९६) प्रावृषि दीयते कार्यं वा प्रावृषेण्यम् । शारदम् ।

इति तद्धितेषु प्राग्वतीये ठञधिकारे कालाद् इत्यधिकारः सम्पूर्णः ।

---

[वस्]तुतस्तु यज्ञेभ्य इत्येवोक्तौ कालादित्यधिकाराद् द्वादशाहादिशब्देभ्य एव स्यात्, [न त]ु अग्निष्टोमादिशब्देभ्यः । आख्याग्रहणे तु अग्निष्टोमादिभ्यो द्वादशाहादिशब्दे-[भ्यश्]च सर्वेभ्यो यज्ञवाचिभ्य इति भाष्ये स्पष्टम् । तत्र च दीयते । तत्र दीयते [इत्यर्थे]न कार्यमित्यर्थयोः सप्तम्यन्तात्कालवाचिनो भववत्प्रत्ययाः स्युरित्यर्थः । प्रावृ-[षेण्]यमिति । 'प्रावृष एण्यः' इति भावार्थे विहितम् इहापि भवति । शारदमिति । [शर]दि दीयते कार्यं वेत्यर्थः । सन्धिवेलाद्यण् भवे विहित इहापि भवति । इदं [वृत्त्य]नुरोधेन । वस्तुतस्तु तत्र कार्यं दीयत इत्यर्थे यज्ञाख्येभ्यो भववत्प्रत्ययाः [स्यु]रित्यर्थः । अग्निष्टोमे दीयते भक्तम् आग्निष्टोमिकम् । कार्यग्रहणादग्निष्टोमे दीयते [हिर]ण्यमित्यत्र न भवति । न ह्यग्निष्टोमे हिरण्यं क्रियत इति भाष्य स्पष्टम् ।

इति तद्धितेषु प्राग्वतीये ठञधिकारे कालाद् इत्यधिकारः संपूर्णः ।

---

[आष]ाढानक्षत्रयुक्ता पौर्णमासीत्यर्थः । तस्य च दक्षिणा । षष्ठयन्तेभ्यो यज्ञाख्येभ्यो [दक्षि]णेत्यस्मिन्नर्थे ठञ् स्यात् । कालाधिकादेवेह द्वादशाहादिभ्यः सिद्धे आख्याग्रहणं [सर्]वार्थमित्याशङ्क्य परिहरति—आख्याग्रहणादिति । तत्र च । कालवाचिनः [सप्त]म्यन्ताद्दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्ययः स्यात् । प्रावृषेण्यमिति । ['प्र]ावृष एण्यः' इति भवार्थे विहितः स इहाप्यतिदिश्यत इति भावः । शारदमिति । ['स]न्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' ।

इति तत्त्वबोधिन्यां कालिकप्रकरणम् ।

---

# अथ तद्धितेषु ठञ्विधिप्रकरणम् । ३५ ।

१७६१ व्युष्टादिभ्योऽण् । (५-१-९७) व्युष्टे दीयते कार्यं वा वै-ष्टम् । व्युष्ट तीर्थ संग्राम प्रवास इत्यादि । ["अग्निपदादिभ्य उपसंख्यानम्" (वा ३०७२) अग्निपदे दीयते कार्यं वा आग्निपदम् । पैलुमूलम् ।] १७६२ तेन यथाकथाचहस्ताभ्यां णयतौ । (५-१-९८) यथाकथाचेत्यव्य-सङ्घातात्तृतीयान्ताद्धस्तशब्दाच्च यथासंख्यं णयतौ स्तः । 'अर्थाभ्यां तु यथा-संख्यं नेष्यते' । यथाकथा च दीयते कार्यं वा याथाकथाचम् । अनादरेण दे-कार्यं वेत्यर्थः । हस्तेन दीयते कार्यं वा हस्त्यम् । १७६३ सम्पादिनि । (५-१-९९) 'तेन' इत्येव । कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकं मुखम् । कर्णालङ्काराभ्यामवश्यं शोभत इत्यर्थः । १७६४ कर्मवेषाद्यत् । (५-१-१००) कर्मणा सम्पादि कर्मण्यं शौर्यम् । वेषेण सम्पादी वेष्यो नटः । वेषः कृत्रि-आकारः । १७६५ तस्मै प्रभवति सन्तापादिभ्यः (५-१-१०१) सन्तापाय प्रभवति सान्तापिकः । साङ्ग्रामिकः । १७६६ योगाद्यच्च । (५-१-१०२) -चाट्ठञ् । योगाय प्रभवति योग्यः, यौगिकः । १७६७ कर्मण उकञ् । (५-१-१०३) कर्मणे प्रभवति कार्मुकम् । १७६८ समयस्तदस्य प्राप्तम् । (५-१-१०४) समयः प्राप्तोऽस्य सामयिकम् । १७६९ ऋतोरण् ।

---

अथ ठञ्विधिर्निरूप्यते । व्युष्टादिभ्योऽण् । 'तत्र च दीयते कार्यं' इत्यनुवर्तते । दीयते कार्यं वेत्यर्थे सप्तम्यन्तेभ्यो व्युष्टादिभ्यः अण् स्यात् । ठञोऽपवादः । व्युष्टं प्रभातम् । वैयुष्टमिति । अणि 'न य्वाभ्याम्-' इत्यै-तेन यथा । अर्थाभ्यामिति । प्रकृत्योः प्रत्यययोश्च यथासंख्यम्, दीयते कार्यमित्यर्थयोरित्यर्थः, व्याख्यानादिति भावः । संपादिनि । तेने-त्येवेति । संपादः संपत्तिः शोभा अस्यास्तीति संपादी । तस्मिन्नर्थे तृतीया-न्ताट्ठगित्यर्थः । कर्मवेषाद्यत् । तृतीयान्तात्कर्मन्शब्दाद् वेषशब्दाच्च । संपादि-यत्स्यादित्यर्थः । तस्मै प्रभवति । चतुर्थ्यन्तेभ्यः संतापादिभ्यः प्रभवतीत्यर्थे ठञ् स्यादित्यर्थः । संतापाय प्रभवतीति । शत्रूणां पीडायै शक्नोतीत्यर्थः । योगाद्यच्च । चतुर्थ्यन्तात्प्रभवतीत्यर्थे इति शेषः । कर्मण उकञ् । चतुर्थ्यन्ता-त्प्रभवतीत्यर्थे इति शेषः । कार्मुकमिति । उकञि टिलोपः । समयस्तदस्य तदिति प्राप्तमिति च सामान्ये नपुंसकम् । समयः प्राप्तोऽस्येत्यर्थे प्रथमान्तात्सम-शब्दात् ठञित्यर्थः । तदित्युत्तरार्थम् । ऋतोरण् । 'प्राप्तम्' इत्येव । प्राप्तोऽस्येति

---

व्युष्टादिभ्योऽण् । व्युष्टशब्दः कालवाची दिवसमुखे वर्तते । संपादिनि । गुणोत्कर्षः संपत्तिः । 'आवश्यके णिनिः' इति वृत्तिकृत् । एवं वस्त्रयुगेन संपादि वास्त्रयुगिकं शरीरमित्यप्युदाहार्यम् । वस्त्रयुगेन अवश्यं शोभत इत्यर्थः ।

---

१ बन्धनीघृतः पाठः कौमुदीपुस्तकेषु प्रायेण न दृश्यते, टीकाकृता च व्याख्यातः । क्वचित्तु मूलपुस्तकेषु दृश्यते स केनापि काशिकाया उद्धृत इत्यनुमीयते ।

(५-१-१०५) ऋतुः प्राप्तोऽस्य आर्तवम् । ["उपवस्त्रादिभ्य उपसंख्यानम्' । उपवस्ता प्राप्तोऽस्य औपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् ।] १७७० कालाद्यत् (५-१-१०७) कालः प्राप्तोऽस्य काल्यं शीतम् । १७७१ प्रकृष्टे ठञ् । (५-१-१०८) 'कालात्' इत्येव । 'तदस्य' इति च । प्रकृष्टो दीर्घः कालोऽस्येति कालिकं वैरम् । १७७२ प्रयोजनम् । (५-१-१०९) 'तदस्य' इत्येव । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । प्रयोजनं फलं कारणं च । १७७३ विशाखाषाढादण् मन्थदण्डयोः । (५-१-११०) आभ्यामण् स्यात् प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः । 'चूडादिभ्य उपसंख्यानम्'। चूडा–चौडम् । श्रद्धा–श्राद्धम् । १७७४ अनुप्रवचनादिभ्यश्छः । (५-१-१११) अनुप्रवचनं

प्रथमान्ताद् ऋतोरणित्यर्थः। आर्तवमिति । अणि ओर्गुणः, आदिवृद्धिः, रपरत्वम् । कालाद्यत् । 'तदस्य प्राप्तम्' इत्येव । प्रथमान्तात्कालशब्दाद् अस्य प्राप्त इत्यर्थे यदित्यर्थः । प्रातःकाले काल्यशब्दस्तु कल्यवदव्युत्पन्नं प्रातिपदिकम् । कल्यमेव काल्यं वा । प्रकृष्टे ठञ् । अस्य प्राप्त इत्यर्थे प्रकृष्टवृत्तेः कालशब्दात् ठञित्यर्थः । यतोऽपवादः । प्रकृष्टशब्दस्य विवरणं–दीर्घ इति । प्रयोजनम् । तदस्येत्येवेति । अस्य प्रयोजनमित्यर्थे प्रथमान्ताट्ठञित्यर्थः । इन्द्रमह इति । इन्द्रोत्सव इत्यर्थः । 'मह उद्धव उत्सवः' इत्यमरः । प्रयोजनं फलं कारणं चेति । प्रयुज्यते प्रवृत्त्या निष्पाद्यत इति कर्मणि ल्युटि प्रयोजनशब्दः फलवाची । प्रयुज्यते प्रवर्तते पुरुषोऽनेनेति करणे ल्युटि प्रयोजनशब्दः प्रवर्तकवाचीत्यर्थः । विशाखाषाढात् । विशाखाशब्दाद् आषाढशब्दाच्च प्रथमान्ताद् अस्य प्रयोजनमित्यर्थे अण् स्यात्, समुदायेन मन्थे दण्डे च क्रमाद् गम्ये सतीत्यर्थः, तदाह—आभ्यामिति । स्थूणामेकां निखाय तस्यां रज्जुद्वयमधरोत्तरमासज्ज्य तयोः रज्ज्वोर्मन्थदण्ड ऊर्ध्वमासज्यते । येन रज्ज्वा भ्रामितेन दधि विलोड्यत इति स्थितिः। तत्र स्थूणा मन्थ इत्युच्यते । मन्थानाख्यदण्डो दण्ड उच्यते । अनयोः वैशाखशब्द आषाढशब्दश्च रूढौ। तत्रावयवार्थाभिनिवेशो न कर्तव्यः । चूडादिभ्य इति । चूडादिभ्यः प्रथमान्तेभ्यः अस्य प्रयोजनमित्यर्थे अणित्यर्थः । चौडमिति । चूडा

प्रभवति । समर्थः शक्तः प्रभवतीत्युच्यते । आर्तवमिति । पुष्पमित्यादि विशेष्यं बोध्यम् । काल्यं शीतमिति । 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः । तत्र प्रातःकाले काल्यशब्दस्य व्युत्पत्त्यन्तरं मृग्यम् । प्रकृष्टे ठञ् । प्रकृष्यते अयमिति प्रकृष्टः । कर्मणि क्तः । तेन च प्रकर्षेण कालो विशेष्यत इत्याह—दीर्घः काल इति । ठञ्ग्रहणं विस्पष्टार्थम् । अन्यथा अनन्तरस्य यतोऽनुवृत्तिराशङ्क्येत । इन्द्रमह इति । मह उत्सवः । वैशाखो मन्थः । आषाढो दण्ड इति । वैशाखाषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्तेते । तयोस्तु यथाकथचिद्व्युत्पत्तिः क्रियत इति हरदत्तः ।

१ अत्रापि बन्वतीधृतः पाठः पूर्वपृष्ठवदेव ।

प्रयोजनमस्य अनुप्रवचनीयम् । १७७५ समापनात्सपूर्वपदात् । (५-१-११२) व्याकरणसमापनं प्रयोजनमस्य व्याकरणसमापनीयः । १७७६ ऐकागारिकट् चौरे । (५-१-११३) एकमसहायमगारं प्रयोजनमस्य मुमुषिषोः स ऐकागारिकश्चौरः । १७७७ आकालिकडाद्यन्तवचने । (५-१-११४) समानकालावाद्यन्तौ यस्येत्याकालिकः । समानकालस्याकाल आदेशः । आशु विनाशीत्यर्थः । पूर्वदिने मध्याह्नादावुत्पद्य दिनान्तरे तत्रैव नश्वर इति वा । आकालाट्ठंश्च' । (वा ३०७८) । आकालिका विद्युत् । इति

प्रयोजनमस्येति विग्रहः । डलयोरभेदाच्चौलमित्यपि । श्रद्धा श्राद्धमिति । श्रद्धा प्रयोजनमस्येति विग्रहः । श्रद्धाशब्दादणि श्राद्धमित्यर्थः । अत्र प्रयोजनशब्दः कारणवाची । श्रद्धाहेतुकमिति यावत् । अनुप्रवचनादिभ्यश्छः । प्रथमान्तादनुप्रवचनादिशब्दादस्य प्रयोजनमित्यर्थे छः स्यादित्यर्थः । अनुप्रवचनं नाम उपनयनाङ्गं किञ्चित्कर्म आश्वलायनसूत्रे प्रसिद्धम् । समापनात्सपूर्वपदात् । सपूर्वपदात्समापनशब्दाद् अस्य प्रयोजनमित्यर्थे छः स्यादित्यर्थः । व्याकरणसमापनीय इति । मङ्गलाचार इति शेषः । ऐकागारिकट् चौरे । एकमगारं प्रयोजकमस्य चोरस्येति विग्रह एकागारशब्दादिकट्प्रत्यये ऐकागारिकट् इति निपात्यते । टित्वं ङीबर्थम् । प्रयोजनमित्येव सिद्धे चोर एवेति नियमार्थं सूत्रम् । एकमित्यस्य विवरणम्—असहायमिति । 'एके मुख्यान्यकेवलाः' इत्यमरः । मुमुषिषोरिति । चौर्यं कर्तुमिच्छोरित्यर्थः । चोरस्य हि असहायमगारमिष्टं गेहान्तरसत्त्वे चौर्यप्रकटनप्रसङ्गादिति भावः । चोरे किम् ? एकागारं प्रयोजनमस्य भिक्षोरिति वाक्यमेव । भाष्ये तु 'एकागाराच्चोरे' इत्येव सुवचम् । प्रकृतत्वाट्ठञ् सिद्ध इत्युक्तम् । आकालिकट् । समानकालाविति बहुव्रीहिः । आद्यन्ताविति । उत्पत्तिविनाशावित्यर्थः । समानकालस्येति । समानकालशब्दस्य इकप्रत्यये परे आकालादेशो निपात्यत इत्यर्थः । ननु उत्पत्तिविनाशयोरेककालिकत्वमसंभवपराहतमित्यत आह—आशु विनाशीति । लक्षणां विनैवाह—पूर्वदिन इति । आकालाट्ठंश्चेति । आकालशब्दादाद्यन्तवचनाट्ठन्प्रत्ययश्च वक्तव्य इत्यर्थः । चात् ठञ् । आकालिका विद्युदिति । ठनि टाप् । ठञि तु ङीप्, आकालिकी । अर्थः प्राग्वत् । इति

विलोडनदण्डस्यैवाधारभूतः काष्ठविशेषो मन्थ इत्युच्यते । अनुप्रवचना । अनुप्रवचनं नाम ब्रह्मौदनमुच्यते । सपूर्वपदादिति । विद्यमानपूर्वपदादित्यर्थः । ऐकागारिकट् । टो ङीबर्थः । ऐकागारिकी । किमर्थमिदमुच्यते, यावता 'प्रयोजनम्' इत्येव ठञि सिद्धम् । सत्यम् चौरे नियमार्थमावश्यकमिदं सूत्रम् । अन्यथा एकागारं प्रयोजनं यस्य भिक्षोरित्यत्रापि स्यात् । नन्वेवमपि 'एकागाराच्चोरे' इति ठञेव नियम्यताम्, किमैकागारिक इति निपातनेन टित्करणेन च प्रयोजनमिति चेत् । अत्राहुः—टकारः कार्यावधारणार्थः । ङीबेव भवति न ञित्स्वर इति । वृद्धिस्तु निपातनाद्भवत्येवेति । आकाल आदेश इति । निपात्यत इति शेषः । आद्यन्तौ यस्येत्यादि । अस्येत्यधिकारात्षष्ठ्यर्थे इकट् प्रत्ययो निपात्यत इति भावः । आकालट्ठंश्चेति । वार्तिकमिदम् । इति तत्त्वबोधिन्यां ठञधिकारप्रकरणम् ।

## अथ तद्धितेषु भावकर्मार्थाः । ३६ ।

१७७८ तेन तुल्यं क्रिया चेद्वतिः । (५-१-११५) ब्राह्मणेन तुल्यं ब्राह्मणवदधीयते । 'क्रिया चेत्' इति किम्–गुणतुल्ये मा भूत्, पुत्रेण तुल्यः स्थूलः । १७७९ तत्र तस्येव । (५-१-११६) मथुरायामिव मथुरावत्स्रुघ्ने प्राकारः । चैत्रस्येव चैत्रवन्मैत्रस्य भावः । १७८० तदर्हम् । (५-१-११७)

---

अथ भावकर्मार्था निरूप्यन्ते । तेन तुल्यं क्रिया चेद्वतिः । तुल्यमिति क्रियेत्यस्य विशेषणम् । सामान्याभिप्रायं नपुंसकम् । तृतीयान्तात्तुल्यमित्यर्थे वतिप्रत्ययः स्यात् । यत्तुल्यं सा चेत् क्रियेत्यर्थः । तुल्या क्रियेत्यर्थे वतिः स्यादिति फलितम् । ब्राह्मणेन तुल्यं ब्राह्मणवदधीत इति । अत्र ब्राह्मणवदित्युदाहरणम् । ब्राह्मणेन तुल्यमधीते इति विग्रहवाक्यम् । अत्र ब्राह्मणशब्देन ब्राह्मणकर्तृकाध्ययनं लक्ष्यते । ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकाध्ययनमिति बोधः । गुणतुल्य इति । द्रव्यतुल्येऽपीति बोध्यम् । तेन चैत्रेण तुल्यो धनी देवदत्त इत्यादौ न भवति । 'अयमेवं न तद्वत्' इत्यादौ वतेः साधुत्वार्थम् आहेति क्रियापदं प्रयुञ्जते वृद्धाः । तत्र तस्येव । तत्रेवेति तस्येवेति चार्थे सप्तम्यन्तात् षष्ठ्यन्ताच्च वतिः स्यादित्यर्थः । अतृतीयान्तार्थ आरम्भः । अस्मादेव निर्देशादिवशब्दयोगे षष्ठ्यर्थे सप्तम्यपीति भाष्यम् । अत्र क्रिया चेदिति नानुवर्तत इत्यभिप्रेत्योदाहरति— मथुरायामिव मथुरावत्स्रुघ्नेन प्राकार इति । अत्र मथुरायामिवेति नाधिकरण-सप्तमी । तथा सति विद्यमानेति क्रियापदसापेक्षतया असामर्थ्यात् । अत एव अस्मादेव सूत्रनिर्देशादिवशब्दयोगे षष्ठ्यर्थे सप्तमीति भाष्यं संगच्छते । मथुरासंबन्धिप्राकार-सदृशः स्रुघ्नस्य प्राकार इति बोधः । मैत्रस्य भाव इति । वृत्तमित्यर्थः । तदर्हम् । लब्धुं योग्यं भवतीत्यर्थः । अर्हतीत्यर्हम् । पचाद्यच् । 'तत्' इति कर्मणि द्वितीयान्तम् । 'वतिः' इत्यनुवर्तते । द्वितीयान्तादर्हतीत्यर्थे वतिः । कृद्योगलक्षणषष्ठ्यभावस्तु आर्षः ।

---

तेन तुल्यं क्रिया चेद्वतिः । तुल्यमिति सामान्ये नपुंसकम् । तृतीयान्तात्तुल्यमित्यर्थे वतिः स्याद्यत्तुल्यं क्रिया चेत्सा । ब्राह्मणेन तुल्यमिति । 'नन्वत्र ब्राह्मणो यथा वर्तते तथा क्षत्रियादिकर्तृकाध्ययनं वर्तते' इति वाक्यार्थोऽसंगत इति चेत् । अत्राहु—ब्राह्मणशब्दस्तत्कर्तृकाध्ययने लक्षणया वर्तते । 'ब्राह्मणकर्तृकाध्ययनतुल्याध्ययनं वाक्यार्थः' इति न कोऽपि दोषः । गुणतुल्य इति । उपलक्षणमिदम् । अक्रियातुल्य इत्यर्थः । एवं च 'ब्राह्मणेन सदृशः क्षत्रियः' इत्यर्थे 'ब्राह्मणवत् क्षत्रियः' इति प्रयोगोऽसाधुरेव । अतएव 'पर्वतो वह्निमान् महानसवत्' इति वाक्ये 'महानससदृशः पर्वतः' इत्यर्थे वतेरसाधुत्वं मत्वा तस्य वतेः साधुत्वरक्षणार्थं 'पर्वतो वह्निमान् भवितुमर्हति' इत्यादि क्रियापदं प्रयुञ्जते वृद्धाः । तत्र तस्येव । सप्तम्यन्तात् षष्ठ्यन्ताच्च इवार्थे प्रत्ययः । 'क्रिया चेत्' इति नानुवर्तते इति द्रव्यादितुल्ये वत्प्रत्ययो भवति । मथुरावत्स्रुघ्न इति । मथुरायां यादृशः प्राकारः तेन तुल्यः प्राकारः स्रुघ्ने इत्यर्थः । तदर्हम् ।

विधिमर्हति विधिवत्पूज्यते। क्रियाग्रहणं मण्डूकप्लुत्या अनुवर्तते। तेनेह न—राजानमर्हति छत्रम्। १७८१ तस्य भावस्त्वतलौ। (५-१-११९) प्रकृतिजन्यबोधे प्रकारो भावः। गोर्भावो गोत्वम्, गोता। 'त्वान्तं क्लीवम्' (लि १२०) 'तलन्तं स्त्रियाम्' (लि १७)। १७८२ आ च त्वात्। (५-१-१२०)

---

वतिः स्यादित्यर्थः। विधिमर्हतीति। विधिं लब्धु योग्यं भवतीत्यर्थः। विधिवत्पूज्यत इति। हरिरिति शेषः। विधिं लब्धुं योग्यं हरिपूजनमित्यर्थः। विधिं प्रकारमनतिक्रान्तमिति यावत्। मण्डूकप्लुत्येति। पूर्वसूत्रे अननुवृत्तेरिति भावः। तस्य भावः। षष्ठ्यन्ताद्भाव इत्यर्थे त्वतलौ स्त इत्यर्थः। भावशब्दस्य अभिप्रायादावपि वृत्तेराह—प्रकृतिजन्यबोधे प्रकारो भाव इति। त्वतलप्रत्ययौ यत उत्पत्स्येते तस्मात्प्रकृतिभूतशब्दाद् व्यक्तिबोधे जायमाने यज्जात्यादि विशेषणतया भासते तद्व्यक्तिविशेषणं भावशब्देन विवक्षितमित्यर्थः। यथा—गोशब्दाद्धि व्यक्तिबोधे जायमाने गोत्वं विशेषत्वेन भासते, गोशब्दस्य गोत्ववत्सु व्यक्तिषु गोत्वे च शक्तिग्रहणात्। न हि गोत्वं विहाय गोव्यक्तिषु गोशब्दस्य शक्तिग्रहः संभवति, अतीतानागतानां वर्तमानानां चानन्तत्वेन युगपदुपस्थित्यसंभवात्, गोशब्दात् प्राणित्वपशुत्वादिरूपेणापि गोव्यक्तिप्रतीत्यापत्तेश्च। ततश्च सर्वासु गोव्यक्तिष्वनुगतं तदितरव्यक्तिभ्यो व्यावृत्तं कञ्चिद्धर्मविशेषं शक्यतावच्छेदकं पुरस्कृत्य प्रवर्तत इति सिद्धान्तः। एवं घटादिशब्दा अपि घटत्वादितत्तद्धर्मं पुरस्कृत्य प्रवर्तन्ते। तदिदं शब्दप्रवृत्तिनिमित्तं भावशब्देन विवक्षितमिति भाष्यकैयटयोः स्थितम्। गोर्भाव इति। गोशब्दस्य प्रवृत्तिनिमित्तमिति बोधः। त्वान्तं क्लीबं तलन्तं स्त्रियाम् इति। लिङ्गानुशासनसूत्रसिद्धमिदम्। आ च त्वात्। 'त्वतलौ' इति

---

अर्हतीत्यर्हं पचाद्यच्। यद्यपि कृद्योगे कर्मणि षष्ठ्या भवितव्यम्, तथापि अत्र सौत्रो विभक्तिव्यत्यय इत्येके। 'कर्तृकर्मणोः—' इति षष्ठ्या अनित्यत्वज्ञापकमिदम्। तेन 'धार्यैरामोदमुत्तमम्' इति भट्टिप्रयोगः संगच्छत इति तु कारकेष्ववोचाम। द्वितीयान्तादेव प्रत्यय इति स्फुटीकर्तुं तिङन्तेन विगृह्णाति—विधिमर्हतीति। कथं तर्हि 'ततो यथावद्विहिताध्वराय' इति, असत्त्वार्थकस्य कर्मत्वासंभवेन द्वितीयान्तत्वाभावादिति चेत्। अत्राहुः—यथाशब्दो वृत्तिविषये सत्त्वार्थकः, तथात्वमित्यादिषु त्वप्रत्ययादिदर्शनाद्। अन्यथा षष्ठ्यपि नास्तीति त्वतलौ न स्याताम्। तथा च द्वितीयान्ताद्यथाशब्दादर्हार्थे वतिः, योग्यतामर्हतीति विधानमित्यर्थात् क्रियायोगोऽपि [illegible] इति। तस्य भावस्त्वतलौ। प्रकृतीति। न तु यः कश्चिद्धर्मः, घटत्वमित्यत्र द्रव्यत्वपृथिवीत्वादेरभानात्। गोर्भाव इति। इह गोशब्दोऽर्थपरः, [illegible] स्वरूपपरो वेति पक्षद्वयम्। यदार्थपरः, तदा धर्मविशेषः प्रत्ययार्थः स च धर्मतया भासते। प्रकृतिजन्येत्यादिस्तु प्रयोगोपाधिः। यदा तु शब्दपरस्तदा तज्जन्यबोधप्रकारः प्रत्ययार्थः,। स च धर्मविशेष एव। पाचकत्वमित्यत्र तु कर्तृत्वरूपसम्बन्धः प्रकारः, पच्यमानत्वमित्यत्र पु कर्मत्वरूपसम्बन्धः। तथा औपगवत्वमित्यत्र जन्यत्वरूपसम्बन्धः प्रकारः। राजपुरुषत्वमित्यत्र तु स्वत्वरूपसम्बन्ध इत्याद्यूह्यम्। एवं स्थिते हरि[illegible]

ब्राह्मणस्त्वः–' इत्यतः प्राक्त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थम् । गुण-
वचनादिभ्यः कर्मणि विधानार्थं चेदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः ।
स्त्रिया भावः स्त्रैणम्, स्त्रीत्वम्, स्त्रीता । पौंस्नम्, पुंस्त्वम्, पुंस्ता । १७८३
। नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः । (५–१–१२१)
इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन्वर्जयित्वा । अपतित्वम् ।
अपटुत्वम् । नञ्पूर्वात् किम्–बार्हस्पत्यम् । तत्पुरुषात् किम्–नास्य पटवः सन्ता-
अपटुः, तस्य भाव आपटवम् । अचतुर इति किम्–आचतुर्यम् । आसङ्गत्यम् ।

अनुवर्तते । आङ्मर्यादायाम्, तदाह ब्रह्मणस्त्व इत्यतः प्रागिति । ननु 'तस्य
भावस्त्वतलौ इत्यतः त्वतलोरुत्तरसूत्रेष्वनुवृत्त्यैव सिद्धेरधिकारोऽयं व्यर्थ इत्यत
आह - अपवादैरिति । 'पृथ्वादिभ्य इमनिज्वा' इत्यादिविहितैरिमनिजादिभि-
रपवादैः समुच्चयार्थमित्यर्थः । असति त्वेतस्मिन्नधिकारसूत्रे उत्तरत्र इमनिजादि-
विधिषु त्वतलोरनुपस्थितिः स्यात् । प्रत्यक्षनिर्दिष्टैरिमानिजादिविशेषैः शान्ता-
काङ्क्षत्वात् । अन्यथा 'प्राग्दीव्यतोऽण्' इत्यधिकृतस्य अणः 'अत इञ्' इत्यादा-
वपि प्रवृत्तिः स्यादिति भावः । प्रयोजनान्तरमाह गुणवचनादिभ्य इति ।
अन्यथा भावेऽर्थे सावकाशयोस्त्वतलोः कर्मण्यर्थे गुणवचनादिभ्यो विशेषविहितेन
ष्यञा बाधप्रसङ्ग इति भावः । नन्वेवमपि आत्वादित्येवास्तु, स्वरितत्वादेव पूर्व-
सूत्रादिह त्वतलोरनुवृत्तिसिद्धेस्तदनुकर्षार्थश्चकारो व्यर्थ इत्यत आह—चकार इति ।
अन्यथा त्वतलौ स्त्रीपुंसाभ्यां न स्याताम्, अन्यत्र तयोः सावकाशत्वादिति भावः ।
पौंस्नमिति । संयोगान्तलोपे 'पुमः खय्यम्परे' इति रुत्वम् । पाक्षिकावनुनासिकानुस्वारौ,
विसर्गे कृते सत्वम् । एवं पुंस्त्वम् । तत्र ह्रस्वात्तादौ– इति षत्वं तु न भवति, सवनादिषु
पाठात् । न नञ्पूर्वात् । इतः परमिति । त्वतल्विधेरूर्ध्वमित्यर्थः, नञ्पूर्वाद् इत्यु-
त्तरस्य प्रतिषेधः' इति भाष्यादिति भावः । चतुरादीनिति । चतुर, संगत, लवण,
वट, युध, कत, रस, लस एतान् वर्जयित्वेत्यर्थः । अपतित्वमिति । इह 'पत्य-
न्तपुरोहितादिभ्यः' इति यक् न भवति । अपटुत्वमिति । इह 'इगन्ताच्च
लघुपूर्वात्' इत्यण् न भवति । बार्हस्पत्यमिति । 'पत्यन्तपुरोहितादिभ्यः'
इति यक् । आपटवमिति । 'इगन्ताच्च लघुपूर्वात्' इत्यण् । अपटुशब्दस्य
बहुव्रीहित्वात्तत्पुरुषत्वाभावान्नास्याणो निषेध इति भावः । आचतुर्यमिति ।
अचतुरस्य भावः ब्राह्मणादित्वात्ष्यञ् । आसंगत्यमिति । असंगतशब्दात् ष्यञ् ।

यदुक्तं 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति, तत्र नापूर्वं शक्त्यन्तरं
कल्प्यम् । उक्तरीत्यैव तत्राप्युपपत्तेरिति संक्षेपः । अपवादैः सहेति । पृथ्वादिभ्य
इमनिज्वा' इत्यादिभिः । चकार इति । अन्यथा त्वतलौ स्त्रीपुंसाभ्यां न स्याताम्
अन्यत्र तयोः सावकाशत्वादिति भावः । पौंस्नं पुंस्त्वमिति । संयोगान्तलोपे 'पुमः
खयि–' इति रुत्वम् । पाक्षिकावनुनासिकानुस्वारौ, विसर्गे कृते सत्वम् । अपति-
त्वमिति । इह 'पत्यन्त–' इति यग् न भवति । अपटुत्वमिति । इह तु
'इगन्ताच्च लघुपूर्वात्' इत्यण् न भवति आचतुर्यमित्यादि । ब्राह्मणादित्वात्

आलवण्यम् । आवटचम् । आयुध्यम् । आकत्यम् । आरस्यम् । आलस्यम् । **१७८४ पृथ्वादिभ्य इमनिज्वा ।** (५-१-१२२) वावचनमणादिसमावेशार्थम् । **१७८५ र ऋतो हलादेर्लघोः ।** (६-४-१६१) हलादेर्लघोर्ऋकारस्य रः स्याद् इष्ठेमेयस्सु । **१७८६ टेः ।** (६-४-१५५) भस्य टेर्लोपः स्यादिष्ठेमेयस्सु । पृथोर्भावः प्रथिमा, पार्थवम् । म्रदिमा, मार्दवम् **१७८७ वर्णदृढादिभ्यः ष्यञ्च ।** (५-१-१२३) चादिमनिच् । शौक्ल्यम्, शुक्लिमा ।

---

आलवण्यमिति । अलवणशब्दात् ष्यञ् । आवटचमिति । न वटः अवटः, तस्मात् ष्यञ् । आयुध्यमिति । अयुधशब्दात् ष्यञ् । आकत्यमिति । अकतशब्दात् ष्यञ् । आरस्यमिति । अरसशब्दात् ष्यञ् । आलस्यमिति । लसतीति लसः, न लसः अलसः, तस्मात् ष्यञ् । पृथ्वादिभ्य इमनिज्वा । 'तस्य भावः' इत्यनुवर्तते । पृथ्वादिभ्यः षष्ठचन्तेभ्यो भावे इमनिज् वा स्यादित्यर्थः । ननु 'वा' ग्रहणं व्यर्थम्, समर्थानां प्रथमाद्वा' इति महाविभाषयैव वाक्यस्य सिद्धत्वात् । नच इमनिजभावे त्वतल्प्रत्ययार्थं वाग्रहणमिति वाच्यम्, आ च त्वादित्येव तत्समावेशसिद्धेरित्यत आह—वावचनमणादिणसमावेशार्थमिति । पृथुमृदुप्रभृतिषु 'इगन्ताच्च लघुपूर्वात्' इत्यणः, चण्डखण्डादिषु गुणवचनलक्षणष्यञः, बालवत्सादिषु वयोवचनलक्षणस्य अञश्च औत्सर्गिकस्य समावेशार्थमित्यर्थः । अन्यथा महाविभाषावशाद् 'अपवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते' इति 'पारे मध्ये षष्ठचा वा' इति सूत्रभाष्ये सिद्धान्तितत्वादिमनिज्त्वतलामभावे तेषां प्रवृत्तिर्न स्यादिति भावः । र ऋतो हलादेः । र इति प्रथमान्तम् । इष्ठेमेयस्स्विवति शेषपूरणम् । 'तुरिष्ठेमेयस्सु' इत्यतः तदनुवृत्तेरिति भावः । 'अङ्गस्य' इत्यधिकृतं हलादेरङ्गस्य लघोः ऋकारस्य र इति रेफाकारसंघात आदेशः स्याद् इष्ठनि इमनि ईयसि च परे इत्यर्थः । टेः । 'इष्ठेमेयस्सु' इत्यनुवर्तते । 'अल्लोपोऽनः' इत्यतो लोप इति च, तदाह टेर्लोपः स्यादिष्ठेमेयस्स्विवति । प्रथिमेति । पृथुशब्दादिमनिच्, चकार इत्, नकारादिकार उच्चारणार्थः । ऋकारस्य रः, उकारस्य गुणं बाधित्वा टेर्लोपः । पार्थवमिति । इमनिजभावे 'इगन्ताच्च लघुपूर्वात्' इत्यण् । म्रदिमेति । मृदुशब्दादिमनिचि ऋकारस्य रः, 'टेः' इति टिलोपश्च । मार्दवमिति । 'इगन्ताच्च–' इत्यण् । वर्णदृढादिभ्यः ष्यञ्च । षष्ठचन्तेभ्यो वर्णवाचिभ्यो दृढादिभ्यश्च भावे ष्यञ् च स्यादित्यर्थः । गुणवचनत्वादेव ष्यञि सिद्धे इमनिच्समुच्चयार्थं वचनम् । 'पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।

---

ष्यञ् । पृथ्वादिभ्यः । अणादीति । इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिष्वणः समावेशः । चण्डखण्डादिषु गुणवचनेषु ष्यञः । बालवत्सादिषु वयोवचनलक्षणस्याञ इति बोध्यम् । त्वतलौ तु पूर्वसूत्रेणैव लब्धौ । र ऋतो । हलादेः किम्, ऋजिष्ठः ऋजीयान्, लघोः किम्, कृष्णिमा । 'पृथुमृदुभृश–' इति परिगणने तु 'हलादेर्लघोः' इति त्यक्तुं शक्यम् । वर्णदृढादिभ्यः । गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम् । 'पृथुमृदुभृश–' इति परिगणनादिह रभावो न भवति । कृतमाचष्टे कृतयति । णाविष्ठ-

र्थम् । 'पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम्' (वा ४२११) । द्रढिमा । ङीषर्थः । औचिती । याथाकामी । १७८८ गुणवचनब्राह्मणादिभ्यः कर्मणि च । (५-१-१२४) चाद्भावे । जडस्य कर्म भावो वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् । 'अर्हतो नुम् च' (वा ३०९२) अर्हतो भावः कर्म वा आर्हन्त्यम्, आर्हन्ती । ब्राह्मणादिराकृतिगणः । १७८९

---

परिवृढं वृढं चैव षडेतान् रविधौ स्मरेत्' इति वार्तिकमर्थतः सङ्गृह्णाति पृथुमृदुभृशेत्यादि । तेन कृतयतीत्यादावीष्ठवत्त्वेऽपि रभावो न । द्रढिमेति । दृढशब्दादिमनिचि ऋकारस्य रः । भ्रशिमा क्रशिमा द्रढिमा परिव्रढिमा । ननु वर्ण-दृढादीनां ष्यञन्तानां लोकतो नपुंसकत्वात् ष्यञः षित्त्वस्य किं प्रयोजनमित्यत आह षो ङीषर्थ इति । औचितीति । उचितशब्दाद् ब्राह्मणादित्वात् ष्यञि लोकात् स्त्रीत्वम् षित्वाद् ङीषि 'हलस्तद्धितस्य' इति यलोपः । उचितस्तु न दृढादिः, प्रयोगे अदर्शनाद् इमनिच्प्रसङ्गाच्च । अस्यैव ष्यञ उत्तरसूत्रे अनुवृत्तेरिहैव तस्य षित्त्वप्रयोजनकथनमिति बोध्यम् । याथाकामीति । काममनतिक्रम्य यथाकामम् । ततः स्वार्थे चतुर्वर्णादित्वात् ष्यञि लोकात् स्त्रीत्वं षित्वाद् ङीष् । गुणवचन । गुणोपसर्जनद्रव्यवाचिभ्यो ब्राह्मणादिभ्यश्च षष्ठ्यन्तेभ्यो भावे कर्मणि च अर्थे ष्यञ्-प्रत्ययः । अर्हतो नुम्चेति । वार्तिकमिदम् । 'अर्हः प्रशंसायाम्' इति सूत्रेण शतरि अर्हच्छब्दः पूज्यवाचीति कैयटः । अर्हच्छब्दात् ष्यञ् स्यात्प्रकृतेर्नुम् चेत्यर्थः । मित्त्वा-दन्त्यादचः परः । अनुस्वारपरसवर्णौ । लोकाद् नपुंसकत्वं स्त्रीत्वं च । तदाह आर्ह-न्त्यमार्हन्तीति । आर्हन्त्यशब्दाद् ङीषि 'हलस्तद्धितस्य' इति यलोपः । यथातथेति निपातसमुदायः । यथापुरमिति पुराशब्देन पदार्थानतिवृत्तावव्ययीभावः । इमौ शब्दौ

---

चाद्भावः । औचितीति । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । 'हलस्तद्धितस्य' इति यलोपः । एवं याथाकामी । द्रढ, वृढ, परिवृढ, भृश, कृश, इत्यादि । अत्र द्वे गणसूत्रे—'विर्यातलाभमतिमनःशारदानाम्' । विशब्दादुत्तरे ये यातादयः पञ्च तदन्तानां समासानामनन्तरः ष्यञ् भवतीत्यर्थः । वियातत्वम् वियातता, वियातिमा, वैयात्यम् । वैलाभिमा, वैलाभ्यम् । विमतिमा, वैमत्यम् । इगन्तत्वादणपि—वैमतम् । विमनिमा, वैमनस्यम् । विशारदिमा, वैशारद्यम् । त्वतलोः समावेशेन विलाभत्वम्, विलाभतेत्यादी-न्यूह्यानि । समो मतिमनसोः । समः परे ये मतिमनसी तदन्तयोः समासयोर-नन्तरः ष्यञ् भवतीत्यर्थः । संमतित्वम्, संमतिता, संमतिमा, सांमत्यम् । इगन्त-त्वादणि—सांमतम् । संमनस्त्वम् । संमनस्ता । संमनिमा । सांमनस्यम् । गुणवचन । भावमनुवर्तते, कर्म क्रिया कार्यं च । 'शरीरायासमात्रसाध्यं शौचादि क्रिया । शास्त्रेण विहितो यागादिः कार्यम्' इति तयोर्भेदमाहुः । अर्हत इति । 'अर्हः प्रशंसायाम्' इति शत्रन्तोऽर्हच्छब्दः पूजार्थाभिधायीति कैयटः । आकृतिगण इति । केषांचि-त्पाठस्तु कार्यान्तराय । तथा हि— 'अर्हतो नुम् च' इति नुमर्थः पाठः । एकभावः, विभावः, अन्यभावः, एषां पाठः स्वार्थे विधानार्थः । तथा च प्रत्याहाराह्निके वार्तिके प्रयोगः—'आन्यभाव्यं तु कालशब्दव्यवायाद्' इति । अन्यभाव एव आन्यभाव्यम् ।

यथातथयथापुरयोः पर्यायेण । (७-३-३१) नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेणादेरचो वृद्धिर्णिदादौ । अयथातथाभाव आयथातथ्यम्, अयाथातथ्यम्, आयथापुर्यम्, अयाथापुर्यम्, आपादसमाप्तेर्भावकर्माधिकारः । 'चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्' (वा ३०९१), चत्वारो वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैस्वर्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् । सामीप्यम् । औपम्यम् । त्रैलोक्यम् इत्यादि । सर्वे वेदाः सर्ववेदास्तानधीते सर्ववेदः । 'सर्वादेः—' (वा २७४८) इति लुक् । स एव सार्ववेद्यः । 'चतुर्वेदस्योभयपदवृद्धिश्च' (ग सू ९३), चतुरो वेदानधीते चतुर्वेदः । स एव चातुर्वैद्यः । चतुर्विद्यस्य इति पाठान्तरम् । चतुर्विद्य एव चातुर्वैद्यः । १७९० स्तेनाद्यन्नलोपश्च । (५-१-१२५) 'न' इति सङ्घातग्रहणम् । 'स्तेन चौर्ये' पचाद्यच् । स्तनस्य भावः कर्म वा स्तेयम् ।

नञ्पूर्वपदौ ब्राह्मणादी । तयोः ष्यञि आदिवृद्धौ विशेषमाह यथातथायथापुरयोः पर्यायेण । आदिवृद्धिप्रकरणे उत्तरपदस्य पूर्वस्य चेत्यधिकारे इदं सूत्रम् । 'नञः शुचि–' इत्यतो 'नञः' इत्यनुवर्तते, तदाह नञः परयोरेतयोरिति । यथातथ यथापुर इत्यनयोरित्यर्थः । पर्यायेणेति । कदाचित्पूर्वपदस्य कदाचिदुत्तरपदस्येत्यर्थः । आयथातथ्यमिति । यथातथेति निपातनात् ष्यञि पूर्वपदस्यादिवृद्धिः । अयाथातथ्यमिति उत्तरपदस्यादिवृद्धिः । आयथापुर्यमिति । यथापुरशब्दात् ष्यञि पूर्वपदस्यादिवृद्धिः । अयाथापुर्यमिति । उत्तपदस्यादिवृद्धिः । आपादसमाप्तेरिति । अत्र व्याख्यानमेव शरणम् । चतुर्वर्णादीनामिति । चतुर्वर्णादिभ्यः स्वार्थे ष्यञ् उपसंख्यानमित्यर्थः । सर्ववेदा इति । 'पूर्वकाल–' इति समासः । लुगिति । अध्येतृप्रत्ययस्येति शेषः । स एव सार्ववैद्य इति । सर्ववेदशब्दात् स्वार्थे ष्यञिति भावः । चतुर्वेदस्येति । वार्तिकमिदम् । ष्यञिति शेषः । चतुर्वेद इति । 'तद्धितार्थ–' इति द्विगुः । ततोऽध्येतृप्रत्ययस्याणो 'द्विगोर्लुगनपत्ये' इति लुक् । चतुर्विद्यस्येतीति । 'चतुर्वेदस्योभयपदवृद्धिश्च' इति वार्तिके 'चतुर्वेदस्य' इत्यस्य स्थाने 'चतुर्विद्यस्य' इति केचित्पठन्तीत्यर्थः । चतस्रो विद्या अधीते इत्यर्थे 'तद्धितार्थ–' इति द्विगौ 'विद्यालक्षणकल्पान्ताच्च' इति ठकि 'द्विगोर्लुगनपत्ये' इति तस्य लुकि चतुर्विद्यशब्दात् स्वार्थे ष्यञि उभयपदवृद्धौ चातुर्वैद्य इति रूपमिति भावः । स्तेनाद्यन्नलोपश्च । यदिति च्छेदः । स्तेनशब्दात् पञ्चम्यन्तात् भावे कर्मणि चार्थे यत्स्यादित्यर्थः । नेति सङ्घातग्रहणमिति । नलोपश्चेत्यत्र नेत्यकार उच्चारणार्थो न भवति । किंतु नकाराकारसंघातग्रहणमित्यर्थः । स्तेयमिति । स्तेनशब्दाद् यत्प्रत्यये सति नेति संघातस्य लोप इति भावः । न

अन्यत्वमित्यर्थः । यत्तु व्याकरणाधिकरणे भट्टपादैरुक्तम् 'आन्यभाव्यमप्रयोगः' इति, तत्त्ववैयाकरणमीमांसकसंतोषार्थमित्यवधेयम् । सर्ववेदा इति । 'पूर्वकालैक-' इति समासः । चतुर्वेद इति । तद्धितार्थे द्विगुः । द्विगोर्लुगनपत्ये' इत्यणो लुक् । चतुर्विद्य इति । 'विद्यालक्षणसूत्रान्ताट्ठक्' । तस्य लुक् । संघातग्रहणमिति । वर्णग्रहणे तु 'यस्येति च' इत्यकारलोपे सतीष्टं न सिध्यति । 'अचः परस्मिन्-'

इति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छन्ति । १७९१ ... । (५-१-१२६) सख्युर्भावः कर्म वा सख्यम् । 'दूतवणिग्भ्यां च च' ... भावः कर्म वा दूत्यम् । 'वणिज्यम्' इति काशिका । माधवस्तु 'वणि-... स्वभावात्स्त्रीलिङ्गः । भाव एव चात्र प्रत्ययो न तु कर्मणि' इत्याह । ... तु 'दूतवणिग्भ्यां च' इति नास्त्येव । ब्राह्मणादित्वाद्वाणिज्यमपि । १७९२ ...ज्ञात्योर्ढक् (५-१-१२७) । कापेयम् । ज्ञातेयम् । १७९३ पत्यन्त-...हिताविभ्यो यक् । (५-१ १२८) सैनापत्यम् । पौरोहित्यम् । 'राजासे' ... १०६) राजन्शब्दोऽसमासे यकं लभत इत्यर्थः । राज्ञो भावः कर्म वा ...ज्यम् । समासे तु ब्राह्मणादित्वात्ष्यञ्, आधिराज्यम् । १७९४ प्राणभृज्जा-

...मात्रलोपेऽपि 'यस्येति च' इत्यकारलोपात् स्तेयमिति सिध्यतीति वाच्यम्, ...ः परस्मिन्–' इत्यकारलोपस्य स्थानिवत्त्वेन तमाश्रित्य एकारस्य अयादेशप्रसङ्गात् ...संघातग्रहणेऽपि 'अलोऽन्त्यस्य' इत्यस्यैव लोपः स्यादिति शङ्क्यम्, ...ति च' इत्येव अकारस्य लोपसिद्धाविह नलोपविधिवैयर्थ्यात्, 'नानर्थकेऽलो-...विधिः–' इति निषेधाच्च । योगं विभज्येति । 'स्तेनात्' इति पृथक् सूत्रम् । ...' इत्यनुवर्तते । स्तेनशब्दाद्भावे कर्मणि च ष्यञित्यर्थः । समासकृदन्ततद्धि-...ताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दभिन्नमर्थवच्छब्दरूपं गुणवचनसंज्ञकं भवतीति ...कारसूत्रभाष्यरीत्या स्तेनशब्दस्य पचाद्यजन्तस्य गुणवचनत्वाभावादप्राप्ता-...र्थं वचनम् । अव्युत्पन्नप्रातिपदिकतया गुणवचनत्वेऽपि यत्प्रत्ययेनापवादेन पक्षे ...वेशार्थं वचनम् । ततो 'यन्नलोपश्च' इति योगान्तरम् । 'स्तेनात्' इत्यनुवृत्तावु-...र्थः । केचिदिति । भाष्यादृष्टत्वाद् योगविभागोऽयमप्रामाणिक इति भावः । ...र्थः । सखिशब्दात् षष्ठ्यन्ताद् भावकर्मणोः यः स्यादित्यर्थः । दूतवणिग्भ्यां ...ति । वार्तिकमिदम् । आभ्यामपि षष्ठ्यन्ताभ्यां भावकर्मणोः यः स्यादिति वक्तव्य-...र्थः । नास्त्येवेति । वार्तिकत्वे तस्य भाष्ये पाठावश्यकत्वात् पाठस्य ...भावादप्रामाणिकमेवेदं वृत्तिपठितं वार्तिकमिति भावः । तर्हि दूतवणिग्भ्यां भाव-...र्मणोः कथं यप्रत्यय इत्याशङ्क्य नास्त्येव यप्रत्ययः, किंतु ष्यञेवेत्याह ब्राह्मणा-...त्वाद्वाणिज्यमपीति । अपिना दौत्यसंग्रहः । कपिज्ञात्योर्ढक् । पञ्चम्यर्थे-...ष्ठी । आभ्यां षष्ठ्यन्ताभ्यां भावकर्मणोः ढगित्यर्थः । अत्र कपिज्ञात्योः भावकर्म-...णोश्च यथासंख्यम् व्याख्यानात् । पत्यन्त । पत्यन्तेभ्यः पुरोहितादिभ्यश्च षष्ठ्य-...न्तेभ्यो भावकर्मणोर्यक् स्यादित्यर्थः । राजासे इति । पुरोहितादिगणसूत्रमिदम् । ...राजा असे इति च्छेदः । स इति समासस्य प्राचां संज्ञा । तदाह—राजन्शब्द ...इति । राज्यमिति । यकि टिलोपः । 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु

...अल्लोपस्य स्थानिवद्भावादयादेशप्रसङ्गादिति भावः । ननु संघातग्रहणेऽपि 'अलोऽ-...न्त्यस्य' इत्याकारस्यैव लोपः स्यान्न तु संघातग्राहणस्येति चेत् । मैवम्, आरम्भसाम-...र्थ्याद् 'नानर्थकेऽलोन्त्यविधिः–' इति निषेधाद्वा तत्सिद्धेः । कपिज्ञात्योः । इह कपिज्ञाती ...तौ, भावकर्मणी अर्थावपि द्वौ, तयोर्यथासंख्यं न भवत्यस्वरितत्वप्रतिज्ञानात् । एवं

तिवयोवचनोद्गात्रादिभ्योऽञ् । (५--१--१२९) प्राणभृज्जाति—आश्वम् । औष्ट्रम् । वयोवचन—कौमारम्, कैशोरम्, औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् । दौष्ठवम् । १७९५ हायनान्तयुवादिभ्योऽण् । (५—१--१३०) द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् । 'श्रोत्रियस्य यलोपश्च' (वा ३०९३) । श्रौत्रम् ।

---

न, अभावकर्मणोरिति पर्युदासात् । समासे त्विति । अधिको राजा अधिराजः प्रादिसमासः । असे इति पर्युदासाद्यगभावे ब्राह्मणादित्वात् ष्यञि आधिराज्यमिति रूपमित्यर्थः । यक्ष्यञोः स्वरे विशेषः । प्राणभृज्जाति । प्राणभृतः—प्राणिनः, तज्जातिवाचिभ्यो वयोविशेषवाचिभ्य उद्गात्रादिभ्यश्च षष्ठ्यन्तेभ्यो भावकर्मणोः अञित्यर्थः । प्राणभृज्जातीति उदाहरणसूचनम् । एवं वयोवचनेति । हायनान्त । हायनान्तेभ्यो युवादिभ्यश्च षष्ठ्यन्तेभ्यो भावकर्मणोः अण् स्यादित्यर्थः । द्वैहायनमिति । द्विहायनस्य भावः कर्म वेति विग्रहः । वयोवचनलक्षणस्य अञोऽपवादः । एवं त्रैहायनमपि । यौवनमिति । अनिति प्रकृतिभावान्न टिलोपः । श्रोत्रियस्येति । वार्तिकमिदम् । श्रोत्रियशब्दात् षष्ठ्यन्तात् भावकर्मणोः अण्, प्रकृतेर्यलोपश्चेत्यर्थः । 'य' इति संघातग्रहणम् । श्रौत्रमिति । छन्दोऽधीते इत्यर्थे छन्दश्शब्दाद् घप्रत्यये तस्य इयादेशे प्रकृतेः श्रोत्र इत्यादेशे 'यस्येति च' इत्यल्लोपे श्रोत्रियशब्दः । श्रोत्रियस्य भावः कर्म वेत्यर्थे श्रोत्रियशब्दा-

---

'पत्यन्तपुरोहितादिभ्यः—' 'द्वन्द्वमनोज्ञादिभ्यः—' इत्यत्रापि बोध्यम् । ब्राह्मणादित्वादिति । यद्यपि ब्राह्मणादिषु राजन्शब्दः केवलः पठितः, तथाप्ययमेव 'असे' इति प्रतिषेधो ज्ञापयति 'अस्त्यत्र प्रकरणे राजन्शब्देन तदन्तविधिः' इति । एवं च ब्राह्मणादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव भवति । अन्ये तु ब्राह्मणादेराकृतिगणत्वादेव तदन्तात् कथंचित्ष्यञि सिद्धे राजन्शब्दस्य तत्र पाठो यका सह समावेशार्थं इति । तथा चावेष्ट्यधिकरणे शाबरभाष्ये उक्तं 'राज्ञः कर्म राज्यं ब्राह्मणादित्वात् ष्यञ्' इति । पुरोहित, संग्रामिक, पथिक, सारथिकेत्यादयः पुरोहितादयः । प्राणभृज्जाति । मुखनासासंचारी वायुः प्राणः । 'प्राणिजाति—' इत्येव सुवचम् । प्राणभृदिति किम्, तृणत्वम्, तृणता । जातीति किम्, देवदत्तत्वम् । औद्गात्रमिति । उद्गात्रादिषु ये ऋत्विग्वचनास्तेभ्यो 'होत्राभ्यश्छः' इति छे प्राप्ते अञ् विधीयते । सुष्ठु दुष्ठु द्वाभ्यां गुणलक्षणे ष्यञि प्राप्ते, वधूशब्दादिगन्तलक्षणेऽणि, शेषेभ्यस्त्वतलोः प्राप्तयोः इह तु 'सुभगं मन्त्रे' पठ्यते । सुभगमिति तच्छब्दरूपं मन्त्रविषये प्रयोगे अञमुत्पादयतीत्यर्थः । 'महते सौभगाय' । सर्वविधीनां छन्दसि वैकल्पिकत्वादिह 'हृद्भगसिन्ध्वन्ते—' इत्युत्तरपदवृद्धिर्न भवति । अतएव मन्त्रेऽपि क्वचिदञ् न भवति । 'सौभाग्यमस्यै दत्त्वाय' इह ष्यञ् । हायनान्त । अस्मात्त्वतलोः प्राप्तयोरण्विधानम् । युवस्थविरशब्दाभ्यां वयोवचनलक्षणे अञि प्राप्ते । यौवनमिति । अणि परतः 'अन्' इति प्रकृतिभावः । मनोज्ञादिपाठाद् वुञपि । यौवनकम् । 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति प्रकृतिभावः । श्रोत्रियस्येति । 'श्रोत्रियंश्छन्दोऽधीते' इत्यत्र छान्दसः श्रोत्रभावः घश्च प्रत्यय इति यदा व्याख्यानम्, तदा

चपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते । म्, कौशलमित्यादि । १७९६ इगन्ताच्च लघुपूर्वात् । (५—१—१३१) वि: कर्म वा शौचम् । मौनम् । कथं काव्यम्—कविशब्दस्य ब्राह्मणादित्वा- म् । १७९७ योपधाद् गुरूपोत्तमाद् वुञ् । (५—१—१३२) रामणी- म् । आभिधानीयकम् 'सहायाद्वा' ( वा ३०९४ ) । साहाय्यम्, साहाय- म् । १७९८ द्वन्द्वमनोज्ञादिभ्यश्च । (५—१—१३३) शैष्योपाध्यायिका ।

---

यकाराकारसंघातस्य लोपे रेफादिकारस्य 'यस्येति च' इति लोपे श्रोत्रमिति म् । यकारादकारस्य 'यस्येति च' इति लोपे सति यकारमात्रस्यानेन लोपे तु दिकारस्य यण् स्यात् । नच तस्य 'यस्येति च' इति लोपः शङ्क्यः, लक्ष्ये स्य सकृदेव प्रवृत्तिरिति न्यायात् । अकारलोपस्य स्थानिवत्त्वेन इकारान्तस्य भावाच्च । 'श्रोत्रियस्य घलोपश्च' इत्येके पठन्ति । इगन्ताच्च । लघुः पूर्वोऽव- यस्येति विग्रहः । पूर्वत्वं च इगवधिकमेव गृह्यते, व्याख्यानात् । तथा च पूर्वो य इक् तदन्तात्प्रातिपदिकात् षष्ठ्यन्ताद्भावकर्मणोरण् स्यादित्यर्थः । वचनेत्यादेरपवादः । कथं काव्यमिति । कविशब्दस्य लघुपूर्वेगन्तत्वाद् वचन-' इति ष्यञं बाधित्वा अण्प्रसङ्गात् काव्यमिति कथमित्याक्षेपः । समा- कविशब्दस्येति । ब्राह्मणादित्वादित्यनन्तरं ष्यञि उपपाद्यमिति शेषः । त्वात् । योपधाद् गुरूपोत्तमात् प्रातिपदिकात् षष्ठ्यन्ताद्भावकर्मणोर्वुञि- र्थः । रामणीयकमिति । रमणीयशब्दाद् वुञ् । आभिधानीयकमिति । भिधानीयशब्दाद् वुञ् । सहायाद्वेति । वुञिति शेषः । पक्षे ब्राह्मणादित्वात् ष्यञ् । इदं तु वार्तिकं भाष्ये क्वचिन्मृग्यम् । द्वन्द्वमनोज्ञादिभ्यश्च । द्वन्द्वाद् मनोज्ञादिभ्यश्च षष्ठ्यन्तेभ्यो वुञित्यर्थः । शैष्योपाध्यायिकेति । शिष्यश्च

---

लोपः' इति यथाश्रुतम् । यदा तु 'वाक्यार्थे पदरचनम्' इति पक्षः, तदा घशब्देन इति रूपं लक्ष्यते । क्वचित्तु 'यलोपश्च' इति पाठः, तत्र येति संघातग्रहणं ध्येयम् । वर्णग्रहणे त्विकारस्य यणादेशः स्यान्न तु 'यस्येति च' इति लोपः । कारलोपस्य स्थानिवत्त्वेन इकारान्तस्य भत्वाभावात् । एतच्च हरदत्तग्रन्थे स्पष्टम् । पुस्तकेषु 'यलोपः' इति मुख्यपाठ एव प्रायेण दृश्यते, न तु घलोप इति पाठः । न्ताच्च । लघुः पूर्वोऽववो यस्येति प्रातिपदिकविशेषणम् । पूर्वत्वं च संनिधान- वधिकमेव । तेनातिपाण्डुशब्दान्न भवति । 'लघुपूर्वकः' इत्येव सुवचम् । लघुपूर्व- त्यासौ इक् च लघुपूर्वेक् तस्य प्रातिपदिकविशेषणात्तदन्तलाभ इति नव्याः । इगन्ता- त्किम्, घटत्वम् । लघुपूर्वात्किम्, पाण्डुत्वम् । कथं काव्यमिति । कुधातोः पौरावश्यके' इति रूपसिद्धावपि कवेः कर्मेत्यर्थे कावमिति स्यादिति प्रश्नः । योप- म् । गुरु उपोत्तमं यस्य प्रातिपदिकस्य तस्मादित्यर्थः । योपधात्किम्, विमानत्वम् । गुरू- त्तमादिति किम्, क्षत्त्रियत्वम् । आभिधानीयकमिति । अत्र प्रकृतिरभेः अनीयर्प्रत्ययान्तो दधातिः । अभिधानीयस्य भावः कर्म वेत्यर्थः । सहायाद्वेति । वेण नित्ये प्राप्ते विकल्पार्थं वचनम् । द्वन्द्वमनोज्ञादिभ्यश्च । मनोज्ञ, प्रियरूप,

मानोज्ञकम् । १७९९ गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु । (५—१—१३४) अत्याकारोऽधिक्षेपः । तदवेतः ते गोत्रचरणयोर्भावकर्मणी प्राप्तः अवगतवान्वा। गार्गिकया श्लाघते । गार्ग्यत्वेन विकत्थत इत्यर्थः । गार्गिकया अत्याकुरुते। गार्गिकामवेतः । १८०० होत्राभ्यश्छः । (५—१—१३५) होत्राशब्दो ऋत्विग्वाची स्त्रीलिङ्गः । बहुवचनाद्विशेषग्रहणम् । अच्छावाकस्य भावः कर्म वा अच्छावाकीयम् । मैत्रावरुणीयम् । १८०१ ब्रह्मणस्त्वः । (५—१—१३६) होत्रावाचिनो ब्रह्मन्शब्दात्त्वः स्यात् । छस्यापवादः । ब्रह्मत्वम् । नेति वाच्ये त्ववचनं तलो बाधनार्थम् । ब्राह्मणपर्यायाद् ब्रह्मन्शब्दात्तु त्वतलौ । ब्रह्मत्वम्, ब्रह्मता।

इति तद्धितेषु भावकर्माधिकारप्रकरणम् ।

---

उपाध्यायश्चेति द्वन्द्वाद् वुञ् । स्त्रीत्वं लोकात् । यद्यपि 'योपधात्' इत्येव सिध्यति तथापि गौपालपशुपालिकेत्युदाहरणं बोध्यम् । गोत्रचरणात् । गोत्रप्रत्ययान्तात् शाखाध्येतृवाचिनश्च षष्ठ्यन्ताद्भावकर्मणोर्वुञ् स्यात् श्लाघादिषु विषयेष्वित्यर्थः। अपत्याधिकारादन्यत्र प्रवराध्यायप्रसिद्धं गोत्रमित्युक्तम् । 'अत्याकार' इत्यस्य विवरणम् अधिक्षेप इति । 'तदवेत' इत्येतद्विवृणोति—ते गोत्रेति । तच्छब्देन गोत्रचरणयोः भावकर्मणी विवक्षिते । अवपूर्वादिणः प्राप्त्यर्थाद् ज्ञानार्थाद्वा कर्तरि क्तः। ते अवेतस्तदवेत इति विग्रहः । 'द्वितीया' इति योगविभागात् समासः। अवगतवान्वेति । ज्ञातवानित्यर्थः । गार्गिकयेति । गार्ग्यशब्दाद् वुञि 'आपत्यस्य–' इति यलोपे 'यस्येति च' इत्यकारलोपे लोकात् स्त्रीत्वे टापि 'प्रत्ययस्थात्–' इति इत्वे गार्गिकाशब्दः। काठिकया श्लाघत इति चरणादुदाहार्यम् । अत्र श्लाघादयः पदान्तरोपात्ता एव प्रत्ययार्थान्वयिनः, नतु प्रत्ययवाच्या इति बोध्यम्। होत्राभ्यश्छः । ऋत्विग्वाचीति । याज्ञिकप्रसिद्धेरिति भावः । ऋत्विग्विशेषवाचिभ्यः षष्ठ्यन्तेभ्यः छः स्याद्भावकर्मणोरित्यर्थः । अच्छावाकीयमिति। 'आ च त्वात्' इति त्वतलोरपि सर्वत्र समावेशो बोध्यः । ब्रह्मणस्त्वः । होत्राभ्य इत्यनुवृत्तमेकवचनेन विपरिणम्यते । तदाह होत्रावाचिन इति । ऋत्विग्वाचिन इत्यर्थः । ननु ब्रह्मणो नेत्येवास्तु । ब्रह्मणश्छो न इत्यर्थे सति छे निषिद्धे आ च त्वादित्यधिकाराद् 'होत्राभ्यश्छः' इत्येव भावकर्म

---

बहुल, अवश्यंत्यादिर्मनोज्ञादिः । गोत्रचरणात् । गोत्रवाचिनश्चरणवाचिनः प्रातिपदिकाद् वुञ् स्याद्भावकर्मणोः । अपत्याधिकारादन्यत्र लौकिकं गोत्रम्, तेनापत्यप्रत्ययान्तेभ्य इत्यर्थः। प्रवराध्याये ये पठितास्तेभ्य इत्यपरे । 'गोत्रं च चरणैः सह' इति जातित्वाद् 'प्राणभृज्जाति—' इत्यादिना अञि प्राप्ते वचनम् । श्लाघेत्यादि। श्लाघादिषु विषयभुतेष्वित्यर्थः प्राप्त इति । इणः प्राप्त्यर्थत्वात् । अपूर्वसंयोगो ... प्रसिद्धत्वादाह—अवगतवान्वेति । गार्गिकयेति । 'आपत्यस्य–' इति यलोपः। चरणाद् वुञ् उदाहरणं तु काठिकया श्लाघत इत्यादि बोध्यम् । श्लाघादिष्विति किम्। गार्ग्यत्वम् । कठत्वम् । होत्राशब्द इति । जुहोतेस्त्रन् । नेति वाच्य इति । छप्रत्यये निषद्धे 'तस्य भावस्त्वतलौ' इत्यनेनैव त्वप्रत्ययः सिध्यति । विभक्तेरनुवादः

# अथ तद्धितेषु पाञ्चमिकप्रकरणम् । ३७ ।

१८०२ धान्यानां भवने क्षेत्रे खञ् । (५—२—१) भवन्त्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् । १८०३ व्रीहिशाल्योर्ढक् । (५–२–२) व्रैहेयम् । शालेयम् । १८०४ यवयवकषष्टिकाद्यत् । (५—२—३) यवानां

प्रत्ययः सिध्यतीत्यत आह नेति वाच्य इति । तलो बाधनार्थमिति । चकारवशाद्धोत्राभ्य इति भावकर्मणोः प्राप्तस्य तलो निवृत्त्यर्थमित्यर्थः । एतेन 'तस्य भावस्त्वतलौ' इत्यनेन ब्रह्मणः कर्मणि त्वस्याप्राप्तेस्तदर्थं त्वप्रत्ययविधानमिति न शङ्क्यम्, नापि ब्रह्मणो नेत्युक्ते पूर्वसूत्रविहितानां त्वतल्छानां निषेधः स्यादित्यपि शङ्क्यम, शब्दोपात्तस्य छस्यैव निषेधात् । अत्र होत्राग्रहणानुवृत्तेः प्रयोजनमाह—ब्राह्मणपर्यायादिति ।

इति तद्धितेषु भावकर्माधिकारः ।

अथ पाञ्चमिका निरूप्यन्ते । धान्यानां भवने । धान्यवाचिभ्यः षष्ठ्यन्तेभ्यो भवने क्षेत्रेऽर्थे खञित्यर्थः । भवनशब्दस्य भावल्युडन्तत्वे क्षेत्रशब्दसामानाधिकरण्यानुपपत्तेराह—भवन्त्यस्मिन्निति भवनमिति । भूधातुरुत्पत्तिवाची । उत्पत्तिस्थानं भवनमिति लभ्यते । धान्योत्पत्तिस्थानं क्षेत्रम् । 'केदारः क्षेत्रम्' इत्यमरः । क्षेत्रशब्दाभावे भूधातोः सत्तावाचित्वमाश्रित्य यत्र विद्यते तद्भवनमिति व्युत्पत्त्या आधारसामान्यं गृहकुसूलादि लभ्येत । अतः क्षेत्रपदम् । भवनपदाभावे तु क्षेत्रशब्देन सेतुबन्धकाश्यादिपुण्यप्रदेशोऽपि लभ्येत । अतो भवनपदम् । उभयोपादाने तु धान्योत्पत्तिप्रदेश एव लभ्यत इति न पौनरुक्त्यम् । व्रीहिशाल्योर्ढक् । व्रीहिशब्दात् शालिशब्दाच्च षष्ठ्यन्ताद्भवने क्षेत्रेऽर्थे ढगित्यर्थः । खञोऽपवादः । यवयवक । यव, यवक, षष्टिक एभ्यः षष्ठ्यन्तेभ्यो भवने क्षेत्रे यत्स्यादित्यर्थः ।

लाघवं च भवतीति भावः । 'होत्राभ्यः—' इत्यनुवृत्तेः फलं दर्शयति—ब्राह्मणपर्यायादिति । इति भावकर्मार्थकाः ।

इति तत्त्वबोधिन्यां नञ्स्नञ्प्रकरणम् ।

धान्यानाम् । 'धिवि प्रीणने' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति कर्तरि यत् । अस्मादेव निपातनादन्त्यस्य लोप इकारस्य चात्वम् । धिनोतीति धान्यम् । मन्त्रश्च 'धान्यमसि धिनुहि देवान्' इति दृश्यते । धान्यानामिति भवनापेक्षया कर्तरि षष्ठी । सा च निर्देशादेव समर्थविभक्तिः । बहुवचनं तु स्वरूपविधिनिरासार्थम् । लौकिके प्रक्रियावाक्ये तु षष्ठ्यन्तत्वानुवादेन तद्धितविधिसामर्थ्यादेवेति बोध्यम् । भवतिरिहोत्पत्तिवचनः क्षेत्रग्रहणसामर्थ्याद् । सूत्रे हि सत्तावचनस्यापि भवतेर्ग्रहणं मा भूदिति क्षेत्रग्रहणं कृतम् । अन्यथा 'धान्यानां भवनं कुसूलः' इत्यत्रापि स्यादिति । धान्यानां किम्, तृणानां भवनं क्षेत्रम् । व्रीहिशाल्योः । अत्रापि निर्देशादेव षष्ठी समर्थविभक्तिः । सा च भवनापेक्षया कर्तरीत्यादि पूर्ववत् । यवयवक । अत्र प्रत्ययाविधानसामर्थ्याल्लभ्या षष्ठी समर्थविभक्तिः । विभाषा । खञि नित्ये प्राप्ते वचनम् ।

भवनं क्षेत्रं यव्यम्। यवक्यम्। षष्टिक्यम्। १८०५ विभाषातिलमाषोमाभङ्गाणुभ्यः। (५—२—४) यद्वा स्यात्। पक्षे खञ्। तिल्यम्, तैलीनम्। माष्यम्, माषीणम्। उम्यम्, औमीनम्। भङ्ग्यम्, भाङ्गीनम्। अणव्यम्, आणवीनम्। १८०६ सर्वचर्मणः कृतः खखञौ। (५—२—५) असामर्थ्येऽपि निपातनात्समासः। सर्वश्चर्मणा कृतः सर्वचर्मीणः, सार्वचर्मीणः। १८०७ यथामुखसंमुखस्य दर्शनः खः। (५—२—६) मुखस्य सदृशं यथामुखं प्रतिबिम्बम्। निपातनात्सादृश्येऽव्ययीभावः। समं सर्वं मुखं सम्मुखम्। समशब्दस्यान्तलोपो निपात्यते। यथामुखं दर्शनो यथामुखीनः। सर्वस्य मुखस्य दर्शनः सम्मु-

---

खञोऽपवादः। 'धान्यानाम्' इत्यनुवृत्तेरिहापि षष्ठ्येव समर्थविभक्तिः। विभाषा तिल। तिल, माष, उमा, भङ्ग, अणु एभ्यो धान्यविशेषवाचिभ्यः षष्ठ्यन्तेभ्यो यद्वा स्यादित्यर्थः। 'उमाभङ्गौ धान्यविशेषौ' इति भाष्यम्। 'उमा स्यादतसी क्षुमा' इत्यमरः। अणव्यमिति। अणुर्धान्यविशेषः। यति 'ओर्गुणः' 'वान्तो यि-' इत्यवादेशः। सर्वचर्मणः। सर्वचर्मन्शब्दात्तृतीयान्तात् चर्मणा सर्वं कृतम् इत्यर्थे खखञौ स्त इत्यर्थः। औचित्यादिह तृतीया समर्थविभक्तिः। ननु इह सर्वशब्दस्य कृते अन्वयात् चर्मण्यन्वयाभावादसामर्थ्याच्चर्मणा समासासंभवात् कथं सर्वचर्मन्शब्दात्प्रत्यय इत्यत आह असामर्थ्येऽपीति। सर्वश्चर्मणा कृत इति विग्रहवाक्यम्। चर्मणा कृत्स्नः कृत इत्यर्थः। सर्वचर्मीण इति। 'नस्तद्धिते' इति टिलोपः। सर्वेण चर्मणा कृत इत्यर्थे तु न खखञौ व्याख्यानात्। यथामुख। यथामुख, संमुख आभ्यां षष्ठ्यन्ताभ्यां दर्शन इत्यर्थे खः स्यादित्यर्थः। दृश्यतेऽस्मिन्निति दर्शनं आदर्शादिः। ननु मुखस्य सदृशं यथामुखमिति कथमव्ययीभावः? 'यथाऽसादृश्ये' इति सादृश्ये तन्निषेधादित्यत आह निपातनादिति। संमुखशब्दे आभिमुख्यार्थकस्य समित्युपसर्गस्य न प्रवेशः, किंतु समशब्दस्य सर्वपर्यायस्येत्याह समं सर्वं मुखं संमुखमिति। सममित्यस्य विवरणं सर्वमिति। समं च तन्मुखं चेति कर्मधारये

---

औमीनं भाङ्गीनमिति। ननूमाभङ्गयोर्धान्यत्वाभावात्कथमिह खञ्। 'व्रीहयश्च मे यवाश्च मे' इति चमकानुवाके हि द्वादशैव धान्यानि पठितानि, न तूमाभङ्गौ पठितौ इति चेत्। मैवम्, 'शणसप्तदशानि धान्यानि' इति स्मरणात्। तत्र चोमाभङ्गयोरपि पाठाद्धान्यत्वमस्तीति भाष्यादौ स्थितत्वात्। न च चमकानुवाके धान्यपरिगणनेनार्थः, तत्राधान्यानामप्यश्मादीनां पाठात्। धान्यानामपि केषांचित् कोद्रवादीनामपाठात्। तस्मादन्यत एव धान्यनिर्णय इति पूर्वोक्तस्मृत्या तयोर्धान्यत्वमस्तीति ज्ञेयम्। सर्वचर्मणः। 'खश्च' इत्येव तु नोक्तम्। यतोऽप्यनुकर्षः संभाव्येतेति। अत्र तृतीया समर्थविभक्तिः। कृत इति प्रत्ययार्थे चर्मणः करणत्वस्योचितत्वात्। सर्वश्चर्मणेति। सर्वचर्मणा कृत इत्यर्थे तद्धितो नेष्यत इति भावः। यथामुख। दृश्यतेऽस्मिन्दर्शनं आदर्शादिः। अधिकरणे ल्युट्। 'असादृश्ये' इति प्रतिषेधात्सादृश्ये यथाशब्दस्य कथं समासस्तत्राह-निपातनादिति। एतच्च वृत्तिग्रन्थमनुसृत्योक्तम्। भट्टिकाव्ये तु पदार्थानतिवृत्तौ यथाशब्द आश्रितः। तथा च मायामृगं प्रकम्प्योक्तम्—'यथामुखीनः सीतायाः

१८०८ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति । (५—२—७)
पथ्याद्यन्ताद् द्वितीयान्तात्खः स्यात् । सर्वपथान्व्याप्नोति सर्वपथीनः ।
सर्वकर्मीणः । सर्वपात्रीणः । सर्वपात्रीणः । १८०९ आप्रपदं
प्राप्नोति । (५—२—८) पादस्याग्रं प्रपदम्, तन्मर्यादीकृत्य आप्रपदम्—आप्रपदीनः
। १८१० अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु । (५—२—९)
आयामे सादृश्ये वा । अनुपदं बद्धा अनुपदीना उपानत् । सर्वान्नानि भक्षयति
सर्वान्नीनो भिक्षुः । अयानयः स्थलविशेषः । तं नेयः अयानयीनः शारः

शब्द इत्यर्थः । निपात्यत इति । इदं च भाष्ये स्पष्टम् । एवं च समित्युपसर्ग-
यं प्रत्ययो नेष्यत इति भावः । तत्सर्वादेः । पथिन्, अङ्ग, कर्मन्, पत्र, पात्र
समाहारद्वन्द्वात् पञ्चम्यर्थे द्वितीया । प्रातिपदिकविशेषणत्वात्तदन्तविधिः । ग्रहण-
प्रातिपदिकेन तदन्तविधिर्नास्तीति निषेधस्तु न, केवलानामेषां सर्वादित्वस्या-
त्वात् । तदिति तु द्वितीयान्तं व्याप्नोतीत्यत्रान्वेति । ततश्च तद्व्याप्नोतीत्यर्थे सर्व-
पूर्वपदकेभ्यः पथ्यङ्गकर्मपत्रपात्रान्तेभ्यः प्रातिपदिकेभ्यो द्वितीयान्तेभ्यः खः स्यादि-
र्थः फलति । तदाह सर्वादेरित्यादिना । सर्वपथानिति । 'ऋक्पूः—' इति
नान्तः । आप्रपदम् । आप्रपदमित्यव्ययीभावाद् द्वितीयान्तात्प्राप्नोतीत्यर्थे खः
आदित्यर्थः । पदस्याग्रं प्रपदमिति । 'पादाग्रं प्रपदम्' इत्यमरः । आप्रपद-
ति । 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः । अनुपद । अनुपद । सर्वान्न,
यानय एषां समाहारद्वन्द्वाद् द्वितीया । बद्धा, भक्षयति, नेय एषां द्वन्द्वात् सप्तमी ।
तस्य द्वन्द्वानुप्रवेश आर्षः । अनुपदादिभ्यो द्वितीयान्तेभ्यः क्रमाद्बद्धादिष्वर्थषु खः
आदित्यर्थः । अनुरायामे सादृश्ये वेति । आद्ये 'यस्य चायामः' इत्यव्ययीभावः,
तीये सादृश्ये अव्ययीभावः । अनुपदं बद्धेति । क्रियाविशेषणत्वाद् द्वितीया ।

मुखे बहु लोभयन्' इति । यथामुखं दर्शन इति । अव्ययीभावस्यापि यथामुख-
शब्दस्योन्मत्तगङ्गादिवत्सत्त्ववचनत्वात्कर्मशक्तियोगे सति कृद्योगलक्षणा षष्ठी । तस्याः
अव्ययीभावात्—' इत्यमादेशः । सर्वस्य मुखस्येति । 'संमुखस्य' इति नोक्तम् ।
प्रत्ययसंनियोगेनैव समशब्दस्यान्त्यलोपनिपातनात् । संशब्दस्तु समशब्दार्थे न दृश्यते,
संमुखो भव' इत्यत्र 'अभिमुख' इत्यर्थं प्रतीतेः । तत्र च खप्रत्ययस्याजनिष्यमाणत्वात् ।
थं तर्हि—'संयुगे संमुखीनं तमुद्गदं प्रसहेत कः' इति भट्टिः । अभिमुखावस्थानात्सा-
पर्याद्भविष्यतीति हरदत्तः । तत्सर्वादेः । तदिति द्वितीया समर्थविभक्तिः ।
व्याप्नोतीति प्रत्ययार्थः । परिशिष्टं प्रकृतिविशेषणम् । तत्र केवलानां पथ्यादीनां
सर्वादित्वासम्भवात्प्रातिपदिकैरपि तैस्तदन्तविधिः । तदाह पथ्याद्यन्तादिति ।
पथ्यङ्गकर्मपत्रपात्रान्तात्प्रातिपदिकादित्यर्थः । सर्वपथीन इति । 'पूर्वकालैक—' इति
समासः । 'ऋक्पूः—' इति समासान्तः । तस्य पथ्यन्तसमासग्रहणेन ग्रहणाद्भवति
प्रत्ययः । अनुपदसर्वान्नायानयम् । बद्धाभक्षयतीत्यत्र निपातनात्तिङन्तेन सह द्वन्द्वः ।
द्वितीयान्तेभ्योऽनुपदादिभ्यो यथासंख्यं बद्धादिष्वर्थेषु खः स्यात् । अनुरायाम
इत्यादि । 'यस्य चायामः' इति यथार्थे 'अव्ययम्—' इति वा अव्ययीभाव इत्यर्थः ।

१८११ परोवरपरम्परपुत्रपौत्रमनुभवति । (५—२—१०) परांश्चावरांश्चानुभवतीति परोवरीणः। अवरस्योत्त्वं निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। प्रकृतेः परंपरभावो निपात्यते। पुत्रपौत्रान् अनुभवति पुत्रपौत्रीणः। परम्पराशब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गम्। तस्मादेव स्वार्थे ष्यञि पारम्पर्यम्। कथं पारोवर्यवदिति–असाधुरेव, खप्रत्ययसंनियोगेनैव परोवरेति निपातनात्। १८१२ अवारपारात्यन्तानुकामं गामी। (५-१-११)

अनुपदीना उपानदिति। 'पदसंबन्धिदैर्घ्योपलक्षितेत्यर्थः। पदेन सदृशीति वा। तत्तुल्यपरिमाणेति यावत्। अयानय इति। द्यूते शाराणां प्रदक्षिणपरिवर्तनम् अयः, प्रसव्यपरिवर्तनम् अनयः। अयसहितः अनयः अयानयः। प्रदक्षिणप्रसव्यगामिनां यस्मिन् युग्मादिपदे स्थितानां परकीयैः शारैरनाक्रमणं तत् स्थानमिह अयानयशब्देन लक्षणयोच्यत इत्यर्थः। एतत्सर्वं भाष्ये स्पष्टम्। 'ससहायस्य शारस्य परैर्नाक्रम्यते पदम्। असहायस्तु शारेण परकीयेण बाध्यते ॥' इति द्यूतशास्त्रमर्यादा। विस्तरस्तु कैयटमनोरमादावनुसंधेयः। तं नेय इति। तं स्थानविशेषमयानयाख्यं प्रापणीय इत्यर्थः। णीञ् द्विकर्मकः, प्रधाने कर्मणि यत्। 'अप्रधाने द्वितीया' इति भावकर्मलकारप्रक्रियायां वक्ष्यते। परोवर। परोवर, परम्पर, पुत्रपौत्र एभ्यो द्वितीयान्तेभ्यः अनुभवतीत्यर्थे खः स्यादित्यर्थः। परोवरीण इति। परे च अवरे च परावरे।ताननुभवतीत्यर्थः। अवरस्योत्त्वमिति। अवरशब्दस्य आदेरकारस्य खप्रत्ययसंनियोगेन उत्वं निपात्यत इत्यर्थः। एवं च विग्रहवाक्ये इदमुत्वं न भवति। प्रकृतेरिति। परपरतरशब्दाद् द्वन्द्वात्खे सति तत्संनियोगेन प्रकृतेः परम्परभावो निपात्यत इत्यर्थः। नन्वेवं सति कल्याणपरम्परेत्यादौ कथं परम्पराशब्दः ? परम्परभावस्य खप्रत्ययसंनियोगशिष्टत्वादित्यत आह—परम्पराशब्दस्त्विति। तस्मादेवेति। परम्परेत्यव्युत्पन्नप्रातिपदिकादेवेत्यर्थः। कथमिति। परावरशब्दाद् भावे वा स्वार्थे वा ष्यञि अवरस्यादेरुत्वे पारोवर्यशब्दाद् मतुपि पारोवर्यवदिति कथमित्याक्षेपः, उत्वस्य खप्रत्ययसंनियोगशिष्टत्वादिति भावः। उत्वं दुरुपपादमेवेत्याह—असाधुरेवेति। नन्वत्र परोवरेति निर्देशात् खादन्यत्राप्युत्वं किं न स्यादित्यत आह खप्रत्ययसंनियोगेनैवेति। अत एव भाष्ये 'परांश्चावरांश्चानुभवति' इत्येव विग्रहो दर्शित इति भावः। अवारपार। अवारपार, अत्यन्त, अनुकाम एभ्यो

सर्वान्नीन इति। प्रकारकार्त्स्न्ये सर्वशब्दः। यान्यन्नानि लभ्यन्ते उष्णानि शीतलानि सरसानि नीरसानि वा सर्वाणि भक्षयतीत्यर्थः। 'अयः प्रदक्षिणगमनम्। अनयः प्रसव्यगमनम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परैरसमावेशः सोऽयमयानयः' इति काशिका। तं नेय इति। नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि द्वितीया। अयानयीनः शार इति। 'फलकशिरसि स्थित इत्यर्थः' इति काशिका। अवरस्येति। आदेरिति शेषः। उत्वे कृते 'आद्गुणः'। केचित्तु ओत्वं परशब्दस्य निपात्यते तस्मात्परस्यातः 'एङः पदान्तात्' इति पूर्वरूपादेश इति पक्षान्तरमाहुः।

१ 'दैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः' इति क,।

पारं गामी अवारपारीणः । अवारीणः । पारीणः । पारावारीणः । अत्यन्तं गामी अत्यन्तीनः । भृशं गन्तेत्यर्थः । अनुकामं गामी अनुकामीनः । यथेष्टं गन्ता । समां समां विजायते । (५-२-१२) यलोपोऽवशिष्टविभक्तेरलुक्च निपात्यते । समांसमीना गौः । 'समांसमीना सा यैव प्रतिवर्षं प्रसूयते' इत्यमरः । 'व्यानुत्पत्तौ यलोपो वा वक्तव्यः'(वा ३१००)। समां समां विजायते । समायां

---

इत्यर्थे खः स्यादित्यर्थः । गामीत्यस्य अवश्यं गमिष्यन्नित्यर्थः । 'आवश्यकाधमर्ण्ययोर्णिनिः' इति णिनिः । 'भविष्यति गम्यादयः' इति भविष्यत्कालता । 'बहुलमाभीक्ष्ण्ये' इति वा णिनिः । अवारपारीण इति । अवारपरं गामीति विग्रहः । अवारपारशब्दाद्विगृहीताद्विपरीतादपि, व्याख्यानात् । तदाह अवारीणः । पारीण । अत्यन्तीन इति । अत्यन्तशब्दोऽत्र भृशवाची । तदाह भृशं गन्तेति । अनुकाममिति । काम इच्छा । तामनतिक्रम्येत्यर्थः । पदार्थानतिवृत्तावव्ययीभावः । समां समाम् । विपूर्वो जनिर्गर्भविमोचने वर्तते । विजायते—गर्भं विमुञ्चतीत्यर्थः । धात्वर्थेनोपसंग्रहादकर्मकः । अतो न कर्मणि द्वितीया । गर्भविमोचनेन क्रियायाः समाया अव्यापनादत्यन्तसंयोगलक्षणा द्वितीयापि न भवति, किंतु सप्तम्येव । सप्तम्यन्तस्य समायामित्यस्य 'नित्यवीप्सयोः' इति द्विर्वचने समायां समायामिति भवितव्यम् । पदद्वयमपि यकारलोपसहितं निर्दिश्यते—समां समामिति । समायां समायामित्यर्थः । एवं च समायां समायां विजायत इत्यर्थे सप्तम्यन्तद्वसमुदायाद् विजायत इत्यर्थे खः स्यादिति फलितम् । ननु सम्यन्तद्वयसमुदायात् खप्रत्ययोत्पत्तौ तस्य समुदायस्य प्रातिपदिकत्वात् तदवयवयोः सप्तम्योर्लुकि समासमीन इति स्यात्, इष्यते तु समांसमीनेति, तत्राह यलोप इति । पूर्वपदे विभक्ते तस्य यकारस्य लोपः, अवशिष्टस्य विभक्त्यंशस्य अलुक्च निपात्यत इत्यर्थः । भाष्ये तु 'यलोपनिपातनादवशिष्टविभक्त्यंशस्य न लुक्' इत्युक्तम् । ननु समां समामिति निर्देशात् उत्तरपदेऽपि यकारलोपः अवशिष्टविभक्त्यंशस्य अलुक् च स्यादित्यत आह

---

अवारपार । गामीति । 'गमेरिनिः, आङि णिच्च' इति बहुलवचनात्केवलादपि इनिः । 'भविष्यति गम्यादयः' इति भविष्यत्कालता । न्यासकारस्तु 'आवश्यके णिनिः सोऽपि भविष्यत्येव' इत्याह । अवारपारमिति । 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधः । केचित्तु 'गत्यर्थकर्मणि—' इति सूत्रे द्वितीयाग्रहणमपवादविषये समावेशार्थम् । तेन कृद्योगषष्ठी न भवति 'ग्रामं गन्ता' इतिवदिति व्याचख्युः । तन्न, 'अकेनोः—' इति प्रतिषेधे षष्ठीप्रसङ्गस्यैवाभावात् । अवारीण इत्यादि । विगृहीताद्विपरीतादपीष्यते' इति भावः । अत्यन्तमिति । क्रियाविशेषणम् । अनुकाममिति । काम इच्छा तस्य सदृशमनुकामम् । कामानुरूपमित्यर्थः । 'अव्ययं विभक्ति—' इति यथार्थेऽव्ययीभावः । समांसमाम् । यलोप इति । 'समायाम्' इत्यत्र यकारलोप इत्यर्थः । पूर्वपदे निपात्यत इति । अन्यथा तद्धिते उत्पन्ने पूर्वोत्तरपदे सुपो लुग् भवति 'सुपो धातुप्रातिपदिकयोः' इति तथा पूर्वपदेऽपि स्यादिति भावः । समांसमीनेति । वीप्सायां द्विर्वचनम् । सुबन्तसमुदायः प्रकृतिः ।

समायां वा । १८१४ अद्यश्वीनावष्टब्धे । (५-२-१३) अद्य श्वो वा विजायते अद्यश्वीना वडवा । आसन्नप्रसवेत्यर्थः । केचित्तु विजायत इति नानुवर्तयन्ति । अद्यश्वीनं मरणम् । आसन्नमित्यर्थः । १८१५ आगवीनः । (५-२-१४) आङ्पूर्वाद्गोः कर्मकरे खप्रत्ययो निपात्यते । गोः प्रत्यर्पणपर्यन्तं यः कर्म करोति स आगवीनः । १८१६ अनुग्वलं गामी । (५-२-१५) अनुगु-गोः पश्चात्

---

पूर्वपद इति । 'पूर्वपदस्य यलोपवचनम्' इति वार्तिकादिति भावः । खप्रत्ययानुत्पत्ताविति । पदद्वयेऽपीति शेषः । इह विभाषया कदाचित् खप्रत्ययाभावे समायां समायां विजायत इति वाक्यदशायां सप्तम्यन्तद्वये यकारलोपो वा वक्तव्य इत्यर्थः । तत्र पदद्वयेऽपि निपातनादेव यकारलोपः सिद्धः, सूत्रे उभयत्रापि तयोच्चारणात् । विकल्प एव तु यल्लोपस्य वाक्यदशायां वाचनिक इति बोध्यम् । एतत्तु भाष्ये स्पष्टम् । अद्यश्वीनाऽवष्टब्धे । अद्यश्वीनेत्यविभक्तिको निर्देशः । अवष्टब्धम् आसन्नम् । 'अवाच्चालम्बनाविदूर्ययोः' इत्याविदूर्ये स्तम्भेः षत्वविधानात् । अद्य श्वो वा विजायत इत्यर्थे अद्य श्वस् इति समुदायात्खः स्यादासन्नत्वे गम्य इत्यर्थः । अद्यश्वीना वडवेति । अद्य वा श्वो वेति वार्थे निपातनात्समासः । खे सति 'अव्ययानां भमात्रे-' इति टिलोपः । सूत्रे अद्यश्वीनेति टावन्तनिर्देशे तु अद्यश्वीनो गोसमूहः, अद्यश्वीनं गोमण्डलमिति न स्यात् । आगवीनः । कर्मकर इति वार्तिकलभ्यमिदम् । भृतिं गृहीत्वा यः कर्म करोति स कर्मकरः । अत्र गोपालो विवक्षितः । स हि प्रातर्गा गृहीत्वा आरण्यं चारयित्वा स्वामिनो गृहं नीत्वा प्रत्यर्पयति, तदाह गोः प्रत्यर्पणेति । आगवीन इति । गोशब्दो गोप्रत्यर्पणे लाक्षणिकः । 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावे 'गोस्त्रियोः-' इति ह्रस्वत्वे आगुशब्दात्खे 'ओर्गुणः' इति भावः । अनुग्वलं गामी । अनुगु इत्यविभक्तिको निर्देशः । गोः पश्चादिति विग्रहे पश्चादर्थे अनोरव्ययीभावे ह्रस्वत्वे अनुगुशब्दः । तस्माद् अलंगामि...

---

विजायत इत्येतद्व्याचष्टे—प्रसूयत इति । विपूर्वको जनिर्गर्भविमोचने वर्तत इति भावः । गर्भविमोचने कृत्स्नायाः समाया व्याप्त्यभावाद् 'अत्यन्तसंयोगे च' इति द्वितीया न भवतीत्याशयेनाह—समायामित्यादि । खप्रत्ययानुत्पत्ताविति पदद्वयेऽपीति शेषः । वार्तिकेन समांसमामिति सौत्रप्रयोगस्तूपपन्न इति भावः । अद्यश्वीना । अविभक्तिको निर्देशो न तु स्त्रीलिङ्गनिर्देशोऽयम् । अद्यश्वीनो गोसमूहः अद्यश्वीनं गोमण्डलमित्यादावपीष्टत्वात् । अद्य श्वो वेति । निपातनाद् वार्थे समासोऽयमिति भावः । 'अवाच्चालम्बना-' इति सूत्रेण आविदूर्ये स्तम्भेः षत्वविधानादवष्टब्धशब्द आसन्नपरः । 'विजायते' इति हि वर्तते । स च गर्भविमोचनकस्तदाह—आसन्नप्रसवेत्यर्थ इति । कर्मकर इति । यस्तु प्रातर्गा गृहीत्वा गच्छति गोपालंस्तस्मिन्नित्यर्थः । गोः प्रत्यर्पणपर्यन्तमिति । गोशब्दो लक्षणया गोः प्रतिदाने वर्तत इति भावः । आगवीन इति । 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावे 'गोस्त्रियो-' इति ह्रस्वे कृते खप्रत्ययः । 'ओर्गुणः' । अनुग्वलं । ... इत्यनुवर्तते । अनुगुशब्दाद् 'अलंगामी' इत्यस्मिन्नर्थे खः स्यात् । गोः पश्चादिति ।

[...]लं गच्छति अनुगवीनो गोपालः । १८१७ अध्वनो यत्खौ ।(५-२-१६) [...]लमलं गच्छति अध्वन्यः' अध्वनीनः । 'ये चाभावकर्मणोः' (सू ११५४) [...]ध्वानो खे' (सू १६७१) इति सूत्राभ्यां प्रकृतिभावः । १८१८ अभ्य-[...]च्छ च । (५-२-१७) चाद्यत्खौ । अभ्यमित्रीयः अभ्यमित्र्यः, [...]मित्रीणः । अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः । १८१९ गोष्ठात्खञ्भूत-[...]। (५-२-१८) गोष्ठो भूतपूर्वः गौष्ठीनो देशः । १८२० अश्वस्यैका-[...]। (५-२-१९) एकाहेन गम्यते इत्येकाहगमः आश्वीनोऽध्वा । १८२१

[...] खः स्यादित्यर्थः । अत्र अनुगु इत्यस्य क्रियाविशेषणत्वाद् द्वितीयैव समर्थविभ-[...]रिति हरदत्तः । कृद्योगषष्ठीत्यन्ये । अलंगामीत्यत्र अलंशब्दस्य विवरणं—पर्याप्त-[...] क्रियाविशेषणम् । अध्वनो यत्खौ । अध्वन्शब्दाद् अलंगामीत्यर्थे यत्खौ स्त[...]। अध्वानमलंगच्छतीति । अलंगामीत्यनेन विग्रहे तु अध्वनोऽलङ्गामीत्येव [...]। अभ्यमित्राच्छ च । अमित्रः शत्रुः । तमभिमुखो भूवेत्यर्थे 'लक्षणेना-[...] आभिमुख्ये' इत्यव्ययीभावे अभ्यमित्रशब्दः । तस्माद् अलङ्गामीत्यर्थे छ-[...] स्यादित्यर्थः । गोष्ठात्खञ् । 'भूतपूर्वे' इति प्रकृतिविशेषणम् । भूतपूर्वार्थ-[...]गोष्ठशब्दात्स्वार्थे खः स्यादिति वृत्तिकृतः । अश्वस्यैकाहगमः । अश्वशब्दात् [...]न्ताद् एकाहगम इत्यर्थे खञ् स्यादित्यर्थः । एकाहगमशब्दं व्युत्पादयति—[...]हेनेति । अस्मादेव निपातनात्कर्मणि गमेरविति भावः । 'कर्तृकरणे कृता—' इति [...]। अश्वस्येति कर्तरि षष्ठी । आश्वीनोऽध्वेति । अश्वेन कर्त्रा एकाहेन [...]दर्थेऽव्ययीभावः पर्याप्तमिति । क्रियाविशेषणम् । अत्र हरदत्तः—अनुग्वि-[...] क्रियाविशेषणत्वाद् द्वितीयान्तादिह प्रत्ययः । न चालंगामी 'सुप्यजातौ—'

[...] णिनिप्रत्ययान्ततया कृद्योगलक्षणा षष्ठी स्यादिति वाच्यम्, क्रियाविशेषणात्तद-[...]त्तेः शोभनं पाचक इत्यादौ तथादर्शनादित्याहु । केचित्—धातूपात्तव्यापार-[...]फलाश्रयत्वं यत्र तन्मुख्यं कर्म, यत्र तु व्यापारजन्यत्वमात्रं तदौपचारिकम् । [...] तण्डुलानां पाचक इत्यत्र मुख्ये कर्मणि कृद्योगलक्षणा षष्ठी भवति । मृदु पाचकः, [...]भनं पाचक इत्यत्र तु सा न भवति । फलव्यापारयोः क्रियाकर्मभावव्यवहारे सत्यपि [...]स्योपचारिककर्मत्वात्, तद्विशेषणत्वाच्च मृद्वादेरिति तस्याशय इत्याहुः । अन्ये त्वेवं [...] तुल्यन्यायेन क्रियाविशेषणाद् द्वितीयाया अप्यप्रवृत्तिः स्यात् । तस्मात्, [...]वं' इति निर्देशादनित्या कृद्योगषष्ठीति क्रियाविशेषणात्सा न स्वीक्रियत इति [...]दत्ताशयः कथंचिद्वर्णनीय इत्याहुः । वस्तुतस्तु पश्चादर्थेऽव्ययीभावोऽयमिति निर्वि-[...]दम् । पश्चादिति चास्तात्यर्थे निपातितम् । तच्च यद्यपि विभक्तित्रयसाधारणम्, [...]पीह योग्यताबलात्सप्तम्यर्थवृत्तिः । अतस्तस्य कर्मत्वायोगात्प्रथमान्तादेवेह प्रत्यय [...] वक्तुमुचितम्, कृद्योगलक्षणषष्ठीशङ्काप्यत एव नेति बोध्यम् । अभ्यमित्रात् । [...]मित्रशब्दो 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । क्रियाविशेषण-[...]द् द्वितीया समर्थविभक्तिः । गोष्ठात्खञ् । गावस्तिष्ठन्त्यस्मिन्निति गोष्ठः । [...]र्थे कविधानम्' इत्यधिकरणे कः । 'अम्बाम्बगोभूमि—' इति षत्वम् । पूर्वं भूतो

**शालीनकौपीने अधृष्टाकार्ययोः ।** (५-२-२०) शालाप्रवेशमर्हति शालीनोऽधृष्टः । कूपपतनमर्हति कौपीनं पापम् । तत्साधनत्वात्तद्वद्गोप्यत्वाद्वा पुरुषलिङ्गमपि, तत्सम्बन्धात्तदाच्छादनमपि । **१८२२ व्रातेन जीवति ।** (५-२-२१) व्रातेन शरीरायासेन जीवति न तु बुद्धिवैभवेन स व्रातीनः । **१८२३ साप्तपदीनं सख्यम् ।** (५-२-२२) सप्तभिः पदैरवाप्यते साप्तपदीनम् । १८२४

---

गन्तुं शक्य इत्यर्थः । शालीन । 'शालाप्रवेशमर्हत्यधृष्ट इति, कूपावतरणमर्हत्यकार्यमिति चार्थे शालाप्रवेशशब्दात्कूपावतरणशब्दाच्च खञ् । प्रवेशशब्दस्य अवतरणशब्दस्य चोत्तरपदस्य लोपे शालीनकौपीनशब्दौ निपात्येते' इति भाष्यम् । अधृष्ट इति । अप्रगल्भ इत्यर्थः । अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालाप्रवेशमेवार्हति यः स शालीन इति यावत् । कूपपतनमिति । कूपावतरणशब्दस्य विवरणमिदम् । कूपशब्दो नरकाभिधायी । कौपीनं पापमिति । नरकपतनसाधनमकार्यं पापमित्यर्थः । अनयोरर्थयोरेतौ रूढौ । ननु पुरुषलिङ्गे कथं कौपीनशब्द इत्यत आह— तत्साधनत्वादिति । पापसाधनत्वाद्वा, पापवदाच्छादनीयत्वाद्वा पुरुषलिङ्गे कौपीनशब्दो लाक्षणिक इत्यर्थः । तत्सम्बन्धादिति । कौपीनशब्दस्य लक्ष्यपुरुषलिङ्गसम्बन्धात् तदाच्छादनवस्त्रखण्डे कौपीनशब्दो लक्षितलक्षणया प्रयुज्यत इत्यर्थः । व्रातेन जीवति । व्रातशब्दात्तृतीयान्ताद् जीवतीत्यर्थे खञ् स्यादित्यर्थः । 'नानाजातीयानाम् अलब्धजीवनद्रव्याणां भारवहनादिकष्टकर्मजीविनां सङ्घो व्रातः । तस्य यज्जीवनार्थं कष्टं कर्म तदिह व्रातम्' इति भाष्यम् । तादृशसङ्घवाचिनो व्रातशब्दात् 'तस्येदम्' इत्यणि व्रातशब्दोऽत्र तदीयकर्मणि विवक्षित इति तदाशयः, तदाह शरीरायासेनेति । साप्तपदीनम् । सप्तपदशब्दात् तृतीयान्तादवाप्यं सख्यमित्यर्थे खञि साप्तपदीनमिति भवतीत्यर्थः । सप्तभिः पदैरिति । पदविक्षेपैरित्यर्थः ।

---

भूतपूर्वः 'सुप्सुपा' इति समासः । अश्वस्य । कर्तरि षष्ठीयं निर्देशादेव समर्थविभक्तिः । एकाहगम इति । 'कर्तृकरणे कृता—' इति समासः । नन्विह 'ग्रहवृदृनिश्चिगमश्च' इत्यपं बाधित्वा 'परिमाणाख्यायां सर्वेभ्यः' इति घञ् प्राप्नोति, अस्ति चात्र परिमाणाख्या 'एकाहेन गम्यते' इति परिच्छेदावगमात् । अत्राहुः—अस्मादेव निपातनादप् द्रष्टव्य इति । शालीनकौपीने । इमौ खप्रत्ययान्तत्वेन निपात्येते । रूढिशब्दावेतौ कथंचिद्व्युत्पाद्याविति नात्रावयवार्थेऽभिनिवेशः कार्यः । शालाप्रवेशमिति । अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालामेव प्रवेष्टुमर्हतीत्यर्थः । कूपपतनमिति । यदकार्यं तत्प्रच्छादनीयत्वात्कूपावतरणमर्हतीत्यर्थः । तदाच्छादनमिति । वासःखण्ड इत्यर्थः । अन्ये त्वाहुः—यदकार्यशब्दे यः करोति स क्रियासामान्यवचनः,तेन लज्जाहेतुत्वेन अद्रष्टव्यत्वात्पुरुषलिङ्गं कौपीनम् । अस्पृश्यत्वात्तदाच्छादनमिति । शरीरायासेनेति । भारवहनादिनेत्यर्थः । यद्यपि व्रातशब्दो लोके सङ्घातवचनः, तथाप्यत्रत्यभाष्यादिग्रन्थपर्यालोचनया अयमेवार्थ इहोचित इति भावः । साप्तपदीनम् । योग्यतया समर्थविभक्तिस्तृतीयेति दर्शयति—सप्तभिः पदैरिति । पदमिह संभाषणं पादविक्षेपो वा । तद्धितार्थे द्विगुः । अवाप्यत इत्यर्थः

हैयङ्गवीनं संज्ञायाम् । (५-२-२३) ह्योगोदोहस्य हियङ्गुरादेशो विकारार्थे खञ् च निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारो हैयङ्गवीनम्- नवनीतम् । १८२५ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ । (५-२-२४) पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् । १८२६ पक्षात्तिः । (५-२-२५) मूलग्रहणमात्रमनुवर्तते । पक्षस्य मूलं पक्षतिः । १८२७ तेन वित्तश्चुञ्चुप्चणपौ । (५-२-२६) यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः, तेन चास्य नेत्संज्ञा । विद्यया वित्तो विद्याचुञ्चुः । विद्याचणः । १८२८ विनञ्भ्यां नानाञौ नसह । (५-२-२७) असहार्थे पृथग्भावे

---

हैयङ्गवीनम् । ह्यस् इत्यव्ययं पूर्वेद्युरित्यर्थे । तत्रोत्पन्नो गोदोहः-गोपयः, ह्योगोदोहः । तस्मात् षष्ठ्यन्ताद् विकारार्थे खञि ईनादेशे प्रकृतेः हियङ्गु इत्यादेशे ओर्गुणे अवादेशे आदिवृद्धौ हैयङ्गवीनमिति भवति संज्ञायाम् इति भाष्यम्, तदाह ह्योगोदोहस्येत्यादिना । नवनीतमिति । भाष्ये तु 'हैयङ्गवीनं घृतम्' इति दृश्यते । 'तत्तु हैयङ्गवीनं स्याद् ह्योगोदोहोद्भवं घृतम्' इत्यमरः । तस्य पाकमूले । पाकमूले इति समाहारद्वन्द्वात्सप्तमी । पाकः परिणामः । षष्ठ्यन्तेभ्यः पील्वादिभ्यः पाकेऽर्थे कुणप् । कर्णादिभ्यस्तु मूलेऽर्थे जाहजित्यर्थः । कुणपस्तद्धितत्वात् ककारस्य नेत्संज्ञा । जाहचस्तु जकारस्य प्रयोजनाभावाद् नेत्संज्ञा । पक्षात्तिः । मूलग्रहणमात्रमिति । पूर्वसूत्रे पाकमूल इति समासनिर्दिष्टत्वेऽप्येकदेशे स्वरितत्वप्रतिज्ञानादिति भावः । 'तस्य' इत्यप्यनुवर्तते । पक्षशब्दात् षष्ठ्यन्ताद् मूलेऽर्थे तिप्रत्ययः स्यादित्यर्थः । तेन वित्तः । तृतीयान्ताद् वित्त इत्यर्थे चुञ्चुप्चणपौ भवत इत्यर्थः । वित्तः प्रसिद्धः । चस्य नेत्संज्ञेति । उपदेशे आदित्वाभावादिति भावः । विनञ्भ्याम् । नसहेति संघातः पृथक्त्वे वर्तते प्रकृतिविशेषणमिदम्, तदाह असहार्थे इति । तस्य विवरणं पृथग्भाव

---

खञ् । हैयङ्गवीनम् । ह्योगोदोहस्येति । गोर्दोहो गोदोहः षष्ठीसमासः । तेन सह ह्यस्शब्दस्य 'सुप्सुपा' इति समासः । ततो विकारे अनुदात्तलक्षणस्याञोऽपवादः खञ् । ह्यस्शब्देन कालप्रत्यासत्तिर्विवक्षिता । नवनीतमिति । यद्यपि वृत्तौ घृतमित्युक्तम्, तथैव चामरेणापि—'तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भवं घृतम्' इत्युक्तम्, तथापि घृतशब्देन नवनीतमेव विवक्षितमिति हरदत्तग्रन्थानुरोधेनेदमुक्तम् । तस्य-पाक । पाकः परिणामः । मूलमुपक्रमः । 'तस्येदम्' इत्यादिषु प्राप्तेष्वयमारम्भः । जाहचो जकारस्य प्रयोजनाभावान्नेत्वम् । पीलु, कर्कन्धु, शमी, करीर, कुवल, बदर, अश्वत्थ, खदिर पील्वादिः । कर्ण, अक्षि, नख, मुख, केश, पाद, गुल्फ, भ्रू, शृङ्ग, दन्त, ओष्ठ, पृष्ठ कर्णादिः । मूलग्रहणमात्रमिति । एकादेशे स्वरितत्वप्रतिज्ञानादिति भावः । पक्षतिरिति । प्रतिपत्, पक्षिणां पक्षमूलं च । तेन वित्तः । वित्तः प्रतीतः । 'वित्तो भोगप्रत्यययोः' इति निपातनाद् 'रदाभ्यां निष्ठातो नः-' इति नत्वं न । लुप्तनिर्दिष्ट इति । 'चुटुषाः प्रत्ययस्य' इति वक्तव्ये पृथग्योगकरणात् 'चुटू' इत्येतदनित्यमिति समाधानान्तरमप्याहुः । नानाञाविति । नाञो नकारो

वर्तमानाभ्यां स्वार्थे प्रत्ययौ । विना । नाना । १८२९ वेः शालच्छङ्कटचौ । (५-२-२८) क्रियाविशिष्टसाधनवाचकात्स्वार्थे । विस्तृतं विशालम् । विशङ्कटम् । १८३० संप्रोदश्च कटच् । (५-२-२९) संकटम् । प्रकटम् । उत्कटम् । चाद् विकटम् । 'अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्' (वा ३१०७) । अलाबूनां रजः अलाबूकटम् । 'गोष्ठजादयः स्थानादिषु पशुनामभ्यः' (वा ३१०९) । गवां स्थानं गोगोष्ठम् । 'सङ्घाते कटच्' (वा ३११०) । अवीनां सङ्घातः अवि-

---

इति । वर्तमानाभ्यामित्यनन्तरं विनञ्भ्यामिति शेषः । स्वार्थ इति । प्रत्ययार्थस्य अनिर्देशादिति भावः । प्रत्ययाविति । यथासङ्ख्यं नानाञाविति शेषः । विनेति । वेर्नाप्रत्यय रूपम् । पृथगित्यर्थः । नानेति । नञो नाञि आदिवृद्धौ रूपम् । पृथगित्यर्थः । नसहेत्यस्य प्रत्ययार्थत्वे तु 'ना' इत्यनेन न सहेति गम्येत । एवं सति नाना—न न सह, किंतु सहैवेत्यर्थः स्यात्, 'द्वौ नञौ प्रकृतमर्थं गमयतः' इति न्यायाद् इति भाष्ये स्पष्टम् । वेः शालच्छङ्कटचौ । क्रियाविशिष्टेति । क्रियाविशिष्टकारकवाचकात्स्वार्थे शालच्शङ्कटच्प्रत्ययौ स्त इति यावत् । इदं च भाष्ये स्पष्टम् । संप्रोदश्च कटच् । सं, प्र, उत् एभ्यश्च क्रियाविशिष्टसाधनवाचिभ्यः स्वार्थे कटच् स्यादित्यर्थः । चाद्वेरपि । संकटं संहतमित्यर्थः । निबिडीकृतमिति यावत् । प्रकटमिति । प्रज्ञातमित्यर्थः । प्रकाशमिति यावत् । उत्कटमिति । उन्नतमित्यर्थः । अधिकमिति यावत् । रूढशब्दा एते कथञ्चिद्व्युत्पाद्याः । अलाबूतिलेति । अलाबू, तिल, उमा, भङ्गा—इत्येभ्यः षष्ठ्यन्तेभ्यो रजसि अभिधेये कटचः उपसंख्यानमित्यर्थः । विकारप्रत्ययानामपवादोऽयम् । रजः चूर्णरेणुः । गोष्ठजादय इति । पशुनामभ्यः स्थानादिष्वर्थेषु गोष्ठजादयः प्रत्यया वक्तव्या इत्यर्थः । गोष्ठजादीनां प्रत्ययानां स्थानादीनां चार्थानां प्रपञ्चनपराणि 'सङ्घाते कटच्' इत्यादीनि 'शाकटशाकिनौ' इत्यन्तानि षड् वार्तिकानि । तेषु चतुर्षु 'पशुना

---

वृद्ध्यर्थः स्वरार्थश्च । 'न सह' इति प्रकृतिविशेषण, न प्रत्ययार्थ इत्याशयेनाह—असहार्थ इत्यादि । यदि प्रत्ययार्थः स्यात्ततो 'द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः' इति सहार्थो गम्येत 'न न सह, अपि तु सहैव' इति । तस्मात्प्रकृतिविशेषणम् । एतच्च व्याख्यानाल्लभ्यते । यद्येवं सहेत्येव प्रत्ययार्थोऽस्तु, विनञोः प्रतिषेधार्थत्वादिष्टसिद्धेः 'विगर्दभरथकः' इत्यादौ विशब्दस्यापि प्रतिषेधवृत्तिर्दृष्टैवेति । सत्यम्, क्रियावाचिनो विशब्दात्सहार्थे प्रत्ययो विज्ञायेत । विगतेन सह विकृतेन सहेति । तस्माद्यथोक्तमेव न्याय्यम् । एतच्च हरदत्तग्रन्थे स्पष्टम् । स्वार्थ इति । विनिर्दिष्टार्थत्वादिति भावः । संप्रोदश्च । क्रियाविशिष्टसाधनवाचकात्स्वार्थे प्रत्ययः । संकटं संहतम्, संबाध इत्यर्थः । प्रकटं प्रज्ञातम्, प्रकाशत इत्यर्थः । उत्कटं उद्भूतम्, विकटं विकृतम्, रूढशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते । अलाबूतिलेत्यादि । एभ्यः पञ्चभ्यो रजस्यभिधेये कटच् प्रत्ययो भवति । रजसो विकारत्वाद्विकारे प्रत्ययानामपवादोऽयम् । अलाबूकटमिति । 'ओरञ्' 'मयड्वैतयोः—' इति मयड् वेह प्राप्तः । तिलकटमिति । 'असंज्ञायां तिलयवाभ्याम्' इति मयट् प्राप्तः । उमाशब्दाद् घृतादित्वादन्तोदात्तात्

...। 'विस्तारे पटच्' (वा ३११५)। अविपटः। 'द्वित्वे गोयुगच्'। (वा ३११६)। द्वौ वृषौ वृषगोयुगम्। 'षट्त्वे षड्गवच्' (वा ३११७) अश्वषड्गवम्। '...स्नेहे तैलच्' (वा ३११८) तिलतैलम् सर्षपतैलम्। 'भवने क्षेत्रे शाकटशाकिनौ' (वा ३११९) इक्षुशाकटम्, इक्षुशाकिनम्। १८३१ अवात्कुटारच्च। (५—२—३०) चात्कटच्। अवाचीनोऽवकुटारः, अवकटः। १८३२ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः (५—१—३१) अवाद् ...। नतं नमनम्। नासिकाया नतं अवटीटम्, अवनाटम्, अवभ्रटम्। ...योगान्नासिका अवटीटा। पुरुषोऽप्यवटीटः। १८३३ नेर्बिडज्बिरीसचौ।

...' इत्यनुवर्तते। अप्रसृतावयवः समूहः संघातः। प्रसृतावयवस्तु विस्तारः। ...त्व इति। प्रकृत्यर्थगतद्वित्व इत्यर्थः। द्वौ वृषौ वृषगोयुगमिति। द्वयव...संघाताभिप्रायमेकवचनम्। द्वयं युगमित्यादिवत्। केचित्तु द्वौ वृषावि...र्वौ वृषगोयुगमिति स्वभावादेकवचनं विंशतिरित्यादिवदित्याहुः। एवमुष्ट्रगो...युगम्। अश्वषड्गवम् अवात्कुटारच्च। क्रियाविशिष्टसाधनवाचकादवात्स्वार्थे ...टारच्च स्यादित्यर्थः। अवाचीन इति। अवाचीने विद्यमानादवात् कुटारचि ...अवकुटार इत्यर्थः। नते नासिकायाः। अवादित्येवेति। अवशब्दाद् नासिकाया ...नतेऽर्थे टीटच्, नाटच्, भ्रटच् एते प्रत्ययाः स्युरित्यर्थः। 'णमु प्रह्वत्वे' ...इति धातोर्भावे क्तप्रत्यये नतशब्द इत्यभिप्रेत्याह नतं नमनमिति। प्रह्वत्वमित्यर्थः। ...नु यदि नासिकाया नमनमवटीटं तर्हि अवटीटा नासिकेति कथमित्यत आह ...योगादिति। नमनयोगात्तत्र लाक्षणिकमिति भावः। पुरुषोऽप्यवटीट ...इति। तादृशनासिकायोगादिति भावः। नेर्बिडज्बिरीसचौ। 'नते नासि-

...अनुदात्तादेश्च—' इत्यञ्, 'उमोर्णयोर्वा' इति वुञ्च प्राप्तः। भङ्गाशब्दात् 'तृणधान्यानां ...च द्व्यषाम्' इत्याद्युदात्तत्वादणमयड्वा प्राप्त इत्येवं यथासंभवं प्रत्ययप्राप्तिरूह्या। ...हरदत्तस्तु—तिलशब्दस्य घृतादित्वादन्तोदात्तत्वमङ्गीकृत्य ततः 'अनुदात्तादेश्च' ...इत्यञ्, 'असंज्ञायां तिलयवाभ्याम्' इति मयड् वा प्राप्त इत्याह। तत्र तिलशब्दस्य ...घृतादित्वकल्पने बीजं चिन्त्यम्। 'तृणधान्यानां च द्व्यषाम्' इति फिट्सूत्रेणाद्युदात्तस्यैव ...न्याय्यत्वात्। 'तिलाश्च मे' इत्यत्र तथैव वेदे पाठाच्च। गोष्ठजादय इति। 'संघाते ...कटच्' इत्यादीन्यस्यैव प्रपञ्चः। इहोभयत्रादिशब्दः प्रकारे। पशुनामभ्य इति। ...पशुनामादिभ्यः' इति भाष्ये प्रचुरः पाठः। गवां स्थानमिति। 'तस्येदम्' ...इत्यर्थे 'सर्वत्र गोरजादिप्रसङ्गे—' इति यति प्राप्ते गोष्ठच्। संघात इति। ...अप्रसृतावयवः समूहः संघातः। प्रसृतावयवस्तु विस्तारः। कटच्पटचौ द्वावपि ...सामूहिकानामपवादौ। द्वित्व इति। प्रकृत्यर्थस्य द्वित्वे द्योत्य इत्यर्थः। उष्ट्रगोयुग...मिति। द्वयं युगमित्यादिवद् द्व्यवयवसङ्घातप्राधान्यादेकवचनम्। एवमग्रेऽपि। ...नमनमिति। नपुंसके भावे क्तः। नमनमिति। नीचैस्त्वमित्यर्थः। अवटीटमिति। ...नासिकासावनके नमने वर्तमानादवशब्दात्स्वार्थे प्रत्ययः। तर्हि नासिकायां पुरुषे ...अवटीटशब्दस्य प्रयोग इत्यत आह—तद्योगादिति। नेर्बिडच्। 'नते नासिकायाः

(५—२—३१) निबिडम्, निबिरीसम् १८३४ इनच्पिटच्चिकचि च (५—२—३३) नेः इत्येव। नासिकाया नतेऽभिधेये इनच्पिटचौ प्रत्ययौ प्रकृतेः चिक चि इत्यादेशौ च। 'कप्रत्ययचिकादेशौ च वक्तव्यौ' (वा ३१२१)। चिकिनम्। चिपिटम्। चिक्कम्। 'क्लिन्नस्य चिल् पिल् लश्चास्य चक्षुषी' (वा ३१२२) क्लिन्ने चक्षुषी अस्य चिल्लः। पिल्लः। 'चुल् च' (वा ३१२३)। चुल्लः। १८३५ उपाधिभ्यां त्यकन्नासन्नारूढयोः। (५—२—३४) 'संज्ञायाम्'

कायाः संज्ञायाम्' इत्यनुवर्तते। नेः नासिकाया नतेऽर्थे विडच्, बिरीसच् इति प्रत्ययौ स्त इत्यर्थः। निबिडा वृक्षा[1] इति तु उपमानादित्याहुः। इनच्पिटच् इनच्पिटच् इति समाहारद्वन्द्वात्प्रथमैकवचनम्। चिकचि इत्यपि चिक चि इत्यनयोः समाहारद्वन्द्वात्प्रथमैकवचनम्। प्रकृतेरिति। नेरित्यर्थः। तत्र इनचि परे चिक इत्यादेशः। तत्र अकार उच्चारणार्थः। पिटचि तु परे चि इत्यादेशः। कप्रत्ययेति। उक्तनेः कप्रत्ययः प्रकृते चिकादेशश्चेत्यर्थः। अयमपि ककारान्त एवादेशः। चिकिनमिति। इनचि प्रत्यये कृते नेः चिकादेशे रूपम्। चिपिटमिति। पिटचि कृते नेः चि इत्यादेशे रूपम्। चिक्कमिति। कप्रत्यये नेः चिकादेशे रूपम्। क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी इति। वार्तिकमिदम्। चिल्पिल् इति समाहारद्वन्द्वात्प्रथमैकवचनम्। क्लिन्ने अस्य चक्षुषी इति विग्रहे क्लिन्नशब्दाद् अस्य चक्षुषी इत्यर्थे लप्रत्ययः, प्रकृतेः चिल् पिल् एतावादेशौ स्त इत्यर्थः। क्लिन्ने इति। नेत्रामयप्रयुक्तजलनिष्यन्दवती इत्यर्थः। चिल्लः। पिल्ल इति। क्लिन्नचक्षुष्क इत्यर्थः। चुल् चेति। उक्तविषये क्लिन्नस्य चुल् आदेशश्च लप्रत्ययसंनियोगेन वक्तव्य इत्यर्थः। उपाधिभ्याम्। उप, अधि आभ्यां

संज्ञायाम्' इति वर्तते। निशब्दान्नासिकाया नतेऽभिधेये विडज्बिरीसचौ स्तः। निबिडमिति। तद्योगान्निबिडा नासिका, निबिरीसा। कथं तर्हि 'निबिडाः केशाः निबिडं वस्त्रम्' इति। उपमानाद्भविष्यति। एतच्च काशिकायां स्पष्टम्। केचित्तु उक्तप्रयोगानुरोधेनेह सूत्रे 'नते नासिकायाः—' इति नानुवर्तत इति व्याचक्षते। प्रकृतेरिति। निशब्दस्येत्यर्थः। आदेशौ चेति। प्रत्ययौ तत्संनियोगेन यथासंख्यमिमावादेशौ च स्त इत्यर्थः। चिकिनमिति। इनच्प्रत्ययसंनियोगेन चिकादेशः। चिपिटमिति। पिटच्प्रत्ययसंनियोगेन चि इत्यादेश। क्लिन्नस्येति। चिल् पिल् इत्येतावादेशौ भवतो लश्च प्रत्ययः 'अस्य चक्षुषी' इत्येतस्मिन्नर्थे। चुल् चेति चाल्लप्रत्ययः। चुल्ल इति। क्लिन्ने अस्य चक्षुषी इति पूर्वोक्त एव विग्रहः। कथं तर्हि 'स्युः क्लिन्नाक्षे चुल्लचिल्ल पिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी' इत्यमर इति चेत्। अत्राहुः— पुरुषे व्युत्पादितानां तदवयवे लक्षणा बोध्या। अन्ये त्वाहुः—अस्य चक्षुषी इत्यत्र 'अस्य' इति न वक्तव्यम्। क्लिन्ने चक्षुषी चिल्ले पिल्ले। पुरुषे तु मत्वर्थेऽच्, अर्शआदिषु 'स्वाङ्गाद्धीनात्' इति सूत्रितत्वादिति। उपाधिभ्याम्। संज्ञाधिकाराद्

१ 'निबिडाः केशा इति प्रयोगात् 'नते नासिकाया—' इत्यादेरत्रासम्बन्धः' इति

-नुवर्तते । पर्वतस्यासन्नं स्थलमुपत्यका । आरूढं स्थलमधित्यका । १८३६ कर्मणि घटोऽठच् । (५--२--३५) घटत इति घटः । पचाद्यच् । कर्मणि घटते कर्मठः पुरुषः । १८३७ तदस्य सञ्जातं तारकादिभ्य इतच् । (५—२—३६) तारकाः सञ्जाता अस्य तारकितं नभः । आकृतिगणोऽयम् । १८३८ प्रमाणे द्वयसज्दघ्नञ्मात्रचः । (५—२—३७) तदस्य इत्यनुवर्तते । प्रमाणमस्य ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम् । 'प्रमाणे लः' (वा ३१२८)

---

-सन्नारूढयोर्वर्तमानाभ्यां स्वार्थे त्यकन्प्रत्ययः स्यादित्यर्थः । आसन्नं समीपम् । आरूढम् उच्चम् । अनुवर्तत इति । 'नते नासिकायाः–' इत्यस्मादिति भावः । कस्य समीपं कस्योच्चम् इत्याकाङ्क्षायां संज्ञाधिकारात् पर्वतस्येति लभ्यत इत्यभिप्रेत्याह पर्वतस्येति । उपत्यका । अधित्यकेति । स्त्रीत्वं लोकात् । अत्र 'प्रत्ययस्थात्–' इति इत्वं तु न, 'त्यकनश्च' इत्युक्तेः । कर्मणि घटोऽठच् । सप्तम्यन्तात् कर्मशब्दाद् घट इत्यर्थे अठच्स्यादित्यर्थः । घटशब्दस्य कलशपर्या-यत्वभ्रमं वारयति । कर्मणि घटत इति । व्याप्रियत इत्यर्थः । तथा चात्र घटशब्दो यौगिको घटमाने वर्तत इति भावः । कर्मठ इति । अठचि 'नस्तद्धिते' इति टिलोपः । अठचि ठस्य अङ्गात्परत्वाभावादिकादेशाभावः इति भावः । तदस्य । प्रथमान्तेभ्यस्तारकादिभ्यः अस्य तत्संजातमित्यर्थे इतच् स्यादित्यर्थः । तारकितं नभ इति । संजातनक्षत्रमित्यर्थः । आकृतिगणोऽयमिति । तेन पुष्पितो वृक्षः फलित इत्यादिसंग्रहः । प्रमाणे । अनुवर्तत इति । ततश्च अस्य प्रमेयस्य तत्प्र-माणमित्यर्थे प्रमाणे विद्यमानात्प्रथमान्ताद् द्वयसच्, दघ्नच्, मात्रच् एते प्रत्ययाः स्युः । 'प्रमाणवानिदमर्थोऽत्र प्रत्ययार्थः' इति भाष्ये स्पष्टम् । तत्र 'प्रथमश्च द्वितीयश्च ऊर्ध्व-माने मतौ मम' इति भाष्ये उक्तम् । प्रमाणमिह परिच्छेदकमात्रम्, तत्र मात्रच्— प्रस्थमात्रमूरुमात्रमित्यादि इति कैयटः । वस्तुतस्तु 'यत्तदेतेभ्यः–' इति सूत्रभाष्यस्वर-सादायामपरिच्छेदकमेवात्र प्रमाणम् इति शब्देन्दुशेखरे विस्तरः । प्रमाणे ल इति ।

---

नियतविषयमासन्नारूढं गृह्यत इत्याशयेनाह—पर्वतस्येति । आसन्नं समीपम् । आरूढमुच्चस्थानम् । उपत्यकेति । 'प्रत्ययस्थात्–' इतीत्वं तु न भवति, 'त्यकनश्च निषेधः' इत्युक्तत्वात् । कर्मणि घटो । सप्तम्यन्तात्कर्मन्शब्दाद् 'घटते' इत्यर्थे-ऽठच् स्यात् । कर्मठ इति । 'ठस्येकः' इतीह न भवति । अठचि ठस्याप्रत्ययत्वेनाङ्ग-संज्ञानिमित्तत्वाभावात् । तारकितमिति । एवं पुष्पितं फलितं पुलकितं रोमाञ्चित-मित्याद्युदाहार्यम् । प्रमाणे द्वयसज् । प्रमाणे विद्यमानात्प्रथमान्ताद् 'अस्य' इति निर्दिष्टे प्रमेयेऽर्थे त्रयः प्रत्ययाः स्युः । प्रमाणमिह परिच्छेदकमात्रम् । तत्र मात्रच् । द्वयसच्दघ्नचौ तूर्ध्वमान एव भवतः । 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति भाष्यात् । ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानम् ऊर्वादि । तेन तिर्यङ्मानादौ 'रज्जुद्वयसं क्षेत्रम्' इत्यादि न प्रयुज्यते, यथोत्तरं मुनीनां प्रामाण्यात् । अतएव 'द्विकाण्डा क्षेत्रभक्तिः' इत्यत्र 'द्वयसचो लुक्' इति प्राचोक्तं नादर्तव्यमित्यवोचाम । प्रमाणे ल इति । लुक् एषा पूर्वाचार्यसंज्ञा । प्रमाणत्वेन ये प्रसिद्धास्ततः परस्यैवायं

शमः । दिष्टिः । वितस्तिः । 'द्विगोर्नित्यम्' (वा ३१२९) । द्वौ शमौ प्रमाणमस्य द्विशमम् । 'प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः' (वा३१३३) शममात्रम् । प्रस्थमात्रम् । पञ्चमात्रम् । 'वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम्' (वा ३१३४) । तादेव तावद्द्वयसम् । तावन्मात्रम् । १८३९ पुरुषहस्तिभ्यामण्च । (५—२—३८) पुरुषः प्रमाणमस्य पौरुषम्, पुरुषद्वयसम् । हास्ति-

---

लुको ल इति पूर्वाचार्यशास्त्रसिद्धा संज्ञा । प्रमाणे वर्तमानाद्विहितस्य द्वयसजादेर्लुग्वक्तव्य इत्यर्थः । शमो दिष्टिर्वितस्तिरिति । शमः प्रमाणमस्येत्यादिविग्रहः । शमादयः अनूर्ध्वमानविशेषाः । तेभ्यो मात्रचो लुक्, इतरयोरसंभवात् । अत्र 'आयामस्तु प्रमाणं स्यात्' इत्येव गृह्यते । एवं च ऊरुद्वयसमित्यादौ न लुक् । द्विगोर्नित्यमिति । प्रमाणान्ताद् द्विगोः परस्य द्वयसजादेर्नित्यं लुक् स्यादित्यर्थः । प्रमाणान्तस्य द्विगोः प्रमाणावृत्तित्वात् सामर्थ्यादिह तदन्तविधिः । पूर्ववार्तिकेन तु नात्र प्राप्तिरस्ति, द्विगोः प्रमाणत्वाभावात् । द्विशममिति । तद्धितार्थे द्विगुः । मात्रचः अनेन लुक् । 'विकल्पस्याप्रकृतत्वादेव सिद्धे नित्यग्रहणं संशये वक्ष्यमाणस्य मात्रचो लुगर्थम् । अन्यथा शममात्रमित्यत्रेव द्विशमशब्दादपि स मात्रच् न लुप्येत' इति भाष्ये स्पष्टम् । प्रमाणेति । प्रमाणवाचिनः परिमाणवाचिनः संख्यावाचिनश्च संशये मात्रज्वक्तव्य इत्यर्थः । अत्र प्रमाणमायाम एव गृह्यते, 'आयामस्तु प्रमाणं स्यात्' इति वचनात् । अत एव परिमाणग्रहणमर्थवत् । शममात्रमित्यादि । शमः स्यान्न वेत्यादिर्विग्रहः । वत्वन्तादिति । वार्तिकमिदम् । पुरुषहस्तिभ्यामण् च ।

---

लुगित्युदाहरति—शमः । दिष्टिः । वितस्तिरिति । शमः प्रमाणमस्येत्यादिविग्रहः । एषु मात्रचो लुक्, इतरयोरसंभवात्, शमादीनामनूर्ध्वमानत्वात् । द्विगोर्नित्यमिति । द्विगोरप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाप्राप्तौ लुग्विधीयते । ननु विकल्पस्याप्रकृतत्वान्नित्यग्रहणमिह निरर्थकमिति चेत् । अत्राहुः—अनुपदं संशये वक्ष्यमाणो मात्रच् शममात्रमित्यादौ यथा न लुप्यते, 'प्रमाणे लः' इत्यस्य 'प्रमाणे द्वयसच्–' इति यः पूर्वविधिस्तद्विषयत्वात्, एवं द्विगोरपि न लुप्येत । इष्यते च लुक् । द्वौ शमौ स्यातां न वा द्विशम इति । तथा चाधिकसंग्रहार्थं नित्यग्रहणमिति । अत्र केचित्—'द्विगोर्लः' इत्युक्तेऽपि पुनर्लग्रहणं नित्यार्थमधिकसंग्रहार्थमिति व्याख्यातुं शक्यत इति वैचित्र्यार्थं नित्यग्रहणमित्याहुः—शममात्रमित्यादि । शमः स्यान्न वेत्यादिविग्रहः । पुरुषहस्तिभ्यामण्च । 'इनण्यनपत्ये' इति प्रकृतिभावः । हस्ती प्रमाणमस्य हास्तिनम् । अत्र काशिकायामुक्तं 'द्विगोर्नित्यं लुक्, द्विपुरुषमुदकम्' इत्यादि । व्याख्यातं च हरदत्तेन—यद्यपि 'प्रमाणे लो द्विगोर्नित्यम्' इत्यस्यायमनुवादः, पुरुषहस्तिनोः शमादिवत्प्रमाणत्वेनाप्रसिद्धत्वात्, अत एव हि पुरुषद्वयसमित्यादौ 'प्रमाणे लः' इति लुङ् न भवति । तथाप्यपूर्वोऽत्र लुग्विधीयत इति । एतच्चासंगतम्, 'द्विगोर्नित्यं लुक्' इत्यपूर्ववचनस्य मुनित्रयानुक्तत्वात् । वस्तुतस्तु विधीयत इत्यस्यानुमीयत इत्यर्थः । अयं भावः—'द्विगोः' 'तद्धितलुकि' इत्यनुवर्तमाने 'पुरुषात्प्रमाणेऽन्यतरस्याम्' इति ङीब्विकल्पविधाने तदेव लुकमनुमापयतीति ।

हस्तिद्वयसम् । १८४० यत्तदेतेभ्यः परिमाणे वतुप् । (५—२—३९) परिमाणमस्य यावान् । तावान् । एतावान् । १८४१ किमिदम्भ्यां वो घः । (५—२—४०) आभ्यां वतुप् स्याद्वस्य च घः । कियान् । इयान् ।

---

विषय इति शेषः । चाद् द्वयसजादयस्त्रयः । यत्तदेतेभ्यः । तदस्येत्यनुवर्तते । अस्य तत्परिमाणमित्यर्थे परिमाणवाचिभ्यः प्रथमान्तेभ्यः किम्, यद्, तद्, एभ्यो वतुप् स्यादित्यर्थः । यावानिति । यच्छब्दाद्वतुप्, उपावितौ । 'आ सर्वनाम्नः' इत्यात्त्वम्, सुः, 'उगिदचाम्–' इति नुम्, 'अत्वसन्तस्य–' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ । एवं तावान्, एतावान् । किमिदंभ्यां वो घः । 'तदस्य' इति 'परिमाणे वतुप्' इति चानुवर्तते । तदाह—आभ्यां वतुप् स्यादिति । आभ्यां प्रथमान्ताभ्याम् अस्य तत्परिमाणमित्यर्थे वतुप् स्यादित्यर्थः ।

---

यत्तदेतेभ्यः । यावानित्यादि । 'आ सर्वनाम्नः' इत्यात्वे 'उगिदचाम्–' इति नुम् 'अत्वसन्तस्य च–' इति दीर्घः । हल्ङ्यादिलोपसंयोगान्तलोपौ । 'प्रमाणे' इत्यनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात्कृतम् । तथा च वार्तिकम्—'डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते । मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः' इति । अस्यार्थः—इह शास्त्रे वतुपं विधाय तस्मिन् परे आत्वं विहितम् । पूर्वाचार्यास्तु डावतुं विदधिरे, तद्रीत्या निर्देशोऽयं डावताविति । विशेष्यत इति विशेषस्तस्य भावो वैशेष्यं तस्मात्, अर्थभेदादित्यर्थः । अर्थभेदस्तु 'परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्' इति प्रागेवोक्त इति भावः । नन्वनयोरर्थभेदे सति यावानध्वा यावती रज्जुरित्यादि न सिध्येत्, तत्र ह्यायाममात्रं गम्यते । यद्युपमानाद्भविष्यतीति ब्रूषे, तर्हि प्रमाणग्रहणमेवानुवर्त्यताम्, यावान्धान्यराशिरित्यादिप्रयोगाश्च मुख्याः सन्तु । ये तु परिमाणे प्रयोगाः 'यावान् धान्यराशिः' इत्यादयः, त एवोपमानाद्भवन्तु तत्राह—'मात्रादीति' । 'यत्तदेतेभ्यः–' इति विशेषविहितो हि वतुप् सामान्यविहितान् मात्रजादीन् बाधेत, तेन तन्मात्रमित्यादि न स्यात् । परिमाणग्रहणे सति तु भिन्नोपाधिकत्वाद्वतुपः प्रमाणे विहितमात्रजादिभिः सह बाध्यबाधभावो नेति भावः । नन्वेवमपि बाधः स्यादेव । 'प्रमाणे द्वयसच्–' इत्यत्र प्रस्थमात्रमित्यादिसिद्धये प्रमाणग्रहणस्य परिच्छेदकमात्रपरतया व्याख्यातत्वेन वतुपो यत्तदेतेभ्यो विहितत्वेन विशेषविहितत्वानपायात् । तस्माद् 'यत्तदेतेभ्यो वतुप् च' इत्येव सूत्र्यताम्, मास्तु परिमाणग्रहणम्, अस्तु च प्रमाणे इत्यर्थाधिकारः, तेन यावती रज्जुर्यावान् धान्यराशिरित्यादिप्रयोगाः सर्वेऽप्युपचारं विनैव निर्वहन्तीत्यपरमनुकूलमत आह—'भावः सिद्धश्चेति' । डावतोरिति पञ्चम्यन्तम् । अर्थभेदे सति वत्वन्तान्मात्रजादीनामुत्पत्तिः सिध्यति । तत्परिमाणमस्य तावद्धान्यं राशीकृतम्, तावत्प्रमाणमस्य कुड्यादेः, तावन्मात्रम् । यादृग्राशीकृतस्य धान्यादेर्दैर्घ्यं तादृशं कुड्यादेरपीत्यर्थः । एकविषयत्वे तु वतुपैव विशिष्टस्य प्रमेयस्योक्तत्वाद्वतुबन्तान्मात्रजादयो न स्युः । यस्य हि तावत्प्रमाणं तस्य तदपि प्रमाणम् । जानुप्रमाणकं जलादि यस्य प्रमाणं तदपि जानुप्रमाणकमिति वक्तुं शक्यत्वात् । एवं च तावच्छब्द एव प्रयुज्येत, न तु तावन्मात्रमित्यादि । अन्यथा तत्प्रमाणमस्य तन्मात्रम् । तन्मात्रं प्रमाणमस्य तन्मात्रमात्रमित्येवं मात्रजा-

१८४२ किमः संख्यापरिमाणे डति च । (५—२—४१) चाद्वतुप् । तस्य च वस्य घः स्यात् । का संख्या एषां ते कति कियन्तः, क्षेपे तु न, का संख्या एषां दशानाम् । १८४३ संख्याया अवयवे तयप् । (५—२—४२)

---

वस्य च घ इति । वकारस्य घकार इत्यर्थः । कियानिति । किं परिमाणमस्येति विग्रहः । किंशब्दाद् वतुप्, उपावितौ, वकारस्य घकारः, इयादेशः, किम् इयत् इति स्थिते 'इदङ्किमोरीश्की' इति किमः कीभावे 'यस्येति च' इति ईकारलोपे कियत्शब्दात्सौ 'उगिदचाम्—' इति नुमि 'अत्वसन्तस्य—' इति दीर्घे, हल्ङ्यादिसंयोगान्त लोपाविति भावः । इयानिति । इदंशब्दात् वतुपि वकारस्य घकारे इयादेशे इदम् इयत् इति स्थिते 'इदङ्किमोरीश्की' इति शित्त्वादिदम ईकारे सर्वादेशे 'यस्येति च' इति ईकारस्य लोपे इयत् इति प्रत्ययमात्रं शिष्यते । ततः सौ नुमादि पूर्ववत् । किमः संख्या । 'तदस्य' इत्यनुवर्तते । संख्यायाः परिमाणं परिच्छेदः । किंशब्दः प्रश्ने वर्तते । का अस्य संख्येत्येवं संख्यापरिच्छेदविषयकप्रश्ने विद्यमानात् किंशब्दात् प्रथमान्ताद् अस्येत्यर्थे डतिप्रत्ययश्च स्यादित्यर्थः । का संख्या एषां ते कतीति । का संख्या अस्येति, का संख्या अनयोरिति च प्रश्नो न संभवति, अस्येत्यनेन एकत्वस्य अनयोरित्यनेन द्वित्वस्य च ज्ञातत्वात्, ज्ञाते च प्रश्नासम्भवात् । का संख्या एषामिति तु प्रश्नः संभवति, तत्र एषामित्यनेन बहुत्वस्य ज्ञातत्वेऽपि तद्व्याप्यत्रित्व-चतुष्ट्वादिसंख्यानामज्ञातत्वात् । उक्तं च भाष्ये—'न ह्येकयोः प्रश्नोऽस्ति' इति । ततश्च नित्यबहुवचनान्तोऽयं कतिशब्दः । 'डति च' इति षट्संज्ञकत्वात् 'षड्भ्यो लुक्' इति जश्शसोर्लुक् । कियन्त इति । कियानितिवत्प्रक्रिया । बहुवचनं विशेषः । संख्यापरिमाणे इत्युक्तेः किमः क्षेपार्थकत्वे डतिर्न भवति । का संख्या एषां दशानामिति । दशावरा परिषदित्यत्र ब्राह्मणबुवाणां मेलने इदं वाक्यं प्रवृत्तम् । संख्येयद्वारा संख्यायाः कुत्सात्र गम्यते, 'अव्रतानाममन्त्राणां जातिमात्रोपजीविभ्यः प्रत्ययमालाप्रसङ्गात् । किमिदंभ्याम् । वतुप्स्यादिति । वकारस्य

---

दिभ्यः प्रत्ययमालाप्रसङ्गात् । किमिदंभ्याम् । वतुप्स्यादिति । वकारस्य घविधिसामर्थ्याद्वतुपमनुवर्त्य सोऽप्यत्र विधीयत इति भावः । 'आदेः परस्य' इत्येव सिद्धे 'वः' इति वचनमादेशप्रतिपत्त्यर्थम् । इतरथा घः प्रत्ययान्तरं विज्ञायेत । कियानिति । 'इदंकिमोरीश्की' । 'यस्येति च' इति लोपः । इयानिति । ईशादेशस्य 'यस्य' इति लोपे प्रत्ययमात्रमवशिष्यते । पठन्ति च—'उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ गतवति विलयं च प्राकृतेऽपि प्रपञ्चे । सपदि पदमुदितं केवलः प्रत्ययो यत् तदियदिति मिमीते को हृदा पण्डितोऽपि ।' वैयाकरणानामौपनिषदानां च प्रक्रियामाश्रित्य प्रवृत्तो द्व्यर्थोऽयं श्लोकः । किमः संख्या । 'तदस्य—' इत्यनुवर्तत एव । संख्यायाः परिमाणं परिच्छेदः, तस्मिन् कर्तव्ये यः प्रश्नस्तस्मिन्वर्तमानात्किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे डति स्यात् । संख्यापरिमाणे किम्, क्षेपे माभूत् । का संख्येयमेषां दशानाम् । 'अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥' इत्येवं संख्येयद्वारेणात्र संख्यायाः कुत्सा बोध्या । संख्यायाः । अवयवे वर्तमाना या संख्या तद्वाचिनः प्रथमान्ताद्

अवयवा अस्य पञ्चतयं दारु । १८४४ द्वित्रिभ्यां तयस्यायज्वा । (५-२-४३) द्वयम्, द्वितयम् । त्रयम्, त्रितयम् । १८४५ उभादुदात्तो नित्यम् । (५-२-४४) उभशब्दात्तयप आदेशोऽयच् स्यात्, स चोदात्तः । उभयम् ।

इति तद्धितेषु पाञ्चमिकाः ।

---

...। सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥' इति स्मरणात् । संख्यायाः । ...इत्यनुवर्तते । द्वित्र्यादिसंख्याका अवयवा अस्यावयविन इति विग्रहे अव-...भूतसंख्यावाचिनः प्रथमान्ताद् अस्यावयविन इत्यर्थे तयबित्यर्थः । पञ्च-...मिति । पञ्चावयवकः समुदाय इत्यर्थः । द्वित्रिभ्याम् । द्वित्रिभ्यां परस्य ...तः अयज्वा स्यादित्यर्थः । द्वयमिति । द्विशब्दात्तयपः अयचि 'यस्येति च' ...इकारलोपः । द्व्यवयवकसमुदाय इत्यर्थः । एवं त्रयम् । उभादुदात्तो नित्यम् । ...चोदात्त इति । आद्युदात्त इत्यर्थः । 'अन्तोदात्तत्वस्य चित्त्वेनैन सिद्धेः' इति ...स्पष्टम् । 'अत्र अयच्प्रत्यय एव विधीयते, न तु तयप आदेशः इति स्थानि-...भाष्ये स्पष्टम् । तयप आदेश इति मूलं तु वार्तिकानुरोधेन ।

इति तद्धितेषु पाञ्चमिकाः ।

---

...र्थे तयप् स्यात् । यं प्रत्यवयवः सोऽवयवी प्रत्ययार्थः । 'अस्य' इत्यधिकारात् । ...द्वयसजादिषु प्रमाणे प्रकृत्यर्थे प्रमेयं प्रत्ययार्थस्तद्वत् । त्रयमिति । ननु 'त्रयोऽ-...वयवाः तन्तवो यस्य त्रयं सूत्रम्' इति प्रयोगे संभवत्यपि 'मुनित्रयम्' इति प्रयोगो ...संगच्छते, अन्यपदार्थस्यावयविनोऽभावादिति चेत् । अत्राहुः—अवयवी त्वत्र ...समुदाय एव । स चातिरिक्तो वाऽनतिरिक्तो वेति विचारान्तरम् । एवं च समुदायस्या-...तिरिक्तत्वपक्षेऽपि समुदायघटकत्वेन मुनीनां प्रत्यभिज्ञानान्मुनित्रयनमस्कारस्य विघ्नविघा-...कत्वमस्त्येवेति । उभादुदात्तो नित्यम् । इह चितः' इत्यनेनैवान्तोदात्तत्वं सिद्धम् । ...न्तोदात्तत्वं तु 'अनुदात्तं पदमेकवर्जम्' इति वचनाद्बाधितम् । न च हे उभयेति ...संबुद्ध्यन्ते आमन्त्रिताद्युदात्तत्वं बाधितुं वचनमिति शङ्क्यम्, पुरस्तादपवादन्यायेन ...स्वरस्यैव बाध्यता, न त्वामन्त्रिताद्युदात्तत्वस्येति सुवचत्वात् । तस्मादुदात्तवचन-...सामर्थ्यादादेरेवायम् । प्रयुज्यते च तथा 'उभयं श्रृणवच्च न' इति । तदेतत्सकल-...मभिप्रेत्याह—स चेति ।

इति तत्त्वबोधिन्यां पाञ्चमिकप्रकरणम् ।

## अथ तद्धितेषु मत्वर्थीयप्रकरणम् । ३८ ।

१८४६ तदस्मिन्नधिकमिति दशान्ताड्डः । (५—२—४५) एकादश अधिका अस्मिन्नेकादशम् । 'शतसहस्रयोरेवेष्यते' ( वा ३१४१ ) । नेह—एकादश अधिका अस्यां विंशतौ । 'प्रकृतिप्रत्ययार्थयोः समानजातीयत्वमेवेष्यते' ( वा ३१४० ) । नेह—एकादश माषा अधिका अस्मिन्सुवर्णशते । १८४७ शदन्तविंशतेश्च । ( ५—२—४६) डः स्यादुक्तेऽर्थे । त्रिंशदधिका अस्मिन् त्रिंशं शतम् । विंशम् । १८४८ संख्याया गुणस्य निमाने मयट् । (५—२—४७) भागस्य मूल्ये वर्तमानात्प्रथमान्तात्संख्यावाचिनः षष्ठ्यर्थे मयट् स्यात् । यवानां

---

अथ मत्वर्थीयाः—तदस्मिन्नधिकम् । तदधिकमस्मिन् इति विग्रहे प्रथमान्ताद् दशन्शब्दान्तात् समासाद् अस्मिन्नित्यर्थे डप्रत्ययः स्यादित्यर्थः । प्रत्ययविधौ तदन्तविधिप्रतिषेधादन्तग्रहणम् । अत एव निर्देशात् पञ्चम्यर्थे सप्तमीत्याहुः। 'औपश्लेषिकेऽधिकरणे सप्तमी' इति भाष्यम् । 'सामीपिकमधिकरणम्' इति कैयटः। एकादश माषा अधिका अस्मिन्निति । अस्मादित्यर्थः । अस्मिन् उपश्लिष्टा इति वा । न च व्यपदेशिवत्त्वेन केवलदशन्शब्दादपि स्यादिति शङ्क्यम्, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्युक्तेः । शदन्तविंशतेश्च । शेषपूरणेन सूत्रं व्याचष्टे डः स्यादुक्तेऽर्थे इति । दशान्तत्वाभावात्पूर्वेणाप्राप्तिः । त्रिंशं शतमिति । डे सति 'टेः' इति टिलोपः । विंशमिति । विंशतिः अस्मिन्नधिका इति विग्रहः। 'ति विंशतेः—' इति तिशब्दस्य लोपः । अन्तग्रहणादेकविंशं शतमिति सिद्धम्। अन्यथा प्रत्ययग्रहणपरिभाषया तदादिनियमः स्यात् । 'विंशतावप्यन्तग्रहणम्' इति वार्तिकाद् एकविंशं शतमित्यादि सिद्धम् । संख्याया गुणस्य । 'तदस्य' इत्यनुवर्तते । गुणो भागः अंशः । निमियते 'क्रीयतेऽनेनेति निमानं मूल्यद्रव्यम् । 'मेङ् प्रणिदाने' करणे ल्युट् । तदाह—भागस्य मूल्य इत्यादि । षष्ठ्यर्थे इति । अस्य-

---

तदस्मिन् । पुनस्तद्ग्रहणम् 'अस्य' इति षष्ठ्यन्तसंबद्धतद्ग्रहणनिरासार्थम् । प्रत्ययविधौ तदन्तविध्यभावादाह—दशान्तादिति । अन्तग्रहणं किम्, दश अधिका अस्मिन् शते । न चेह व्यपदेशिवद्भावेन दशान्तत्वमस्तीति वाच्यम्, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यभ्युपगमात् । शदन्त। इति प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य' इति परिभाषया तदादिनियमः स्यात् । तं वारयितुमन्तग्रहणम् । तेन एकत्रिंशं शतम्, एकचत्वारिंशमित्यादि सिद्धम् । नचैवं गोत्रिंशदधिका अस्मिन् गोशते इत्यादावतिप्रसङ्गः शङ्क्यः, 'संख्याया अवयवे तयप्' इत्यतः संख्याग्रहणानुवृत्तेः । अन्तग्रहणमिह विंशतिशब्दानन्तरं कर्तव्यम्—'षड्शित्यन्ताच्च' इति । तेन एकविंशं शतमित्यादि सिध्यति । अन्यथा 'ग्रहणवता—' इति तदन्तविधिप्रतिषेधादिह न स्यात् । संख्याया गुणस्य । गुणो भागः । निमीयते क्रीयतेऽनेनेति निमानं मूल्यम्, 'मेङ् प्रणिदाने' इत्यस्मान्निपूर्वात्करणे ल्युट् । तदाह—भागस्य मूल्य इति । षष्ठ्यर्थे इति ।

---

१ 'विक्रीयते' इति क. ।

भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम् । 'गुणस्य' इति किम्—व्रीहियवौ निमानमस्योदश्वितः । 'निमाने' किम्—द्वौ गुणौ क्षीरस्य एकस्तैलस्य द्विगुणं क्षीरं पच्यते तैलेन । १८४९ तस्य पूरणे डट् । (५—२—४८)

---

इत्यर्थः । यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्येति विग्रहवाक्यम् । द्वाभ्यां यवभागाभ्याम् एक उदश्वित्प्रस्थः ¹क्रीयते यत्र तत्रेदं वाक्यं प्रयुज्यते । द्विमयमुदश्विद्यवानामित्युदाहरणम् । यवानामिति संबन्धसमान्ये षष्ठी । यवप्रस्थद्वयेन ²क्रेतव्यमुदश्विदित्यर्थः । द्विशब्दस्य भागवृत्तेर्नित्यसापेक्षत्वाद्यवानामित्येतत्सापेक्षत्वेऽपि प्रत्ययः । व्रीहियवौ निमानमस्योदश्वित इति । द्वित्वसंख्याविशिष्टौ व्रीहियवराशी यौ अस्य उदश्वितो निमानमित्यर्थः । अत्र उदश्विद्यावत्, तदपेक्षया व्रीहियवराश्योर्द्विगुणत्वं न विवक्षितम् । किंतु राशिद्वित्वमेव विवक्षितमिति द्विशब्दस्य भागवृत्तित्वाभावान्न प्रत्ययः । तस्य पूरणे डट् । 'संख्यायाः' इत्यनुवर्तते । संख्येयार्थकसंख्यावाचिनः ³षष्ठ्यन्तात्प्रवृत्तिनिमित्तसंख्यायाः पूरणे वाच्ये डट्प्रत्ययः स्यादित्यर्थः ।

---

सूत्रे 'तदस्मिन्नधिक—' इत्यतः 'तद्' इत्यनुवृत्तौ प्रथमान्तादित्ययमेवार्थो लभ्यते, तथापि मण्डूकप्लुत्या 'तदस्य संजातम्' इत्यतः 'तदस्य' इत्यनुवर्तनात् 'षष्ठ्यर्थे' इत्येतदपि लभ्यत इति भावः । द्विमयमिति । द्विशब्दस्य सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वाद् 'यवानाम्' इति पदे सत्यपि तद्धितोत्पत्तिरिहाविरुद्धेति ज्ञेयम् । एवमपि प्रत्ययान्तस्योदश्विच्छब्देन सामानाधिकरण्यं दुर्लभम् । यावतोदश्विद्भागे प्रत्ययो विहितः, नोदश्विति । अत्राहुः—भागेऽपि विधीयमानः प्रत्ययः अभिधानस्वाभाव्याद् भागवन्तमाचष्टे । तेन सामानाधिकरण्यं भवतीति । 'गुणनिमाने' इति समस्ये व्यस्तोच्चारणाद् 'एकत्वं गुणस्य' इत्यत्र विवक्षितम् । तेनेह न भवति—यवानां द्वौ भागौ निमानमेषामुदश्वितस्त्रयाणां भागानामिति । 'भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते' । इह न भवति । एको भागो निमानमस्येति । भूयस इति च प्रकृत्यर्थादाधिक्यमात्रं प्रकृत्यर्थस्य विवक्षितम्, न तु बहुत्वम् । तेन द्विशब्दादपि भवत्येव । तस्य पूरणे । 'तस्य' इति षष्ठ्यन्तानुकरणम् । एकत्वं त्वविवक्षितम्, एकस्य पूरणासम्भवात् । पूर्यतेऽनेनेति पूरणः, ण्यन्तात्करणे ल्युट् । एकादशानामिति । अनुगतावयवभेदः समुच्चयः प्रकृत्यर्थः । अवयव इह प्रत्ययार्थः । यस्मात्संख्यावाचिनः प्रत्ययविधिस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्ययः । यथा 'अतिशायने—' 'तस्य भावे—' इत्यादिषु प्रवृत्तिनिमित्तस्यैवातिशयादिकं गृह्यते, अन्तरङ्गत्वात्, तथेहापि । तेन 'एकादशानां घटानां पूरणो जलादिः' इत्यत्र नातिप्रसङ्गशङ्कालेशोऽपीति भावः । ननु यदि प्रवृत्तिनिमित्तस्य पूरणे प्रत्ययः, तर्ह्यत्र एकादशत्वस्य पूरण इति विग्रहो वक्तुं युक्त इति चेत् । अत्राहुः—'वैयकरणपाशः' इत्यत्र यथा 'याप्यो वैयाकरणः' इति विग्रहः । न तु 'याप्यं वैयाकरणत्वम्' इति, तथेहापि बोध्यमिति । एवं च क्रमेणाध्यायेषु गम्यमानेषु 'वृद्धिरादैच्' इत्यध्यायो यदा चरमं गण्यते तदा अष्टमो भवत्येव । नान्तादसंख्यादेः । डट इति । 'डट्' इति प्रथमान्त-

---

१ 'विक्रीयते' इति क. २. 'विक्रेतव्यम्' इति क. । ३. 'प्रत्ययनिर्मित' इति क. ।

एकादशानां पूरण एकादशः । १८५० । नान्तादसंख्यादेर्मट् । (५—२—४९) डटो मडागमः स्यात् । पञ्चानां पूरणः पञ्चमः । 'नान्तात्' किम्—विंशः । 'असंख्यादेः' किम्—एकादशः १८५१ षट्कतिकतिपयचतुरां थुक् । (५—२—५१) एषां थुगागमः स्याड्डटि । षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट् । कतिपयथः । चतुर्थः । 'चतुरश्छयतावाद्यक्षरस्य लोपश्च' ( वा ३१५८ ) । तुरीयः, तुर्यः । १८५२ बहुपूगगणसङ्घस्य तिथुक् । (५—२—५२) 'डटि' इत्येव । पूगसङ्घयोरसंख्यात्वेऽप्यत एव डट् । बहुतिथ इत्यादि । १८५३ वतोरिथुक् । (५—२—५३) 'डटि' इत्येव ।

---

पूर्यते अनेनेति पूरणः अवयवः, स प्रत्ययार्थः । एकादश इति । एकादशत्वसंख्यायाः पूरकोऽवयव इत्यर्थः । यस्मिन् अनुपात्ते एकादशत्वसंख्या न संपद्यते, यस्मिन्नुपात्ते तु सा पूर्यते, सोऽवयव एकदेश इति यावत् । प्रवृत्तिनिमित्तेति किम् ? पञ्चानां घटानां पूरणं जलादि । नान्तादसंख्यादेर्मट् । डटो मडागमः स्यादिति । शेषपूरणमिदम् । डटि टकार इत् । अकार उच्चारणार्थः । पञ्चम इति । पञ्चन्शब्दाद् डटि तस्य मडागमे सति नलोपः । यद्यपि मटः प्रत्ययत्वेऽपि न रूपभेदः । तथापि 'स्वरविशेषार्थं मडागमाश्रयणम्' इति भाष्ये स्पष्टम् । षट्कति । थुकि ककार इत् । उकार उच्चारणार्थः । कित्त्वादन्त्यादचः परः । षष्ठ इति । अपदान्तत्वात् षस्य न जश्त्वम् । चतुर्थ इति । अपदान्तत्वान्न रेफस्य विसर्गः । चतुर इति । वार्तिकमिदम् । चतुर् शब्दात् षष्ठ्यन्तात्पूरणे छयतौ स्तः । आद्यक्षरस्य लोपश्चेति । 'च' इति संघातस्य लोपश्चेत्यर्थः । बहुपूगगण । बहु, पूग, गण, संघ एषां डटि तिथुगागमः स्यादित्यर्थः । ककार इत् । उकार उच्चारणार्थः । कित्त्वादन्तादचः परः । इत्यादीति । पूगतिथः, गणतिथः, संघतिथः । वतोरि-

---

स्यानुवृत्तस्य 'नान्तात्—' इति पञ्चम्या षष्ठी कल्प्यत इति भावः । यद्यपीह मटः प्रत्ययत्वेऽपि न क्षतिः, तथाप्युत्तरत्र तमट आगमत्वमेवाभ्युपगन्तव्यम् । अनुदात्तत्वं यथा स्यात् । प्रत्ययत्वे ह्याद्युदात्तः स्यात् । तथा चैकरूप्येणैव संदर्भव्याख्यानमुचितम् । अन्येऽप्याहुः—मटः प्रत्ययत्वे अकारसहितो मकारो विधेयः । आगमत्वे तु मकारमात्रमिति लाघवमस्तीति । विंश इति । विंशतेः पूरणः । 'तिर्विंशतेर्डिति' इति तिलोपः । षट्कति । इह षष्ठीनिर्देशबलात् षडादीनामागमित्वं स्पष्टमिति तदानुकूल्येनानुवृत्तं डट् सप्तम्या विपरिणम्यते, तदाह डटीति । डट एव थुट् तु न कृतः, षष्ठे पकारस्य जश्त्वप्रसङ्गात् । चतुर्थे रेफस्य विसर्गप्रसङ्गाच्च । न चैवं 'नान्तात्–' इति सूत्रेऽपि डति परे मुगेव विधीयतामिति वाच्यम् , पञ्चमः सप्तम इत्यादौ नलोपाभावापत्तेः । चतुरश्छयताविति । विशेषविहिताभ्यामपि छयद्भ्यां डट्प्रत्ययो न बाध्यते, थुग्विधानसामर्थ्यात् । ते चतुर्थ इति सिद्धम् । आद्यक्षरेति । अच्सहितं व्यञ्जनमक्षरशब्देनोच्यते अच्सहितस्यादेर्व्यञ्जनस्येत्यर्थः । व्यञ्जनसहितस्यादेरच इति व्याख्याने तु द्विर्वचनन्यायेन तकारस्यापि लोपः स्यादिति हरदत्तः । आदेर्व्यञ्जनस्येति

---

१ क्वचित्पुस्तकेषु 'वाद्यक्षरलोपश्च' इति पाठः ।

तियः । १८५४ द्वेस्तीयः । (५—२—५४) डटोऽपवादः । द्वयोः पूरणो
द्वितीयः । १८५५ त्रेः सम्प्रसारणं च । (५—२—५५) तृतीयः ।
१८५६ विंशत्यादिभ्यस्तमडन्यतरस्याम् । (५—२—५६) एभ्यो डट-
स्तमडागमो वा स्यात् । विंशतितमः, विंशः । एकविंशतितमः, एकविंशः ।
१८५७ नित्यं शतादिमासार्धमाससंवत्सराच्च । (५—२—५७) शतस्य

---

तुक् । डटीत्येवेति । वतुबन्तस्य इथुगागमः स्याद् डटीत्यर्थः । यावतिथ इति ।
यावतां पूरण इति विग्रहः । 'बहुगण—' इति संख्यात्वात् 'तस्य पूरणे—' इति डटि प्रकृते-
रिथुक् । द्वेस्तीयः । द्विशब्दात् षष्ठ्यन्तात् पूरणे तीयप्रत्यः स्यादित्यर्थः । त्रेः
संप्रसारणं च । त्रेस्तीयः स्यात्प्रकृतेः संप्रसारणं चेत्यर्थः । तृतीय इति ।
त्रयाणां पूरण इति विग्रहः । तीयप्रत्यये सति रेफस्य संप्रसारणम् ऋकारः । 'संप्र-
सारणाच्च' इति पूर्वरूपम् । 'हलः' इति दीर्घस्तु न भवति, 'ढ्लोपे' इत्यतः अण
इत्यनुवृत्तेः । विंशत्यादिभ्यः । तमटि टकार इत्, मकारादकार उच्चारणार्थः ।
अत्र 'पङ्क्तिविंशति—' इति सूत्रानुक्रान्ता एव विंशत्यादयो गृह्यन्ते, नतु लोकप्रसिद्धा
एकविंशत्यादयोऽपि विप्रकर्षात् इति कैयटः । एकविंशतितम इत्यत्र तु तदन्तविधिना
इत्यग्रे वक्ष्यते । नित्यं शतादिमासार्धमाससंवत्सराच्च । शतादिभ्यः
मासाद् अर्धमासात् संवत्सराच्च परस्य डटो नित्यं तमडागमः स्यादित्यर्थः । ननु

---

स्थाने प्रमाणं तु 'द्वितीयतृतीय—' इति सूत्रे 'तुर्याणि' इति निर्देशो बोध्यः ।
द्वितीयः । डटोऽपवाद इति । डट आदेशस्तु न भवति 'डिति' 'टिड्ढा—' इति
ङीप्प्रसक्त्या 'द्वितीयाश्रिता—' इति निर्देशानुपपत्तेः । अतएव निर्देशाद् द्विशब्दस्या-
त्वादेशो न भवति । तृतीय इति । रेफस्य ऋकारः संप्रसारणम् । 'हलः' इह
दीर्घस्तु न भवति, 'ढ्लोपे—'इति सूत्रादण इत्यनुवृत्तेः। 'त्रेस्तृ च' इति नोक्तम्, प्रत्ययो
मा विज्ञायीति । विंशत्यादिभ्यः । इह प्रत्यासत्त्या 'पङ्क्ति—' इत्यादिसूत्रे निपातिता
विंशत्यादयो गृह्यन्ते, न लोकप्रसिद्धा, विप्रकृष्टत्वादिति भाष्यमतम् । वृत्तिकृता तु
विंशत्यादयो लौकिका एव संख्याशब्दा गृह्यन्ते, न 'पङ्क्ति—' आदिसूत्रनिर्दिष्टाः ।
तद्ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यात्, ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रति-
षेधात् । एवं च सति 'षष्ठ्यादेश्चासंख्यादेः' इति पर्युदासो युज्यत एवेत्युक्तम् ।
एकविंशतितम इति । यद्यपि भाष्यमते तदन्तविधिर्दुर्लभस्तथापि 'षष्ठ्यादेश्च—'
इति सूत्रे संख्यादिपर्युदासो ज्ञापयति 'इह प्रकरणे तदन्तानामपि ग्रहणम्' इति ।
एवं च सति एकान्नविंशतेः पूरण एकान्नविंशतितम इत्यपि सिध्यति । 'लौकिकानां
ग्रहणम्' इति वृत्तिमते तु नैतत्सिध्येत् । विंशतिसंख्यातः प्राग्भावित्वादस्या संख्यायाः ।
एतच्च कैयटहरदत्तग्रन्थयोः स्पष्टम् । ननु 'अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा
गृह्णादिषु' इति वदता कात्यायनेन 'पङ्क्ति—' आदिसूत्रस्य प्रत्याख्याततत्वात् तत्सूत्रे
निपातिता विंशत्यादयो गृह्यन्ते, इति भाष्यमतमयुक्तमिति चेत् । अत्राहुः—यद्यपि
प्रत्याख्यातं तथापीहार्थमावश्यकं तत् । अतएव तत्र भाष्यकृता 'नासूया कर्तव्या
यत्नानुगमः क्रियते' इत्युक्तम् । अतः कात्यायनोक्तप्रत्याख्यानं नादर्तव्यमिति ।

पूरणः शततमः । एकशततमः । मासादेरत एव डट् । मासतमः । अर्धमासतमः । संवत्सरतमः । १८५८ षष्ट्याद्येश्चासंख्यादेः । (५-२-५८) षष्टितमः । संख्यादेस्तु 'विंशत्यादिभ्यः—' (१८५६) इति विकल्प एव । एकषष्टः, एकषष्टितमः । १८५९ मतौ छः सूक्तसाम्नोः । (५—२—५९) मत्वर्थे छः स्यात् । अच्छावाकशब्दोऽस्मिन्नस्ति अच्छावाकीयं सूक्तम् । वारवन्तीयं साम । १८६० अध्यायानुवाकयोर्लुक् । (५—२—६०) मत्वर्थस्य छस्य । अत एव ज्ञापकात्तत्र छः । विधानसामर्थ्याच्च विकल्पेन लुक् । गर्दभाण्डः, गर्दभा-

'षष्ठ्यादेश्च—' इत्युत्तरसूत्रेण शततमः सिध्यतीत्यत आह—एकशततम इति । 'असंख्यादेः' इति पर्युदासादुत्तरसूत्रस्य नात्र प्रवृत्तिरिति भावः । ननु मासार्धमास-संवत्सरशब्दानां संख्यावाचित्वाभावात् तेभ्यो डट एवाप्रसक्तेः तस्य कथं तमड्विधि-रित्यत आह मासादेरिति । मासतम इति । मासस्य पूरणः अर्धमासादि-रवयवः । अर्धमासतम इति । अर्धमासस्य पूरणः तिथ्यादिरवयवः । संवत्सर-तम इति । संवत्सरस्य पूरणः मासादिरवयवः । षष्ठ्याद्येश्चासंख्यादेः । असंख्यापूर्वपदात् षष्ठ्यादेः परस्य डटो नित्यं तमडागमः स्यादित्यर्थः । 'विंशत्या-दिभ्यः—' एति विकल्पस्यापवादः । एकषष्टः, एकषष्टितम इति । संख्यादित्वा-न्नित्यस्य तमठोऽभावे 'विंशत्यादिभ्यः—' इति डटस्तमड्विकल्पः । तमडभावे डटि 'यस्यति च' इति इकारलोपे एकषष्ट इति रूपम् । ननु केवलात् षष्ठ्यादेर्विहितस्य नित्यतमटः संख्यादेः कथं प्रसक्तिः, तमडागमविधेरप्रत्ययविधित्वेऽपि 'ग्रहणवता प्राति-पदिकेन तदन्तविधिर्नास्ति' इति निषेधादिति चेत्, मैवम्—असंख्यादेरिति हि इह प्रकरणे ग्रहणवता प्रातिपदिकेन तदन्तविधिं ज्ञापयति । तेन 'विंशत्यादिभ्यः—' इति पूर्वसूत्रम् एकविंशतितम इत्यादावपि प्रवर्तत इति भाष्ये स्पष्टम् । एवं च एकान्नविंशति-तम इत्यपि सिद्धम् । मतौ छः सूक्तसाम्नोः । मतुशब्दो मत्वर्थे लाक्षणिक इत्याह—मत्वर्थे इति । अच्छावाकीयं सूक्तमिति । अच्छावाकशब्दः अस्यास्ति अस्मि-न्नस्तीति वा विग्रहः । अच्छावाकशब्दयुक्तमित्यर्थः । अच्छावाकशब्दात् शब्दस्वरूप-परात् प्रथमान्ताच्छः । वारवन्तीयं सामेति । 'अश्वं नत्वा वारवन्तम्' इत्यस्याम् ऋच्यध्यूढमित्यर्थः । एवमस्यवामीयमित्यपि । 'अस्यवामस्य' इत्यस्य एकदेशानुकरणम् अस्यवामेति । तस्माच्छः । अस्यवामशब्दसंयुक्तमित्यर्थः । प्रकृतिवदनुकरणमित्यस्यानि-त्यत्वात्सुपोलुक् । अध्यायानुवाकयोर्लुक् । नन्वध्यायानुवाकयोरभिधेयत्वे छ-

शततम इति । यद्यपीदं 'षष्ठ्यादेश्च—' इत्युत्तरसूत्रेणैव सिध्यति, तथापि संख्यादे 'नित्यं शतादि—' इत्यावश्यकमिति ध्वनयन्नुदाहरति—एकशततम इति । मासादेरिति । संख्यावाचित्वाभावेऽपीति भावः । षष्ठ्यादेश्चेति । 'विंशत्या-दिभ्यः—' इति विकल्पे प्राप्ते नित्यार्थोऽयमारम्भः । संख्यादेस्त्विति । एतच्च प्राक् शताद्बोध्यम्, 'नित्यं शतादि—' इत्युक्तत्वात् । मतौ छः । मत्वर्थ इति । मतोर्विवक्षि इत्यर्थः । तेन 'तत्' इति प्रथमा समर्थविभक्तिः, अस्यास्मिन्निति प्रत्ययार्थश्चेह लभ्यते । विधानसामर्थ्यादिति । मतुप्प्रकरण एवास्मिन् सूत्रे कर्तव्ये यदत्रास्य लुग्विधा-

१८६१ विमुक्तादिभ्योऽण् । (५-२-६१) मत्वर्थेऽण् स्यादध्यायानुवा-
योः । विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तः । दैवासुरः । १८६२ गोषदादिभ्यो वुन् ।
(५-२-६२) मत्वर्थेऽध्यायानुवाकयोः । गोषदकः । इषेत्वकः । १८६३ तत्र
ः पथः । (५-२-६३) वुन् स्यात् । पथि कुशलः पथकः । १८६४
र्षादिभ्यः कन् । (५-२-६४) आकर्षे कुशल आकर्षकः । 'आकषा-
यः' इति रेफरहितो मुख्यः पाठः । आकषो निकषः । १८६५ धनहिरण्या-
मे । (५-२-६५) काम इच्छा । धने कामो धनको देवदत्तस्य ।
यकः । १८६६ स्वाङ्गेभ्यः प्रसिते । (५-२-६६) केशेषु प्रसितः
कः । तद्रचनायां तत्पर इत्यर्थः । १८६७ उदराट्ठगाद्यूने (५-२-६७)
जिगीषौ ठक् स्यात्कनोऽपवादः । बुभुक्षयात्यन्तपीडित उदरे प्रसित

---

ं प्राप्तिः ? 'सूक्तसाम्नोः' इति नियमादित्य आह अत एवेति । विधानेति ।
नुप्रकरण एवास्मिन्सूत्र कर्तव्ये अत्र प्रकरणे छस्य लुग्विधानसामर्थ्यात्' इति
ः । ज्ञापकसिद्धविधानसामर्थ्यादित्यन्ये । भाष्ये तु 'अध्यायानुवाकयोर्वा
वक्तव्यः' इति वचनमेवारब्धम् । गर्दभाण्डः, गर्दभाण्डीय इति ।
ण्डशब्दसंयुक्तोऽध्यायोऽनुवाको वेत्यर्थः । भाष्योदाहरणादेव क्वचिदेतन्नाम-
ध्यायोयोऽनुवाको वा अन्वेष्यः । विमुक्तादिभ्योऽण् । वैमुक्त इति । विमुक्त-
युक्तोऽध्यायोऽनुवाको वेत्यर्थः । गोषदादिभ्यो वुन् । गोषदक इति ।
दशब्दसंयुक्तोऽध्यायोऽनुवाको वेत्यर्थः । इषेत्वक इति । 'इषेत्वा' इति शब्दयुक्त
त्यर्थः । अस्यवामीयमित्यत्रोक्तरीत्या सुपो न लुक् । तत्र कुशलः पथः । वुन्
ादिति । सप्तम्यन्तात्पथिन्शब्दात्कुशल इत्यर्थे वुनित्यर्थः । पथक इति ।
ादेशे 'नस्तद्धिते' इति टिलोपः । आकर्षादिभ्यः कन् । आकर्षक इति ।
पि वुनैवानुवृत्तेनेदं सिध्यति । तथापि शकुनिक इत्याद्यर्थं कन्ग्रहणम् ।
नहिरण्यात्कामे । 'तत्र' इत्यनुवर्तते । धनशब्दाद् हिरण्यशब्दाच्च सप्तम्यन्तात्
मे वाच्ये कन् स्यादित्यर्थः । काम इच्छेति । ननु कामयिता, व्याख्यानादिति
वः । स्वाङ्गेभ्यः प्रसिते । 'तत्र' इत्यनुवर्तते । स्वाङ्गेभ्यः सप्तम्यन्तेभ्यः
सितेऽर्थे कन् स्यादित्यर्थः । प्रसित उत्सुकः । तद्रचनायामिति । वेण्यादिग्रथने
त्यर्थः । अत्रैवार्थे अस्य साधुत्वम् , व्याख्यानादिति भावः । उदराट्ठगाद्यूने ।
त्र' 'प्रसित' इत्यनुवर्तते । सप्तम्यन्तादुदरशब्दाद् आद्यूने प्रसितेऽर्थे
गित्यर्थं इत्यभिप्रेत्य आद्यूनशब्दं विवृण्वन्नाह—अविजिगीषाविति । 'दिवोऽवि-
गीषायाम्' इत्यविजिगीषायामेव दिवो निष्ठानत्वविधानादिति भावः । बुभुक्षयेति ।

---

साक्षिकं लुकमनुमापयतीति कैयटः । तत्र कुशलः । सप्तमीसमर्थात्पथिन् शब्दात्
शल इत्यर्थे वुन्स्यात् । आकर्षादिभ्यः कन् । वुना सिद्धे कन्ग्रहणम् इदुदन्तार्थम् ।
निकः । शकुनिकः । त्सरुकः । मुख्यः पाठ इति । आकषन्त्यस्मिन् सुवर्णादिक-
मित्याकषः । 'पुंसि संज्ञायां घः—' इति व्याख्याय, ये तु 'आकर्षादिभ्यः' इति सरेफं
ठन्ति, तेषाम् 'आकर्षः इति घञि रूपम्' इति हरदत्तेनोक्तत्वादिति भावः । धने

औदरिकः । 'आद्यूने' किम्—उदरकः । उदरपरिमार्जनादौ प्रसक्त इत्यर्थः । १८६८ सस्येन परिजातः । (५—२—६८) कन् स्वर्यते, न तु ठक् । सस्यशब्दो गुणवाची न तु धान्यवाची । 'शस्येन' इति पाठान्तरम् । सस्येन गुणेन परिजातः संबद्धः सस्यकः साधुः । १८६९ अंशं हारी । (५—२—६९) 'हारी' इत्यावश्यके णिनिः । अत एव तद्योगे षष्ठी न । अंशको दायादः । १८७० तन्त्रादचिरापहृते । (५—२—७०) तन्त्रकः पटः । प्रत्यग्र इत्यर्थः । १८७१ ब्राह्मणकोष्णिके संज्ञायाम् । (५—२—७१) आयुधजीविनो ब्राह्मणा यस्मिन्देशे स ब्राह्मणकः । अल्पमन्नं यस्यां सा उष्णिका यवागूः । अल्पान्नशब्दस्योष्णादेशो निपात्यते । १८७२ शीतोष्णाभ्यां कारिणि (५—२—७२)

---

क्षुधा पीडित एव सन् उदरपरिमार्जने प्रसितः, न तु मल्लवद्युद्धे विजिगीषयेत्यर्थः । उदरक इति । मल्ल इति शेषः । स हि युद्धे विजिगीषया उदरपरिर्जनादौ उत्सुको भवति । तदाह उदरपरिमार्जनादौ प्रसक्त इति । विजिगीषयेति शेषः । सस्येन परिजातः । तृतीयान्तात् सस्यशब्दात्परिजात इत्यर्थे कन् स्यादित्यर्थः । संनिहितष्ठगेव कुतो नानुवर्तते इत्यत आह कन् स्वर्यते न तु ठगिति । स्वरितत्वप्रतिज्ञायां तु पाणिनीयपरंपरैव प्रमाणम् । सस्यशब्दो गुणवाचीति । व्याख्यानमेवात्र शरणम् । शस्येनेतीति । 'शंसु स्तुतौ' इति धातोः कर्मणि यति शस्यशब्दः स्तुत्यपर्यायः । स्तुत्यश्च गुण एवेति भावः । परिजात इत्यस्य विवरणं संबद्ध इति । अंशं हारी । द्वितीयान्ताद् अंशशब्दाद् हारीत्यर्थे कन् स्यादित्यर्थः । ननु कृद्योगषष्ठीप्रसङ्गादंशमिति कथं द्वितीयेत्यत आह आवश्यके णिनिरिति । 'आवश्यकाधमर्ण्ययोः—' इत्यनेनेति शेषः । षष्ठी नेति । 'अकेनोः—' इति तन्निषेधादिति भावः । तन्त्रादचिरापहृते । तन्त्रशब्दात् पञ्चम्यन्ताद् अचिरापहृतेऽर्थे कनित्यर्थः । तन्त्रं तन्तुवायशलाका । अचिरेण कालेन अपहृतः अचिरापहृतः । 'कालाः परिमाणिना' इति समासः । प्रत्यग्र इति । नूतन इत्यर्थः । ब्राह्मणकोष्णिके । आयुधजीविविषयब्राह्मणशब्दात् प्रथमान्ताद् अस्मिन्नित्यर्थे कन् निपात्यत इत्यर्थः । अल्पान्नशब्दस्येति । अल्पान्नशब्दात् प्रथमान्ताद् अस्मिन्नित्यर्थे कन्प्रत्ययः प्रकृतेरुष्णादेशश्च निपात्यत इत्यर्थः । शीतोष्णाभ्यां कारिणि ।

---

काम इति । 'तत्र' इत्यनुवर्तनात्सप्तम्यन्तात्प्रत्यय इति भावः । उदरात् । आद्यूनशब्दार्थमाह अविजिगीषाविति । 'दिवोऽविजिगीषायाम्' इति तत्रैव निष्ठानत्वविधानात् । सस्येन । कर्मकर्तरि तृतीयेयम् । परितो जातः परिजातः । फलितमाह संबद्ध इति । अतएवेति । 'अकेनोः—' इति निषेधादिति भावः । अचिरात् तन्त्रात् । तन्यन्ते तन्तवोऽस्मिन्निति व्युत्पत्त्या तन्त्र तन्तुवायशलाका । अचिरः कालोऽपहृतस्येत्यचिरापहृतस्तस्मिन् । 'कालाः परिमाणिना' इति समासः । प्रत्यग्र इति । नूतन इत्यर्थः । ब्राह्मणकोष्णिके । ब्राह्मणशब्दादायुधजीवित्वोपाधिकात् प्रथमान्तात् सप्तम्यर्थे कन् प्रत्ययो निपात्यते । अन्नशब्दात्तु अल्पत्वोपाधिकात् । तदाह आयुधेत्यादि । शीतोष्णाभ्याम् । शीतमिव शीतम्, मन्दमित्यर्थः ।

करोतीति शीतकोऽलसः । उष्णं करोतीत्युष्णकः शीघ्रकारी । १८७३ ... (५—२—७३) अध्यारूढशब्दात्कनुत्तरपदलोपश्च । १८७४ ... (५—२—७४) अन्वभिभ्यां कन्, अभेः ... अभिकाभीकः कमिता । ... अनुकामयते अनुकः । अभिकामयते अभिकः, अभीकः । ... पार्श्वेनान्विच्छति । (५—२—७५) अनृजुरुपायः पार्श्वम्, ... अन्विच्छति पार्श्वकः । १८७६ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ । (५—२—७६) तीक्ष्णोपायोऽयःशूलम्, तेनान्विच्छति आयःशूलिकः साहसिकः । दण्डा-

---

...मिव शीतं मन्दमित्यर्थः । उष्णमिव उष्णं शीघ्रमित्यर्थः । ... क्रियाविशेषणाभ्यां द्वितीयान्ताभ्यां कन् स्यादित्यर्थः । 'य आशुकर्तव्या-... चिरेण करोति स शीतक उच्यते, यस्तु अनाशुकर्तव्यान् आश्वेव करोति ... उष्णक उच्यते' इति भाष्ये । 'संज्ञायामित्यनुवृत्तेरयमर्थो लभ्यते' इति कैयटः । ... शीतकोऽलस इति । उष्णकः शीघ्रकारीति च । अधिकम् । ... अध्यारूढशब्दादिति । व्युत्पादनमात्रमिदम् । शुद्धरूढ एवायमिति बोध्यम् । ... अभिक । अनुक, अभिक, अभीक एषां समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । ... पार्श्वेनान्विच्छति । तृतीयान्तात्पार्श्वशब्दाद् अन्विच्छतीत्यर्थे संज्ञायां कन् स्यादि-... ।अन्वेषणं मार्गणम् । पार्श्वमिव पार्श्वम् । अनृजुरुपायः । 'ऋजूपायेन अन्वेष्ट-... अर्थान् यः अनृजुना उपायेनान्विच्छति स पार्श्वकः' इति भाष्यम् । तदाह ... अनृजुरित्यादि । अयःशूलदण्डाजिनाभ्यां ठक्ठञौ । अयःशूल, दण्डाजिन ... आभ्यां तृतीयान्ताभ्यां अन्विच्छतीत्यर्थे संज्ञायां ठक्ठञौ स्त इत्यर्थः । अयःशूलमिव ... शूलम्, साहसमित्यर्थः । 'यो मृदुनोपायेन अन्वेष्टव्यानर्थान् तीक्ष्णोपायेनान्वि-... ति स आयःशूलिक' इति भाष्यम् । तदाह तीक्ष्णोपाय इत्यादि । दण्डा-

---

...ति सति कार्यकरणे पाटवाभावात् । उष्णमिवोष्णम्, शीघ्रमित्यर्थः । क्रियाविशेषणाभ्यां ... द्वितीयान्ताभ्यां प्रत्ययः । कृद्योगलक्षणा षष्ठी तु क्रियाविशेषणान्नेत्युक्तम् । मुख्यार्थ-... भ्यां तु प्रत्ययो न भवत्यनभिधानात् । अधिकम् । अध्यारूढशब्दादिति । ... 'गत्यर्थाकर्मक—' इत्यादिना रुहेः कर्तरि कर्मणि वा क्तो विहितः । आद्यं क्तप्रत्ययेन ... कर्मणोऽनभिहितत्वाद् अध्यारूढशब्दयोगे द्वितीया । अध्यारूढो द्रोणः खारीमिति ... गत इतिवत् । तथा अधिकशब्देनापि योगे द्वितीयायां प्राप्तायां 'यस्मादधिकम्—' ... 'यस्मिन्नधिकम्—' इति च निर्देशद्वयात् पञ्चमीसप्तम्यौ भवतः । अधिको द्रोणः ... खार्याः, अधिको द्रोणः खार्यामिति । द्वितीये तु क्तेन कर्मणोऽभिहितत्वात्प्रथमा । ... अधिका खारी द्रोणेन । कर्मणोऽभिहितत्वादेव पञ्चमीसप्तम्याविह न शङ्कनीये । ... अनुका । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । सूत्रत्वाल्लिङ्गव्यत्यय इति फलितोऽर्थः । ... अन्वभिभ्यां कमितेति । क्रियाविशिष्टसाधनवाचिभ्यां स्वार्थे निपात्यत इत्यर्थः । ... पार्श्वेनान्विच्छति । 'आकर्षादिभ्यः कन्' इत्यतः कननुवर्तते । अनृजुरिति । ... अनवस्थानात्पार्श्वमनृजु, तत्साधर्म्यादुपायोऽपि । इह शीतोष्णपार्श्वायःशूलदण्डाजिन-... शब्दा गौणा एव गृह्यन्ते । मुख्यार्थेभ्यस्तु प्रत्ययो न भवत्यनभिधानात् ।

जिनं दम्भः, तेनान्विच्छति दाण्डाजिनिकः । १८७७ तावतिथं ग्रहणमिति लुग्वा । (५—२—७७) कन् स्यात्पूरणप्रत्ययस्य च लुग्वा । द्वितीयकम्, द्विकं वा ग्रहणं देवदत्तस्य । द्वितीयेन रूपेण ग्रहणमित्यर्थः । 'तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यं च लुक्' (वा ३१७२) । षष्ठेन रूपेण गृह्णाति षट्को देवदत्तः । पञ्चकः । १८७८ स एषां ग्रामणीः । (५—२—७८) देवदत्तो मुख्य एषां देवदत्तकाः । त्वत्काः । मत्काः । १८७९ शृङ्खलमस्य बन्धनं करभे । (५—२—७९) शृङ्खलकः करभः । १८८० उत्क उन्मनाः ।

---

जिनं दम्भ इति । दम्भार्थत्वाद्दण्डाजिनशब्दो दम्भे लाक्षणिक इति भावः । तावतिथम् । तावतां पूरणं तावतिथमिति पूरणप्रत्ययान्तानां सामान्यनिर्देशः । तृतीयार्थे प्रथमा । ग्रहणमिति भावे ल्युडन्तम् । तथाच तृतीयान्तात्पूरणप्रत्ययान्ताद् ग्रहणमित्यर्थे कन् स्यात्पूरणप्रत्ययस्य च लुग्वेत्यर्थ इत्यभिप्रेत्याह कन् स्यादित्यादि । पूरणप्रत्ययान्तस्य तु प्रकृतिभूतस्य न लुक् । किंतु पूरणप्रत्ययमात्रस्य, 'षष्ठेन गृह्णाति षट्क' इति भाष्योदाहरणात् । द्वितीयेन रूपेणेति । अनेन तृतीयैव समर्थविभक्तिरिति सूचितम् । इतिना लोकानुसारित्वं गम्यते । एवं च ग्रन्थविषयकमेव ग्रहणमिह फलति । तेन द्वितीयं ग्रहणं देवदत्तेन दण्डस्येत्यादौ न भवति । तावतिथेनेति । ग्रहणेऽर्थे विहितं ग्रहीतरि न प्राप्नोतीत्यारम्भः । षट्को देवदत्त इति भाष्ये एवमेवोदाहृतत्वात् पूरणप्रत्ययस्यैव लुगिति गम्यते, न तु तदन्तस्य । स एषां ग्रामणीः । ग्रामणीविशेषवाचकात् शब्दात्प्रथमान्ताद् अस्येत्यर्थे कन् स्यादित्यर्थः । देवदत्तो मुख्य एषामिति । एतेन ग्रामणीशब्दो मुख्यपर्याय इति सूचितम् । 'ग्रामणीर्नापिते पुंसि ग्रामाधिपे श्रेष्ठे त्रिषु' इत्यमरः । त्वत्का मत्का इति । त्वमहं वा मुख्य एषामिति विग्रहः । 'प्रत्ययोत्तरपदयोश्च' इति त्वमौ । शृङ्खलमस्य । करभ इति षष्ठ्यर्थे सप्तमी । बन्धनमिति करणे ल्युट् । अस्य करभस्य शृङ्खलं बन्धनमिति विग्रहे बन्धनविशेषणात् शृङ्खलशब्दात् प्रथमान्ताद अस्य करभस्येत्यर्थे कन् स्यादित्यर्थः । शृङ्खलकः करभ इति । शृङ्खलेन बद्ध इति यावत् । करभो बाल उष्ट्रः । उत्क

---

तावतिथं ग्रहणमिति लुग्वा । तावतां पूरणं तावतिथम्, 'वतोरिथुक्' । यथा 'तस्यापत्यम्' इत्यत्र तस्येति षष्ठ्यन्तानां सामान्यनिर्देशस्तथात्र 'तावतिथम्' इति पूरणप्रत्ययान्तानां सामान्यनिर्देशः । अनन्तरावपि ठक्ठञौ नानुवर्तेते, अस्वरितत्वादित्यभिप्रेत्याह कन्स्यादिति । पूरणप्रत्ययस्येति । न तु कनो लुक्, वाग्रहणानर्थक्यप्रसङ्गात् । पञ्चमं पञ्चमकमित्यादिरूपं हि तेन साध्यम् । तच्च महाविभाषाधिकाराद्विकल्पेन कन उत्पत्त्यापि सिद्धमेव, तस्मात्पूरणप्रत्ययस्यैव लुक्सूत्रकारस्याभिमत इति व्याचष्टे—द्विकमिति । वार्तिककारस्तु कन एव लुगिति व्याख्यामभिप्रेत्य 'तावतिथं ग्रहणमिति लुग्वा वचनानर्थक्यं विभाषाग्रहणात्' इत्याह । तन्मते द्वितीयकं द्वितीयमित्येव स्या न तु द्विकमिति बोध्यम् । तावतिथेनेति । पूरणप्रत्ययान्ताद् ग्रहणोपाधिकात् स्वार्थे विधीयमानो ग्रहीतरि न प्राप्नोतीति वचनमिति कैयटः । स एषां ग्रामणीः । 'ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु' इत्यमरः । करभ इति । उष्ट्रबालकः ।

-२—८०) उद्गतमनस्कवृत्तेरुच्छशब्दात्स्वार्थे कन् । उत्क उत्कण्ठितः ।
१८८१ कालप्रयोजनाद्रोगे । (५—२—८१) कालवचनात्प्रयोजनवचनाच्च स्याद्रोगे । द्वितीयेऽह्नि भवो द्वितीयको ज्वरः । प्रयोजनं कारणं रोगस्य फलं । विषपुष्पैर्जनितो विषपुष्पकः । उष्णं कार्यमस्य उष्णकः । 'रोगे' किम्—यो दिवसोऽस्य । १८८२ तदस्मिन्नन्नं प्राये संज्ञायाम् । (५—२—८२) मान्तात्सप्तम्यर्थे कन्स्याद्यत्प्रथमान्तमन्नं चेत्प्रायविषयं तत् । गुडापूपाः प्रायेणास्यां गुडापूपिका पौर्णमासी । 'वटकेभ्य इनिर्वाच्यः' (वा ३१८५) वटकिनी ।
१८८३ कुल्माषादञ् । (५—२—८३) कुल्माषाः प्रायेणान्नमस्यां कौल्माषी ।
१८८४ श्रोत्रियंश्छन्दोऽधीते । (५—२—८४) श्रोत्रियः । 'वा' इत्यनुवृत्तेश्छा-

---

ना: । उद्गतमनस्कवृत्तेरिति । उत्कण्ठितवृत्तेरित्यर्थः । कालप्रयोजनात् । काल, प्रयोजन अनयोः समाहारद्वन्द्वः, तदाह कालवचनात् प्रयोजनवचनाच्चेति । यथोचितविभक्त्यन्तादिति शेषः । कालशब्देनात्र कालवृत्तिः प्रत्ययान्तो द्वितीयादिशब्द एव गृह्यते, न तु मासादिशब्दः, व्याख्यानात् । ह द्वितीयेऽह्नीति । प्रयुज्यतेऽनेनेति करणे ल्युटि प्रयोजनं साधनम् । णि ल्युटि तु फलम् । तदाह प्रयोजनं कारणं रोगस्य फलं वेति । स्मिन्नन्नम् । प्रथमान्तादन्नवाचकाद् अस्मिन्नित्यर्थे कन् स्याद् अन्नस्य बाहुल्ये ते संज्ञायामित्यर्थः । वटकेभ्य इति । संज्ञायामित्येव । वटकिनीति । वटकाः येण अन्नमस्यां पौर्णमास्यामिति विग्रहः । कुल्माषादञ् । कनोऽपवादः । 'स्यावकस्तु कुल्माषः चणको हरिमन्थकः' इत्यमरः । श्रोत्रियंश्छन्दोऽधीते । द्वितीन्ताच्छन्दश्शब्दाद् अधीते इत्यर्थे घन्, प्रकृतेः श्रोत्रादेशश्च निपात्यते । अध्येत्रपवादः । वेत्यनुवृत्तेरिति । 'तावतिथम्' इति सूत्रान्मण्डूकप्लुत्येति शेषः । च घनभावे अध्येत्रणिति भावः । वाग्रहणाननुवृत्तौ तु घना अध्येत्रणो बाधः

---

द्वितीयेऽह्नीति । यद्यपि द्वितीयशब्दः कालवाची न भवति, तथाप्यर्थप्रकरणाना वृत्तिविषये काले वर्तत इति भावः । ननु साक्षात्कालवाचिभ्यो मासादिभ्यो न भवति, द्वितीयादिभ्यस्तु भवतीत्यत्र किं मानमिति चेत् । अत्राहुः—उत्तरसूत्रस्थज्ञापकर्षणाच्छब्दस्वाभाव्याद्वा तद्बोध्यमिति । वटकेभ्य इति । कनि प्राप्ते वचनम् । ननु संज्ञाग्रहणात्कन्न भविष्यतीति चेत् । किं ततः ? इनेरप्राप्तत्वात्तदर्थं वचनमङ्गीकार्यमेव । 'अत इनिठनौ' इत्येव कथंचिदिनिः सिध्यतीत्याशात्र व कार्या । 'सप्तम्यां जनतौ स्मृतौ' इति वचनात् । श्रोत्रियं । यश्छन्दोऽधीते स श्रोत्रियो भवति । अत्र भाष्ये 'छन्दोऽधीते इत्यस्य वाक्यस्यार्थे श्रोत्रियन्नित्येतत्पदं निपात्यते' इति वाक्यार्थे पदवचनपक्षः । छन्दसो वा श्रोत्रभावो निपात्यते 'तदधीत इत्येतस्मिन्नर्थे देव प्रत्ययः' इति पक्षान्तरं च स्थितम् । व्याख्यातं च कैयटेन 'वाक्यार्थस्य संबन्धरूपस्य क्रियारूपस्य वाऽसत्त्वरूपत्वात् । श्रोत्रियशब्दस्य च सत्त्वरूपार्थाभिधायित्वाद्वाक्यार्थग्रहणेन तदाश्रयश्छन्दोऽध्यायी अभिधीयत इति । एकां शाखामधीत्य श्रोत्रियो भवतीति धर्मशास्त्रम् । वेत्यनुवृत्तेरिति । 'तावतिथं ग्रहणमिति लुग्वा'

न्दसः । १८८५ श्राद्धमनेन भुक्तमिनिठनौ । (५—२—८५) श्राद्धी, श्राद्धिकः । १८८६ पूर्वादिनिः । (५—२—८६) पूर्वं कृतमनेन पूर्वी । १८८७ सपूर्वाच्च । (५—२—८७) कृतपूर्वी कटम् । १८८८ इष्टादिभ्यश्च । (५—२—८८) इष्टमनेन इष्टी । अधीती । १८८९ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि । (५—२—८९) लोके तु परिपन्थिशब्दो न न्याय्यः । १८९० अनुपद्यन्वेष्टा । (५—२—९०) अनुपदमन्वेष्टा गवा-

---

स्यादिति बोध्यम् । श्राद्धमनेन । प्रथमान्तात् श्राद्धशब्दाद् भुक्तमनेनेत्यर्थे इनिठनौ एतौ स्त इत्यर्थः । श्राद्धसाधनद्रव्ये श्राद्धशब्दो लाक्षणिकः । इनिप्रत्यये नकारादिकार उच्चारणार्थः । पूर्वादिनिः । अनेनेति कर्तृतृतीयान्तमनुवर्तते । कां क्रियां प्रति कर्तेत्याकाङ्क्षायां भुक्तं पीतमित्यादि यत्किञ्चित्क्रियापदमध्याहार्यम् । उपस्थितत्वात् कृञर्थभूतं क्रियासामान्यमेव प्रतीयते । ततश्च पूर्वं कृतमनेनेति विग्रहे कृतमित्यादिक्रियाविशेषणात्पूर्वशब्दाद् अनेनेत्यर्थे इनिः स्यादित्यर्थः । सपूर्वाच्च । विद्यमानपूर्वादपि पूर्वशब्दादुक्तविषये इनिः स्यादित्यर्थः । पूर्वान्तादिति यावत् । प्रातिपदिकविशेषणत्वेऽपि प्रत्ययविधौ तदन्तविधिप्रतिषेधादप्राप्ते सूत्रमिदम् । कृतपूर्वी कटमिति । अत्र यद्वक्तव्यं तत्कर्तृकर्मणोः कृतीत्यत्रोक्तम् । इष्टादिभ्यश्च । इष्टादिभ्यः तृतीयान्तेभ्यः अनेनेत्यर्थे इनिः स्यादित्यर्थः । छन्दसि परिपन्थि । परिपन्थिन्, परिपरिन् एतौ शब्दौ छन्दसि निपात्येते पर्यवस्थातरि वाच्ये । पर्यवस्थातृशब्दादिनिप्रत्यये अवस्थातृशब्दस्य पन्थादेशे परिपन्थिन्शब्दः । पर्यवस्थातृशब्दादिनिप्रत्यये अवस्थतृशब्दस्य पर इत्यादेशे परिपरिन्शब्दः । 'मा त्वा विदन्परिपन्थिनः, मा वा परिपरिणो विदन्' इति श्रुतौ उदाहरणम् । इदं सूत्रं वैदिक-

---

इत्यतः । श्राद्धमनेन । श्रद्धास्मिन्नस्तीति श्राद्धम् । 'प्रज्ञाश्रद्धार्चाभ्यो णः' । यद्यपि पित्र्यं कर्म श्राद्धशब्देनोच्यते, तथापीह तत्साधनद्रव्यमुच्यते । मुख्यश्राद्धस्य भोक्तुमशक्यत्वात् । श्राद्धी । श्राद्धिक इति । 'अद्यतन एवेष्यते' अद्य भुक्ते श्वः श्राद्धिक इति मा भूत् । पूर्वादिनिः । पूर्वमिति क्रियाविशेषणाद् द्वितीयान्तात् प्रत्ययः । 'अनेन' इति कर्तृवाचकमनुवर्तते । न च क्रियामन्तरेण कर्ता संभवतीति काञ्चित्क्रियामध्याहृत्य प्रत्ययो विधेयस्तदाह पूर्वं कृतमनेनेति । सपूर्वाच्च । 'अनेन' इति पूर्वसूत्रं चानुवर्तते । विद्यत्येमानपूर्वकात्पूर्वशब्दादनेनेत्यस्मिन्नर्थे इनिः स्यात् । 'पूर्वान्ताच्च' इत्येतत्फलितम् । कृतपूर्वीति । कृतपूर्वशब्दयोः 'सुप्सुपा' इति समासः । इह प्रातिपदिकाधिकारात् 'पूर्वादिनिः' इत्यनेनैव पूर्वशब्दान्तप्रातिपदिकात् कृतपूर्वशब्दादिनौ सिद्धे 'सपूर्वाच्च' इत्येतद् 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति परिभाषां ज्ञापयति । कृतपूर्वीत्येतत्सिद्धये 'पूर्वान्ताच्च' इति स्वीकृते तेनैव व्यपदेशिवद्भावेन पूर्वीत्यपि रूपे सिद्धे 'पूर्वादिनिः' इत्येतद् 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति परिभाषां ज्ञापयति । छन्दसि । पर्यवस्थातृशब्दाच्छत्रुपर्यायात्स्वार्थे इनिप्रत्ययः, अवस्थातृशब्दस्य च पन्थ पर एतावादेशौ निपात्येते । 'अपत्यं परिपन्थिनम्', 'मा त्वा परि परिणो विदन्' । उभयत्रापि परिशब्देऽवग्रहः । लोके त्विति । 'अनुपस्थित-

[स]द्धि । १८९१ साक्षाद्द्रष्टरि संज्ञायाम् । (५—२—९१) साक्षाद् द्रष्टा
[स्यात्] । १८९२ क्षेत्रियच् परक्षेत्रे चिकित्स्यः । (५—२—९२) क्षेत्रियो
[व्याधिः] शरीरान्तरे चिकित्स्यः, अप्रतिकार्य इत्यर्थः । १८९३ इन्द्रियमिन्द्र-
[लिङ्ग]मिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा । (५—२—९३)
[इन्द्र आ]त्मा, तस्य लिङ्गम्, करणेन कर्तुरनुमानात् । इतिकरणं प्रकारार्थम् । इन्द्रेण

---

[ग]वामेव व्याख्यातुमुचितम् । अनुपद्यन्वेष्टा । पदस्य पश्चादनुपदम् ।
[पश्चाद]र्थे अव्ययीभावः । सप्तम्या अम्भावः । अनुपदमित्यस्माद् अन्वेष्टरि अर्थे
[प्रत्]ययो निपात्यते । साक्षाद्द्रष्टरि संज्ञायाम् । साक्षादित्यव्ययम्, इह
[सप्तम्य]न्तपरं लुप्तपञ्चमीकम् । साक्षादित्यव्ययाद् द्रष्टर्यर्थे इनिः स्यादित्यर्थः ।
[इ]ति । यः कर्मणि स्वयं न व्याप्रियते, किन्तु कर्म क्रियमाणं पश्यति
[स] साक्षीत्युच्यते । साक्षादित्यव्ययादिनिप्रत्ययः 'अव्ययानां भमात्रे—' इति
[टिलोपः]। क्षेत्रियच् । परम् अन्यत् क्षेत्रं शरीरम् परक्षेत्रम् । चिकित्स्यः प्रतिकार्यः,
['चिक]त्व्याधिप्रतीकारे' इत्युक्तेः । परक्षेत्रशब्दात् सप्तम्यन्तात् चिकित्स्य इत्यर्थे घच्,
[परश]ब्दस्य लोपश्च निपात्यते । शरीरान्तर इति । भाविनि शरीरे चिकित्स्यः,
[न तु] वर्तमाने शरीर इत्यर्थः । फलितमाह अप्रतिकार्य इति । इन्द्रियम् ।
[इन्द्रलि]ङ्गमित्याद्यर्थेषु इन्द्रियमिति भवति । इन्द्रशब्दाद् यथायोगं षष्ठीतृतीयान्ताद्
[इन्द्रलि]ङ्गमित्याद्यर्थेषु घच् निपात्यत इति यावत् । इन्द्र आत्मेति । 'स एतमेव पुरुषं
[ब्रह्म] ततममपश्यदिदमदर्शमिति । तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं
[सन्तम]िन्द्रमित्याचक्षते' इति श्रुतेरिति भावः । तस्य लिङ्गमिति । आत्मनोऽनु-
[मापक]मित्यर्थः । लिङ्गत्वमुपपादयति करणेनेति । चक्षुरादीन्द्रियं किञ्चित्कर्तृ-

---

[...]न्यिभिः पार्थिवैः' इत्यादौ । अनुपद्यन्वेष्टा । अन्वेष्टरि इनिः प्रत्ययो निपात्यते ।
[...]मिति । पदस्य पश्चात्, पश्चादर्थेऽव्ययीभावः । अनुपदी गवामिति ।
[...]क्षया षष्ठी । गोपदात्पश्चादन्वेषणं गवामेव । तेन हिरण्यादावन्वेष्ये न भवतीति
[...]तः । साक्षाद्द्रष्टरि । द्रष्टर्यर्थे इनिः स्यात् । साक्षाच्छब्दोऽव्ययम्, तेन
[...]तिवदनुकरणम्' इत्यतिदेशादिह सूत्रे पञ्चम्या लुक् । 'उदः स्थास्तम्भोः—',
[...]च्चालम्बना—' इत्यादौ तु 'प्रकृतिवत्—' इत्यतिदेशस्य वैकल्पिकत्वेनाव्ययत्वाभावात् ।
[...]म्या लुङ् न भवतीति बोध्यम् । साक्षीति । 'अव्यायानां भमात्रे—' इति टिलोपः ।
[...]पि साक्षाद्द्रष्टारस्त्रयो भवन्ति दाता ग्रहीता उपद्रष्टा च, तथापीह संज्ञाग्रहणात्
[...]शब्देनोपद्रष्टवोच्यत इत्याहुः । क्षेत्रियच् । 'परक्षेत्रशब्दात्सप्तम्यन्तादघच्
[...]शब्दस्य लोपश्च निपात्यते' इति मनोरमा । अन्ये तु 'परक्षेत्रे चिकित्स्यः' इत्यर्थे
[...]त्रियच्' इति निपात्यते । वाक्यार्थे पदवचनं श्रोत्रियवदित्यप्याहुः । एवमन्यत्रा-
[...]तुम् । क्षेत्रियो व्याधिरिति । किंच क्षेत्रियं विषम्, यत्परशरीरे संक्रमय्य
[चि]कित्स्यते । अपि च क्षेत्रियाणि तृणानि, यानि सस्यार्थक्षेत्रे जातानि
[चि]कित्स्यानि विनाशयितव्यानि । किं च क्षेत्रियः पारदारिकः, परदाराः परक्षेत्रम् ।
[...]े चिकित्स्यो निग्रहीतव्यः । सर्वेऽप्येते पक्षा आकरे स्थिताः । इन्द्रियमिन्द्र ।

दुर्जयमिन्द्रियम् । १८९४ तदस्यास्त्यस्मिन्निति मतुप् । (५—२—९४) गावोऽस्यास्मिन्वा सन्ति गोमान् ।

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥' ( वा ३१८३ )

१८९५ रसादिभ्यश्च । (५—२—९५) मतुप् । रसवान् । रूपवान् । अन्यमत्वर्थीयनिवृत्त्यर्थं वचनम् । रस, रूप, वर्ण, गन्ध, स्पर्श, शब्द, स्नेह, भाव । 'गुणात्' (ग. सू. ११२) । 'एकाचः' (ग. सू. ११३) । स्ववान् । गुणग्रहणं

---

धिष्ठितं भवितुमर्हति, करणत्वात्, घटकरणदण्डादिवदित्यनुमानादित्यर्थः । मम चक्षुरित्येवमिन्द्रेण दृष्टं ज्ञातमिन्द्रियम् । इन्द्रेण सृष्टमिन्द्रियम् । इन्द्रेण जुष्टं सेवितं प्रीणितं वा इन्द्रियम् । रूढशब्दोऽयं कथञ्चिद्व्युत्पादितः । इन्द्रेण दुर्जयमिन्द्रियमिति साधयितुमाह इतिकरणमिति । इतिशब्द इत्यर्थः । तदस्यास्त्यस्मिन्निति मतुप् । तदस्यास्तीति तदस्मिन्नस्तीति विग्रहे अस्तिसमानाधिकरणात्प्रथमान्ताद् अस्य अस्मिन्निति चार्थे मतुप् स्यादित्यर्थः । उपाधिती । इतिशब्दो विषयविशेषलाभार्थः । तदाह भूमनिन्देति । श्लोकवार्तिकमिदम् । भूमा बहुत्वम्, यथा गोमान्, यवमान् । निन्दायाम् ककुदावर्तिनी कन्या । प्रशंसायाम्—रूपवान् । नित्ययोगे क्षीरिणो वृक्षाः । अतिशायने—उदरिणी कन्या । संसर्गे—दण्डी छत्री । वृत्तिनियामकः संसर्गविशेषो विवक्षितः तेन पुरुषी दण्ड इति नास्ति । रसादिभ्यश्च । मतुबिति । शेषपूरणमिदम् । उक्तविषय इति शेषः । पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह अन्यमत्वर्थीयेति । 'अत इनिठनौ' इत्यादिनिवृत्त्यर्थमित्यर्थः । रसादीन् पठति रसरूपे-

---

इन्द्रशब्दादघच् । इन्द्रेण दृष्टं ज्ञातं 'मम चक्षुः, मम श्रोत्रम्' इत्यादिक्रमेण सृष्टमदृष्ट-द्वारा, जुष्टं प्रीणितं सेवितं वा । दत्तं यथायथं विषयेभ्यः । रूढिशब्दोऽयं यथाकथंचिद्व्युत्पादितः । तदस्यास्त्यस्मिन्निति मतुप् । तदिति प्रथमासमर्थात्प्रत्ययः । अस्तीति पुरुषवचने अविवक्षिते, कालस्तु विवक्षितः, धने गते भाविनि वा 'धनवानयम्' इति प्रतीत्यभावात् । इतिशब्दो विषयविशेषलाभार्थः । तथाहि—'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवति मतुबादयः ॥' अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्तिकार्थः । भूमा बहुत्वम् । तच्चापेक्षिकम् । यस्य हि यावदुचितं तावदेव बहुत्वबोधकबहुशब्देनापि प्रतीयते । तथा पञ्चषाभिरपि गोभिर्देवदत्तस्य बह्वचो गाव इति व्यवहारः । राज्ञस्तु सहस्रगोरपि गावोऽल्पा इति व्यवहारः । गोमान् । यवमान् । यस्य खार्यादिभिः परिच्छिन्ना यवाः सन्ति स एवमुच्यते, न तु सहस्रेणापि यवैर्यवमानिति । कथं तर्हि 'यवमतीभिरद्भिर्यूपं प्रोक्षति' इति । अत्राहुः—जातिमात्रसम्बन्धस्य विवक्षितत्वाद् भूमाभावेऽप्यत्र मतुप् । भूमादिग्रहणं तु प्रायेण भूमादयः प्रतीयन्त इत्येवंपरमिति । निन्दायां ककुदावर्तिनी कन्या । प्रशंसायां रूपवान् । नित्ययोगे क्षीरिणो वृक्षाः । अतिशायने उदरिणी कन्या । संसर्गे दण्डी । संसर्गः संयोगः, तेन संयुक्तदण्ड एवोच्यते, न तु गृहावस्थितदण्डोऽपि । इह दण्डपुरुषयोः

...नां विशेषणम् । १८९६ तसौ मत्वर्थे । (१-४-१९) तान्तसान्तौ
...ौ स्तो मत्वर्थे प्रत्यये परे । 'वसोः सम्प्रसारणम्' (सू ४३५) । विदुष्मान्
...वनेभ्यो मतुपो लुगिष्टः' (वा ३१८५) शुक्लो गुणोऽस्यास्तीति शुक्लः
...। कृष्णः । १८९७ मादुपधायाश्च मतोर्वोऽयवादिभ्यः । (८-२-९)
...वर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः स्यात् ।
...न् । ज्ञानवान् । विद्यावान् । लक्ष्मीवान् । यशस्वान् । भास्वान् । यवादेस्तु

---

...ि भावेत्यन्तम् । गुणादिति । एकाच इति । गणसूत्रम् । उदाहरति
...ानिति । गुणग्रहणमिति । गुणादित्येतद् रसादीनां षण्णां विशेषण-
...र्थः । तेन गुणवाचकानामेव एषां ग्रहणाद् जलादिवाचकानां रसादिशब्दानां
...वाचिनां च गन्धादिशब्दानाम् इह न ग्रहणमिति भावः । 'रसिको नटः,
...कं वारि' इत्यादिप्रयोगदर्शनाद् इदं सूत्रं भाष्ये प्रत्याख्यातम् । ननु विद्व-
...ान्मतुपि यजादिस्वादिपरकत्वाभावेन भत्वाभावाद् 'वसोः संप्रसारणम्'
...ा कथं संप्रसारणमित्यत आह तसौ मत्वर्थे । मत्वर्थप्रत्ययाक्षिप्तप्रातिपदिक-
...षणत्वात्तदन्तविधिमभिप्रेत्याह तान्तसान्ताविति । तकारसकारान्ता-
...र्थः । गुणवचनेभ्य इति । वार्तिकमिदम् । गुणे गुणवति च ये प्रसिद्धाः
...ादिशब्दाः त एव गृह्यन्ते, न तु रूपादिशब्दा अपि । तेन रूपं वस्त्रमित्यादि
...भवति । अत्र यद्वक्तव्यं तदध्वरमीमांसाकौतूहले अरुणाधिकरणे प्रपञ्चितमस्माभिः ।
...ुपधायाश्च । मात् उपधायाश्चेति च्छेदः । मादित्यावर्तते । म् च
...चेति समाहारद्वन्द्वात्पञ्चम्येकवचनम् । मतुप्प्रत्ययाक्षिप्तप्रातिपदिकविशेषणत्वा-
...दन्तविधिः । मवर्णान्तादवर्णान्तात्प्रातिपदिकात्परस्य मतोः मस्य वः स्यादित्येकोऽर्थः ।
...ादित्युपधाविशेषणम् । मकारात्मिका अकारात्मिका च या उपधा ततः परस्य मतो-
...स्य वः स्यादित्यन्योऽर्थः । फलितमाह मवर्णेत्यादिना । मान्तादुदाहरति—
...ंवानिति । किमस्यास्मिन्वास्तीति विग्रहः । एवमग्रेऽपि । अकारान्तादुदाहरति—
...ानवानिति । अत्र तपरकरणाभावादाकारस्यापि ग्रहणमिति मत्वाह विद्यावा-
...निति । मोपधादुदाहरति—लक्ष्मीवानिति । अदुपधादुदाहरति—यशस्वानिति ।

---

...संयोगे सत्यपि दण्डी पुरुष इत्यादिवत् 'पुरुषी दण्डः' 'पुरुषवान् दण्डः' इति न
...युज्यते । वृत्तिनियामकस्य विलक्षणसम्बन्धस्याभावात् । संयोगे समानेऽपि
...नीतिवलाद्वैलक्षण्यं कल्प्यत इत्याहुः । एवं च यवसंयोगमात्रेण यवमत्य आपो न
...वन्ति, किं तु यवमज्जलवच्च पात्रमेवेत्याशयेन 'कथं यवमतीभिरद्भिः' इत्याक्षेपो
...रूपादिग्रहणं प्रायिकमित्याद्युत्तरं च संगच्छत एव । अन्यमत्वर्थीयेति । कथं तर्हि
...'रूपिणी कन्या' 'रसिको नटः' इति । अत्राहुः—रसादिगणे 'गुणात्' इति पठ्यते ।
...तेन गुणवाचिभ्य एवान्यमत्वर्थीयस्य निषेधः, रूपिणीत्यत्र तु रूपशब्देन सौन्दर्यं
...गृह्यते । तच्च न गुणः । रसिक इत्यत्र तु रसशब्देन भावो गृह्यते न तु रसनाग्राह्यो
...गुण इति । गुणवचनेभ्य इति । गुणे तद्वति च प्रसिद्धा ये शुक्लादयस्त एव
...गृह्यन्ते, न तु रूपादयोऽपि । तेन रूपं वस्त्रमित्यादिप्रयोगो न भवति । मादुपधाया ।

यवमान् । भूमिमान् । १८९८ झयः (८—२—१०) झयन्तान्मतोर्मस्य वः स्यात् । अपदान्तत्वान्न जश्त्वम् । विद्युत्वान् । १८९९ संज्ञायाम् । (८—२—११) मतोर्मस्य वः स्यात् । अहीवती । मुनीवती । शरादित्वाद् दीर्घः । १९०० आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती । (८—२—१२) एते षट् संज्ञायां निपात्यन्ते । आसनशब्दस्यासन्दीभावः । आसन्दीवान्ग्रामः । अन्यत्रासनवान् । अस्थिशब्दस्याष्ठीभावः । अष्ठीवान् । अस्थिमानन्यत्र । चक्रशब्दस्य चक्रीभावः । चक्रीवान्नाम राजा । चक्रवानन्यत्र । कक्ष्यायाः सम्प्रसारणम् । कक्षीवान्नामर्षिः । कक्ष्यावानन्यत्र । लवणशब्दस्य रुमणभावः । रुमण्वान्नाम पर्वतः । लवणवानन्यत्र । चर्मणो नलोपाभावो णत्वं च । चर्मण्वती नाम नदी । चर्मवत्यन्यत्र । १९०१ उदन्वानुदधौ च । (८—२—१३) उदकस्योदन्भावो मतावुदधौ संज्ञायां च । उदन्वान्समुद्र ऋषिश्च । १९०२ राजन्वान्सौराज्ये (८—२—१४) राजन्वती[1] भूः । राजवानन्यत्र । १९०३ प्राणिस्था-

'तसौ मत्वर्थे' इति भत्वान्न रुत्वम् । आकारोपधादुदाहरति— भास्वानिति । अथ विद्युत्वानित्यत्र मकाराकारान्तत्वाभावान्मकाराकारोपधत्वाभावाच्च मादुपधायाः इति वत्वाप्राप्तावाह झयः । अपदान्तत्वादिति । 'तसौ मत्वर्थे' इति भत्वेन पदत्वबाधादिति भावः । संज्ञायाम् । अहीवतीत्यादि नदीविशेषस्य नगरीविशेषस्य वा संज्ञा । शरादित्वादिति । 'शरादीनां च' इति दीर्घ इत्यर्थः । आसन्दीवत् । समाहारद्वन्द्वे ह्रस्वत्वम् । निपात्यन्त इति । आसन्दीभावादिकमेवात्र निपात्यते, वत्वं तु संज्ञायामिति सिद्धम् । कक्ष्यायाः सम्प्रसारणमिति । निपात्यत इति शेषः । 'न सम्प्रसारणे–' इति सूत्रभाष्ये तु 'कक्ष्यायाः संज्ञायां मतौ सम्प्रसारणं वक्तव्यम्' इत्यारब्धम् । अतोऽत्र सूत्रे कक्षीवच्छब्दपाठः अनार्ष इत्याहुः । उदन्वानुदधौ च । उदधौ संज्ञायां चेति । वस्तुतस्तु 'उदन्वांश्च' इत्येव सूत्रयितुमुचितम्, 'संज्ञायाम्' इत्यनुवृत्त्यैव समुद्रेऽपि उदन्वच्छब्दस्य सिद्धत्वात् । राजन्वान् सौराज्ये । सु शोभनो राजा यस्य देशस्य सः सुराजा, तस्य भावः सौराज्यम् । तस्मिन्नर्थे राजन्शब्दाद् मतुपि मादुपधायाः–' इति

म् च अश्च मं समाहारे द्वन्द्वः । तेन मतुप्प्रत्ययाक्षिप्त प्रातिपदिक विशेष्यते, तदाह मवर्णावर्णान्तादिति । 'उपधायाश्च' इति वाक्यान्तरम् । उपधाभूतन्मात्परस्य मतोरित्यर्थः । 'येन नाव्यवधान–' न्यायेनान्त्यालव्यवहितेऽपि भवतीति । एवमक्षरार्थे स्थिते फलितमाह मवर्णावर्णोपधादिति । झयः । इदमपि मतुवाक्षिप्तस्य प्रातिपदिकस्य विशेषणम्, तदाह झयन्तादिति । विद्युत्वानिति । एतेन 'वह्निमद्वान् इति नैयायिकप्रयोगो निरस्तः । उक्तरीत्या जश्त्वस्याप्रवृत्तेः । मत्वन्तान्मतुपो निषेधाच्च । ननु गोधुङ्मान् मधुलिण्मानित्यत्र हस्य घत्वे ढत्वे च कृते 'झयः' इति वत्वप्रवृत्त्याऽनुनासिकपरत्वाभावात् 'प्रत्यये भाषायां नित्यम्' इत्यनेन घकार-

[1] कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ रघु. ६–२२ ।

लजन्यतरस्याम् । (५—२—९६) चूडालः, चूडावान् । 'प्राणिस्थात्, शिखावान्दीपः । 'आतः' किम्—हस्तवान् । 'प्राण्यङ्गादेव' (वा ३१८९) मेधावान् । प्रत्ययस्वरेणैव सिद्धे अन्तोदात्तत्वे चूडालोऽसीत्यादौ 'स्वरितो वानुदात्ते पदादौ' (सू ३६५९) इति स्वरितबाधनार्थश्चकारः । १९०४ सिध्मादिभ्यश्च । (५—२—९७) लज्वा स्यात् । सिध्मलः, सिध्मवान् । अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थम्, न तु प्रत्ययविकल्पार्थम् । तेन अकारान्तेभ्य इनि-

सिद्धम् । नलोपाभावो निपात्यते । प्राणिस्थात् । आदन्तात्प्राणिस्थवाचिनः मत्वर्थे लज् वा स्यादित्यर्थः । शिखावान् दीप इति । अत्र शिखाशब्दस्य प्राण्यङ्गवाचिनः प्राणिस्थवाचित्वाभावाद् न लजिति भावः । प्राण्यङ्गादेवेति । तथा वचनादिति भावः । ननु लचश्चित्करणं व्यर्थम्, चितः' इत्यन्तोदात्त- प्रत्ययस्वरेणैव सिद्धेरित्यत आह प्रत्ययस्वरेणेति । चूडालोऽसीति । असीत्येतत् 'तिङ्ङतिङः' इति निहतम् । चूडालात्सो रुत्वे उत्वे तस्य अनुदात्तस्याद्गुणस्य 'एकादेश उदात्तेन—' इत्युदात्तत्वे तस्य परेण पूर्वरूपैका- तस्य पदाद्यनुदात्तेन सहैकादेशत्वात् 'स्वरितो वाऽनुदात्ते' इत्यस्य प्राप्तौ तन्नि- र्थं चित्करणमित्यर्थः । सिध्मादिभ्यश्च । लज्वा स्यादिति । मत्वर्थे शेषः । अन्यतरस्यामिति । पूर्वसूत्रादन्यतरस्यामित्यनुवृत्तं न लच्प्रत्यय- विकल्पार्थकम्, किन्तु मतुप्प्रत्ययसमुच्चयार्थकमेव अन्यतरस्यामित्यस्याव्ययत्वेना- र्थकत्वात् । ततश्च सिध्मादिभ्यो लज् मतुप् च स्यादिति लभ्यते । नचान्य- तरस्यामित्यस्यात्र लच्प्रत्ययविकल्पार्थकत्वेऽपि तदभावे मतुप् सिद्ध इति वाच्यम्, तदभावे मतुबेव भवति, न तु 'अत इनिठनौ' इत्येतदर्थं समुच्चयविधानात् । तदाह नेति । सिध्मादिषु ये अकारान्ताः । तेभ्य इनिठनौ नेत्यर्थः । एतत्सर्वं भाष्ये स्पष्टम् । सिध्म, गडु, मणि, विजय, पांसु, हनु, पार्ष्णि इत्यादयः सिध्मादिषु

कारयोरनुनासिकाप्रवृत्तेर्गोधुवान् मधुलिड्वानित्यनिष्टं प्रसज्येत । मैवम्, घत्वढत्व- योरसिद्धत्वेन 'झयः' इति वत्वाप्रवृत्तेः । प्राणिस्थात् । शिखावान्दीप इति । प्रत्युदाहरणदिगियं दर्शिता । शिखाशब्दस्य व्रीह्यादिपाठेन 'लचोऽप्रसङ्गात् 'चूडावान् वृक्षः' इति प्रत्युदाहार्यमिति हरदत्तः । न च वृक्षस्य प्राणित्वमस्तीति शङ्क्यम्, मुखनासासंचारी वायुः प्राणः, तद्वावेन प्राणीति तदाशयात् । प्राण्यङ्गादेवेति । अन्यत्रचेति करणानुवृत्त्या लभ्यते । चूडालोऽसीति । असीत्यस्य तिङ्ङतिङः' इति निघातः । चूडालशब्दात्सोरुत्वे तस्य 'अतो रोरप्लुतात्—' इत्युकारे कृते हलां स्वधर्मत्वात्तस्थानिकोऽकारोऽनुदात्तः । सुप्स्थानिकस्यापि सुप्त्वात् 'अनुदात्तौ सुप्पितौ' इत्युदात्त इत्यन्ये । पूर्वेण सह आद् गुणे सति 'एकादेश उदात्तेन—' इत्योकार उदात्तः । ततः 'एङः पदान्तादति' इति पूर्वरूपमेकादेशस्तस्य 'स्वरितो वानुदात्ते—' इत्यादिना स्वरिते प्राप्ते तद्बाधनाय चकार इत्यर्थः । सिध्मादिभ्यश्च । सिध्म, गडु, मणि, विजय, निष्पाव, पांसु हनु, पार्ष्ण्यादयः सिध्मादयः । समुच्चयार्थ- मिति । निपातानामनेकार्थत्वादिति भावः । न च इनिठनावप्यन्यतरस्यांग्रहणेन

ठनौ न। 'वातदन्तबलललाटानामूङ् च' (ग सू ११५)। वातूलः। १९०५ वत्सांसाभ्यां कामबले। (५—२—९८) आभ्यां लच् स्याद्यथासङ्ख्यं कामवति बलवति चार्थे। वत्सलः। अंसलः। १९०६ फेनादिलच्च। (५—२—९९) चाल्लच्। अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमनुवर्तते। फेनिलः, फेनलः, फेनवान्। १९०७ लोमादिपामादिपिच्छादिभ्यः शनेलचः। (५—२—१००)

---

पठिताः। एवं च लज्वा स्यादिति विवरणवाक्ये वाशब्दश्चार्थे। इदमन्यतरस्यां-ग्रहणमुत्तरसूत्रेषु सर्वत्र मत्वर्थीयविधिष्वनुवर्तते, न तु रूढशब्देषु। अतो न ... मतुप्समुच्चय इत्यास्तां तावत्। वातदन्तबलललाटानामूङ् चेति सिध्मादि-गणसूत्रमिदम्। एभ्यो लच् प्रकृतेरूङ् नादेशः। ङकारस्तु आदेशत्वसूचनार्थः, अन्यथा प्रत्ययत्वशङ्का स्यात्। वातूलः, एवं दन्तुलः बलूलः, ललाटूलः। वत्सांसाभ्यां कामबले। लच् स्यादिति। मत्वर्थे इति शेषः। कामबल-शब्दौ तद्वति लाक्षणिकावित्यभिप्रेत्याह कामवति बलवति चेति। फेनादि-ल्लच। मत्वर्थे इति शेषः। चाल्लजिति। संनिहितत्वादिति भावः। ... सति मतुब् नैव स्यादित्यत आह अन्यतरस्यांग्रहणमिति। सिध्मादि... व्याख्यातमिदम्। लोमादि। श, न, इलच् एते त्रिभ्यो गणेभ्यो यथासंख्यं स्युः...

---

समुच्चीयेतामिति शङ्क्यम्, तयोरप्रकृतत्वात्। मतुप्प्रत्ययस्तु समुच्चीयते। ... प्रकृतत्वात्। अस्ति चेह लिङ्गं 'केशाद्वः' इत्यत्रान्यतरस्यांग्रहणम्। तद्धि इनिठनोः प्राप्त्यर्थं क्रियते। प्रकृतस्यान्यतरस्यांग्रहणस्य विकल्पार्थत्वे तदनुवृत्त्यैव सिद्धौ ... तेन। क्रियमाणं तु पूर्वस्यान्यतरस्यांग्रहणस्य समुच्चयार्थतां ज्ञापयत्येव। तथा च वार्तिकम्—'लजन्यतरस्यामिति समुच्चयः' इति। अयं भावः—'प्राणिस्थात्-' इति सूत्रेण लचि विकल्पिते पक्षे मतुबिति चूडालश्चूडावानिति रूपद्वयं यद्यपि सिध्यति तथापि सिध्मादिषु येऽदन्तास्तेषु इनिठनोः प्रवृत्त्या दोषः। समुच्चयार्थत्वे तु न दोष इति। एवं च 'लज्वा स्यात्' इति वृत्तौ वाशब्दः समुच्चये बोध्यः। 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इत्यमरः। वातदन्तेत्यादि। सिध्माद्यन्तर्गणसूत्रम्। ऊङ् चेति। ङित्त्वादन्तादेश। ऊकारमात्रोक्तावन्तादेशत्वसिद्धावपि प्रत्ययत्वशङ्का-निवारणाय ङानुबन्धः कृतः। न च षष्ठ्यन्ताद्विहितस्य प्रत्ययत्वं नेति शङ्क्यम्, 'अहंशुभमोर्युस्' 'गोपयसोर्यत्' इत्यादौ प्रत्ययत्वाभ्युपगमात्। वातूल इति। अन्तोदात्तमिदम्। प्राचा तु 'बलादूलः' 'वाताच्च' इति पठित्वा वातुल इत्युक्तम्, तदुपेक्ष्यम्, अन्त्यस्वरेण मध्योदात्तत्वप्रसङ्गात्। गणसूत्रबलेनान्तोदात्तमेवेष्यत इत्याहुः। 'पार्ष्णिधमन्योर्दीर्घश्च' 'क्षुद्रजन्तूपतापाच्च' इत्यपि गणे पठ्यते। पार्ष्णीलः। धमनीलः। क्षुद्रजन्तुः—यूकालः। मक्षिकालः। उपतापो रोगः। विपादिकालः। वत्सांसाभ्याम्। कामवतीति। कामबलशब्दौ सूत्रे अर्शआद्यजन्ताविति भावः। वत्सल इति। स्नेहवानित्यर्थः। ननु वत्सांसशब्दौ वयोविशेषे प्राण्यङ्गविशेषे च रूढौ, न कामबलयोः। तत्कथं ताभ्यां लजन्ताभ्यां कामवान् बलांश्चोच्यत इति चेत्। अत्राहुः—वृत्तिविषये वत्सांसशब्दौ स्नेहबलयोर्वर्तेते इति। अस्मिंस्तु प्रकरणे

दिभ्यः शः—लोमशः, लोमवान् । रोमशः, रोमवान् । पामादिभ्यो नः— 'अङ्गात्कल्याणे' (ग सू ११८) । अङ्गना । 'लक्ष्म्या अच्च' १२१) लक्ष्मणः । 'विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः' (वा ३१९४) । पिच्छादिभ्य इलच्—पिच्छिलः' पिच्छिवान् । उरसिलः उरस्वान् । प्रज्ञाश्रद्धार्चाभ्यो णः । (५—२—१०१) प्राज्ञो व्याकरणम् ।

---

अङ्गात्कल्याण इति । पामादिगणसूत्रम् । कल्याण सुन्दरम्, तद्विशेषण-वाचिनोऽङ्गशब्दाद् मत्वर्थे नप्रत्यय इत्यर्थः । अङ्गनेति । कल्याणानि अङ्गानि अस्या इति विग्रहः । 'लक्ष्म्या अच्च' इत्यपि पामादिगणसूत्रम् । लक्ष्मीशब्दाद् मत्वर्थे नप्रत्ययः स्यात् प्रकृतेरकारोऽन्तादेशश्च । लक्ष्मण इति । लक्ष्मीरस्यास्तीति विग्रहः । नप्रत्यये प्रकृतेरकारे अन्तादेशे णत्वम् । विष्वगिति । इदमपि पामादि-गणसूत्रमिति केचित् । भाष्ये तु नप्रकरणे इदं वार्तिकं पठितम् । विषु इत्यव्ययं नानार्थे इत्यर्थे । विषु अञ्चतीति विष्वङ् । सर्वतो गामीत्यर्थं इति धूर्तस्वामी । विषु तिर्यगर्थे इति भवस्वामी । पराङ्मुख इति भट्टभास्करः । विषु अञ्च् इत्यस्माद् अकृतसन्धेर्मत्वर्थे नप्रत्ययः स्यात्, उत्तरपदलोपश्चेत्यर्थः । विषुण । विष्वङ् अस्यास्तीति लौकिकविग्रहः । विषु अञ्च् इत्यलौकिकविग्रहवाक्यम् । कृतसन्धेर्न तु विष्वक्शब्दस्य उत्तरपदस्य लोपे 'लोपो व्योः—' इति वलोपे 'विष्ण' स्यादिति भावः । समर्थानामित्यस्यापवादोऽयम् । प्रज्ञाश्रद्धार्चाभ्यो णः । प्रज्ञा, श्रद्धा, अर्चा एभ्यो मत्वर्थे णप्रत्ययः स्यादित्यर्थः । प्राज्ञो व्याकरणमिति । ज्ञानं प्रज्ञा । स्त्रियामित्यधिकारे प्रपूर्वकाद् ज्ञाधातोः 'आतश्चोपसर्गे' इति भावे अङ् । प्रज्ञा अस्यास्तीति विग्रहः । उपसर्जनभूतामपि प्रज्ञानक्रियां प्रति व्याकरणस्य

---

कर्तृत्वेन समुच्चीयमानोऽपि मतुबिह नेष्यते । मतुबन्तेनोक्तार्थस्याप्रतीतेः । किं त्वर्थान्तर-मेव तेन प्रतीयते वत्सवती गौः । अंसवान् दुर्बल इति । लोमादि । इह 'लोमादिपामादिपिच्छादिभ्यः—' इति वत् 'लोमपामपिच्छादिभ्यः' इति सुपठम् । 'अङ्गात्कल्याणे' इति गणसूत्रमर्थतः पठति अङ्गादिति । शाकीपलालीदद्रूवा ह्रस्वत्वं चात्र नप्रत्ययः । महच्छाकं शाकी, तद्वत् शाकिनम् । महत्पलालं पलाली, तद्वत् पलालिनम् । 'दरिद्रातेरालोपश्च, इत्युणादिसूत्रेण इकाराकारयोर्लोपश्चादूप्रत्ययः । ह्रस्वत्वप्रयोगविशेषः । तद्वान् दद्रुणः । विष्वगिति । 'समर्थानाम्—' इत्यस्यापवादोऽयम् । अकृतसन्धेरकृतयणादेशस्याञ्चतेर्लोपः । चकारान्नप्रत्यय इत्यर्थः । यदि तु कृते यणादेशे उत्तरपदलोपः स्यात्, तदा वलिलोपे सति विष्ण इति स्यात् । विषुण इति । विषु नाना अञ्चन्तीति विष्वञ्चि, तान्यस्य सन्ति विषुणः, विषुवदाख्यः कालः । तत्र हि नानागतानि दिनानि सन्ति । दिनान्तराणां न्यूनाधिकभावस्य तन्मूलत्वात् । अयं भावः—विषुवति दिनानां समतायां जातायामग्रे न्यूनान्यधिकानि च दिनानि भविष्यन्तीति नानागतदिनवत्त्वं यद्यपि विषुवति नास्ति तथापि नानागतदिनमूलभूत-त्वाद् दिनानां सत्त्वात्तथोच्यत इति । तथा नानागमनत्वान्मृत्युर्वायुरव्यवस्थितचित्तश्च विषुणशब्देनोच्यते । प्रज्ञाश्रद्धा । प्राज्ञो व्याकरणमिति । गुणभूतया क्रियया

प्राज्ञा । श्राद्धः । आर्चः । 'वृत्तेश्च' (वा ३१९५) वार्त्तः । १९०९ तपःसहस्राभ्यां विनीनी । (५—२—१०२) विनीन्योरिकारो नकारपरित्राणार्थः । तपस्वी । सहस्री । असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधो मा भूदिति । सहस्रात् ठनोऽपि बाधनार्थम् । १९१० अण् च । (५—२—१०३) योगविभाग उत्तरार्थः । तापसः । साहस्रः । 'ज्योत्स्नादिभ्य उपसंख्यानम्' (वा ३१९७) । ज्यौत्स्नः । तामिस्रः १९११ सिकताशर्कराभ्यां च । (५—२—१०४)

---

कर्मत्वाद् द्वितीया । कृद्योगषष्ठी नात्र प्रवर्तते, 'कर्तृकर्मणोः कृति' इत्यत्र कृद्ग्रहणात् तद्धितयोगे तन्निषेधात् । अत्र यद्वक्तव्यं तत्कर्तृकर्मणोः कृतीत्यत्र प्रपञ्चितम् । नन्वत्र प्रजानातीति प्रज्ञः । 'इगुपध—' इति कः । प्रज्ञ शब्दात् स्वार्थे अणि प्राज्ञ इति सिध्यतीति शङ्क्यम्, तथा सति स्त्रियां ङीप्प्रसङ्गात्, तदाह प्राज्ञेति । श्राद्ध इति । श्रद्धा अस्यास्तीति विग्रहः । आर्च इति । अर्चा अस्यास्तीति विग्रहः । वृत्तेश्चेति । वार्तिकमिदम् । मत्वर्थे णप्रत्यय इति शेषः वार्त्त इति । वृत्तिरस्यास्तीति विग्रहः । तपःसहस्राभ्याम् । विनिश्च इनिश्चेति द्वन्द्वः । मत्वर्थ इति शेषः । यथासंख्यमन्वयः । विनिप्रत्यये इनिप्रत्यये च नकारादिकारौ उच्चारणार्थौ । ननु नकारयोः इत्संज्ञा कुतो न स्यात् । न च प्रयोजनाभावः, नित्स्वरस्यैव फलत्वादित्यत आह विनीन्योरिकारो नकारपरित्राणार्थ इति । तथा च उपदेशेऽन्त्यत्वाभावान्नेत्संज्ञेति भावः । यद्यपि 'अस्मायामेधा—' इत्यसन्तत्वादेव तपःशब्दाद्विन्सिद्धः । सहस्रशब्दात्तु 'अत इनिठनौ' इत्येवेन्सिद्धः । तथापि विनिप्र उत्तरसूत्रविहितेन अणा असन्तादन्तलक्षणयोः विनीन्योः सामान्यविहितयोः बाधो मा भूदिति विशिष्येह तपस्सहस्रशब्दाभ्यां तयोः विधानम् । सहस्रशब्दात् अदन्तलक्षणठनोऽपि बाधनार्थमिह इन्विधानम । एतत्समाधानं क्वचिन्मूलपुस्तकेषु दृश्यते । अण् च । तपस्सहस्राभ्यां मत्वर्थ इति शेषः । ननु 'तपःसहस्राभ्यां विनीन्यणः' इत्येकमेव सूत्रमस्तु । नच तपःसहस्राभ्यां विनीन्योर्यथासंख्यार्थं पृथक्सूत्रकरणम्, अन्यथा त्रयोऽपि प्रत्यया द्वाभ्यां स्युरिति वाच्यम्, 'तपःसहस्राभ्यामणविनीनी' इति सूत्रकरणे भिन्नविभक्त्युच्चारणादेव अण उभयसम्बन्धस्य विनीन्योर्यथासंख्यत्वस्य च सिद्धेरित्यत आह योगविभाग उत्तरार्थ इति । उत्तरसूत्रे अण एवानुवृत्त्यर्थं इत्यर्थः । ज्यौत्स्न इति । शुक्लपक्ष इति शेषः ।

---

ज्योत्स्ना चन्द्रिका, सा अस्यास्तीति विग्रहः । तामिस्र इति । कृष्णपक्ष इति । कर्मत्वेन सम्बन्धः । कृद्ग्रहणात्तद्धितप्रयोगे षष्ठी न कृतपूर्वीकटमितिवत् । ननु प्रकर्षेण जानातीति प्रज्ञः । स एव प्रज्ञावान् । तथा च प्रज्ञ एव प्राज्ञ इत्यणि इष्टं सिद्धमिष्टं किमत्र प्रज्ञाग्रहणेनेत्याशङ्कां निराकुर्वन्नाह प्राज्ञेति । स्त्रियां टाप् । 'प्रज्ञादिभ्यश्च' इत्यणि तु ङीप् स्यादिति भावः । वृत्तेश्चेति । वार्तिकमिदम् । काशिकाकृता तु वृत्तिशब्दः सूत्रे प्रक्षिप्तः । विच्छिन्नस्य प्रतिविधानं वृत्तिः । तपस्वी । सहस्रीति । असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधा माभूदिति । सहस्रात् ठनोऽपि बाधनार्थम् । एतच्च समाधानं मूलपुस्तकेष्वपि क्वचिद् दृश्यते । उत्तरार्थं इति ।

...घटः । शार्करः । १९१२ देशे लुबिलचौ च । (५—२—१०५)
...मतुप् च । सिकताः सन्त्यस्मिन्देशे सिकतः, सिकतिलः, सैकतः, सिकता-
...। एवं शर्करेत्यादि । १९१३ दन्त उन्नत उरच् । (५—२—१०६)
...दन्ताः सन्त्यस्य दन्तुरः । १९१४ ऊषसुषिमुष्कमधो रः । (५—२—१०७)
...। सुषिरः । मुष्कोऽण्डः, मुष्करः । मधु माधुर्यम्, मधुरः । 'रप्रकरण

---

...। तमिस्राः तमोयुक्ता रात्रयः, ता अस्य सन्तीति विग्रहः । ज्योत्स्नादित्वा-
...। सिकताशर्कराभ्यां च । मत्वर्थे अणिति शेषः । सैकतो घट इति ।
...अस्य सन्तीति विग्रहः । देशे लुपो वक्ष्यमाणत्वाद् घट इति विशेष्यम् ।
...सुमनःसमासिकतावर्षाणां बहुत्वं च' इति लिङ्गानुशासनसूत्रात् सिकताशब्दो
...बहुवचनान्तः । देशे लुबिलचौ च । पूर्वसूत्रविहितस्याणो लुप् इलच्च
...इत्यर्थः । चादणिति । संनिहितत्वादिति भावः । तर्हि अपवादेन मुक्ते उत्स-
...प्रवृत्तेर्मतुब् नैव स्यादित्यत आह मतुप् चेति । समुच्चयार्थकान्यतरस्यांग्रहणा-
...रिति भावः । सिकता इति । सिकताशब्दात् नित्यं बहुवचनान्तादणो लुपि
...दिकावयवत्वात् सुपो लुकि युक्तवद्भावाद्विशेष्यस्य देशस्य एकत्वेऽपि बहुवचन-
...भावः । 'हयवरट्' इति सूत्रे 'एका च सिकता तैलदाने असमर्था' इति भाष्ये
...नात् सिकताशब्द एकवचनान्तोऽप्यस्तीति लिङ्गानुशासने मूलकारो वक्ष्यति ।
...उन्नत उरच् । उन्नतविशेषणकाद्दन्तशब्दाद् मत्वर्थे उरच् स्यादित्यर्थः । उन्नत
...प्रकृतिविशेषणम् । दन्त इति सप्तमी पञ्चम्यर्थे । ऊषसुषि । ऊष, सुषि, मुष्क,
...एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । सौत्रं पुंस्त्वम् । एभ्यो मत्वर्थे रप्रत्ययः
...दित्यर्थः । ऊषर इति । ऊषः क्षारमृत्तिकाविशेषोऽस्यास्तीति विग्रहः । सुषिर
...। सुषिः बिलम्, अस्यास्तीति विग्रहः । मधुशब्दः क्षौद्रे द्रव्ये माधुर्यात्मकरसवि-
...च गुणे वर्तते । तत्र रसविशेषवाचिन एवात्र ग्रहणमित्याह मधु माधुर्यमिति ।
...भाष्यादिति भावः । अन्यथा मधुद्रव्यवति घटेऽपि मधुरपदप्रयोगः स्यात् ।

---

...योर्यथासंख्यप्रवृत्त्यर्थश्चेत्यपि बोध्यम् । ज्यौत्स्न इति । शुक्लपक्षः । तामिस्र
...। कृष्णपक्षः नरकविशेषश्च । तमःसमूहस्तमिस्रम् । 'ज्योत्स्नातमिस्रा—' इति
...मत्वर्थीयो रः । तत्र ह्यवयवभूतानि तमांसि विद्यन्ते । तदस्मिन्नस्तीति
...रान्तादण् । स्त्रियां तामिस्री । 'तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता'
...अमरोक्तौ तु तमिस्रेत्येतद्भ्रान्तं न त्वणन्तमिति न विरोधः । एवं च तमिस्रा रात्रयः
...स्मिन् सन्ति तामिस्रः पक्ष इत्यपि व्याख्यातुं शक्यम् । सिकताशर्करा ।
...विशेषस्य वक्ष्यमाणत्वादाह घट इति । मतुप् चेति । अन्यतरस्यांग्रहणेन
...त्र मतुपः समुच्चयादिति भावः । सिकता इति । लुपि युक्तवद्भावः । अत्र
...स्यादाहरणान्यमरः संजग्राह—'स्त्री शर्करा शर्करिलः शार्करः शर्करावति ।
...एवादिमावेवमुन्नेयाः सिकतावति' इति । दन्त उन्नत । उन्नत इति किम्,
...वान् । ऊषसुषि । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । 'स्यादूषः क्षारमृत्तिका ।
...वापूषरः' इत्यमरः । सुषिश्छिद्रम् । खर इति । महत्कण्ठविवरं खं तद्वानित्यर्थः ।

खमुखकुञ्जेभ्य उपसंख्यानम्' (वा ३१९८)। खरः। मुखरः। कुञ्जो हस्तिहनुः, कुञ्जरः। 'नगपांसुपाण्डुभ्यश्च' (वा ३१९९)। नगरम्। पांसुरः। पाण्डुरः। पाण्डरशब्दस्त्वव्युत्पन्न एव। 'कच्छ्वा ह्रस्वत्वं च' (वा ३२००)। कच्छुरः। १९१५ द्युद्रुभ्यां मः। (५—२—१०८) द्युमः। द्रुमः। १९१६ केशाद्वोऽन्यतरस्याम्। (५—२—१०९) प्रकृतेनान्यतरस्यांग्रहणेन मतुपि सिद्धे पुनर्ग्रहणमिनिठनोः समावेशार्थम्। केशवः, केशी, केशिकः, केशवान्। 'अन्येभ्योऽपि दृश्यते' (वा ३२१०)। मणिवो नागविशेषः। हिरण्यवो निधिविशेषः। 'अर्णसो लोपश्च' (वा ५०५३)। अर्णवः। १९१७ गाण्डच...

---

खरो गर्दभः, धिष्ण्यो वा। मुखरः शब्दं कुर्वन्। कुञ्जरो हस्ती। रूढशब्दा एते। नगपांस्विति। वार्तिकमिदम्। नगरमिति जातिविशेषवाची। अत एव नगरीति ङीष्। पांसुर इति। पांसुः अस्यास्तीति विग्रहः। पाण्डुर इति। पाण्डुः शुक्लवर्णः, सः अस्यास्तीति विग्रहः। कथं पाण्डरशब्द इत्यत आह पाण्डरशब्दस्त्विति। 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः। कच्छ्वा इति। वार्तिकमिदम्। कच्छूशब्दाद्रप्रत्ययः, प्रकृतेर्ह्रस्वश्च अन्तादेश इत्यर्थः। कच्छुरः शुनां रोगविशेषः। द्युद्रुभ्यां मः। 'दिव, उत्' इति कृतोत्वस्य दिव्शब्दस्य द्यु इति निर्देशः। दिव्शब्दाद् द्रुशब्दाच्च मप्रत्ययः स्यादित्यर्थः। द्युमः। द्रुम इति। रूढशब्दावेतौ। केशाद्वोऽन्यतरस्याम्। मत्वर्थे इति शेषः। नन्विहान्यतरस्यांग्रहणं व्यर्थं समर्थानामिति वाग्रहणेनैव वाक्यस्य सिद्धत्वात्। न च महाविभाषया अपवादेन मुक्ते औत्सर्गिकस्याप्रवृत्तेः 'पारेमध्ये षष्ठ्या वा' इत्यत्रोक्तत्वादिह मतुपोऽप्रवृत्त्यापत्तेः तत्प्रवृत्त्यर्थमन्यतरस्यांग्रहणमिति वाच्यम्, प्राणिस्थादिति सूत्रादन्यतरस्यांग्रहणस्य समुच्चयार्थकस्यानुवृत्त्यैव तत्सिद्धेरित्यत आह प्रकृतेनेति। इनिठनोरिति। इनिठनोरपीत्यर्थः। अन्यथा। 'सिध्मादिभ्यश्च' इत्यत्रेव मतुबेव समुच्चीयेत नत्विनिठनाविति भावः। तथा च वप्रत्यये इनिठनोर्मतुपि च चत्वारि रूपाणीत्याह केशव इत्यादि। अन्येभ्योऽपीति। वार्तिकमिदम्। केशादन्येभ्योऽपि मत्वर्थे वो दृश्यत इत्यर्थः। अर्णस इति। वार्तिकमिदम्। अर्णसो वप्रत्ययः प्रकृतेः सकारस्य लोपश्चेत्यर्थः। अर्णव इति। अर्णः जलम्।

---

गर्दभे रूढोऽयम्। मुखरो वाचाल इति हरदत्तः। नगरमिति। नगा वृक्षाः पर्वताश्च। जातिशब्दोऽयम्। तथा च नगरीत्यत्र ङीष् भवति। नगशब्दोऽयमश्मादिषु पठ्यते इति 'वुञ्छण्—' आदिसूत्रेणास्य सिद्धत्वादस्माद्रोऽयं न वक्तव्य इति हरदत्तः। पाण्डुर इति। पाण्डुः शुक्लो वर्णस्तद्वान्। अव्युत्पन्न एवेति। गुणमात्रे गुणिनि च वर्तते। 'हरिणः पाण्डुरः पाण्डु' इत्यमरः। 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति च। कच्छ्वा इति। कच्छूस्त्वग्रोगविशेषः। द्युद्रुभ्यां मः। द्युम इति। द्यौरस्यास्ति 'दिव' उत्' इत्युत्वम्। द्रुर्वृक्षः। सोऽस्यास्ति जनकतयेति द्रुमोऽपि वृक्ष एव। 'पलाशी द्रुद्रुमागमाः' इत्यमरः। इह सर्वत्र समुच्चीयमानोऽपि मतुप् रूढशब्देषु नेष्यते। तदर्थस्य मतुपा अभिधातुमशक्यत्वात्

गाण्डिवाम् । (५—२—११०) ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः । गाण्डि-गाण्डीवमर्जुनस्य धनुः । अजगवं पिनाकः । १९१८ काण्डाण्डादीर-ईरचौ । (५–२–१११) काण्डीरः । आण्डीरः । १९१९ रजःकृष्यासुतिपरिषदो वलच् । (५–२–११२) रजस्वला स्त्री । कृषीवलः । (सू १०४०) इति दीर्घः । आसुतीवलः शौण्डिकः । परिषद्वलः । 'पर्षत्' पाठान्तरम् । पर्षद्वलम् । 'अन्येभ्योऽपि दृश्यते' (वा ३२१०) भ्रातृवलः । शत्रुवलः । 'वले' (सू १०४०) इत्यत्र 'संज्ञायाम्' इत्यनुवृत्तेर्नेह । १९२० दन्तशिखात्संज्ञायाम् । (५–२–११३) दन्तावलो हस्ती । शिखावलः केकी । १९२१ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वल-

---

तमस्मिन्नस्तीति विग्रहः । इदं तु वार्तिकं भाष्ये न दृश्यते । गाण्ड्यजगात्सं-ज्ञायाम् । ह्रस्वदीर्घयोरिति । गाण्डिशब्दस्य गाण्डीशब्दस्य च कृतयणोः इति युगपन्निर्देशः । 'ख्यत्यात्परस्य' इत्यत्र खितिशब्दयोः खीतीशब्द-योरिव यथेत्यर्थः । ततश्च गाण्डिशब्दाद् गाण्डीशब्दाद् अजगशब्दाच्च मत्वर्थे वः स्यादित्यर्थः । रूढशब्दत्वादिह न मतुप्समुच्चयः । काण्डाण्डादीर-ईरचौ । काण्ड, आण्ड आभ्याम् ईरन्, ईरच् इति प्रत्ययौ मत्वर्थे स्त इत्यर्थः । रजःकृषिः । रजस्, कृषि, आसुति, परिषद् एभ्यो मत्वर्थे वलच् स्यादित्यर्थः । आसुतीवल इति । 'षुञ् अभिषवे' आङ्पूर्वात् स्त्रियां क्तिन् । 'वले' इति दीर्घः । अन्येभ्योऽपीति । वार्तिकमिदम् । 'रजः कृषि–' इत्यादिसूत्रोपात्तादन्य-स्मादपि वलच् दृश्यत इत्यर्थः । भ्रातृवलः । 'ढ्रलोपे–' इत्यतः अण इत्यनुवृत्तेः इति न दीर्घः । पुत्रवल इत्यादौ 'वले' इति दीर्घमाशङ्क्याह वल इत्यत्रेति । दन्तशिखात् संज्ञायाम् । समाहारद्वन्द्वात्पञ्चमी । दन्तशब्दात् शिखाशब्दाच्च मत्वर्थे वलच् स्यात्संज्ञायामित्यर्थः । ज्योत्स्ना । ज्योतिष इति । ज्योत्स्ना-

---

इति । व इत्यनुवर्तते । अर्णव इति । अर्तेरसुन् नुट् च । अर्णो जलं अस्मिन्नस्ति । संज्ञायामिति । 'तदस्यास्ति–' इति सूत्रस्थेतिशब्दस्यैवायं प्रपञ्चः । गाण्डिवाजगाविति । 'ख्यत्यात्–' इतिवत्कृतयणादेशस्यानुकरणं न भवति । लक्ष्ये यणोऽ-भावात् । किंतु सूत्रे सांहितिकोऽयं यणिति भावः । प्रयुज्यते चोभयथा । 'अधिरोहति गाण्डिवं महेषौ' 'गाण्डीवी कनकशिलानिभं भुजाभ्याम्' इति च । आसुतीवल इति । 'षुञ् अभिषवे' क्तिन् । आसुतिरभिषवः । परिषद्वल इति । परितः सीदन्तीति परिषत् 'सत्सूद्विष–' इत्यादिना क्विप्, 'सदिरप्रतेः' इति षत्वम् । पाठान्तरमिति । 'शृदृभसोऽदिः' इत्यदिप्रत्ययो बाहुलकात् पृषेरपि भवति । तथा च भाष्यम्—'पार्षदकृतिरेषा तत्रभवताम्' 'सर्ववेदपार्षदं हीदं शास्त्रम्' इति च । माघोऽप्याह—'पर्षद्वलान्महाब्रह्मैराटनैकटिकश्रमान्' इति । 'पर्षदेषा दशावरा' इति च । भ्रातृवल इति । 'वले' इत्यत्राणग्रहणानुवृत्तेर्नेह दीर्घः । पुत्रवलादौ तु नेत्याह संज्ञायामित्यनुवृत्तेरिति । 'वनगिर्योः–' इति सूत्रादिति भावः । ज्योत्स्ना चन्द्रप्रभा । तत्रावयवीभूतं ज्योतिरस्तीति मत्वर्थीयोपपत्तिः । एतेन तमः-

गोमिन्मलिनमलीमसाः । (५-२-११४) मत्वर्थे निपात्यन्ते । ज्योतिष उपधालोपो नश्च प्रत्ययः । ज्योत्स्ना । तमस उपधाया इत्वं रश्च, तमिस्रा । स्त्रीत्वमतन्त्रम्, तमिस्रम् । शृङ्गादिनच्, शृङ्गिणः । ऊर्जसो वलच्, तेन बाधा माभूदिति विनिरपि, ऊर्जस्वी । ऊर्जस्वलः । 'ऊर्जोऽसुगागमः' इति वृत्तिरनु चिन्त्या, 'ऊर्जस्वतीः' इतिवदसुन्नन्तत्वेनैवोपपत्तेः । गोशब्दान्मिनिः, गोमी । मलशब्दादिनच्, मलिनः । ईमसच्च, मलीमसः । १९२२ अत इनिठनौ । (५—२—११५) दण्डी, दण्डिकः । १९२३ व्रीह्यादिभ्यश्च । (५—२—११६)

वयवा ज्योतींषि, तान्यस्यां सन्तीति विग्रहे ज्योतिष्शब्दाद् नप्रत्यय उपधाभूतस्य इकारस्य लोपश्च निपात्यते । सति च इकारस्य लोपे इणः परत्वाभावात् षत्वनिवृत्तौ ज्योत्स्नेति रूपम् । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः । तमस् इति । तमः अस्यास्तीति विग्रहे तमस्शब्दाद् रप्रत्ययः, उपधाभूतस्य मकारादकारस्य इत्वं च निपात्यत इत्यर्थः । 'तमिस्रा तामसी रात्रिः' इत्यमरः । ननु 'तमिस्रा' इति स्त्रीलिङ्गनिर्देशात् तमिस्रं गृहमिति कथमित्यत आह स्त्रीत्वमतन्त्रमिति । शृङ्गादिनजिति । निपात्यत इति शेषः । शृङ्गिण इति । शृङ्गमस्यास्तीति विग्रहः । इनचि णत्वम् । ऊर्जसो वलजिति । निपात्यत इति शेषः । ऊर्जस् इत्यसुन्नन्तं प्रातिपदिकम् । ननु 'अस्मायामेधा–' इति विनिना सिद्धेरूर्जस्विन्निति निपातनं व्यर्थमित्यत आह तेनेति । विशेषविहितेन वलचा अस्मायेति सामान्यविहितस्य विनो निवृत्तिर्मा भूदित्येतदर्थं विनो निपातनमित्यर्थः । ऊर्ज इति । ऊर्जशब्दाद्वलचि प्रकृतेरसुगागम इति वृत्तिग्रन्थः अनुपपन्न इत्यर्थः । कुत इत्यत आह ऊर्जस्वतीरितिवदिति । ऊर्जस्वतीरित्यत्र वलच्प्रत्ययाभावेन तत्सन्नियोगशिष्टस्य असुगागमस्याप्रसक्तेः तत्र ऊजस् इत्यसुन्नन्तं प्रातिपदिकमवश्यमभ्युपेयम्. तेनैव ऊर्जस्विन्नूर्जस्वलयोः विनिवलज्मात्रनिपातनोपपत्तेरित्यर्थः । ईमसच्चेति । मलशब्दाद् निपात्यत इति शेषः । अत इनिठनौ । अदन्तान्मत्वर्थे इनि ठन् एतौ स्त इत्यर्थः । समुच्चयार्थकान्यतरस्यांग्रहणानुवृत्तेर्मतुवपि भवति । एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इति भाष्यम् । एकाक्षरात् स्ववान्, कृतः कारकवान्, जातेः वृक्षवान्, सप्तम्यां दण्डा अस्यां शालायां सन्ति दण्डवती । इदं प्रायिकम् । तेन कार्यी, कार्यिकः; तण्डुली, तण्डुलिक इत्यादि सिद्धम् इति भाष्ये स्पष्टम् । व्रीह्यादिभ्यश्च । म वर्थे इनिठनौ

समूहे तमिस्राशब्दो व्याख्यातः । निघण्टुषु तमःपर्यायस्तमिस्रशब्दः पठितः । तत्र समूहसमूहिनोरभेदोपचार इति हरदत्तः । स्त्रीत्वमतन्त्रमिति । व्याख्यानं शरणम् । ऊर्जस्विन्गोमिन्नित्यत्र नान्तत्वाभिव्यक्तये नलोपो न कृतः । अत इनिठनौ । तपकरणं किम्, खट्वावान् । 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' । एकाक्षरात्—स्ववान् । कृतः—कारकवान् । जातेः—व्याघ्रवान्, सिंहवान् । सप्तम्यां—दण्डा अस्यां सन्ति दण्डवती शाला । 'तदस्यास्ति–' इति सूत्रस्थेतिकरणो विषयनियमार्थः सर्वत्रापि संबध्यत इति । क्वचित्कृतोऽपि भवति—कार्यी, कार्यिकः ।

व्रीहिकः । न च सर्वेभ्यो व्रीह्यादिभ्य इनिठनाविष्येते, किं तर्हि—मालासंज्ञादिभ्य इनिः, यवखलादिभ्य इकः' (वा ३२०९)। अन्येभ्य उभौ। १९२४ तुन्दादिभ्य इलच्च । (५—२—११७) चादिनिठनौ मतुप् च। तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् । उदर, पिचण्ड, यव, व्रीहि। 'स्वाङ्गाद्विवृद्धौ' (ग. सू. १३४) विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयः स्युः। विवृद्धौ कर्णौ यस्य स कर्णिलः, कर्णी, कर्णिकः, कर्णवान्। १९२५ एकगोपूर्वाट्ठञ् नित्यम् । (५—२—११८) एकशतमस्यास्तीति ऐकशतिकः। ऐकसहस्रिकः। गौशतिकः। गौसहस्रिकः। १९२६ शतसहस्रान्ताच्च निष्कात् । (५—२—११९) निष्कात्परौ यौ शतसहस्रशब्दौ तदन्तात्प्रातिपदिकाट्ठञ् स्यान्मत्वर्थे। नैष्कशतिकः। नैष्कसहस्रिकः । १९२७ रूपादाहतप्रशंसयोर्यप् । (५—२—१२०) आहतं रूपमस्यास्तीति रूप्यः कार्षापणः। प्रशस्तं रूपमस्यास्तीति रूप्यो गौः।

---

...भेदः। शिखामालेत्यादि । वार्तिकमिदम्। शिखा, माला, संज्ञा, वीणा, ...बलाका, पताका, वर्मन्, शर्मन् एभ्य इनिरेव, न तु ठनित्यर्थः। यवखलेति। ...खल, नौ, कुमारी एभ्यः ठनेव, न त्विनिरित्यर्थः। अवशिष्टेभ्यस्तु व्रीह्यादिगण... ...भ्य उभावित्यर्थसिद्धम् । इदं वृत्तौ स्पष्टम् । तुन्दादिभ्य इलच्च । ...चेति। समुच्चयार्थकान्यतरस्यांग्रहणानुवृत्तेरिति भावः। उदरादयश्चत्वारस्तु... ...दिगणपठिताः । स्वाङ्गाद्विवृद्धाविति । गणसूत्रमिदम् । वृद्धविषयात् ...स्वाङ्गादिलच्, इनिठनौ मतुप् चेत्यर्थः। कर्णिल इति। वृद्धौ कर्णौ अस्येति ...ग्रहः। एकगोपूर्वाट्ठञ्नित्यम् । एकपूर्वाद् गोपूर्वाच्च नित्यं ठञ् स्यादि... ...र्थः। यद्यपि नित्यग्रहणाभावेऽपि ठञा इनिठनोर्निवृत्तिः सिध्यति, तथापि ...समुच्चयार्थकान्यतरस्यांग्रहणानुवृत्त्या मतुप् समुच्चीयेत । तन्निवृत्त्यर्थं नित्यग्रह... ...म्। ऐकशतिक इति । 'पूर्वकाल—' इति समासः। 'संख्यायाः संवत्सर—' ...उत्तरपदवृद्धिस्तु न, तत्र प्रतिपदोक्ततद्धितार्थसमासस्यैव ग्रहणात् । शतसहस्र । ...निष्कात् पराविति । असामर्थ्येऽपि सौत्रत्वात् समास इति भावः। रूपादाहत । ...हतेति भावे क्तः। आहतविशेषणकात् प्रशंसाविशेषणकाच्च रूपशब्दाद् मत्वर्थे

---

...नित्तु जातेरपि—तण्डुली, तण्डुलिकः। एतच्च काशिकादौ स्पष्टम्। तुन्दादिभ्य ...लच्च। अन्यतरस्यामित्यनुवर्तनादाह—मतुप्चेति। अत्र 'स्वाङ्गाद् विवृद्धौ' इति ...च्यते। विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयः स्युः। विवृद्धौ कर्णावस्य कर्णिलः, ...र्णी, कर्णिकः, कर्णवान् । एकगोपूर्वात् । ऐकशतिक इति। एकं च तच्छतं ...ति 'पूर्वकाल—' इत्यादिना कर्मधारयः। षष्ठीतत्पुरुषाद्बहुव्रीहेर्द्वन्द्वाच्च न भवत्यनभि... ...नादिति हरदत्तादयः । अत इत्येव, नेह—एकविंशतिरस्यास्तीति। नित्यग्रहणं ...ङो बाधनार्थम् । अन्यथा ठञा इनिठनोर्बाधे कृतेऽप्यन्यतरस्यांग्रहणानुवृत्त्या ...तुप् स्यादेवेत्याहुः। कथम् एकद्रव्यवान् इति, असाधुरेवायम्। ए... न द्रव्यवानिति वा ...व्यम्। कथम् एकदण्डी इति, 'एकदेशिनैकाधिकरणे' इति निर्देशो ज्ञापयति ...नैरपि क्वचिद्भवति' इति । रूपादाहत । आहतप्रशंसाविशिष्टेऽर्थे वर्तमानाद्रूप-

'आहत' इति किम्—रूपवान् । 'अन्येभ्योऽपि दृश्यते' (वा ३२१०)। हिम्याः पर्वताः । गुण्या ब्राह्मणाः । १९२८ अस्मायामेधास्रजो विनिः। (५—२—१२१) यशस्वी, यशस्वान् । मायावी । व्रीह्यादिपाठदिनिठनौ, मायी, मायिकः । क्विन्नन्तत्वात्कुः, स्रग्वी । 'आमयस्योपसंख्यानं दीर्घश्च' (वा ३२१३) आमयावी । 'शृङ्गवृन्दाभ्यामारकन्' (वा ३२१४) शृङ्गारकः । वृन्दारकः । 'फलबर्हाभ्यामिनच्' (वा ३२१५) । फलिनः । बर्हिणः । 'हृदयाच्चालुरन्यतरस्याम्' (वा ३२१६) । इन्ठनौ मतुप्च । हृदयालुः, हृदयी, हृदयिकः, हृदयवान् ।

---

यप् स्यादित्यर्थः । आहतं रूपमिति । आहतेन निष्पन्नं स्वरूपं यस्येति विग्रहे रूपशब्दाद् यपि रूप्यशब्द इत्यर्थः । रूप्यः कार्षापण इति । परिमाण-विशिष्टः रजतसुवर्णादिर्मुद्रिकाविशेषयुक्तः कार्षापण इत्युच्यते । तत्स्वरूपं च स्वर्ण-कारकृता हननिष्पाद्यमिति बोध्यम् । रूप्यो गौरिति । प्रशस्तरूपसम्पन्न इत्यर्थः । अन्येभ्योऽपीति । वार्तिकमिदम् । रूपशब्दादन्येभ्योऽपि यप् दृश्यत इत्यर्थः । हिम्याः पर्वता इति । भूम्नि यप्, बहुलं हिममेष्वस्तीति विग्रहः । गुण्या ब्राह्मणा इति । प्रशंसायां यप् । प्रशस्तगुणसम्पन्ना इत्यर्थः । अस्मायामेधास्रजो विनिः । असित्यनेन असन्तं विवक्षितम् । असन्त, माया, मेघा, स्रज् एभ्यो विनि-प्रत्ययः स्यादित्यर्थः । प्रत्यये नकारादिकार उच्चारणार्थः । यशस्वीति । 'तसौ मत्वर्थे' इति भत्वान्न रुत्वमिति भावः । यशस्वानिति । 'एकगोपूर्वात्–' इति सूत्रे नित्यग्रहणेन निवृत्तमपि समुच्चयार्थमन्यतरस्यांग्रहणमिह मण्डूकप्लुत्या अनुवर्तते । 'तसौ मत्वर्थे' इति सूत्रे यशस्वानिति भाष्योदाहरणादिति भावः । स्रग्वीत्यत्र 'व्रश्च-' इति षत्वमाशङ्क्याह क्विन्नन्तत्वादिति । आमयस्येति । आमयशब्दाद् मत्वर्थे विनिः प्रकृतेर्दीर्घश्चेत्यर्थः । शृङ्गवृन्दाभ्यामिति । फलबर्हाभ्यामिति । हृदयाच्चालुरन्यतरस्यामिति । वार्तिकत्रयमिदम् । मतुप्चेति । वक्तव्य इति शेषः, भाष्ये तथोक्तत्वात् । 'चुटू' इति चकारस्येत्संज्ञा । अन्यतरस्यांग्रहणाच्चालोः भावे इनिठनौ । समुच्चयार्थकान्यतरस्यांग्रहणानुवृत्तेर्मतुबपि । तथा चात्र चत्वारः प्रत्ययाः । तदाह हृदयालुरित्यादि । 'शीतोष्णतृप्रेभ्यः तन्न सहते' इति वार्तिक-

---

शब्दान्मत्वर्थे यप् स्यात् । आहतमिति । आहननमाहतं ताडनमित्यर्थः । ततो निष्पन्नं यत्कार्षापणादिरूपं तदपि कार्ये कारणोपचारादाहतमित्युच्यते इत्याहतरूपयोः सामानाधिकरण्यमुपपद्यते । हिम्या इति । भूम्नि यप् । पर्वत इति । हिमवान् तत्पर्यन्तवर्तिनश्च । गुण्या इति । दृशिग्रहणादिनिरपि । तथा च माघः— 'गुण्यगुण्य इति न व्यजीगणत्' । गुणी अगुण्य इति पदच्छेदः । अस्मायामेधा । यशस्वीति । 'तसौ मत्वर्थे' इति भत्वाद्रुत्वं न । यशस्वानिति । नित्यग्रहणात् पूर्वत्रासम्बद्धमप्यन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमिह संबध्यत एव । 'तसौ मत्वर्थे' इति सूत्रे यशस्वानिति भाष्योदाहरणादिति भावः । 'चोः कुः' इत्यनेन सिद्धे व्रश्चादिषत्वमाशङ्क्याह—क्विन्नन्तत्वादिति । हृदयाच्चालुरन्यतरस्याम् । अन्य-तरस्यांग्रहणम् इनिठनोः प्राप्त्यर्थम् । मतुप् सर्वत्र समुच्चीयत एव । चकारस्य 'चुटू'

शीतोष्णतृप्रेभ्यस्तदसहने–' (वा ३२१७)। शीतं न सहते शीतालुः। उष्णालुः
'प्रायेतञ्चि' (उ सू १७०) इति रक्। तृप्रः पुरोडाशः, तं न सहते तृप्रालुः।
'तृप्रं दुःखम्' इति माधवः 'हिमाच्चेलुः' (वा ३२१८)। हिमं न सहते हिमेलुः।
'बलादूलः' (वा ३२१९) बलं न सहते बलूलः। 'वातात्समूहे च' (वा ३२२०)
वातं न सहते वातस्य समूहो वा वातूलः। 'तप्पर्वमरुद्भ्याम्' (वा ३२२१)।
पर्वतः। मरुत्तः। १९२९ ऊर्णाया युस्। (५--२--१२३) सित्त्वात्पदत्वम्।
ऊर्णायुः। अत्र 'छन्दसि' इति केचिदनुवर्तयन्ति। युक्तं चैतत्। अन्यथा
'अहंशुभमोः–' (सू १९४६) इत्यत्रैवोर्णाग्रहणं कुर्यात्। १९३०
वाचो ग्मिनिः। (५--२--१२४) वाग्मी। १९३१ आलजाटचौ बहु-

भाषिणि संगृह्णाति—शीतेति। शीत, उष्ण, तृप्र एभ्यो द्वितीयान्तेभ्यो न सहते
इत्यर्थे चालुर्वक्तव्य इत्यर्थः। तृप्रः पुरोडाश इति। मन्त्रभाष्ये तथोक्तत्वादिति
भावः। हिमाच्चेलुरिति। वार्तिकमिदम्। हिमशब्दाद् द्वितीयान्ताद् न सहत इत्यर्थे
चेलुः स्यादित्यर्थः। चकार इत्। बलादूल इति। तन्न सहते इत्यर्थे वक्तव्य इति
शेषः। वातात्समूहे चेति। षष्ठ्यन्ताद्वातशब्दात् समूहेऽर्थे, द्वितीयान्ताद् न
सहते इत्यर्थे च, ऊलप्रत्ययो वाच्य इत्यर्थः। तप्पर्वमरुद्भ्यामिति। वार्तिक-
मिदम्। पर्वमरुद्भ्यां तप् वक्तव्य इत्यर्थः। तन्वक्तव्य इति वृत्तिकृत्, हरदत्तश्च।
प्रौढमनोरमायां तु नित्त्वं निराकृतम्। शब्देन्दुशेखरे तु हरदत्तसंमतं नित्त्वमेव स्थापि-
तम्। रूढत्वादवयवार्थाभावान्न मतुप्। ऊर्णाया युस्। ऊर्णायुशब्दे 'यस्येति च'
इति लोपमाशङ्क्याह सित्त्वादिति। अनुवर्तयन्तीति। 'बहुलं छन्दसि' इत्यस्मा-
दिति शेषः। वाचो ग्मिनिः। वाच्शब्दाद् मत्वर्थे ग्मिनिप्रत्ययः स्यादित्यर्थः।
इकारादिकार उच्चारणार्थः। अतद्धित इति पर्युदासाद् गकारस्य नेत्संज्ञा। वाग्मीति।
वाच्शब्दाद् ग्मिनिप्रत्यये कुत्वम्, जश्त्वम्। प्रत्यये गकारोच्चारणं तु 'प्रत्यये भाषायाम्–'
इत्यनुनासिकाभावार्थम्। आलजाटचौ। वाच्शब्दाद् आलच्, आटच् एतौ

चकारो नेत्संज्ञा। तेन हृदयालुशब्दोऽन्तोदात्त इत्याहुः। शीतोष्णेति। इह चालुरनु-
वर्तते। पुरोडाश इति। 'न तृप्रा उरुव्यचसम्' इति मन्त्रस्य भाष्ये तथा व्याख्या-
तत्वादिति भावः। माधव इति। सुब्धातुवृत्तौ स्थितमिदम्। हिमाच्चेलुरिति।
चकारादिरयं प्रत्यय इति माधवः। बलादिति। सिध्मादिषु बलूलवातूलशब्दौ
मत्वर्थे प्रकारान्तरेण व्युत्पादितौ। तप्पर्वमरुद्भ्याम्। पित्त्वमनुदात्तत्वार्थम्।
काशिकायां तु 'पर्वमरुद्भ्यां तन्वक्तव्यः' इति स्थितम्। हरदत्तेन तु तन्निति प्रतीकमुपादाय
आद्युदात्तत्वार्थो नकार इत्युक्तम्। तच्च मनोरमायां महता प्रबन्धेन दीक्षितैर्निराकृतं
तत एव तदवधार्यम्। पदत्वमिति। तेन 'यस्येति च' इति लोपो न प्रवर्तत इति
भावः। अनुवर्तयन्तीति। 'बहुलं छन्दसि' इत्यतः। वाचो ग्मिनिः। इकारो
नकारपरित्राणार्थः। चकारस्य कुत्वे जश्त्वे च कृते वाग्मी वाग्मिनावित्यादौ द्वयो-
र्गकारयोः श्रवणं भवति। द्वित्वं तु त्रयाणाम्। 'मिनिः' इत्युक्ते तु द्वित्वे सति द्वयो-
र्गकारयोः श्रवणम्। द्वित्वाभावे त्वेकस्यैव श्रवणं स्यात्। किंच 'यरोऽनुनासिके–', 'प्रत्यये

भाषिणि । (५—२—१२५) 'कुत्सित इति वक्तव्यम्' (वा ३२२३) कुत्सितं बहु भाषते वाचालः, वाचाटः । यस्तु सम्यग्बहु भाषते स वाग्मीत्येव । १९३२ स्वामिन्नैश्वर्ये । (५—२—१२६) ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच् । स्वामी । १९३३ अर्शआदिभ्योऽच् । (५—२—१२७) अर्शांस्यस्य विद्यन्ते अर्शसः । आकृतिगणोऽयम् । १९३४ द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः । (५—२—१२८) द्वन्द्वः । कटकवलयिनी । शङ्खनूपुरिणी । उपतापो रोगः । कुष्ठी । किलासी । गर्ह्यं निन्द्यम् । ककुदावर्ती । काकतालुकिनी । 'प्राणिस्थात्' किम्—पुष्पफलवान्घटः । 'प्राण्यङ्गान्न' । पाणिपादवती । 'अतः' इत्येव । चित्रकललाटिकावती, सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम् । १९३५ वातातीसाराभ्यां कुक्च । (५—२—१२९) चादिनिः । वातकी । अतीसारकी । 'रोगे चायमिष्यते' । नेह । वातवती गुहा । 'पिशाचाच्च' (वा ३२२४) । पिशा-

---

मत्वर्थे बहुभाषिणीत्यर्थः । ग्मिनोऽपवादः । यस्तु सम्यगिति । नच अबहु, अकुत्सितं च यो वदति तत्रापि वाग्मीति कुतो न भवतीति वाच्यम्, 'यो हि सम्यग् बहु भाषते वाग्मीत्येव स भवति' इति भाष्यबलेन पूर्वसूत्रस्य सम्यग् बहुभाषिण्येव प्रवृत्तेभ्युपगमादिति भावः । स्वामिन्नैश्वर्ये । ऐश्वर्ये इति प्रकृतिविशेषणमित्यभिप्रेत्याह ऐश्वर्यवाचकादिति । आमिनजिति । स्वामीति । निपात्यत इति शेषः । पदत्वमिति । स्वम् ऐश्वर्यम्, तद्वानित्यर्थः । नियन्तेति यावत् । ऐश्वर्य-त्युक्तेर्धनवानित्यर्थे स्वामीति न भवति । अर्शआदिभ्योऽच् । अर्शस्शब्द आदिः एषामिति विग्रहः । अर्शस इति । अर्शो गुदरोगविशेषः । द्वन्द्वोपताप । द्वन्द्वसमासाद् उपतापवाचकाद् गर्ह्यवाचकाच्च प्राणिस्थविषयेभ्यो मत्वर्थे इनिः स्यादित्यर्थः । द्वन्द्वेति उदाहरणसूचनम् । कटकवलयिनीति । कटकवलयोः कश्चिदाकृतिभेदं परिकल्प्य द्वन्द्व उपपाद्यः । उपताप इत्यस्य विवरणम्—रोग इति । किलासः कुष्ठभेदः । गर्ह्यमित्यस्य विवरणम्—निन्द्यमिति । ककुदावर्तीति । ककुदं ग्रीवाया अधस्तात्पृष्ठभागः । तत्र आवर्तः ककुदावर्तः, सः अस्यास्तीति विग्रहः । काकतालुकिनीति । काकस्येव तालुके काकतालुके, ते अस्याः स्त इति विग्रहः । प्राण्यङ्गान्नेति । व्याख्यानमेवात्र शरणम्, एवंविधवार्तिकस्य भाष्ये अदर्शनात् । अत इत्येवेति । 'समासान्त' इति सूत्रभाष्यरीत्या माण्डूकप्लुत्या तदनुवृत्तेरिति भावः । चित्रकललाटिकावतीति । चित्रकं च ललाटिका चेति द्वन्द्वः । अदन्तत्वाभावादिनिर्नेति भावः । ननु 'अत इनिठनौ' इत्यतोऽनुवृत्त्यैव सिद्धे पुनरिह इनिग्रहणं किमर्थमित्यत आह सिद्धे प्रत्यय इति । ठनादीति । आदिना मतुपः संग्रहः । वातातीसाराभ्यां कुक्च । चादिनिरिति । वात, अतीसार आभ्यां मत्वर्थे इनिः स्यात् प्रकृतेः कुक् चेत्यर्थः । कुकि ककार इत् । उकार उच्चार-

---

भाषायां नित्यम्' इति वाङ्मयमित्यत्रेव नित्यमनुनासिकः प्राप्नोति । तच्चानिष्टमिति ग्मिनिः कृतः । स्वामिन्नैश्वर्ये । ऐश्वर्यवाचकादिति । स्वशब्दस्यैश्वर्यवाचित्वं तद्वृत्तिविषयकमेवेति बोध्यम् । ईशिता हि ईश्वरः । स तु स्वामीत्युच्यते । यथा

।। १९३६ वयसि पूरणात् । (५—२—१३०) पूरणप्रत्ययान्तान्मत्वर्थे
इः स्याद्वयसि द्योत्ये । मासः संवत्सरो वा पञ्चमोऽस्यास्तीति पञ्चमी उष्ट्रः । ठना-
धनार्थमिदम् । 'वयसि' किम्—पञ्चमवान् ग्रामः । १९३७ सुखादिभ्यश्च ।
—२—१३१) इनिर्मत्वर्थे । सुखी । दुःखी । 'माला क्षेपे' (ग. सू. ११६) ।
ली । १९३८ धर्मशीलवर्णान्ताच्च । (५—२—१३२) धर्माद्यन्तादिनि-
र्थे । ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी । १९३९ हस्ताज्जातौ ।
—२—१३३) हस्ती । 'जातौ' किम्—हस्तवान्पुरुषः । १९४० वर्णाद्ब्रह्म-
चारिणि । (५—२—१३४) वर्णी । १९४१ पुष्करादिभ्यो देशे । (५—२—१३५)
रिणी । पद्मिनी । 'देशे' किम्—पुष्करवान्करी । 'बाहूरुपूर्वपदाद्बलात्'
(वा ३२२५) बाहुबली । ऊरुबली । 'सर्वादेश्च' (वा ३२२६) । सर्वधनी ।
र्वबीजी । 'अर्थाच्चासन्निहिते' (वा ३२२७) । अर्थी । सन्निहिते तु अर्थवान् ।
तदन्ताच्च' (वा ३२२८) । धान्यार्थी । हिरण्यार्थी । १९४२ बलादिभ्यो
मतुबन्यतरस्याम् । (५—२—१३६) बलवान्, बली । उत्साहवान्,
उत्साही । १९४३ संज्ञायां मन्माभ्याम् । (५—२—१३७) मन्नन्तान्मान्ता-
दिनिर्मत्वर्थे । मन्—प्रथिमिनी । दामिनी । म—होमिनी । सोमिनी ।

र्थः । कित्वादन्तावयवः । वातकीति । वातरोगवानित्यर्थः । अतीसारकीति ।
तीसाररोगवानित्यर्थः । रोगे चायमिति । व्याख्यानादिति भावः । रोग एवे-
र्थः । वातवती गुहेति । अत्र रोगस्याप्रतीतेरिनिकुकौ नेति भावः । पिशा-
चाच्चेति । वार्तिकमिदम् । पिशाचादिनिः प्रकृतेः कुक्चेत्यर्थः । वयसि
पूरणात् । 'अत इनिठनौ' इत्येव इनिसिद्धेः किमर्थमिदमित्यत आह ठनादि-
बाधनार्थमिति । सुखादिभ्यश्च । इनिर्मत्वर्थ इति । इनिरेव, नतु ठनित्यर्थः ।
मालाक्षेप इति । सुखादिगणसूत्रमिदम् । धर्मशील । धर्माद्यन्तादिति ।
धर्म, शील, वर्ण एतदन्तादिनिरेवेत्यर्थः । हस्ताज्जातौ । हस्तान्मत्वर्थे इनिरेव
समुदायेन जातिविशेषे गम्य इत्यर्थः । वर्णाद्ब्रह्मचारिणि । वर्णशब्दान्मत्वर्थे
इनिरेव समुदायेन ब्रह्मचारिणि गम्य इत्यर्थः । वर्णीति । वर्णो ब्राह्मणादित-
त्त्वर्णोचितवसन्तादिकालमुपनयनम्, सोऽस्यास्तीति विग्रहः । पुष्करादिभ्यो
देशे । पुष्करशब्दान्मत्वर्थे इनिरेव स्याद् देशे गम्ये । बाहूरुपूर्वपदाद्बला-
दिति । वार्तिकमिदम् । बाहु, ऊरु एतत्पूर्वपदकाद् बलशब्दान्तान्मत्वर्थे इनिरेवे-
त्यर्थः । सर्वादेश्चेति । वार्तिकमिदम् । इनिरेवेति शेषः । अर्थाच्चासंनिहित
इति । वार्तिकमिदम् । असंनिहितविषयकादर्थशब्दाद् इनिरेवेत्यर्थः । अर्थीति ।
असंनिहितः अर्थः अस्येति विग्रहः । अर्थो नास्तीति यावत् । अत्र विरोधादस्तीति
न संबध्यते । अर्थोऽसंनिहितोऽस्येत्यर्थे अप्राप्त एव इनिर्विधीयत इति कैयटः । प्रत्यय-

वागीश एव बाचस्पतिः वाचः स्वामीति । ऐश्वर्ये किम्, स्ववान् । अर्शआदि-
भ्योऽच् । इह 'स्वाङ्गाद्धीनात्' इति गणे पठ्यते । खञ्जः पादोऽस्यास्तीति खञ्जः ।
गतं चक्षुरस्यास्तीति काणः । प्रथिमिनीति । 'पृथ्वादिभ्यः—' इतीमनिचि 'टेः'

'संज्ञायाम्' किम्—सोमवान् । १९४४ कंशंभ्यां बभयुस्तितुतयसः । (५-२-१३८) कम्, शम् इति मान्तौ । 'कम्' इत्युदकसुखयोः । 'शम्' इति सुखे । आभ्यां सप्त प्रत्यया स्युः । युस्यसोः सकारः पदत्वार्थः । कंवः । कंभः । कंयुः । कंतिः । कंतुः । कंतः । कंयः । शंवः । शंभः । शंयुः । शंतिः । शंतुः । शंतः । शंयः । अनुस्वारस्य वैकल्पिकः परसवर्णः । वकारयकारपरस्यानुनासिकौ वयौ । १९४५ तुन्दिवलिवटेर्भः । (५-२-१३९) वृद्धा नाभिस्तुन्दिः । 'मूर्धन्योपधोऽयम्' इति माधवः । तुन्दिभः । वलिभः । वटिभः । पामादित्वाद्वलिनोऽपि । १९४६ अहंशुभमोर्युस् । ( ५-२-१४० ) अहम् इति मान्तमव्ययमहङ्कारे । 'शुभम्' इति शुभे । अहंयुः, अहङ्कारवान् । शुभंयुः, शुभान्वितः ।

इति तद्धितेषु मत्वर्थीयाः ।

---

विधौ तदन्तविधिनिषेधादाह तदन्ताच्चेति । अर्थशब्दान्तादपि इनिर्वक्तव्य इत्यर्थः । बलादिभ्यो । मतुवभावपक्षे संनिहित इनिरित्यभिप्रेत्योदाहरति— बलवान्, बलीति । संज्ञायां मन्माभ्याम् । प्रथिमिनीति । 'पृथ्वादिभ्य इमनिज्वा' इमनिजन्तः प्रथिमन्शब्दः । अत्र मनोऽनर्थकत्वेऽपि 'अनिनस्मन्–' इति पदन्तविधिना इमनिजन्तोऽपि गृह्यते प्रथिमन्शब्दादिनिप्रत्यये टिलोपे नान्तलक्षणङीपि प्रथिमिनीशब्दः । दामिनीति । दामन्शब्दादिनौ टिलोपे ङीविति भावः । मेति । मान्तोदाहरणसूचनमिदम् । होमिनी सोमिनीति । होमशब्दात्सोमशब्दाच्च इनौ ङीबिति भावः । कंशंभ्याम् । व, भ, युस्, ति, तु, त, यस्, एषां सप्तानां द्वन्द्वात् प्रथमाबहुवचनम् । सप्त प्रत्ययाः स्युरिति । मत्वर्थ इति शेषः । पदत्वार्थं इति । अन्यथा कम् इत्यस्माद् युप्रत्यये यप्रत्यये च कृते भत्वात् पदत्वाभावादनुस्वारो न स्यादिति भावः । वकारयकारपरस्येति । बहुव्रीहिः । वकारपरकस्य यकारपरकस्य चानुस्वारस्येत्यर्थः । तुन्दिवलि । तुन्दि, वलि, वटि एभ्यो मत्वर्थे भप्रत्ययः स्यादित्यर्थः । समाहारद्वन्द्वात्पञ्चम्येकवचनम् । पुंस्त्वमार्षम् । वटिभ इति । 'वट वेष्टने' वटनं वटिः अस्यास्तीति विग्रहः । अहंशुभ-

---

इति टिलोपः । 'र ऋतः–' इति रभावः । अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति मन्नन्तादिनौ कृते 'नस्तद्धिते' इति टिलोपे नान्तत्वान्ङीप् । दामिनीति । दाधातोर्मनिन् । होमिनी । सोमिनीति । 'अर्तिस्तुसुहुसृधृक्षि–' इत्यौणादिके मनि नित्वाद्धोमसोमशब्दौ मन्प्रत्ययान्तौ । कंशंभ्याम् । पदत्वार्थं इति । अन्यथा 'कम्युः, काम्यः, शन्युः, शाम्यः' इति स्यादिति भावः । वकारयकारपरस्येति । बहुव्रीहिरयम् । अनुनासिकौ वयाविति । एतेन प्रथमप्रत्ययो दन्त्योष्ठ्यादिः, न तु पवर्गतृतीय इति ध्वनितम् । माधव इति । 'तुडि तोडने' इति धातौ तेनोक्तम्—'वृद्धा नाभिस्तुण्डिः । इन् । तुण्डिरस्यास्तीति तुण्डिलः । 'तुन्तादिभ्य इलच्च' इत्यत्र 'स्वाङ्गाद्विवृद्धौ' इति गणसूत्रेण इलच् । तुण्डिल एव तुण्डिभः । 'तुण्डिवलिवटेर्भः' इति मत्वर्थीयो भ इति । वटिभ इति । 'वट वेष्टने' इन् । वटिशब्दः पामादिषु पठ्यते । तेन वटिन इत्यपि भवति ।

# अथ तद्धितेषु प्राग्दिशीयप्रकरणम् । ३९ ।

१९४७ प्राग्दिशो विभक्तिः । (५-३-१) 'दिक्छब्देभ्यः' इत्यतः वक्ष्यमाणाः प्रत्ययाः विभक्तिसंज्ञाः स्युः । अथ स्वार्थिकाः प्रत्ययाः । 'समर्थानाम्' इति 'प्रथमात्' इति च निवृत्तम् । 'वा' इति त्वनुवर्तत एव । १९४८ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः । (५-३-२) किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते । १९४९ इदम इश् । (५-३-३) प्राग्दिशीये परे । १९५० एतेतौ रथोः । (५-३-४) इदंशब्दस्य 'एत' 'इत्' इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । इशोऽपवादः । १९५१ एतदोऽन् । (५-३-५) योगविभागः कर्तव्यः । 'एतदः' एतेतौ

---

अहंयुः । अहंयुः शुभंयुरित्यत्र सुल्लुकमाशङ्क्याह अहमित्यादीति । सित्त्वं पदत्वार्थम् । तेन पदत्वादनुस्वारे परसवर्णः सिध्यति ।

इति तद्धितेषु पञ्चमाध्यायस्य द्वितीयपादे मत्वर्थीयप्रकरणम् ।

अथ पञ्चमाध्यायस्य तृतीयपादे प्राग्दिशीयप्रकरणं निरूप्यते । प्राग्दिशो विभक्तिः । दिक्छब्देन तद्घटितं सूत्रं विवक्षितमित्यभिप्रेत्याह दिक्छब्देभ्य इत्यत इति । विभक्तिसंज्ञका इति । तत्फलं तु 'न विभक्तौ तुस्माः' इति निषेधः, त्यदाद्यत्वम्, इदम 'ऊडिदंपदादि' इति स्वरश्च । स्वार्थिका इति । स्त्रीय-प्रकृत्यर्थे भवा इत्यर्थः । तसिलादिष्वर्थनिर्देशाभावाद् 'अतिशायने' इत्यादीनां प्रकृत्यर्थ-विशेषणत्वाच्चेति भावः । निवृत्तमिति । अत्रोपपत्तिः 'समर्थानाम्' इत्यत्रोक्ता । अनुवर्तत एवेति । व्याख्यानमेवात्र शरणम् । किंसर्वनाम । 'अद्व्यादिभ्यः' इति च्छेदः । 'प्राग्दिश' इत्यनुवर्तते । तदा प्राग्दिशोऽधिक्रियत इति । प्रत्ययानिर्देशादधिकारोऽयमिति भावः । किमः सर्वनामत्वेऽपि द्व्यादिपर्युदासात् पृथ-ग्ग्रहणम् । द्व्यादिषु किंशब्दपाठस्तु त्वं च कश्च कौ, अहं कश्च कौ, इत्यत्र 'त्यदादीनां मिथः सहोक्तौ' इति किमः शेषत्वार्थः । अथ वक्ष्यमाणतसिलादिप्रत्यये परे कार्यविशेषानाह इदम इश् इत्यादिना । इदम इश् । प्राग्दिशीये परे इति शेषपूरणम् । प्रकरणलभ्यमिदम् । शित्त्वात् सर्वादेशः । इति इत्युदाहरणम् । एतेतौ रथोः । 'इदमः' इत्यनुवर्तते । एतश्च इश्चेति द्वन्द्वात्प्रथमाद्विवचनम् । र् च थ् च तयोरिति द्वन्द्वः । रेफादकार उच्चारणार्थः । रेफथकाराभ्यां प्राग्दिशीयं प्रकरणलभ्यं विशेष्यते । 'यस्मिन्विधिः' इति तदादिविधिः । तदाह इदं शब्दस्येत्यादिना । तत्र रेफादौ परे एतः, थादौ तु इदिति यथासंख्यं बोध्यम् । एतर्हि, इत्थम् । एतदोऽन् । प्राग्दिशीये प्रत्यये परे एतद्शब्दस्य अन्

---

अहंयुः । शुभंयुरिति । पूर्ववदनुस्वारपरसवर्णौ ।

इति तत्त्वबोधिन्यां मत्वर्थीयप्रकरणम् ।

किंसर्वनाम । द्व्यादिपर्युदासात्किमः पृथग्ग्रहणम् । द्व्यादिषु किम्, शब्द-पाठे प्रयोजनं तु त्वं च कश्च कौ । अहं च कश्च कौ इत्यत्र किमः शेषः । 'त्यदादीनां मिथः सहोक्तौ यत् परं तच्छिष्यते' इत्युक्तत्वात् । एतदोऽन् । भाष्यरूढोऽयं पाठः ।

स्तो रथोः । 'अन्' । एतदः इत्येव । अनेकाल्त्वात्सर्वादेशः । 'नलोपः प्रातिपदिकान्तस्य' (सू २३६) । १९५२ सर्वस्य सोऽन्यतरस्यां दि । (५-३-६) प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात् । १९५३ पञ्चम्यास्तसिल् । (५-३-७) पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल्वा स्यात् । १९५४ कु तिहोः । (७-२-१०४) किमः कुः स्यात्तादौ हकारादौ च विभक्तौ परतः । कुतः कस्मात् । यतः । ततः । अतः । इतः । अमुतः । बहुतः । द्व्यादेस्तु द्वाभ्याम् ।

स्यादित्यर्थः प्रतीयते । एवं सति एतच्छब्दस्य अनेव स्यात् । नत्वेतेतौ । तत्राह योगविभाग इति । एतद इति । प्रथमसूत्रमिदम् । तस्य शेषपूरणम् 'एतेतौ रथोः' इति । एतच्छब्दस्य एतेतौ स्तो रेफथकारादौ प्रत्यये परे इत्यर्थः । एतर्हि इत्थम् इत्युदाहरणम् । अन्निति द्वितीयं सूत्रम् । एतद ईत्येवेति । 'रथोः' इति तु नानुवर्तते इति भावः । तथा च एतद इत्यस्य अन् स्यात्प्राग्दिशीये परे इति फलति । अतः अत्र इत्युदाहरणम् । ननु अनादेशे नकारस्य इत्संज्ञायाम् अकारान्तादेशः स्यादित्यत आह अनेकाल्त्वादिति । नकारस्य प्रयोजनाभावात् नेत्संज्ञा, नित्स्वरस्य प्रत्ययविषयत्वादिति भावः । तर्हि अत इत्यादौ नकारस्य श्रवणं स्यादित्यत आह नलोप इति । सर्वस्य सोऽन्यतरस्यां दि । दि इति सप्तम्येकवचनं प्राग्दिशीयविशेषणम् । 'यस्मिन्विधिः' इति तदादिविधिः । तदाह प्राग्दिशीये दकारादाविति । सदा इत्युदाहरणम् । तदेवं तसिलादिप्रत्ययेषु प्राग्दिशीयेषु परेषु कतिपयान् आदेशान् विधाय तसिलादिप्रत्ययान्वक्तुमुपक्रमते । पञ्चम्यास्तसिल् । किमादिभ्य इति । किंसर्वनामबहुभ्य इत्यर्थः । वा स्यादिति । 'समर्थानाम्–' इत्यतो वाग्रहणस्यानुवृत्तेरिति भावः । कुतिहोः । कु इति लुप्तप्रथमाकम् । 'किमः कः' इत्यस्मात् 'किमः' इत्यनुवर्तते । 'अष्टन आ' इत्यतो 'विभक्तौ' इति । तिश्च ह् च तयोरिति द्वन्द्वः । इकार उच्चारणार्थः । ताभ्यां विभक्तिर्विशेष्यते । तदादिविधिः तदाह किमः कुः स्यादित्यादिना । कुत इति । किंशब्दात् पञ्चम्यन्तात्तसिल् । सुब्लुक् । किमः कुभावः । 'तसिलादयः प्राक् पाशपः' इत्युक्तेरव्ययत्वम् । वेत्यनुवृत्तेः फलमाह कस्मादिति । 'तिहोः' इत्युक्तेरत्र न कुभावः । सर्वनाम्न उदाहरति यत इति । यद्शब्दात् पञ्चम्यन्तात् सुब्लुक्, तसिलो विभक्तित्वात् तस्मिन्परे त्यदाद्यत्वं पररूपम् । एवं तच्छब्दात्तत इति रूपम् । पक्षे तस्मादिति भवति । । अत इति । एतद्शब्दात् पञ्चम्यन्तात् तसिल्, सुब्लुक्, एतदोऽन्, सर्वादेशः, नलोपः । पक्षे एतस्मादिति भवति । इत इति । इदंशब्दात्पञ्चम्यन्तात् तसिल्, सुब्लुक्, इदम इश् । पक्षे अस्मादिति भवति । अमुत इति । अदस्शब्दात् पञ्चम्यन्तात् तसिल्, उत्वमत्वं च । पक्षे अमुष्मादिति भवति । बहुत इति । पक्षे बहुभ्य इति भवति । द्व्यादे-

वृत्तिकारस्तु 'एतदोऽश्' इति पठित्वा शकारः सर्वादेशार्थ इत्याह । अनिति । प्राग्दिशीये परे अन्स्यात् । अनेकाल्त्वादिति । नित्करणस्य प्रयोजनं नास्ति प्रत्ययनित्त्वस्यैव स्वरार्थत्वादिति भावः । कु तिहोः । तकारादिकार उच्चारणार्थः ।

१९५५ तसेश्च । (५-३-८) किंसर्वनामबहुभ्यः परस्य तसेस्तसिलादेशः स्यात् । स्वरार्थं विभक्त्यर्थं च वचनम् । १९५६ पर्यभिभ्यां च । (५-३-९) आभ्यां तसिल् स्यात् । 'सर्वोभयार्थाभ्यामेव' (वा ३२४०) । परितः सर्वत इत्यर्थः । अभित उभयत इत्यर्थः । १९५७ सप्तम्यास्त्रल् । (५—३—१०) कुत्र । यत्र । तत्र । बहुत्र । १९५८ इदमो हः (५—३—११) त्रलोऽपवादः । इशादेशः । इह । १९५९ किमोऽत् । (५—३—१२) वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात् । पक्षे त्रल् । १९६० क्वाति । (७—२—१०५)

भवति । सर्वनामत्वात् प्राप्तस्तसिल् द्व्यादिपर्युदासान्नेत्यर्थः । तसेश्च । परस्य तसेरिति । 'प्रतियोगे पञ्चम्यास्तसिः' 'अपादाने चाहीयरुहोः' इति वक्ष्यमाणस्य तसेरित्यर्थः । ननु तसेस्तसिल् किमर्थमित्यत आह स्वरार्थमिति । लित्स्वरार्थमित्यर्थः । विभक्त्यर्थमिति । विभक्तिनिमित्तकत्यदाद्यत्वाद्यर्थमित्यर्थः । अन्यथा परत्वात्तसौ कृते तस्य अप्राग्दिशीयत्वाद् विभक्तित्वाभावात् त्यदाद्यत्वादिकं न स्यादित्यर्थः । पर्यभिभ्यां च । सर्वोभयार्थाभ्यामेवेति । वार्तिकमिदम् । परिषिञ्चति अभिषिञ्चति इत्यादौ वाग्रहणात् पक्षे न तसिल् । सप्तम्यास्त्रल् । किमादिभ्यः सप्तम्यन्तेभ्यः अद्व्यादिभ्यस्त्रलित्यर्थः । कुत्र इत्यादिरूपाणि कुत इत्यादिवत् । इदमो हः । इदंशब्दात् सप्तम्यन्ताद् हप्रत्ययः स्यादित्यर्थः । किमोऽत् । अपकृष्यत इति । 'वा ह च छन्दसि' इत्युत्तरसूत्रादिति शेषः । अपकर्षे व्याख्यानमेव शरणम् । अत्प्रत्यते तकार इत् । न विभक्ताविति निषेधस्तु न भवति, 'तवर्गस्येत्त्वप्रतिषेधोऽतद्धिते' इति वार्तिकात् । क्वाति । क्व अतीति छेदः ।

अनुवृत्तेः फलं दर्शयति कस्मादिति । यतस्तत इति । 'कृत्तद्धित—' इति प्रातिपदिकत्वात्सुपो लुकि त्यदाद्यत्वम् । पक्षे यस्मात् । तस्मात् । इत इति । 'इदम इश्' पक्षे अस्मात् । अत इति । एतदोऽनादेशः । पक्षे एतस्मात् । अमुत इति । 'अदसोसेः—' इति मुत्वम् । पक्षे अमुष्मात् । बहुत इति । पक्षे बहुभ्यः । द्व्याभ्यामिति । सर्वनामत्वात्प्राप्तोऽपि तसिल् 'अद्व्यादिभ्यः' इति पर्युदासान्न । तसेरिति । 'प्रतियोगे पञ्चम्यास्तसिः', अपादाने चाहीयरुहोः' इति विहितस्य तसेस्तसिलादेश इत्यर्थः । विभक्त्यर्थं चेति । अन्यथा परत्वात्तसौ कृते तस्याप्राग्दिशीयत्वाद्विभक्तिसंज्ञाया अभावात्त्यदाद्यत्वाभावे 'यतोऽवगच्छति' इत्यादि न सिध्येदिति भावः । ननु तसेर्ग्रामत इत्यादौ चरितार्थत्वात्किमादिभ्यस्तसिलो बाध्यत्वेन तसिलं प्रवर्तते । तस्य निरवकाशत्वात् । तथा च 'तसेश्च' इति विधानं व्यर्थमिति वाच्यम्, कुतोऽवहीयते कुतोऽवरोहतीत्यादौ तसिलः सावकाशत्वात् । सर्वोभयार्थाभ्यामेवेति । अत्र चाभिधानस्वाभाव्यमेव हेतुः । तेनेह न भवति । परिषिञ्चति । अभिषिञ्चति । अत्र वर्जनार्थे परिः । अभिस्त्वाभिमुख्ये । नन्वोदनं परिषिञ्चतीत्यत्र सर्वतोभावे परिरिति तसिलभावः कथमिति चेत् । मैवम्, वावचनानुवृत्त्या तु तत्सिद्धेः । सप्तम्यास्त्रल् । इह त्रल्तसिलौ स्वतन्त्रौ प्रत्ययौ, न तु सप्तमीपञ्चम्योरादेशौ । तेन कुत्र बहुत्र कुतः बहुत इत्यादौ 'अच्च घेः', 'घेर्ङिति' इत्यादिकं नेत्याहुः । किमोऽत् । 'न विभक्तौ

किमः क्वादेशः स्यादति। क्व। कुत्र। १९६१ वा ह च च्छन्दसि। (५—३—१३) 'कुह स्थः'। 'कुह जग्मथुः'। १९६२ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ। (२—४—३३) अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतः, तौ चानुदात्तौ स्तः। एतस्मिन्ग्रामे सुखं वसामः। अतोऽत्राधीमहे। अतो न गन्तास्मः। १९६३ इतराभ्योऽपि दृश्यन्ते। (५—३—१४) पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। 'दृशिग्रहणाद्भवदादियोग एव' (वा ३२४४)। स भवान्, ततो भवान्, तत्र भवान्। तं भवन्तम्, ततो भवन्तम्, तत्र भवन्तम्। एवं दीर्घायुः। देवानांप्रियः। आयुष्मान्। १९६४ सर्वैकान्यकियत्तदः काले दा। (५—३—१५) सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्। सर्वस्मिन्काले सदा। सर्वदा। एकदा। अन्यदा। कदा।

---

'क्व' इति लुप्तप्रथमाकं 'किमः क' इत्यतः किमः' इत्यनुवर्तते। तदाह किमः क्वेति। किंशब्दात् सप्तम्यन्ताद् अत्प्रत्ययः, तकार इत्, किमः क्वादेश इति भावः। कुत्रेति। अत्प्रत्ययाभावपक्षे त्रलि 'कु तिहोः' इति कुभावे रूपम्। केचित्तु 'किमोऽत्' इत्यत्र उत्तरसूत्राद्वाग्रहणापकर्षे प्रमाणाभावात्त्रलं बाधित्वा नित्य एव अत्प्रत्ययः, कुत्रेति त्वपशब्द एवेत्याहुः। वा ह च छन्दसि। 'ह' इति लुप्तप्रथमाकम्। किमः सप्तम्यन्ताद् हप्रत्ययः स्यादित्यर्थः। चादत् त्रल् च। यद्यपि वैदिकप्रक्रियायामिदमुपन्यसनीयं तथापि वाग्रहणस्य पूर्वसूत्रे अपकर्षज्ञानायात्र तदुपन्यासः। एतदस्त्रतसोः। 'इदमोऽन्वादेशे' इत्यस्माद् 'अन्वादेशेऽशनुदात्तः' इत्यनुवर्तते। तदाह अन्वादेशेत्यादिना। अतोऽत्रेति। एतद्शब्दात् त्रलि प्रकृतेरशादेशे अत्रेति रूपम्। अतो न गन्तास्म इति। एतस्माद् ग्रामादित्यर्थः। एतद्शब्दात्तसिल् प्रकृतेरशादेशः। 'एतदोऽन्' इत्येव सिद्धे अनुदात्तार्थं वचनम्। नच लित्स्वरे सति शेषनिघातेन त्रतसोरनुदात्तत्वं सिद्धमिति शङ्क्यम्, लित्स्वरापवादे अशोऽनुदात्तत्वे कृते लित्स्वराप्राप्त्या प्रत्ययस्वरेण त्रतसोरुदात्तत्वे प्राप्ते तद्विधानार्थत्वात्। इतराभ्योऽपि दृश्यन्ते। पञ्चमीसप्तमीतरविभक्तिभ्योऽपीत्यर्थः। फलितमाह पञ्चमीसप्तमीतरविभक्त्यन्तादपीति। किमादेरिति शेषः। एवमिति। स दीर्घायुः, ततो दीर्घायुः, तत्र दीर्घायुरित्याद्यूह्यमित्यर्थः। सर्वैकान्य। सप्तम्यन्तेभ्य इति। सर्वादिभ्य इति शेषः।

---

तुस्माः' इति निषेधोऽत्र न प्रवर्तते थमोरुकारेण मकारपरिणार्थेनानित्यताज्ञापनात्। वाग्रहणमिति। 'किमोऽद्वा' इति सूत्रं पठित्वा 'ह च छन्दसि' इति सूत्रयितुं युक्तम्। कुत्रेति। यद्यपि भागवृत्तिकारो भाषायां त्रल् नेच्छति, तथापि बहुप्रयोगदर्शनादिह स्वीकृतम्। तथा च श्रीहर्षः—'नान्यत्र कुत्रापि च साभिलाषम्'। अमरश्चाह—'साहचर्याच्च कुत्रचित्' इति। वा ह च छन्दसि। पूर्वोक्तस्य वाग्रहणापकर्षणस्य स्फुटीकरणार्थमिदमुपन्यस्तम्। अत इति। एतस्माद् ग्रामादित्यर्थः। तत्रभवन्तमिति। ततोभवता, तत्र भवता। ततो भवते, तत्र भवते इत्यादि। एवमिति। ततोदीर्घायुस्तत्रदीर्घायुरित्याद्यूह्यमित्यर्थः। सदेति। 'सर्वस्य सोऽन्यतरस्यां दि' इति सभावः।

...। तदा । 'काले' किम्—सर्वत्र देशे । १९६५ इदमो र्हिल् । (५—३—१६) ...। अस्मिन्काले एतर्हि । 'काले' किम्—...म्यन्तात्काले इत्येव । हस्यापवादः । १९६६ अधुना । (५—३—१७) इदमः सप्तम्यन्तात्कालवाचिनः ...देशे । अधुनाप्रत्ययः स्यात् । इश् । 'यस्य—' (सू ३११) इति लोपः । अधुना । ...दानीं च । (५—३—१८) इदानीम् । १९६८ तदो दा च । ...(५—३—१९)तदा, तदानीम् । 'तदो दावचनमनर्थकम्, विहितत्वात्' (वा ३२४३) ...अनद्यतने र्हिलन्यतरस्याम् । (५—३—२१) कर्हि, कदा । ...यदा । तर्हि, तदा । एतस्मिन्काले एतर्हि । १९७० सद्यः ...परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।

---

...म्या इत्येवानुवर्तने, व्याख्यानादिति भावः । सदा सर्वदेति । 'सर्वस्य ...न्यतरस्यां दि' इति सभावविकल्पः । कदेति । किंशब्दाद् दाप्रत्यये सति तस्य ...मः कः' इति कादेशः । इदमो र्हिल् । 'इदमः' र्हिल्' इति छेदः । एतर्हीति । ...शब्दाद् र्हिल्, 'एतेतौ रथोः' इत्येतादेशः । अधुना । 'इदमः' इति 'सप्तम्या' ...'काले' इति चानुवर्तते । तदाह इदम इति । इशिति । 'इदम इश्' इत्य-...ति शेषः । अधुनेति । इयदितिवत् प्रत्ययमात्रं शिष्यते । पठन्ति चाभियुक्ताः ...तवति परस्मिन्प्रत्यये शास्त्रयोनौ गतवति विलयं च प्राकृतेऽपि प्रपञ्चे । सपदि ...दीतं केवलः प्रत्ययो यत् तदियदिति मिमीते कोऽधुना पण्डितोऽपि ।' इति ...करणीमौपनिषदीं च प्रक्रियामाश्रित्य प्रवृत्तो द्व्यर्थोऽयं श्लोकः । दानीं च । इदानी-...: सप्तम्यन्तात् कालवाचिनः स्वार्थे दानीमिति च प्रत्ययः स्यादित्यर्थः । इदानी-...ति । इदंशब्दाद् दानींप्रत्ययः, इश् । तदो दा च । सप्तम्यन्तात्कालवृत्तेः ...शब्दाद दाप्रत्ययः, दानींप्रत्ययश्च स्यादित्यर्थः । तदो दावचनमिति । ...कमिदम् । विहितत्वादिति । 'सर्वैकान्य—' इत्यनेनेति शेषः । अनद्यतने ...। अनद्यतनकालवृत्तिभ्यः किमादिभ्यः सप्तम्यन्तेभ्यो र्हिल्प्रत्ययो वा स्यादि-...। पक्षे दाप्रत्ययः । एतस्मिन्काले एतर्हीति । एतद्शब्दाद् र्हिल् । 'एतदः' ...योगविभागाद रेफादौ एतादेशः । सद्यःपरुत् । 'समानस्य सभावो द्यस् ...हनि' इति भाष्यवाक्यमिदम् । अहर्वृत्तेः समानशब्दात् सप्तम्यन्ताद् द्यस्प्रत्ययः । ...सद्यः समानेऽहनीत्यर्थः । 'पूर्वपूर्वतरयोः ...मानस्य सभावश्च निपात्यत इत्यर्थः । उच्च आरिश्चेति द्वन्द्वः । सप्तम्य ...देश उदारी च संवत्सरे' इत्यपि भाष्यवाक्यम् । इदमः (इश्) समसण् इत्यपि भाष्यवाक्यम् । ...नादिमौ प्रत्ययौ संवत्सरे अभिधेये ।

---

...देति । किमः कः । एतर्हीति । 'एतेतौ रथोः' एत्येतादेशः । अधुनाप्रत्यय ...ति । निपातनान्मध्योदात्तोऽयम् । भाष्यमतं चेदम् । वृत्तिकारस्त्वाह—इदमो ...भावो धुना च प्रत्यय इति । तत्र 'ऊडिदम्—' इत्यादिना विभक्तिस्वरः, स च ...दे: परस्य' इत्यादेर्भवतीति हरदत्तः । दावचनमिति । 'तदश्च' इत्येव सूत्रं ...नीयमिति भावः । एतस्मिन्काले एतर्हीति । 'एतदः' इति योगविभागाद्-

(५—३—२२) एते निपात्यन्ते। 'समानस्य सभावो द्यस् चाहनि' (वा ३२४५) समानेऽहनि सद्यः। 'पूर्वपूर्वतरयोः परादेशः, उदारी च प्रत्ययौ संवत्सरे' (वा ३२४६)। पूर्वस्मिन्वत्सरे परुत्। पूर्वतरे वत्सरे परारि। 'इदमः (इश्) समसण्' (वा ३२४७)। अस्मिन्संवत्सरे ऐषमः। 'परस्मादेद्यव्यहनि' (वा ३२४८)। परस्मिन्नहनि परेद्यवि। 'इदमोऽश्भावो द्यश्च' (वा ३२४९) अस्मिन्नहनि अद्य। 'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् च' (वा ३२५०) पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। उभयोरह्नोरुभयेद्युः। 'द्युश्चोभयाद्वक्तव्यः' (वा ३२५१)। उभयद्युः। १९७१ प्रकारवचने थाल्। (५—३—२३) प्रकारवृत्तिभ्यः किमादिभ्यस्थाल्स्यात्स्वार्थे। तेन प्रकारेण तथा। यथा। १९७२ इदमस्थमुः। (५—३—२४) थालोऽपवादः। 'एतदो वाच्यः' (वा ३२३५)।

---

ऐषम इति। समसणि णकार इत्, सकारादकार उच्चारणार्थः। णित्त्वादादिवृद्धिः। 'परस्मादेद्यव्यहनि' इत्यपि भाष्यवाक्यम्। सप्तम्यन्ताद् एद्यविरिकारान्तः प्रत्ययः। 'इदमोऽश्भावो द्यश्च' इत्यपि भाष्यवाक्यम्। सप्तम्यन्ताद् अकारान्तो द्यप्रत्ययः। 'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् च' इत्यपि भाष्यवाक्यम्। प्रकारवचने थाल्। पञ्चम्यर्थे सप्तमीत्याह। प्रकारवृत्तिभ्य इति। सामान्यस्य भेदको विशेषः प्रकारः। यथा बहुभिः प्रकारैर्भुङ्क्ते इति विशेषैरिति गम्यते। सादृश्यं त्विह न गृह्यते सर्वथेत्यादौ तदप्रतीतेः। तेन प्रकारेणेत्यनन्तरं विशिष्ट इति शेषः। 'यथा हरिः तथा हरः' इत्यादौ यत्प्रकारवान् हरिः तत्प्रकारवान् हर इति बोधे सति हरिसदृशो हर इति फलति। तदभिप्रायेण यथाशब्दस्य सादृश्यार्थकत्वोक्तिः। इदमस्थमुः। इदंशब्दात्प्रकारवृत्तेः थमुप्रत्ययः स्यादित्यर्थः। प्रत्यये उकार उच्चारणार्थः। मकारस्य उपदेशे अन्त्यत्वाभावान्नेत्त्वम्। यद्यपि 'न विभक्तौ–' इति निषेधादेव मस्येत्त्वं न भवति। तथापि तदनित्यत्वज्ञापनार्थं मकारोच्चारणमित्याहुः।

---

फादावेतादेशः। सद्यः परुत्। निपातनाद्विषयविशेषो लभ्यत इत्याह अहनीति। सप्तम्यन्तस्याहन्शब्दस्यार्थे इत्यर्थः। तद्दर्शयति समानेऽहनीति। पर उदारी चेति। पर इत्यादेशः, उदारी प्रत्ययौ। प्रकारवचने थाल्। सामान्यस्य भेदको विशेषः प्रकारः। यथा ब्राह्मणसामान्यस्य माठरकाठकादय इति हरदत्तः। यद्यपि 'प्रकारे गुणवचनस्य' इत्यत्र सादृश्यं प्रकारस्तथापि नेह सादृश्यं गृह्यते अनभिधानात्। 'अव्ययं विभक्ति–' इति सूत्रे सादृश्यमपि यथाशब्दार्थ इत्युक्तम्, इह तु केवलस्य थाल्प्रत्ययस्य सादृश्यं नार्थः किं तु प्रकार एवेत्युक्तमिति नास्ति पूर्वापरविरोध इति बोध्यम्। तेन प्रकारेण तथेति। प्रथमान्तात्तु न भवति स प्रकारस्तथेति, अनभिधानादेवेति भावः। किं सर्वनामबहुभ्यो विशेषविहितेनापि थाला जातीयर् न बाध्यते अर्थभेदात्। प्रकारे हि थाल्। जातीयर् तु तद्वति स्वभावात्। एवं च कृत्वा प्रकारमात्रे थालं विधाय तदन्तात्प्रकारवति जातीयरं प्रयुञ्जते। तथाजातीयो एवं-

...न एनेन वा प्रकारेण इत्थम् । १९७३ किमश्च । (५—३—२५) केन प्रकारेण कथम् ।

इति तद्धितेषु प्राग्दिशीयप्रकरणम् ।

## अथ तद्धितेषु प्रागिवीयप्रकरणम् । ४० ।

१९७४ दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्व-स्ताति: । (५—३—२७) सप्तम्याद्यन्तेभ्यो दिशि रूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिप्रत्ययः स्यात् । १९७५ पूर्वाधरावराणामसि पुरधवश्चैषाम् । (५—३—३९) एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात्, तद्योगे चैषां क्रमात् 'पुर्' 'अध्' 'अव्' इत्यादेशाः स्युः । १९७६ अस्ताति च । (५—३—४०) अस्तातौ परे पूर्वादीनां पुरादयः स्युः । पूर्वस्याम् पूर्वस्याः, पूर्वा वा दिक् । 'पुरः'

...मिति । 'एतेतौ रथोः' इति प्रकृतेरिदम इदादेशः । एतच्छब्दात् थमुप्रत्यये 'एतद्' इति योगविभागाद् इदादेशः । किमश्च । प्रकारवृत्तेस्थमुरिति शेषः । ...मिति । 'किमः कः' इति कादेशः ।

इति तद्धितेषु प्राग्दिशीयानां विभक्तिसंज्ञकानां पूर्णोऽवधिः ।

अथ प्रागिवीयप्रकरणमारभ्यते । दिक्छब्देभ्यः । सप्तम्याद्यन्तेभ्य इति । ...सप्तमीपञ्चमीप्रथमान्तेभ्य इत्यर्थः । रूढेभ्य इति । शब्दग्रहणलभ्यमिदम् । अस्ता-... प्रत्यये इकार उच्चारणार्थः । तकारान्तः प्रत्ययः । 'संख्याया विधार्थे धा' ...ति सूत्रपर्यन्तमिदं सूत्रमस्तातिवर्जमनुवर्तते । अत्र विभक्तीनां दिगादीनां च न ...संख्यम्, व्याख्यानात् । पूर्वाधरावराणाम् । 'असि' इति लुप्तप्रथमाकम् । पुर्, अध्, अव् एषां द्वन्द्वात्प्रथमाबहुवचनम् । अस्तात्यर्थं इति । दिग्देशकालवृत्तिभ्य ...र्थः । अस्ताति च । 'अस्ताति' इति लुप्तसप्तमीकम् । 'अस्ताति' इति तका-... 'पूर्वाधरावराणाम्—' इति 'पुरधव' इति चानुवर्तते । ...नात् सप्तम्येकवचनं वा । 'पूर्वाधरावराणाम्—' इति 'पुरधव' इति चानुवर्तते ।

...नीयोऽन्यथाजातीय इति । अनेन एतेन वेति । द्वितीयान्तादपि थमुर्भवत्येव । ...मेतं वा प्रकारमापन्न इत्थंभूतः । अत्र च 'लक्षणेत्थंभूताख्यान—' इत्यादिसौत्र-...योगो लिङ्गम् । एतेन कथंभूतो व्याख्यातः । इत्थमिति । 'एतेतौ रथोः' इति ...म इतादेशः । 'एतदः' इति योगविभागादेतदोऽपि इनादेश इति भावः । ...किमश्च । योगविभागः 'था हेतौ च छन्दसि—' इत्युत्तरसूत्रे किम एवानुवृत्तिर्यथा ...दिदमो मा भूदिति ।

इति तत्त्वबोधिन्यां प्राग्दिशीयप्रकरणम् ।

दिग्देशकालेष्विति । यथासंख्यमत्र नेष्यते अस्वरितत्वात् । पुरः ...स्तादिति । कथं तर्हि 'पश्यामि तामित इतः पुरतश्च पश्चात्' इति भवभूतिः, ...'पुरः पुरतोऽग्रतः' इत्यमरः, 'पुरतः प्रथमे चाग्रे' इति विश्वश्च । समानकालीनं ...कालीनमित्यादिवत्प्रामादिकमेवेति बहवः । केचित्तु 'दक्षिणोत्तराभ्यां तसुज्विधि-... सिद्धौ अतसुच्' इत्यकारोच्चारणमन्यतोऽपि विधानार्थम् । तेन पुरत इति सिध्यति ।

पुरस्तात् । अधः, अधस्तात् । अवः । १९७७ विभाषाऽवरस्य । (५—३—४१) अवरस्यास्तातौ परेऽव् स्याद्वा । अवस्तात्, अवरस्तात् । एवं देशे काले च । 'दिगि-रूढेभ्यः' किम्—ऐन्द्र्यां वसति । 'सप्तम्याद्यन्तेभ्यः' किम्—पूर्वं ग्रामं गतः । 'दिगादिवृत्तिभ्यः' किम्—पूर्वस्मिन्गुरौ वसति । 'अस्ताति च' (सू १९७६) इति ज्ञापकादसिरस्तातिं न बाधते । १९७८ दक्षिणोत्तराभ्यामतसुच् । (५—३—२८) अस्तातेरपवादः । दक्षिणतः, उत्तरतः । १९७९ विभाषा परावराभ्याम् । (५—३—२९) परतः । अवरतः । परस्तात् । अवरस्तात् । १९८० अञ्चेर्लुक् । (५—३—३०) अञ्चत्यन्ताद्दिक्छब्दादस्तातेर्लुक्स्यात् । 'लुक्तद्धितलुकि' (सू १४०८) । प्राच्यां प्राच्याः प्राची वा दिक् प्राक् । उदक् । एवं देशे काले च । १९८१ उपर्युपरिष्टात् । (५—३—३१) अस्तातेर्विषये ऊर्ध्व-शब्दस्योपादेशः स्यात्, रिल्, रिष्टातिलौ च प्रत्ययौ । उपरि, उपरिष्टाद्वा वसति,

---

तदाह अस्तातावित्ति । यद्यपि सूत्रक्रमे 'पूर्वाधर—' इति 'अस्ताति च' इति च 'संख्याया विधार्थे—' इत्यतः प्राक् पठितम् । तथापि अस्तातौ पुराद्यादेशविधानाय 'अस्ताति च' इति सूत्रमुपन्यसनीयम् । तत्रानुवृत्तिप्रदर्शनाय 'पूर्वाधर—' इत्यपि सूत्रमिहैवोपन्यस्तम् । पुर इति । पूर्वशब्दाद् असिप्रत्ययः प्रकृतेः पुर् आदेशः । पुरस्तादिति । पूर्वशब्दाद् अस्तातिप्रत्ययः प्रकृतेः पुर् आदेशः । अधः, अधस्तादिति । अधरशब्दाद् असिप्रत्यये अस्तातिप्रत्यये च प्रकृतेः अध् आदेशे रूपम् । अव इति । अवरशब्दाद् असिप्रत्यये प्रकृतेः अव् आदेशे रूपम् । विभाषाऽवरस्य । 'अस्ताति च' इति पूर्वसूत्राद् 'अस्ताति' इत्यनुवर्तते । तदाह अवरस्येति । एवमिति । पूर्वस्मिन् पूर्वस्मात् पूर्वो वा देशः, कालो वा पुरः, पुरस्तादित्यादि । पूर्वस्मिन्गुराविति । पूर्वकालिकाध्यापनकर्तरीत्यर्थः । ननु 'दिक्छब्देभ्यः' इति सामान्यविहितस्य परादिशब्देषु सावकाशस्य अस्तातेः पूर्वाधरा-वरशब्देषु असिना विशेषविहितेन बाधः स्यादित्यत आह अस्ताति चेतीत्यादि । दक्षिणोत्तराभ्याम् । दिग्देशकालवृत्तिभ्यामिति शेषः । दक्षिणतः, उत्तरत इति । नच तसुजेव प्रत्ययोऽस्तु । दिग्वर्तित्वे तु 'सर्वनाम्नो वृत्तिमात्रे—' इति पुंवत्त्वेन दक्षिणत इत्यादि सिद्धमिति वाच्यम्, स्पष्टार्थत्वात् । अत एव भाष्ये अकारः प्रत्याख्यातः । केचित्तु अकारोच्चारणमन्यतो विधानार्थम् । तेन पुरत इति सिद्ध-मित्याहुः । समानकालीनमित्यादिवत् पुरत इति प्रामादिकमेवेति बहवः । विभाषा । अतसुजिति शेषः । पक्षे अस्तातिः । अञ्चेर्लुक् । प्राच्यामिति । लिङ्गविशिष्ट-परिभाषया अस्तातेर्लुक् । उपर्युपरिष्टात् । 'ऊर्ध्वस्य उपभावः रिल्प्रत्ययो रिष्टातिल्प्रत्ययश्च' इति भाष्यम् । तदाह अस्तातेर्विषये इत्यादिना । वसति,

---

'पुर अग्रगमने' क्विपि पुर् । 'र्वोः' इति दीर्घस्तु न भवति भत्वात् । न च अतसुचः शित्त्वेऽप्यकारोच्चारणं पक्षे आद्युदात्तत्वार्थमिति वाच्यम्, बहूनां प्रयोगानुरोधेनान्यतो विधानार्थमिति कल्पनस्यैव न्याय्यत्वादित्याहुः । यथासंख्यत्वानाश्रयणात् पुरस्ताद्वसति पुरस्तादागतः । पुरस्ताद्रमणीयम् । अधस्ताद्वसति, अधस्तादागत इत्यादि सिध्यति ।

गतः, रमणीयं वा । १९८२ पश्चात् (५—३—३२) अपरस्य पश्चभाव आतिश्च प्रत्ययोऽस्तातेर्विषये । १९८३ उत्तराधरदक्षिणादातिः । (५—३—३४) उत्तरात् । अधरात् । दक्षिणात् । १९८४ एनबन्यतरस्यामदूरेऽपञ्चम्याः । (५—३—३५) उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये पञ्चमीं विना । उत्तरेण । अधरेण । दक्षिणेन । पक्षे यथास्वं प्रत्ययाः । इह केचिदुत्तरादीननु- वर्त्य दिक्छब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् । १९८५ दक्षिणादाच् । (५—३—३६) अस्तातेर्विषये । दक्षिणा वसति । 'अपञ्चम्याः' इत्येव । दक्षिणादागतः । १९८६ आहि च दूरे । (५—३—३७) दक्षिणाद् दूरे आहि स्यात् । चादाच् । दक्षिणाहि, दक्षिणा । १९८७ उत्तराच्च ।(५—३—३८) उत्तराहि, उत्तरा । १९८८ संख्याया विधार्थे धा । (५—३—४२) क्रिया- प्रकारार्थे वर्तमानात्संख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा । पञ्चधा । १९८९

---

गतः, रमणीयं वेति । विभक्तित्रयस्य यथासंख्यमुदाहरणम् । पश्चात् । अपरस्य पश्चभावः, आतिश्च प्रत्ययः' इति भाष्यवाक्यमिदम् । 'प्रत्यये इकार उच्चारणार्थः । उत्तराधर । आतिप्रत्यये इकार उच्चारणार्थः । अस्तातेरपवादः । एनबन्यतरस्याम् । 'अपञ्चम्या इति प्रागसेः' इति भाष्यम् । सूत्रक्रमे पूर्वा- धरा-' इत्यसिं वक्ष्यति । ततः प्रागित्यर्थः । उत्तरादिभ्य इति । 'उत्तराधरदक्षि- णात्' इत्यनुवर्तत इति भावः । अदूरे इत्येतद्व्याचष्टे अवध्यवधिमतोः सामीप्य इति । पञ्चमीं विनेति । पञ्चम्यन्तान्न भवतीत्यर्थः । यथास्वमिति । एनव- भावे पक्षे अस्तातिः असिः आतिश्चेत्यर्थः । दिक्छब्दमात्रादिति । अञ्चत्यन्तात्तु नेत्यर्थः व्यवस्थितविभाषाश्रयणात् । तेन प्राचेन ग्राममित्यादि न भवतीत्याहुः । दक्षिणादाच् । अस्तातेर्विषय इति । एतेन 'अदूरे' इति नानुवर्तत इति सूचि- तम् । एवंच आच्प्रत्यये, 'उत्तराधरदक्षिणात्' इत्यातिप्रत्यये, दक्षिणोत्तराभ्याम्--' इत्यतसुचि च त्रीणि रूपाणि । आहि च दूरे । दक्षिणाशब्दादिति । शेषः । चादा- जिति । तथा दूरे उक्तरूपत्रयेण सह चत्वारि रूपाणीति भावः । उत्तराच्च । आच् आहि चेति शेषः । अतसुचा आतिना च चत्वारि रूपाणि । संख्याया विधार्थे धा । विधाशब्दस्यार्थ प्रकारः विधार्थः । 'विधा विधौ प्रकारे च' इत्यमरः । सामान्यस्य भेदको विशेषः प्रकारः । स चाभिधानस्वभावात् क्रियाविषयक एव गृह्यते । तदाह क्रियाप्रकारेति । चतुर्धा पञ्चधेति । गच्छतीत्यादिक्रियापदमध्याहार्यम् । चतुष्प्र-

---

प्राच्यां प्राच्या इति । प्राच्यां दिशि वसति प्राग्वसति । प्राच्या दिश आगतः प्रागागत इत्यादि योज्यम् । पञ्चम्यतं विनेति । नेह उत्तरादागतः । अधरा- दागतः । उत्तरेणेत्यादि । वसति रमणीयं वा । पक्षे यथास्वमिति । दक्षिणतः । उत्तरतः । अधः । अधस्तात् । उत्तरात् । अधरात् । दक्षिणात् । संख्याया विधार्थे धा । विधाशब्दस्यार्थो विधार्थः । यद्यप्योदनपिण्डोऽपि विधाशब्देनोच्यते, तथापीह न गृह्यते । तेन एकगोविधेत्यादौ न भवति । इह हि 'विधायाम्' इति वक्तव्ये अर्थ- ग्रहणस्य प्रयोजनं विधाशब्दो यत्रार्थे प्रसिद्धस्तत्रैव यथा स्यात् । तादृशश्चार्थः

अधिकरणविचाले च । (५—३—४३) द्रव्यस्य संख्यान्तरापादने संख्याया धा स्यात् । एकं राशिं पञ्चधा कुरु । १९९० एकाद्धो ध्यमुञन्यतरस्याम् । (५—३—४४) एकध्यम्, एकधा । १९९१ द्वित्र्योश्च धमुञ् । (५—३—४५) आभ्यां 'धा' इत्यस्य धमुञ्स्याद्वा । द्वैधम्, द्विधा । त्रैधम्, त्रिधा । 'धमुञन्तात्स्वार्थे डदर्शनम्' (वा ३२३०) पथि द्वैधानि । १९९२ एधाच्च । (५—३—४६)

---

कारा गमनादिक्रियेति बोधः नवधा द्रव्यमित्यादावपि भवतीत्यादि क्रियापदमध्याहार्यम् । अधिकरणविचाले च । अधिकरणं द्रव्यम्, तस्य विचालो विचालनं संख्यान्तरापादनम् । तदाह द्रव्यस्येति । संख्यान्तरापादनं च न्यूनसंख्यस्य अधिकसंख्याकरणम् अधिकसंख्यस्य न्यूनसंख्याकरणं च । आद्ये उदाहरति एकं राशिं पञ्चधा कुर्विति । द्वितीये तु अनेकमेकधा कुर्वित्युदाहार्यम् । इह राशिविषयक एव प्रकारो गम्यते न तु क्रियाप्रकार इति सूत्रारम्भः । एकाद्धो ध्यमुञन्यतरस्याम् । 'एकात्' 'धः' इति छेदः । धाशब्दस्य 'धः' इति षष्ठ्येकवचनम् । एकशब्दात्परस्य धाप्रत्ययस्य ध्यमुञादेशः स्यादित्यर्थः । ऐकध्यमिति । नच एकशब्दाद् ध्यमुञ् प्रत्ययः स्वतन्त्रो विधीयताम् । न तु धाप्रत्ययस्यादेश इति वाच्यम्, तथा सति अधिकरणविचाल एव संनिहितत्वादापत्तेः । द्वित्र्योश्च धमुञ् । षष्ठी पञ्चम्यर्थे । 'धः' इति 'अन्यतरस्याम्' इति चानुवर्तते । तदाह आभ्यामिति । परस्येति शेषः । धमुञन्तादिति । वार्तिकमिदम् । दृशिग्रहणात् क्वचिदेवायम् । पथि द्वैधानीति । तृणानीति शेषः । द्वैधमित्यस्माद् डप्रत्यये टिलोपे रूपम् । नच 'तसिलादयः प्राक् पाशपः' इति डप्रत्ययान्तस्याप्यव्ययत्वं शङ्क्यम्, स्वभावतः सत्त्ववचनत्वेनाव्ययत्वासंभवाद् 'द्वैधानि' इति भाष्यप्रयोगाच्च । एधाच्च । द्वित्रिभ्यां परस्य धाप्रत्ययस्य एधाजित्यादेशः स्यादित्यर्थः । 'पञ्चम्यास्तसिल्' इत्यारभ्य 'एधाच्च' इत्यन्तैर्विहित-

---

प्रकार एव, स च क्रियाविषयक एव गृह्यते अभिधानस्वभावात्तदाह क्रियाप्रकारे वर्तमानादिति । कथं तर्हि 'नवधा द्रव्यम्, बहुधा गुणः' इत्यादि । अत्रापि ह्यश्रुता क्रिया प्रतीयते 'उपदिश्यते, इति वा, भवति इति वा' हरदत्तः । अधिकरणविचाले च । अधिकरणं द्रव्यम्, विचलनं विचालोऽन्यथाकरणम् णिजन्तादेरच् । तच्चेह संख्यासंनिधानात्संख्यान्तरापादनमिति व्याचष्टे द्रव्यस्येत्यादिना । संख्यान्तरापादनं हि एकस्यानेकीकरणम्, अनेकस्य च एकीकरणम् । तत्राद्ये उदाहरणम् एकं राशिं पञ्चधेति । पञ्च राशीन् कुर्वित्यर्थः । द्वितीये तु अनेकम् एकधा कुर्वित्युदाहर्तव्यम् । इह क्रियाविषयकप्रकारो न गम्यत इति सूत्रारम्भः । एकाद्धो । शब्दप्रधानत्वात्सर्वनामकार्याभावः । इह प्रकरणादेव सिद्धे पुनर्धाग्रहणं विधार्थे विहितस्यापि यथा स्यात् । 'अनन्तरस्य—' इति न्यायेनाधिकरणविचाले विहितस्यैव हि प्राप्नोतीति वृत्तिपदमञ्जर्योः स्पष्टम् । एतेन स्वतन्त्र एव ध्यमुञ् प्रत्ययोऽस्त्वित्याशङ्का परास्ता । ऐकध्यमिति । विधार्थे ऐकध्यं भुङ्क्ते । अधिकरणविचाले तु ऐकध्यं राशिं कुर्वित्यादि ज्ञेयम् । एवमग्रेऽपि द्वैधमित्यादौ योज्यम् । एधाच्च । द्विभ्योः संबन्धिनो

ज्ञा । श्रेधा । १९९३ याप्ये पाशप् । (५—३—४७) कुत्सितो भिषग् भिषक्पाशः । १९९४ पूरणाद्भागे तीयादन् । (५—३—४८) द्वितीयो भागो द्वितीयः । तृतीयः । स्वरे विशेषः । 'तीयादीकक्स्वार्थे वा वाच्यः' (वा २६९१)। द्वैतीयीकः, द्वितीयः । तार्तीयीकः, तृतीयः । 'न विद्यायाः' (वा २६९२) । द्वितीया, तृतीया विद्येत्येव । १९९५ प्रागेकादशभ्योऽच्छन्दसि । (५—३—४९) पूरणप्रत्ययान्ताद्भागेऽन् । चतुर्थः । पञ्चमः १९९६ षष्ठाष्टमाभ्यां ञ च । (५—३—५०) चादन् । षष्ठो भागः षाष्ठः, षष्ठः । आष्टमः, अष्टमः । १९९७ मानपश्वङ्गयोः कन्लुकौ च । (५—३—५१) षष्ठाष्टमशब्दाभ्यां क्रमेण कन्लुकौ स्तो माने पश्वङ्गे च वाच्ये । षष्ठको भागो मानं चेत् । अष्टमो भागः पश्वङ्गं चेत् । अस्यानो वा लुक् । चकाराद्यथाप्राप्तम् । षष्ठ, षाष्ठः । अष्टमः,

---

प्रत्ययान्तानामव्ययत्वम् । याप्ये पाशप् । याप्यः कुत्सितः 'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः' इत्यमरः । कुत्सिते विद्यमानात् स्वार्थे पाशप् स्यादित्यर्थः । प्रवृत्तिनिमित्तकुत्सायामिदम् । अप्रवृत्तिनिमित्तकुत्सायामपि कुत्सित इति वक्ष्यमाणं भवतीति भाष्ये स्पष्टम् । पूरणाद्भागे । पूरणार्थकतीयप्रत्ययान्ताद् भागे विद्यमानात्स्वार्थे अन् स्यादित्यर्थः । अन्विधेः प्रयोजनमाह स्वरे विशेष इति । 'ञ्नित्यादिर्नित्यम्' इति स्वरे इत्यर्थः । तीयादीकगिति । वार्तिकमिदम् 'दृष्टं साम' इति सूत्रभाष्ये स्थितम् । न विद्याया इति । वार्तिकमिदमपि तत्रैव स्थितम् । विद्यावृत्तेः तीयप्रत्ययान्तादीकक् नेत्यर्थः । प्रागेकादशभ्यः । शेषपूरणेन सूत्रं व्याचष्टे पूरणप्रत्ययान्ताद् भागे अनिति । द्वितीयतृतीयशब्दाभ्यां पूर्वसूत्रेण सिद्धत्वाच्चतुर्थादिदशमशब्दपर्यन्तविषयकमिदमित्यभिप्रेत्योदाहरति चतुर्थ इति । नचानेनैव सिद्धत्वात्पूर्वसूत्रं किमर्थमिति शङ्क्यम्, तस्य छन्दस्यपि प्रवृत्त्यर्थत्वात् । षष्ठाष्टमाभ्यां ञ च । पूर्वसूत्रविषये इति शेषः । 'ञ' इति लुप्तप्रथमाकम् । ञे आदिवृद्धिः । अवनिति । इह न यथासंख्यम्, व्याख्यानात् । मानपश्वङ्गयोः । अस्य अनो वेति । अष्टमशब्दात्पूर्वसूत्रविहितस्य ञप्रत्ययस्य अन्प्रत्ययस्य च अनेन लुगित्यर्थः । चकाराद्यथाप्राप्तमिति । ञप्रत्ययः अन्प्रत्ययश्चेत्यर्थः । ननु समर्थानाम्–' इत्यतो वाग्रहणानुवृत्त्यैव अनोरभावे सति पश्वङ्गे अष्टमो भाग इत्यस्य सिद्धेरिह

---

पाप्रत्ययस्य एधाच् स्यात । योगविभागो यथासंख्यनिरासार्थः । याप्ये पाशप् । 'कुत्सिते' इत्यत्रैव नायं विहितः, तिङन्तादपि प्रसङ्गात् । पूरणाद्भागे । पूरणार्थात्तीयप्रत्ययः पूरणशब्देनोक्तः । पूरणग्रहणं चोत्तरार्थम् । न ह्यपूरणस्तीयप्रत्ययोऽस्ति । मुखतीयः पार्श्वतीय इत्यत्र त्वनर्थकत्वान्नातिप्रसङ्गः । भाग इति एकत्वं विवक्षितम् । तेन समानेऽप्यर्थे विभक्तौ विवक्षितायां चतुर्थी पञ्चमीत्येव भवति । 'प्रागेकादशभ्यः' इत्यनि सति तु टापि चतुर्थी पञ्चमेति प्रसज्येत । एकादाकिनिच्च । असहायवाचिन एकशब्दादाकिनिच् स्यात् । कन्लुकाविति । आकिनिचः कनो पक्षे लुक् । तयोरेवानेन सूत्रेण विधानात् । असहायग्रहणं संख्याशब्दनिरासार्थमन्यथा प्रसिद्धत्वात्संख्याप्रकरणाच्च तस्यैव ग्रहणं स्यात् । इष्टापत्तौ तु द्वित्वे बहुत्वे च

आष्टमः । महाविभाषया सिद्धे लुग्वचनं पूर्वत्र ञानौ नित्याविति ज्ञापयति । १९९८ एकादाकिनिच्चासहाये । (५—३—५२) चात्कन्लुकौ । एकाकी, एकक:, एकः । १९९९ भूतपूर्वे चरट् । (५—३—५३) आढयो भूतपूर्व आढयचरः । २००० षष्ठ्या रूप्य च । (५—३—५४) षष्ठयन्ताद्भूतपूर्वेऽर्थे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः, कृष्णचरः । तसिलादिषु रूप्यस्यापरिगणितत्वान्न पुंवत् । शुभ्राया भूतपूर्वः शुभ्रारूप्यः । २००१ अतिशायने तमबिष्ठनौ । (५—३—५५) अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ

---

लुग्विधानं व्यर्थमित्याशङ्कयाह महाविभाषयेति । पूर्वत्रेति । 'षष्ठाष्टमाभ्यां ञ च' इति सूत्रे इत्यर्थः । एवं षष्ठाष्टमाभ्यां शब्दाभ्यां ञानोरिह नित्यं प्राप्तयोः कदाचिल्लुग्विधिरर्थवानित्यर्थः । एकादाकिनिच्चासहाये । असहायवाचकादेकशब्दात्स्वार्थे आकिनिच्प्रत्ययः स्यादित्यर्थः । भूतपूर्वे चरट् । भूतपूर्वे वर्तमानात्प्रातिपदिकात् स्वार्थे चरट् स्यादित्यर्थः । षष्ठ्या रूप्य च । रूप्येति लुप्तप्रथमाकम् । 'भूतपूर्वे' इत्यनुवर्तते । षष्ठयन्ताद् भूतपूर्वेऽर्थे इति । भूतपूर्वेऽर्थे विद्यमानात् षष्ठयन्तादित्यन्वयः । 'भूतपूर्वे' इत्यनुवृत्तं हि श्रुतत्वात् षष्ठ्या विशेषणम् । भूतपूर्वे सम्बन्धे या षष्ठी तदन्तात्स्वार्थे रूप्यः स्यादिति फलति । यथाश्रुते तु स्वार्थिकप्रकरणविरोधः । कृष्णरूप्य इति । भूतपूर्वगत्या कृष्णसम्बन्धी गौरित्यर्थः । शुभ्रारूप्यशब्दे 'तसिलादिषु—' इति पुंवत्त्वमाशङ्कय 'तसिलादयः प्राक् पाशपः' इत्यादिवार्तिकपरिगणितेषु रूप्यस्यानन्तर्भावात्तस्मिन्परे पुंवत्त्वं नेत्याह तसिलादिष्वित्यादि । शुभ्राया भूतपूर्व इति । गौरिति शेषः । शुभ्रारूप्य इति । भूतपूर्वगत्या शुभ्रासंबन्धी गौरित्यर्थः । अतिशायने । अतिपूर्वकः शीङ्धातुरुपसर्गवशादुत्कर्षे वर्तते । उत्कर्षश्चाधिक्यफलको न्यक्कारः, नत्वाधिक्यमात्रम्, तथा सति अकर्मकत्वापातात् । न चेष्टापत्तिः, तथा सति 'शुक्लमतिशेते शुक्लतरः, कृष्णमतिशेते कृष्णतरः' इत्यादिभाष्यविरोधात् । 'अतिशयिता अतिशायिनः, बाहुलकः कर्तरि ल्युट्' इति भाष्यम् ।

---

न स्यादेकाकिनौ एकाकिन इति । न हि द्वयोर्बहुषु वा एकत्वसंख्यास्ति । असहायत्वं तु परस्परातिरिक्तसहायाभावेन द्वयोर्बहूनामपि भवति । इह 'अकिनिच्' एवायं वक्तव्यः, सवर्णदीर्घेण सिद्धमिष्टम् । 'यस्येति च' इति लोपश्चाकारोच्चारणसामर्थ्यान्न भवतीत्यादि हरदत्तग्रन्थे स्थितम् । भूतपूर्वे । अत्र वर्तमानाच्चरट् स्यात् । 'गोष्ठात् खञ्' इत्यत्रैव नोक्तम् । विशेषविहितेन खञा चरटो बाधा मा भूदिति । संनिधौ हि सामान्यविशेषभावः स्फुटीभविष्यति । यद्यपि दूरस्थस्यापि बाधो न्याय्य एव तथापीह गौरवं स्वीकृत्य दूरे पाठसामर्थ्याद्बाधो नेति भावः । षष्ठ्या रूप्य च । भूतपूर्वं इत्यनुवर्तते । तच्च यद्यपि पूर्वत्र ङ्याप्प्रातिपदिकस्य विशेषणम्, तथापीह न तथा, षष्ठयन्तार्थस्य विशेषणत्वात्, तदाक्षिप्तस्य सम्बन्धिनो गवादेः प्रधानत्वात् प्रधानेतरसंनिधौ च प्रधाने कार्यसंप्रत्ययस्य न्याय्यत्वात्तदेतदाह भूतपूर्वेऽर्थे रूप्यः स्यादिति । अतिशायने । अतिपूर्वाच्छेतेर्ल्युट् । अतिशयनमेवातिशायनम् । अस्मादेव निपातनाद्दीर्घः । ननु सौत्रः । तेन लोकेऽपि दीर्घः साधुः । अबाधकान्यपि निपातनानि भवन्ति ।

। अयमेषामतिशयेनाढ्य आढ्यतमः। लघुतमो लघिष्ठः। २००२ तिङश्च।
—३—५६) तिङन्तादतिशये द्योत्ये तमप्स्यात्। २००३ तरप्तमपौ घः।

एव निपातनाद्दीर्घः। अतिशायने इति प्रकृत्यर्थविशेषणम्। अतिशयितरि
मानात् प्रातिपदिकात् स्वार्थे तमप् इष्ठन् च स्यादित्यर्थः। फलितमाह
शयविशिष्टार्थवृत्तेरिति। यदि तु अतिशायनशब्दस्य भावल्ल्युडन्तत्वं
प्रत्ययार्थस्य प्राधान्यापत्तौ शुक्लतरादिशब्दात् शुक्लादिगतमतिशयनमिति बोधः
: नत्वतिशयितशुक्ल इति। तथा च शुक्लतरः शुक्लतरेति पुंस्त्वं स्त्रीत्वं च न
। अतिशायने वर्तमानादित्यर्थे तु अतिशयप्रकर्षादिशब्देभ्य एव स्यात्, नतु
ादिभ्यः। अतिशयविशिष्टे लक्षणया विद्यमानादित्यर्थे अतिशय्यमानादपि
ापत्तिः। अतिशयनकर्तरि लक्षणायां तु भाष्योक्तमेव साधु इत्यास्तां तावत्।
षामिति। द्वयोरेकस्य निर्धारणे तरबीयसुनावपवादौ वक्ष्येते। अतः
ेषाद्बहूनामेकस्य निर्धारणे अस्य तमपः प्रवृत्तिरिति भावः। अतिशयेनाढ्य
। द्रव्यस्य जातेर्वा स्वतः प्रकर्षयोगो नास्ति, अन्यथा घटतम इत्याद्यापत्तेः।
गुणद्वारैव द्रव्यजात्योः प्रकर्षयोगाः। तथा च आढ्यतम इत्यत्र उत्कर्षविशिष्ट
यः प्रकृत्यर्थः। तमप्तु तद्द्योतकः। तमपि सति 'सुपो धातु—' इति सुपो लुक्,
कालतनेषु—' इति योगेन सुबन्तादेव तद्धितोत्पत्तेरुक्तत्वात्। अत्र आतिशायनि-
त्ययान्तादातिशायनिकप्रत्ययोऽनभिधानान्न भवति। 'श्रेष्ठतमाय कर्मणे' इति तु
सिमिति भाष्ये स्पष्टम्। लघिष्ठ इति। लघुशब्दादिष्ठनि ओर्गुणे प्राप्ते
ेमेयस्सु' इत्यनुवृत्तौ 'टेः' इति टिलोपः। तिङश्च। अत्राप्रातिपदिकत्वादप्राप्ते
नम्। तमप् स्यादिति। 'अजादी गुणवचनादेव' इति नियमादिष्ठन्नानुवर्तत
 भावः। तरप्तमपौ घः। प्रथमस्य प्रथमपादे सूत्रमिदम्। आतिशायनिकप्रत्यय-
रणान्ते 'पितौ घः' 'तादी घः इति वा वक्तव्ये प्रकरणान्तरे पृथग्गुरुसूत्रकरणमत्य-
स्वार्थिकमपि तरपं ज्ञापयति। तस्य आतिशायनिकप्रकरणबहिर्भूतस्य सत्त्वे

 ह्रस्वोऽपि साधुः। यद्यपि केवलः शेतिः स्वप्ने वर्तते तथाप्यतिपूर्वः प्रकर्षे। प्रकर्षश्चात्र
धिक्यम्, किं त्वभिभवः। 'पूर्वान्महाभागतयातिशेषे' इति प्रयोगदर्शनात्। न चैवं
कर्षे तमबिष्ठनौ' इत्येव कुतो न सूत्रितमिति शङ्क्यम्। अतिशायनमिति निपातनार्थमेव
ोपत्वाद् अतिशयो न प्रत्ययार्थः। तथा हि सति लघोरतिशायनं लघुतममिति
ात्। प्रत्ययार्थस्य प्राधान्यात्। नापि प्रकृत्यर्थः। तथा हि सति प्रकर्षातिशयाति-
यनादिभ्य एव स्यात्, न त्वाढ्यादिभ्यः। किंतु प्रकृत्यर्थविशेषणम्। प्रत्ययस्तु द्योतक-
ेतदाह अतिशयविशिष्टेत्यादि। अयमेषामिति। द्व्यवयवे समुदाये यदा
कस्यातिशयो विवक्ष्यते, तदा तरबीयसुनावपवादौ वक्ष्येते। तथा च परिशेषाद्बहूनां
ध्ये यदा एकदेशस्य निर्धारणं सोऽस्य विषय इति भावः। आढ्यतम इति।
ुबन्तात्तमप्। 'सुपो धातु—' इति लुक्। यद्यपि 'ङ्याप्प्रातिपदिकात्' इत्येवानुवर्तते,
थापि सुबन्तपरतयैव व्याख्येयम्। अन्यथा हि पूर्वाह्णेतरां पूर्वाह्णेतमामित्यादौ
कालतनेषु कालनाम्नः' इति सप्तम्या अलुग्विधानं कथमुपपद्यताम्। तिङश्च।

(१—१—२२) एतौ घसंज्ञौ स्तः। २००४ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे (५—४—११) किम एदन्तात्तिङोऽव्ययाच्च यो घस्तन्तादामुः स्यान्न तु द्रव्यप्रकर्षे। कितमाम्। प्राह्णेतमाम्। पचतितमाम्। उच्चैस्तमाम्। द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः। २००५ द्विवचनविभज्योपपदे तरबीयसुनौ

---

तत्संग्रहणार्थं प्रकरणान्तरे सूत्रकरणस्यावश्यकत्वादित्याहुः। तेन 'अल्पाच्तरम्', 'लोपश्च बलवत्तरः' इत्यादि सिद्धम्। किमेत्तिङव्यय। 'आमु' इति छेदः। उकार उच्चारणार्थः। किम्, एत्, तिङ् अव्यय एषां चतुर्णां द्वन्द्वः। किमेत्तिङव्ययप्रकृतिको घः' इति मध्यमपदलोपी समासः। फलितमाह किम एदन्तादित्यादिना। एभ्य इत्यर्थः। कितमामिति। अत्यन्तस्वार्थिकोऽयं तमप्, नत्वतिशायने। एषामतिशयेनाढ्य इतिवदेषामतियेन क इति विग्रहस्यासंभवात्। जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं हि निर्धारणम्। किंशब्दश्च न जात्याद्यन्यतमप्रवृत्तिनिमित्तकः। एवं चात्रातिशयस्याप्रतीतेर्द्रव्यप्रकर्षो, दूरापास्त इति भावः। प्राह्णेतमामिति। प्राह्णः पूर्वाह्णः। 'प्राह्णापराह्णमध्याह्नाः त्रिसन्ध्यम्' इत्यमरः। अतिशयिते पूर्वाह्णे इत्यर्थः। पूर्वावयवगतप्रकर्षोऽह्नः प्रकर्षो बोध्यः। अत्र अहर्न द्रव्यम्। सूर्योदयादारभ्य सूर्यास्तमयावधिकस्यैव कालस्य अहन्शब्दार्थत्वात्। तस्य च उदादिक्रियाघटितत्वान्न द्रव्यत्वमिति भावः। पचतितमामिति। अतिशयिता पाकक्रियेत्यर्थः। तिङन्तेषु क्रियाविशेष्यकबोधस्यैव 'प्रशंसायां रूपप्' इति सूत्रभाष्ये प्रपञ्चितत्वात्। अतो क्रियाया एव प्रकर्षो नतु द्रव्यस्येति भावः। उच्चैस्तमामिति। आशंसतीत्यध्याहार्यम्। अतिशयेन उच्चैराशंसनादिक्रियेत्यर्थः। अत्रापि क्रियया एव प्रकर्षो न तु द्रव्यस्य। उच्चैस्तमस्तरुरिति। अतिशयेन उच्चैस्तरुरित्यर्थः। अत्र उच्चैस्त्वप्रकर्षस्तम तरौ द्रव्ये भानादाम् नेत्यर्थः। कितमामित्यादौ 'यस्येति च' इति लोपं परत्वाद् बाधित्वा ह्रस्वान्तलक्षणनुटो निवृत्त्यर्थमामु इत्युकारोच्चारणम्। सति तु तस्मिन् 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया नुड्विधावस्य न ग्रहणमित्यादि 'आमि सर्वनाम्नः—' इति सूत्रभाष्ये प्रपञ्चितम्। द्विवचन। उच्चैः

---

अस्मादिष्ठन्न भवति, 'अजादी गुणवचनादेव' इति नियमादित्याशयेनाह तमप्स्यादिति। तरप्तमपौ घः। अस्मिन्नेवातिशायनिकप्रकरणे 'तादौ घः' 'पितौ घः' इति वा वक्तव्ये प्रकरणान्तरे गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति तेन 'अल्पाच्तरम्', लोपश्च बलवत्तरः' इत्यादि सिद्धम्। अल्पाजेव ह्यल्पाचतरम्। न त्वत्र द्वयोरेकस्यातिशयविवक्षायां तरप्। अन्यथा 'शिवकेशवौ' इत्यादिसिद्धावपि 'शङ्खदुन्दुभिवीणाः' इत्यादि न सिध्येदित्याहुः। किमेत्। आमोऽकारो यदि त्यज्येत, तर्हि पचतितरामित्यादौ 'ह्रस्वनद्यापः—' इति नुटि पचतितराणामिति स्यात्। 'यस्येति च' इति लोपस्य परेण नुटा बाधात्। सिद्धान्ते तु 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया नुड्विधौ नास्य ग्रहणम्। द्विवचनविभज्योपपदे। द्वयोरर्थयोर्वचनं द्विवचनम्। करणे ल्युट्। कर्मणि षष्ठ्या समासः। येन पदेन द्वावर्थावुच्येते तद्

-३—५७) द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । अयमनयोरतिशयेन लघुः लघुतरः, लघीयान् । उदीच्याः ...रपवादः । ...ष्यः पटुतराः, पटीयांसः । २००६ अजादी गुणवचनादेव । (५—३—५८)

...ति वचनम् । द्वयोरर्थयोर्वचनं द्विवचनम् । द्व्यर्थप्रतिपादकमिति यावत् । न द्वि-...संज्ञकमिह गृह्यते व्याख्यानात् । विभक्तव्यं विभज्यम् । 'ऋहलोः–' इति ण्यतं ...त्वा निपातनाद्यत् । द्विवचनं च विभज्यं चेति समाहारद्वन्द्वः । द्विवचनविभज्यं ...उपपदं चेति कर्मधारयः । द्व्यर्थप्रतिपादके विभक्तव्यविषयके च उपपदे सतीति ...नम् । 'प्रातिपदिकात्' 'तिङ' इति चानुवर्तते । सुवन्तात्तद्धितोत्पत्तिरिति ...नात्सुवन्तत्वं प्रातिपदिकविशेषणं लभ्यते फलितमाह द्वयोरेकस्येत्यादिना । ...र्थो अन्यतरापेक्षया अतिशयविशिष्टस्वार्थवृत्तेः विभागप्रयोजकीभूतधर्मवाचकाच्च ...स्वार्थे तरबीयसुनौ स्त इति यावत् । यद्यप्यत्र द्वे सुबन्ततिङन्ते प्रकृती, द्वौ च ...तौ, तथा न यथासंख्यम्, व्याख्यानात् । अथ द्विवचनोपपदे उदाहरति ...नयोरिति । अत्र उपोच्चारितं पदम्, उपपदम्, नतु कृत्रिमम्, तद्धितविधौ तद-...वाद् धात्वधिकार एव तत्प्रवृत्तेरुक्तत्वात् । तच्चोपपदं विग्रहवाक्येऽवश्यं प्रयुज्यते । ...वृत्तौ तु गतार्थत्वान्नावश्यकम् । लघीयानिति । ईयसुनि नकार इत्, उकार ...रणार्थः, उगित्त्वान्नुम्, 'सान्त–' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ । अथ ...ज्योपपदे उदाहरति । उदीच्याः प्राच्येभ्य इति । 'पञ्चमी विभक्ते' इति

...वचनम् । विभक्तव्यं विभज्यम् । 'ऋहलोः–' इति ण्यति प्राप्ते तदपवादो यत् ...ात्यते । ण्यति तु 'चजोः–' इति कुत्वेन विभाग्यमिति स्यात् । विभाज्यशब्दस्य ...िप् प्रयुक्यस्य साधुत्वं चिन्त्यमिति हरत्तोक्तिश्चिन्त्या । ण्यन्ताद् 'अचो यत्' ...ति विभाज्यमिति रूपसिद्धेः । न चात्रार्थभेदः शङ्क्यः, निवृत्तप्रेषणाद् धातोः ...तेऽर्थे णिच्, इति 'णेरणौ–' इति सूत्रे व्युत्पादनादिति दिक् । द्विवचनं च विभज्यं ...ति द्वन्द्वः । तस्य उपपदेन । कर्मधारयः । तथा च द्व्यर्थवाचके विभजनीये चोपपदे ...त्यक्षरार्थः । द्विवचनान्ते उपपदे इति व्याख्यायां तु दन्तोष्ठस्य दन्ताः स्निग्धतरा ...ादि न सिध्यति । ननु द्वयोर्वचनं द्विवचनमिति पक्षेऽपि नेदं सिध्यति समाहार-...त्वाद् गुणभूतवर्तिपदार्थाश्रयणे तु द्वात्रिंशद्दन्ताः द्वावोष्ठाविति तेषां बहुत्वात्सुतरां ...सिध्येदिति चेत् । अत्राहुः वृत्तावभेदैकत्वसंख्यामुपाददति वर्तिपदानि । ततश्च ...स्ये परित्यागादभेदैकत्वसंख्यायाश्चोपादानाद्दन्तोष्ठलक्षणार्थद्वयं दन्तोष्ठशब्देनोच्यत ...ि नास्ति 'द्वयोर्वचनं द्विवचनमित्येतदर्थकद्विवचनोपपदे' इति पक्षे दोष इति । ...नरस्त्वाकरग्रथेभ्योऽवगन्तव्यः । अन्वर्थं चोपपदम् उपोच्चारितं पदमिति, न तु ...ित्रमम्, तद्धितविधौ तस्यासंभवात् । तच्च विग्रहवाक्य एव प्रयुज्यते । वृत्तौ तु ...ार्थत्वान्नावश्यकम् एवं स्थिते उपपदग्रहणं स्पष्टार्थम् । इह द्वे उपपदे द्वे च ...सुबन्ततिङन्तरूपे प्रकृती द्वौ च प्रत्ययौ तथापि यथासंख्यं नेष्यते । द्विवचनोपपदमु-...दाहरति अनयोरिति । लघीयानिति । टेः' इति लोपः । उगित्त्वान्नुम् । ...ान्महतः–' इति दीर्घः । हल्ङ्यादिसंयोगान्तलोपौ । विभज्योपपदमुदाहरति

इष्ठन्नीयसुनौ गुणवचनादेव स्तः । प्रथिष्ठः, प्रथीयान् । नेह—पाचकतरः, पाचकतमः । **२००७ तुश्छन्दसि ।** (५—३—५९) तृन्तृजन्तादिष्ठन्नीयसुनौ स्तः । **२००८ तुरिष्ठेमेयःसु ।** (६—४—१५४) तृशब्दस्य लोपः स्याद् इष्ठेमेयस्सु परेषु । अतिशयेन कर्ता करिष्ठः । दोहीयसी धेनुः । **२००९ प्रशस्यस्य श्रः ।**

---

पञ्चमी । द्विवचनसंज्ञकग्रहणे तु 'दन्ताः स्निग्धतराः' इति न सिध्येत् । 'बहुषु पुत्रेषु एतदुपपन्नं भवति अयं मे ज्येष्ठः, अयं मे मध्यमः, अयं मे कनीयान्' इति 'आद्यन्तवत्—' सूत्रस्थभाष्यप्रयोगाद् 'नैर्देशिकानां वार्त्ततरका' इति 'तस्मिन्' इति सूत्रभाष्यप्रयोगाच्च अद्व्यर्थोपपदेऽपि तरबीयसुनावित्याहुः । अजादी । तरप्तमपौ इष्ठन्नीयसुनौ चेति चत्वारः प्रत्यया अनुक्रान्ताः । तेषां मध्ये यौ अजादी इष्ठन्नीयसुनौ तावित्यर्थः । तदाह इष्ठन्नीयसुनाविति । पाचकतरः, पाचकतम इति । क्रियाशब्दत्वादाभ्यामिष्ठन्नीयसुनौ नेति भावः । गुणवचनादजादी एवेति विपरीतनियमव्यावृत्त्यर्थं एवकारः । तेन पटुतरः पटुतम इत्यादि सिद्धम् । तुश्छन्दसि । तृ इत्यस्य तुरिति पञ्चम्येकवचनम् । तृ इत्यनेन तृनतृचोः सामान्ये ग्रहणम् । प्रत्ययत्वात्तदन्तग्रहणम् । अजादी इत्यनुवर्तते । तदाह तृन्तृजन्तादिति । अगुणवचनादपि तृप्रत्ययान्तात् प्राप्त्यर्थमारम्भः । एवं च पूर्वेण नियमेन व्यावर्तितयोः प्रतिप्रसवोऽयं नत्वपूर्वो विधिरिति सूचयितुं छान्दसमप्यत्रोपन्यस्तम् । तथा च अगुणवचनादपि कर्तृशब्दादिष्ठन्प्रत्यये कर्तृ इष्ठ इति स्थिते 'इष्ठेमेयस्सु' इति विहिते टिलोपे प्राप्ते । तुरिष्ठेमेयःसु । तृ इत्यस्य तुरिति षष्ठ्येकवचनम् । । एष्विति । इष्ठन्, इमन्, ईयसुन् इत्येतेष्वित्यर्थः । अयं लोप सामर्थ्यात्सर्वादेशः, अन्त्यस्य ऋकारस्य 'टेः' इत्येव सिद्धेः । करिष्ठ इति । अयमनयोरतिशयेन कर्तेत्यर्थः । दोहीयसी धेनुरिति । इयमनयोरतिशयेन दोग्ध्रीत्यर्थः । इष्ठनि 'भस्याढे—' इति पुंवत्त्वे ङीपो निवृत्तौ तृप्रत्ययस्य लोपे परनिमित्ताभावाद्, 'दादेः—' इति घत्वस्य निवृत्तौ उगित्त्वाद् ङीपि दोहीयसीति रूपम् । 'पुगन्त—' इति गुणस्तु न निवर्तते । लुप्तेऽपि तृचि प्रत्ययलक्षणेन

---

प्राच्येभ्य इति । 'पञ्चमी विभक्ते' इति पञ्चमी कथं तर्हि 'पटुर्भवान् पटुरासीत् ऐषमस्तु पटुतरः' इति । अत्राहुः—एकस्यापि धर्मिणस्तत्कालस्थत्वादिरूपधर्मभेदेन भेदाध्यारोपात्प्रतियोग्यपेक्षस्तत्कालस्थप्रकर्षस्तदाश्रयश्चेह तरप्प्रत्यय इति । व्यपदिशन्ति च—'अन्य एवासि संवृत्तः', 'कच्चित्स एवासि धनंजयस्त्वम्' इति । अजादी गुणवचनादेव । इष्टतोऽवधारणार्थ एवकारः । तेन प्रत्ययनियमोऽयम् । एवकाराभावे तु गुणवचनादजादिप्रत्ययावेवेति प्रकृतिनियमोऽपि संभाव्येत । तथा च पटुतरः, पटुतम इत्यादि न सिध्येत् । तुश्छन्दसि । पूर्वेण नियमेन व्यावर्तितयोः प्रतिप्रसवोऽयम्, नत्वपूर्वो विधिः । तेन उपाधिसंकरो न । तुरिष्ठे । 'टेः' इत्यनेनान्त्यलोपे सिद्धेऽप्यारम्भसामर्थ्यात्सर्वस्य तृशब्दस्य लोपस्तदाह करिष्ठ इति । दोहीयसीति । इयमनयोरतिशयेन दोग्ध्री 'भस्याढे तद्धिते' 'सिद्धश्च प्रत्ययविधौ' इति वचनात् तद्धिते कर्तव्य प्रागेव पुंवद्भाव इति ङीपि निवृत्ते दोग्धृशब्दात्प्रत्ययः, तत्र तृचि निवृत्ते निमित्ताभावाद् [illegible] अलौकिकविग्रहवाक्ये

-३-६०) अस्य श्रादेशः स्यादेशः स्यादाजद्योः। २०१० प्रकृत्यैकाच्। (६-४-१६३) इष्ठादिष्वेकाच्प्रकृत्या स्यात्। श्रेष्ठः, श्रेयान् २०११ ज्य च। (५-३-६१) प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः। ज्येष्ठः। २०१२ ज्यादादीयसः। (६-४-१६०) 'आदेः परस्य' (सू ४४) ज्यायान्। २०१३ वृद्धस्य च। (५-३-६२) ज्यादेशः स्यादजाद्योः। ज्येष्ठः, ज्यायान्। २०१४ अन्तिक-बाढयोर्नेदसाधौ। (५-३-६३) अजाद्योः। नेदिष्ठः, नेदीयान्। साधिष्ठः, साधीयान्। २०१५ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य

...त्वात्। प्रशस्यस्य श्रः। अजाद्योरिति। इष्ठन्नीयसुनोरित्यर्थः। 'अजादी' अनुवृत्तं सप्तम्या विपरिणम्यत इति भावः। प्रशस्यशब्दस्य क्रियाशब्दतया गुण-वचनत्वाभावेऽपि अत एव ज्ञापकादिष्ठन्नीयसुनौ। श्र इष्ठ, श्र ईयस् इति स्थिते ...मेयःसु विहितटिलोपे प्राप्ते। प्रकृत्यैकाच्। एकः अच् यस्येति बहुव्रीहिः। ...आदिष्विति। 'तुरिष्ठेमेयःसु' इत्यतः तदनुवृत्तेरिति भावः। 'अल्लोपोऽनः' ...नद्धिते, यस्येति च, टेः' इत्यादेरेतत्प्रकरणस्थलोपस्यायं प्रकृतिभाव इति भाष्ये ...स्पष्टम्। श्रेष्ठः, श्रेयानिति। अयमनयोरतिशयेन प्रशस्य इत्यर्थः। ज्य च। ...' इति लुप्तप्रथमाकम्। 'प्रशस्यस्य' इति 'अजादी' इति चानुवर्तते। तदाह ...शस्यस्येति। ज्येष्ठ इति। 'प्रकृत्यैकाच्' इति प्रकृतिभावान्न टिलोपः। ईयसुनि ...आदेशे ज्येयानिति प्राप्ते। ज्यादादीयसः। ज्यात् आत् इति छेदः। ज्यात् ...स्य ईयस आकारः स्यादित्यर्थः। अन्तादेशत्वे प्राप्ते आह आदेः परस्येति। ...वृद्धस्य च। शेषपूरणेन सूत्रं व्याचष्टे ज्यादेशः स्यादजाद्योरिति। इष्ठ-...नीयसुनोरित्यर्थः। ज्येष्ठ इति। अयमनयोरतिशयेन वृद्ध इत्यर्थः। अन्तिक-...बाढयोः। अजाद्योरिति। शेषपूरणमिदम्। अन्तिक, बाढ अनयोः इष्ठेयसुनोः ...रतः नेद, साध एतावादेशौ स्त इत्यर्थः। नेदिष्ठः, नेदीयानिति। अयमनयो-रतिशयेनान्तिक इत्यर्थः। साधिष्ठः, साधीयानिति। अयमनयोरतिशयने बाढ ...इत्यर्थः वाढो भृशः। 'भृशप्रतिज्ञयोर्बाढम्' इत्यमरः। 'अतिवेलभृशात्यर्थातिमात्रो-...द्गाढनिर्भरम्' इति च। स्थूलदूर। एषामिति। स्थूल, दूर, युवन्, ह्रस्व, क्षिप्र,

...णैव तयोरप्रवृत्तिः 'अकृतव्यूह-' परिभाषयेति तु तत्त्वम्। गुणस्तु प्रवर्तते। लुप्तेऽपि ...पि प्रत्ययलक्षणध्रौव्यात्। छान्दसमपि 'तुः-' इति सूत्रम्, इति, 'तुरिष्ठेमेयःसु' इति ...'णाविष्ठवत्' इत्यतिदेशेन लोकेऽपि कर्तारमाचष्टे कारयतीत्यादावुपयोक्ष्यमाणत्वा-...द्दोपेत्यस्तम्। प्रशस्यस्य श्रः। 'अजादी' इत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह ...अजाद्योरिति। अजाद्योः किम्, प्रशस्यतरः। प्रशस्यतमः। श्रेष्ठ इति। प्रकृति-भावादिह 'टेः' इति लोपो 'यस्येति-' लोपश्च न भवति। ज्यादात्। ज्यादुत्तरस्य ईयसुन आकारादेशः स्यात्। वृद्धस्य च। स्वरूपस्येह ग्रहणम्, न तु 'वृद्धिर्यस्याचा-मादिः-' इति पारिभाषिकस्य, व्याख्यानात्। अस्य 'प्रियस्थिर-' इत्यादिना वर्षा-देशोऽपि पक्षे भवति। न च तस्येमनिचि सावकाशता शङ्क्या, वृद्धशब्दादिमनिचोऽ-भावात्। यदि तु 'वृद्धस्य वर्षिश्च' इतिसूत्रमिहैव क्रियेत, तदा द्विर्वृद्धग्रहणं न कर्तव्य-

च गुणः । (६—४—१५६) एषां यणादिपरं लुप्यते, पूर्वस्य च गुण इष्ठादिषु । स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवम् ईयस् । ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वात् ह्रसिमा । क्षेपिमा । क्षोदिमा ।

२०१६ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः । (६—४—१५७) प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु । प्रेष्ठः । स्थेष्ठः । स्फेष्ठः । वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः ।

---

क्षुद्र इत्येतेषामित्यर्थः । यणादीति । यण् आदिर्यस्येति विग्रहः । परमिति यणादीत्यस्य विशेषणम्, परभूतं यणादीत्यर्थः । लुप्यत इति । 'अल्लोपोऽनः' इत्यतोऽनुवृत्तं लोपपदमिह कर्मणि घञन्तमाश्रीयत इत्यर्थः । भावसाधनत्वे परमित्यनेन सामानाधिकरण्यासंभवात् । पूर्वस्येति । पूर्वत्वं यणपेक्षया बोध्यम् । इष्ठादिष्विति 'तुरिष्ठेमेयस्सु' इत्यतस्तदनुवृत्तेरिति भावः । स्थविष्ठ इति । स्थूलशब्दादिष्ठनि ल इत्यस्य लोपे ऊकारस्य गुण ओकारः, अवादेश इति भावः । ओर्गुणस्तु न प्रवर्तते, यणादिलोपस्याभीयत्वेनासिद्धत्वात् । एवमग्रेऽपि । दविष्ठ इति । दूरशब्दादिष्ठनि र इत्यस्य लोपे ऊकारस्य गुणे अवादेशः । यविष्ठ इति । युवन्शब्दादिष्ठनि वन्नित्यस्य लोपे ऊकारस्य गुणे अवादेशः । परमित्यनुक्तौ यु इत्यस्यापि यणादेर्लोपः स्यात् । ह्रसिष्ठ इति । ह्रस्वशब्दादिष्ठनि व इत्यस्य लोपः । परमित्यनुक्तौ अत्र रादेर्लोपः स्यात् । क्षेपिष्ठ इति । क्षिप्रशब्दादिष्ठनि र इत्यस्य लोपे इकारस्य गुणः । 'इको गुणवृद्धी' इत्युक्तेः न अकारस्य गुणः । क्षोदिष्ठ इति । क्षुद्रशब्दादिष्ठनि र इत्यस्य लोपः, उकारस्य गुणः । एवमीयस् इति । स्थवीयान्, दवीयान् यवीयान्, ह्रसीयान्, क्षेपीयान्, क्षोदीयान् । इमनिजनुवृत्तेः प्रयोजनमाह ह्रस्वक्षिप्रेति । प्रियस्थिर । प्रियादीनामिति । प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ, वृन्दारक एषां दशानामित्यर्थः । प्रादय इति । प्र, स्थ, स्फ, वर्, बंहि, गर्, वर्षि, त्रप्, द्राघि, वृन्द एते दशेत्यर्थः । इष्ठादिष्विति । इष्ठेमेयस्स्वित्यर्थः । 'तुरिष्ठेमेयःसु' इत्यतः तदनुवृत्तेरिति भावः । प्रेष्ठ इति । प्रियशब्दादिष्ठनि प्रकृतेः प्रादेशः । आभीयत्वेनासिद्धत्वादकारोच्चारणसामर्थ्याच्च न टिलोपः । आद्गुणः । स्थेष्ठ इति । स्थिरशब्दादिष्ठनि प्रकृतेः स्थादेशः । प्रकृतिभावान्न टिलोपः । स्फेष्ठ इति । स्फिरशब्दस्य इष्ठनि स्फादेशः । वरिष्ठ इति । उरुशब्दाद् इष्ठनि वर् आदेशः । बंहिष्ठ इति । बहुलशब्दस्य बंहि इत्यादेशः । इकार उच्चारणार्थः । अन्यथा आभीयत्वेनासिद्धत्वाद् उच्चारणसामर्थ्याद्वा इकारस्य लोपो न स्यात् । गरिष्ठ इति । गुरुशब्दस्य इष्ठनि गर् आदेशः । वर्षिष्ठ इति । वृद्धशब्दस्य इष्ठनि वर्षिरादेशः बंहिवदिकार उच्चारणार्थः । त्रपिष्ठ इति । तृप्र-

---

मिति लाघवं भवतीत्याहुः । स्थूलदूर । परग्रहणं यविष्ठो ह्रसिष्ठ इत्यत्र पूर्वयणादेर्लोपो माभूदिति । पूर्वग्रहणं तु स्पष्टार्थम । परस्मिन् लुप्ते सामर्थ्यात्पूर्वस्यैव गुणलाभात् । स्थविष्ठ इति । न चात्र 'ओर्गुणः' इत्येव सिद्धे गुणग्रहणं व्यर्थमिति वाच्यम् । परयणादिलोपस्याभीयत्वेनासिद्धत्वात् क्षिप्रक्षुद्रयोर्गुणस्य प्राप्त्यभावाद्

ष्ठः । वृन्दिष्ठः । एवमीयसुन् । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात् प्रेमा
दि। २०१७ बहोर्लोपो भू च बहोः । (६—४—१५८) बहोः परयो-
र्लोपः स्याद्बहोश्च भूरादेशः । भूमा, भूयान् । २०१८ इष्ठस्य यिट् च ।
—४—१५९) बहोः परस्य इष्ठस्य लोपः स्याद् यिडागमश्च । भूयिष्ठः ।
युवाल्पयोः कनन्यतरस्याम् । (५—३—६४) एतयोः कनादेशो
रादिष्ठेयसोः । कनिष्ठः, कनीयान् । पक्षे यविष्ठः अल्पिष्ठ इत्यादि । २०२०
र्लुक् । (५—३—६५) विनो मतुपश्च लुक्स्यादिष्ठेयसोः । अतिशयेन ।
स्रजिष्ठः, स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः, त्वचीयान् । २०२१

इष्ठनि त्रप् आदेशः अदुपधः । तृपधातोस्तृप्त्यर्थकादौणादिके रकि तृप्रशब्दः ।
ठ इति । दीर्घशब्दस्य इष्ठनि द्राघिरादेशः । बंहिवदिकार उच्चारणार्थः ।
ठ इति । वृन्दारकशब्दस्य इष्ठनि वृन्द आदेशः । अकार उच्चारणार्थः ।
यसुन्निति । प्रेयान्, स्थेयान् स्फेयान्, वरीयान्, बंहीयान्, गरीयान्,
न्, त्रपीयान, द्राघीयान्, वृन्दीयान् । अत्र इमनिजननुवृत्तेः प्रयोजनमाह
बहुलेति । इत्यादी त । वरिमा, बंहिमा, गरिमा, द्राघिमा । बहोर्लोपः ।
लुप्तप्रथमाकम् । 'इष्ठेमेयस्सु' इत्यनुवृत्तम् । तत्र इष्ठन उत्तरसूत्रे कार्यान्तर-
ादिह तस्य न संबन्धः । तदाह बहोः परयोरिति । 'आदेः परस्य' इति
योरादिलोपः । भूमेति । बहुत्वमित्यर्थः बहुशब्दात् पृथ्वादित्वादिमनिचि
भूभावः, प्रत्ययादेरिकारस्य लोपश्च । भूयानिति । अयमनयोरतिशयेन बहुरि-
। वैपुल्यवाचकाद् बहुशब्दादीयसुनि प्रकृतेर्भूभावः प्रत्ययादेरिकारस्य लोपश्च ।
स्याभीयत्वेसासिद्धत्वादोर्गुणो न भवति । इष्ठस्य यिट् च । लोपः स्यादिति ।
ः परस्य' इति बोध्यम् । यिटि टकार इत् । इष्ठस्यादिलोपे कृते यिडागमः ।
। टित्वात् प्रत्ययस्याद्यवयवः । बहोर्भूभावस्तु पूर्वसूत्रेण सिद्ध एव । यदि तु
इति निवृत्तं तदा यकार आगम इति भाष्यम् । युवाल्पयोः । इष्ठेयसोरिति ।
दी इत्यनुवृत्तस्य सप्तम्या विपरिणामादिति भावः । कनिष्ठः, कनीयानिति ।
नयोरतिशयेन युवा अल्पो वेत्यर्थः । पक्षे यविष्ठ इति । युवन्शब्दादिष्ठनि
दूर-' इति वनो लोपे उकारस्य गुणे अवादेशे रूपम् । अल्पिष्ठ इति । अल्प-
ादिष्ठनि टिलोपः । इत्यादीति । यवीयान्, अल्पीयानिति रूपद्वयमादिपद-
म् । विन्मतोर्लुक् । इष्ठेयसोरिति । अजादी इत्यनुवृत्तस्य सप्तम्या

ष्ठः, क्षोदिष्ठ इत्यसिद्धिप्रसङ्गाच्च । एवमिति । प्रेयान्, स्थेयान् । स्फेयान्,
ानित्यादि । इमेयसोर्लोप इति । स च 'आदेः परस्य' इत्यादेरेव भवति ।
स्य यिट् च । पूर्वसूत्रं संपूर्णमनुवर्तते तदाह बहोरित्यादि । भूरादेशश्चेत्यपि
ध्यम् । भूयिष्ठ इति । अत्र इष्ठस्यादिलोपे कृते यिशब्दे आगमः । यद्वा
पवादो यकार आगमः, इकारस्तूच्चारणार्थः । पक्षद्वयमपीदं भाष्यारूढम् ।
ल्पयोः । युवेति स्वरूपग्रहणम्, न तु युवापत्यस्य, अल्पसाहचर्याद्व्याख्यानाच्च ।
ादी' इत्यनुवर्तनादजाद्योरेव पूर्वयोर्न तु तरप्तमपोरित्याशयेन व्याचष्टे इष्ठेय-

प्रशंसायां रूपप् । (५—३—६६) सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः पटुरूपः । प्रशस्तं पचति पचतिरूपम् । २०२२ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । (५—३—६७) ईषदूनो विद्वान्विद्वत्कल्पः । यशस्कल्पम् । यजुष्कल्पम् । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् । २०२३ विभाषा सुपो बहुच्पुरस्तात्तु । (५—३—६८) ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स

---

विपरिणामादिति भावः । स्रजिष्ठ इति । स्रग्विन्शब्दादिष्ठनि विनो लुकि तन्नि मित्तपदत्वाभङ्गात् कुत्वनिवृत्तिरिति भावः । एवं स्रजीयानिति । त्वचिष्ठ इति त्वग्वच्छब्दादिष्ठनि मतुपो लुकि तन्निमित्तपदत्वभङ्गात् कुत्वनिवृत्तिरिति भावः एवं त्वचीयान् । अत एव ज्ञापकादाभ्यामिष्ठन्नीयसुनौ । प्रशंसायां रूपप् सुबन्तात्तिङन्ताच्चेति । शेषपूरणमिदम् । 'तिङश्च' इत्यनुवृत्तम्, 'प्रातिपदिकात् इति च । 'धकाल' इत्यादिलिङ्गात् सुबन्तादिति लभ्यत इति भावः । प्रशंसाविशिष्टे स्वार्थे वर्तमाना तिङन्तात्सुबन्ताच्च रूपबिति फलितम् । पचतिरूपमिति प्रशस्ता पाकक्रियेत्यर्थः । अत्र भाष्ये 'क्रियाप्रधानमाख्यातं द्रव्यप्रधानं नाम' इति सिद्धान्तितम् । 'पचतोरूपं पचन्तिरूपमित्यत्र च न द्विवचनबहुवचने । तिङैव द्वित्व बहुत्वयोरुक्तत्वात् । एकवचनं तु उत्सर्गतः करिष्यतेः, नपुंसकत्वं तु लोकात्' इत्यपि भाष्ये स्पष्टम् । ईषदसमाप्तौ । ईषदसमाप्तिविशिष्टेऽर्थे विद्यमानात् सुबन्तात् स्वार्थे कल्पप्, देश्य, देशीयर् एते प्रत्ययाः स्युरित्यर्थः । विद्वत्कल्प इति । ईषन्न्यूनवै दुष्यवानित्यर्थः । यशस्कल्पमिति । असंपूर्णं यश इत्यर्थः । 'सोऽपदादौ' इति सत्वम् । यजुष्कल्पमिति । असंपूर्णं यजुरित्यर्थः । 'इणः षः' इति षत्वम् । विद्वद्देश्य इति । असम्पूर्णवैदुष्यवानित्यर्थः । एवं विद्वद्देशीयः । अत्र सर्व 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते' इति वचनात् प्रकृतिलिङ्गत्वं बोध्यम् पचतिकल्पमिति असंपूर्णा पाकक्रियेत्यर्थः । पचतिरूपमितिवल्लिङ्गवचननिर्वाहः एवं वृषभकल्प इयं गौरित्यादावपि प्रकृतिलिङ्गत्वं बोध्यम् । 'क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते' इति वचनाद् गुडकल्पा द्राक्षेत्यादौ प्रकृतिलिङ्गाति क्रमः । एतत्सर्वमत्रैव भाष्ये स्पष्टम् । विभाषा । 'ईषदसमप्तौ' इत्यनुवर्तते

---

सोरिति । विन्मतोर्लुक् । स्रजिष्ठ इति । विनो लुकि कृते भत्वात्पदकार्या भावः । अस्मादेव ज्ञापकादगुणवचनत्वेऽपि विन्मतोरजादी भवतः । प्रशंसायां रूपप् । प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा, नतु स्तुतिः । तेनेहापि भवति । चौररूपोऽयं यदक्षणोरप्यञ्जनं हरति । गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते । पचतिरूपमिति । 'क्रियाप्रधानमाख्यातम्' क्रियायाश्चासत्त्वरूपत्वेऽपि औत्सर्गिकमेकवचनं भवति। तेन पचतोरूपं पचन्तिरूपमित्यादि । इह प्रथमैव विभक्त्यन्तराणामप्राप्तेरिति बहवः । वस्तुतस्तु पश्येत्यादियोगे कर्मणि द्वितीयापि सुलभा । क्लीबत्वं लोकात् । एवं पचतिकल्पमित्यादावपि बोध्यम् । विभाषा सुपः । सूत्रे 'सुपः' इति षष्ठ्यन्तम् । 'षष्ठ्यतसर्थप्रत्ययेन' इत्युक्तेः । सुबन्तादिति । एतच्च पञ्चम्यन्तमुक्तमेव । पुरस्ताच्छब्दपर्यायस्य प्रागितिशब्दस्य वृत्तौ प्रयुक्तत्वात् । प्रागित्यपकृष्यत इति तु मनोरमायां

, न तु परतः । ईषदूनः पटुः बहुपटुः । पटुकल्पः । 'सुपः' किम्—यजति-

ईषदसमाप्तिविशिष्ट इति । प्रागेवेति । सूत्रे तुशब्दोऽवधारण इति
। बहुपटुरिति । पटुशब्दात् सुबन्तात् प्राग् बहुचि कृते प्रातिपदिकावयवत्वात्
लुकि समुदायात् पुनः सुबुत्पत्तिः । नच तद्धितान्तत्वाभावात् समासत्वाभावाच्च
न्नसुब्विशिष्टस्य प्रातिपदिकत्वाभावात् कथमिह लुगिति वाच्यम्, 'अर्थवत्'
न तस्य प्रातिपदिकत्वसत्त्वात् पटुरित्यस्य पूर्वोत्पन्नसुप्प्रत्ययान्तत्वेऽपि बहुपटुरिति
स्य प्रत्ययान्तत्वाभावात् प्रत्ययग्रहणे यस्मात् विहितस्तदादेरेव ग्रहणात् ।
सति 'कृत्तद्धित—' इत्यत्र समासग्रहणं व्यर्थमिति वाच्यम्, पदघटितसंघातस्य चेत्
दिकसंज्ञा तर्हि समासस्यैवेति नियमार्थत्वात् । नचैवं सति प्रकृते बहुपटुरिति
स्य पूर्वोत्पन्नसुब्विशिष्टस्य कथं प्रातिपदिकत्वम् असमासत्वादिति वाच्यम्,
घाते पूर्वो भागः पदं तस्य चेत् प्रातिपदिकसंज्ञा तर्हि समासस्यैवेति नियमशरीरा-
वाद् इति प्रागुक्तं न विस्मर्तव्यम् । नच 'समर्थानाम्' इत्यत्र वाग्रहणादेव सिद्धे
ग्रहणं व्यर्थमिति वाच्यम्, बहुजभावपक्षे पूर्वसूत्रविहितकल्पबाद्यर्थत्वात् ।
या महाविभाषया 'अपवादेन मुक्ते उत्सर्गस्य न प्रवृत्तिः' इति सिद्धान्ताद् बहु-
ते वाक्यमेव स्यात् । नच कल्पबादीनां बहुचा समानविषयकत्वान्निरवकाशत्वं
म्, तेषां तिङन्ते सावकाशत्वाद् इति भाष्ये स्पष्टम् एतदभिप्रेत्याह
इति । ननु सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तादिह सुब्ग्रहणं व्यर्थ-
पृच्छति सुपः किमिति । 'तिङश्च' इत्यनुवृत्तिनिवृत्त्यर्थं सुब्ग्रहणं व्यर्थ-
स्वरितत्वादेव तदनुवृत्तिर्न भविष्यति इति वाच्यम्, 'अव्ययसर्वनाम्नाम्—'
तरसूत्रे तिङश्चेत्यनुवृत्तेरावश्यकतया तस्य स्वारितत्वावश्यकत्वानिति भाष्ये

म् । न च सूत्रस्थपुरस्ताच्छब्दसमानार्थकप्राक्शब्दयोगेऽपि 'षष्ठ्यतसर्थ—' इति
स्यादिति वाच्यम् । 'अन्यारात्—' इति सूत्रेऽञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि
तसर्थप्रत्ययेन' इत्येतद्बाधनार्थं पृथग्ग्रहणमिति सिद्धान्तयित्वा प्राक् प्रत्यग्व
दित्युदाहृतत्वात् । काशिकायां तु वृत्तावपि पुरस्ताच्छब्दः प्रयुक्तः, सुबन्तादिति च
म्, तदसमञ्जसमिति मत्वा हरदत्तेन कथंचित् समर्थितम् । ल्यब्लोप एषा पञ्चमी ।
प्रकृतित्वेनाश्रित्येत्यर्थ इति । प्रागेवेति । सौत्रस्तुशब्दोऽवधारणे वर्तते
भावः । तेन च बहुजेव विकल्प्यते, न तु पूर्वत्वम् । तुशब्दाभावे तु प्राक्त्वं
ल्प्येत । तथा च पक्षे बहुच् परः स्यात् । भाष्यकारस्य मते तु नेदं तुशब्दस्य
म् । तथाहि—'उदश्वितोऽन्यतरस्याम्' इत्यादौ प्रधानत्वात्प्रत्यय एव विकल्प्यते,
परत्वम्, प्रत्यय एव हि परत्वविशिष्टो विधीयत इति विशेषणस्य गुणत्वात् ।
नां च परार्थत्वात्' इति न्यायात् । तद्वदिहापि विभाषाग्रहणेन बहुजेव संभ-
, न पुरस्तादित्येतत् । तुशब्दस्य तु अवधारणार्थस्यान्यदेव प्रयोजनं पुरस्तादेव
यथा स्यादिति । तेन लिङ्गसंख्ये अपि प्राक् प्रत्ययोत्पत्तेः प्रकृत्यवस्थायां ये दृष्टे
एव स्तः । बहुचः प्रयोगश्च प्राक् प्रकृतेरेव भवतीति । तेन 'बहुगुडो द्राक्षा',
तृणं नरः' इत्यादौ प्रकृतिवल्लिङ्गमेव भवति, न त्वभिधेयवल्लिङ्गम् । नन

कल्पम् । २०२४ प्रकारवचने जातीयर् । (५—३—६९) प्रकारवति चायम्, थाल् तु प्रकारमात्रे । पटुप्रकारः । पटुजातीयः । २०२५ प्रागिवात्कः । (५—३—७०) 'इवे प्रतिकृतौ' (सू २०५१) इत्यतः प्राक्काधिकारः । २०२६ अव्ययसर्वनाम्नामकच्प्राक्टेः । (५—३—७१) 'तिङश्च' (सू २००२) इत्यनुवर्तते । २०२७ कस्य च दः । (५—३—७२) कान्ताव्ययस्य दकारोऽन्तादेशः स्यादकच्च । २०२८ अज्ञाते । (५—३—७३) कस्यायमश्वोऽश्वकः ।

---

स्पष्टम् । एतदभिप्रेत्याह यजतिकल्पमिति । तुग्रहणं तु 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते, क्वचिदतिवर्तन्ते' इति ज्ञापनार्थम् इति भाष्ये प्रपञ्चितम् । प्रकारवचने । 'प्रकारवचने थाल्' इत्यतोऽस्य वैलक्षण्यमाह प्रकारवति चायमिति । प्रकारवत्येवेत्यर्थः । थाल् तु प्रकारमात्र इति । वस्तुतस्तु उभयमपि प्रकारवतीति न्याय्यम्, अविशेषात् । अन्यथा तथेत्यत्र स प्रकार इत्यर्थः स्यात् । नच किमादिभ्यो विशिष्य विहितेन थाला जातीयरो बाधात् तज्जातीय इत्याद्यसिद्धिरिति वाच्यम्, 'जात्यन्ताच्छ बन्धुनि' इति तज्जात्यादिशब्दात् छप्रत्ययेनैव तज्जातीयादिसिद्धेः। अत एव यथाजाजीयक इत्यादिभाष्यप्रयोगाः संगच्छन्ते । जयादित्यस्तु अत्र प्रकारः भेदः, थाल्विधौ सामान्यस्य भेदको विशेषः प्रकार इत्याह । वामनस्तु सादृश्यं भेदश्चेत्युभयमपि प्रकार इत्याह । प्रागिवात्कः । इवशब्दस्तद्घटित-सूत्रपर इति मत्वाह इवे प्रतीति । अव्ययसर्वनाम्नाम् । अनुवर्तत इति मण्डूकप्लुत्येति शेषः । अव्ययसर्वनाम्नां तिङन्तानां च टेः प्राक् अकच्प्रत्ययः स्यादित्यर्थः । अकचि ककारादकार उच्चारणार्थः । चकार इत् । ककारान्तः प्रत्ययः अयमपि प्रागिवादधिकारः । कस्य च दः । पूर्वसूत्रे 'अव्ययसर्वनाम्नाम्-' इति समासनिर्देशेऽपि एकदेशे स्वरित्वप्रतिज्ञाबलाद् अव्ययग्रहणमेवात्रानुवर्तते । इत्यत्र ककारादकार उच्चारणार्थः । ककारस्येति विवक्षितम् । तेनाव्ययस्य विशेषणात् तदन्तविधिः । तदाह कान्ताव्ययस्येति । अकच्चेति । चकारेण तदनुकर्षादिति भावः । एतेन अकच्संनियोगशिष्ट एवायं दकार इत्युक्तं भवति । अयमपि प्रागिवादधिकारः । अज्ञाते । अज्ञातेऽर्थे विद्यमानात् सुबन्तात्स्वार्थे कप्रत्ययः स्यात् ।

---

'स्वार्थिकाः प्रकृतितो लिङ्गवचनानि लभन्ते' इत्येव सिद्धमिति किमनेन तुशब्दग्रहणेनेति चेत् । अत्राहुः—एतदेव ज्ञापयति 'ईषदसमाप्तौ ये स्वार्थिकास्तेष्वभिधेयवदेव लिङ्गवचने स्तः' इति । तेन गुडकल्पा द्राक्षा शर्कराकल्पो गुड इत्यादि सिद्धम् । प्रागिवात्कः । 'सुपः' इत्यनुवर्तते तेन तिङन्तात्को न । अव्ययसर्वनाम्नाम् । अनुवर्तत इति । मण्डूकप्लुत्येति भावः । 'ङ्याप्प्रातिपदिकात्' 'सुपः' इति चानुवर्तत एव । कस्य च दः । कान्ताव्ययस्येति । सर्वनामग्रहणं तिङ्ग्रहणं च नेह संबध्यते, तयोः कान्तत्वासम्भवात् । न चाधोक् अधोगित्यादौ सम्भवोऽस्तीति वाच्यम् । कत्वस्यासिद्धत्वात् । यद्यपि शक्नोतेर्यङ्लुकि लङि तिपि 'अशाशक्' इति सम्भवति, तथा यङ्लुकोऽसार्वत्रिकत्वान्नेदृशं लक्ष्यमस्ति । छन्दसि क्वचिल्लक्ष्यसद्भावेऽपि 'सर्वे विधयश्छन्दसि वा विधीयन्ते' इति दत्वविधिर्न प्रवर्तत इति भावः ।

...कैः। नीचकैः। सर्वके। विश्वके। 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः ...कच्, अन्यत्र तु सुबन्तस्य टेः प्रागकच्।' (वा ३२८४) युवकयोः। ...कयोः। युष्मकासु। अस्मकासु। युष्मकाभिः। अस्मकाभिः। 'ओकार-...दि' किम्—त्वयका। मयका। 'अकच्प्रकरणे तूष्णीमः कां वक्तव्यः' (वा ३२८५)। मित्त्वादन्त्यादचः परः। तूष्णीकामास्ते। 'शीले को मलोपश्च' (वा ३२८६)। तूष्णींशीलः तूष्णीकः। पचतकि। जल्पतकि। धकित्। हिरकुत्।

...नाम्नां तिङन्तानां च टेः अकच् स्यात्। तत्रापि ककारान्ताव्ययानां दकारो-...देशः स्यादित्यर्थः। कस्यायमिति। स्यादित्यर्थः। अज्ञातत्वाभिनयोऽयम्। ...तोऽश्व इति विग्रहः। उच्चकैरिति। उच्चैरित्यव्ययस्य टेः प्रागकच्। सर्वके ...क इति। ननु 'अव्ययसर्वनाम्नाम्—' इति सूत्रे सुपः इत्यनुवृत्तेः सुबन्तानां ...नाम्नां टेः प्रागकजिति फलितम्। तथा सति युवयोः आवयोः, युष्मासु अस्मासु ...भिः अस्माभिः, इत्यत्र सुबन्तानां टेः प्रागकचि युवकयोः आवकयोः, युष्मकासु ...कासु, युष्मकाभिः अस्मकाभिः, इति न स्युः। युवयकोः आवयकोः, युष्मा-...सु अस्मासकु, युष्माभकिः अस्माभकिः, इति स्युः। यदि तु सुप इत्यननुवर्त्य ...पदिकादित्येवानुवर्त्य प्रातिपदिकादेव सर्वनाम्नां टेः प्रागकजित्यर्थः स्यात्, तर्हि ...का मयकेति न स्यात्। त्वकया मकया इति स्यादित्यत आह ओकारेति। ...कमिदम्। ओकारादौ सकारादौ भकारादौ च सुपि सर्वनाम्नष्टेः प्रागकच्, ...त्र तु सुबन्तस्यैव सर्वनाम्नष्टेः प्रागकजित्यर्थः। इदं तु वार्तिकं युष्मदस्मन्मात्र-...यकमेव, भाष्ये तथैवोदाहृतत्वात्। अन्येषां तु सर्वनाम्नां प्रातिपदिकस्यैव टेः ...कच्, नतु सुबन्तानाम्। तेन सर्वकेणेत्यादि सिद्धम्। अत एव 'विभक्तौ परतो ...कच्, ... कः कौ के' इति भाष्यं संगच्छते। त्वयका ...हितः किमः कादेशः साकच्कार्थः। कः कौ के' इति भाष्यं संगच्छते। त्वयका ...केति। इह त्वया मयेति सुबन्तयोष्टेः प्रागकच्। प्रातिपदिकस्य टेः प्रागकचि ...त्वकया मकयेति स्यादिति भावः। कां वक्तव्य इति। काम् प्रत्यय इति वृत्तिस्तु ...त्या, भाष्ये प्रत्ययशब्दस्यादर्शनात्। किं तु मित्त्वादागम एवायम्। तदाह ...त्वादिति। अकचोऽपवादः। तूष्णीकामिति। तूष्णीमित्यव्ययस्य ईकारा-...रं का इत्याकारान्त आगमः। शील इति। इदमपि वार्तिकम्। तूष्णीम् इत्य-...त् कप्रत्ययः स्याद मकारस्य लोपश्च शीले गम्य इत्यर्थः। शीलं स्वभावः।

...कारेति। अकज्विधौ सुपोऽप्यनुवृत्त्या सर्वनाम्ना सुपा च टेर्विशेषणे कामचाराद् ...व्यवस्थाप्रसङ्गे भाष्यकारवचनाद्व्यवस्थाश्रीयते। ओकारसकार इत्यादिसंकोचश्च युष्म-...दस्मन्मात्रविषयकः। तथैव भाष्ये उदाहृतत्वात्। अन्येषां त्वविशेषेण प्रातिपदिकस्यैव ...प्रागकच् न सुबन्तस्य। तेन सर्वकेण इमकेण भवकन्तमित्यादि सिध्यति। त्वयका, ...मयकेति। नन्वत्र सुपः प्रागकचि कृते, प्रत्यये परतस्त्वमादेशयोः सतोरपि 'योऽचि' ...इति यत्वं न स्यात्, विभक्तिपरत्वाभावादिति चेत्। मैवम्, अकृतव्यूहपरिभाषाया ...नित्यतामाश्रित्याकचः पूर्वमेव यत्वविधानात्। एवं युवकामाभकामित्यत्राप्यकचः ...पूर्वमेव यथावादेशाविति बोध्यम्। शीले क इति। शीलं स्वभावो नियमश्च।

२०२९ कुत्सिते । (५—३—७४) कुत्सितोऽश्वोऽश्वकः । २०३० संज्ञायां कन् । (५—३—७५) कुत्सिते कन्स्यात्तदन्तेन चेत्संज्ञा गम्यते । शूद्रकः । राधकः । स्वरार्थं वचनम् । २०३१ अनुकम्पायाम् । (५—३—७६) पुत्रकः । अनुकम्पितः पुत्र इत्यर्थः । २०३२ नीतौ च तद्युक्तात् । (५—३—७७) सामदानादिरूपा नीतिः । तस्यां गम्यमानायामनुकम्पायुक्तात्कप्रत्ययः स्यात् । हन्त ते धानकाः । गुडकाः । एहकि । अद्धकि । पूर्वेणानुकम्प्यमानात्प्रत्ययः ।

---

तूष्णीक इति । मौनस्वभाव इत्यर्थः । भाष्ये दीर्घस्यैव प्रयोगदर्शनात् 'केऽणः' इति ह्रस्वो न भवति । 'अव्ययसर्वनाम्नाम्–' इत्यत्र तिङश्चेत्यनुवृत्तेः प्रयोजनमाह पचतकीति । पचतीत्यत्र इकारात् प्रागकच् । ककारादकार उच्चारणार्थः । अन्यथा इकारात्प्राग् अकच्प्रत्यये आद्गुणे पचतके इति स्यादिति भावः । जल्पतकीति । जल्पतीत्यस्य टेः प्रागकच् । धकिदिति । धिक् इत्यव्ययस्य टेः प्रागकच्, कस्य दश्च । हिरकुदिति । हिरुगित्यव्ययस्य टेः प्रागकच् कस्य दश्च । कुत्सिते । येन धर्मेण कुत्स्यते वस्तु तद्धर्मयुक्तार्थाभिधायिनः प्रातिपदिकात्स्वार्थे प्रत्ययः स्यादित्यर्थः । अव्ययसर्वनाम्नस्तु टेः प्रागकच्, कान्तस्याव्ययस्य दकारश्चान्तादेश इति बोध्यम् । 'तिङश्च' इत्यप्यनुवर्तते । अश्वक इति । धावनस्य असम्यक्त्वादश्वस्य कुत्सा बोध्या । सर्वनामाव्ययतिङन्तानि पूर्ववदुदाहार्याणि । 'याप्ये पाशप्' इति प्रवृत्तिनिमित्तकुत्सायामेव भवति । इदं तु सूत्रमप्रवृत्तिनिमित्तकुत्सायामपि इति भाष्ये स्पष्टम् । संज्ञायां कन् । 'कुत्सिते' इत्यनुवर्तते । तदाह कुत्सित इति । तदन्तेन चेदिति । कुत्साहेतुसंज्ञाविषये कनिति यावत् । अनुकम्पायाम् । अनुकम्पायुक्तार्थाभिधायिनः स्वार्थे कः स्यादित्यर्थः । अनुकम्पा दया । नीतौ च तद्युक्तात् । सामदानादीति । आदिना भेददण्डयोर्ग्रहणम् । तद्युक्तादित्येतद्व्याचष्टे अनुकम्पायुक्तादिति । 'अव्ययसर्वनाम्नां' 'टेः प्राक्' इति चानुवर्तते, 'कस्य च दः' इति च । हन्त ते धानका इति । दास्यन्ते इति शेषः । हन्तेत्यव्ययमनुकम्पाद्योतकम् । 'हन्त हर्षेऽनुकम्पायाम्' इत्यमरः । हन्तेत्यदन्तम् । हे पुत्रेति शेषः । अनुकम्पायुक्ता धाना इत्यर्थः । धानाशब्दात् कप्रत्यये 'केऽणः' इति ह्रस्वे कान्तात् टापि 'अभाषितपुंस्काच्च' इति विकल्पात् पक्षे इत्त्वाभावः एहकीति । एहीति तिङन्तस्य टेः प्रागकच् । 'अव्ययसर्वनाम्नाम्–' इत्यत्र 'तिङश्च' इत्यनुवृत्तेरिति भावः ।

---

तूष्णीक इति । 'केऽणः' इति ह्रस्वस्तु भाष्यकारप्रयोगाद् 'न कपि' इत्यत्र 'न' इति योगविभागाद्वा न भवतीत्याहुः । अकचो द्वितीयः अकार उच्चारणार्थ इति ध्वनयन्नुदाहरति पचतकीत्यादि । अनुकम्पायाम् । 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः । नीतौ च तद्युक्तात् । अनुकम्पायुक्तादिति । यद्यपि पुत्रादिरेव साक्षादनुकम्पायुक्तो न तु धानादिः, तथापि तद्द्वारा धानादीनामप्यस्त्यनुकम्पासम्बन्ध इति भावः । धानका इति । धानाशब्दः स्त्रीलिङ्गः । ततः कः 'केऽणः' इति ह्रस्वः । कप्रत्ययान्ताट्टाप् । अत्र 'प्रत्ययस्थात्–' इतीत्वेन भाव्यम् । प्रायेण तु धानका इति पठ्यते । तत्र लिङ्गातिवृत्तिर्द्रष्टव्येति हरदत्तः । 'कर्मव्यतिहारे णच् स्त्रियाम्' इति सिद्धे 'णचः

...तु परम्परासंबन्धेऽपीति विशेषः । २०३३ बह्वचो मनुष्यनाम्नष्ठज्वा । (५—३—७८) पूर्वसूत्रद्वयविषये । २०३४ घनिलचौ च । (५—३—७९) ... । २०३५ ठाजादावूर्ध्वं द्वितीयादचः । (५—३—८३) अस्मिन् ...णे यष्ठोऽजादिप्रत्ययश्च तस्मिन्प्रत्यये परे प्रकृतेर्द्वितीयादच ऊर्ध्वं सर्वं लुप्यते । ...कम्पितो देवदत्तो देविकः, देवियः, देविलः, देवदत्तकः । अनुकम्पितो वायुदत्तो ...कः । ठग्रहणमुको द्वितीयत्वे कविधानार्थम् । वायुकः । पितृकः । 'चतुर्थादच

...त्रीति । अद्वीति तिङन्तस्य टेः प्रागकच् । पूर्वेणेति । अनुकम्पायास्तद्विष-...दिति भावः । परम्परासम्बन्धेऽपीति । पुत्रः साक्षादनुकम्प्यः तद्द्वारा ...अनुकम्पायुक्ता इति भावः । बह्वचो मनुष्य । ठजिति च्छेदः । पूर्वसूत्रद्वय-...इति शेषपूरणम् । 'अनुकम्पायाम्' इति 'नीतौ च तद्युक्तात्' इति च सूत्रद्वय-...बह्वचो मनुष्यनाम्नः प्रातिपदिकात् ठज्वा स्यादित्यर्थः । पक्षे कः । घनिलचौ ...तत्रैवेति । शेषपूरणमिदम् । 'बह्वच-' इति पूर्वसूत्रविषये इत्यर्थः । 'अनुकम्पा-...' इति 'नीतौ च तद्युक्तात्' इति च सूत्रद्वयविषये बह्वचो मनुष्यनाम्नो घन् इलच् ...च प्रत्ययावित्यर्थः । ठाजादौ । अस्मिन्प्रकरण इति । 'अनुकम्पायाम्' 'नीतौ ...इत्यस्मिन्प्रकरण इत्यर्थः । संनिधानलभ्यमिदम् । सर्वमिति । ऊर्ध्वग्रहणादिदं ...यते । अन्यथा 'आदेः परस्य' इति परिभाषया द्वितीयाचो यः परः तस्यादेरेव ...दिति भावः । 'अजिनान्तस्योत्तरपदलोपश्च' इत्यतो 'लोप' इत्यनुवृत्तमिह कर्म-...नमाश्रीयत इति मत्वाह लुप्यत इति । देविक इति । देवदत्तशब्दात् ...द्वितीयादचः परस्य दत्तशब्दस्य लोपे इकादेशे रूपम् । देविय इति । ...दत्तशब्दाद् घनि दत्तशब्दस्य लोपे इयादेशे रूपम् । देविल इति । इलचि ...शब्दस्य लोपः । देवदत्तक इति । कप्रत्यये सति ठाजाद्यभावान्न दत्तपद-...ः । वायुक इति । वायुदत्तशब्दाद् दत्तशब्दस्य लोपः । उकः परत्वात् ठग्र

...यामव्' इति सूत्रे पुनः स्त्रीग्रहणेन ज्ञापितं 'स्वार्थिकाः प्रकृतिलिङ्गात्क्वचिदतिवर्तन्ते' ...। तेन धानका इत्यत्र पुंस्त्वमिति भावः । घनिलचौ च । चकाराद्यथाप्राप्तमिति ...शिका । इह पूर्वसूत्रेणैव ठञ् विहितः । वावचनात्कोऽपि । चकारेण तु कस्याप्य-...इति चिन्त्यम् । योगविभागे फलमपि चिन्त्यमिति हरदत्तः । ठाजादौ । समाहारद्वन्द्वे ...त्वं पुंस्त्वम् । आदिग्रहणं चिन्त्यप्रयोजनम्, 'यस्मिन्विधिस्तदादौ-' इत्येव सिद्धमिति ...दत्तः । अस्मिन्प्रकरण इति । अनुकम्पायां नीतौ चेत्यर्थद्वयस्यैव प्रत्यासत्त्या ...सन्निधानादिति भावः । ऊर्ध्वग्रहणमिह सर्वलोपार्थम् । अन्यथा 'आदेः परस्य' ...आदेरेव स्यादित्यभिप्रेत्याह द्वितीयादच ऊर्ध्वं सर्वमिति । 'अजिनान्तस्य-' ...यतो लोप इत्यनुवर्तनादाह लुप्यत इति । ननु ठग्रहणं व्यर्थम्, इकादेशे कृते ...जादावित्येव सिद्धत्वादत आह ठग्रहणमुको द्वितीयत्व इति । वायुक इति । ...युशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव लोपे 'इसुसुक्तान्तात्-' इति कः । किंच, ...क् ठग्रहणस्य प्रयोजनान्तरमप्यस्ति । यदा तु चित्रगुप्रभृतिभ्यष्ठच्, तदोगन्तत्वात् ...देशप्राप्त्या प्रथममिकादेशस्याऽसंभवेनाजदिलक्षणो लोपो न स्यादिति तदर्थमपि

ऊर्ध्वस्य लोपो वाच्यः' (वा ३२९६)। अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः। 'अनजादौ च विभाषा लोपो वक्तव्यः' (वा ३२९७)। देवदत्तकः, देवकः। 'लोपः पूर्वपदस्य च' (वा ३२९८)। दत्तिकः, दत्तियः, दत्तिलः, दत्तकः। 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वक्तव्यः' (वा ३२९९) देवदत्तः, दत्तः, देवः। सत्यभामा, भामा, सत्या। 'उवर्णाल्ल इलस्य च' (वा ३३०३)। भानुदत्तः, भानुलः: ऋवर्णादपि' (वा ५०५४)। सवित्रियः। सवितृलः।

'चतुर्थादनजादौ वा[1] लोपः पूर्वपदस्य च।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च॥'

---

कः। नन्विकादेशे सति देविक इत्यत्र अजादित्वादेव सिद्धे ठग्रहणं व्यर्थमित्यत आह ठग्रहणमिति। कृत एव ठग्रहणे वायुशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव नित्यत्वाद् लोपे कृते ठस्य उकः परत्वात्कादेशः सिध्यति। अन्यथा इकादेशे कृते अजादित्वं पुरस्कृत्य दत्तशब्दस्य लोपे सति वायु इक इति स्थिते ठस्याभावात् कादेशो न स्यात्। नच स्थानिवत्त्वादिकस्य ठत्वं शङ्क्यम्, 'ठस्येकः' इत्यत्र स्थान्यादेशयोरकार उच्चारणार्थं इति पक्षे अल्विधित्वात् सन्निपातपरिभाषाविरोधाच्चेति भाष्ये स्पष्टम्। पितृक इति। पितृदत्तशब्दात् ठचि दत्तशब्दस्य लोपे उकः परत्वात् ठस्य कः। अथ

'चतुर्थादनजादौ वा लोपः पूर्वपदस्य च।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च॥'

इति वक्ष्यमाणश्लोकवार्तिकं भङ्क्त्वा चतुर्थादच इत्येतद्व्याचष्टे चतुर्थादच ऊर्ध्वस्य लोपो वाच्य इति। बृहस्पतिक इति। बृहस्पतिदत्तशब्दात् ठचि दत्तशब्दस्य लोपे ठस्य इकादेशः। द्वितीयादूर्ध्वत्वाभावादप्राप्ते वचनम्। अनजादौ वेति वार्तिकभागं व्याचष्टे अनजादौ च विभाषा लोपो वक्तव्य इति। अनजादौ चेति पाठे विभाषेति भाष्यलब्धम्, तत्र देवदत्तको देवक इति कप्रत्यये दत्तलोपविकल्पोदाहरणात्। लोपः पूर्वपदस्य चेति। विभाषेति शेषः। 'अनजादौ' इति तु नात्र संबध्यते। तदाह दत्तिक इत्यादि। ठचि घनि इलचि के च रूपम्। अप्रत्यये तथैवेष्ट इति वार्तिकभागं व्याचष्टे विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वक्तव्य इति। दत्तः, देव इति। देवदत्तशब्दात् ठाजादिप्रत्ययस्याप्यभावे पूर्वोत्तरपदयोः क्रमेण लोपे रूपम्। उवर्णादिति। ल इति लोपस्य पूर्वाचार्यसंज्ञा। उवर्णात्परस्य इलचो लोपः स्यादित्यर्थः। 'आदेः परस्य'

---

ठग्रहणम्। तेन ठावस्थायामुत्तरपदलोपे कादेशस्यासम्भवादिकादेशे चित्रिक इति रूपं सिध्यतीति बोध्यम्। 'चतुर्थादनजादौ च' इति वक्ष्यमाणमेव श्लोकं भङ्क्त्वा व्याचष्टे चतुर्थादच ऊर्ध्वस्येति। अनजादाविति। हलादावित्यर्थः 'अस्मिन् प्रकरणे' इत्येव। लोपः पूर्वपदस्य चेति। ठाजादावनजादौ चेति बोध्यः। 'अप्रत्यये तथैवेष्टः' इत्येतद्व्याचष्टे विनापि प्रत्ययमिति। ल इलस्य चेति। इलस्य लः

---

१ 'च' इति क।

(वा ३२९६—३३००)। २०३६ प्राचामुपादेरडज्वुचौ च। (५—३—८०) उपशब्दपूर्वात्प्रातिपदिकात्पूर्वविषये अडच् वुच् एतौ स्तः। अयथाप्राप्तम्। प्राचां ग्रहणं पूजार्थम्। अनुकम्पित उपेन्द्रदत्त उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः। षड् रूपाणि। २०३७ जातिनाम्नः कन्। (५—३—८१) 'मनुष्यनाम्नः' इत्येव। जातिशब्दो यो मनुष्यनामधेयस्तस्मात्कन्स्यादनुकम्पायां नीतौ च। सिंहकः। शरभकः। रासभकः। 'द्वितीयं संध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः' (वा ३३०३)। कहोडः, कहिकः। 'एकाक्षरपूर्व-

इकारस्य लोपः। चकारेण ठाजादौ द्वितीयादच ऊर्ध्वं लोपः सूत्रसिद्धः अनू-द्यते। ऋवर्णाद्पीति। ऋवर्णादपि परस्य इलच आदेर्लोपः स्यादित्यर्थ। सवितृप्रियः सवितृल इति। घनि इलचि च रूपम्। वस्तुतस्तु ऋवर्णादपीतिः दृष्टत्वादुपेक्ष्यम्। तदेवं व्याख्यातं वार्तिकं समस्तं पठति चतुर्थादित्यादि। प्राचामुपादेरडज्वुचौ च। पूर्वविषय इति। 'बह्वचो मनुष्यनाम्न–' इति पूर्वविषये इत्यर्थः। चाद्यथाप्राप्तमिति। ठच्, घन्, इलच्चेत्यर्थः। ठज्वेत्यतो अनुवृत्त्यैव सिद्धे 'प्राचाम्' ग्रहणं व्यर्थमित्यत आह प्राचांग्रहणमिति। उपड इति। उपेन्द्रदत्तशब्दाद् अडचि द्वितीयं सन्ध्यक्षरमिति वक्ष्यमाणेन एकारादेर्लोप इति केचित्। 'एन्द्रस्य परस्य' इति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यापेक्षया अन्तरङ्गस्याप्येकादेशस्य पूर्वमप्रवृत्तेरिकारादिलोप इति शब्देन्दुशेखरे। उपक इति। वुचि। एकादेशे एकारादिलोपे रूपम्। उपिय इति। घनि रूपम्। उपिल इति। इलचि रूपम्। उपिक इति। ठचि रूपम्। उपेन्द्रदत्तक इति। कप्रत्ये रूपम्। ठजाद्यभावाल्लोपो न। जातिनाम्नः कन्। जातिशब्दो य इति। यो जाति-प्रवृत्तिनिमित्तकः प्रसिद्धः सन् मनुष्यनामधेयभूतः स इत्यर्थः। 'अनुकम्पायाम्' इति नीतौ' इति च सूत्रद्वयविहितस्यापवादः। द्वितीयं संध्यक्षरं चेदिति। 'एचः संध्यक्षराणि' इति प्राचामाचार्याणां प्रवादः। कहोड इति। ऋषिविशेषस्य नामेदम्। अत्र द्वितीयोऽच् संध्यक्षरम्, तदादेर्लोपः। नतु तदूर्ध्वस्यैव। एकाक्षरेति।

लोप इत्यर्थः, तत्र 'आदेः परस्य' इति इकारलोपो बोध्यः। प्राचामुपादेः। 'बह्वचो मनुष्य–' इत्याद्यनुवर्तते। उपेन्द्रदत्त इति। ननु कृतसन्धेरुपेन्द्रशब्दादेकादेशस्य पूर्वान्ततया ग्रहणाद् 'उपादेः' इति विधीयमानौ प्रत्ययौ स्तां नाम, लोपस्तु नकारादेरेव स्यात्। ततश्च उपक उपड इति रूपे न स्याताम्। किं तु उपयक उपयड इति रूपे स्याताम्। एवं घनिलच्ठच्स्वपि दोष एव। तस्मादिहैव 'द्वितीयं संध्यक्षरं चेत्' इति वार्तिकं कुतो नोक्तमिति चेत्। अत्राहुः—प्रकारान्तरेण निर्वाहसम्भवान्नोक्तम्। तथाहि—आद्गुणे कृते 'द्वितीयं संध्यक्षरम्–' इत्यादिना अकारस्यापि लोपप्रसक्त्या गुणात्पूर्वमेवाकृतव्यूहपरिभाषया प्रत्ययः। न च परिनिष्ठिततत्त्वपरेण समर्थग्रहणेन सौत्थितिरित्यत्रेव परिभाषाबाधः शङ्क्यः, 'प्राग्दिशः–' इति सूत्रे 'समर्थग्रहणं निवृत्तम्' इत्युक्तत्वात्। 'अकृतसंधेः' इति प्रागुक्तज्ञापकबलेन समर्थग्रहणप्रत्याख्यान-पक्षेऽपि ज्ञापकस्य विशेषपरत्वाश्रयणादिति। उपेन्द्र उपगुरुरुपकर्तेत्यादिषूपडादीनां

पदानामुत्तरपदलोपो वक्तव्यः' (वा ३३०६) । वागाशीर्दत्तो वाचिकः । कथं षडङ्गुलिदत्तः षडिक इति । 'षषष्ठाजादिवचनात्सिद्धम्' (वा ३३०७) । २०३८

व्यञ्जनसहितम् एकोऽच् एकाक्षरम्, एकाच्कमिति यावत् । तथाविधं पूर्वपदं येषां पदानां तानि एकाक्षरपूर्वपदानि, तेषां मध्ये उत्तरभूतानि पदानि यावन्ति तेषां लोपः स्यादित्यर्थः । इह उत्तरपदशब्दो यौगिकः, नतु समासस्य चरमावयवे रूढो व्याख्यानात् । 'द्वितीयादच ऊर्ध्वम्' इत्यनेन द्वितीयाज्विशिष्टस्य लोपे अप्राप्ते वचनमिदम् । वागाशीर्दत्त इति । वाचि आशीः यस्य नतु मनस्येव स वागाशीः । तेन दत्त इति विग्रहः । यद्वा आशासनमाशीः, वाचा आशीः वागाशीः । 'कर्तृकरणे कृता–' इति समासः । तया वागाशिषा दत्त इति विग्रहः । वाक्करणकाशासनेन दत्त इत्यर्थः । वाचिक इति । वागशीर्दत्तशब्दात् ठचि वागित्येकाक्षरपूर्वपदात्परयोराशीर्दत्तशब्दयोर्लोपे सति अन्तर्वर्तिविभक्त्या पदत्वमाश्रित्य प्रवृत्तकुत्वजश्त्वयोरिकाश्रयभत्वेन पदत्वबाधान्निवृत्तौ वाचिक इति रूपमिति केचित् । वस्तुतस्तु ठचि इकादेशात् प्राक् ठावस्थायामेव उत्तरपदलोपे कर्तव्ये असिद्धत्वान्न पूर्वं कुत्वादिप्रवृत्तिरित्याहुः । यद्यपि द्वितीयादच ऊर्ध्वंस्य शीर्दत्तशब्दस्य लोपे वागा इक इति स्थिते 'यस्येति च' इत्याकारलोपे उक्तरीत्या कुत्वजश्त्वयोः निवृत्तौ वाचिक इति सिध्यति । तथापि आकारलोपस्य स्थानिवत्त्वेन आकारान्तस्य इकमाश्रित्य भत्वे सति आकारान्तनिष्ठभत्वेन चकारान्तनिष्ठपदत्वस्य अव्याघातात् कुत्वजश्त्वयोः वागिक इति स्यात् । उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाभावात्तुल्यावधिकया भसंज्ञया 'सुप्तिङन्तम्–' इति पदसंज्ञा बाध्यते, एकसंज्ञाधिकारे परत्वाभावः । कथमिति । अत्रापि अङ्गुलिदत्तशब्दस्य लोपे सति इकप्रत्ययाश्रितभत्वेन पदत्वाभावाद् जश्त्वं दुर्लभमिति प्रश्नः । षष इति । षष्शब्दस्य पूर्वपदत्वे 'ठाजादौ–' इति सूत्रसिद्धो द्वितीयादच ऊर्ध्वस्यैव लोपः, न त्वयमुत्तरपदलोप इति वचनात् षडिक इति सिद्धमित्यर्थः । एवं च षडङ्गुलिदत्त इत्यत्र डकाराकारादूर्ध्वस्य लोपे सति डकाराकारस्य 'यस्येति च' इति लोपे सति तस्य स्थानिवत्त्वेन अकारा-

पञ्चानां रूपाणां साम्येऽपि सैन्धवादिष्विव प्रकरणादिना विशेषोऽध्यवसेयः । जातिनाम्नः । ये शब्दा जात्यन्तरे प्रसिद्धाः, मनुष्येषु नामत्वेन विनियुक्तास्त इहोदाहरणम् । द्वितीयमित्यादि । एचः संध्यक्षरमिति प्राचां संज्ञा । वागाशीरिति । वाचि आशीर्यस्येति विग्रहः । वाचिक इति । यद्यत्र द्वितीयादच ऊर्ध्वस्य लोपः स्यात् तदा वाच् आ इक इति स्थिते 'यस्येति च' इत्याकारस्य लोपे तस्य स्थानिवत्त्वादाकारान्तस्य भत्वे अन्तर्वर्तिनीं विभक्तिमाश्रित्य चकारान्तस्य पदत्वेन कुत्वजश्त्वयोः सतोर्वागिक इति स्यात् । उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाभावात्तुल्यावधिकतया 'यचि भम्' इति भसंज्ञया 'सुप्तिङन्तम्–' इति पदसंज्ञा एकसंज्ञाधिकारात्परत्वाद्बाध्यते । 'स्वादिषु–' इति पदसंज्ञा तु न शङ्कनीयैव, 'यचि भम्' इति भसंज्ञायास्तदपवादत्वात् । कथमिति । अत्राप्युत्तरपदलोपे जाते जश्त्वं दुर्लभमिति प्रश्नः । षष इति । अत्र सौत्र एव लोप इष्यते, न त्वौपसंख्यानिक इत्यर्थः । शेवलसुपरि ।

पुपरिविशालवरुणार्यमादीनां तृतीयात् । (५—३—८४) एषां नाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात् । पूर्वस्यापवादः । म्पितः शेवलदत्तः शेवलिकः, शेवलियः, शेवलिलः । सुपरिकः । विशालिकः । कः । अर्यमिकः । २०३९ अजिनान्तस्योत्तरपदलोपश्च । (५—३—८२) नान्तान्मनुष्यनाम्नोऽनुकम्पायां कन्, तस्य चोत्तरपदलोपः । अनुकम्पितो ाजिनो व्याघ्रकः । सिंहकः । २०४० अल्पे । (५—३—८५) अल्पं तैलं म् । २०४१ ह्रस्वे । (५—३—८६) ह्रस्वो वृक्षो वृक्षकः । २०४२ यां कन् । (५—३—८७) ह्रस्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् । पवादः । वंशकः । वेणुकः । २०४३ कुटीशमीशुण्डाभ्यो रः । —३—८८) ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः । २०४४ कुत्वा डुपच् ।

---

 इकमाश्रित्य भत्वे सति तेन अकारान्तनिष्ठेन षकारान्तस्य पदत्वाव्याघाताज्ज- निर्बाधमिति भावः । स्पष्टं चेदं 'स्वादिषु–' इति सूत्रे भाष्ये । शेवल । एषामिति । , सुपरि, विशाल, वरुण, अर्यमन् एतत्पूर्वपदकानामित्यर्थः । पूर्वस्येति । ादौ–' इत्यस्येत्यर्थः । शेवलिक इति । शेवलदत्तशब्दात् ठचि तृतीयादचः  दत्तशब्दस्य लोपः । शेवलिल इति । इलचि रूपम् । सुपरिक इति । रिदत्तशब्दात् ठचि दत्तशब्दलोपः । विशालिक इति । विशालदत्तशब्दात् ठचि म् । वरुणिक इति । वरुणदत्ताद् वरुणिकः । अर्यमिक इति । अर्यमदत्ताद् र्यमिकः । 'अकृतसंधीनामेषाम्–' इति वार्तिकं भाष्ये स्थितम् । तेन सुपर्याशीर्दत्तः रिक इत्यादि सिध्यति । अजिनान्तस्य । व्याघ्रक इति । व्याघ्राजिन इति । श्चिन्मनुष्यस्य नाम । तस्मात् कनि अजिनस्य लोपः । सिंहक इति । सिंहा- नशब्दात् कनि अजिनस्य लोपः । अल्पे । अल्पत्वविशिष्टे वर्तमानाद् यथाविहितं यया स्युः । तैलकमिति । सर्वकम्, उच्चकैः, पचतकीत्याद्यप्युदाहार्यम् । ह्रस्वे । स्वत्वविशिष्टे वर्तमानाद्यथाविहितं प्रत्यया इत्यर्थः। अल्पत्वं महत्त्वप्रतिद्वन्द्वि, ह्रस्वत्वं  दीर्घत्वप्रतिद्वन्द्वीति भेदः । संज्ञायां कन् । वंशक इति । ह्रस्वस्य वेणुजाति षस्य नाम । कुटीशमी । ह्रस्व इत्येव । कुटीर इति । 'स्वार्थिकाः क्वचि- कृतितो लिङ्गवचनान्यतिवर्तन्ते' इति पुंस्त्वम् । एवं शमीरः, शुण्डार इत्यपि ।

---

वलिक इति । 'बह्वचो मनुष्यनाम्नः–' इति ठच् । घनिलचोस्तु शेवलियः । वलिलः । 'शेवलादीनां तृतीयाल्लोपे य उच्यते स च कृतसंधीनां वक्तव्यः । सुप- शीः, सुपरिकः, सुपरियः, सुपरिल इति भाष्ये स्थितम् । कैयटेन तु सुपरिक  प्रतीकमुपादाय संहिताकार्ये तु कृते लोपे सति सुर्पयिक इति स्यादिति व्याख्यातम् । यं भावः—संहिताकार्ये यणि कृते तृतीयादच ऊर्ध्वलोपे सति शीर्दत्त इत्यस्यैव लोपः ्यात्, आकारस्य तु 'यस्येति च' इत्यनेन स्यात् । तथाच स्थानिवद्भावाद्यणो निवृत्तिर्न विष्यतीति । ह्रस्वे । तैलादौ ह्रस्वदीर्घादिव्यवहाराभावाद् वृक्षक इत्युदाहृतम् । यद्यपि ल्पे' इत्यनेनैवेदं रूपं सिध्यति, तथापि शाब्दबोधे विशेषोऽस्तीत्याहुः । कुटीर इति ।

(५—३—८९) ह्रस्वा कुतूः कुतुपः । 'कुतूः कृत्तिस्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्।' इत्यमरः । २०४५ कासूगोणीभ्यां ष्टरच् । (५—३—९०) आयुधविशेषः कासूः । ह्रस्वा सा कासूतरी । गोणीतरी । २०४६ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे । (५—३—९१) वत्सतरः । द्वितीयं वयः प्राप्तः । उक्षतरः । अश्वतरः । ऋषभतरः । प्रवृत्तिनिमित्ततनुत्व एवायम् । २०४७ किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् । (५—३—९२) अनयोः कतरो वैष्णवः । यतरः । ततरः । महाविभाषया कः । यः । सः । २०४८ वा बहूनां जातिपरिप्रश्ने

---

ह्रस्वा शमी शुण्डा चेत्यर्थः । कुत्वा डुपच् । कुतुप इति । कुतूशब्दाद् डुपचि डित्वाट्टिलोपः । तत्रापि कुटीरादिवत् स्त्रीत्वमपहाय पुंस्त्वमेव । तत्रामरकोशमपि प्रमाणयति कुतूः कृत्तीति । कासूगोणीभ्यां ष्टरच् । ह्रस्व इत्येव । कासूतरीति । षित्वाद् ङीषिति भावः । 'कासुर्बुद्धे कुवाच्येऽस्त्रे' इति नानार्थरत्नमालायाम् । एवं गोणीतरीति । वत्सोक्ष । ह्रस्व इति निवृत्तम् । वत्स, उक्षन्, अश्व, ऋषभ एभ्यस्तनुत्वविशिष्टवृत्तिभ्यः ष्टरच्प्रत्ययः स्यादित्यर्थः । तनुत्वं न्यूनत्वम् । वत्सः प्रथमवयाः । वयसश्च प्रथमस्य तनुत्वम् उत्तरवयःप्राप्त्या ज्ञेयम्, तदाह द्वितीयं वयः प्राप्त इति । उक्षतर इति । उक्षा तरुणो बलीवर्दः । तारुण्यस्य तनुत्वं तृतीयवयःप्राप्त्या ज्ञेयम् । अश्वतर इति । गर्दभेन अश्वायामुत्पादितः अश्वतरः । अश्वतरत्वं च अश्वत्वापेक्षया न्यूनमेव । ऋषभतर इति । ऋषभो भारस्य वोढा । तस्य तनुत्वं भारोद्वहने मन्दशक्तिता तद्वानित्यर्थः । ननु कृशो वत्सो वत्सतर इति कुतो नेत्यत आह प्रवृत्तिनिमित्ततनुत्वे एवायमिति । एतच्च भाष्ये स्पष्टम् किंयत्तदो निर्धारणे । किम्, यत्, तद् एषां समाहारद्वन्द्वात्पञ्चमी द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यो डतरच् स्यादित्यर्थः । अनयोः कतरो वैष्णव इति । को वैष्णव इत्यर्थः । अत्र वैष्णवत्वगुणेन किंशब्दार्थं इदमर्थाभ्यां निर्धार्यते । अतः किंशब्दाद् डतरचि डित्वाट्टिलोपे कतर इति भवति । एवं यद्शब्दात् तद्शब्दाच्च डतरचि टिलोपे यतरः, ततर इति भवति । 'निर्धार्यमाणवाचिभ्यः' इति किम् ? कयोरन्यतदो देवदत्तः, ययो-

---

'स्वार्थिकाः प्रकृतितो लिङ्गमतिवर्तन्ते' इति पुंल्लिङ्गताऽत्र संगच्छते । वत्सोक्षाश्व । तनुत्वं न्यूनता । सा च प्रवृत्तिनिमित्तस्य, प्रत्यासत्तेः । क्वचित्तु तत्सहचरितधर्मान्तराणाम् । तत्र वत्सः प्रथमवयाः । वयसश्च प्रथमस्य नाम वयोऽन्तरप्राप्तिस्तदाह द्वितीयमिति । तरुण उक्षा । तारुण्यस्य च तनुत्वं तृतीयवयःप्राप्तिः । अश्वायामश्वादुत्पन्नोऽश्वः । अश्वत्वं च जातिः । तत्सहचरितस्याश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यपितृकतात्वात् । तथा च गर्दभेनाश्वायामुत्पादितोऽश्वतरः। ऋषभो भारस्य वोढा । तस्य तनुत्वं भारोद्वहने मन्दशक्तिता । तद्वांस्तु ऋषभतरः । किंयत्तदो । कतरो वैष्णव इति । गुणेन निर्धारणमिदम् । क्रियासंज्ञाभ्यां निर्धारणे तु कतरोऽध्यापकः । कतरो देवदत्त इत्यादि ज्ञेयम् । ननु द्वयोरेकस्य निर्धारणे डतरच्चेद् भवति, तर्हि 'कयोरन्यतरो देवदत्तः' 'ययोरन्यतरः' 'तयोरन्यतरः' इत्यत्रापि प्राप्नोति । अत्राहुः—

म् । (५–३–९३) बहूनां मध्ये निर्धारणे डतमज्वा स्यात् । 'जातिपरिप्रश्ने' इति प्रत्याख्यातमाकरे । कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम् । यकः । सकः । महाविभाषया कः, यः, सः । किमोऽस्मिन्विषये

---

डतरः, तयोरन्यतर इत्यत्र किमादिभ्यो न भवति । वा बहूनाम् । 'कियत्तद—' इति, 'निर्धारणे' इति, 'एकस्य' इति चानुवर्तते । 'बहूनाम्' इति निर्धारणे षष्ठी । तदाह बहूनां मध्ये निर्धारणे डतमज्वा स्यादिति । मध्ये इत्यनन्तरमेकस्येति शेषः । जातिपरिप्रश्ने गम्ये इत्यपि बोध्यम् । जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः । जातौ परिप्रश्ने च गम्ये इत्यर्थः । तत्र जाताविति कियत्तदां सर्वेषामेव विशेषणम् । परिप्रश्नग्रहणं तु किम एव विशेषणम्, तच्च क्षेपार्थकस्य किमो निवृत्त्यर्थम् । यत्तदोस्तु परिप्रश्नग्रहणं न विशेषणम्, असंभवादिति वृत्तौ स्पष्टम् । अत्र वार्तिकम्—'किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम्' इति 'पूर्वसूत्रे द्वयोरिति, अस्मिन् सूत्रे जातिपरिप्रश्ने इति च न कर्तव्ये इति भावः' इति कैयटः । तदाह जातिपरिप्रश्न इति प्रत्याख्यातमाकर इति । क्षेपार्थस्य त्वनभिधानान्न ग्रहणमिति तदाशयः । पूर्वसूत्रे द्वयोरिति चेति बोध्यम् । तथाच 'कतम एषां पाचकः कतमो देवदत्तः' इत्यत्र क्रियागुणसंज्ञाभिरपि निर्धारणे डतमच् भवति । 'एषां कतरो देवदत्तः' इत्यत्र बहूनामेकस्य निर्धारणे डतरच् भवति । अत एव 'प्रत्ययः' इति सूत्रभाष्ये 'बहुष्वासीनेषु कश्चित् कंचित्पृच्छति कतरो देवदत्तः' इति प्रयोगः संगच्छते । कतमो भवतां कठ इति । 'गोत्रं च चरणैः सह' इति कठस्य जातित्वम् । वाग्रहणमकजर्थमिति । अन्यथा महाविभाषया अपवादेन मुक्ते उत्सर्गस्याप्रवृत्तेस्तत्वादकच् न स्यादिति भावः । नच 'अव्ययसर्वनाम्नाम्—' इत्यस्याधिकारत्वात् तदनुवृत्त्यैव सिद्धे वाग्रहणं व्यर्थमेवेति वाच्यम्, इहैव सूत्रे तदनुवृत्तिः, नतु पूर्वसूत्रे इति ज्ञापनार्थत्वात् । अतो डतरज्विषये नाकच् । महाविभाषयेति । अत एव 'अवक्षेपणे' इति सूत्रे भाष्ये 'क एतयोरर्थयोर्विशेषः' इति प्रयोगः संगच्छते । 'उत्तमवादयः प्रागवक्षेपणकनो नित्याः' इति तु प्रायिकमिति भावः । किमोऽ-

---

निर्धार्यमाणवाचिभ्य एवायं प्रत्ययोऽभिधानस्वाभाव्यात् । तेनात्र नातिप्रसङ्ग इति । एकस्येति किम्, 'द्वयोः' इति कर्मणि षष्ठी मा भूत् । तथा हि सति 'अस्मिन् संघे कौ देवदत्तयज्ञदत्तौ' इत्यादावेव स्यात् । वा बहूनाम् । 'कियत्तदः' इति वर्तते । जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः । अत्र जाताविति सर्वेषां विशेषणम् । षष्ठीसमासे तु गुणभूतस्य जातिग्रहणस्य निष्कृष्य संबन्धोऽनुपपन्नः स्यात् । परिप्रश्नग्रहणं तु किम एव विशेषणम् । तच्च क्षेपनिवृत्त्यर्थम् । तत्र जातिग्रहणं प्रायोऽभिप्रायम् । क्रियागुणसंज्ञाभिरपि निर्धारणे डतमच इष्टत्वात् । तथा पूर्वसूत्रे द्वयोरिति प्रायोऽभिप्रायम् । बहूनां निर्धारणेऽपि डतरच इष्टत्वात् । तथा च वार्तिकम्—'किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम्' इति । अत्र कैयटः—'द्वयोः' इति 'जातिपरिप्रश्ने' इति च न कर्तव्यमिति भाव इति । तदेतदाह प्रत्याख्यातमाकर इति । कठ इति । कतमो भवतामध्यापकः शूरो देवदत्तो वेत्यप्युदाहर्तव्यम् । यकः । सक

डतरजपि । कतरः । २०४९ एकाच्च प्राचाम् । (५-३-९४) डतरच् डतमच्च स्यात् । अनयोरेकतरो मैत्रः । एषामेकतमः । २०५० अवक्षेपणे कन् । (५-३-९५) व्याकरणकेन गर्वितः । येनेतरः कुत्स्यते तदिहोदाहरणम् । स्वतः कुत्सितं तु 'कुत्सिते' (सू २०२९) इत्यस्य ।

इति तद्धितेषु प्रागिवीयप्रकरणम् ।

## अथ तद्धितेषु स्वार्थिकप्रकरणम् । ४१ ।

२०५१ इवे प्रतिकृतौ । (५-३-९६) कन्स्यात् । अश्व इव प्रतिकृतिः अश्वकः । 'प्रतिकृतौ' किम्—गौरिव गवयः । २०५२ संज्ञायां च । (५-३-९७)

---

स्मिन्निति । 'वा बहूनाम्–' इति प्रकृतसूत्रविषयेऽपीत्यर्थः, बहुष्वासीनेषु इत्याद्युदाहृतभाष्यप्रयोगादिति भावः । एकाच्च प्राचाम् । शेषपूरणेन सूत्रं व्याचष्टे—डतरच् डतमच्च स्यादिति । पूर्वसूत्रद्वयविषये इति शेषः । 'महाविभाषयैव सिद्धे प्राचांग्रहणं न कर्तव्यम्' इति भाष्यम् । अत एव नाकजर्थं तत् । अवक्षेपणे कन् । व्याकरणकेन गर्वित इति । व्याकरणं हि स्वतो न कुत्सितम्, किं तु अधीतं सदध्येतृकुत्साहेतुभूतगर्वमावहदवक्षेपणम् । नन्ववक्षेपणं कुत्सा, तत्कथं व्याकरणमवक्षेपणं स्यात्, 'कुत्सिते' इत्यनेन गतार्थं चेदमित्यत आह येनेतर इति । अवक्षेपणशब्दः करणे ल्युडन्त इति भावः ।

इति तद्धितेषु प्रागिवीयप्रकरणम् ।

अथ तद्धिते स्वार्थिकप्रकरणं निरूप्यते । इवे प्रतिकृतौ । कन् स्यादिति । 'अवक्षेपणे कन्' इत्यतः तदनुवृत्तेरिति भावः । इवार्थ उपमानत्वम् । तद्वति वर्तमानत्प्रातिपदिकात्कन् स्यात्प्रतिकृतिभूते उपमेये इति फलितम् । मृदादिनिर्मिता प्रतिमा प्रतिकृतिः । अश्वक इति । प्रतिकृतेः स्त्रीत्वेऽपि 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति पुंल्लिङ्गत्वम् । संज्ञायां च । कनिति शेषः ।

---

इति । कक इति तु नोक्तम्, अकच्सहितस्यापि 'किमः कः' इत्ययमादेश इति व्याख्यातत्वात् । महाविभाषयेति । 'प्राग्दिशः–' इति सूत्रे समर्थप्रथमग्रहणयोर्निवृत्तत्वेऽपि वाग्रहणमनुवर्तते इत्युक्तत्वादिति भावः । 'किंयत्तदः–' इति सूत्रे द्वयोरित्यस्य प्रत्याख्यानादाह किमोऽस्मिन्निति । एकाच्च । प्राचांग्रहणं पूजार्थम् । विकल्पोऽनुवर्तत एव । अवक्षेपणे कन् । कुत्सिते तु कः । स्वरे विशेषः । येनेतर इति । अवक्षिप्यते येनेत्यवक्षेपणशब्दः करणे ल्युडन्त इति भावः ।

इति तत्त्वबोधिन्यां प्रागिवीयप्रकरणम् ।

अश्वक इति । अश्वशब्दोऽश्वे एव वर्तते, कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृश इति नायं स्वार्थिक इत्येके । अन्ये तु सादृश्यनिबन्धनादभेदोपचाराद्गौर्वाहीक इतिवदश्वशब्द एव प्रतिकृतौ वर्तते । प्रत्ययस्तु तस्यैवौपचारिकत्वस्य बोधक इत्याहुः । प्रतिकृतौ किम्, गौरिव गवयः । तृणचर्मकाष्ठादिनिर्मितं प्रतिमापरपर्यायं वस्तु प्रति-

कन् स्यात्समुदायश्चेत्संज्ञा । अप्रतिकृत्यर्थमारम्भः । अश्वसदृशस्य संज्ञा
। उष्ट्रकः । २०५३ लुम्मनुष्ये । (५-३-९८) 'संज्ञायां च' इति विहि-
कनो लुप्स्यान्मनुष्ये वाच्ये । 'चञ्चा तृणमयः पुमान्' । चञ्चेव मनुष्यश्चञ्चा ।
। २०५४ जीविकार्थे चापण्ये । (५-३-९९) जीविकार्थं यदवि-
णं तस्मिन्वाच्ये कनो लुप्स्यात् । वासुदेवः । शिवः । स्कन्दः । देवलकानां
कार्थासु देवप्रतिकृतिष्विदम् । 'अपण्ये' किम्—हस्तिकान्विक्रीणीते । २०५५

---

यश्चेदिति । प्रकृतिप्रत्ययसमुदायश्चेत्प्रकृत्यर्थसदृशस्य संज्ञेत्यर्थः । पूर्वसूत्रे-
सिद्धे किमर्थमिदमित्यत आह अप्रतिकृत्यर्थमारम्भ इति । तथा च 'प्रति-
, इति निवृत्तम् । 'इव' इति त्वनुवर्तत एव । तदाह अश्वसदृसस्येति । अश्व-
स्य अमनुष्यस्य कस्यचित्संज्ञैषा । अश्वसदृशोऽयमश्वकसंज्ञक इति बोधः ।
नुष्ये । संज्ञायां चेति विहितस्येति । नतु 'इवे प्रतिकृतौ' इति विहि-
, मनुष्यस्य प्रतिकृतित्वासम्भवादिति भावः । चञ्चेव मनुष्यः चञ्चा इत्युदाहरणं
न चञ्चाशब्दं व्याचष्टे चञ्चा तृणमयः पुमानिति । चञ्चेति । चञ्चातुल्यो
ष्योऽयं चञ्चासंज्ञक इत्यर्थः । वर्ध्रिकेति । वर्ध्रिका चर्ममयी प्रतिकृतिः ।
ल्यो मनुष्योऽयं वर्ध्रिकासंज्ञक इत्यर्थः । लुपि युक्तवत्त्वात् स्त्रीत्वम् । वचनं तु
ष्यवदेव, 'हरीतक्यादिषु व्यक्तिः' इत्युक्तेः । तेन चञ्चे इव मनुष्यौ इत्यत्र चञ्चा
न भवति । जीविकार्थे चापण्ये । पण्यं विक्रीयमाणम् । तदाह अविक्री-
णमिति । वासुदेव इति । वासुदेवतुल्या जीविकार्था अविक्रेया प्रतिकृतिरि-
। एवं शिव इत्यादि । कथं प्रतिकृतेरविक्रेयाया जीविकार्थत्वमित्यत आह
लकानामिति । प्रतिमां गृहीत्वा भिक्षार्थं प्रतिगृहमटतामित्यर्थः । तत्तदायतनेषु
ष्ठितासु पूजार्थप्रतिमासु उत्तरसूत्रेण लुब्वक्ष्यते । हस्तिकान्विक्रीणीत इति ।
विकार्थं हस्तितुल्यप्रतिकृतीः विक्रीणीत इत्यर्थः । अत्र पण्यत्वप्रतीतेः कनो न
। 'संज्ञायां च' इति विहितस्य नायं लुप्, किन्तु 'इवे प्रतिकृतौ' इति विहितस्यैव,
ये प्रतिकृतावेव एतदुदाहरणात् । पठन्ति चाभियुक्ता :—

---

: । गवयस्तु नैवम् । समुदायश्चेदिति । प्रकृतिप्रत्ययसमुदायश्चेदश्वसदृशस्य
त्यर्थः । चञ्चा । वर्ध्रिकेति । लुपि युक्तवद्भावात् स्त्रीलिङ्गता । वासुदेवः ।
इत्यादि । याः प्रतिमाः प्रतिगृह्य गृहाद् गृहं भिक्षमाणा अटन्ति ता एव-
यन्ते । देवलका अपि । त एव भिक्षवोऽभिप्रेताः । यास्त्वायतनेषु प्रतिष्ठाप्यन्ते
न्ते च तासूत्तरसूत्रेण लुप् । तदुक्तम्—'अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च ।
प्रतिकृतौ लोपः कनो देवपथादिषु' इति । अर्चासु प्रतिमासु । प्रतिमासु कीदृशीषु,
नार्हासु गृहेष्वायतनेषु वा याः पूज्यन्ते तासु । चित्रकर्मध्वजाभ्यां तद्गताः प्रति-
यो लक्ष्यन्ते । अर्चासूदाहरणम्—शिवः, विष्णुः । चित्रकर्मणि अर्जुनः, दुर्योधनः ।
जेषु—कपिः, गरुडः, सिंहः । सुवर्णसिंहमकरादयो राज्ञां ध्वजेषु सन्ति । हस्ति-
निति । ईदृशमेव विषयमभिप्रेत्य पठन्ति—'रामं सीतां लक्ष्मणं जीविकार्थे
क्रीणीते यो नरस्तं च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं

देवपथादिभ्यश्च । (५-३-१००) कनो लुप्स्यात् । देवपथः । हंसपथः । आकृतिगणोऽयम् । २०५६ बस्तेर्ढञ् । (५-३-१०१) 'इवे' इत्यनुवर्तत एव । 'प्रतिकृतौ' इति निवृत्तम् । बस्तिरिव बास्तेयम्, बास्तेयी । २०५७ शिलाया ढः । (५—३—१०२) शिलेव शिलेयम् । योगविभागाद् ढञपीत्येके । शैलेयम् । २०५८ शाखादिभ्यो यः । (५—३—१०३) शाखेव शाख्यः । मुख्यः । जघनमिव जघन्यः । अग्र्यः । शरण्यः । २०५९ द्रव्यं च भव्ये । (५—३—१०४) द्रव्यम् अयं ब्राह्मणः । २०६० कुशाग्राच्छः । (५—३—१०५)

'रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग् धिक् ।
अस्मिन्पद्ये योऽपशब्दं न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग् धिक् ॥ इति ॥

अत्र रामादिशब्दाः प्रतिकृतिषु वर्तन्ते । तासां चात्र पण्यतया कनो लुप् दुर्लभ इति रामसीतालक्ष्मणशब्दानामपशब्दत्वमित्याशयः । देवपथादिभ्यश्च । कनो लुप् स्यादिति । शेषपूरणमिदम् । 'इवे प्रतिकृतौ' इति विहितस्य देवपथादिभ्यः परस्य कनो लुप् स्यादिति यावत् । देवपथ इति । देवानां पन्था देवपथः । तत्प्रतिकृतिरित्यर्थः । 'इवे प्रतिकृतौ' इति कनो लुप् । एवं हंसपथः । अत्र वृत्तौ पठितम्—

'अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥' इति ॥

अर्चाः प्रतिमाः पूजार्थासु तासु चित्रकर्मसु ध्वजेषु देपपथादिगणपठितेषु 'इवे प्रतिकृतौ' इति विहितस्य कनो लुबित्यर्थः । 'तद्राजस्य–' इति सूत्र कैयटोऽप्येतं श्लोकं पपाठ । अर्चासु यथा—शिवो विष्णुर्गणपतिरित्यादि । चित्रकर्मसु यथा—रावणः कुम्भकर्ण इन्द्रजिदित्यादि । ध्वजेषु यथा—कपिः गरुडो वृषभ इत्यादि । बस्तेर्ढञ् । निवृत्तमिति । अस्वरितत्वादिति भावः । 'संज्ञायां च' इत्यादिपर्वसूत्रेषु क्वापि प्रतिकृतावित्यस्यानिवृत्तेः न लुब्विधिषु तेषु तदनुवृत्तिरपेक्षिता । बस्तिरिवेति । 'बस्तिर्नाभेरधो द्वयोः' इत्यमरः । शिलाया ढः । इवे इत्येव । शिलेव शिलेयमिति । दध्यादीति शेषः । योगेति । 'शिलायाः' इत्येको योगः । 'ढञ्' इत्यनुवर्तते, 'इवे' इति च । शैलेयमिति । ञित्वादादिवृद्धि, स्त्रियां ङीप् च फलम् । 'ढः' इति द्वितीयो योगः । 'शिलायाः' इत्यनुवर्तते । उक्तोऽर्थः । शाखादिभ्यो यः । 'यत्' इति त्वपपाठः । तैत्तिरीये 'मुख्यो भवति' इत्यादौ मुख्यशब्दस्य आद्युदात्तत्वदर्शनात्, उगवादिसूत्रभाष्यविरुद्धत्वाच्च । द्रव्यं च भव्ये । द्रुशब्दादिवार्थवृत्तेः यप्रत्ययो निपात्यते भव्ये उपमेये गम्ये । 'नव्य आत्मवान् । अभिप्रेतानामर्थानां पात्रभूतः' इति वृत्तिः । द्रव्यम् अयमिति । द्रुः वृक्षः, स

च धिग्धिक्' इति । अयं भावः—'अपण्ये इत्युक्तत्वात्पण्ये हस्तिकानितिवत् रामकं सीतिकां लक्ष्मणकमिति प्रयोगा एव साधव इति । देवपथ इत्यादि । देव पथ इव प्रतिकृतिः । हंसपथ इव प्रतिकृतिरिति विग्रहः । बस्तिरिति । 'बस्तिर्नाभेरधोद्वयोः' इत्यमरः । द्रव्यं च भव्ये । द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते । समा-

मिव कुशाग्रीया बुद्धिः । २०६१ समासाच्च तद्विषयात् । (५-३-१०६) इवार्थविषयात्समासाच्छः स्यात् । काकतालीयो देवदत्तस्य वधः । इह काकतालसमागमसदृशश्चोरसमागम इति समासार्थः। तत्प्रयुक्तः काक-

---

पुष्पफलादिभाग् एवमभिमतफलपात्रभूत इत्यर्थः। यद्वा द्रुः कल्पवृक्षोऽत्र विवक्षितः, स इव अभिमतार्थभागित्यर्थः। यप्रत्यये ओर्गुणः अवादेशः। कुशाग्रः। इवे इत्येव। कुशाग्रमिवेति। सूक्ष्मत्वेन सादृश्यम्। कुशाग्रवत् इत्यर्थः। समासाच्च। तच्छब्देन प्रकृत इवार्थः परामृश्यते। तदाह इवार्थविषयादिति। इवार्थः सादृश्यमुपमानोपमेयभावात्मकम्, तद्विषयकादित्यर्थः। सादृश्यवदर्थबोधकात् समासादिति यावत्। यद्यपि घनश्याम इति समासोऽपि सादृश्यवदर्थबोधकः, तथापि सादृश्यवदर्थबोधकसमस्यमानयावत्पदावयवकात् समासादिति विवक्षितमिति न दोषः। छः स्यादिति। चकारेण पूर्वसूत्रोपात्तच्छस्यानुकर्षादिति। इवार्थे इति शेषः। 'पूगाञ्ञ्यः—' इत्यतः प्रागिवाधिकारात्। ततश्च इवार्थकसमस्यमानयावत्पदकात्समासादिवार्थे छः स्यादिति लभ्यते। काकतालीयो देवदत्तस्य वध इति। काकः कश्चिदकस्मात् तालवृक्षस्य मूलं गतस्तालफलपतनान्मृतः। तथैव कश्चिद्देवदत्तः अकस्मान्निर्जनप्रदेशे क्वचिद्गतः चोरेण हतः तत्रेदं वाक्यं प्रवृत्तम्। अत्र समासार्थगतं सादृश्यमेकम्, प्रत्ययार्थगतम् अन्यत्सादृश्यं च गम्यते। तथाहि—काकगमनमिव तालपतनमिव काकतालमिति समासस्य विग्रहः। तत्र काकशब्दः काकागमनसदृशे देवदत्तागमने लाक्षणिकः। तालशब्दस्तु तालपतनसदृशे चोरागमने लाक्षणिकः। काकागमनसदृशं देवदत्तागमनं तालपतनसदृशं चोरागमनमिति च काकतालमिति समासाद्बोधः। यद्यप्यत्र काकतालशब्दयोः मिलितयोरेकत्रान्वयाभावाद् द्वन्द्वसमासो न संभवति, परस्परान्वयाभावेन असामर्थ्याच्च। तथापि अस्मादेव विधिबलात् 'सुप्सुपा' इति समासः। तथा च काकतालसमागमसदृशो देवदत्तचोरसमागम इति समासार्थः, तदाह इह काकतालसमागमसदृशश्चोरसमागम इति समासार्थ इति। अत्र चोरसमागम इत्यस्य चोरेण देवदत्तस्य समागम इत्यर्थः। तदेवंविधात्समासात् काकतालशब्दादिवान्तरार्थे सादृश्यान्तरे छप्रत्ययः। तत्र समासात्मककाकतालशब्दभूतप्रकृत्यर्थरूपकाकतालसमागमसदृशदेवदत्तचोरसमागमे सति तालपतनकृतकाकमरणे उपस्थिते उपमानत्वम्, देवदत्तवधे चोरागमनकृते उपमेयत्वं च छप्रत्ययेन लभ्यते। ततश्च तादृशचोरसमागमे सति तालपतनकृतकाकमरणसदृशो देवदत्तस्य चोरकृतो वध इति छप्रत्ययेन लभ्यते। तदाह तत्प्रयुक्त इति। तादृशतालपतनप्रयुक्त इत्यर्थः। सदृश इत्यनन्तरं देवदत्तवध इति शेषः। तथा च काकतालसमागमसदृशो

---

समासाच्च तद्विषयात्। तच्छब्देन प्रकृत इवार्थो निर्दिश्यते इत्याह इवार्थविषयादिति। छः स्यादिति। इवार्थे इति बोध्यम्। 'पूगाञ्ञ्यः—' इत्यतः प्रागिवेत्यधिकारात्। शस्त्रीश्यामेत्यादौ तु एक एव इवार्थः। स च समासान्तर्भूत इति छो न तत्प्रयुक्तार्थानामप्रयोगात्। काकतालीय इति। प्रकृतसूत्रादेव ज्ञापकादिवार्थे

मरणसदृशस्तु प्रत्ययार्थः । अजाकृपाणीयः । अतर्कितोपनत इति फलितोऽर्थः । २०६२ शर्करादिभ्योऽण् । (५—३—१०७) शर्करेव शार्करम् । २०६३ अङ्गुल्यादिभ्यष्ठक् । (५—३—१०८) अङ्गुलीव आङ्गुलिकः । भरुजेव भारुजिकः । २०६४ एकशालायाष्ठजन्यतरस्याम् । (५—३—१०९) एकशालाशब्दादिवार्थे ठज्वा । पक्षे ठक् । एकशालेव एकशालिकः, ऐकशालिकः । २०६५ कर्कलोहितादीकक् । (५—३—११०) कर्कः शुक्लोऽश्वः । स इव कार्कीकः । लौहितीकः स्फटिकः । २०६६ पूगाञ्ञ्योऽग्रामणीपूर्वात् । (५—३—११२) इवार्थो निवृत्तः । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः । तद्वाचकात्स्वार्थे ञ्यः यात् । लौहितध्वज्यः । 'व्रातच्फञोरस्त्रियाम्'

देवदत्तचोरसमागमः, तद्धेतुकस्तालपतनकृतकाकमरणसदृशश्चोरकृतो देवदत्तवधः इत्येवं काकतालीयो देवदत्तवध इति समासाद्बोधः । एतदेवाभिप्रेत्योक्तं भाष्ये 'काकागमनमिव तालपतनमिव काकतालम् । काकतालमिव काकतालीयम्' इति । अत्र काकतालमिति इवार्थगर्भितकेवलद्वन्द्वाद् न भवति इवान्तरार्थस्य सादृश्यान्तरस्याप्रतीतेरित्यलम् । अजाकृपाणीय इति । अजागनमिव कृपाणपतनमिव अजाकृपाणम्, तदिव अजाकृपाणीयः । अजाकृपाणसमागमसदृशो देवदत्तचोरसमागमः समासार्थः कृपाणपतनप्रयुक्ताजामरणसदृशो देवदत्तवधश्चोरकृतः प्रत्ययार्थः । अत्र सर्वत्र अतर्कितोपनतत्वं साधारणो धर्म इत्याह अतर्कितेति । शर्करादिभ्योऽण् । इवे इत्येव । शार्करमिति । 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति विशेष्यनिघ्नतेति भावः । अंगुल्यादिभ्यष्ठक् । इवे इत्येव । अंगुलीवेति । अङ्गुलिशब्दात् 'कृदिकारादक्तिनः' इति ङीष् । आंगुलिक इति । पूर्ववद्विशेष्यनिघ्नता । भरुजेव भारुजिक इति । पूर्ववद्विशेष्यनिघ्नता । एकशालायाः । पक्षे ठगिति । 'अन्यतरस्याम्' ग्रहणम् अनन्तरठकः समुच्चयार्थमिति भावः । ठज्वेत्येव सुवचम् । कर्कलोहितादीकक् । कर्कः शुक्लोऽश्व इति । अश्वपर्यायेषु 'सितः कर्कः' इत्यमरः । लौहितीकः स्फटिक इति । जपापुष्पादिसंपर्कवशाल्लोहित इवेत्यर्थः । पूगाञ्ञ्यः । ईवार्थो निवृत्त इति । व्याख्यानादिति भाव । अनियतवृत्तय इति । उद्वृत्ता इत्यर्थः । तद्वाचकादिति । पूगेति न स्वरूपग्रहणम्, व्याख्यानात् । ग्रामणीवाचकपूर्वावयवकभिन्नात् पूगवाचकादित्यर्थः । लौहितध्वज्य इति । लोहिता ध्वजा यस्य पूगस्य स एव लौहितध्वज्यः । व्रातच्फञोरस्त्रियामिति । इदं सूत्रम् 'गोत्रे कुञ्जादिभ्यः—' इत्यत्र

समासः । सुप्सुपेति वा । उभयथापि विशेषसंज्ञाविनिर्मुक्तः । स च छप्रत्ययविषय एव । तेनेह स्वातन्त्र्यमुपाध्यन्तरयोगो विग्रहश्च नेत्याकारः । इह काकतालेत्यादि । आगच्छतः काकस्याऽकस्मात्तालफलपतनाद्यथा वधः, तथैव चाकस्मिकचोरसमागमाद्देवदत्तवधः । एवमजाया आगच्छन्त्याः कृपाणपतनाद् यथा वधः, तत्सादृशं मरणमिति फलितोऽर्थः । अतर्कितोपनत इति । अचिन्तितोपपन्नः यादृच्छिक इत्यर्थः । पूगाञ्ञ्यो । स्वरूपग्रहणं तु न भवति, 'अग्रामणीपूर्वात्' इति वचनात् । पूर्वशब्दो

(१००) व्रातः । कापोतपाक्यः च्फञ् । कौञ्जायन्यः । ब्राध्नायन्यः
आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् । (५-३-११४)
...षु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट् क्षौद्रक्यः । मालव्यः । ...ङीप् । क्षौद्रकी । 'आयुध' इति किम्—मल्लाः । 'सङ्घ' इति किम्—...द् । 'वाहीकेषु' किम्—शबराः । 'अब्राह्मण' इति किम्—गोपालकाः । ...न्यनाः । ब्राह्मणे तद्विशेषग्रहणम् । राजन्ये स्वरूपग्रहणम् । २०६८ वृका-...ण् । (५—३—११५) आयुधजीविसङ्घवाचकार्थे । वार्केण्यः । 'आयुध' किम्—जातिविशेषान्मा भूत् । २०६९ दामन्यादित्रिगर्तषष्ठाच्छः । ...—३—११६) दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः ...। त्रिगर्तः षष्ठो वर्गो येषां ते त्रिगर्तषष्ठाः ।

'आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी ।
क्रौष्टुकिर्जालमानिश्च ब्राह्मगुप्तोऽथ जालकिः ॥'

---

...दुपादाय व्याख्यातम् । व्रात इति । उदाहरणसूचनमिदम् । भारोद्वहनादि-...रायासजीवनाद् नानाजातीयानामनियतवृत्तीनां सङ्घो व्रातः । कापोतपाक्य इति । ...तान् पक्षिविशेषान् भक्षणाय पचतीति कपोतपाकः, स एव कापोतपाक्यः । पचेः ...र् घञ्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । च्फञिति । उदाहरणसूचन-...म् । कौञ्जायन्य इति । 'गोत्रे कुञ्जादिभ्यः—' इति च्फञ् । आयन्नादेशः । ततः ...र्थे अनेन ञ्यः । एवं ब्राध्नायन्यः आयुधजीवि । वाहीकेष्विति । वाही-...कग्रामविशेषेष्वित्यर्थः । क्षौद्रक्य इति । क्षुद्रको नाम कश्चिदायुधजीविनां वाहीक-...वासिनां सङ्घः, स एव क्षौद्रक्यः । मालव्य इति । मालवो नाम कश्चिद्वाहीकेषु ...युधजीविनां सङ्घः, स एव मालव्यः । टित्त्वाद् ङीबिति । एवं च 'अस्त्रियाम्' इति ...न संबध्यत इति भावः । तद्विशेषेति । व्याख्यानादिति भावः । वृकाट्टेण्यण् । ...को नाम कश्चिदायुधजीविसंघः, स एव वार्केण्यः । आदिवृद्धिः । रपरत्वम् । ...तिविशेषादिति । वृको नाम कश्चिन्मनुष्यखादी चतुष्पाज्जातिविशेषः ...सिद्धः । तस्मान्नेत्यर्थः । दामन्यादि । दामनिः आदिर्यस्य दामन्यादिः । त्रिगर्तः ...ष्ठो यस्य वर्गस्य स त्रिगर्तषष्ठः । दामन्यादिश्च त्रिगर्तषष्ठश्चेति समाहारद्वन्द्वात्पञ्चमी । ...फलितमाह दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चेति । आयुधजीविनां हि षड् वर्गाः, तत्र ...ष्ठस्त्रिगर्तः वर्गः, तेभ्यः षड्वर्गेभ्य इति यावत् । के ते त्रिगर्तषष्ठा इत्यत आह

---

...समुदायवचनः । अग्रामणीपूर्वादिति किम्, देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः । 'स ...षां ग्रामणीः' इति कन् । अत्र समुदायः पूगवचनः । लौहितध्वज्य इति । लोहितो ध्वजो यस्य संघस्य स लोहितध्वजः, स एव लौहितध्वज्यः । व्रातच्-फञोः । उत्सेधजीवित्वं व्रातस्य पूगाद्विशेषः । उत्सेधः शरीरायासः । कौञ्जयन्य इति । 'गोत्रे कुञ्जादिभ्यः—' इति च्फञ् । दामन्यादित्रिगर्तषष्ठात् । समाहार-द्वन्द्वात्पञ्चमी । त्रिगर्तषष्ठेभ्य इति । येषामायुधजीविनां षडन्तर्वर्गाः । षष्ठवर्गस्तु

दामनीयः । दामनीयौ । दामनयः । औलपि–औलपीयः । त्रिगर्त–कौण्डोपरथीयः । दाण्डकीयः । २०७० **पर्श्वादियौधेयादिभ्योऽणञौ ।** (५—३—११७) आयुधजीविसंघवाचिभ्य एभ्यः क्रमादणञौ स्तः स्वार्थे । पार्शवः । पार्शवौ । पर्शवः । यौधेयः । यौधेयौ । यौधेयाः । २०७१ **अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ।** (५—३—११८)

---

आहुरिति । कौण्डोपरथः, दाण्डकिः, क्रौष्टुकिः, जालमानिः, ब्राह्मगुप्तः, जालकिः इत्येतान् त्रिगर्तषष्ठान् आहुरित्यर्थः । जालकिरिति त्रिगर्तस्य नामान्तरम् । एतेषु षट्सु कौण्डोपरथब्राह्मगुप्तशब्दौ शिवाद्यणन्तौ । शेष इञन्तः । दामादिगणमुदाहरति दामनीय इति । दामनिरेव दामनीयः । औलपीति । प्रकृतिप्रदर्शना । औलपीय इति । औलपिशब्दात् स्वार्थे छः । त्रिगर्तेति । त्रिगर्तषष्ठानामुदाहरणसूचनमिदम् । कौण्डोपरथीय इति । कौण्डोपरथशब्दात्स्वार्थे छः । दाण्डकीय इति । दाण्डकिशब्दात् स्वार्थे छः । क्रौष्टुकीयः, जालमानीयः, ब्राह्मगुप्तीयः, जालकीय इत्यप्युदाहार्यम् । पर्श्वादियौधेयादि । एभ्य इति । पर्श्वादिभ्यो यौधेयादिभ्यश्चेत्यर्थः । पार्शव इति । पर्शुशब्दाज्जनपदक्षत्रियविशेषयोर्वाचकादपत्येष्वर्थेषु 'द्व्यञ्मगध–' इत्यण् । ततोऽपत्यसङ्घविवक्षायामनेन अणिति भावः । पर्शव इति । अपत्यसङ्घबहुत्वविवक्षायां प्रकृतस्याणोऽपि तद्राजत्वाल्लुक्, 'ञ्यादयस्तद्राजाः' इति वक्ष्यमाणत्वादिति भावः । यौधेय इति । युधाशब्दादपत्येऽर्थे 'द्व्यचः' इति

---

त्रिगर्तस्तेभ्य इत्यर्थः । त्रिगर्तवर्गषष्ठकाः के इत्याकाङ्क्षायामाह आहुस्त्रिगर्तषष्ठांश्चेति । अत्र जानकयस्त्रिगर्तवर्गः, तेषु च त्रिगर्तषष्ठेषु प्रथमपञ्चमौ कौण्डोपरथब्राह्मगुप्तशब्दौ शिवाद्यणन्तौ, शेषास्त्विञन्ताः । केचित्तु अतद्धितान्तमेव पञ्चमं ब्रह्मगुप्तशब्दं पठन्ति । कौण्डोपरथीय इति । बहुवचने तु कौण्डोपरथा दाण्डकय इत्यादि । पार्शव इति । पर्शुरिति जनपदशब्दस्ततोऽपत्ये 'द्व्यञ्मगध–' इत्यण् । बहुत्वे तद्राजत्वाल्लुक् । पुनः संघविवक्षायामनेनाण् । अस्याप्यणो बहुत्वे तद्राजत्वाल्लुक् । तदाह पर्शव इति । ननु पर्शुरिति यो जनपदशब्दस्तस्मादेवानेन स्वार्थेऽण् विधीयताम्, अपत्यवाचिपर्शुशब्दात्संघविवक्षायामण्विधौ तु स्वार्थिकत्वं न सिध्येदिति चेत् । अत्राहुः—केवलः पर्शुशब्द एव जनपदवाची, न त्वणन्त इति जनपदवाचिनः स्वार्थेऽण् न विधीयते, किं तु 'द्व्यञ्मगध–' इत्यणः 'तद्राजस्य बहुषु–' इत्यादिना लुकि बह्वपत्यवाचिपर्शुशब्दादेव स्वार्थे विधीयते स्वार्थश्चात्र संघ एव । न च पर्शुशब्दस्य संघवाचित्वं नेति शङ्क्यम्, बह्वपत्यवाचित्वे संघवाचित्वध्रौव्यादिति न काप्यनुपपत्तिरिति । यौधेय इति । युध्यतेऽसौ युधा । युधेरिगुपधलक्षणः कः । युधाया अपत्यं 'द्व्यचः' इति ढक् । तदन्तात्संघविवक्षायामनेनाञ् । तेन यौधेय इत्याद्युदात्तं भवति । किं च यौधेयस्याङ्को लक्षणं वा यौधेयः । 'संघाङ्कलक्षण–' इत्यञन्तादण् । एवं यौधेयादिषु ये ढगन्ताः शौकेयादयस्तेषु सर्वेषु प्रयोजनद्वयमूह्यम् । यौधेया इति । अञो लुक्, अन्तोदात्तम् । न च 'न प्राच्यभर्ग–' इत्यादिना निषेध

भिजिदादिभ्योऽण्णन्तेभ्यः स्वार्थे यञ्स्यात् । अभिजितोऽपत्यमाभिजित्यः । ...त्यः । शालावत्यः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः । ...२ ञ्यादयस्तद्राजाः । (५—३—११९) 'पूगाञ्ञ्यः' (सू २०६६) ...रभ्य उक्ता एतत्संज्ञाः स्युः । तेनास्त्रियां बहुषु लुक् । लोहितध्वजाः, कपोत-...ः, कौञ्जायनाः, ब्राध्नायना इत्यादि । २०७३ पादशतस्य संख्यादेर्वी-...यां वुन्लोपश्च । (५—४—१) लोपवचनमनैमित्तिकत्वार्थम् । अतो न

...। तदन्तादपत्यसङ्घविवक्षायामनेन अञ् । ञित्त्वम् आद्युदात्तत्वफलकम् । यौधेया ...। अपत्यसङ्घबहुत्वविवक्षायां 'तद्राजस्य–' इत्यञो लुक् । 'कितः' इत्यन्तोदात्तं ...। अभिजिद्विदभृत् । अभिजित्, विदभृत्, शालावत्, शिखावत्, शमी-..., ऊर्णावत्, श्रुमद् एषां समाहारद्वन्द्वात् पञ्चम्या लुक् । 'अण' इति प्रत्ययत्वात् ...ग्रहणम्, तदाह अभिजिदादिभ्य इति । अत्र 'आयुधजीविसङ्घादिति ...तम्' इति वृत्तिः । आभिजित्य इति । अभिजितोऽपत्यं आभिजितः । अप-...। आभिजित एव आभिजित्यः । वैदभृत्य इति । विदभृतोऽपत्यं वैदभृतः । ... एव वैदभृत्यः । शालावत्य इति । शालावतोऽपत्यं शालावतः, स एव ...वत्यः । शैखावत्य इति । शिखावतोऽपत्यं शैखावतः, स एव शैखावत्यः । ...मीवत्य इति । शमीवतोऽपत्यं शामीवतः, स एव शामीवत्यः । और्णावत्य ...। ऊर्णावतोऽपत्यमौर्णावतः, स एव और्णावत्यः । श्रौमत्य इति । श्रुमतो-...ं श्रौमतः, स एव श्रौमत्यः । अत्र अभिजिदित्यादिशब्देषु यञः स्वार्थिकतया ...र्थकत्वादाभिजित्यस्यायमिति विग्रहे 'गोत्रचरणात्–' इति वुञि 'आपत्यस्य च–' ...ि यलोपे आभिजितक इति भवति । 'अपत्याणन्तेभ्य एवायं यञ् । तेन आभि-...तो मुहूर्त इत्यादौ न यञ्' इति भाष्ये स्पष्टम् । ञ्यादयस्तद्राजाः । लोहित-...जा इति । 'पूगात्–' इति विहितस्य ञ्यस्य तद्राजत्वाद् बहुत्वे लुक् । कपोत-...ाः, कौञ्जायनाः, ब्राध्नायना इति । 'व्रातच्फञोः–' इति विहितस्य ञ्यस्य ...। इत्यादीति । क्षौद्रक्यः, क्षौद्रक्यौ, क्षुद्रकाः । आयुधजीवीति ञ्यटो लुक् । ...र्ण्यः, वार्कैण्यौ, वृकाः । वृकाट्टेण्यणो लुक् । दामनीयः, दामनीयौ, दामनयः, ...डोपरथा इत्यादौ 'दामन्यादित्रिगर्तषष्ठात्' इति छस्य लुक् । पार्शवः, पार्शवौ, ...ः, यौधेया इत्यत्र पर्श्वादियौधेयाद्यणञोर्लुक् । आभिजित्यः, आभिजित्यौ, ...जितः, विदभृत इत्यादौ अभिजिद्विदभृदित्यादिविहितस्य यञो लुगिति भावः ।

इति तद्धितेषु पञ्चमाध्यायस्य तृतीयपादः समाप्तः ।

अथ पञ्चमाध्यायस्य चतुर्थपादप्रारम्भः । पादशतस्य संख्यादेर्वीप्सायां ...लोपश्च । पादश्च शतं चेति समाहारद्वन्द्वाद् लोपापेक्षया षष्ठी । वुन्प्रत्य-...क्षया तु सा पञ्चम्यर्थे । संख्यावाचकशब्दपूर्वकात्पादशब्दात् शतशब्दाच्च

...ः, स्त्रियामेव तन्निषेधात् । आभिजित्य इति । आभिजितशब्दादणन्ताद्यञ् । ... विदभृत्प्रभृतिभ्योऽणि तदन्तेभ्यो वैदभृत-शालावत-शैखावतादिभ्यो यञ् । ...न्तस्य संख्यादेः । पादशतस्य किम्, द्वौ द्वौ माषौ ददाति । संख्यादेरिति

स्थानिवत् 'पादः पत्' (सू ४१४)। 'तद्धितार्थ–' (सू ७२८) इति समासे कृते प्रत्ययः। वुन्नयं स्त्रियामेव। द्वौ द्वौ पादौ ददाति द्विपदिकाम्। द्विशतिकाम्। 'पादशतग्रहणमनर्थकम्, अन्यत्रापि दर्शनात्' (वा ३३१४)। द्विमोदकिकाम्।
२०७४ दण्डव्यवसर्गयोश्च। (५—४—२) वुन्स्यात्। अवीप्सार्थमिदम्। द्वौ पादौ दण्डितः द्विपदिकाम्। द्विशतिकां व्यवसृजति ददातीत्यर्थः। २०७५ स्थूलादिभ्यः प्रकारवचने कन्। (५—४—३) जातीयरोऽपवादः। स्थूलकः।

---

वीप्साविशिष्टार्थवृत्तेः स्वार्थे वुन्प्रत्ययः स्यात्, प्रकृतेरन्त्यस्य लोपश्चेत्यर्थः। ननु वुनः अकादेशे सति 'यस्येति च' इत्येव लोपसिद्धेरिह लोपविधिर्व्यर्थ इत्यत आह लोपवचनमनैमित्तिकत्वार्थमिति। 'यस्येति च' इति लोपस्य परनिमित्तकतया तस्य 'अचः परस्मिन्–' इति स्थानिवत्त्वात् 'पादः पत्' इति पदादेशो न स्यात्। अस्य तु लोपस्य परनिमित्तकत्वाभावेन स्थानिवत्त्वाप्रसक्तेः पद्भावो निर्बाध इति भावः। तद्धितार्थ इति। नच वीप्सायाः प्रकृत्यर्थविशेषणतया वुनोऽर्थाभावात्कथमिह 'तद्धितार्थ–' इति समास इति वाच्यम्, वुनो द्योतकतया द्योत्यार्थेनैवार्थवत्त्वात्। वुन्नयं स्त्रियामेवेति। स्वभावादिति भावः। द्विशतिकामिति। द्वे द्वे शते ददातीति विग्रहः। पादशतेत्यादि। वार्तिकमिदम्। अनर्थकमिति कथम्, पादशतभिन्नव्यावृत्त्यर्थत्वादित्यत आह अन्यत्रापि दर्शनादिति। तदुदाहृत्य दर्शयति द्विमोदकिकामिति। द्वौ द्वौ मोदकौ ददातीति विग्रहः। दण्डव्यवसर्गयोश्च। वुन् स्यादिति। संख्यादेः पादशताद् दण्डव्यवसर्गयोर्गम्ययोर्वुन् स्यात्प्रकृतेरन्तलोपश्चेत्यर्थः। दण्डनं दण्डः। बलात्कृत्य द्रव्यग्रहणम्। व्यवसर्गो दानम्। ननु पूर्वेण सिद्धे किमर्थमिदमित्यत आह अवीप्सार्थमिति। द्वौ पादौ दण्डित इति। बलात्कृत्य ग्राहित इत्यर्थः। स्थूलादिभ्यः। प्रकारो भेदः सादृश्यं च, व्याख्यानात्। तद्वति वर्तमानाद्यथायोगं कन्नित्यर्थः। जातीयरोऽपवाद इति। एतेन अयमपि तद्वदेव प्रकारवति भवति, नतु प्रकारमात्र इति सूचितम्। चञ्चत्क इति। चञ्चधातुश्चलने। अचञ्चन्नपि यश्चञ्चन्निव दृश्यते

---

किम्, पादं पादं ददाति। वीप्सायामिति किम्, पादौ ददाति। अनैमित्तिकत्वार्थमिति। निमित्ते भवो नैमित्तिकः, अध्यात्मादित्वाट्ठञ्। तद्धितार्थ इति। यद्यपि प्रकृत्युपाधिर्वीप्सा, तथापि वुना द्योत्येऽस्ति तद्धितार्थो भवत्येवेति भावः। ददातीति। समर्पणमात्रमिह ददातेरर्थः, न तु परस्वत्वापादनपर्यन्तम्। तथात्वे हि उत्तरसूत्रविषयत्वं स्यात्। केचित्तु व्यवसृजतेर्धातोः प्रयोगे सत्येव उत्तरसूत्रस्य प्रवृत्तिमाहुः। अन्यत्रापि दर्शनादिति। द्वौ द्वौ माषौ ददातीत्यादौ त्वनभिधानान्नातिप्रसङ्ग इति भावः। दण्डव्यवसर्ग। दण्डनं दण्डः। दण्डश्चुरादित्वाद्भावे घञ्। अत्राप्युदाहरणे 'तद्धितार्थ–' इति समासः। स्त्रीलिङ्गं च तद्धितार्थः। यद्वा प्रकृत्यर्थ एव तद्धितार्थः, स्वार्थिकत्वाद् वुनः। द्वौ पादौ दण्डित इति। देवदत्तेन यज्ञदत्त इति शेषः। दण्डेरप्रधाने कर्मणि क्त इति यज्ञदत्त इत्यत्र प्रथमा। द्वौ पादावित्यत्र द्विपदिकामित्यत्र च द्वितीया भवति। 'दण्डेर्ग्रहणार्थे' इति तु द्विकर्मकेषूक्तम्। तथा च द्विपदि-

कः । 'चञ्चद्बृहतोरुपसंख्यानम्' । (वा ३३१५) । चञ्चत्कः । बृहत्कः । सुराया अहौ' (ग सू १३०) । सुरावर्णोऽहिः सुरकः । २०७६ अनत्यन्तगतौ क्तात् । (५—४—४) छिन्नकम् । भिन्नकम् । अभिन्नकम् । २०७७ न सामिवचने । (५—४—५) सामिपर्याय उपपदे क्तान्तान्न कन् । सामिकृतम् । अर्धकृतम् । अनत्यन्तगतेरिह प्रकृत्यैवाभिधानात्पूर्वेण कन्न प्राप्तः । इदमेव निषेधसूत्रमत्यन्तस्वार्थिकमपि कनं ज्ञापयति । बहुतरकम् । २०७८ बृहत्या

---

चञ्चत्कः । यथा स्पन्दमानस्वच्छजलमध्यवर्ती मणिः । बृहत्क इति । अबृहन् बृहन्निव दृश्यते स बृहत्कः, बृहदाख्यासामविशेषो वा । सुराया अहाविति । सूत्रमिदम् । प्रकारवचने कन्निति शेषः । सुराया अहावेवेति नियमार्थमिदम् । सुरक इति । 'केऽणः' इति ह्रस्वः । अनत्यन्तगतौ क्तात् । अत्यन्तगतिः क्रियावयवसंबन्धः, तदभावः अनत्यन्तगतिः, तस्यां गम्यमानायां क्तान्तात्कन्नित्यर्थः । छिन्नकमिति । किञ्चिदवयवावच्छेदेन छिन्नमित्यर्थः । न सामिवचने । वचनग्रहणं पर्यायलाभार्थमिति मत्वा आह सामिपर्याय उपपद इति । सामिकृतमिति । सामीत्यव्ययमर्धे । 'सामि' इति समासः । अर्धकृतमिति । अर्धं कृतमिति कर्मधारयः । सामीत्यस्य क्रियाविशेषणत्वेन कारकत्वात् समुदायस्य क्तान्तत्वम्, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । नन्विह अनत्यन्तगतेः प्रकृत्यैवाभिहितत्वाद् 'उक्तार्थानामप्रयोगः' इति न्यायेन पूर्वसूत्रविहितस्य कनः अप्रसक्तेरिह तन्निषेधो व्यर्थ इति शङ्कते अनत्यन्तगतेरिति । परिहरति इदमेवेति । तथापीति पूर्वमध्याहार्यम् । ज्ञापयतीति । न ह्ययमनत्यन्तगताविति कनः प्रतिषेधः, किं तर्हि,

---

...कर्मकर्मकग्रहणविषयीभूतो यज्ञदत्त इत्यादिरर्थ इति नव्याः । स्थूलादिभ्यः । प्रकारो भेदः सादृश्यं च । उभयत्रापि यथासंभवं कन् । जातीयरोऽपवाद इति । ...नायमपि तद्वदेव प्रकारवति भवति, न तु प्रकारमात्रे इत्युक्तं भवति । चञ्चद्बृहतोरिति । एतावपि स्थूलादिष्वेव पठितव्याविति भावः । चञ्चत्क इति । चञ्चतिश्चलनकर्मा । चञ्चन्नेव कश्चिच्चञ्चत्कः । एवं बृहद्विशेषो बृहत्कः । यद्वा अचञ्चन्नपि ...प्रभाविशेषाच्चञ्चन्निव बृहन्निव मणिविशेषो लक्ष्यते स चञ्चत्कः, बृहत्कः । सुरक इति । 'केऽणः' इति ह्रस्वः । छिन्नकमिति । ईषच्छिन्नमित्यर्थः । क्तप्रकृतिवाच्यया क्रियया कप्रत्ययवाच्यस्य साधनस्य व्याप्तिरत्यन्तगतिः, सेह नास्ति । न सामिवचने । सामि अर्थ उच्यते येन तत्सामिवचनमिति व्युत्पत्त्या 'वचनग्रहणं पर्यायार्थम्' इत्याह सामिपर्याय इति । सामिकृतमिति । 'सामि' इति समासः । अर्धकृतमिति । विशेषणसमासो बहुव्रीहिर्वा । प्रकृत्यैवेति । सामिवचनेनैवेत्यर्थः । ज्ञापयतीति । अयं भावः—'न सामिवचने' इत्यनेन 'अनत्यन्तगतौ—' इति कनो न निषेधः । सामिकृतादिभ्यस्तस्य प्राप्त्यभावात् तेभ्योऽसमासे सामिपदेनैव अनत्यन्तगतेर्द्योतनात्, समासेभ्यस्तु क्तान्तत्वाभावाच्च । न च कृद्ग्रहणपरिभाषया समासस्य क्तान्तत्वमस्तीति शङ्क्यम्, सामिशब्दस्य गतिकारकत्वाभावात् । तस्मात् स्वार्थिक एव कन् निषिध्यत इति । इदमेव निषेधवचनं क्वचित्स्वार्थिकं कनं ज्ञापयतीति ।

आच्छादने । (५—४—६) कन्स्यात् । 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा' इत्यमरः । 'आच्छादने' किम्–बृहती छन्दः । २०७९ अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः । (५—४—७) स्वार्थे । अषडक्षीणो मन्त्रः । द्वाभ्यामेव कृत मत्यर्थः । आशिता गावोऽस्मिन्निति आशितङ्गवीनमरण्यम् । निपातनात्पूर्वस्य मुम् । अलं कर्मणे अलङ्कर्मीणः । अलम्पुरुषीणः । ईश्वराधीनः । नित्योऽयं खः । उत्तरसूत्रे विभाषाग्रहणात् । 'अन्येऽपि केचित्स्वार्थिकाः प्रत्यया नित्यमिष्यन्ते' । 'तमबादयः प्राक्कनः । ञ्यादयः प्राग्वुनः । आमा-

---

अत्यन्तस्वार्थिकस्य कनः, तत्र च इदमेव ज्ञापकम् । अन्यथा तद्वैयर्थ्यादिति भावः । बहुतरकतिति । बहुतरमेव बहुतरकम् । भाष्ये तु इदं सूत्रं प्रत्याख्यातम् । 'तमबाद्यन्तात् स्वार्थे कन् वक्तव्यः' इति वचनेन यावादित्वाद्वा स्वार्थे कना बहुतरकं सुकरतरकमित्यादि सिद्धमिति तदाशयः । बृहत्या आच्छादने । कन् इति शेषः । बृहत्येव बृहतिका, उत्तरीयं वासः, तदाह द्वौ प्रावारेति । अमरवाक्यमिदम् । अषडक्ष । स्वार्थं इति । शेषपूरणमिदम् । अषडक्ष, आशितङ्गु, अलङ्कर्मन्, अलम्पुरुष एभ्यः अध्युत्तरपदाच्च स्वार्थे खः स्यादित्यर्थः । अषडक्षीणो मन्त्र इति, मन्त्रणं मन्त्रः । रहसि राजतदमात्यादिभिः युक्तिभिः क्रियमाणं निर्धारणम् । अविद्यमानानि षड् अक्षीणि श्रोत्रेन्द्रियाणि यस्मिन्निति बहुव्रीहिः । बहुव्रीहौ सक्थ्यक्ष्णोः इति षच् । तदन्तादनेन स्वार्थे खः । द्वाभ्यामेवेति । पुरुषाभ्यामिति शेषः । आशिता इति । 'अश भोजने' इत्यस्माद् 'आशितः कर्त्ता' इति ज्ञापकात्कर्तरि क्तः । पूर्वस्य मुमिति । आशितशब्दस्येत्यर्थः । अलङ्कर्मीण इति । 'पर्यादयो ग्लानाद्यर्थे' इति चतुर्थीसमासात्खः, टिलोपः । अलम्पुरुषीण इति । अलं पुरुषायेति विग्रहः । मातृभोगीण इत्यादाविव अषडक्षीणादौ णत्वम् । 'पदव्यवायेऽपि' इति निषेधस्तु न, पदे परतो यत्पदं तेन व्यवाये इत्याश्रयणात् । ईश्वराधीन इति । 'यस्मादधिकम्–' इति ईश्वरशब्दात्सप्तमी । शौण्डादित्वादधिशब्देन समासः । ततः स्वार्थे खः । 'समर्थानाम्–' इत्यतो वाग्रहणानुवृत्त्या अस्य खस्य वैकल्पिकत्वभ्रमं वारयति नित्योऽयं ख इति । उत्तरेति । 'विभाषाञ्चेः–' इत्युत्तरसूत्रे 'समर्थानाम्–' इत्यतो वाग्रहणानुवृत्त्यैव सिद्धे विभाषाग्रहणादिह पूर्वसूत्रे वाग्रहणानुवृत्त्यभावो ज्ञाप्यत इत्यर्थः । नचैवं सति आशिता गावोऽस्मिन्निति, अलं कर्मण इति च विग्रहप्रदर्शनमनुपपन्नमिति वाच्यम्, तस्य खप्रत्ययप्रकृतिकथनार्थत्वेन अलौकिकविग्रहवाक्यप्रायत्वात् । प्रसङ्गादाह अन्येऽपीति । इष्यन्त इति । भाष्यकृतेति शेषः । तमबा-

---

अषडक्षीण इति । अविद्यमानानि षडक्षीणि यस्मिन्निति बहुव्रीहिः । अक्षिशब्दोऽत्र श्रोत्रेन्द्रिये वर्तते । 'बहुव्रीहौ सक्थ्यक्ष्णोः–' इति षच्, तदन्तादनेन खः । मन्त्रो मन्त्रणम् । आशितंगवीनमिति । आङ्पूर्वादश्नोतेः 'आशितः कर्ता' इति ज्ञापकात्कर्तरि क्तः, ण्यन्तात्कर्मणि वा । उभयापि प्रभूतयवसमिति फलितोऽर्थः । अलंकर्मीण इति । अलंकर्म अलंपुरुषेति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति समासः । अलंपुरुषीण इति । प्रतिमल्लादिः । ईश्वराधीन इति । अधिशब्दः शौण्डादि-

प्राङ्मयटः । 'बृहतीजात्यन्ताः समासान्ताश्च' इति भाष्यम् । २०८०
विभाषाञ्चेरदिक्स्त्रियाम् । (५—४—८) अदिक्स्त्रीवृत्तेरञ्चत्यन्तात्प्रातिपदि-
कात् खः स्याद्वा स्वार्थे । प्राक्—प्राचीनम् । प्रत्यक्—प्रतीचीनम् । अवाक्—अवाची-
नम् । 'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः' इत्यमरः । अर्वन्तमञ्चतीति अर्वाक्,

---

प्राक्कन इति । 'अतिशायने तमप्—' इत्यारभ्य 'अवक्षेपणे कन्' इत्यत प्राग्विहिताः प्रत्यया इत्यर्थः । ञ्यादयः प्राग्वुन इति । 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' इत्यारभ्य 'पादशतस्य संख्यादेर्वीप्सायां वुन्' इत्यतः प्राग्विहिताः प्रत्यया इत्यर्थः । आमादयः प्राङ्मयट इति । 'किमेत्तिङव्ययघादाम्—' इत्यारभ्य 'तत्प्रकृतवचने मयट्' इत्यतः प्राग्विहिता इत्यर्थः । बृहतीजात्यन्ता इति । बृहतीशब्देन 'बृहत्या आच्छादने' इति कन् लक्ष्यते । जात्यन्तशब्देन तु 'जात्यन्ताच्छ बन्धुनि' इति छो लक्ष्यते । बहुवचननिर्देशात् पाशबादयोऽपि 'षष्ठया रूप्य च' इत्यन्ता गृह्यन्त इति कयटः । वस्तुतस्तु परिगणिता एव नित्याः, नतु पाशबादयोऽपि 'बृहतीजात्यन्ताः' इति बहुवचनं तु 'बृहत्या आच्छादने' इति 'जात्यन्ताच्छ बन्धुनि' इति च सूत्रयोर्मध्यगतेन 'अषडक्ष—' इति सूत्रेण विहितं प्रत्ययमभिप्रेत्येति न दोषः । 'विभाषाञ्चेः—' इति उत्तरसूत्रे खविधौ विभाषाग्रहणं तस्यापि बृहतीजात्यन्तरालवर्तित्वाविशेषाद् नित्यत्वे प्राप्ते विकल्पार्थम् । अनित्योऽयं खः, उत्तरसूत्रेषु विभाषाग्रहणादिति मूलं तु अभ्युच्चययुक्तिरिति शब्देन्दुशेखरे स्थितम् । विभाषाञ्चेरदिक्स्त्रियाम् । अदिक्स्त्रियामिति कर्मधारयगर्भो नञ्तत्पुरुषः । तदाह अदिक्स्त्रीवृत्तेरिति । प्रागिति । 'अञ्चेर्लुक्' इति लुप्ताकारान्तमिदम् । प्राचि देशे इत्यर्थे प्राचीनमिति खान्तमिदं स्वभावादाधेयपरम् । स्वभावादेव सामान्ये नपुंसकमेकवचनान्तत्वं च । इदं तु पदसंस्कारपक्षे । वाक्यसंस्कारपक्षे तु प्रागादिशब्देभ्यः समभिव्याहृतदेशकालस्थवृक्षादिबोधकेभ्यः खः । तत्र उपस्थितविशेष्यलिङ्गत्यागे मानाभावात् प्राचीना आम्राः, प्राचीना वाटी, प्राचीनं

---

इत्युक्तम् । तमबादय इति । 'अतिशायने तमप्—' इत्यादयः । प्राक्कन इति । 'अवक्षेपणे कन्' इति विहितात् । ञ्यादय इति । 'पूगाञ्ञ्यो ग्रामणीपूर्वात्' इत्यादयः । प्राग्वुन इति । 'पादशतस्य संख्यादेः' इति विहितात् । आमादय इति । 'किमेत्तिङव्ययघादामु—' इत्यादयः । प्राङ्मयट इति । 'तत्प्रकृतवचने मयट्' इत्यतः प्रागित्यर्थः । बृहतीजात्यन्ता इति । बृहतीशब्देन 'बृहत्या आच्छादने' इति विहितः कन् उपलक्ष्यते । जात्यन्तशब्देन 'जात्यन्ताच्च—' इति च्छः । बहुवचननिर्देशात्पाशबादयो गृह्यन्ते । यो हि वैयाकरणपाशादिशब्दैरर्थः प्रतीयते नासौ प्रकृतिमात्रेण प्रतीयत इति तेऽपि तमबादिवन्नित्या एवेति स्थितमाकरे । कन्छौ उदाहृत्य मूले बृहतीमात्रप्रयोगो जात्यन्तमात्रप्रयोगश्च कृतः, स तु अवाचकोऽप्यार्षप्रयोगानुवादकत्वान्न दोषाय । विभाषाञ्चेर : दिक् चासौ स्त्री चेति दिक्स्त्री, तन्निषेधः, न तु दिशि स्त्रियां च, स्त्रीलिङ्गैकवचननिर्देशात् । प्राचीनमिति । 'अन्तः'

अर्वाचीनम् । 'अदिक्स्त्रियाम्' किम्–प्राची दिक्, उदीची दिक् । 'दिग्ग्रहणम्' किम्–प्राचीना ब्राह्मणी । 'स्त्रीग्रहणम्' किम्–प्राचीनं ग्रामादाम्राः । २०८१ जात्यन्ताच्छ बन्धुनि । (५—४—९) ब्राह्मणजातीयः । 'बन्धुनि' किम्–ब्राह्मणजातिः शोभना । जातेर्व्यञ्जकं द्रव्यं बन्धु । २०८२ स्थानान्ताद्विभाषा सस्थानेनेति चेत् । (५—४—१०) सस्थानेन तुल्येन चेत्स्थानान्तमर्थवदित्यर्थः । पित्रा तुल्यः पितृस्थानीयः, पितृस्थानः । 'सस्थानेन' किम्–गोस्थानम् । २०८३

वनमिति भवतीत्याहुः । अर्वन्तमञ्चतीति वक्ष्यन् अर्वच्छब्दं विवृणोति निकृष्टेति । अमरवाक्यमिदम् । प्राची दिगिति । लिङ्गविशिष्टपरिभाषया प्राप्तिः । दिग्ग्रहणं किमिति । अस्त्रियामित्येतावतैव प्राची दिगित्यत्रातिप्रसङ्गनिरासात्किं तेनेति प्रश्नः । अव्याप्तिपरिहारार्थमित्याह प्राचीना ब्राह्मणीति । नेयं दिग्रूपा स्त्री, किंतु तद्भिन्ना स्त्रीति खो भवत्येवेति भावः । स्त्रीग्रहणं किमिति । अदिशीत्येतावतैव प्राचीना ब्राह्मणीत्यत्राव्याप्तिनिरासात्प्रश्नः । इदमप्यव्याप्तिपरिहारार्थमित्याह प्राचीनं ग्रामादाम्रा इति । स्थानिवत्सूत्रभाष्ये अयं प्रयोगः स्थितः । अत्र प्राच्यां दिशीत्यर्थे लुप्तास्तात्यन्ता प्रागिति प्रकृतिः । स च अव्ययत्वाद् अस्त्रीति खो भवत्येवेति भावः । जात्यन्ताच्छ बन्धुनि । छति लुप्तप्रथमाकम् । जातिशब्दान्तात् प्रातिपदिकाद्बन्धुनि वर्तमानात् स्वार्थे छप्रत्ययः स्यादित्यर्थः । बन्धुशब्दो द्रव्यवाचीति वक्ष्यति । तथा च बन्धुनि वर्तमानादित्यनेन जात्याश्रयद्रव्यलक्षकादिति फलितम् । ब्राह्मणजातीय इति । ब्राह्मणत्वजात्याश्रयो व्यक्तिविशेष इत्यर्थः । ब्राह्मणजातिः शोभनेति । ब्राह्मणत्वजातिरित्यर्थः । बध्यते ब्राह्मणत्वादिजातिर्व्यज्यतेऽस्मिन्निति बन्धु द्रव्यम् । 'शॄस्वृस्निहि–' इत्यादिना अधिकरणे उप्रत्ययः । तदाह जातेर्व्यञ्जकं द्रव्यं बन्ध्विति । आप्तपर्यायस्तु बन्धुशब्दो नेह गृह्यते, बन्धुनीति नपुंसकनिर्देशादिति भावः । स्थानान्तात् । सस्थानेनेत्यस्य विवरणं तुल्येनेति । इतिशब्दादर्थवदिति लभ्यते । तुल्यरूपेणार्थेन यदि स्थानान्तं शब्दस्वरूपमर्थवद्भवति, तदा स्थानान्तात् छो वा स्यादित्यर्थः । तुल्यरूपार्थे वर्तमानात् स्थानान्तात् छो वा स्यादिति यावत् । पितृस्थानीय इति । स्थानं पूज्यत्वादिपदम् । पितृ-

इत्यकारलोपे कृते 'चौ' इति दीर्घः । एवमग्रे क्वचिदूह्यम् । प्राचीना ब्राह्मणीति । प्रकर्षेणाञ्चतीति प्राचीनेत्येवं क्रियानिमित्तको वा देशकालनिमित्तको वा अयं शब्दो ब्राह्मण्यां वर्तते, न तु दिशीति प्रतिषेधाभावः । प्राचीनमिति । प्राच्यां दिशीत्यर्थे 'दिक्शब्देभ्यः–' इत्यस्तातिः 'अञ्चेर्लुक्' इति लुक् । 'लुक्तद्धितलुकि' इति ङीपो लुक् । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वात् स्त्रीत्वाभावः। खे तु कृते स्वाभावान्नपुंसकत्वम् । ब्राह्मणजातीय इति । द्वयेकयोरितिवद्भावप्रधानो ब्राह्मणशब्दः, तस्य जातिशब्देन सह बहुव्रीहिः । ब्राह्मणत्वजात्याधारभूतः पिण्ड इत्यर्थः । ब्राह्मणजातिरिति । षष्ठीतत्पुरुषः । भावप्रधानेन सह कर्मधारयो वा । जातेर्व्यञ्जकमिति । बध्यते जातिरस्मिन्निति बन्धुः । शॄस्वृस्निहि–' इत्यादिना अधिकरणे उप्रत्ययः । रूढोऽपि बन्धुशब्द आप्तपर्यायः पुंल्लिङ्गोऽस्ति, तथापि स नेह गृह्यते । 'बन्धुनि' इति नपुंसक-

...दिनष्ठक् । (५—४—१३) अनुगदतीत्यनुगादी । स एव आनुगादिकः । ...४ विसारिणो मत्स्ये । (५—४—१६) अण्स्यात् । वैसारिणः । 'मत्स्ये' किम्—विसारी देवदत्तः । २०८५ संख्यायाः क्रियाभ्यावृत्तिगणने ...सुच् । (५—४—१७) अभ्यावृत्तिर्जन्म । क्रियाजन्मगणनवृत्तेः संख्या-...त्स्वार्थे कृत्वसुच्स्यात् । पञ्चकृत्वो भुङ्क्ते । 'संख्यायाः' किम्—भूरिवारान्भुङ्क्ते ।

...मिव स्थानं यस्येति बहुव्रीहिः । पितृनिष्ठपूज्यत्वादितुल्यपूज्यत्वादिमानित्यर्थः । ...थानमिति । गवां निवास इत्यर्थः । अत्र तुल्यत्वाप्रतीतेर्न च्छः । 'किमेत्ति-...य-' इत्युत्तरसूत्रं प्रसङ्गात्पूर्वमेव व्याख्यातम् । 'अमु च च्छन्दसि' इति तु ...प्रक्रियायां व्याख्यास्यते । अनुगादिनष्ठक् । स्वार्थे इति शेषः । 'आमादयः ...मयटः' इत्युक्तेः ठगादयो नित्या एव प्रत्ययाः । अनुगादीति । 'सुप्यजातौ-' ... णिनिः । प्रकृतिप्रदर्शनमिदम् । ठको नित्यत्वात्स एवेत्यस्वपदविग्रहप्रदर्शनम् । ...गादिक इति । 'नस्तद्धिते' इति टिलोपः । इहक्रमेण च 'स्त्रियाम्' इति 'अणिनुणः' ... च सूत्रद्वयं पठितं कृदधिकारे व्याख्यास्यते । विसारिणो मत्स्ये । 'अणिनुणः' ... पूर्वसूत्राद् अण्णित्यनुवर्तते, तदाह अण् स्यादिति । मत्स्ये विद्यमानाद् विसा-...शब्दात् स्वार्थे अण् स्यादित्यर्थः । वैसारिण इति । 'इनण्यनपत्ये' इति प्रकृति...वाट्टिलोपो न । संख्यायाः । अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्येत, तदा चतु-...र्थं पाकप्रवृत्तौ त्रिः पचतीति स्यादित्यत आह अभ्यावृत्तिर्जन्मेति । उपसर्गवशाद् ...तु वर्तने' इति धातोरुत्पत्तौ वृत्तिरिति भावः । कृत्वसुचि चकार इत् । उकार ...च्चारणार्थः । 'तद्धितश्चासर्वविभक्तिः' इत्यत्र तसिलादिषु परिगणनात् कृत्वोऽर्था-...नव्ययत्वम् । पञ्चकृत्वो भुङ्क्त इति । पञ्चत्वसंख्याकोत्पत्तिविशिष्टा भोजन-...त्यर्थः । संख्यायाः किमिति । गणने वृत्तिः संख्याशब्दानामेवेति प्रश्नः । ...रिवारान् भुङ्क्त इति । भूरिशब्दो बहुशब्दपर्यायः । वारशब्दस्तु[1] समभिव्या-

...देशादिति भावः । संस्थानेनेत्यस्यैव व्याख्यानं तुल्येनेति । पितृस्थानीय इति । ...थानमत्र संबन्धविशेषः । पदमिति यस्य प्रसिद्धिः । पितुरिव स्थानमस्य पितृस्थानः । ...तृतुल्य इत्यर्थः । गोः स्थानमिति । तिष्ठन्त्यस्मिन्निति स्थानं देशः । इतिकरणं ...वक्षार्थम् । तेन तत्पुरुषो बहुव्रीहिर्वा यस्तुल्यस्थानशब्दस्तस्माच्छो न भवति । ...नुगादिनः । प्रकृतिस्वरूपप्रदर्शनपरं चैतद् न त्वयं केवलः प्रयोगार्हः, ठको ...त्यत्वादिति हरदत्तः । 'सुप्यजातौ-' इति णिनिः । विसारिणो । पूर्ववदिहापि ...निः । हरदत्तस्तु—'सुप्यजातौ-' इति णिनिरुपसर्गभिन्न एव सुप्युपपदे भवतीत्याशयेन ...सूत्रेऽस्मिंश्च अतएव निपातनाद् णिनिरित्याह । तदयुक्तम्, 'स बभूवोपजीविनाम्' ...नुयायिवर्गः' 'न वञ्चनीयाः प्रभवोऽनुजीविभिः' इत्यादिप्रयोगानुरोधेन उपसर्गे ...पुपपदेऽपि णिनेरवश्यस्वीकर्तव्यतया निपातनाश्रयणस्य व्यर्थत्वात् । 'अणिनुणः' ...त्तोऽनुवर्तनादाह अण् स्यादिति । वैसारिण इति । 'इनण्यनपत्ये' इति ...कृतिभावः । संख्यायाः । अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्यते, तदा

१ एतदग्रे 'वस्तुतः' इत्यधिकम् क ।

२०८६ द्वित्रिचतुर्भ्यः सुच् । (५—४—१८) कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते त्रिः । 'रात्सस्य (सू २८०) । चतुः । २०८७ एकस्य सकृच्च । (५—४—१९) 'सकृत्' इत्यादेशः स्यात्, चात्सुच् । सकृद् भुङ्क्ते । 'संयोगान्तस्य–' (सू ५४) इति सुचो लोपः । न तु 'हल्ङ्याप्–' (सू २५२) इति । अभैत्सीदित्यत्र सिच इव

---

हृतक्रियापर्याप्ते काले वर्तते । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । बहुकालेषु कात्स्न्येंन व्याप्ता भोजनक्रियेत्यर्थः । भोजनबहुत्वं त्वर्थाद्गम्यते । तथा च वार शब्दोऽयं न गणनवाची । भूरिशब्दोऽपि न संख्याशब्देन गृह्यते । 'बहुगणवतु इति संख्या' इत्यत्र बहुग्रहणेन तत्पर्यायस्य असंख्यात्वबोधनात् । अतोऽत्र न कृत्वसुच् । द्वित्रिचतुर्भ्यः । 'क्रियाभ्यावृत्तिगणने' इत्येव । सुचि चकार इत्, उकार उच्चारणार्थः । पूर्ववदव्ययत्वम् । त्रिरिति । भुङ्क्ते इत्यनुषज्यते । राविति । चतुर्शब्दात् सुचि चतुर् स् इति स्थिते 'रात्सस्य' इति सकारस्य लोपे चतुरिति रूपमित्यर्थः । अत्र भुङ्क्ते इत्यनुषज्यते । एकस्य सकृच्च । शेषपूरणेन सूत्रं व्याचष्टे सकृदित्यादेशः स्यादिति । सकृद् भुङ्क्त इति । एकशब्दात् सुच्, प्रकृतेः सकृदित्यादेशश्च । अत्र एकशब्दः क्रियाविशेषणम् । एकत्वविशिष्टा भुजिक्रियेत्यर्थः । स्वादु पचति इत्यादिवदेकं भुङ्क्ते इति प्रयोगे प्राप्ते इदं सूत्रमिति कैयटः । एको भुङ्क्ते इत्यत्र तु नायं विधिः प्रवर्तते, क्रियाग्रहणमनुवर्त्य क्रिया-विशेषणस्यैव एकशब्दस्य ग्रहणादित्यास्तां तावत् । ननु 'संयोगान्तस्य–' इति सुचो लोप इत्यनुपपन्नम् । 'हल्ङ्याब्भ्यः–' इत्येव हि सुलोपोऽत्र युक्तः । तस्मिन् कर्तव्ये संयोगान्तलोपस्य त्रैपादिकस्यासिद्धत्वादित्यत आह नतु हल्ङ्याबितीति । सिच इवेति । अभैत्सीदित्यत्र सिचो लोपनिवृत्तये हल्ङ्याबित्यत्र सिग्रहणेन सिचो

---

षट्कृत्वः प्रवृत्तौ पञ्चकृत्व इति स्यात्, अतोऽत्र विवक्षितमर्थमाह अभ्यावृत्ति-जन्मेति । भूरिवारानिति । भूरिशब्दस्य लौकिकसंख्यावाचित्वेऽपि नेह ग्रहणम् । 'बहुगण–' इति सूत्रे बहुग्रहणस्य नियमार्थत्वाद् 'अनियतसंख्यावाचिनां चेद्भवति बहोरेव' इति नियमशरीरमिति मनोरमा । बहुगणयोरेवेति नियमशरीरमित्यन्ये । वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात् 'कालाध्वनोः–' इति द्वितीयेति हरदत्तः । ननु वारशब्दस्य कालवाचित्वे भूरिशब्दोऽपि तत्समानाधिकारणत्वात्काल एव वर्तत इति कथमत्र प्रसङ्ग इति चेत् । अत्राहुः—कालवाचित्वेपि क्रियाभ्यावृत्तेरपि गम्य-मानत्वात्प्रसङ्ग इति । अभ्यावृत्तिगणने किम्, पञ्चपाका दशपाका इत्यत्र क्रियामात्रगणने माभूत् । क्रियाग्रहणं किमर्थम्, यावताभ्यावृत्तिः क्रियाया एव भवति, साध्यार्थविषय-त्वात्तस्याः, न द्रव्यगुणयोः । तयोस्तु सिद्धस्वभावतया शब्दाभिधानात् । पुनःपुनर्दण्डः, पुनःपुनः स्थूलः, इत्यत्रापि गम्यमानाया भवतिक्रियाया एवाभ्यावृत्तिर्न तु द्रव्यगुणयो-रिति चेत् । मैवम्, उत्तरार्थं क्रियाग्रहणस्यावश्यकत्वात् । एकस्य सकृच्च । अभ्या-वृत्तिरिति न संबध्यते । एकशब्देन ह्येकैव क्रियाव्यक्तिराख्यायते, तस्यास्त्वावृत्ते-रसंभवात् । क्रियाग्रहणमिहार्थमावश्यकम् । अन्यथा 'आ दशतः संख्याः संख्येये वर्तन्ते' इत्येको भुङ्क्ते इत्यत्रापि स्यादिति । इह साधु पचतीत्यादिवदेकं भुङ्क्ते इति प्रयोगे

पि तदयोगात् । २०८८ विभाषा बहोर्धाऽविप्रकृष्टकाले । (५—४—२०) कृष्ट आसन्नः । बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते । 'आसन्नकाले' किम्—वो मासस्य भुङ्क्ते । २०८९ तत्प्रकृतवचने मयट् । (५—४—२१) वचने प्रस्तुतं प्रकृतम्, तस्य वचनं प्रतिपादनम् । भावेऽधिकरणे वा ल्युट् । प्रकृतमन्नमन्नमयम् । अपूपमयः । यवागूमयी । द्वितीयेऽन्नमयो यज्ञः ।

---

णम्, तत्साहचर्यात् सुग्रहणेनापि सुजयं न गृह्यत इति भावः । विभाषा बहो-प्रकृष्टकाले । अविप्रकृष्टकालिकक्रियाजन्मगणनवृत्तेर्बहुशब्दाद् धाप्रत्ययो न स्यात् । पक्षे कृत्वसुच् । बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्त इति । प्रातःसङ्गवाद्यव्यवहितकालिकोत्पत्तिविशिष्टा भोजनक्रियेत्यर्थः । 'कृत्वोऽर्थप्रयोगे धिकरणे' इति दिवसात्षष्ठीति हरदत्तः । शेषत्वविवक्षायां षष्ठी इति तु नवीनाः । कृतवचने । तदिति प्रथमान्तनिर्देशः । प्राचुर्येणेति । बहुलतया उपस्थितं शब्देन विवक्षितमित्यर्थः । उपसर्गबलादिति भावः । प्रतिपादनमिति । नमित्यर्थः । भाव इति । तथा च प्रकृतस्य बोधने सतीत्यर्थः । प्राचुर्यविशेषणक-वृत्तेः प्रथमान्तात्स्वार्थे मयडिति फलति । अत्र प्राचुर्यविशिष्टं वस्तु प्रकृतेरर्थः । वस्तु तद्द्योतकः । अधिकरणे वेति । तथा च प्राचुर्यविशेषणकं यद्वस्तु मन्नुच्यते तदधिकरणे वाक्ये तादृशवस्तुवृत्तेः शब्दाद् मयडिति फलितम् । अत्र प्राचुर्यविशिष्टमुच्यमानं वस्तु प्रकृत्यर्थः । तदधिकरणं प्रत्ययार्थः । तन्त्रेणार्थद्वये तात्पर्यम्, व्याख्यानात् । यद्यप्याद्यपक्षे स्वार्थिकप्रकरणपाठः समञ्जसः, नतु णपक्षे । तथापि 'अथ स्वार्थिकाः' इति मूलं प्रायिकाभिप्रायमिति न दोषः । इति । भावल्युट्पक्षे इत्यर्थः । प्रकृतमन्नमन्नमयमिति । प्रचुरमन्नमि-र्थः । स्वार्थिकत्वात्प्रकृतिलिङ्गता । अपूपमय इति । प्रचुरोऽपूप इत्यर्थः । यवागू-मयीति । प्रचुरा यवागूरित्यर्थः । टित्त्वाद् ङीबिति भावः । द्वितीय इति । अधिकरणल्युट्पक्षे इत्यर्थः । अन्नमयो यज्ञ इति । 'इष्टिषु दशौदनाः पशौ तं

---

ते सकृच्छब्दप्रयोगार्थमिदं सूत्रमिति कैयटः । एकः पाक इत्यत्र तु अनभिधानान्नेति णिका । संयोगान्तस्येति । हलङ्यादिना सुलोप इति प्राचो ग्रन्थोऽयुक्त इत्याह स्त्विति । सुतिसीति साहचर्याद्विभक्तय एव तत्र गृह्यन्त इत्यभिप्रेत्याह सिच इति । बहुधा दिवसस्य भुङ्क्त इति । शेषत्वविवक्षायां षष्ठी । 'कृत्वोऽर्थ-प्रयोगे कालेऽधिकरणे' इत्यनेन षष्ठीति हरदत्तोक्तिस्तु नादर्तव्या । शेषाधिकारबलेनाष्ट-राः समासनिवृत्तिफलकतया तिङन्तेनोदाहरणमिति प्रागुक्तनिष्कर्षविरोधादित्याहुः । प्रकृत । प्राचुर्येण प्रस्तुतमिति । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढः, तथापि वचनग्रहणादयं विशेषो लभ्यते । वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके दा वचनं प्रत्यायनं तत्र यथा स्यादित्येवमर्थम् । आद्य इति । प्रथमान्तात्प्रकृते र्थे प्रत्ययः । स्वार्थिकत्वात्प्रकृतितो लिङ्गवचनम् । अपूपमयमित्यपि क्वचित्पठ्यते । तोऽपूपोऽपूपमयम् । क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते । स्मिन्पक्षे तद्ग्रहणं व्यर्थम् । द्वितीये त्वावश्यकं प्रथमान्तादेव प्रत्ययलाभार्थम् ।

अपूपमयं पर्व । २०९० समूहवच्च बहुषु । (५—४—२२) सामूहिकाः प्रत्ययाः अतिदिश्यन्ते, चान्मयट् । मोदकाः प्रकृता मौदकिकम्, मोदकमयम् । शाष्कुलिकम्, शष्कुलीमयम् । द्वितीयेऽर्थे मौदकिको यज्ञः, मोदकमयः । २०९१ अनन्तावसथेतिहभेषजाञ्ञ्यः । (५—४—२३) अनन्त एव आनन्त्यम् । आवसथ एव आवसथ्यम् । इतिह इति निपातसमुदायः । ऐतिह्यम् । भेषजमेव भैषज्यम् । २०९२ देवतान्तात्तादर्थ्ये यत् । (५—४—२४) तदर्थं एव तादर्थ्यम् ।

---

सोमसत्त्वहम्' इत्यादिवाक्यैरुच्यमानानि प्राचुर्यविशिष्टान्नानीत्यर्थः । अस्वार्थिकत्वेऽपि प्रकृतिलिङ्गत्वाभावाद्विशेष्यनिघ्नता । अपूपमयं पर्वेति । पर्वणि प्रचुरा अपूपाः कार्या इत्याद्युच्चमानापूपाधिकरणं पर्वेत्यर्थः । अस्वार्थिकत्वाद्विशेष्यनिघ्नता । केचित्तु द्वितीयपक्षे वचनशब्दोऽधिकरणल्युडन्तः, प्रकृत्यर्थे न विवक्षित इत्याहुः । तथा सति प्राचुर्यविशिष्टान्नाद्यधिकरणं यज्ञ इत्येव बोधः, नतु उच्यमानत्वस्य बोधः । समूहवच्च बहुषु । 'तत्प्रकृतवचने' इत्येव । सामूहिका इति । 'तस्य समूहः' इत्यधिकारविहिताः प्रत्यया इत्यर्थः । बहुषु प्राचुर्यविशिष्टेषु वर्तमानाच्छब्दात् स्वार्थे समूहवत्प्रत्ययाः स्युरित्यर्थः । यद्वा बहुत्वविशिष्टानि प्राचुर्यविशिष्टानि वस्तूनि यस्मिन्नधिकरणे उच्यन्ते, तदधिकरणे वाच्ये तद्वस्तुवृत्तेः शब्दात् समूहवत्प्रत्ययाः स्युरित्यर्थः । आद्ये उदाहरति मोदकाः प्रकृताः मौदकिकमिति । 'अचित्तहस्तिधेनोः—' इति सामूहिकष्ठक् । स्वार्थिकत्वेऽपि प्रकृतिलिङ्गातिक्रमः कुटीरवत् । शाष्कुलिकमिति । शष्कुल्यः प्रचुरा इत्यर्थः । पूर्ववट्ठक्, प्रकृतिलिङ्गातिक्रमश्च । द्वितीयेऽर्थे मौदकिको यज्ञ इति । मोदका अस्मिन्यज्ञे उच्यन्त इति विग्रहः । अनन्तावसथेतिह । अनन्त, आवसथ, इतिह, भेषज एभ्यः स्वार्थे ञ्यप्रत्ययः स्यादित्यर्थः । अनन्त एवेति । अन्तो नाशः । तस्याभावः अनन्तः । अर्थाभावे नञ्तत्पुरुषः, अर्थाभावे अव्ययीभावेन तद्विकल्पस्योक्तत्वात् । आनन्त्यमिति । स्वार्थिकत्वेऽपि प्रकृतिलिङ्गव्यतिक्रमः । आवसथो गृहम् । निपातसमुदाय इति । स च उपदेशपारम्पर्ये वर्तते । तस्मात्स्वार्थे ञ्यः । 'पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ।'— इत्यमरः । भैषज्यमिति । भेषजम् औषधम्, तदेव भैषज्यम् । 'भेषजौषधभैषज्यानि' इत्यमरः । देवतान्तात्तादर्थ्ये यत् । तदर्थं एवेति । तच्छब्देन देवतान्तस्यार्थ उच्यते, तस्मै अयं तदर्थः, ततः स्वार्थे चतुर्वर्णादित्वात् ष्यञित्यर्थः । देवतान्तात्प्रातिपदिकाद् यत्स्यात्प्रकृत्यर्थार्थे वस्तुनि वाच्य इत्यर्थः । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या चेत्युक्तं 'सास्य देवता' इत्यत्र ।

---

द्वितीय इति । अस्मिन्पक्षे उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणम् । ल्युटोवत्यमधिकरणं तु मयडर्थः । अतएव विशेष्यनिघ्नता, तदाह अन्नमयो यज्ञ इति । अन्नं प्रकृतमुच्यते अस्मिन्नित्यर्थः । मौदकिकम् । शाष्कुलिकमिति । 'अचित्तहस्तिधेनोष्ठक्' । आवसथ इति । 'उपसर्गे वसेः' इत्यथप्रत्ययः । निपातसमुदाय इति । उपदेशपारम्पर्ये वर्तते वचनाच्चप्रातिपदिकादेव प्रत्ययः । ऐतिह्यमिति । 'इतिहाव्ययम्' इति कोशः । भेषजमिति । भिषज्यतेः कण्ड्वादियगन्तात्क्विप् ।

व्यञ् । अग्निदेवतायै इदमग्निदेवत्यम् । पितृदेवत्यम् । २०९३ पादार्घा-
भ्यां च । (५—४—२५) पादार्थमुदकं पाद्यम् । अर्घ्यम् । 'नवस्य नू आदेशो
त्नप्तनप्खाश्च प्रत्यया वक्तव्याः' (वा ३३२७) । नूत्नम्, नूतनम्, नवीनम् । 'नश्च
पुराणे प्रात्' (वा ३३२८) । पुराणार्थे वर्तमानात्प्रशब्दान्नो वक्तव्यः, चात्पूर्वोक्ताः ।
प्रत्नम्, प्रतनम्, प्रीणम् । 'भागरूपनामभ्यो धेयः' (वा ३३३०) । भाग-
धेयम्, रूपधेयम् । नामधेयम् । 'अग्नीध्रसाधारणादञ्' (वा ३३३४) ।
आग्नीध्रम् । साधारणम् । स्त्रियां ङीप् । आग्नीध्री । साधारणी । २०९४ अति-
थेर्ञ्यः । (५—४—२६) 'तादर्थ्ये' इत्येव । अतिथये इदमातिथ्यम् । २०९५
देवात्तल् । (५—४—२७) देव एव देवता । २०९६ अवेः । (५—४—२८)

पितृदेवत्यं रक्षोदेवत्यमित्यादौ नाव्याप्तिः, तदाह पितृदेवत्यमिति । देवता-
शब्दस्य देवा मनुष्याः पितरः असुरा रक्षांसि पिशाचा इत्यादि श्रुतिपुराणादि-
प्रसिद्धजातिविशेषपरत्वे तु अत्राव्याप्तिः स्यादिति भावः । भाष्ये तु पितृदेवत्यमिति न
सिध्यतीत्याक्षिप्य दिवेरैश्वर्यकर्मणो देवः, तस्मात्स्वार्थे तलिति समाहितम् । हविः प्रति
पित्रादीनामीश्वरत्वं स्वामित्वम् । हविस्तु यजमानस्य स्वम् । तच्च यजमानेन अग्न्या-
द्युद्देशेन त्यक्तं चेत्तदाग्न्यादिस्वामिकं भवितुमर्हति । अतो देवतात्वं त्यज्यमानद्रव्यो-
द्देश्यत्वविशेषात्मकमेव भाष्यरीत्यापि पर्यवस्यतीत्यलम् । पादार्घाभ्यां च । तादर्थ्ये
इति शेषः । अर्घ्यमिति । अर्घार्थमुदकमिति विग्रहः । अर्घः पूजा । 'मूल्ये
पूजाविधावर्घः' इत्यमरः । नवस्येति । वार्तिकमिदम् । एते प्रत्यया अत्यन्तस्वार्थिकाः ।
नवीनमिति । नवशब्दात् खप्रत्यये, तस्य ईनादेशे, प्रकृतेर्नूभावे, ओर्गुणः, अवा-
देशः । नश्च पुराणे प्रादिति । वार्तिकमिदम् । चात्पूर्वोक्ता इति । त्नप्,
तनप्, ख इत्यर्थः । प्रीणमिति । खे रूपम् । भागरूपेति । वार्तिकमिदम् ।
आग्नीध्रेति । वार्तिकमिदम् । आग्नीध्रमिति । अग्नीधः शरणम् आग्नीध्रम् ।
ततः स्वार्थे अञ् आग्नीध्रमेव । अनेकं प्रत्यविशिष्टसम्बन्धं साधारणमुच्यते । ततः
स्वार्थे अञ् साधारणमित्येव । अञ्विधेः प्रोजनमाह स्त्रियां ङीबिति । अति-
थेर्ञ्यः । तादर्थ्ये इत्येवेति । अतिथये इदमित्यर्थे अतिथिशब्दाच्चतुर्थ्यन्ताद् ण्यः
स्यादित्यर्थः । देवात्तल् । 'तादर्थ्ये' इति निवृत्तम् । अत्यन्तस्वार्थिकोऽयं तल् ।

भिषजामिदं भेषजम् । अस्मादेव निपातनादेकारः । पितृदेवत्यमिति । पितरश्च
ता देवताश्च पितृदेवताः । पितृदेवताभ्य इदमिति विग्रहः । अर्घ्यमिति । 'मूल्ये
पूजाविधावर्घः' इत्यमरः । पूर्वोक्ता इति । त्नप्तनप्खप्रत्यया इत्यर्थः । आग्नीध्र-
मिति । 'अग्नीधः शरण रण भं च' इति शैषिकेषु व्युत्पादितम्, तच्चान्तोदात्तम्,
ततः स्वार्थेऽनेनाञ् । आद्युदात्तत्वं फलम् । फलान्तरमप्याह स्त्रियामिति । आग्नी-
ध्रीति । शालेति विशेष्यम् । समानं धारणमस्याः साधारणी । अनेकं प्रत्यविशिष्ट-
सम्बन्धो भूम्यादिः । पृषोदरादित्वात्समानस्य सभावः । विभाषाप्रकरणादञभावे टाप् ।
आग्नीध्रा शाला । साधारणा भूमिः । नन्वञभावपक्षे समानस्य सभावेऽपि साधारण
इत्येव स्यान्न त्वत्रादिवृद्धिरिति चेद् अत्राहुः—'साधारणादञ्' इत्यत एव निपातनात्

अपूपमयं पर्व । २०९० समूहवच्च बहुषु । (५—४—२२) सामूहिकाः प्रत्ययाः अतिदिश्यन्ते, चान्मयट् । मोदकाः प्रकृता मौदकिकम्, मोदकमयम् । शाष्कुलिकम्, शष्कुलीमयम् । द्वितीयेऽर्थे मौदकिको यज्ञः, मोदकमयः । २०९१ अनन्तावसथेतिहभेषजाञ्ञ्यः । (५—४—२३) अनन्त एव आनन्त्यम् । आवसथ एव आवसथ्यम् । इतिह इति निपातसमुदायः । ऐतिह्यम् । भेषजमेव भैषज्यम् । २०९२ देवतान्तात्तादर्थ्ये यत् । (५—४—२४) तदर्थं एव तादर्थ्यम् ।

---

सोमसत्त्रहम्' इत्यादिवाक्यैरुच्यमानानि प्राचुर्यविशिष्टान्नानीत्यर्थः । अस्वार्थिकत्वेन प्रकृतिलिङ्गत्वाभावाद्विशेष्यनिघ्नता । अपूपमयं पर्वेति । पर्वणि प्रचुरा अपूपाः कार्या इत्याद्युच्यमानापूपाधिकरणं पर्वेत्यर्थः । अस्वार्थिकत्वाद्विशेष्यनिघ्नता । केचित्तु द्वितीयपक्षे वचनशब्दोऽधिकरणल्युडन्तः, प्रकृत्यर्थे न विवक्षित इत्याहुः । तथा सति प्राचुर्यविशिष्टान्नाद्यधिकरणं यज्ञ इत्येव बोधः, नतु उच्यमानत्वस्य बोधः । समूहवच्च बहुषु । 'तत्प्रकृतवचने' इत्येव । सामूहिका इति । 'तस्य समूहः' इत्यविकारविहिताः प्रत्यया इत्यर्थः । बहुषु प्राचुर्यविशिष्टेषु वर्तमानाच्छब्दात् स्वार्थे समूहवत्प्रत्ययाः स्युरित्यर्थः । यद्वा बहुत्वविशिष्टानि प्राचुर्यविशिष्टानि वस्तूनि यस्मिन्नधिकरणे उच्यन्ते, तदधिकरणे वाच्ये तद्वस्तुवृत्तेः शब्दात् समूहवत्प्रत्ययाः स्युरित्यर्थः । आद्ये उदाहरति मोदकाः प्रकृताः मौदकिकमिति । 'अचित्तहस्तिधेनोः—' इति सामूहिकष्ठक् । स्वार्थिकत्वेऽपि प्रकृतिलिङ्गातिक्रमः कुटीरवत् । शाष्कुलिकमिति । शष्कुल्यः प्रचुरा इत्यर्थः । पूर्ववट्ठक्, प्रकृतिलिङ्गातिक्रमश्च । द्वितीयेऽर्थे मौदकिको यज्ञ इति । मोदका अस्मिन्यज्ञे उच्यन्त इति विग्रहः । अनन्तावसथेतिह । अनन्त, आवसथ, इतिह, भेषज एभ्यः स्वार्थे ञ्यप्रत्ययः स्यादित्यर्थः । अनन्त एवेति । अन्तो नाशः । तस्याभावः अनन्तः । अर्थाभावे नञ्तत्पुरुषः, अर्थाभावे अव्ययीभावेन तद्विकल्पस्योक्तत्वात् । आनन्त्यमिति । स्वार्थिकत्वेऽपि प्रकृतिलिङ्गव्यतिक्रमः । आवसथो गृहम् । निपातसमुदाय इति । स च उपदेशपारम्पर्ये वर्तते । तस्मात्स्वार्थे ञ्यः । 'पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ।'— इत्यमरः । भैषज्यमिति । भेषजम् औषधम्, तदेव भैषज्यम् । 'भेषजौषधभैषज्यानि' इत्यमरः । देवतान्तात्तादर्थ्ये यत् । तदर्थं एवेति । तच्छब्देन देवतान्तस्यार्थ उच्यते, तस्मै अयं तदर्थः, ततः स्वार्थे चतुर्वर्णादित्वात् ष्यञित्यर्थः । देवतान्तात्प्रातिपदिकाद् यत्स्यात्प्रकृत्यर्थार्थे वस्तुनि वाच्य इत्यर्थः । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या चेत्युक्तं 'सास्य देवता' इत्यत्र ।

---

द्वितीय इति । अस्मिन्पक्षे उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणम् । ल्युटोक्तमधिकरणं तु मयडर्थः । अतएव विशेष्यनिघ्नता, तदाह अन्नमयो यज्ञ इति । अन्नं प्रकृतमुच्यते अस्मिन्नित्यर्थः । मौदकिकम् । शाष्कुलिकमिति । 'अचित्तहस्तिधेनोष्ठक्' । आवसथ इति । 'उपसर्गे वसेः' इत्यथप्रत्ययः । निपातसमुदाय इति । उपदेशपारम्पर्ये वर्तते वचनाच्चप्रातिपदिकादेव प्रत्ययः । ऐतिह्यमिति । 'इतिहाव्ययम्' इति कोशः । भेषजमिति । भिषज्यतेः कण्ड्वादियगन्तात्क्विप् ।

...र्थे ष्यञ् । अग्निदेवतायै इदमग्निदेवत्यम् । पितृदेवत्यम् । २०९३ पादार्घा-भ्यां च । (५—४—२५) पादार्थमुदकं पाद्यम् । अर्घ्यम् । 'नवस्य नू आदेशो त्नप्तनप्खाश्च प्रत्यया वक्तव्याः' (वा ३३२७) । नूत्नम्, नूतनम्, नवीनम् । 'नश्च पुराणे प्रात्' (वा ३३२८) । पुराणार्थे वर्तमानात्प्रशब्दान्नो वक्तव्यः, चात्पूर्वोक्ताः । प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम् । 'भागरूपनामभ्यो धेयः' (वा ३३३०) । भागधेयम्, रूपधेयम् । नामधेयम् । 'अग्नीध्रसाधारणादञ्' (वा ३३३४) । आग्नीध्रम् । साधारणम् । स्त्रियां ङीप् । आग्नीध्री । साधारणी । २०९४ अतिथेर्ञ्यः । (५—४—२६) 'तादर्थ्ये' इत्येव । अतिथये इदमातिथ्यम् । २०९५ देवात्तल् । (५—४—२७) देव एव देवता । २०९६ अवेः । (५—४—२८)

...तः पितृदेवत्यं रक्षोदेवत्यमित्यादौ नाव्याप्तिः, तदाह पितृदेवत्यमिति । देवता-...स्य देवा मनुष्या पितरः असुरा रक्षांसि पिशाचा इत्यादि श्रुतिपुराणादि-...सिद्धजातिविशेषपरत्वे तु अत्राव्याप्तिः स्यादिति भावः । भाष्ये तु पितृदेवत्यमिति न ...प्यतीत्याक्षिप्य दिवेरैश्वर्यकर्मणो देवः, तस्मात्स्वार्थे तलिति समाहितम् । हविः प्रति ...ग्न्यादीनामीश्वरत्वं स्वामित्वम् । हविस्तु यजमानस्य स्वम् । तच्च यजमानेन अग्न्या-...द्देशेन त्यक्तं चेत्तदाग्न्यादिस्वामिकं भवितुमर्हति । अतो देवतात्वं त्यज्यमानद्रव्यो-...श्यत्वविशेषात्मकमेव भाष्यरीत्यापि पर्यवस्यतीत्यलम् । पादार्घाभ्यां च । तादर्थ्ये ...दिति शेषः । अर्घ्यमिति । अर्घार्थमुदकमिति विग्रहः । अर्घः पूजा । 'मूल्ये पूजाविधावर्घः' इत्यमरः । नवस्येति । वार्तिकमिदम् । एते प्रत्यया अत्यन्तस्वार्थिकाः । नवीनमिति । नवशब्दात् खप्रत्यये, तस्य ईनादेशे, प्रकृतेर्नूभावे, ओर्गुणः, अवा-...देशः । नश्च पुराणे प्रादिति । वार्तिकमिदम् । चात्पूर्वोक्ता इति । त्नप्, तनप्, ख इत्यर्थः । प्रीणमिति । खे रूपम् । भागरूपेति । वार्तिकमिदम् । आग्नीध्रेति । वार्तिकमिदम् । आग्नीध्रमिति । अग्नीधः शरणम् आग्नीध्रम् । ततः स्वार्थे अञि आग्नीध्रमेव । अनेकं प्रत्यविशिष्टसम्बन्धं साधारणमुच्यते । ततः स्वार्थे अञि साधारणमित्येव । अञ्विधेः प्रोजनमाह स्त्रियां ङीबिति । अति-थेर्ञ्यः । तादर्थ्ये इत्येवेति । अतिथये इदमित्यर्थे अतिथिशब्दाच्चतुर्थ्यन्ताद् ण्यः स्यादित्यर्थः । देवात्तल् । 'तादर्थ्ये' इति निवृत्तम् । अत्यन्तस्वार्थिकोऽयं तल् ।

भिषजामिदं भेषजम् । अस्मादेव निपातनादेकारः । पितृदेवत्यमिति । पितरश्च ता देवताश्च पितृदेवताः । पितृदेवताभ्य इदमिति विग्रहः । अर्घ्यमिति । 'मूल्ये पूजाविधावर्घः' इत्यमरः । पूर्वोक्ता इति । त्नप्तनप्खप्रत्यया इत्यर्थः । आग्नीध्र-मिति । 'अग्नीधः शरण रण भं च' इति शैषिकेषु व्युत्पादितम्, तच्चान्तोदात्तम्, ततः स्वार्थेऽनेनाञ् । आद्युदात्तत्वं फलम् । फलान्तरमप्याह स्त्रियामिति । आग्नी-ध्रीति । शालेति विशेष्यम् । समानं धारणमस्याः साधारणी । अनेकं प्रत्यविशिष्ट-सम्बन्धो भूम्यादिः । पृषोदरादित्वात्समानस्य सभावः । विभाषाप्रकरणादञभावे टाप् । अग्नीध्रा शाला । साधारणा भूमिः । नन्वञभावपक्षे समानस्य सभावेऽपि साधारण इत्येव स्यान्न त्वत्रादिवृद्धिरिति चेद् अत्राहुः—'साधारणादञ्' इत्यत एव निपातनात्

अविरेवाविकः । २०९७ यावादिभ्यः कन् । (५—४—२९) याव एव यावकः । मणिकः । २०९८ लोहितान्मणौ । (५—४—३०) लोहित एव लोहितको मणिः २०९९ वर्णे चानित्ये । (५—४—३१) लोहितकः कोपेन । 'लोहितात्लिङ्गबाधनं वा' (वा ३३२२) । लोहितिका, लोहिनिका कोपेन ।

---

देवतेति । स्वार्थिकत्वेन प्रकृतिलिङ्गातिक्रमात् स्त्रीत्वम् । अवेः कः । अयमपि केवलस्वार्थिकः । 'अवयः शैलमेषार्काः' इत्यमरः । यावादिभ्यः कन् । यावक इति । यवानामयं याव ओदनादिः, स एव यावकः । अलक्तकवृक्षो वा यावः स एव यावकः 'यावोऽलक्तो द्रुमालयः' इत्यमरः । लोहितान्मणौ । मणौ वर्तमानाद् लोहितशब्दात्स्वार्थे कन् स्यादित्यर्थः । माणिक्यमयो मणिरेवेह मणिर्विवक्षितः । यस्तु जपाकुसुमादिनिमित्तलौहित्यवान् स्फटिकमणिस्तस्य तु 'रक्ते' इत्युत्तरसूत्रेण सिद्धम् । वर्णे चानित्ये । अनित्ये वर्णे विद्यमानाद् लोहितशब्दात्स्वार्थे कन् स्यादित्यर्थः । अमण्यर्थमिदम् । लोहितकः कोपेनेति । देवदत्तादिरिति शेषः । कोपनिमित्तकं देवदत्तादेर्लौहित्यमनित्यमेव, कोपाभावे तदभावात् । यद्यपि माणिक्यमणिलौहित्यमपि अनित्यमेव, माणिक्ये नष्टे तन्नाशात् । तथापि आश्रयद्रव्यस्य उत्पत्तिप्रभृति नाशपर्यन्तं यो वर्णो वर्तते, स वर्णो नित्य इत्यभिमतमिति न दोषः । स्यादेतत्, लोहिनिका लोहितिका वा कोपेनेति स्त्रियां रूपद्वयमिष्यते । तत्र लोहितशब्दाद् 'वर्णादनुदात्तात्–' इति नत्वसंनियोगशिष्टं ङीपं परत्वात् स्वार्थिकतया अन्तरङ्गत्वाच्च बाधित्वा कनि कृते सति नत्वसंनियोगशिष्टङीपो न प्रसक्तिः, कोपधत्वे तोपधत्वाभावात् । ततश्च लोहितकशब्दाद् 'अजाद्यतः–' इति टापि 'प्रत्ययस्थात्–' इति इत्वे लोहितिकेत्येव स्यात्, नतु तत्र लोहिनिकेति, अत आह लोहितात्लिङ्गबाधनं वेति । वार्तिकमिदम् । लोहितशब्दात्परस्य स्त्रीलिङ्गबोधकप्रत्ययस्य कना बाधो वा स्यादित्यर्थः । असति तु कना ङीपो बाधे लोहिनीशब्दात् कनि 'केऽणः' इति ह्रस्वे कन्नन्ताट्टापि लोहिनिकेति सिध्यति । सति तु कना ङीपो बाधे लोहिताशब्दात् कनि 'केऽणः' इति ह्रस्वे टापि लोहितिकेति भवति । ननु 'ङ्याप् प्रातिपदिकात्' इत्यत्र लिङ्गविशिष्टपरिभाषयैव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तादेव तद्धिता भवन्ति, नतु ङ्याब्भ्यां प्रागित्येवमर्थमित्युक्तम् । एवं च ङीपः प्राक् कनः प्रसक्तेरेवाभावादिदं वार्तिकं व्यर्थमिति चेत्, अत एव वार्तिकात्लिङ्गात्स्वार्थिक-

---

समानस्य साभावविधानाद्वा इष्टसिद्धिरिति । देवतेति । तलन्तं स्त्रियाम् । वर्णे चानित्ये । अनित्ये किम् लोहितं रुधिरम् । लोहिता लाक्षा । अनित्यत्वमिह समानाधिकरणध्वंसप्रतियोगित्वम् । अतएव 'रक्ते' इत्युत्तरसूत्रे सार्थकम् । लाक्षादिना रक्ते लौहित्यस्य यावदाश्रयमवस्थानेन नित्यतया पूर्वेणासिद्धेः । लोहितक इति । कोपेन लोहितो यः पुरुषस्तस्मिन्नेव क्षणादूर्ध्वं कोपशान्तौ लौहित्यं नश्यतीति भवत्यत्रानित्यो वर्णः । 'प्रातिपदिकात्तद्धिताः' इति पक्षस्य प्रतिपदविधानमात्रेणापवादत्वमिति पक्षस्य चाश्रयणे 'वर्णादनुदात्तात्–' इत्यतः प्रागेव कनि कृते लोहितिकेति रूपं न स्यादित्याशङ्कायामाह लिङ्गबाधनं वेति । लोहितादित्युपलक्षणम् । एतिका

२१०० रक्ते । (५—४—३२) लाक्षादिना रक्ते यो लोहितशब्दस्तस्मात्कन्स्यात् । 'ङ्याबाधनं वा' (३३२२) इत्येव । लोहितिका, लोहिनिका शाटी । २१०१ कालाच्च । (५—४—३३) 'वर्णे चानित्ये' (सू २०९९) 'रक्ते' (सू २१००) इति सूत्रद्वयमनुवर्तते । कालकं मुखं वैलक्ष्येण । कालकः पटः । कालिका शाटी । २१०२ विनयादिभ्यष्ठक् । (५—४—३४) विनय एव वैनयिकः । सामयिकः । 'उपायाद्ध्रस्वत्वं च' (ग सू १४४) । औपयिकः । २१०३ वाचो व्याहृतार्थायाम् । (५—४—३५) सन्दिष्टार्थायां वाचि विद्यमानाद्वाक्छब्दात्स्वार्थे ठक् स्यात् । 'सन्देशवाग्वाचिकं स्यात्' इत्यमरः । २१०४ तद्युक्तात्कर्मणोऽण् । (५—४—३६) कर्मैव कार्मणम् । वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः । २१०५ ओषधेरजातौ । (५—४—३७) स्वार्थेऽण् । औषधं पिबति । 'अजातौ' किम्—

---

तद्धितेषु ङ्याब्ग्रहणं न संबध्यते । न च सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात् 'कुत्सिते' इति सूत्रस्थभाष्यरीत्या स्वार्थद्रव्यलिङ्गसंख्याकारककुत्सादिप्रयुक्तकार्याणां क्रमिकतया टाबन्तादेव सुपि ततः कनि रूपसिद्धेर्वचनमिदं व्यर्थमिति वाच्यम्, अत एव स्वार्थिकतद्धितानां प्रातिपदिकादेव प्रवृत्तिविज्ञानादित्यन्यत्र विस्तरः । रक्ते । लाक्षादिना रक्ते वस्त्रादौ लौहित्यस्य यावद्द्रव्यमवस्थानेन नित्यतया पूर्वेणाप्राप्तौ वचनम् । कालाच्च । द्वयमनुवर्तत इति । अनित्ये वर्णे रक्ते च वर्तमानात्स्वार्थे कन्निति फलितम् । अनित्ये वर्णे उदाहरति कालकं मुखं वैलक्ष्येणेति । लज्जासूयादिनेत्यर्थः । रक्ते उदाहरति कालकः पट इति । नील्यादिनेति शेषः । विनयादिभ्यः । उपायाद् ध्रस्वत्वं चेति । गणसूत्रमिदम् । उपायशब्दात्स्वार्थे ठक् । प्रकृतेर्दीर्घस्य ह्रस्वत्वं चेत्यर्थः । ह्रस्वस्य ह्रस्वविधौ वैयर्थ्याद्दीर्घस्येति गम्यते । वाचोव्याहृतार्थायाम् । इदम् अस्य वक्तव्यमिति दूतं प्रति योऽर्थ उच्यते स व्याहृतः, व्याहृतः अर्थो यस्या इति विग्रहः, तदाह संदिष्टार्थायामिति । तद्युक्तात् । संदिष्टार्थया दूतवाचा यत्प्रयुक्तं कर्म तदभिधायिनः कर्मन्शब्दात्स्वार्थे अणित्यर्थः । कर्मैव कार्मणमिति । अन्निति प्रकृतिभावान्न टिलोपः । दूतवाक्यं श्रुत्वा तथैव यत्क्रियते कर्म तत्कार्मणमुच्यते, तदाह वाचिकं श्रुत्वेति । ओषधेरजातौ । औषधं पिबतीति । शुण्ठीमरीचादिचूर्णमन्नादिद्रव्यसंसृष्टं विवक्षितम् । तस्य न जाति-

---

लोहितिनिकेत्यादेरपि संग्राह्यत्वात् । 'सुबन्तात्तद्धिताः' इति पक्षस्य 'निरवकाशत्वमपवादत्वम्' इति पक्षस्य च मुख्यत्वात्तदाश्रयणे तु 'वर्णादनुदात्तात्—' इत्यस्यानन्तरमेव कनः प्रवृत्तेः कन्प्रत्ययस्य पुँल्लिङ्गे सावकाशतया निरवकाशत्वाभावाच्च वार्तिकमिदं न कर्तव्यम् । अतएव ङ्याब्ग्रहणं व्यर्थमिति स्वाम्पीति रूपं प्रबलमिति च मनोरमादावुक्तमिति दिक् । उपाय इति । उपायशब्दष्ठकं लभते ह्रस्वत्वं चेत्यर्थः । अकस्माच्छब्दोऽत्र पठ्यते स तु दान्तो न तु तान्तः । तेन कादेशो न । 'अव्ययानां भमात्रे टिलोपः' । आकस्मिकम् । वाचो व्याहृता । व्याहृतार्थायां किम्, मधुरा वाग्देवदत्तस्य । वाचिकमिति । 'स्वार्थिकाः क्वचिल्लिङ्गमतिवर्तन्ते' इति नपुंसकत्वम् । प्रज्ञ एवेति ।

ओषधयः क्षेत्रे रूढाः । २१०६ प्रज्ञादिभ्यश्च । (५—४—३८) प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः । २१०७ मृदस्तिकन् । (५—४—३९) मृदेव मृत्तिका । २१०८ सस्नौ प्रशंसायाम् । (५—४—४०) रूपपोऽपवादः । प्रशस्ता मृत् मृत्सा मृत्स्ना । उत्तरसूत्रे अन्यतरस्यांग्रहणान्नित्योऽयम् । २१०९ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् । (५—४—४२) बहूनि ददाति बहुशः । अल्पानि अल्पशः । 'बह्वल्पार्थान्मङ्गलामङ्गलवचनम्' (वा ३३३८) । नेह—बहूनि ददात्यनिष्टेषु, अल्पं ददात्याभ्युदयिकेषु । २११० संख्यैकवचनाच्च

---

वचनत्वमिति भावः । क्षेत्रे रूढा इति । उत्पन्ना इत्यर्थः । शाल्यादिसस्यात्मका इति फलितम् । प्रज्ञादिभ्यश्च । स्वार्थे अण्णिति शेषः । प्राज्ञ इति । प्रजानातीति प्रज्ञः, 'इगुपधज्ञा–' इति कः । प्रज्ञशब्दात्स्वार्थे अण् । प्राज्ञीति । अण्णन्तत्वाद् ङीप् । प्रज्ञा अस्यास्तीति विग्रहे तु 'प्रज्ञाश्रद्धार्चाभ्यः–' इति णान्तात् टापि प्राज्ञेति रूपम् । मृदस्तिकन् । मृद्शब्दात्स्वार्थे तिकन्नित्यर्थः । सस्नौ । प्रशस्तायां मृदि वर्तमानाद् मृच्छब्दात्स्वार्थे स स्न एतौ प्रत्ययौ स्त इत्यर्थः । रूपप इति । 'प्रशंसायां रूपप्' इति विहितस्येत्यर्थः । नित्योऽयमिति । सस्नविधिरित्यर्थः । वस्तुतस्तु 'ञ्यादयः प्राग्वुनः' इत्यादिपरिगणितेषु अनयोः प्रत्यययोरनन्तर्भावादनित्यत्वमेवानयोरुचितमित्याहुः । बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् । बह्वल्पार्थाच्च कारकाभिधायिनः शब्दात्स्वार्थे शस्प्रत्ययो वा स्यादित्यर्थः । बह्वल्पार्थादिति वार्तिकमिदम् । मङ्गलामङ्गले गम्ये एवायं शसित्यर्थः । बहूनि ददात्यनिष्टेष्विति भयादिनिमित्तेष्वित्यर्थः । अल्पं ददात्याभ्युदयिकेष्विति । अभ्युदयः श्रेयः तत्प्रयोजनकेष्विष्टापूर्तेष्वित्यर्थः । आभ्युदयिकेषु बहुदानं अनिष्टेषु अल्पदानं च मङ्गलम् । तद्विपरीतदानं तु अमङ्गलमिति भावः । अर्थग्रहणाद् भूरिशो ददाति, स्तोकशो ददाति इत्याद्यप्युदाहार्यम् । संख्यैकवचनाच्च । सङ्ख्या च एकवचनं चेति समाहारद्वन्द्वात्पञ्चमी । एकत्वविशिष्टोऽर्थ उच्यतेऽनेनेत्येकवचनः । एकत्वविशिष्टस्यार्थस्य

---

प्रजानातीति प्रज्ञः । 'इगुपधज्ञा–' इति कः । ततः स्वार्थेऽण् , प्राज्ञः । प्राज्ञीति । 'टिड्ढा–' इति ङीप् । प्रज्ञानं प्रज्ञा । 'आतश्चोपसर्गे–' इत्यङि टाप् । प्रज्ञा विद्यते यस्याः सा तु प्राज्ञा भवति । 'प्रज्ञाश्रद्धार्चाभ्यः–' इति णः । मृदस्तिकन् । 'प्रत्ययस्थात्–' इत्येव सिद्धे इकारोच्चारणं प्रक्रियालाघवार्थम् , टापो लुक्यपि श्रवणार्थं च । पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिकः पटः । सस्नौ । इह 'प्रशंसायां रूपप्' इत्यस्यानन्तरं 'वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि' । 'मृदः सस्नौ' 'तिकंश्च' इति वक्तुमुचितम् । न चैवं सस्नाविव तिकन् प्रत्ययोऽपि प्रशंसायामेवेत्यतिप्रसङ्गः । 'तिकंश्च' इत्यत्र 'प्रशंसायाम्' इति निवृत्तमिति कल्पनायां मानाभावादिति वाच्यम्, 'मृदः सस्नतिकनः' इति वक्तव्ये तिकनः पृथक्करणस्यैव तत्र मानत्वात् । प्रशस्ता मृदिति । 'मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका' इत्यमरः । नित्योऽयमिति । मृदित्येतावदुक्ते प्रशस्तत्वानवगमाद्विभाषात्र नानुवर्तत इति सस्नावित्ययं विधिर्नित्य एव । उत्तरसूत्रस्यान्यतरस्यांग्रहणात्तु सुतरामिति भावः । बह्वल्पार्थात् । बहूनीति ।

…यायाम् । (५—४—४३) द्वौ द्वौ ददाति द्विशः । माषं माषं माषशः । …शः । परिमाणशब्दा वृत्तावेकार्था एव । 'संख्यैकवचनात्' किम्—घटं घटं

…न् इति विग्रहः । सङ्ख्यावाचकात्तदन्यस्माच्चैकत्वविशिष्टवाचकात्कारकाभिधायिनः …तिपदिकाद् वीप्सायां शस् वेत्यर्थः । सङ्ख्यावाचिन उदाहरति द्वौ द्वौ ददातीति । …त्यवीप्सयोः' इति द्विर्वचनम् । द्विश इत्यत्र तु न । शसैव वीप्साया उक्तत्वात् । …द्धतश्चासर्वविभक्तिः' इत्यत्र 'शस्प्रभृतयः प्राक् समासान्तेभ्यः' इति परि- …नात् शसादीनां डाच्पर्यन्तानामव्ययत्वम् । एकत्वविशिष्टवाचिन उदाहरति …ं माषं माषश इति । माषं माषमित्यनन्तरं ददातीति शेषः । माष- …दः परिमाणविशेषवाची । प्रस्थश इति । प्रस्थं प्रस्थं ददातीति विग्रहः । …ु घटं घटं ददातीत्यत्रापि घटश इति स्यात्, घटशब्दस्याप्येकत्वविशिष्टार्थ- …चकत्वात् । न च एकत्वविशिष्टस्यैवार्थस्य वाचक एकवचनशब्देन विवक्षितः । …शब्दस्तु नैवम् । घटौ घटा इत्यादौ द्वित्वबहुत्वविशिष्टवाचकत्वादिति वाच्यम्, …ं सति माषशः प्रस्थश इत्यत्रापि शसभावप्रसङ्गादित्यत आह परिमाणशब्दा …त्तावेकार्था एवेति । अयमाशयः—समासादिवृत्तौ एकत्वविशिष्टस्यैवार्थस्य …चका एकवचनशब्देन विवक्षिताः । तथाविधाश्च परिमाणशब्दा एव, नतु …ादिजातिशब्दा अपि । माषदातेत्युक्ते हि माषपरिमितस्य हिरण्यादेर्दातेति …तीयते, नतु माषाणामिति । अतो माषशब्दोऽयं भवति वृत्तावेकत्वविशिष्टार्थनियतः । …ं प्रस्थादिशब्दोऽपि । घटशब्दस्तु नैवम्, घटदातेत्युक्ते घटानां दातेत्यपि प्रतीतेः । …तदेवाभिप्रेत्य प्रत्युदाहरति घटं घटमिति । एतत्सर्वं जयादित्यमतम् । वामनस्तु

…ुभ्यो ददाति बहुशः, अल्पेभ्योऽल्पश इत्याद्यपि बोध्यम् । बह्वल्पार्थात्किम्, गां …ाति । अश्वं ददाति । अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च । भूरिशो ददाति । …शः । कारकात्किम्, बहूनां स्वामी, अल्पानां स्वामी । मङ्गलवचनमिति । …हुशो ददात्याभ्युदयिकेषु कर्मसु । अल्पशो ददात्यनिष्टेषु' । आभ्युदयिकेषु बहुदानम् …निष्टेष्वल्पदानं च मङ्गलम् । तद्वैपरीत्येन दानं तु मङ्गलं न भवतीत्याशयेनाह …हेति । अनिष्टेष्विति । भयादिनिमित्तेषु दानेषु । आभ्युदयिकेष्विति । …भ्युदयप्रयोजनेष्वग्न्याधेयादिषु । मूलपुस्तके तु 'मङ्गलामङ्गलवचनम्' इति प्रायेण …श्यते । तत्रामङ्गलग्रहणं वृथेत्याहुः । प्रायिकं चैतन्मङ्गलवचनमन्यत्रापि हि दृश्यते— …पेतापोढमुक्तपतितापत्रस्तैरल्पशः' इति । कारकत्वं तु समसनक्रियां प्रति पञ्चम्याः …र्थत्वात्तदभिधायकत्वाच्चाल्पशब्दस्य । तथा च व्याचक्षते—अल्पा पञ्चमी समस्यत …ति । आचार्येणेति शेषः । परिमाणशब्दा इति । तथा चैकवचनग्रहणेन एकोऽर्थ …च्यते येनेत्यर्थंकेन वृत्तावेकार्थतानियताः परिमाणशब्दा एव गृह्यन्त इति भावः । …षं माषमिति । माषदातेत्युक्ते माषमात्रस्य हिरण्यादेर्दातेति प्रतीयते, न तु …षाणामिति प्रतीतिरिति भवत्ययं वृत्तावेकार्थतानियमः । एवं प्रस्थादिरपि । घटाद- …स्तु नैवम् । घटदातेत्युक्ते तु घटानां दातेत्यर्थस्यापि प्रतीयमानत्वात् । अतएव च …त्युदाहरति घटं घटमिति । घटादयो हि जातिशब्दा नैकार्था भवन्ति, जातियोगस्यैका-

ददाति । 'वीप्सायाम्' किम्—द्वौ ददाति । कारकात्' इत्येव। द्वयोर्द्वयोः स्वामी । २१११ प्रतियोगे पञ्चम्यास्तसिः । (५—४—४४) प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः स्यात् । प्रद्युम्नः कृष्णतः प्रति । 'आद्यादिभ्य उपसंख्यानम्' (वा ३३३९) । आदौ आदितः । मध्यतः । अन्ततः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण स्वरतः । वर्णतः । २११२ अपादाने चाहीयरुहोः । (५—४—४५) अपादाने या पञ्चमी तदन्तात्तसिः स्यात् । ग्रामादागच्छति । ग्रामतः । 'अहीयरुहोः' किम्-स्वर्गाद्धीयते । पर्वतादवरोहति । २११३ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः । (५—४—४६) अकर्तरि तृतीयान्ताद्वा तसिः स्यात् । अतिक्रम्य ग्रहोऽतिग्रहः । चारित्रेणातिगृह्यते । चारित्रतोऽतिगृह्यते । चारित्रेणान्यानतिक्रम्य वर्तत इत्यर्थः । अव्यथनमचलनम् । वृत्तेन न व्यथते । वृत्ततो न व्यथते ।

---

उक्तनियमे प्रमाणाभावाद् जातिशब्देभ्योऽपि शस् भवत्येव, एकवचनग्रहणं तु घटौ घटौ ददातीत्यादौ शसभावार्थमित्याह । एकैकशः पितृसंयुक्तानित्यत्र तु शसैव वीप्साया उक्तत्वाद् द्विर्वचनमार्षमिति हरदत्तः । प्रत्याहाराह्निकभाष्ये 'एकैकशः सहस्रकृत्वः' इति भाष्यप्रयोगात् स्वार्थिकशसा समाधेयमित्यन्ये । प्रतियोगे । विहितेति । 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति प्रतेः कर्मप्रवचनीयत्वे तद्योगे 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पञ्चमी विहितस्यत्यर्थः । प्रद्युम्नः कृष्णतः प्रतीति । कृष्णस्य प्रतिनिधिरित्यर्थः । आद्यादिभ्य इति । अयं सार्वविभक्तिकस्तसिः । अपादाने चाहीयरुहोः । अहीयरुहोरिति छेदः । हीयते इत्यादौ कर्मणि लकारे यगन्तस्य एकदेशस्य हीयेत्यनुकरणम् । हीयरुहोः संबन्धि यन्न भवति तस्मिन्नपादाने इत्यर्थः । अतिग्रहाव्यथन । अतिक्रम्य ग्रह इति । लोकवृत्तमतिक्रम्य तद्विलक्षणतया प्रतीयमानत्वमित्यर्थः । चारित्रेणेति । चरित्रमेव चारित्रम्, तेन हेतुना इतरविलक्षणत्वेन दृश्यत इत्यर्थः । फलितमाह अन्यानतिक्रम्य वर्तत इति । 'व्यथ

---

नेकसाधारणत्वात्, किं त्वभेदैकत्वसंख्यामुपाददते । एतच्च सर्वं जयादित्यमतानुसारेणोक्तम् । वामनमते जातिशब्देभ्योऽपि भवत्येव । तथा च 'जश्शसोः' इति सूत्रे तेनोक्तम् 'जसा सह चरितस्य शसो ग्रहणादिह' न भवति । 'कुण्डशो ददाति वनशः प्रविशति' इति, तस्यायमाशयः—जातिशब्दोऽपि यद्यर्थप्रकरणादिना वृत्तावेकार्थो भवति, तदा भवत्येव ततोऽपि शसिति । अथ कथम् 'एकैकशः पितृसंयुक्तान्' इति द्विर्वचनशसोः सह प्रयोग इति चेत् । छन्दोवदृषयः कुर्वन्तीति हरदत्तः । अतएव 'सुपः' इति सूत्रे एकैकश इति प्राचो ग्रन्थः प्रामादिक इत्यवोचामेति मनोरमायां स्थितम् । वस्तुतस्तु एकैकमेव एकैकशः । स्वार्थे शस्, न तु वीप्सायाम्, 'एकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा' इति भाष्यादिति 'तान्येकवचन—' इत्यादिसूत्रे वक्ष्यामः । द्वौ ददातीति । कथं तर्हि—'अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते' इति । न ह्यत्र वीप्सास्ति, नापि कारकत्वमिति चेत् । अत्राहुः—सहस्रं सहस्रं ये समेतास्तेषामपि परिषत्त्वं नेत्यर्थः । तथा च समवायक्रिया

वृत्तेन न चलतीत्यर्थः । क्षेपे—वृत्तेन क्षिप्तः । वृत्ततः क्षिप्तः । वृत्तेन निन्दित इत्यर्थः । 'अकर्तरि' इति किम्—देवदत्तेन क्षिप्तः । २११४ हीयमानपापयोगाच्च । (५—४—४७) हीयमानपापयुक्तादकर्तरि तृतीयान्ताद्वा तसिः । वृत्तेन हीयते । वृत्तेन पापः । वृत्ततः । क्षेपस्याविवक्षायामिदम् । क्षेपे तु पूर्वेण सिद्धम् । 'अकर्तरि' इति किम्—देवदत्तेन हीयते । २११५ षष्ठ्या व्याश्रये । (५—४—४८) षष्ठ्यन्ताद्वा तसिः स्यान्नानापक्षसमाश्रयणे । देवा अर्जुनतोऽभवन् । आदित्याः कर्णतोऽभवन् । अर्जुनस्य कर्णस्य पक्षे इत्यर्थः । 'व्याश्रये' किम्—वृक्षस्य शाखा । २११६ रोगाच्चापनयने । (५—४—४९) रोगवाचिनः षष्ठ्यन्ताद्वा तसिश्चिकित्सायाम् । प्रवाहिकातः कुरु । प्रतीकारमस्याः कुर्वित्यर्थः । 'अपनयने' किम्—प्रवाहिकायाः प्रकोपनं करोति । २११७ कृभ्वस्तियोगे संपद्यकर्तरि च्विः । (५—४—५०) 'अभूततद्भाव इति वक्तव्यम्' (वा ३३४०)

---

व्यथ संचलनयोः' इति चलनार्थाद् ल्युटि व्यथनशब्दः, तदाह अव्यथनमचलनमिति । क्षेप इति । उदाह्रियत इति शेषः । क्षेपो निन्दा । हीयमानपापयोगाच्च । हीयमानेति । हीयमानयुक्तात् पापयुक्ताच्चेत्यर्थः । ननु पूर्वसूत्रे क्षेपग्रहणादेव सिद्धे किमर्थमिदमित्यत आह क्षेपस्याविवक्षायामिति । तत्त्वकथन इत्यर्थः । षष्ठ्या व्याश्रये । नानापक्षसमाश्रयण इति । सर्वसाधारण्यं विहाय एकपक्षाश्रय इति यावत् । पक्षः स्वीयत्वेन परिग्रहः । देवा अर्जुनतोऽभवन्निति । अर्जुनस्य पक्षे देवा आसन्नित्यर्थः । आदित्याः कर्णतोऽभवन्निति । सूर्याः कर्णस्य पक्षे आसन्नित्यर्थः । रोगाच्च । रोगस्य प्रतीकारः चिकित्सा । प्रवाहिकात इति । विषूचिकाप्रतीकारमित्यर्थः । कृभ्वस्तियोगे । अभूतेति । येन रूपेण प्रागभूतं यद्वस्तु तस्य तद्रूपप्राप्तावित्यर्थः । एवं च यत्र प्रकृतिस्वरूपमेव विकाररूपमापद्यमानं विकाराभेदेन विवक्ष्यते, तत्रैवायं प्रत्यय इति लभ्यते । संपद्यकर्तरीत्येकं पदम् । संपदनं सम्पद्यः । संपूर्वकात्पदधातोरत एव निपातनाद् भावे कृत्संज्ञः शः, दिवादित्वात् श्यन् । संपद्यस्य कर्तेति षष्ठीसमासः । संपद्यमाने वर्तमानादिति यावत् । केन रूपेण कस्य संपत्तिरित्याकाङ्क्षायाम्, 'अभूततद्भावे—' इति वार्तिकात् प्रकृतेर्विकाररूपेण संपत्तिरिति लभ्यते । तत्र विकारवाचकादेव प्रत्ययः, नतु प्रकृतिवाचकात्, व्याख्यानात् । तथा

---

प्रति कर्तृत्वं वीप्सा चास्त्येवेति । एतेन 'एकश एकवचनादिसंज्ञानि स्युः' इति व्याख्यातम् । एकशब्दार्थस्यास्तिक्रियां प्रति कर्तृत्वात् । कृष्णतः प्रतीति । 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति कर्मप्रवचनीयसंज्ञायां 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पञ्चमी । आद्यादिभ्य इति । 'तस्यादित उदात्तमर्धह्रस्वम्' इत्येतदत्र लिङ्गम् । ग्रामत इति । एवम् अध्ययनात्पराजयते अध्ययनत इत्याद्यपि बोध्यम् । अतिग्रहात इति । अन्यातिक्रमेण लोकैर्गृह्यत इत्यर्थः । फलितमाह अन्यानतिक्रम्य । वर्तत इति । प्रवाहिकात इति । प्रच्छर्दिकातः कुर्वित्याद्यप्युदाहरणम् । प्रवाहिका विषूचिका । प्रच्छर्दिका तु वमनव्याधिः । कृभ्वस्तियोगे । योग इति किम्, अशुक्लः शुक्लो जायते । संपद्यकर्तरीति । संपद्यश्चासौ कर्ता चेति विग्रहः ।

विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादि-भिर्योगे । २११८ **अस्य च्वौ** । (७—४—३२) अवर्णस्य ईत्स्यात् च्वौ । वेर्लोपः । च्व्यन्तत्वादव्ययत्वम् । अकृष्णः कृष्णः संपद्यते, तं करोति, कृष्णीकरोति । ब्रह्मीभवति । गङ्गीस्यात् । 'अव्ययस्य च्वावीत्वं नेति वाच्यम्' (५०५२) । दोषाभूतम् अहः । दिवाभूता रात्रिः । एतच्च 'अव्ययीभावश्च' (सू ४५१) इति सूत्रे भाष्ये उक्तम् । २११९ **क्यच्व्योश्च** । (६—४—१५२) हलः परस्यापत्ययकारस्य लोपः स्यात्क्ये च्वौ च परतः । गार्गीभवति । २१२०

---

च फलितमाह **विकारात्मतामित्यादिना** । **वर्तमानादिति** । विकारवाचक-शब्दस्य प्रकृतौ गौण्या वृत्त्या विद्यमानत्वं बोध्यम् । **करोत्यादिभिरिति** । 'डुकृञ् करणे, भू सत्तायाम्, अस भुवि' इति धातुभिर्योगे सतीत्यर्थः । च्विप्रत्यये चकार इत्, इकार उच्चारणार्थः । **अस्य च्वौ** । **ईत्स्यादिति** । 'ई घ्राध्मोः' इत्यतः तदनुवृत्तेरिति भावः । **वेर्लोप इति** । 'वेरपृक्तस्य' इत्यनेनेति शेषः । **च्व्यन्तत्वादव्ययत्वमिति** । 'ऊर्यादिच्विडाचश्च' इति निपातत्वात् स्वरादि-निपातमित्यव्ययत्वमित्यर्थः । 'तद्धितश्चासर्वविभक्तिः' इत्यत्र 'शस्प्रभृतयः प्राक् समा-सान्तेभ्यः' इति परिगणितेष्वन्तर्भावादव्ययत्वमिति केचित् । कृभ्योगे उदाहरति **कृष्ण इति** । वस्तुतः अकृष्णः सन् वेषादिना कृष्णभावं प्राप्नोतीत्यर्थः । **तं करो-तीति** । अकृष्णं कृष्णरूपेण संपद्यमानं करोतीत्यर्थः । **कृष्णीकरोतीति** । अत्र वस्तुतः अकृष्णो नटः प्रकृतिभूतः । स तावत्कृष्णभावं विकारं प्राप्नुवन् सम्पद्यमान-त्वात् सम्पद्यकर्ता भवतीति तत्राभेदारोपमवलम्ब्य वर्तमानो विकारभूतकृष्णवाचकः शब्दः । तस्मात् च्विप्रत्ययः, चकार इत्, इकार उच्चारणार्थः । तस्मिन्परे अकारस्य ईत्वम् । 'वेरपृक्तस्य' इति वकारलोपः । कृष्णीति ईकारान्तमव्ययम् । **ब्रह्मीभव-तीति** । अब्रह्म ब्रह्म संपद्यमानं भवतीत्यर्थः । ब्रह्मन्शब्दात् च्विः । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपः । ईत्वमिति भावः । अत्यन्तस्वार्थिकानामेव प्रातिपदि-कादुत्पत्तिः, नतु सुबन्तादिति नियमः । अतो न च्वेः प्रातिपदिकादुत्पत्तिः । किंतु सुबन्तादेवेति बोध्यम् । अत एव अगौर्गौः समपद्यत गोऽभवदित्यत्र च्व्यन्तस्य गोशब्दस्य 'एङः पदान्तात्—' इति पररूपमुदाहृतं भाष्ये संगच्छत इत्यलम् । **गङ्गी-स्यादिति** । अगङ्गा गङ्गात्वेन संपद्यमाना स्यादित्यर्थः । 'अस्य च्वौ' इति ईत्वम् । **दोषाभूतम् अहरिति** । दोषेत्याकारान्तमव्ययं रात्रावित्यर्थे वर्तते । इह तु रात्रि-रित्यर्थे वर्तते । अदोषाभूतमहः बहुलमेघावरणान्धकाराद् दोषाभूतमित्यर्थः । **दिवा-भूता रात्रिरिति** । दिवेत्याकारान्तमव्ययम् अहनीत्यर्थे । इह तु अहरित्यर्थे वर्तते । चन्द्रिकातिशयवशाद् अहर्भूतेत्यर्थः । ननु 'अव्ययस्य च्वावीत्वं न' इति वार्तिकम् 'अस्य च्वौ' इति सूत्रभाष्ये न दृश्यत इत्यत आह **एतच्चेति** । **गार्गीभव-तीति** वक्ष्यन्नाह **क्यच्व्योश्च** । 'अल्लोपोऽनः' इत्यस्माद् 'लोप' इति, 'हलस्तद्धि-

---

'पाघ्राध्माधेट्दृशः—' इति विहितः शप्रत्ययोऽस्मादेव निपातनात्सम्पदोऽपि भवति । दिवादित्वात् श्यन्निति हरदत्तः । **वक्तव्यमिति** । वृत्तिकारस्तु 'अभूततद्भावे' इति

च्वौ च । (७—४—२६) च्वौ परे पूर्वस्य दीर्घः स्यात् । शुचीभवति । पटूस्यात् । 'अव्ययस्य दीर्घत्वं न' इति केचित्, तन्निर्मूलम् । 'स्वस्ति स्यात्' इति महाविभाषया च्वेरभावात्सिद्धम् । 'स्वस्तीस्यात्' इत्यपि पक्षे स्यादिति चेदस्तु । यदि नेष्यते तर्ह्यनभिधानात् च्विरेव नोत्पद्यत इत्यस्तु । 'रीङृतः' (सू १२३४) । मात्रीकरोति । २१२१ अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च । (५—४—५१) एषां लोपः स्यात् च्विश्च । अरूकरोति । उन्मनीस्यात् । उच्चक्षूकरोति । उच्चेतीकरोति । विरहीकरोति । विरजीकरोति । २१२२ विभाषा साति कार्त्स्न्ये ।

---

तस्य' इत्यस्माद् 'हलः' इति, 'सूर्यतिष्य–' इत्यतः 'य' इति, 'आपत्यस्य च–' इत्यस्माद् 'आपत्यस्य' इति चानुवर्तते, तदाह हलः परस्येति । गार्गीभवतीति । अगार्ग्यो गार्ग्यः संपद्यमानो भवतीत्यर्थः । यञन्तात् च्वौ यकारस्य लोपः । वेर्लोपः । यकारस्य तु 'आपत्यस्य च–' इति लोपो न संभवति, ईकारेण व्यवधानात् । 'हलस्तद्धितस्य' इत्यपि न सम्भवति । तस्य इति अर्थवत्येव विधानात् । अतो वचनमिति भावः । अथ शुचीभवतीति वक्ष्यन्नाह च्वौ च । दीर्घः स्यादिति । 'अकृत्सार्वधातुकयोः—' इत्यतः तदनुवृत्तेरिति भावः । अव्ययस्येति । अव्ययस्य 'च्वौ च' इति दीर्घो नेत्यर्थः । तेन स्वस्ति स्यादित्यत्र च्वौ न दीर्घ इति भावः । तन्निर्मूलमिति । भाष्यादावदृष्टत्वादिति भावः । तर्हि स्वस्ति स्यादिति न स्याद दीर्घप्रसङ्गादित्यत आह स्वस्तिस्यादिति त्विति । ननु महाविभाषया दीर्घाभावे स्वस्ति स्यादिति सिद्धावपि कदाचित् स्वस्तीस्यादिति दीर्घो दुर्वार इति शङ्कते स्वस्तीस्यादित्यपि पक्षे स्यादिति । इष्टापत्तिरित्याह अस्त्विति । दीर्घतदभावाभ्यां रूपद्वयमिति शेषः । प्रामाणिकत्वादुभयमाप्यादर्तव्यमिति भावः । ननु शिष्टानङ्गीकारात् कथं दीर्घपाठादर इत्यत आह यदि नेष्यत इत्यादि । मातृशब्दात् च्विप्रत्यये विशेषमाह रीङृत इति । अरुर्मनश्चक्षुः । एषामिति । अरुस्, मनस्, चक्षुस्, चेतस्, रहस्, रजस् इत्येतेषामित्यर्थः । पूर्वेणैव प्रत्ययसिद्धेस्तत्संनियोगेन अन्त्यलोप इह विधीयते । अरूकरोतीति । अनरुः अरुः संपद्यते तत् करोतीत्यर्थः । प्रकृतेरन्त्यलोपे उकारस्य 'च्वौ च' इति दीर्घः । उन्मनीकरोतीति । अनुन्मना उन्मनाः संपद्यते तं करोतीत्यर्थः । च्वौ अन्त्यलोपः, ईत्वं च । उच्चक्षूकरोतीति । अनुच्चक्षुः उच्चक्षुः संपद्यते, तं करोतीत्यर्थः । च्वौ अन्त्यलोपो दीर्घश्च । उच्चेतीकरोतीति । अनुच्चेता उच्चेताः संपद्यते, तं करोतीत्यर्थः । च्वौ अन्त्यलोपः, ईत्वं च । विरहीकरोतीति । रहो विजनप्रदेशः, विशिष्टं रहो विरहः अविरहो विरहः संपद्यते तत् करोतीत्यर्थः । च्वौ अन्त्यलोपः, ईत्वं च । विरजीकरोतीति । अविरजा विरजाः संपद्यते तं करोतीत्यर्थः । अन्त्यलोपे 'अस्य च्वौ' ईत्वं

---

सूत्रमध्ये प्रचिक्षेप । च्व्यन्तत्वादिति । तस्य निपातत्वात् 'स्वरादिनिपातमव्ययम्' इत्यनेनेत्यर्थः । गार्गीभवतीति । इह यञन्तात् सुपि ततः च्विप्रत्यये कृते 'आपत्यस्य च तद्धितेऽनाति' इति यलोपो न भवति, ईकारेण व्यवधानादिति बोध्यम् । अरुर्मनः । च्विश्चेति । पूर्वेण सिद्धस्यापि च्वेरयमनुवादः । लोपस्तु तत्संनियोग-

(५—४—५२) च्विविषये सातिर्वा स्यात्साकल्ये । २१२३ सात्पदाद्योः (८—३—१११) सस्य षत्वं न स्यात् । दधि सिञ्चति । कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति । अग्नीभवति । महाविभाषया वाक्यमपि । 'कात्स्न्र्ये' किम्—एकदेशेन शुक्लीभवति पटः । २१२४ अभिविधौ संपदा च । (५—४—५३) संपदा कृभ्वस्तिभिश्च योगे सातिर्वा स्याद्व्याप्तौ । पक्षे कृभ्वस्तियोगे च्विः । संपदा तु वाक्यमेव । अग्निसात्संपद्यते, अग्निसाद्भवति शस्त्रम्, अग्नीभवति । जलसात्संपद्यते, जलीभवति लवणम् । 'एकस्या व्यक्तेः सर्वावयवावच्छेदेनान्यथाभावः कात्स्न्र्यम्' । 'बहूनां व्यक्तीनां किञ्चिदवयवावच्छेदेनान्यथात्वं त्वभिविधिः' । २१२५ तदधीनवचने । (५—४—५४) सातिः स्यात्कृभ्वस्तिभिः संपदा च योगे । राजसात्करोति, राजसात्संपद्यते । राजाधीनमित्यर्थः । २१२६ देये त्रा च । (५—४—५५) तदधीने देये त्रा स्यात्सातिश्च कृभ्वादियोगे । विप्राधीनं देयं करोति । विप्रत्राकरोति । विप्रत्रासंपद्यते । पक्षे विप्रसात्करोति । 'देये' किम्—राजसाद्भवति राष्ट्रम् । २१२७ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्यो-

---

च । विभाषा साति । सातीति लुप्तप्रथमाकम् । च्विविषय इति । अभूततद्भावे संपद्यकर्तरि कृभ्वस्तियोग इत्यर्थः । सात्पदाद्योः । शेषपूरणेन सूत्रं व्याचष्टे सस्य षत्वं न स्यादिति । सातेरवयवस्य पदादेश्च सस्य षत्वं न स्यादित्यर्थः । 'न रपरसृपि—' इत्यतो 'न' इति 'अपदान्तस्य—' इत्यतो 'मूर्धन्य' इति चानुवर्तत इति भावः । पदादेरुदाहरति दधि सिञ्चतीति । षिचिधातोः 'धात्वादेः षः सः' इति षस्य सः । तस्य 'आदेशप्रत्यययोः' इति षत्वे प्राप्ते अनेन निषेधः । कृत्स्नमिति । सर्वावयवोपेतमित्यर्थः । अग्निसादित्यत्र प्रत्ययावयवसकारत्वात् षत्वे प्राप्ते अनेन निषेधः । अग्नीभवतीति । च्विप्रत्यये 'च्वौ च' इति दीर्घः । महाविभाषयेति । 'समर्थानाम्—' इत्यतो वाग्रहणानुवृत्तेरित्यर्थः । महाविभाषया सिद्धे इह विभाषाग्रहणं तु अपवादेन मुक्ते औत्सर्गिकच्वेः समावेशार्थम् । अभिविधौ संपदा च । चकारः कृभ्वस्तिसमुच्चयार्थः । तदाह संपदा कृभ्वस्तिभिश्चेति । अभिविधावित्यस्य विवरणं व्याप्ताविति । पक्ष इति । सातिप्रत्ययाभावपक्षे कृभ्वस्तियोगे पूर्वेण च्विः, संपदा योगे सातेरभावे वाक्यमेव, नतु च्विः, कृभ्वस्तियोग एव तद्विधानादित्यर्थः । सम्पदा योगे उदाहरति अग्निसात्संपद्यत इति । कृभ्वस्तियोगे उदाहरति अग्निसाद्भवति शस्त्रमिति । अग्निसात्करोति अग्निसात्स्यादित्यप्युदाहार्यम् । कात्स्न्र्याभिविध्योर्विशेषमाह एकस्या व्यक्तेरित्यादिना । तदधीनवचने । शेषपूरणेन सूत्रं व्याचष्टे सातिः स्यादित्यादिना । 'अभूततद्भावे' इति निवृत्तमिति भावः । देये त्रा च । 'तदधीनवचने' इत्येवानुवर्तते । कृभ्वादियोग इति । कृभ्वस्तिभिः संपदा च योगे इत्यर्थः । देवमनुष्यपुरुषपुरु-

---

शिष्टत्वार्थः । विभाषा साति । विभाष्यते विकल्प्यत इति विभाषा । 'गुरोश्च हलः' इत्यकारप्रत्ययः । ततः टाप् । न त्विदमव्ययम्, 'द्वयोर्विभाषयोर्मध्ये' 'पयसस्तु विभाषया' इत्यादौ विभक्तेर्दर्शनात् । कृत्स्नमिति । सर्वावयवोपेतमित्यर्थः । अग्निसाद्भवति

बहुलम् । (५—४—५६) एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् । देवत्रा वन्दे रमे वा । बहुलोक्तेरन्यत्रापि । बहुत्रा जीवतो मनः । २१२८ अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् । (५–४–५७) द्व्यच् अवरं न्यूनम्, न तु ततोन्यूनम्, 'अनेकाच्' इति यावत् । तादृशमर्धं यस्य तस्माड्डाच् स्यात्कृभ्वस्तिभिर्योगे । 'डाचि विवक्षिते द्वे बहुलम्' (वा ४६९७) 'नित्यमाम्रेडिते डाचीति वक्तव्यम्' (वा ३६३८) । डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तकारपकारयोः पकारः । पटपटाकरोति ।

मर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् । एभ्य इति । देव, मनुष्य, पुरुष, पुरु, मर्त्य इत्येतेभ्य इत्यर्थः । अत्यन्तस्वार्थिकोऽयम् । 'साति' इति 'कृभ्वस्तियोगे' इत्यपि निवृत्तम् । देवत्रा वन्दे रमे वेति । देवान् वन्दे, देवेषु रमे वेत्यर्थः । मनुष्यत्रा पुरुषत्रा । पुरुशब्दो बहुलपर्यायः । पुरुत्रा, मर्त्यत्रा । अन्यत्रापीति । देवादिभ्योऽन्यत्रापीत्यर्थः । बहुत्रा जीवतो मन इति । जीवतो जन्तोर्मनः बहुषु विषयेषु गच्छति बहून् व्याप्नोतीत्यर्थः । अव्यक्तानुकरणात् । यत्र ध्वनौ अकारदयो वर्णविशेषा न व्यज्यन्ते सः अव्यक्तो ध्वनिः । तस्यानुकरणम् अव्यक्तानुकरणम् । द्व्यजवरार्धशब्दं व्याचष्टे द्व्यजिति । द्वावचौ यस्येति विग्रहः । अवरशब्दं व्याचष्टे न्यूनमिति । द्व्यजेव अवरं न्यूनसंख्याकमिति सामानाधिकरण्येनान्वयः । न तु ततो न्यूनमिति । एकाच्कमित्यर्थः । फलितमाह अनेकाजिति यावदिति । तादृशमर्धमिति । अत्रेकाच्कम् अर्धं भागो यस्य तद् द्व्यजवरार्धम् । तस्मादित्यर्थः । कृभ्वस्तिभिर्योग इति । मण्डूकप्लुत्या तदनुवृत्तेरिति भावः । तथा च अनेकाच्कभागयुक्तादव्यक्तानुकरणात् शब्दात् कृभ्वस्तियोगे डाच् स्यादिति फलितम् । अथ पटच्छब्दादव्यक्तानुकरणाद् डाचमुदाहरिष्यन् पटच्छब्दस्य द्विर्वचनमाह डाचि विवक्षिते द्वे बहुलमिति । यद्यपि 'सर्वस्य द्वे' इति प्रकरणे 'डाचि द्वे भवत इति वक्तव्यम्' इत्येव भाष्ये वार्तिकं पठितम् । तत्र डाचि परत इति नार्थः, तथा सति डाचि सति पटच्छब्दस्य द्विर्वचनम्, सति च द्विर्वचने अर्थस्यानेकाच्त्वाद् डाजित्यन्योन्याश्रयापत्तेः । अतः डाचि विवक्षिते इत्याश्रितम् । एवं च डाचि विवक्षिते पटच्छब्दस्य द्विर्वचने सति पटत् पटत् इत्यस्यानेकाच्कार्धभागयुक्तत्वाद् डाच् सूपपादः । पटत् पटत् आ करोतीति स्थिते प्रक्रियां दर्शयति नित्यमाम्रेडिते डाचीति । 'एकः पूर्वपरयोः' इत्यधिकारे पररूपप्रकरणे 'नाम्रेडितस्यान्त्यस्य तु वा' इति सूत्रभाष्ये इदं वार्तिकं पठितम् । डाच्परमिति । डच् परं यस्मादिति विग्रहः । पकार इति ।

शस्त्रमिति । जातावेकवचनम् । सर्वाणि शस्त्राणीत्यर्थः । वन्दे रमे वेति । देवान् वन्दे देवत्रा वन्दे । देवेषु रमे देवत्रा रमे इत्यर्थोऽत्र पर्यवसन्नः । एवं मनुष्यान् गच्छति मनुष्यत्रा गच्छति । मनुष्येषु वसति मनुष्यत्रा वसति । पुरुषान् गच्छति पुरुषत्रा गच्छति । पुरुषेषु वसति पुरुषत्रा वसति । पुरुशब्दो बहुपर्यायः । पुरून् गच्छति पुरुषु वसति वा पुरुत्रा । मर्त्यान्मर्त्येषु वा मर्त्यत्रा । डाचिविवक्षित इति । परसप्तम्यां त्वन्योन्याश्रयः स्यात् । डाचि कृते द्वित्वे सति द्व्यजवरार्धता, तस्यां च सत्यां डाजिति भावः ।

'अव्यक्तानुकरणात्' किम्—ईषत्करोति । 'द्व्यजवरार्धात्' किम्—श्रत्करोति । 'अवर' इति किम्—घरटघरवटाकरोति । त्रपटत्रपटाकरोति 'अनेकाचः' इत्येव सूत्रयितुमुचितम् । एवं हि डाचीति परसप्तम्येव द्वित्वे सुवचेत्यवधेयम् । 'अनितौ' किम्—पटिति करोति । २१२९ कृञो द्वितीयतृतीयशम्बबीजात्कृषौ । (५—४—५८) द्वितीयादिभ्यो डाच्स्यात्कृञ एव योगे कर्षणेऽर्थे । बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । द्वितीयं तृतीयं कर्षणं करोति द्वितीयाकरोति । तृतीयाकरोति । शंबशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति, शंबाकरोति । बीजेन सह कर्षति, बीजाकरोति । २१३० संख्यायाश्च गुणान्तायाः । (५—४—५९) कृञो योगे कृषौ डाच्स्यात् । द्विगुणाकरोति क्षेत्रम् । क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः । २१३१

---

तथा च पटपटत् आ करोति इति स्थिते डित्वाट्टिलोपे पटपटाकरोतीति रूपमित्यर्थः । अवरेति किमिति । द्व्यजर्धादित्येवास्त्वित्यर्थः । घरटघरटाकरोतीति । घरटत् इत्यव्यक्तानुकरणाद् डाचि द्विर्वचने पररूपे टिलोपे रूपम् । द्व्यजर्धादित्युक्ते तु अर्ध-भागस्य घरटत् इत्यस्य बह्वच्कत्वाड्डाच् न स्यादित्यर्थः । अनेकाच इत्येवेति । द्व्यज-वरार्धादित्यपनीय 'अव्यक्तानुकरणादनेकाचोऽनितौ डाच्' इत्येव सूत्रयितुमुचि-तमित्यर्थः । एवं हीति । 'अनेकाचोऽनितौ' इति पाठे सति पटच्छब्दस्य द्वित्वात्प्रा-गेव अनेकाच्कत्वाद् डाच् संभवतीति 'डाचि परतो द्वित्वम्' इति वक्तुं शक्यमिति भावः । पटितीति । 'अव्यक्तानुकरणस्य' इति पररूपम् । कृञो द्वितीय । द्वितीयादिभ्य इति । द्वितीय, तृतीय, शम्ब, बीज इत्येतेभ्य इत्यर्थः । कृञ एव योग इति । कृञ्ग्रहणात् कृभ्वस्तिर्नानुवर्तत इति भावः । 'मद्रात्परिवापणे' इति यावत् कृञ्-इत्यनुवर्तते । बहुलोक्तेरिति । 'डाचि बहुलं द्वे भवतः' इति बहुलग्रहणाद् अव्यक्तानुकरणस्यैव डाचि द्वित्वम् । नतु तदन्यस्येत्यर्थः । शम्बशब्दः प्रतिलोम इति । वर्तत इति शेषः । बीजेन सह कर्षतीति । आदौ कृष्टक्षेत्रे कुलत्थादिबीजानां वापे कृते पुनः बीजैः सह कर्षणं प्रसिद्धम् । 'कर्षात्वत—' इति सूत्र-भाष्यप्रामाण्यात् कृषधातुः शब्विकरणोऽस्ति, तेन शविकरणत्वात् कृषतीत्येव युक्त-मिति न शङ्क्यम् । संख्यायाश्च । शेषपूरणेन सूत्रं व्याचष्टे कृञो योग इति ।

---

खरटखरटाकरोतीति । द्वित्वपररूपादि प्राग्वत् । द्व्यजर्धादित्युक्ते त्वत्र डाच् न स्यात् । न ह्यत्रार्धं द्व्यच् किं तु त्र्यच् । अनेकाच इत्येवेति । 'द्व्यजवरार्धात्' इत्य-पनीयेत्यर्थः । पटितीति । 'अव्यक्तानुकरणस्यात इतौ' इति पररूपम् । नन्वत्र करोतिना योगो दुर्लभः, इतिशब्देन व्यवधानात् । तथा चानिताविति व्यर्थमिति चेत् । अत्राहुः—इतिशब्देन करोत्यर्थगतप्रकार एव परामृश्यते इत्येवंप्रकारेण करोतीति । तथा च पटच्छब्दस्यार्थद्वारा योगोऽस्त्येवेति । बीजेन सहेति । ननु बीजेन सह भूतलस्य कर्षणे बीजानामपि कर्षणप्रसङ्गाद्विवक्षितार्थो न सिध्यतीति चेत् । अत्राहुः—वृत्तिविषये बीजशब्दो बीजावापसहिते विलेखने वर्तते तथा च बीजावाप-

...च्च यापनायाम् । (५—४—६०) 'कृषौ' इति निवृत्तम् । कृञो योगे स्यात् । समयाकरोति । कालं यापयतीत्यर्थः । २१३२ सपत्त्रनिष्पत्त्राद-...व्यधने । (५—४—६१) सपत्त्राकरोति मृगम् । सपुङ्खशरप्रवेशेन सपत्त्रं ...तीत्यर्थः । निष्पत्त्राकरोति । सपुङ्खस्य शरस्यापरपार्श्वे निर्गमनान्निष्पत्त्रं ...तीत्यर्थः । 'अतिव्यधने' किम्—सपत्त्रं निष्पत्त्रं वा करोति भूतलम् । २१३३ ...कुलान्निष्कोषणे । (५—४—६२) निष्कुलाकरोति दाडिमम् । निर्गतं ...अन्तरवयवानां समूहो यस्मादिति बहुव्रीहिर्डाच् । २१३४ सुखप्रिया-...नुलोम्ये । (५—४—६३) सुखाकरोति । प्रियाकरोति गुरुम् । अनुकूलाचरणे-...नन्दयतीत्यर्थः । २१३५ दुःखात्प्रातिलोम्ये । (५—४—६४) दुःखाकरोति ...स्वामिनम् । पीडयतीत्यर्थः । २१३६ शूलात्पाके (५—४—६५) शूला-...करोति मांसम् । शूलेन पचतीत्यर्थः । २१३७ सत्यादशपथे । (५—४—६६) ...सत्याकरोति भाण्डं वणिक् । क्रेतव्यमिति तथ्यं करोतीत्यर्थः । शपथे तु सत्यं

---

...समयाच्च । 'कृषौ' इति निवृत्तम् । समयशब्दाद् यापनायां गम्यमानायां डाजि-...त्यर्थः । समयाकरोतीति । करोतिरिह यापनायामित्याह यापयतीति । अति-...क्रान्तं करोतीत्यर्थः । अद्येदं कर्तव्यमित्युक्ते विघ्नं कञ्चिदापाद्य कालक्षेपं करोतीति यावत् । ...सपत्त्र । सपत्त्रशब्दाद् निष्पत्त्रशब्दाच्च अतिव्यधने डाजित्यर्थः । 'व्यध ताडने' ...चतुर्थ्यन्तः । अतिक्रम्य वेधः अतिव्यधनम् । लक्ष्ये शराः पतन्त्यनेनेति पत्त्रम्, ...शराणां पुङ्खगतो बर्हः । भूतलमिति । पुङ्खपर्यन्तं पुङ्खवर्जं वा शरप्रवेशनेन सपत्त्रं ...निष्पत्त्रं वा भूतलं करोतीत्यर्थः । निष्कुलान्निष्कोषणे । डाजिति शेषः । निष्को-...षणम् अन्तर्गतावयवानां बहिःकरणम् । निष्कुलाकरोति दाडिममिति । निर्गतं ...कुलं यस्मादिति बहुव्रीहिः । कुलशब्दश्च अन्तरवयवसमूहे वर्तते । तदाह निर्गत-...मित्यादि । सुखप्रियादानुलोम्ये । सुखशब्दात्प्रियशब्दाच्च आनुलोम्ये गम्ये ...डाच् स्यादित्यर्थः । आराध्यगुर्वादिचित्तानुवर्तनमानुलोम्यम् । सुखाकरोति । प्रिया-...करोति गुरुमिति । चित्तानुवर्तनेन गुरुं सुखसंपन्नं प्रियसंपन्नं च करोतीत्यर्थः । ...तदाह अनुकूलेति । दुःखात् । डाजिति शेषः । आराध्यप्रतिकूलाचरणं प्राति-...लोम्यम् । अन्यत्पूर्ववत् । शूलात्पाके । डाजिति शेषः । शूलाकरोतीति । अत्र ...करोतिः पाके वर्तते । तदाह शूलेन पचतीत्यर्थ इति । सत्यादशपथे ।

---

...हितं विलेखनं करोतीत्यर्थ इति । समयाच्च । कालं यापयतीत्यर्थ इति । ...कर्तव्यस्यावसरप्राप्तिः समयस्तस्यातिक्रमणं यापना' इति वृत्तिग्रन्थमुपादाय हरदत्त ...आह—'अद्य मे पारवश्यम्, श्वः परश्वो वा अस्य समय इत्येवं बहुषु दिवसेषु य आह ...स एवमुच्यते' इति । सपत्त्रनिष्पत्त्रात् । लक्ष्ये शराः पतन्त्यनेनेति पत्त्रम् ' ...शराणां पुङ्खगतो बर्हः । सपत्त्रं निष्पत्त्रं वा करोतीति । पत्त्राणि पर्णानि ...तत्सहितं तद्रहितं वेति यथासम्भवमर्थः । निष्कुलात् । निष्कोषणमन्तरवयवानां बहिर्निष्कासनम् । निष्कोषणे किम्, निष्कुलं करोति शत्रुम् । शूलात्पाके । पाके

---

१ 'अतिव्यथने' इति बहुत्र पाठः ।

करोति विप्रः । २१३८ मद्रात्परिवापणे । (५-४-६७) मद्रशब्दो मङ्गलार्थः । परिवापणं मुण्डनम् । मद्राकरोति । माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः । 'भद्राच्चेति वक्तव्यम्' (वा ३३४४) । भद्राकरोति । अर्थः प्राग्वत् । 'परिवापणे' किम्— मद्रं करोति । भद्रं करोति ।

इति स्वार्थिकप्रकरणम् । इति तद्धिताः ॥

---

डाजिति शेषः । सत्याकरोति भाण्डमिति । रत्नादिद्रव्यजातमित्यर्थः । सत्यशब्दोऽत्र तथ्ये वर्तते । 'सत्यं तथ्यमृतं सम्यक्' इत्यमरः । क्रेतव्यमितीति । एतावतैव मूल्येन इदं क्रयणार्हं नातोऽधिकमूल्येनेत्येवं यथाभूतार्थं वदतीत्यर्थः । सत्यं करोति विप्र इति । शपथं करोतीत्यर्थः । मद्रात्परिवापणे । डाजिति शेषः । मद्रशब्दो मङ्गलार्थ इति । मङ्गलपर्याय इत्यर्थः । परिवापणं मुण्डनमिति । केशान्वपते इत्यादौ तथा दर्शनादिति भावः । माङ्गल्यमुण्डनेनेति । चौलेनेत्यर्थः । मद्रं करोति । भद्रं करोतीति । क्षेमं करोतीत्यर्थः । अत्र परिवापणस्याप्रतीतेर्न डाजिति भावः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां तद्धितप्रकरणं समाप्तम् ।

---

किम्, शूलं करोति कदन्नम्, शूलमुदररोगः । सत्यादशपथे । सत्सु साधु सत्यम् । 'तत्र साधुः' इति प्राग्घितीयत्वाद्यति प्राप्ते अतएव निपातनाद् यः । अन्तोदात्तोऽयम् । 'सत्येनोत्तभिता भूमिः' । 'ऋतं च सत्यं च' इत्यत्र तथा दर्शनात् । सत्याकरोतीति । भाण्डं रत्नादिद्रव्यजातम् । क्रेतव्यमिति । मयैवैतद् ग्राह्यमिति बुद्ध्या परीक्षादिना सत्यंकारद्रव्यप्रदानेन च दृढं करोतीत्यर्थः । तथ्यमिति । तथैव तथ्यम् । 'पादार्घाभ्यां च' इति चकारस्यानुक्तसमुच्चयार्थत्वात्स्वार्थे यत् । परिवापणमिति । कर्मव्यापारमात्रवाचिनो वपेर्हेतुमण्णिचि ल्युडिति हरदत्तः । कर्मव्यापारः फलं तस्य कर्मनिष्ठत्वात् । यथा च फलमात्रवाचिन इत्यर्थः फलित इत्याहुः । माङ्गल्यमुण्डनेनेति । चौलदीक्षादौ । भद्राच्चेति । भद्रादित्यर्थग्रहणमिति व्याख्याने तु मङ्गलादिभ्योऽपि स्यादिति बोध्यम् । इति तद्राजाः ।

इति तत्त्वबोधिन्यां तद्धितप्रक्रियाप्रकरणम् ।

## अथ द्विरुक्तप्रकरणम् । ४२ ।

२१३९ सर्वस्य द्वे । ( ८—१—१ ) इत्यधिकृत्य । २१४० नित्य-

---

अथ द्विरुक्तप्रकरणम् । सर्वस्य द्वे । इत्यधिकृत्येति । द्विर्वचनविषयोऽनुक्रं-

---

सर्वस्य द्वे । सर्वशब्दस्य द्वे भवत इति विधिस्तु न शङ्क्यः । किं तु
त्यवीप्सयोः' इत्येवमादीनां विधेयकार्यिणोरनिर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधि-
रोऽयं तदाह इत्यधिकृत्येति । एतदर्थरूपमधिकृतेत्यर्थः । स्वरूपग्रहणं तु न
ति 'नाम्रेडितस्यान्त्यस्य तु वा' इति लिङ्गात् स्वरूपग्रहणे हि सति द्विरुक्तसर्व-
ब्दस्यैव परमाम्रेडितं स्यात्, न तु द्विरुक्तस्याव्यक्तानुकरणशब्दस्य परमिति 'नाम्रेडि-
स्य—' इति पररूपनिषेधोऽन्त्यस्य तकारस्य विकल्पविधिश्च कथं संगच्छेत । ननु
त्यवीप्सयोः' इत्यादौ 'पदस्य' इति वक्ष्यमाणमपकृष्य पदस्यैव द्वित्वं विधीयत इति
मनेन सर्वस्येति ग्रहणेनेति चेत् । अत्राहुः—'स्वादिषु—' इति पदसंज्ञामादाय वृक्षा-
मित्यादौ प्रकृतिभागमात्रस्य द्विर्वचनं स्यात् । कृते तु 'सर्वस्य' इति ग्रहणे 'सर्व-
ब्दोऽवयवकार्त्स्न्ये वर्तते' इति 'सर्वावयवोपेतस्य द्वित्वम्, न तु कश्चिदवयवो वर्ज्यते'
र्थलाभादिष्टसिद्धिरिति । इह 'द्वे' इत्यस्य संख्येयापेक्षायां शब्दरूपे गृह्येते,
ब्दानुशासनप्रस्तावात् । 'सर्वस्य' इति स्थानषष्ठी । सोऽयं स्थानेद्विर्वचनपक्षः ।
दि तु उच्चारणे संख्येये, तदा स्थान्यादेशभावो न संभवति, निवृत्तिधर्मा हि स्थानी
वति, सर्वं चेद् निवृत्तं कस्योच्चारणं स्यात्, अतः 'सर्वस्य' इत्यध्याहृतोच्चारणशब्दा-
क्षया 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । 'सर्वं द्विरुच्चारयेत्' इति फलितोऽर्थः ।
ऽयं 'द्विःप्रयोगो द्विर्वचनम्' इति पक्षः । ननु आद्यपक्षे स्थानिवद्भावेन समुदायस्यैव
त्वं स्यात्, न त्ववयवयोस्ततश्च पदकार्याणि न स्युः । न चेष्टापत्तिः । 'अपचन्नपचन्'
त्यत्र ङमुट्, 'वृक्षान् वृक्षान्' इत्यत्र 'पदान्तस्य' इति णत्वनिषेधः, 'अग्रेऽग्रे' इत्यत्र
ङः पदान्तात्—' इति पूर्वरूपत्वं च न सिध्येत् । किं चापदान्तत्वप्रयुक्तकार्याणि
ुः । तद्यथा 'पयः पयः' इत्यत्र 'सोपदादौ' इति सत्वं स्यात्, 'पपीः पपीः' इत्यत्र
णः षः' इति षत्वं स्यात् । 'पाशकल्पककाम्येषु—' इति वृत्तिग्रन्थमवष्टभ्य कथं-
त्सत्वषत्वपरिहारेऽपि 'अश्नीताश्नीत' इत्यत्र 'अतो गुणे' इति पररूपं स्यादिति
त् । अत्राहुः—यदि प्रत्यस्तमितावयवभेदः समुदाय एक एवादेशः स्याद् द्वे इति
वचनमनुपपन्नं स्यात्, अतो द्वे इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते
पदादेशत्वेन विधीयेते तत्र स्थानिवद्भावेन समुदायस्य पदत्वं स्वत एव चावयवयो-
तीति न कश्चिद्दोष इति । स्यादेतत्—द्विःप्रयोगपक्षे प्रत्येकं पदसंज्ञायां सिद्धायामपि
मुदायस्य सा न सिध्यति । ततश्च देवदत्तः पचतिपचतीत्यादौ 'तिङ्ङतिङः' इति
र्वस्य पदस्य निघातो न सिध्यतीति चेत् । अत्राहुः—पचतिपचतीत्यादौ हि स एव
तुः प्रत्ययश्चात्र द्विः पठ्यते । ततश्च यो यस्मात् प्रत्ययो विहितस्तदादितदन्तमिति
धीयमाना पदसंज्ञा समुदायस्यापि प्रवर्तते । तेनावग्रहादिः सिध्यतीति ।

वीप्सयोः । (८—१—४) आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं स्यात्

स्यन्त इति शेषः । नित्यवीप्सयोः । नित्यशब्देन नित्यत्वं विवक्षितम् तच्च आभीक्ष्ण्यमिति भाष्यम् । व्याप्तुमिच्छा वीप्सा, व्याप्तिप्रतिपादनेच्छा, सा च प्रयोक्तृधर्मः व्याप्तिरेव तु शाब्दबोधविषय इति भाष्यस्वरसः । तथा च नित्यव्याप्त्योरित्येव सुवचम् । व्याप्तिश्च कार्त्स्न्येन संबन्धः, उपसर्गबलात् । पदस्येत्यधिकरिष्यमाणमिहापकृष्यते । सर्वस्येति स्थानषष्ठी । द्वे इति त्वादेशसमर्पकम् । तस्य च शब्दरूपे च इति विशेष्यमर्थाल्लभ्यते, शब्दानुशासनप्रस्तावात् । ते च शब्दरूपे स्वरूपतः अर्थतश्चान्तरतमे पदे इति स्थानेऽन्तरतमपरिभाषया लभ्यते । ततश्च पौनःपुन्ये कार्त्स्न्ये च गम्ये कृत्स्नावयवविशिष्टस्य पदस्यार्थतश्च शब्दतश्चान्तरतमे द्वे पदे भवतः इति फलितम् । तदभिप्रेत्याह आभीक्ष्ण्ये वीप्सायां च द्योत्य इति । द्योत्यं च द्योत्या च द्योत्यम् । तस्मिन्नित्यर्थः । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकैकशेष एकत्वं च । नित्यवीप्से च प्रकृतिगम्ये । द्विर्वचनं तु द्योतकम् । सत्यपि प्रकृतेर्द्वित्वे द्विरुक्तयोः प्रकृत्यनतिरेकादिति बोध्यम् । द्विर्वचनं स्यादिति । द्वे पदे आदेशौ स्त इत्यर्थः । तत्रावयवयोः पदत्वं स्वतःसिद्धम् । समुदायस्य तु पदद्वयात्मकस्य स्थानिवत्त्वात् सुबन्तत्वम् । तेन अपचन्नपचन्नित्यत्र ङमुट्, वृक्षान्वृक्षानित्यत्र 'पदान्तस्य' इति णत्वनिषेधः । अग्रेऽग्रे इत्यत्र 'एङः पदान्तात्—' इति पूर्वरूपं चेत्यादीन्यवयवानां पदकार्याणि सिध्यन्ति । पुनः पुनरिति समुदायस्य स्थानिवत्त्वेन सुबन्तत्वाद् भावे ष्यञि, भवे ठञि च पौनःपुन्यम्, पौनःपुनिक इति च सिध्यति । द्वे उच्चारणे स्त इत्याश्रयणे तु सर्वं पदं द्विरुच्चारयेदित्यर्थः फलितः स्यात् । ततश्च पुनरित्येकस्यैव द्विरुच्चार्यमाणस्य पुनः पुनरित्यादेशत्वाभावेन स्थानिवत्त्वाप्रसक्त्या सुबन्तत्वविरहात् तद्धितोत्पत्तिर्न स्यात् । तस्मादादेशपक्ष एव श्रेयानित्यास्तां तावत् ।

नित्यवीप्सयोः । नित्यमिह पौनःपुन्यमित्याह । आभीक्ष्ण्य इति । द्योत्य इति । 'नपुंसकमनपुंसकेन—' इत्येकशेषः, एकवद्भावश्च बोध्यः । पदस्येति । तेन नित्यतायां विधीयमानं द्विर्वचनं धातुमात्रस्य न भवति । किं च क्रियासमभिहारे धातोर्विहितो यङन्तरङ्गः, पदस्योच्यमानं द्विर्वचनं तु बहिरङ्गमिति यङं न बाधते । अन्यथा हि पौनःपुन्यं भृशार्थश्च क्रियासमभिहारे इति भृशार्थे सावकाशोऽयं यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्येत । न च पदस्य द्विर्वचनाभ्युपगमे सगतिकस्य प्रपचति प्रपठतीत्यादेर्द्विर्वचनं न स्यादिति वाच्यम्, वार्तिककारवचनात्तत्सिद्धेः । अत्र वदन्ति—सगतिकस्य द्वित्वे ऐकपद्यं नास्त्येव, स्थानिनः पदत्वाभावेन आदेशेऽपि तस्य दौर्लभ्यात् । द्विःप्रयोगपक्षे तु प्रथमगतिं विहायावशिष्टस्य समुदायस्य पदत्वं प्राप्तं तस्मिन् सत्यपि न क्षतिः । वस्तुतस्त्विह स्थाने द्विर्वचनपक्ष एव मुख्यः । स्थानिनः सुबन्तत्वेनादेशस्यापि सुबन्तत्वात्सुबन्तात्तद्धित इति पक्षे समुदायात् ष्यञ्ठञोः संभवेन पौनःपुन्यं पौनःपुनिक इति रूपसिद्धेः । 'प्रातिपदिकात्तद्धितः' इति पक्षाभ्युपगमेऽपि श्रूयमाणप्रत्ययान्तस्यैव प्रातिपदिकत्वनिषेधात्पुनरित्यस्यैव प्रातिपदिकत्वेनादेशस्यापि प्रातिपदिकत्वात्पौनःपुन्यमित्यादि सिध्यत्येव । द्विःप्रयोगपक्षे [illegible] लुकि द्वित्वं

क्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च । पचति पचति । भुक्त्वा भुक्त्वा ।
याम्—वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः । २१४१ परेर्वर्जने

क्ष्ण्यं तिङन्तेष्विति । आभीक्ष्ण्यं पौनःपुन्यम् । तच्चेह प्रधानभूत-
या एव । क्रियाप्राधान्यं चाख्यातेष्वस्तीति 'प्रशंसायां रूपप्' इति सूत्रे भाष्ये
म् । अव्ययकृत्स्वपि क्त्वातुमुन्नादिषु क्रियाप्राधान्यम्, 'अव्ययकृतो भावे' इत्युक्तेः ।
च तिङन्तेषु अव्ययसंज्ञककृदन्तेषु च पौनःपुन्यनिमित्तकद्विर्वचनं नान्यत्रे-
। तथैवोदाहरति पचति पचति, भुक्त्वा भुक्त्वेति । वीप्साया-
। उदाह्रियत इति शेषः । वृक्षं वृक्षमिति । कृत्स्नं वृक्षमित्यर्थः । अत्र
नद्वाटिकागतवृक्षकार्त्स्न्यं गम्यते । जगतीतलस्थितकृत्स्नवृक्षसेचनस्य अश-

न इति समुदायस्य सुबन्तत्वाभावात् प्रातिपदिकत्वाभावाच्च ष्यङ्ठञौ न भवतः। न च
वदधातुः—' इत्यादिना समुदायस्य प्रातिपदिकत्वे सोरुत्पत्तौ तस्य लुकि च सुबन्तत्वं
पदिकत्वं च संभवत्येवेति वाच्यम्, 'यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति
स्यैव' इति नियमेन प्रातिपदिकत्वस्यासंभवेन सुबन्तत्वस्याप्यसम्भात् । न च
प्रयोगपक्षे स एव धातुः प्रत्ययश्च द्विः पठ्यते इति समुदायस्यापि पदसंज्ञा प्रवर्तते
वनेनैवोक्तत्वात्पुनः पुनरिति समुदायस्य सुबन्तत्वमस्त्त्येवेति शङ्क्यम्, अन्तरङ्गत्वात्सो-
क प्रकृतिभागस्य द्विर्वचने सति यस्मात्प्रत्ययो विहितस्तदादि तदन्तमिति विधीय-
ायाः पदसंज्ञायाः समुदायस्य दुर्लभत्वात् । ततश्चैकपद्याभावे 'पुनःपुनर्जायमाना
णी' इत्यादाववग्रहोऽपि न सिध्येदिति । आभीक्ष्ण्यमिति । तद्धि क्रियानिष्ठधर्मः ।
तद्द्योतनार्थं द्वित्वं क्रियाप्रधानानामेव न्याय्यम् । क्रियाप्राधान्यं चाख्यातेऽस्ति,
शेषे च, 'अव्ययकृतो भावे' इति वक्ष्यमाणत्वादिति भावः । केचित्तु क्रियाप्रधा-
ामेव द्वित्वे परिगृहीतसाधनाया एव क्रियाया व्यवहारोपयोगित्वात्तदभिधानाच्च
ुमात्रस्य द्वित्वं न भवति किंतु तादृशक्रियाभिधायिनः पदस्यैव स्यादिति पदस्याप-
णाभावेऽपि न क्षतिरित्याहुः । तच्चिन्त्यम् । उक्तरीत्या नानाकारकविशिष्टक्रिया-
पंकस्य वाक्यस्यैव द्वित्वापत्तेः । किं च भावार्थकलकारान्तानामव्ययकृतां च भवदुक्त-
त्या द्वित्वं न स्यात् । ननु तत्र नित्यतावगत्यनन्तरं पदान्तरैः साधनाकाङ्क्षा
पूर्यत इति भूयते पक्तेत्यादिपदानां द्वित्वं स्यादेवेति चेत् तर्हि तत्रैव धातुमात्रस्य
त्वं केन वार्यताम् । किं च तद्वदेव कर्तृकर्मलकारस्थलेऽपि धातुमात्रद्वित्वं दुर्वारमिति
स्येत्यपकर्षं गमावश्यकमेवेति दिक् । वीप्सायामिति । व्याप्तुमिच्छा वीप्सा ।
प्तिप्रतिपिपादयिषेति यावत् । सा च प्रयोक्तुर्धर्म आबाधवत् । गतगत इत्युक्ते
स्य चिरगमनादिना पीडितो वाक्यं प्रयुङ्क्ते इति यथा प्रतीयते तथा वृक्षंवृक्षं
ञ्चतीत्यादावपि व्याप्तिं बुबोधयिषोरिदं वाक्यमित्यवगमात् । शाब्दबोधविषयस्तु
ाप्तिरेव । तथा च 'नित्यव्याप्त्योः' इत्येव सूत्रयितुं शक्यम् । व्याप्तिरिह कार्त्स्न्यम्,
च्वाधिकारिकम् । 'सर्वे ब्राह्मणा आमन्त्रिताः' इत्यादौ यथा । 'न हि जगतीतले
धमाना ब्राह्मणाः सर्वेऽपि केनचिदामन्त्रयितुं शक्यन्ते' इति स्वग्रामस्थस्वजातीय-
...यता ... संकोचो ... अभ्युपेयते तद्वत्रापि सकलवृक्षसेचनसामर्थ्यं कस्यापि

वीप्सयोः । (८—१—४) आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं स्यात् ।

स्यन्त इति शेषः । नित्यवीप्सयोः । नित्यशब्देन नित्यत्वं विवक्षितम् तच्च आभीक्ष्ण्यमिति भाष्यम् । व्याप्तुमिच्छा वीप्सा, व्याप्तिप्रतिपादनेच्छा, सा च प्रयोक्तृधर्मः । व्याप्तिरेव तु शाब्दबोधविषय इति भाष्यस्वरसः । तथा च नित्यव्याप्त्योरित्येव सुवचम् । व्याप्तिश्च कात्स्न्र्येन संबन्धः, उपसर्गबलात् । पदस्येत्यधिकरिष्यमाणमिहापकृष्यते । सर्वस्येति स्थानषष्ठी । द्वे इति त्वादेशसमर्पकम् । तस्य च शब्दरूपे इति विशेष्यमर्थाल्लभ्यते, शब्दानुशासनप्रस्तावात् । ते च शब्दरूपे स्वरूपतः अर्थतश्चान्तरतमे पदे इति स्थानेऽन्तरतमपरिभाषया लभ्यते । ततश्च पौनःपुन्ये कात्स्न्र्ये च गम्ये कृत्स्नावयवविशिष्टस्य पदस्यार्थतश्च शब्दतश्चान्तरतमे द्वे पदे भवत इति फलितम् । तदभिप्रेत्याह आभीक्ष्ण्ये वीप्सायां च द्योत्य इति । द्योत्यं च द्योत्या च द्योत्यम् । तस्मिन्नित्यर्थः । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकैकशेष एकत्वं च । नित्यवीप्से च प्रकृतिगम्ये । द्विर्वचनं तु द्योतकम् । सत्यपि प्रकृतेर्द्वित्वे द्विरुक्तयोः प्रकृत्यनतिरेकादिति बोध्यम् । द्विर्वचनं स्यादिति । द्वे पदे आदेशौ स्त इत्यर्थः । तत्रावयवयोः पदत्वं स्वतःसिद्धम् । समुदायस्य तु पदद्वयात्मकस्य स्थानिवत्त्वात् सुबन्तत्वम् । तेन अपचन्नपचन्नित्यत्र ङमुट्, वृक्षान्वृक्षानित्यत्र 'पदान्तस्य' इति णत्वनिषेधः । अग्रेऽग्रे इत्यत्र 'एङः पदान्तात्—' इति पूर्वरूपं चेत्यादौन्यवयवानां पदकार्याणि सिध्यन्ति । पुनः पुनरिति समुदायस्य स्थानिवत्त्वेन सुबन्तत्वाद् भावे ष्यञि, भवे ठञि च पौनःपुन्यम् , पौनःपुनिक इति च सिध्यति । द्वे उच्चारणे स्त इत्याश्रयणे तु सर्वं पदं द्विरुच्चारयेदित्यर्थः फलितः स्यात् । ततश्च पुनरित्येकस्यैव द्विरुच्चार्यमाणस्य पुनः पुनरित्यादेशत्वाभावेन स्थानिवत्त्वाप्रसक्त्या सुबन्तत्वविरहात् तद्धितोत्पत्तिर्न स्यात् । तस्मादादेशपक्ष एव श्रेयानित्यास्तां तावत् ।

नित्यवीप्सयोः । नित्यमिह पौनः पुन्यमित्याह । आभीक्ष्ण्य इति । द्योत्य इति । 'नपुंसकमनपुंसकेन—' इत्येकशेषः, एकवद्भावश्च बोध्यः । पदस्येति । तेन नित्यतायां विधीयमानं द्विर्वचनं धातुमात्रस्य न भवति । किं च क्रियासमभिहारे धातोर्विहितो यङन्तरङ्गः, पदस्योच्यमानं द्विर्वचनं तु बहिरङ्गमिति यङं न बाधते । अन्यथा हि पौनःपुन्यं भृशार्थश्च क्रियासमभिहारे इति भृशार्थे सावकाशोऽयं यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्येत । न च पदस्य द्विर्वचनाभ्युपगमे सगतिकस्य प्रपचति प्रपठतीत्यादेः द्विर्वचनं न स्यादिति वाच्यम् , वार्तिककारवचनात्तत्सिद्धेः । अत्र वदन्ति—सगतिकस्य द्वित्वे ऐकपद्यं नास्त्येव, स्थानिनः पदत्वाभावेन आदेशेऽपि तस्य दौर्लभ्यात् । द्विःप्रयोगपक्षे तु प्रथमगतिं विहायावशिष्टस्य समुदायस्य पदत्वं प्राप्तं तस्मिन् सत्यपि न क्षतिः । वस्तुतस्त्विह स्थाने द्विर्वचनपक्ष एव मुख्यः । स्थानिनः सुबन्तत्वेनादेशस्यापि सुबन्तत्वात्सुबन्तात्तद्धित इति पक्षे समुदायात् ष्यञ्ठञोः संभवेन पौनःपुन्यं पौनःपुनिक इति रूपसिद्धेः । 'प्रातिपदिकात्तद्धितः' इति पक्षाभ्युपगमेऽपि श्रूयमाणप्रत्ययान्तस्यैव प्रातिपदिकत्वनिषेधात्पुनरित्यस्यैव प्रातिपदिकत्वेनादेशस्यापि प्रातिपदिकत्वात्पौनःपुन्यमित्यादि सिध्यत्येव । [illegible] लुकि द्वित्वं

भीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च । पचति पचति । भुक्त्वा भुक्त्वा ।
सायाम्—वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः । २१४१ परेर्वर्जने

---

भीक्ष्ण्यं तिङन्तेष्विति । आभीक्ष्ण्यं पौनःपुन्यम् । तच्चेह प्रधानभूत-
ाया एव । क्रियाप्राधान्यं चाख्यातेष्वस्तीति 'प्रशंसायां रूपप्' इति सूत्रे भाष्ये
ष्टम् । अव्ययकृत्स्वपि क्त्वातुमुन्नादिषु क्रियाप्राधान्यम्, 'अव्ययकृतो भावे' इत्युक्तेः ।
ा च तिङन्तेषु अव्ययसंज्ञककृदन्तेषु च पौनःपुन्यनिमित्तकद्विर्वचनं नान्यत्रे-
र्थः । तथैवोदाहरति पचति पचति, भुक्त्वा भुक्त्वेति । वीप्सायाा-
मिति । उदाह्रियत इति शेषः । वृक्षं वृक्षमिति । कृत्स्नं वृक्षमित्यर्थः । अत्र
कृततद्वाटिकागतवृक्षकात्स्न्यं गम्यते । जगतीतलस्थितकृत्स्नवृक्षसेचनस्य अश-

---

र्तत इति समुदायस्य सुबन्तत्वाभावात् प्रातिपदिकत्वाभावाच्च ष्यङ्ठञौ न भवतः। न च
र्थवदधातुः–' इत्यादिना समुदायस्य प्रातिपदिकत्वे सोरुत्पत्तौ तस्य लुकि च सुबन्तत्वं
तिपदिकत्वं च संभवत्येवेति वाच्यम्, 'यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति
ासस्यैव' इति नियमेन प्रातिपदिकत्वस्यासंभवेन सुबन्तत्वस्याप्यसम्भात् । न च
ःप्रयोगपक्षे स एव धातुः प्रत्ययश्च द्विः पठ्यते इति समुदायस्यापि पदसंज्ञा प्रवर्तते
यवुनैवोक्तत्वात्पुनः पुनरिति समुदायस्य सुबन्तत्वमस्त्त्येवेति शङ्क्यम्, अन्तरङ्गत्वात्सो-
कि प्रकृतिभागस्य द्विर्वचने सति यस्मात्प्रत्ययो विहितस्तदादि तदन्तमिति विधीय-
ानायाः पदसंज्ञायाः समुदायस्य दुर्लभत्वात् । ततश्चैकपद्याभावे 'पुनःपुनर्जायमाना
राणी' इत्यादाववग्रहोऽपि न सिध्येदिति । आभीक्ष्ण्यमिति । तद्धि क्रियानिष्ठधर्मः ।
न तद्द्योतनार्थं द्वित्वं क्रियाप्रधानानामेव न्याय्यम् । क्रियाप्राधान्यं चाख्यातेऽस्ति,
द्विशेषे च, 'अव्ययकृतो भावे' इति वक्ष्यमाणत्वादिति भावः । केचित्तु क्रियाप्रधा-
नामेव द्वित्वे परिगृहीतसाधनाया एव क्रियाया व्यवहारोपयोगित्वात्तदभिधानाच्च
ातुमात्रस्य द्वित्वं न भवति किंतु तादृशक्रियाभिधायिनः पदस्यैव स्यादिति पदस्याप-
र्णाभावेऽपि न क्षतिरित्याहुः । तच्चिन्त्यम् । उक्तरीत्या नानाकारकविशिष्टक्रिया-
र्पकस्य वाक्यस्यैव द्वित्वापत्तेः । किं च भावार्थकलकारान्तानामव्ययकृतां च भवदुक्त-
त्या द्वित्वं न स्यात् । ननु तत्र नित्यतावगत्यनन्तरं पदान्तरैः साधनाकाङ्क्षा
रिपूर्यत इति भूयते पक्त्वेत्यादिपदानां द्वित्वं स्यादेवेति चेत् तर्हि तत्रैव धातुमात्रस्य
त्वं केन वार्यताम् । किं च तद्वदेव कर्तृकर्मलकारस्थलेऽपि धातुमात्रद्वित्वं दुर्वारमिति
स्येत्यपकर्षगमावश्यकमेवेति दिक् । वीप्सायामिति । व्याप्तुमिच्छा वीप्सा ।
ाप्तिप्रतिपिपादयिषेति यावत् । सा च प्रयोक्तुर्धर्म आबाधवत् । गतगत इत्युक्ते
यस्य चिरगमनादिना पीडितो वाक्यं प्रयुङ्क्ते इति यथा प्रतीयते तथा वृक्षंवृक्षं
ञ्चतीत्यादावपि व्याप्तिं बुबोधयिषोरिदं वाक्यमित्यवगमात् । शाब्दबोधविषयस्तु
ाप्तिरेव । तथा च 'नित्यव्याप्त्योः' इत्येव सूत्रयितुं शक्यम् । व्याप्तिरिह कात्स्न्र्यम्,
त्वाधिकारिकम् । 'सर्वे ब्राह्मणा आमन्त्रिताः' इत्यादौ यथा । 'न हि जगतीतले
द्यमाना ब्राह्मणाः सर्वेऽपि केनचिदामन्त्रयितुं शक्यन्ते' इति स्वग्रामस्थस्वजातीय-

(८-१-५) परि परि वङ्गेभ्यो वृष्टो देवः । वङ्गान्परिहृत्येत्यर्थः । 'परेर्वर्जने वावचनम्' । (वा ४६८३) परि वङ्गेभ्यः । २१४२ उपर्यध्यधसः सामीप्ये । (८-१-७) उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपे देशे इत्यर्थः । अध्यधि

---

क्यत्वात् । सर्वशब्दस्य कात्स्न्यंवाचित्वेऽपि न द्वित्वमित्यनुपदमेव 'यथास्वे-' इत्यत्र वक्ष्यते । वृक्षं वृक्षमित्यत्र कात्स्न्यावगमेऽपि प्रत्येकनिष्ठमेकत्वमेव भासते, न तु बहुत्वम् । अतो न बहुवचनम् । 'एकैकस्य प्राचाम्' इति लिङ्गाच्च । सर्वस्येत्यभावे वृक्षाभ्यामित्यादौ 'स्वादिषु-' इति पदत्वमवलम्ब्य प्रकृतिभागमात्रस्य द्विर्वचनं स्यात् । कृते तु सर्वग्रहणे पदावयवत्वानाक्रान्तस्यैव कृत्स्नावयवोपेतस्य पदस्य द्वित्वमित्यर्थलाभान्न दोषः । 'पदस्य' इति किम् ? वाक्यस्य मा भूत् । परेर्वर्जने । वर्जने वर्तमानस्य परीत्यस्य द्वे स्त इत्यर्थः । परि परि वङ्गेभ्यो वृष्ट इति । पर्जन्य इति शेषः । 'अपपरी वर्जने' इति परिः कर्मप्रवचनीयः 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । परि हरेः संसार इत्यत्र तु, 'परेरसमासे इति वक्तव्यम्' इति वार्तिकाद् न द्विर्वचनम् । उपर्यध्यधसः । उपरि, अधि, अधस् एतेषां द्वे स्तः सामीप्ये गम्य इत्यर्थः । सामीप्यं च उपर्युपरि ग्राममित्यत्र अधोऽधो लोकमित्यत्र च देशतः, अध्यधि सुखमित्यत्र तु कालत इति ज्ञेयम् ।

---

मनुष्यस्य नास्तीति यत्र वाटिकादौ वृक्षसेचनार्थमधिकारस्तद्वाटिकास्थवृक्षाणामेव कात्स्न्यं वृक्षं वृक्षं सिञ्चतीत्यादौ गम्यते इत्यभ्युपेयम् । यत्र तु संकोचे कारणं नास्ति तत्रासंकोच इष्ट एव 'जातोजातो निधनमुपैति' इति यथा । न चैवं वृक्षं वृक्षमित्यादौ बहुवचनप्रसङ्गः, बहूनां भानेऽपि बहुत्वसंख्यायास्तत्राभानात् । प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासत इत्यादि मनोरमायां स्थितम् । वृक्षं वृक्षमिति समुदायस्य तु प्रातिपदिकत्वाभावाद्बहुवचनस्य प्रसङ्ग एव नास्ति । न च 'अर्थवदधातुः-' इत्यनेन प्रातिपदिकत्वं शङ्क्यम्, 'यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति समासस्यैव' इति नियमात् । न चाष्टमिकं द्विर्वचनमादेशरूपमिति संघातो न भवतीत्यपि शङ्क्यम्, द्वे इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते इति प्रागुक्तत्वात् । नन्वेवमपि 'सरित्सरित्' 'योषायोषा' इत्यादौ बहुवचनोत्पत्तिर्दुर्वारैव । सरिदिति स्थानिनः प्रातिपदिकत्वसम्भवेन तदादेशस्यापि सरित्सरिदित्यादेः स्थानिवद्भावेन प्रातिपदिकत्वसम्भवादिति चेत्, अत्राहुः—अन्तरङ्गैकत्वसंख्यावरुद्धो द्विरुक्तार्थः संख्यान्तरनिराकाङ्क्ष एव । न हि वस्तुगत्या बहुत्वमस्तीत्येतावतैव तस्य शाब्दबोध आपादयितुं शक्यते । असत्त्वार्थकेष्वपि तदापत्तेः । न हि शयनबाहुल्याभिप्रायेण 'देवदत्तेन शय्यते' इति भावे कश्चित्प्रयुङ्क्ते । तत्रायोग्यं तदिति चेत् समं प्रकृतेऽपि । अत्र च लिङ्गम् 'एकैकस्य प्राचाम्' इति निर्देश इति । परेर्वर्जने । अत्र वार्तिकं 'परेरसमासे' । नेह—परित्रिगर्तं वृष्टो देवः । 'वेति च वक्तव्यम्' तथा च अप हरेः परि हरेः संसार इति कारकेषूदाहृतम् । परिपरि वङ्गेभ्य इति । 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । उपर्यध्य । सामीप्ये

र्म् । सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधो लोकम् । लोकस्या-
सात्समीपे देशे इत्यर्थः । २१४३ वाक्यादेरामन्त्रितस्यासूयासंमति-
कुत्सनभर्त्सनेषु । (८-१-८) असूयायाम्—सुन्दर सुन्दर वृथा ते
दर्यम् । संमतौ–देव देव वन्द्योऽसि । कोपे–दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि ।
सने–धानुष्क धानुष्क वृथा ते धनुः । भर्त्सने–चोर चोर घातयिष्यामि त्वाम् ।
१४४ एकं बहुव्रीहिवत् । (८-१-९) द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात् ।
सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । इह द्वयोरपि सुपोर्लुकि कृते बहुव्रीहिवद्भा-
देव प्रातिपदिकत्वात्समुदायात्सुप् । एकैकया आहुत्या । इह पूर्वभागे पुंवद्भावाद-

---

क्यादेः । द्वे स्त इति शेषः । यद्यपि कोपाद्भर्त्सनम्, असूयया कुत्सनम्, तथापि
नापि कोपासूये भर्त्सनकुत्सनयोः शिष्यादौ संभवात्पृथग् ग्रहणम् इति भाष्ये
ष्टम् सुन्दरेति । सौन्दर्यमसमानस्येदं वाक्यम् । देवेति । तव वन्दनं संमत–
त्यर्थः । दुर्विनीतेति । क्रोधाविष्टस्य वाक्यम् । ज्ञास्यसीति । दुर्विनयस्य
लमिति शेषः । धानुष्केति । युद्धासमर्थं प्रति निन्देयम् । चोरेति । चोरं
ति अवाच्यवादोऽयम् । एकं बहुव्रीहिवत् । द्विरुक्त इति । द्विर्वचनं प्राप्त
त्यर्थः । एतच्च प्रकरणाल्लभ्यते, 'वीप्सामात्रविषयमिदम्' इति भाष्याच्च । तेनेति ।
हुव्रीहिवत्त्वेन सुब्लोपपुंवद्भावौ सिध्यत इत्यर्थः । तत्र सुब्लोपमुदाहरति एकैक-
मिति । इहेति । एकैकमित्यत्र एकमित्यस्य द्विर्वचने सति, एकमेकमिति स्थिते
सुपो लुकि, समुदायात् सुबित्यन्वयः । ननु 'यत्र संघाते पूर्वो भागः पदं तस्य चेद्भ-
वति तर्हि समासस्यैव' इति नियमेन समुदायस्य प्रातिपदिकत्वाभावात् कथमिह सुपो
लुक्, कथं वा समुदायात् सुबित्यत आह बहुव्रीहिवद्भावादेव प्रातिपदिक-
त्वादिति । एतच्च सुपोर्लुकीत्यत्र समुदायात्सुबित्यत्र च मध्यमणिन्यायेनान्वेति ।
थ पुंवत्त्वेऽप्युदाहरति एकैकया आहुत्येति । एकयेत्यस्य द्विर्वचने सति एकया

---

च्च कालकृतं देशकृतं वा । अध्यधि सुखमिति । कालकृतस्योदाहरणमिदम् । सामीप्य
ति किम्, उपरि चन्द्रमाः । उपरि शिरसो घटं धारयतीत्यत्र तु वस्तुतो विद्यमानमपि
सामीप्यं न विवक्षितम्, किं त्वौत्तराधर्यमेव केवलं विवक्षितमिति द्विर्वचनं न भवति ।
विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणम् । अत्र च 'उपर्युपरिष्टात्' तदाद्याचिख्यासायाम्'
ति सन्नन्तप्रयोगो ज्ञापक इत्याहुः । वाक्यादेः । सुन्दरसुन्दरेत्यादि । 'स्वरित
म्रेडितेऽसूयासंमतिकोपकुत्सनभर्त्सनेषु' 'आम्रेडितं भर्त्सने' इति सूत्राभ्यां यथायथं
प्तः प्लुतो वैकल्पिकत्वान्नेह कृतः । उक्तं हि प्राक् 'सर्वः प्लुतो वैकल्पिकः' इति ।
त्र कोपासूयाभ्यां पृथक्कुत्सनभर्त्सनग्रहणमपार्थकम् । न ह्यसूयां विना कुत्सयते,
वा अकुपितो भर्त्सयत इति चेत् । अत्राहुः—गुरवो हि हितैषित्वादकुपिता अपि
र्त्सनं कुर्वते, विनाप्यसूयां कुत्सां कुर्वन्तीति पृथक्तया निर्देशः सूत्रकारेण कृतः ।
सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः । लालनाश्रयिणो दोषास्ताडनाश्रयिणो
णाः' इति । एकं बहुव्रीहिवत् । द्वे इत्यनुवर्तते । तच्चानुवाद्यसमर्पकम्, तदाह
रुक्त इति । तेनेति । यद्यप्येतौ बहुव्रीहौ विशिष्य न विहितौ, तथापि तत्र

वग्रहे विशेषः । 'न बहुव्रीहौ' (सू २२२) इत्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहु-
व्रीहिलाभार्थम् । तेनातिदिष्टबहुव्रीहौ सर्वनामतास्त्येवेति प्राञ्चः । वस्तुतस्तु भाष्य-
मते प्रत्याख्यातमेतत् । सूत्रमतेऽपि बहुव्रीह्यर्थेऽलौकिके विग्रहे निषेधकम्, न तु
बहुव्रीहावितीहातिदेशशङ्कैव नास्ति । एकैकस्मै देहि । २१४५ आबाधे च ।

---

एकयेति स्थिते बहुव्रीहिवत्त्वेन समुदायस्य प्रातिपदिकत्वात्सुपोर्लुकि, पूर्वखण्डस्य
पुंवत्त्वे कृते, समुदायात्पुनस्तृतीयोत्पत्तौ, एकैकयेति रूपम् । बहुव्रीहित्वाभावे तु इह
समुदायस्य प्रातिपदिकत्वाभावात् सुपोर्लुक् पूर्वखण्डस्य पुंवत्त्वं च न स्यात्, उत्तर-
पदपरकत्वाभावात् समासचरमावयवस्यैव उत्तरपदत्वादिति भावः । एकैकामित्यत्र
उत्तरखण्डस्य 'सर्वनाम्नो वृत्तिमात्रे—' इति पुंवत्त्वं बहुव्रीहिवत्त्वे सत्यपि न प्रवृत्तिमर्हति,
पूर्वस्यैवेदम्, 'भस्त्रैषाद्वा—' इति लिङ्गादित्युक्तत्वादिति बोध्यम् । ननु सुपोर्लुकि पूर्व-
खण्डस्य एकाशब्दस्य पुंवत्त्वे सत्यसति वा वृद्धौ एकैकयेति सिध्यत्येवेत्यत आह इह पूर्व-
भाग इति । अवग्रह इति । समस्तपदस्य द्विधा करणे पूर्वखण्डः अवग्रहः ।
'तस्य पूर्वोऽवग्रहः' इति प्रातिशाख्यम् । एकैकयेत्येक एकया इतीष्यते पूर्वखण्डस्य
पुंवत्त्वम् । बहुव्रीहित्वाभावे तु एकैकयेत्येका एकयेति स्यादिति भावः । तैत्तिरीयास्तु
एकैकयेत्येका एकया इत्येवावगृह्णन्ति । एकं समासवदित्येव सिद्धे बहुव्रीहिग्रहणं
बहुव्रीहौ प्रकृत्या पूर्वपदमिति स्वरार्थम् । ननु बहुव्रीहिवत्त्वे सति 'न बहुव्रीहौ' इति
सर्वनामत्वनिषेधादेकैकस्मै देहीत्यादौ कथं सर्वनामकार्यमित्यत आह न बहुव्रीहा-
वित्यत्रेति । 'विभाषा दिक्समासे बहुव्रीहौ' इत्यतो बहुव्रीहिग्रहणानुवृत्त्यैव सिद्धे
'न बहुव्रीहौ' इत्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम् । अतो बहुव्रीहिवदि-
त्यदितिष्टबहुव्रीहौ सर्वनामत्वनिषेधो नेत्यर्थः । तदाह तेनेति । तदेवं प्राचीनोक्त
परिहारमुक्त्वा सिद्धान्तिमतेनाह वस्तुतस्त्विति । एतदिति । 'न बहुव्रीहौ'
इति सूत्रमित्यर्थः । एवं च बहुव्रीहावपि सर्वनामत्वस्य भाष्यसंमततया बहुव्रीहिवत्त्वा-
तिदेशे सत्यपि सर्वनामत्वं निर्बाधमिति भावः सूत्रमतेऽपीति । उपसर्जनत्वादेव
बहुव्रीहौ सर्वनामत्वनिषेधे सिद्धे 'न बहुव्रीहौ' इति बहुव्रीह्यर्थके अलौकिकविग्रहवाक्ये
एव समासात् प्राक् सर्वनामत्वं निषिध्यत इति प्रागेवोक्तम् । तस्मादिह बहुव्रीह्य-
तिदेशप्रयुक्तसर्वनामकार्याभावशङ्कैव नास्तीत्यर्थः । एकैकस्मै देहीति । इह द्वयोरपि

---

दृष्टावित्येतावतैवातिदिश्येते इति भावः । सुब्लोपपुंवद्भावाविति । पूर्वपदप्रकृति-
स्वरश्च बोध्यः । समुदायात्सुबिति । तच्चैकवचनमेवेति अन्तरङ्गैकत्वसंख्यावरुद्धो
द्विरुक्तार्थः संख्यान्तरे निराकाङ्क्ष इति प्रागेवोक्तत्वात् । पूर्वभाग इति । ननूत्तर-
भागेऽपि । तथाहि ।—द्विधात्र पुंवद्भावः 'सर्वनाम्नो वृत्तिमात्रे—' इति वा 'स्त्रियाः पुंवत्-'
इति वा । तत्राद्यः पूर्वभागस्यैव 'भस्त्रैषा—' इति ज्ञापकादित्युक्तम् । द्वितीयस्तु समाना-
धिकरणे परे विधीयते, न चोत्तरभागस्य समानाधिकरणपरत्वमस्तीति भावः । अवग्रहे
विशेष इति । एकैकयेत्येक एकयेति भवतीत्यर्थः । एकैकस्मै इति । ननु सुब्लोप-
पुंवद्भावाविव बहुव्रीहौ सर्वनामसंज्ञाभावोऽपि दृष्ट इत्ययमपि बहुव्रीहिवद्भावेनातिदिश्य-
ताम् तथा च स्मायादेशोऽत्र दुर्लभ इति चेत् । अत्राहुः—सुब्लोपपुंवद्भावविध-

–१—१०) पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च । गतगतः । विरहात्पीड्य-
नस्येयमुक्तिः । बहुव्रीहिवद्भावात्सुब्लुक् । गतगता । इह पुंवद्भावः । २१४६
धारयवदुत्तरेषु । (८—१—११) इह उत्तरेषु द्विर्वचनेषु कर्मधारयवत्-
यम् । 'प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि' (वा ४६८९) । २१४७ प्रकारे
वचनस्य । (८—१—१२) सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारय-

---

र्लुकि पुनः सर्वादिपठितैकशब्दान्ततया सर्वनामत्वात् स्मैभाव इति भावः ।
बाधे च । आबाधः पीडा । तदाह पीडायामिति । गतगत इति ।
यां विना काल इति शेषः । आबाधं दर्शयितुमाह विरहादिति । स्त्रीवियोगादि-
र्थः बहुव्रीहिवद्भावादिति । गत इत्यस्य द्विर्वचने सति बहुव्रीहिवत्त्वात्
दायस्य प्रातिपदिकत्वेन सुपोर्लुकि समुदायात् सुबुत्पत्तिरित्यर्थः । गतगतेति ।
येति शेषः । इयमपि स्त्रीविरहात् पीड्यमानस्योक्तिः । एकस्या एव गमनकर्त्र्याः द्विः
वनात् समानाधिकरणं स्त्रीलिङ्गमुत्तरपदमिति 'स्त्रियाः पुंवत्–' इति पुंवत्त्वम्, बहु-
हिवत्त्वादुत्तरपदत्वस्यापि सत्त्वात् । तदाह इह पुंवद्भाव इति । कर्मधारय-
दुत्तरेषु । कार्यं स्यादिति शेषः । कर्मधारयवत्त्वस्य फलमाह प्रयोजनमिति ।
ब्लोपादीनां प्रत्येकान्वयाभिप्रायमेकवचनम् । अन्तोदात्तत्वानीति । अनुदात्तं
त्यविकृतमपि भाष्यप्रामाण्यान्नात्र सम्बध्यत इति भावः । प्रकारे गुणवचनस्य ।
कारशब्दः सादृश्ये वर्तते व्याख्यानादित्यभिप्रेत्याह सादृश्ये द्योत्य इति ।
णवचनशब्देन 'आ कडारात्–' इति सूत्रस्थभाष्यपरिगणिताः शब्दा गृह्यन्त इति

---

र्वनामसंज्ञाभावः शास्त्रेण न दृष्टः । किं तु बहुव्रीहेर्गौणत्वात्सर्ववाचकत्वं न संभवतीति
दभावो दृष्ट इति नायमतिदिश्यते । 'न बहुव्रीहौ' इति शास्त्रं त्वलौकिकवाक्ये
षेधकम्, न तु बहुव्रीहावित्युक्तत्वादिति । आबाधे च । इहेति । बहुव्रीहिवद्भावा-
त्यनुषज्यते । तथा च 'स्त्रियाः पुंवत्–' इति प्रवर्तते । न च द्विरुक्तस्य परमुत्तरपदं
ति वाच्यम्, बहुव्रीहिवदित्यतिदेशबलेनैव उत्तरपदत्वस्यापि लाभात् । ननु बहुव्रीहि-
द्भावेनोत्तरपदत्वलाभे सति ननेत्यत्र 'नलोपो नञः' इति कस्मान्न भवति । उच्यते—
नलोपो नञः' इत्यत्र उत्तरपदे इति प्रवर्तते, नञ इति च कार्यिणो निर्देशः, तत्र
ाक्षाच्छिष्टेन कार्यित्वेन नञो निमित्तभावो बाध्यते । यथा मद्रह्लदो भद्रह्लद इति ।
त्र रेफस्य 'अचो रहाभ्याम्–' इति द्वित्वप्रसङ्गे आकरे उक्तं 'नेमौ रहौ कार्यिणौ
ं तु निमित्तमेतौ द्विर्वचनस्य' इति । नन्वेवमपि 'धूर्धूः' 'पन्थाःपन्थाः' इत्यादौ
क्पूरब्धूर्–' इति समासान्तः, स्यादिति चेत् । न, 'समासाच्च तद्विषयात्' इत्यतः
मासादित्यनुवर्तमाने 'समासान्ताः' इति पुनः समासग्रहणं हि समासाधिकारविहितो
ः समासस्तत्परिग्रहार्थम् । तेनातिदेशिके समासे समासान्तानामप्रवृत्तिरिति दिक् ।
र्मधारयवदुत्तरेषु । अधिकारेणैव सिद्धे 'उत्तरेषु' इति वचनं विस्पष्टार्थमिति
त्तिः । प्रकारे गुणवचनस्य । यद्यपि प्रकारशब्दो भेदे सादृश्ये च वर्तते ।
हुभिः प्रकारैर्भुङ्क्ते, बहुभिर्भेदैर्विशेषैरित्यवगमात् । ब्राह्मणप्रकारोऽयं माणवकः,
ह्मणसदृश इत्यवगमाच्च । तथापीह विवक्षितमाह सादृश्य इति । व्याख्यानमेवात्र

वत् । कर्मधारयवदुत्तरेषु–' (सू २१४६) इत्यधिकारात् । तेन पूर्वभागस्य पुंवद्भावः 'समासस्य' (सू ३७३४) इत्यन्तोदात्तत्वं च । पटुपट्वी । पटुपटुः । पटुसदृशः, ईषत्पटुरिति यावत् । गुणोपसर्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह गृह्यन्ते । शुक्लशुक्लं रूपम् । शुक्लशुक्लः पटः । 'आनुपूर्व्ये द्वे वाच्ये'

---

'वोतो गुणवचनात्' इत्यादौ प्रपञ्चितमिदम् । तेनेति । कर्मधारयवत्त्वेनेत्यर्थः । पुंवद्भाव इति । 'पुंवत्कर्मधारय–' इत्यनेनेति शेषः । पटुपट्वीति । पट्वी-शब्दस्य द्विर्वचने कर्मधारयवत्त्वात् 'पुंवत्कर्मधारय–' इति पूर्वखण्डस्य पुंवत्त्वे रूपमिति भावः । यद्यपि बहुव्रीहिवत्त्वेऽपि 'स्त्रियाः पुंवत्–' इति पुंवत्त्वादिदं सिद्धम्, तथापि कारिकेत्यादिकोपधादिष्वपि पुंवत्त्वार्थं कर्मधारयवदिति वचनमिति भावः । पटुपटु-रिति । 'वोतो गुणवचनात्' इति ङीषभावे पुंसि च द्विर्वचने रूपम् । पटुसदृश इति । इत्यर्थं इति शेषः । फलितमाह ईषत्पटुरिति । इह गुणवचनशब्दस्य गुणोपसर्जनद्रव्यवाचित्वमेवेति भ्रमं निरस्यति गुणोपसर्जनेति । शुक्लशुक्लं रूपमिति । शुक्लसदृशमित्यर्थः । ईषच्छुक्लमिति यावत् । एवं शुक्लशुक्लः पट इति बोध्यम् । आनुपूर्व्यं इति । अत्र वार्तिके कर्मधारयवदिति न संबध्यते, तदुदाहरणे

---

शरणम् । पुंवद्भाव इति । 'पुंवत्कर्मधारय–' इति सूत्रात् । तच्च कोपधादिष्वपि कालककालिकेत्यादिषु प्रवर्तते। तेन बहुव्रीहिवद्भावे प्रकृते कर्मधारयवद्भावोक्तिर्व्यर्थेति शङ्काया निरवकाश इति बोध्यम् । पटुपटुरिति । इह द्वित्वेन जातीयरो बाधो नेष्यते पटुजातीय इति वामनः । अन्यथा ब्राह्मणजातीय इत्यादावगुणवचनेऽपि भेदरूपेऽर्थे सावकाशो जातीयर् गुणवचनेषु सादृश्यपरेण द्वित्वेन बाध्येतेति भावः । गुणवचनस्येति किम्, अग्निर्माणवकः, सिंहो माणवकः । यद्यपीहाग्निसिंहशब्दाभ्यां गौण्या वृत्त्या तैक्ष्ण्यक्रौर्यादिगुणो गम्यते, तथापि प्रकारे वर्तमानस्येत्येव सिद्धे गुणवचनग्रहणसाम-र्थ्याद् मुख्यवृत्त्या गुणपराणामेव द्वित्वम्, न त्वन्येषामित्याकरः । 'नवं नवं प्रीतिरहो करोति' इत्यत्र वीप्सायां द्विर्वचनम् । अनेन तु द्विर्वचने सुब्लुक् स्यात् । 'नवनवा वनवायुभिराददे' इत्यत्र त्वनेनैव द्विर्वचनम्, न तु वीप्सायामिति पुंद्भावः । कथं 'भीतभीत इव शीतमयूखः' इति भारविः । इवशब्देन सादृश्यस्योक्तया इह प्रकारे द्वित्वायोगात् । सत्यम्, भीतेभ्यो भीत इति कथंचिद्व्याख्येयम् । तेनातिभीत इति फलितम् । 'आधिक्ये द्वे वाच्ये' इति वार्तिकेन भीतभीतादौ द्वित्वमिति दुर्घटादि भिरुक्तं समाधानं नादर्तव्यम् । तादृशस्य वार्तिकस्याप्रसिद्धत्वात् । अथ कथं 'खिन्नः-खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र । क्षीणःक्षीणः परिलघुपयः स्रोतसां चोपयुज्य' इति मेघदूतः । पदार्थभेदस्याभावेन वीप्सार्थस्यासंभवादिति चेत् । अत्राहुः— एकस्यापि खेदावस्थासु क्षयावस्थासु च भेदं परिकल्प्य वीप्सा बोध्येति । अथ कथं 'मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्' इति मेघदूतः । वीप्सार्थस्यासंभवादनेनैव द्विर्वचने कृते 'मन्दमन्दमुदितः प्रययौ खम्' इतिवत्सुब्लुक् स्यादिति चेत् । सत्यम्, स्वतो मन्दगामिनं त्वां पवनो मन्दं नुदतीति कथंचिद्व्याख्येयम् । सिद्धस्य गतेश्चिन्त-नीयत्वात् । शुक्लशुक्लमिति [illegible] । केवलगुणवाचिन उदाहरणमिति [illegible] रूपमिति ।

वा ४६९२) । मूले मूले स्थूलः । 'संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः' (वा ५०५६) । सर्पः सर्पः, बुध्यस्व बुध्यस्व । सर्पः सर्पः सर्पः बुध्यस्व बुध्यस्व बुध्यस्व । 'क्रियासमभिहारे च' (वा ४६९५) । लुनीहि लुनीहीत्येवायं लुनाति । 'नित्यवीप्सयोः' (सू २१४०) इति सिद्धे भृशार्थे नित्यार्थमिदम् । पौनःपुन्येऽपि लोटा सह समुच्चित्य द्योतकतां लब्धुं वा । 'कर्म-

धारये सुब्लोपादर्शनादित्यभिप्रेत्योदाहरति मूले मूल इति । पूर्वपूर्वो मूलभाग उत्तरोत्तरमूलभागापेक्षया स्थूल इति यावत् । संभ्रमेणेति । वार्तिकमिदम् । संभ्रमो भयादिकृता त्वरा, तेन प्रवृत्तौ गम्यमानायां यथेष्टम् इच्छानुसारेण अनेकधा शब्दः प्रयोक्तव्य इति वक्तव्यमित्यर्थः । अनेकधेत्युक्तेर्द्वे इति निवर्तते । यथेष्टमित्युक्तेरसकृत्त्वेऽप्येकस्य प्रयोगः स्यादिति शङ्कां निरस्यति न्यायसिद्ध इति । यावद्वारं प्रयोगे सति बोद्धा अर्थं प्रत्येति, तावद्वारमेव प्रयोगः । बोधात्मकफलपर्यवसायित्वाच्छब्दप्रयोगस्येत्यर्थः । एतच्च भाष्ये स्पष्टम् । अत्रापि कर्मधारयवत्त्वानतिदेशान्न सुब्लुक्, भाष्ये तथैवोदाहरणात् । क्रियासमभिहारे चेति । वार्तिकमिदम् । द्वे स्त इति शेषः । पौनःपुन्यं भृशत्वं च क्रियासमभिहारः । लोडन्तविषयमेवेदम् । 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः' इति सूत्रभाष्ये क्रियासमभिहारे लोण्मध्यपुरुषैकवचनस्य द्वे भवत इति वक्तव्यमिति पाठमभिप्रेत्योदाहरति लुनीहि लुनीहीत्येवायं लुनातीति । 'लूञ् छेदने' अस्मात् 'क्रियासमभिहारे लोट् लोटो हिस्वौ–' इति लोट् । तस्य हि इत्यादेशः श्नाविकरणः । लुनीहीत्यस्य अनेन द्विर्वचनम् । 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' इत्यनुप्रयोगः । तस्माल्लडादयः । अतिशयेन पुनर्वा लवनं लुनीहीति द्विरुक्तस्यार्थः । एककर्तृकं लवनमनुप्रयोगस्यार्थः । अतिशब्दस्त्वभेदान्वये तात्पर्यं ग्राहयतीत्यादि मूल एव लकारार्थप्रक्रियायां स्फुटीभविष्यति । तथा च अतिशयितमेककर्तृकं लवनमिति फलितोऽर्थः । नित्येति । 'नित्यवीप्सयोः' इति पौनःपुन्ये द्विर्वचने सिद्धेऽपि भृशार्थे द्विर्वचनार्थमिदं वार्तिकमित्यर्थः । नन्वस्य भृशार्थ एव द्विर्वचनफलकत्वे 'भृशे च' इत्येव सिद्धे 'क्रियासमभिहारे' इति व्यर्थमित्यत आह पौनःपुन्येऽपीति । लुनीहिलुनीहीत्यत्र पौनःपुन्ये लोटो द्विर्वचनस्य च समुच्चयार्थमिति यावत् । अन्यथा लोटैव पौनःपुन्यस्य द्योतितत्वादत्र नित्यवीप्सयोर्द्विचनस्य प्रवृत्तिर्न स्यादित्यर्थः । एवं च 'धातोरेकाचः–' इति पौनःपुन्ये

आनुपूर्व्ये इति । वीप्साभावादयमारम्भः । मूले मूल इति । अग्रे अग्रे सूक्ष्मा इत्यप्युदाहर्तव्यम् । एकस्य वस्तुनो वेणुदण्डादेरेकमेव मुख्यं मूलमग्रं च । इतरेषां भागानामापेक्षिकोऽग्रमूलव्यपदेशः । स्थौल्यसौक्ष्म्ये अपि नैकरूपे, किं तर्हि यथामूलमुपचीयते स्थौल्यम्, यथा अग्रं सौक्ष्म्यं तथा नेतरे भागा इति वीप्साया असंभवः । 'मूले मूले पथि विटपिनाम्' इत्यत्र तु वीप्सायां द्विर्वचनम् । एतच्च हरदत्तग्रन्थे स्पष्टम् । न्यायसिद्ध इति । यावद्भिः शब्दैः संबोध्योऽर्थमवगच्छति तावतां प्रयोक्तव्यत्वादिति भावः । पौनःपुन्य इति । पुनःपुनर्भवितरि वर्तमानात्पुनःपुनःशब्दाद् भावे प्रत्ययः । लोटा सह समुच्चित्येति । नन्वत्र लोटा सह समुच्चित्य यथा

व्यतिहारे सर्वनाम्नो द्वे वाच्ये, समासवच्च बहुलम्' (वा ४७००)। बहुलग्रहणादन्यपरयोर्न समासवत्। इतरशब्दस्य तु नित्यम्। 'असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः' (वा ४७००) अन्योन्यं विप्रा नमन्ति। अन्योन्यौ। अन्योन्यान्। अन्योन्येन कृतम्। अन्योन्यस्मै दत्तमित्यादि। 'अन्योन्येषां पुष्करैरामृशन्तः' इति माघः। एवं परस्परम्। अत्र कस्कादित्वाद्विसर्गस्य सः।

---

यङन्ते पापच्यते च इत्यादौ न द्विर्वचनमित्यन्यत्र विस्तरः। कर्मव्यतिहार इति। क्रियाविनिमयः कर्मव्यतिहारः, तस्मिन् गम्ये सर्वनाम्नो द्वे स्तः। ते च द्विरुक्ते पदे बहुलं समासवदित्यर्थः। अत्र 'बहुलम्' इति समासवदित्यत्रैवान्वेति। द्विर्वचनं तु नित्यमेव। अन्यपरयोरिति। अन्यशब्दपरशब्दयोरेव बहुलं समासवत्त्वम्। इतरशब्दस्य तु नित्यमेवेत्यर्थः। अत एव अन्यशब्दस्य समासवत्त्वरहितमेव इतरशब्दस्य तत्सहितमेवोदाहरणं भाष्ये दृश्यते। तथा 'परस्परोपपदाच्च' इति वार्तिकप्रयोगात् परशब्दस्यापि समासवत्त्वाभावो गम्यत इति भावः। एवं च क्रियासमभिहारे अन्यशब्दस्य परशब्दस्य च नित्यं द्विर्वचनम्। द्विरुक्तयोस्तु समसत्त्वं बहुलम्। इतरशब्दस्य तु तदुभयमपि नित्यम्। एतत्त्रयव्यतिरिक्तसर्वनामशब्दस्य तु नेदं द्वित्वम्, बहुलग्रहणादिति स्थितिः। असमासवद्भाव इति। इदमन्यपरशब्दयोरेव। इतरशब्दस्य समासवत्त्वस्यैवोक्तत्वात्। सुपः सुरिति। सुबिति प्रत्याहारः। सप्तानामपि विभक्तीनां पूर्वपदस्थानां प्रथमैकवचनं सु इत्यादेशो वाच्य इत्यर्थः। इदं द्वित्वादिविधानं प्रथमैकवचनमात्रविषयमिति केचित्। तदेतद्भाष्यविरुद्धम्, भाष्ये द्वितीयादिविभक्तेरुदाहृतत्वादित्यभिप्रेत्य द्वितीयादिविभक्तीरुदाहरति अन्योन्यं विप्रा नमन्तीत्यादि। इह अन्यम् अन्यौ इत्यादीनां द्वित्वे पूर्ववत्सुपः सुः। प्रथमैकवचनस्यैवेदं द्वित्वादीत्येतद् न कविसंमतमित्याह अन्योन्येषामित्यादि माघ इत्यन्तम्। परस्परमित्यत्र विसर्गस्य सत्त्वापवादमुपध्मानीयमाशङ्क्य आह

---

द्विर्वचनं भवति, तथा क्रियासमभिहारे यङि यङा सह समुच्चित्य द्विर्वचनं स्यात् पापच्यते पापच्यते, बोभूयते बोभूयते इति अत्राहुः—लोट् क्रियासमभिहारं व्यभिचरति। समुच्चयेऽपि जायमानत्वात्। ततश्च लोड्द्विर्वचनयोरेव तद्द्योतकत्वम्, न त्वेकैकस्येति युक्तं लोडन्तस्य द्विर्वचनम्। यङ् तु क्रियासमभिहारं न व्यभिचरतीति द्विर्वचनं विनैव तस्य द्योतकत्वम्। तेन तदन्तस्य न द्विर्वचनमिति। कर्मव्यतिहार इति। क्रियाविनिमय इत्यर्थः। द्वे इति। नित्यमेवेदं द्वित्वम्, बाहुलकं तु समासवद्भावस्यैव। सुपः सुर्वक्तव्य इति। अत्र केश्चिदुक्तं द्वितीयादीनामेवेदं स्वादेशविधानम्। अत एवोत्तरदलेऽपि द्वितीयाद्य एव न तु प्रथमा, तत्राप्येकवचनमेव न तु वचनान्तरमिति। तदपाणिनीयम्, भाष्यादावनुक्तत्वात्। तदेतद्ध्वनयन् वचनान्तरमुदाहरति अन्योन्यावन्योन्यानिति। माघ इति। स च भाष्यानुगुण एवेति भावः। एतेनार्वाचीनमतं कवयोऽपि नाद्रियन्त इत्युक्तं भवति। भारविश्चाह 'क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैः' इति। अत्रादृष्टाः परस्परे यैरिति विग्रहः। यदि तु द्वितीयादीनामेव स्वादेशविधानं न तु प्रथमायास्तर्हि

इतरेतरम् । इतरेतरेणेत्यादि । 'स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः' (वा ४७०१) । अन्योन्याम्, अन्योन्यम् । परस्पराम्, परस्परम् । इतरेतराम्, इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः । अत्र केचित्—आमादेशो द्वितीयाया एव, भाष्यादौ तथैवोदाहृतत्वात् । तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः । अन्ये तूदाहरणस्य दिङ्मात्रत्वात्सर्वविभक्तीनामामादेशमाहुः ।

---

एका दित्वावित्यादि । इतरेतरमिति । इतर इतरावित्यादीनां द्वित्वे समासत्वात् सुपोर्लुकि समुदायात् पुनः सुबुत्पत्तिरिति भावः । स्त्रीनपुंसकयोरिति । स्त्रीनपुंसकयोर्विद्यमानानाम् अन्यपरेतरपदानां कर्मव्यतिहारे द्वित्वे उत्तरपदस्थविभक्तेः आम् इत्यादेशो बहुलं ववतव्य इत्यर्थः । अन्योन्यामित्यादि । अन्योन्याम् अन्योन्यं वा इमे ब्राह्मण्यौ कुले वा भोजयतः, परस्परां परस्परं वा इमे ब्राह्मण्यौ कुले वा भोजयतः, इतरेतराम् इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयत इत्यन्वयः । तत्र अन्यामित्यस्य द्वित्वे दलद्वये टाबभाव इति वक्ष्यमाणतया पुंवत्त्वात् टापो निवृत्तौ समासवत्त्वाभावात्सुपोरलुकि पूर्वपदस्थविभक्तेः सुभावे रुत्वे 'अतो रोरप्लुतात्—' इत्युत्वे आद्गुणे उत्तरपदस्थविभक्तेरनेन आम्भावे अन्योन्यामिति रूपम् । आम्भावविरहे तु पुंवत्त्वाट्टापो निवृत्तौ पूर्वपदस्थविभक्तेः सुभावे पुँलिङ्गवदेव अन्योन्यमिति रूपम् । इयं ब्राह्मणी अन्यां ब्राह्मणीं भोजयति, अन्या त्विमामित्येवं विनिमयेन ब्राह्मण्यौ भोजयत इत्यर्थः । इदं कुलं कर्तृ अन्यत्कुलं भोजयति, अन्यत्कुलं कर्तृ इदं कुलमित्येवं विनिमयेन कुले भोजयत इत्यर्थः । अत्रान्यच्छब्दस्य नपुंसकलिङ्गस्य द्वित्वे पूर्वपदस्थाया विभक्तेः सुभावे उत्तरपदस्थविभक्तेः आम्भावे अन्योन्यामिति रूपम् । आम्भावविरहे तु 'क्लीबे चादड्विरहः स्वामोः' इति वक्ष्यमाणतया पुंवत्त्वाद् अद्डादेशाभावे अन्योन्यमिति पुंवदेव रूपमिति बोध्यम् । एवं स्त्रीत्वे परामिति पदस्य द्वित्वे दलद्वयेऽपि पुंवत्त्वात् टापो निवृत्तौ पूर्वोत्तरपदस्थविभक्त्योः क्रमेण सुभावे आम्भावे च परस्परामिति रूपम् । आम्भावविरहे तु द्वित्वे पुंवत्त्वाट्टापो निवृत्तौ पूर्वपदस्थविभक्तेः सुभावे परस्परमिति रूपम् । नपुंसकत्वे तु परमित्यस्य द्वित्वे पूर्वपदस्थविभक्तेः सुभावे उत्तरपदस्थविभक्तेराम्भावे परस्परामिति रूपम् । आमभावे तु द्वित्वे पूर्वपदस्थविभक्तेः सुभावे परस्परम् इति रूपम् । इतरामित्यस्य द्वित्वे पुंवत्त्वाट्टापो निवृत्तौ उत्तरपदस्थविभक्तेराम्भावे समासवत्त्वात् पूर्वपदस्थविभक्तेर्लुकि इतरेतरामिति रूपम् । आम्भाववविरहे तु इतरेतरमिति रूपम् । नपुंसकस्य तु इतरच्छब्दस्य द्वित्वे पुंवत्त्वाददड्डादेशविरहे पूर्वपदस्थविभक्तेर्लुकि उत्तरपदस्थविभक्तेराम्भावतदभावाभ्यां रूपद्वयम् । अत्र भाष्यादौ द्वितीयाविभक्त्यन्तस्योदाहरणादितरविभक्तिषु आम्भावो न भवतीति प्राचीनमतमाह अत्र केचिदिति । तेनेति । द्वितीयेतरविभक्तिषु आम्भावविरहेणेत्यर्थः । पुंवदेवेति । आम्भावविरहे सति बहुलग्रहणात् पुंवत्त्वे टाबभावे प्रथमतृतीयादिविभक्तिषु पुंवदेव रूपम् । नपुंसकत्वे प्रथमतृतीयादिविभक्तिषु अम्भावविरहात्

---

प्रयोगो न सिध्येदिति दिक् । अन्योन्यमिति । न चात्र आमभावेऽपि टाप् स्यादिति शङ्क्यम्, 'बहुलग्रहणाट्टाबभावः' इत्यनुपदमेव वक्ष्यमाणत्वात् । स्त्रीनपुंस-

"दलद्वये टाबभावः क्लीबे चाद्ड्विरहः स्वमोः । समासे सोरलुक्चेति सिद्धं बाहुलकात्त्रयम्" । तथा हि—अन्योन्यं परस्परमित्यत्र दलद्वयेऽपि टाप्प्राप्तः । न च 'सर्वनाम्नो वृत्तिमात्रे–' (वा) इति पुंवद्भावः, अन्यपरयोरसमासवद्भावात् । न च द्विर्वचनमेव वृत्तिः । 'यां यां प्रियः प्रैक्षत कातराक्षी सा सा' इत्यादावतिप्रसङ्गात् । अन्योन्यमितरेतरम् इत्यत्र च 'अद्ड्डतरादिभ्यः–' (सू ३१५) इत्यद्ड् प्राप्तः । 'अन्योन्यसंसक्तमहस्त्रियामम्' 'अन्योन्याश्रयः' 'परस्पराक्षिसादृश्यम्' 'अपरस्परैः'

---

प्रथमैकवचनस्य इद पुंवदेव रूपमित्यर्थः । सिद्धान्तमाह अन्ये त्विति । दिङ्मात्रत्वादिति । दिक्प्रदर्शनमात्रत्वादित्यर्थः । उपलक्षणत्वादिति यावत् । अथात्र बहुलग्रहणानुवृत्तेः प्रोजनकथनपरप्राचीनश्लोकमाह दलद्वय इति । स्त्रीलिङ्गेष्वन्यपरेतरशब्देषु कर्मव्यतिहारे द्वित्वे सति पूर्वोत्तरखण्डयोः पुंवत्त्वाट्टाब्निवृत्तिरित्यर्थः । यद्यपि इतरेतरमित्यत्र समासवत्त्वात् 'सर्वनाम्नो वृत्तिमात्रे–' इति पुंवत्त्वादेव पूर्वखण्डे टाबभावः सिद्धः, तथाप्युत्तरखण्डे टाबभावार्थं बाहुलकाश्रयणमिति भावः । क्लीब । इति । अन्योन्यमित्यादौ अद्ड्डादेशविरह इत्यर्थः । समासे सोरिति । कृतद्वित्वस्य अन्येन समासे पूर्वखण्डस्थस्येत्यर्थः । तथा हीति । यथेदं स्पष्टं भवति तथा उदाहृत्य प्रदर्श्यत इत्यर्थः । ननु पूर्वदले 'सर्वनाम्नो वृत्तिमात्रे–' इति पुंवत्त्वेनैव टाब्निवृत्तेः सिद्धत्वात् तद्विषये बहुलग्रहणं नादर्तव्यमित्यशङ्क्य निराकरोति न चेति । 'सर्वनाम्नो वृत्तिमात्रे–' इति पुंवत्त्वस्यात्र न प्रसक्तिरित्यर्थः । कुत इत्यत आह अन्यपरयोरिति । 'समासवच्च बहुलम्' इति समासवत्त्वम् इतरशब्दमात्रविषयम्, न त्वन्यपरशब्दविषयमिति प्रागुक्तमित्यर्थः । ननु मास्तु समासवत्त्वम्, तथापि 'सर्वनाम्नो वृत्तिमात्रे–' इति पुंवत्त्वं दुर्वारम् । द्विर्वचनस्य वृत्तित्वादित्याशङ्क्य निराकरोति नच द्विर्वचनमेव वृत्तिरिति । 'कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः' इति परिगणनादिति भावः । द्विर्वचनस्य वृत्त्यन्तर्भावे बाधकमाह यां यामिति । द्विर्वचनस्य वृत्त्यन्तर्भावे 'यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव' इत्यत्र श्लोके यां यामित्यत्र सासेत्यत्र च 'सर्वनाम्नो वृत्तिमात्रे–' इति पूर्वखण्डस्य पुंवत्त्वं स्यादित्यर्थः । क्लीबे चाद्ड्विरह इत्यस्योदाहरति अन्योन्यमिति । ननु समासे सोरलुक् त्रेति कथम्, अन्यपरशब्दयोः समासवत्त्वाभावादित्याशङ्क्य कृतद्वित्वस्यान्येन समासे पूर्वखण्डस्थस्य सोरलुगिति तदर्थमभिप्रेत्य तथैवोदाहरति अन्योन्यसंसक्तमिति । अन्योऽन्येन संसक्तमिति तृतीयासमासः । अहश्च त्रियामा चेति समाहारद्वन्द्वः । अहश्च रात्रिश्च अन्योन्येन संयुक्तमित्यर्थः । अन्योन्याश्रय इति । अन्योन्यस्य आश्रय इति षष्ठीसमासः । परस्पराक्षिसादृश्यमिति । अक्ष्णा सादृश्यमक्षिसादृश्यम् । परस्परस्याक्षिसादृश्यमिति विग्रहः । अपरस्परैरिति । न परस्परे अपरस्परे तैरिति विग्रहे एषु कृतद्वित्वेषु समासावयवेषु पूर्वखण्डस्थस्य सुबादेशस्य

---

कयोस्तृतीयादिषु पुंवदिति प्राचो ग्रन्थं परिष्कुर्वन्नाह अत्र केचिदिति । वस्तुस्थितिमाह अन्ये त्विति । अतिप्रसङ्गादिति । तथा च एकशेषप्रतिबन्धाद् द्विर्वचनस्य वृत्तित्वमाश्रित्य तद्बलेन पुंवद्भावो न शङ्क्यो लक्ष्यविरोधात् । [illegible]

[आ]दौ सोर्लुक्च प्राप्तः । सर्वं बाहुलकबलेन समाधेयम् । प्रकृतवार्तिकभाष्यो-[दा]हरणम्, 'स्त्रियाम्' (सू ४५३) इति सूत्रे 'अन्योन्यसंश्रयं त्वेतद्' इति [भाष्]यं चात्र प्रमाणमिति । २१४८ अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् । [(८]—१—१३) प्रियप्रियेण ददाति । प्रियेण वा । सुखसुखेन ददाति । सुखेन [वा] । द्विर्वचने कर्मधारयवद्भावात्सुपो लुकि तदेव वचनम् । अतिप्रियमपि [अ]नायासेन ददातीत्यर्थः । २१४९ यथास्वे यथायथम् । (८—१—१४) [यथ]ास्वम् इति वीप्सायामव्ययीभावः । योऽयमात्मा यच्चात्मीयं तद्यथास्वम् । [तस्]मिन्यथाशब्दस्य द्वे क्लीबत्वं च निपात्यते । यथायथं ज्ञाता । यथास्वभाव-

[ल]ुक् प्राप्त इत्यर्थः । सुभावविधानं तु अन्योन्यमित्यादावसमासे चरितार्थमिति भावः । [सर्वं] बहुलग्रहणादेतत् समाधेयमित्यत्र किं प्रमाणमित्यत आह प्रकृतवार्तिकेति । [स्त्र]ीनपुंसकयोः-' इति प्रकृतवार्तिके अन्योन्यमिमे ब्राह्मण्याविति, इतरेतरमिमे कुले इति [उद]ाहरणाद् 'दलद्वये टाबभावः क्लीबे चाद्ड्विरहः स्वमोः' इति विज्ञायते । [स्त्रि]याम्' इति सूत्रे अन्योऽन्यसंश्रयं त्वेतदिति भाष्यप्रयोगात् समासे सोरलुगिति [विज्ञ]ायत इत्यर्थः । अकृच्छ्रे । कृच्छ्रं कष्टम् । अकृच्छ्रम् अनायासः । तस्मिन्वर्तमानयोः [प्रि]य-सुख इत्यनयोः द्वे वा स्तः । कर्मधारयवद्भावादिति 'कर्मधारयवदुत्तरेषु' [इत्]यधिकारादिति भावः । 'समासवच्च बहुलम्' इत्यतः समासवदित्यनुवृत्तिस्तु न [श]ङ्क्या, तस्य वार्तिकस्थत्वात् । एवं च प्रियेणेत्यस्य सुखेनेत्यस्य च द्वित्वे सति कर्म-[ध]ारयवत्त्वात् सुपोस्तृतीयैकवचनयोर्लुकि पुनः समुदायात् तृतीयैकवचनमिति फलितम् । [य]थास्वे थाययथम् । वीप्सायामिति । कार्त्स्न्ये न संबन्धो वीप्सेत्युक्तम् । [य]थाशब्दार्थगतकार्त्स्न्ये द्योत्ये यथाशब्दस्य स्वशब्देनाव्ययीभाव इत्यर्थः । कृत्स्नश्चा-[सौ] स्वश्चेत्यस्वपदविग्रहः, नित्यसमासत्वात् । स्वशब्दस्तु आत्मात्मीयज्ञातिधनवाची । [इ]ह तु आत्मात्मीयवाच्येव गृह्यते, नतु ज्ञातिधनवाची, व्याख्यानादित्यभिप्रेत्य विग्रह-[व]ाक्यस्य फलितमर्थमाह द्वे इति । स्त इति शेषः । निपातनादिति भावः । न च [नि]त्यवीप्सयोः' इत्येव वीप्सया द्वित्वमिह सिद्धमिति शङ्क्यम्, द्वित्वविषयस्य शब्दस्य [ल]क्षणया कत्स्न्यविशिष्टे वृत्तावेव वीप्साया द्विर्वचनविधानात् । अन्यथा सर्वो घट [इ]त्यादौ सर्वशब्दस्यापि द्वित्वापत्तेरिति भावः । क्लीबत्वमिति । यथायथा इति [स]मुदायस्येति शेषः । अन्यथा अव्ययत्वादलिङ्गत्वं स्यादिति भावः । एवं च कृतद्वित्वस्य [न]पुंसकह्रस्वत्वं च फलितम् । यथायथं ज्ञातेति । अत्र ज्ञातेति तृन्नन्तम् । तद्योगे [न] लोक-' इति षष्ठीनिषेधात्कर्मणि द्वितीया । तृजन्तत्वे तु यथायथस्य ज्ञातेत्येव ।

[यं] द्विजानीयाद्यां यां मन्येत सा भवेत्' इति 'अकथितं-' सूत्रस्थ 'यांयाम्' इति भाष्य [प्र]योगविरोधाच्चेति भावः । नव्यास्तु-'यांयां प्रियः प्रैक्षत-' इत्यादिमाघप्रयोगे 'सासा' [इ]ति द्विर्वचनमयुक्तम् । द्विरुक्तार्थस्य सेत्यनेनैव परामष्टुं शक्यत्वात् । अत एव [भ]ाष्ये 'यां यां मन्येत सा भवेत्' इत्येवोक्तमित्याहुः । सोर्लुक् च प्राप्त इति । [स]ुपः स्वादेशविधानस्यान्योन्यं परस्परमित्यत्र केवले चरितार्थत्वादिति भावः । यथायथमिति । [आत्]मात्मीयस्थाद्विना ... आत्मात्मीययोरपि स्वशब्दवाच्यत्वात् ।

मित्यर्थः । यथात्मीयमिति वा । २१५० द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । (८—१—१५) द्विशब्दस्य द्विर्वचनं पूर्वपदस्य अम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु । तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् । इतरे विषयभूताः । द्वन्द्वं मन्त्रयते । रहस्यमित्यर्थः । मर्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति । माता पुत्रेण मिथुनं गच्छति, पौत्रेण प्रपौत्रेणापीति मर्यादार्थः । व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ता द्विवर्गसंबन्धेन पृथगवस्थिताः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । द्वन्द्वं सङ्कर्षणवासुदेवौ । अभिव्यक्तौ साहचर्येणेत्यर्थः । योगविभागादन्यत्रापि द्वन्द्वम् इष्यते । इति द्विरुक्तप्रकरणम् ।

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पूर्वार्धं समाप्तम् ।

---

द्वन्द्वं रहस्य । पूर्वपदस्येति । द्वौ द्वाविति द्वित्वे कर्मधारयवत्वात् सुब्लुकि समुदायात् पुनः सुपि पूर्वपदावयवस्य इकारस्य अम् इति मकारान्तादेश इत्यर्थः । अत्वमिति । उत्तरपदस्य अकारोऽन्तादेश इत्यर्थः । न च त्यदाद्यत्वमुत्तरपदान्तस्य सिद्धमिति वाच्यम्, संज्ञात्वात्तदप्राप्तेरित्याहुः । नपुंसकत्वं चेति । चकारः अनुक्तसमुच्चये । कृतद्वित्वस्य नपुंसकत्वं द्विवचनाभावश्चेत्यर्थः । आचतुरं हीति । आङभिविधौ । 'आङ्मर्यादा-' इत्यव्ययीभावः । शरत्प्रभृतित्वात् टच् । चतुर्थान्तमिति फलितोऽर्थः । पशवः स्वप्रभृति चतुर्थपर्यन्तं द्वन्द्वं मिथुनीयन्ति इत्यन्वयः । मिथुनशब्देन मैथुनं विवक्षितम् । मिथुनस्य कर्म मैथुनम् । तदिच्छतीत्यर्थे 'सुप आत्मनः-' इति क्यच् । फलितमर्थमाह मिथुनं गच्छतीति । मिथुनत्वं प्राप्नोतीत्यर्थः । मिथुनायन्ते इति क्यङ्पाठस्तु प्रामादिकः । मर्यादीकृत्येति । स्वप्रभृति चतुरोऽभिव्याप्येत्यर्थः । अत्यन्तसहचरितत्वेन लोकविज्ञानमभिव्यक्तिरिति भाष्याल्लभ्यते । तदाह साहचर्येणेत्यर्थ इति । अत्र द्वन्द्वं न्यञ्चीत्यत्र वीप्सायां

---

'न लोका-' इत्यनेन कृद्योगषष्ठीनिषेधो ज्ञातेत्यस्य तृन्नन्तत्वात् । 'योयम् आत्मा' इत्यर्थे विद्यमानयथायथशब्दस्यार्थमाह यथास्वभावमिति । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । पूर्वपदस्येति । द्विम् द्विम् इति स्थिते कर्मधारयवद्भावात्सुब्लुकि कृते पूर्वपदावयवस्येकारस्येत्यर्थः । अत्वमुत्तरपदस्येति । उत्तरपदावयवस्येकारस्येत्यर्थः । नपुंसकत्वं चेति । चकारादेकवद्भाव इत्यपि बोध्यम् । तेन 'अतोऽम्' इत्यमादेशे द्वन्द्वमिति सिध्यति । रहस्यं-द्वन्द्वशब्दवाच्यमिति । द्वाभ्यां निर्वृत्ते रहस्ये योगरूढिरेवेत्यर्थः । द्वन्द्वं मन्त्रयते इति । द्वौ द्वौ भूत्वा मन्त्रयेते इत्यर्थः । एवं हि तद् रहस्यं भवति । आचतुरमिति । 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति टच् । चतुःशब्दोऽत्र चतुर्णां पूरणे द्रष्टव्यः । आ चतुर्थादित्यर्थः । द्वन्द्वं यज्ञपात्राणीति । 'स्फ्यश्च कपालानि च' इत्यादीनि पात्राणि द्वन्द्वं प्रयुनक्ति । आसाहचर्येत्यर्थः । अभिव्यक्तौ साहचर्येणेत्यर्थ इति । अत्र द्वन्द्वमित्यत्र स्त्री-

[ति]म् । अन्यत्र स्वार्थे इति बोध्यम् । अन्यत्रापीति । द्वन्द्वानि सहते इत्यादा-[व]र्थः । शीतमुष्णं च एकं द्वन्द्वम् । सुखं दुःखं चापरम् । क्षुत्तृष्णा चान्यत् । इव [स्वा]र्थे द्वन्द्वः । अम्भावादि पूर्ववत् । 'चार्थे द्वन्द्वः' इति निपातनादन्यत्रापीति सिद्धम् ।

इति द्विरुक्तप्रकरणम् ।

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकारादिबहुगुणविराजमान-प्रौढापरिमितमहाध्वरस्य श्रीशाहजी शरभतुक्कोजी भोसलचोलमहीमहेन्द्रामात्य-धुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्याध्वर्युणा पञ्चपुरुषीपोष्येण बाल्य एव तद्दयानिर्वर्तितापरिमिताग्निविजृम्भितवाजपेयसर्वपृष्ठाप्तो-र्यामप्रमुखमखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन पदवाक्यप्रमाण-पारावारपारीणाग्रजन्मविश्वेश्वरवाजपेययाजितो लब्धविद्या-वैशद्येन अध्वरमीमांसाकुतूहलवृत्तिनिर्माणप्रकटितसर्वतन्त्र-स्वातन्त्र्येण बौधायनापस्तम्बसत्याषाढभारद्वाजकात्या-यनाश्वलायनद्राह्यायणादिकल्पसूत्रतद्भाष्यपारीण-महादेववाजपेययाजिसुतेन अन्नपूर्णाम्बागर्भ-जातेन वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बाल-मनोरमायां पूर्वार्धं सम्पूर्णम् ।

——:o:——

द्विर्वचनम् । एकवद्भावादिकं तु पूर्ववत् । अन्यत्रापीति । 'द्वन्द्वं युद्धं प्रवर्तते' । इह वीप्सायां द्विर्वचनम् । द्वयोर्द्वयोर्युद्धमित्यर्थः । 'द्वन्द्वानि सहते' शीतमुष्णमेकं द्वन्द्वं सुखदुःखे चापरं क्षुत्तृष्णे चापरम् । इह स्वार्थे द्विर्वचनमेकवद्भावादि पूर्ववत् । बहुत्वं त्वेकशेषवशात् । इति तत्त्वबोधिनीव्याख्यायां द्विरुक्तप्रक्रियाप्रकरणम् ।
सिद्धान्तकौमुदीव्याख्या या कृता तत्त्वबोधिनी । समाप्तं तत्र पूर्वार्धं तेन तुष्यतु शंकरः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवामनेन्द्रस्वामिचरणारविन्दसेवकज्ञानेन्द्रसरस्वतीकृतौ सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां पूर्वार्धं संपूर्णम् ॥

——:o:——

## अकाराद्यनुक्रमेण

# कौमुद्यव्ययीभावप्रभृतिपूर्वार्धपर्यन्तसूत्रसूचिका


| पृष्ठम् | सूत्रम् |
|---|---|
| | **अ** |
| ४८६ | अंशं हारी ५ । २ । ६९ |
| ४८२ | अकृच्छ्रे प्रियसु ८ । १ । १३ |
| १६ | अक्षशलाकासं० २ । १ । १० |
| १९१ | अक्ष्णोऽदर्शनात् ५ । ४ । ७६ |
| ४०४ | अगारान्ताट्ठन् ४ । ४ । ७० |
| १७४ | अग्नेः स्तुत्स्तोम० ८ । ३ । ८२ |
| ३०५ | अग्नेर्ढक् ४ । २ । ३३ |
| ९४ | अग्राख्यायामुर० ५ । ४ । ९३ |
| १५० | अग्रान्तशुद्धशु० ५ । ४ । १४५ |
| १४० | अङ्गुलेर्दारुणि ५ । ४ ११४ |
| ५४४ | अङ्गुल्यादिभ्यष्ठक् ५ । ३ । १०८ |
| ३५४ | अ च ४ । ३ । ३१ |
| १९१ | अचतुरविचतु० ५ । ४ । ७७ |
| ३१२ | अचित्तहस्तिधे० ४ । २ । ४७ |
| ३६९ | अचित्तादेशका ४ । ३ । ९६ |
| ८० | अच्छगत्यर्थवदेषु १ । ४ ६९ |
| १९० | अच्प्रत्यन्ववपूर्वा० ५ । ३ । ७५ |
| ५२३ | अजादी गुणवच० ५ । ३ । ५८ |
| १६० | अजाद्यदन्तम् २ । २ । ३३ |
| ४१५ | अजाविभ्यां थ्यन् ५ । १ । ८ |
| ५३७ | अजिनान्तस्योत्त० ५ । ३ । ८२ |
| ५३० | अज्ञाते ५ । ३ । ७३ |
| ५१६ | अञ्चेर्लुक् ५ । ३ । ३० |
| १४० | अञ्नासिकायाः ५ । ४ । ११८ |
| ३५४ | अणञौ च ४ । ३ । ३३ |

| पृष्ठम् | सूत्रम् |
|---|---|
| २८५ | अणो द्व्यचः ४ । १ । १५६ |
| ३९४ | अण्कुटिलिकायाः ४ । ४ । १८ |
| ४९८ | अण्च ५ । २ । १०३ |
| २९२ | अणिञोरनार्षयो० ४ । १ ७८ |
| ३६४ | अणृगयनादिभ्यः ४ । ३ । ७३ |
| ४०० | अण्महिष्यादिभ्यः ४ । ४ । ४८ |
| २६० | अत इञ् ४ । १ । ९५ |
| ५०२ | अत इनिठनौ ५ । २ । ११५ |
| २९० | अतश्च ४ । १ । १७५ |
| ५६२ | अतिग्रहाव्यथन० ५ । ४ । ४६ |
| ५५७ | अतिथेर्ञ्यः ५ । ४ । २६ |
| ५२० | अतिशायने तम० ५ । ३ । ५५ |
| ९५ | अतेः शुनः ५ । ४ । ९६ |
| ३१ | अत्यन्तसंयोगे च २ । १ । २९ |
| २७७ | अत्रिभृगुकुत्सव २ । ४ । ६५ |
| ३२२ | अदूरभवश्च ४ । २ । ७० |
| ८० | अदोऽनुपदेशे १ । ४ । ७० |
| ४६८ | अद्यश्वीनावष्टब्धे ५ । २ । १३ |
| ४८७ | अधिकम् ५ । २ । ७३ |
| ४४ | अधिकरणवाचिना २ । २ । १३ |
| ५१८ | अधिकरणविचाले ५ । ३ । ४३ |
| १७१ | अधिकरणैतावत्त्वे २ । ४ । १५ |
| ३६७ | अधिकृत्य कृते ४ । ३ । ८७ |
| ५१३ | अधुना ५ । ३ । १७ |
| १६३ | अध्ययनतो २ । ४ । ५ |
| ४२६ | अध्यर्धपूर्वद्विगो ५ । १ । २८ |

पृष्ठम्

अध्यायानुवाकयोः ५।२।६०
अध्यायिन्यदेशका ४।४।७१
अध्यायेष्वेवर्षेः ४।३।६९
अध्वनो यत्खौ ५।२।१६
अध्वर्युक्रतुरनपुं० २।४।६
अन् ६।४।१६७
अनत्यन्तगतौ ५।४।४
अनत्याधाने १।४।७५
अनद्यतने र्हिल् ५।३।२१
अनन्तावसथेतिह ५।४।२३
अनश्च ५।४।१०८
अनुकम्पायाम् ५।३।७६
अनुकरणं १।४।६२
अनुकाभिका ५।२।७४
अनुगवमायामे ५।४।८३
अनुगादिनष्ठक् ५।४।१३
अनुग्वलङ्गामी ५।२।१५
अनुदात्तादेरञ् ४।२।४४
अनुदात्तादेश्च १।३।१४०
अनुपदसर्वान्ना ५।२।९
अनुपद्यन्वेष्टा ५।२।९०
अनुप्रवचनादि ५।१।१११
अनुब्राह्मणादिनिः ४।२।६२
अनुर्यत्समया २।१।१५
अनुवादे चरणानाम् २।४।३
अनुशतिकादी ७।३।२०
अनुष्यानन्तर्ये ४।१।१०४
अनेकमन्यपदार्थे २।२।२४
अनोश्मायस्सरसां ५।४।९४
अन्तः पूर्वपदाट्ठञ् ४।३।६०
अन्तरपरिग्रहे १।४।६५
अन्तर्बहिर्भ्यां च ५।४।११७
अन्तिकबाढयो ५।३।६३
अन्नाण्णः ४।४।८५

पृष्ठम् सूत्रम्

३४ अन्नेन व्यञ्जनम् २।१।३४
२२ अन्यपदार्थे च २।१।२१
१९४ अन्ववतप्ताद्रह ५।४।८१
२५१ अपत्यं पौत्र० ४।१।१६२
१०४ अपथं नपुंसकम् २।४।३०
३४२ अपदातौ ४।२।१३५
१७ अपपरिबहिरञ्चवः २।१।१२
३९५ अपमित्ययाचि० ४।४।२१
२३२ अपरस्पराः ६।१।१४४
२३३ अपस्करो ६।१।१४९
५६२ अपादाने चाहीं ५।४।४५
२८१ अपूर्वपदादन्यत ४।१।१४०
३७ अपेतापोढमुक्त० २।१।३८
३०४ अपोनप्त्रपान्नप्तृ० ४।२।२७
११९ अप्पूरणीप्रमा० ५।४।११६
३६८ अभिजनश्च ४।३।९०
५४६ अभिजिद्विदभृ ५।३।११८
३६७ अभिनिष्क्रामति ४।३।८६
५६६ अभिविधौ ५।४।५३
४६९ अभ्यमित्राच्छ ५।२।१७
३५३ अमावास्याया ३।३।३०
२०१ अमूर्धमस्तकात् ६।३।१२
८६ अमैवाव्ययेन २।२।२०
४८७ अयःशूलदण्डा ५।२।७६
३४१ अरण्यान्मनुष्ये ४।२।१२९
५६५ अरुर्मनश्चक्षुश्चेतो ५।४।५१
२२० अर्थे विभाषा ६।३।१००
४९ अर्धं नपुंसकम् २।२।२
१०४ अर्धर्चाः पुंसि २।४।३१
९६ अर्धाच्च ५।४।१००
८२४ अर्धात्परिमाणस्य ७।३।२६
३४५ अर्धाद्यत ४।३।४
५०६ अर्शआदिभ्यो ५।२।१२७
१९७ अलुगुत्तरपदे ६।३।१

| पृष्ठम् | सूत्रम् |
|---|---|
| १४८ | अल्पाख्यायाम् ५ । ४ । १३६ |
| १६१ | अल्पाच्तरम् २ । २ । ३४ |
| ५३७ | अल्पे ५ । ३ । ८५ |
| ४०० | अवक्रयः ४ । ४ । ५० |
| ५४० | अवक्षेपणे ५ । ३ । ९५ |
| ३५१ | अवयवादृतोः ७ । ३ । ११ |
| ३८१ | अवयवे च । ४ । ३ । १३५ |
| ४४४ | अवयसि ठंश्च ५ । १ । ८४ |
| १९४ | अवसमन्धेभ्य ५ । ४ । ७९ |
| ४७३ | अवात्कुटारच्च ५ । २ । ३० |
| ४६६ | अवारपारात्यन्ता ५ । २ । ११ |
| ३४० | अवृद्धादपि ४ । २ । १२५ |
| २६८ | अवृद्धाभ्यो ४ । १ । ११३ |
| ५५७ | अवेः कः ५ । ४ । २८ |
| ५६७ | अव्यक्तानुकरणा ५ । ४ । ५७ |
| ५ | अव्ययं विभक्ति २ । १ । ६ |
| ५३० | अव्ययसर्वनाम्ना ५ । ३ । ७१ |
| ३३५ | अव्ययात्त्यप् ४ । २ । १०४ |
| ५ | अव्ययीभावः २ । १ । ५ |
| ९ | अव्ययीभावश्च २ । ४ । १८ |
| ३६० | अव्ययीभावाच्च ४ । ३ । ५९ |
| १३ | अव्ययीभावे चा ६ । ३ । ८१ |
| २३ | अव्ययीभावे श ५ । ४ । १०७ |
| ३६२ | अशब्दे यत्खा ४ । ३ । ६४ |
| १०९ | अशाला च २ । ४ । २४ |
| २३६ | अश्वपत्यादि । १ । ८४ |
| ४६९ | अश्वस्यैकाहगमः ५ । २ । १९ |
| २६७ | अश्वादिभ्य. ४ । १ । ११० |
| ५५० | अषडक्षाशितङ्ग्वल ५ । ४ । ७ |
| २१९ | अषष्ठ्यतृतीयास्थ ६ । ३ । ९९ |
| २२६ | अष्टनः संज्ञायाम् ६ । ३ । १२५ |
| ३८५ | असंज्ञायां तिल ४ । ३ । १४९ |
| ४२२ | असमासे ५ । १ । २० |
| ३४६ | अ सांप्रतिके ४ । ३ । ९ |

| पृष्ठम् | सूत्रम् |
|---|---|
| ८० | अस्तं च १ । ४ । ६८ |
| ५१५ | अस्ताति च ५ । ३ । ४० |
| ४०७ | अस्तिनास्तिदिष्टं ४ । ४ । ६० |
| १०५ | अस्मदो १ । २ । ५९ |
| ५०४ | अस्मायामे ५ । २ । १२१ |
| ५६४ | ऽस्य च्वौ ७ । ४ । ३२ |
| ९० | अहः सर्वैकदेशसं ५ । ४ । ८७ |
| ५०८ | अहंशुभमोर्युस् ५ । २ । १४० |
| ९० | अहृष्टखोरेव ६ । ४ । १४ |
| ९२ | अह्नोऽदन्तात् ८ । ४ । ७ |
| ९१ | अह्नोऽह्न एतेभ्यः ५ । ४ । ८८ |

**आ**

| पृष्ठम् | सूत्रम् |
|---|---|
| ३९२ | आकर्षात्ष्ठल् ४ । ४ । ९ |
| ४८५ | आकर्षादिभ्यः ५ । २ । ६४ |
| ४५२ | आकालिक ५ । १ । ११४ |
| ३९९ | आक्रन्दाट्ठञ्च ४ । ४ । ३८ |
| ४६८ | आगवीनः ५ । २ । १४ |
| २७८ | आगस्त्यकौण्डि० २ । ४ । ७० |
| ३०२ | आग्रहायण्यश्व ४ । २ । २२ |
| १७ | आङ्मर्यादाभि २ । १ । १३ |
| ४५४ | आ च त्वात् ५ । १ । १२० |
| १९९ | आज्ञायिनि च ६ । ३ । ५ |
| ४३५ | आढकाचित ५ । १ । ५३ |
| १९९ | आत्मनश्च ६ । ३ । ६ |
| ४१६ | आत्मन्विश्व ५ । १ । ९ |
| " | आत्माध्वानौ ६ । ४ । १६९ |
| ३८० | आथर्वणिक ४ । ३ । १३३ |
| ७८ | आदरानादर १ । ४ । ६३ |
| १७२ | आनङृतो ६ । ३ । २५ |
| ९७ | आन्महतः ६ । ३ । ४६ |
| २४३ | आपत्यस्य ६ । ४ । १५१ |
| १५३ | आपोऽन्यतर ७ । ४ । १५ |
| ४६५ | आप्रपदं प्राप्नोति ५ । २ । ८ |

| सूत्रम् | पृष्ठम् | सूत्रम् |
|---|---|---|
| आबाधे च ८ । १ । १० | ४९१ | इन्द्रियमिन्द्रलिङ्ग ५ । २ । ९३ |
| आयुधजीविभ्यः ४ । ३ । ९१ | ५४० | इवे प्रतिकृतौ ५ । ३ । ९६ |
| आयुधजीविसं ५ । ३ । ११४ | २१३ | इष्टकेषीकामालानां ६ । ३ । ६५ |
| आयुधाच्छ च ४ । ४ । १४ | ४९० | इष्टादिभ्यश्च ५ । २ । ८८ |
| आरगुदीचाम् ४ । १ । १३० | ५२७ | इष्ठस्य यिट् च ६ । ४ । १५९ |
| अर्हादिगोपुच्छ ५ । १ । १९ | ३०१ | इसुसुक्तान्तात्कः ७ । ३ । ५१ |
| आलजाटचौ ५ । २ । १२५ | | **ई** |
| आवसथात्ष्ठल् ४ । ४ । ७४ | १७४ | ईदग्नेः सोमवरुण ६ । ३ । २७ |
| आश्चर्यमनित्ये ६ । १ । १४७ | १५३ | ईयसश्च ५ । ४ । १५६ |
| आश्वयुज्या ४ । ३ । ४५ | ७४ | ईषदकृता २ । २ । ७ |
| आसन्दीवदष्ठी ८ । २ । १२ | २२० | ईषदर्थे ६ । ३ । १०५ |
| आस्पदं प्रतिष्ठा ६ । १ । १४६ | ५२८ | ईषदसमाप्तौ कल्पप् ५ । ३ । ६७ |
| आहि च दूरे ५ । ३ । ३७ | | **उ** |
| **इ** | ४१३ | उगवादिभ्यो यत् ५ । १ । २ |
| इकः काशे ६ । ३ । १२३ | २०७ | उगितश्च ६ । ३ । ४५ |
| इको वहेऽपीलोः ६ । ३ । १२१ | ३९७ | उञ्छति ४ । ४ । ३२ |
| इको ह्रस्वोऽङ्यो० ६ । ३ । ६१ | ४८८ | उत्क उन्मनाः ५ । २ । ८० |
| इगन्ताच्च लघुपू ५ । १ । १३१ | ३३० | उत्करादिभ्यः ४ । २ । ९० |
| इच्कर्मव्यतिहारे ५ । ४ । १२७ | ९४ | उत्तमैकाभ्यां ५ । ४ । ९० |
| इञः प्राचाम् २ । ४ । ६० | ४४३ | उत्तरपथेनाहृतं ५ । १ । ७७ |
| इञश्च ४ । २ । ११२ | ३५१ | उत्तरपदस्य ७ । ३ । १० |
| इतराभ्योऽपि दृ० । ५ । ३ । १४ | ९५ | उत्तरमृगपूर्वाच्च ५ । ४ । ९८ |
| इतश्चानिञः ४ । १ । १२२ | ५१७ | उत्तराच्च ५ । ३ । ३८ |
| इदङ्किमोरीश्की ६ । ३ । ९० | ,, | उत्तराधरदक्षिणा ५ । ३ । ३४ |
| इदम इश् ५ । ३ । ३ | २४० | उत्सादिभ्योऽञ् ४ । १ । ८६ |
| इदमस्थमुः ५ । ३ । २४ | २०९ | उदकस्योदः ६ । ३ । ५७ |
| इदमो र्हिल् ५ । ३ । १६ | ३२३ | उदक्च विपाशः ४ । २ । ७४ |
| इदमो हः ५ । ३ । ११ | ९४४ | उदन्वानुदधौ च ८ । २ । १३ |
| इद्गोण्याः १ । २ । ५० | ४८५ | उदराट्ठगाद्यूने ५ । २ । ६७ |
| इद्वृद्धौ ६ । ३ । २८ | ३०१ | उदश्वितोऽन्य ४ । २ । १९ |
| इनः स्त्रियाम् ५ । ४ । १५२ | २८६ | उदीचां वृद्धा ४ । १ । १५७ |
| इनच्पिटच्चिकचि च ५ । २ । ३३ | २८४ | उदीचामिञ् ४ । १ । १५३ |
| इनण्यनपत्ये ६ । ४ । १६४ | ३३७ | उदीच्यग्रामाच्च ४ । २ । १०९ |
| इनित्रकट्यचश्च ४ । २ । ५१ | १५१ | उद्विभ्यां काकु० ५ । ४ । १४८ |

| पृष्ठम् | सूत्रम् |
|---|---|
| २७७ | उपकादिभ्योऽन्य २ । ४ । ६९ |
| ३५७ | उपजानूपकर्णो ४ । ३ । ४० |
| ३७५ | उपज्ञाते ४ । ३ । ११५ |
| १०८ | उपज्ञोपक्रमं तदा २ । ४ । २१ |
| ८४ | उपपदमतिङ् २ । २ । १९ |
| १४९ | उपमानाच्च ५ । ४ । १३७ |
| ९५ | उपमानादप्राणिषु ५ । ४ । ९७ |
| ६२ | उपमानानि सा० २ । १ । ५५ |
| ६३ | उपमितं व्या० २ । १ । ५६ |
| ५७४ | उपर्यध्यधसः ८ । १ । ७ |
| ५१४ | उपर्युपरिष्टात् ५ । ३ । ३१ |
| २२६ | उपसर्गस्य घ० ६ । ३ । १२२ |
| १४१ | उपसर्गाच्च ५ । ४ । ११९ |
| १९६ | उपसर्गादध्वनः ५ । ४ । ८५ |
| १४१ | उपसर्गादनोत्परः ८ । ४ । २८ |
| ६ | उपसर्जनं २ । २ । ३० |
| ८१ | उपाजेऽन्वाजे १ । ४ । ३० |
| ४७४ | उपाधिभ्यां ५ । २ । ३४ |
| ३५७ | उप्ते च ४ । ३ । ४४ |
| ४७९ | उभादुदात्तो ५ । २ । ४४ |
| ३८६ | उमोर्णयोर्वा ४ । ३ । १५८ |
| १५१ | उरः प्रभृतिभ्यः ५ । ४ । १५१ |
| ४१० | उरसोऽण्च ४ । ४ । ९४ |
| ३७५ | उरसो यच्च ४ । ३ । ११४ |
| १७६ | उषासोषसः ६ । ३ । ३१ |
| ३८६ | उष्ट्राद्वुञ् ४ । ३ । १५७ |
| | **ऊ** |
| १९० | ऊदनोर्देशे ६ । ३ । ९७ |
| ५०५ | ऊर्णाया युस् ५ । २ । १२३ |
| १४६ | ऊर्ध्वाद्विभाषा ५ । ४ । १३० |
| ७७ | ऊर्यादिच्विडा १ । ४ । ६१ |
| ४९९ | ऊषसुषिमुष्क ५ । २ । १०७ |
| | **ऋ** |
| १८८ | ऋक्पूरब्धूः ५ । ४ । ७४ |
| २०९ | ऋचः शे ६ । ३ । ५५ |
| ३६५ | ऋतष्ठञ् ४ । ३ । ७८ |
| ४०० | ऋतोऽञ् ४ । ४ । ४९ |
| ४५० | ऋतोरण् ५ । १ । १०५ |
| २०४ | ऋतो विद्यायोनि ६ । ३ । २३ |
| ४१९ | ऋषभोपानहो ५ । १ । १४ |
| २६९ | ऋष्यन्धकवृ० ४ । १ । ११४ |
| | **ए** |
| ५०३ | एकगोपूर्वा ५ । २ । ११८ |
| २११ | एक तद्धिते ६ । ३ । ६२ |
| ४०६ | एक धुराल्लुक्च ४ । ४ । ७९ |
| ५७५ | एकं बहुव्रीहिवत् ८ । १ । ९ |
| ६ | एकविभक्ति १ । २ । ४४ |
| ५४४ | एकशालाया ५ । ३ । १०९ |
| ५५४ | एकस्य सकृच्च ५ । ४ । १९ |
| २०९ | एकहलादौ ६ । ३ । ५९ |
| ५४० | एकाच्च प्राचाम् ५ । ३ । ९४ |
| ५२० | एकादाकिनिच्चास ५ । ३ । ५२ |
| १०१ | एकादिश्चैकस्य ६ । ३ । ७६ |
| ५१८ | एकाद्धो ध्यमु ५ । ३ । ४४ |
| २५४ | एको गोत्रे ४ । १ । ९३ |
| ३३८ | एङ् प्राचां १ । १ । ७५ |
| ३८६ | एण्या ढञ् ४ । ३ । १५९ |
| ५१२ | एतदस्त्रतसोस्त्र २ । ४ । ३३ |
| ५०९ | एतदोऽन् ५ । ३ । ५ |
| २१९ | एति संज्ञायाम् ८ । ३ । ९९ |
| ५०९ | एतेतौ रथोः ५ । ३ । ४ |
| ५१८ | एधाच्च ५ । ३ । ४६ |
| ५१७ | एनबन्यतरस्यां ५ । ३ । ४५ |
| | **ऐ** |
| ४५२ | ऐकागारिकट् ५ । १ । ११३ |
| [illegible] | ऐषमोह्यः ४ । २ । १०५ |

| सूत्रम् |
|---|
| **औ** |
| ओजः सहोऽम्भसा ४ । ४ । २७ |
| ओजःसहोऽम्भः ६ । ३ । ३ |
| ओरञ् ४ । २ । ७१ |
| ओरञ् ४ । ३ । १३९ |
| ओर्गुणः ६ । ४ । १४६ |
| ओर्देश ठञ् ४ । २ । ११९ |
| ओषधेरजातौ ५ । ४ । ३७ |
| **औ** |
| औक्षमनपत्ये ६ । ४ । १७३ |
| **क** |
| कंशम्यां ५ । २ । १३८ |
| कंसाट्टिठन् । ५ । १ । २५ |
| कंसीयपरश ४ । ३ १६८ |
| ककुदस्याव ५ । ४ । १४६ |
| कच्छाग्निवक्त्र ४ । २ । १२६ |
| कच्छादिभ्यश्च ४ । २ । १३३ |
| कठचरका ४ । ३ । १०७ |
| कठिनान्तप्रस्ता ४ । ४ । ७२ |
| कडंकरदक्षि ५ । १ । ६९ |
| कडाराः २ । २ । ३८ |
| कणेमनसी १ । ४ । ६६ |
| कण्वादिभ्यो ४ । २ । १११ |
| कतरकतमौ २ । १ । ६३ |
| कत्त्र्यादिभ्यो ४ । २ । ९५ |
| कथादिभ्यः ४ । ४ । १०२ |
| कन्थापलदन ४ । २ । १४२ |
| कन्थायाष्ठक् ४ । २ । १०२ |
| कन्यायाः ४ । १ । ११६ |
| कपिज्ञात्योर्ढक् ५ । १ । १२७ |
| कपिबोधादाङ्गिरसे ४ । १ । १०७ |
| कम्बलाच्च ५ । १ । ३ |
| कम्बोजाल्लुक् ४ । १ । १७५ |
| कर्कलोहितादी ५ । ३ । ११० |

| पृष्ठम् | सूत्रम् |
|---|---|
| ३६२ | कर्णललाटात्क ४ । ३ । ६५ |
| २२२ | कर्णे लक्षणस्या ६ । ३ । ११५ |
| ४६ | कर्तरि च २ । २ । १६ |
| ३३ | कर्तृकरणे कृता २ । १ । ३२ |
| ४५० | कर्मण उकञ् ५ । १ । १०३ |
| ४७५ | कर्मणि घटोऽठच् ५ । २ । ३५ |
| ४४ | कर्मणि च २ । २ । १४ |
| ५७७ | कर्मधारयवदुत्तरेषु ८ । १ । ११ |
| ३७४ | कर्मन्दकृशाश्वा ४ । ३ । १११ |
| ४५० | कर्मवेषाद्यत् ५ । १ । १०० |
| ४०२ | कर्माध्ययने वृत्तम् ४ । ४ । ६३ |
| ३७४ | कलापिनोऽण् ४ । ३ । १०८ |
| ३७२ | कलापिवैशम्पाय ४ । ३ । १०४ |
| ३५८ | कलाप्यश्वत्थयव ४ । ३ । ४८ |
| २९८ | कलेर्ढक् ४ । २ । ८ |
| २७२ | कल्याण्यादीना ४ । १ । १२६ |
| २२० | कवं चोष्णे ६ । ३ । १०७ |
| ५३० | कस्य च दः ५ । ३ । ७२ |
| ३०३ | कस्येत् ४ । २ । २५ |
| ५०१ | काण्डाण्डादीर ५ । २ । १११ |
| २२० | का पथ्यक्षयोः ६ । ३ । १०४ |
| ३३३ | कापिश्याः ष्फक् ४ । २ । ९९ |
| २०१ | कारनाम्नि च प्राचां ६ । ३ । १० |
| २३४ | कारस्करो वृक्षः ६ । १ । १५६ |
| २१३ | कारे सत्यागदस्य ६ । ३ । ७० |
| ४०२ | कार्मस्ताच्छील्ये ६ । ४ । १७२ |
| ४८९ | कालप्रयोजनाद्रोगे ५ । २ । ८१ |
| ३० | कालाः २ । १ । २८ |
| ५२ | कालाः परिमाणिना २ । २ । ५ |
| ५५९ | कालाच्च ५ । ४ । ३३ |
| ३४६ | कालाट्ठञ् ४ । ३ । ११ |
| ४४४ | कालात् ५ । १ । ७८ |
| ३५७ | कालात्साधुपुष्प्यत् ४ । ३ । ४३ |
| ४५१ | कालाद्यत् ५ । १ । १०७ |

| पृष्ठम् | सूत्रम् |
|---|---|
| ३०६ | कालेभ्यो भववत् ४ । २ । ३४ |
| ३२६ | कालोपसर्जने च १ । २ । ५७ |
| ३७२ | काश्यपकौशिका ४ । ३ । १०३ |
| ३३९ | काश्यादिभ्यः ४ । २ । ११६ |
| ५३८ | कासूगोणीभ्यां ष्टरच् ५ । ३ । ९० |
| २३४ | कास्तीराजस्तु ६ । १ । १५५ |
| ५३८ | कियत्तदो निर्धारणे ५ । ३ । ९२ |
| ५०९ | किंसर्वनामबहुभ्यो ५ । ३ । २ |
| ६८ | किं क्षेपे २ । [illegible] । ६४ |
| २३७ | किति च ७ । २ । ११८ |
| १९६ | किमः क्षेपे ५ । ४ । ७० |
| ४७८ | किमः संख्यापरि ५ । २ । ४१ |
| ५१५ | किमश्च ५ । ३ । २५ |
| ४७७ | किमिदंभ्यां वो घः ५ । २ । ४० |
| ५२२ | किमेत्तिङव्ययघा ५ । ४ । ११ |
| ५११ | किमोऽत् ५ । ३ । १२ |
| ४०१ | किसरादिभ्यःष्ठन् ४ । ४ । ५३ |
| ७७ | कुगतिप्रादयः २ । २ । १८ |
| ५३७ | कुटीशमीशुण्डा ५ । ३ । ८८ |
| ५१० | कु तिहोः ७ । २ । १०४ |
| ५३७ | कुत्वा डुपच् ५ । ३ । ८९ |
| ६१ | कुत्सितानि कुत्सनैः २ । १ । ५३ |
| ५३२ | कुत्सिते ५ । ३ । ७४ |
| २३० | कुमति च ८ । ४ । १३ |
| ९७ | कुमहद्भ्यामन्य ५ । ४ । १०५ |
| ७२ | कुमारश्रमणादिभिः २ । १ । ७० |
| ३२८ | कुमुदनडवेतसे ४ । २ । ८७ |
| १४९ | कुम्भपदीषु च ५ । ४ । १३९ |
| २८८ | कुर्वादिभ्यो ण्यः ४ । १ । १७० |
| २८४ | कुर्वादिभ्यो ण्यः ४ । १ । १५१ |
| ३३ | कुलकुक्षिग्रीवाभ्यः ४ । २ । ९६ |
| २७३ | कुलटाया वा ४ । १ । १२७ |
| २८१ | कुलात्खः ४ । १ । १३९ |
| १७५ | कुलालादिभ्यो ४ । ३ । ११८ |

| पृष्ठम् | सूत्रम् |
|---|---|
| ४३६ | कुलिजाल्लुक्खौ च ५ । १ । ५५ |
| ३९१ | कुलत्थकोपधादण् ४ । ४ । ४ |
| ४८९ | कुल्माषादञ् ५ । २ । ८३ |
| ५४२ | कुशाग्राच्छः ५ । ३ । १०५ |
| ३९७ | कुसीददशैकादशा ४ । ४ । ३१ |
| २३२ | कुस्तुम्बुरूणि ६ । १ । १४३ |
| ३४४ | कृकणापर्णाद्भार ४ । २ । १४५ |
| ५६८ | कृञो द्वितीयतृतीय ५ । ४ । ५८ |
| ३५६ | कृतलब्धक्रीत ४ । ३ । ३८ |
| ३७५ | कृते ग्रन्थे ४ । ३ । ११६ |
| ७१ | कृत्यतुल्याख्या २ । १ । ६८ |
| ३४ | कृत्यैरधिकार्थवचने २ । १ । ३३ |
| ५४ | कृत्यैर्ऋणे २ । १ । ४३ |
| ५६३ | कृभ्वस्तियोगे ५ । ४ । ५० |
| २७५ | केकयमित्रयुप्रलया ७ । ३ । २ |
| १२० | केऽणः ७ । ४ । १३ |
| ३१० | केदाराद्यञ्च ४ । २ । ४० |
| ५०० | केशाद्वोऽन्यतर ५ । २ । १०९ |
| ३१२ | केशाश्वाभ्यां यञ् ४ । २ । ४८ |
| २०० | कोः कत्तत्पुरुषे ६ । ३ । १०१ |
| ३२४ | कोपधाच्च ४ । २ । ७९ |
| ३८२ | कोपधाच्च ४ । ३ । १३७ |
| ३४२ | कोपधादण् ४ । २ । १३२ |
| ३५७ | कोशाड्ढञ् ४ । ३ । ४२ |
| ३८० | कौपिञ्जल ४ । ३ । १३२ |
| ३०० | कौमारापूर्ववचने ४ । २ । १३ |
| २८५ | कौसल्यकार्मा ४ । १ । १५५ |
| ४४ | क्तेन च पूजायाम् २ । २ । १२ |
| ६६ | क्तेन नञ्विशिष्टे २ । १ । ६० |
| ५५ | क्तेनाहोरात्रावयवा २ । १ । ४५ |
| ८८ | क्त्वा च २ । २ । २२ |
| १२७ | क्यङ्मानिनोश्च ६ । ३ । ३६ |
| ५६४ | क्यच्व्योश्च ६ । ४ । १५२ |
| ३६३ | क्यु[illegible] |

| पृष्ठम् | सूत्रम् |
|---|---|
| ..५ | क्रतूक्थादिसूत्रान्ता ४ । २ । ६० |
| ..३ | क्रमादिभ्यो वुन् ४ । २ । ६१ |
| ..८६ | क्रीतवत्परिमाणात् ४ । ३ । १५६ |
| ..३४ | क्रीड्यादिभ्यश्च ४ । १ । ८० |
| ..११ | क्वाति ७ । २ । १०५ |
| ..८१ | क्षत्राद्धः ४ । १ । १३८ |
| ..२ | क्षीराड्ढञ् ४ । २ । २० |
| ..६६ | क्षुद्रजन्तवः २ । ४ । ८ |
| ..३४ | क्षुद्राभ्यो वा ४ । १ । १३१ |
| ..३६ | क्षुद्राभ्रमरवटर ४ । ३ । ११९ |
| ..९३ | क्षुभ्नादिषु च ८ । ४ । ३९ |
| ..९१ | क्षेत्रियच्पर ५ । २ । ९२ |
| ..५५ | क्षेपे २ । १ । ४७ |

ख

| पृष्ठम् | सूत्रम् |
|---|---|
| १०६ | खः सर्वधुरात् ४ । ४ । ७८ |
| १९ | खट्वा क्षेपे २ । १ । २६ |
| ३११ | खण्डिकादि ४ । २ । ४५ |
| ३१२ | खलगोरथात् ४ । २ । ५० |
| ४१५ | खलयवमाष ५ । १ । ७ |
| ४२९ | खार्या ईकन् ५ । १ । ३३ |
| ९६ | खार्याः प्राचाम् ५ । ४ । १०१ |

ग

| पृष्ठम् | सूत्रम् |
|---|---|
| १४७ | गन्धस्येदुत्पूति ५ । ४ । १३५ |
| ३६० | गम्भीराञ्ञ्यः ४ । ३ । ५८ |
| २६९ | गर्गादिभ्यो ४ । १ । १०५ |
| ३४२ | गर्त्तोत्तरपदा ४ । २ । १३७ |
| १६७ | गवाश्वप्रभृ २ । ४ । ११ |
| २०० | गवियुधिभ्यां ८ । ३ । ९५ |
| ३४२ | गहादिभ्यश्च ४ । २ । १३८ |
| ५०० | गाण्डचजगात्सं ५ । २ । ११० |
| ३१८ | गाथिविदथिके ६ । ४ । १६५ |
| २६ | गिरेश्च सेन० ५ । ४ । ११२ |
| ४११ | गुडादिभ्यष्ठञ् ४ । ४ । १०३ |
| ४५७ | गुणवचन ५ । १ । १२४ |

| पृष्ठम् | सूत्रम् |
|---|---|
| २७५ | गृष्ट्यादिभ्यश्च ४ । १ । १३६ |
| ४०८ | गृहपतिना ४ । ४ । ९० |
| ३७० | गोत्रक्षत्रियाख्ये ४ । ३ । ९९ |
| ४६२ | गोत्रचरणाच्छ्ला ५ । १ । १३४ |
| ३७८ | गोत्रचरणाद्वुञ् ४ । ३ । १२६ |
| २८२ | गोत्रस्त्रियाः ४ । १ । १४७ |
| ३६६ | गोत्रादङ्कवत् ४ । ३ । ८० |
| २५८ | गोत्राद्यून्यस्त्रि ४ । १ । ९४ |
| २९३ | गोत्रावयवात् ४ । १ । ७९ |
| २६२ | गोत्रे कुञ्जादि ४ । १ । ९८ |
| २४३ | गोत्रेऽलुगचि ४ । १ । ८९ |
| ३०९ | गोत्रोक्षोष्ट्रोर ४ । २ । ३९ |
| ४११ | गोद्व्यचोऽसंख्या ५ । १ । ३९ |
| २७४ | गोधाया ढ्रक् ४ । १ । १२९ |
| ३८६ | गोपयसोर्यत् ४ । ३ । १६० |
| ३९१ | गोपुच्छाट्ठञ् ४ । ४ । ६ |
| ३४२ | गोयवाग्वोश्च ४ । २ । १३६ |
| ५९ | गोरतद्धितलुकि ५ । ४ । ९२ |
| ३८४ | गोश्च पुरीषे ४ । ३ । १४५ |
| ४८५ | गोषदादिभ्यो ५ । २ । ६२ |
| ४६९ | गोष्ठात्खञ्भूत ५ । २ । १८ |
| २३२ | गोष्पदं सेवि ६ । १ । १४५ |
| ६ | गोस्त्रियोरुप १ । २ । ४८ |
| २१५ | ग्रन्थान्ताधिके ६ । ३ । ७९ |
| ९५ | ग्रामकौटाभ्यां ५ । ४ । ९५ |
| ३४५ | ग्रामजनपदैक ४ । ३ । ७ |
| ३१० | ग्रामजनबन्धु ४ । २ । ४३ |
| ३६२ | ग्रामात्पर्यनु ४ । ३ । ६१ |
| ३३३ | ग्रामाद्यखञौ ४ । २ । ९४ |
| १८२ | ग्राम्यपशुसङ्घे १ । २ । ७३ |
| ३६० | ग्रीवाभ्योऽण्च ४ । ३ । ५७ |
| ३५८ | ग्रीष्मवसन्तादन्य ४ । ३ । ४६ |
| !! | ग्रीष्मावरसमाद्वुञ् ४ । ३ । ४९ |

| पृष्ठम् | सूत्रम् |
|---|---|
| | **घ** |
| २०२ | घकालतनेषु ६ । ३ । १७ |
| ३१४ | घञः सास्यां क्रिया ४ । २ । ५८ |
| ५३३ | घनिलचौ च ५ । ३ । ७९ |
| २०६ | घरूपकल्प ६ । ३ । ४३ |
| | **ङ** |
| २११ | ङ्यापोः संज्ञाछन्द ६ । ३ । ६३ |
| | **च** |
| २७३ | चटकाया ऐरक् ४ । १ । १२८ |
| ३५ | चतुर्थी तदर्था २ । १ । ३६ |
| ७३ | चतुष्पादो गर्भि २ । १ । ७१ |
| २७५ | चतुष्पाद्भ्यो ४ । १ । १३५ |
| २१७ | चरणे ब्रह्मचा ६ । ३ । ८६ |
| ३११ | चरणेभ्यो धर्मे ४ । २ । ४६ |
| ३९१ | चरति ४ । ४ । ८ |
| ४१९ | चर्मणोऽञ् ५ । १ । १५ |
| १५८ | चार्थे द्वन्द्वः २ । २ । २९ |
| २२६ | चितेः कपि ६ । ३ । १२७ |
| ४४७ | चित्तवति ५ । १ । ८९ |
| ३९५ | चूर्णादिनिः ४ । ४ । २३ |
| ५६४ | च्वौ च ७ । ४ । २६ |
| | **छ** |
| ३७४ | छगलिनो ४ । ३ । १०९ |
| ३०४ | छ च ४ । २ । २८ |
| ४०२ | छत्रादिभ्यो णः ४ । ४ । ६२ |
| ४१८ | छदिरुपधिबलेर्ढञ् ५ । १ । १३ |
| ४९० | छन्दसि परि ५ । २ । ८९ |
| ४१० | छन्दसो निर्मिते ४ । ४ । ९३ |
| ३६४ | छन्दसो यदणौ ४ । ३ । ७१ |
| ३७९ | छन्दोगौक्थिक ४ । ३ । १२९ |
| ३२१ | छन्दोब्राह्म ४ । २ । ६६ |
| १०९ | छाया बाहुल्ये २ । ४ । २२ |
| ४४० | छेदादिभ्यो ५ । १ । ६४ |
| | **ज** |
| ३५९ | जङ्गलधेनुवलजा ७ । ३ । २५ |
| ३४० | जनपदतदव ४ । २ । १२४ |
| २८७ | जनपदशब्दात् ४ । १ । १६६ |
| ३७० | जनपदिनां ४ । ३ । १०० |
| ३२५ | जनपदे लुप् ४ । २ । ८१ |
| ३८७ | जम्ब्वा वा ४ । ३ । १६५ |
| १४५ | जम्भा सुहरित ५ । ४ । १२५ । |
| ३८५ | जातरूपेभ्यः ४ । ३ । १५३ |
| ५३५ | जातिनाम्नः कन् ५ । ३ । ८१ |
| १६४ | जातिरप्राणिनाम् २ । ४ । ६ |
| १३२ | जातेश्च ६ । ३ । ४१ |
| ५५२ | जात्यन्ताच्छ ५ । ४ । ९ |
| १०५ | जात्याख्यायामे १ । २ । ५८ |
| १४७ | जायाया निङ् ५ । ४ । १३४ |
| ३६२ | जिह्वामूलाङ्गुलेश्छः ४ । ३ । ६२ |
| २५२ | जीवति तु वंश्ये ४ । १ । १६३ |
| ५४१ | जीविकार्थे चापण्ये ५ । ३ । ९९ |
| ८२ | जीविकोपनिषदा १ । ४ । ७९ |
| ३५५ | जे प्रोष्ठपदानाम् ७ । ३ । १८ |
| ५२५ | ज्य च ५ । ३ । ६१ |
| ५२५ | ज्यादादीयसः ६ । ४ । १६० |
| २१९ | ज्योतिरायुषः ८ । ३ । ८३ |
| २११ | ज्योतिर्जनपद ६ । ३ । ८५ |
| ५०१ | ज्योत्स्नातमि ५ । २ । ११४ |
| | **झ** |
| २६ | झयः ५ । ४ । १११ |
| ४९४ | झयः ८ । २ । १० |
| | **ञ** |
| ३०५ | ञितश्च तत्प्र ४ । ३ । १५५ |
| ५४७ | ञ्यादयस्त ५ । ३ । ११९ |
| | **ट** |
| ४५६ | टेः ६ । ४ । १५५ |

| पृष्ठम् | सूत्रम् |
|---|---|
| | **ठ** |
| २८ | ठक्छौ च ४ । २ । ८४ |
| ६५ | ठगायस्थानेभ्यः ४ । ३ । ७५ |
| १० | ठञ्कवचिनश्च ४ । २ । ४१ |
| ८२ | ठस्येकः ७ । ३ । ५० |
| ३३ | ठाजादावूर्ध्वं ५ । ३ । ८३ |
| | **ढ** |
| २७४ | ढकि लोपः ४ । १ । १३३ |
| २७० | ढक्च मण्डूकात् ४ । १ । ११९ |
| २७५ | ढे लोपोऽकद्र्वाः ६ । ४ । १४७ |
| | **ण** |
| १८ | ण्यक्षत्रियार्षञितो २ । ४ । ५८ |
| | **त** |
| ६५ | तत आगतः ४ । ३ । ७४ |
| २७ | तत्पुरुषः २ । १ । २२ |
| ६८ | तत्पुरुषः समाना १ । २ । ४२ |
| ८९ | तत्पुरुषस्या ५ । ४ । ८६ |
| २०२ | तत्पुरुषे कृति ६ । ३ । १४ |
| ०८ | तत्पुरुषोऽनञ्कर्म २ । ४ । १९ |
| ५५ | तत्प्रकृतवचने ५ । ४ । २१ |
| ९५ | तत्प्रत्यनुपूर्व ४ । ४ । २८ |
| २७२ | तत्प्रत्ययस्य ७ । ३ । २९ |
| ५५ | तत्र २ । १ । ४६ |
| ८५ | तत्र कुशलः ५ । २ । ६३ |
| ४९ | तत्र च दीयते ५ । १ । ९६ |
| ५१ | तत्र जातः ४ । ३ । २५ |
| ५३ | तत्र तस्येव ५ । १ । ११६ |
| ३५ | तत्र तेनेदमिति २ । २ । २७ |
| ०४ | तत्र नियुक्तः ४ । ४ । ६९ |
| ५९ | तत्र भवः ४ । ३ । ५३ |
| ३२ | तत्र विदितः ५ । १ । ४३ |
| ११ | तत्र साधुः ४ । ४ । ९८ |
| ०० | तत्रोद्धृतममत्रेभ्यः ४ । २ । १४ |
| ८३ | तत्रोपपदं ३ । १ । ९२ |
| ४६५ | तत्सर्वादेः पथ्यङ्ग ५ । २ । ७ |
| १५ | तदधीने ४ । २ । ५९ |
| ५६६ | तदधीनवचने ५ । ४ । ५४ |
| ४१८ | तदर्थं विकृतेः ५ । १ । १२ |
| ४३९ | तदर्हति ५ । १ । ६३ |
| ४५३ | तदर्हम् ५ । १ । ११७ |
| ३२६ | तदशिष्यं संज्ञा १ । २ । ५३ |
| ४८० | तदस्मिन्नधिकमि ५ । २ । ४५ |
| ४८९ | तदस्मिन्नन्नं ५ । २ । ८२ |
| ३२२ | तदस्मिन्नस्ती ४ । २ । ६७ |
| ४३३ | तदस्मिन्वृद्ध्या ५ । १ । ४७ |
| ४०३ | तदस्मै दीयते ४ । ४ । ६६ |
| ४२० | तदस्य तदस्मिन् ५ । १ । १६ |
| ४०० | तदस्य पण्यम् ४ । ४ । ५१ |
| ४३६ | तदस्य परिमाणम् ५ । १ । ५७ |
| ४४७ | तदस्य ब्रह्मचर्यम् ५ । १ । ९४ |
| ४७५ | तदस्य सञ्जातम् ५ । २ । ३६ |
| ३५९ | तदस्य सोढम् ४ । ३ । ५२ |
| ३१४ | तदस्यां प्रहर ४ । २ । ५७ |
| ४९२ | तदस्यास्त्य ५ । २ । ९४ |
| ५१३ | तदो दा च ५ । ३ । १९ |
| ३६७ | तद्गच्छति पथि ४ । ३ । ८५ |
| ४३७ | तद्धरति वहत्या ५ । १ । ५० |
| ५८ | तद्धितार्थोत्तर २ । १ । ५१ |
| २३७ | तद्धितेष्वचा ७ । २ । ११७ |
| ५५९ | तद्युक्तात्कर्म ५ । ४ । ३६ |
| २८९ | तद्राजस्य २ । ४ । ६२ |
| ४०६ | तद्वहति रथयुग ४ । ४ । ७६ |
| ४८६ | तन्त्रादचिराप ५ । २ । ७० |
| ४९८ | तपःसहस्राभ्यां ५ । २ । १०२ |
| ४४४ | तमधीष्टो भृतो ५ । १ । ८० |
| ३९१ | तरति ४ । ४ । ५ |
| ५२१ | तरप्तमपौ १ । १ । २२ |
| ३४५ | तवकममका ४ । ३ । ३ |

| पृष्ठम् | सूत्रम् |
|---|---|
| २२१ | तसिलादिष्वा ६ । ३ । ३५ |
| ३७५ | तसिश्च ४ । ३ । ११३ |
| ५११ | तसेश्च ५ । ३ । ८ |
| ४९३ | तसौ मत्वर्थे १ । ४ । १९ |
| ७५ | तस्मान्नुडचि ६ । ३ । ७४ |
| ३४४ | तस्मिन्नणि च ४ । ३ । २ |
| ४५० | तस्मै प्रभवति ५ । ५ । १०१ |
| ४१४ | तस्मै हितम् ५ । १ । ५ |
| ४४८ | तस्य च दक्षिणा ५ । १ । ९५ |
| ४०० | तस्य धर्म्यम् ४ । ४ । ४७ |
| ४३१ | तस्य निमित्तम् ५ । १ । ३८ |
| ३२२ | तस्य निवासः ४ । २ । ६९ |
| ४७१ | तस्य पाकमूले ५ । २ । २४ |
| ४८१ | तस्य पूरणे ५ । २ । ४८ |
| ४५४ | तस्य भावस्त्व ५ । १ । ११९ |
| ४३३ | तस्य वापः ५ । १ । ४५ |
| ३८१ | तस्य विकारः ४ । ३ । १३४ |
| ३६२ | तस्य व्याख्यान ४ । ३ । ६६ |
| ३०८ | तस्य समूहः ४ । २ । ३७ |
| २४७ | तस्यापत्यम् ४ । १ । ९२ |
| ३७६ | तस्येदम् ४ । ३ । १२० |
| ४३२ | तस्येश्वरः ५ । १ । ४२ |
| ३८५ | तालादिभ्यो ४ । ३ । १५२ |
| ४८८ | तावतिथं ग्रहणमि ५ । २ । ७७ |
| २७७ | तिककितवादिभ्यो २ । ४ । ६८ |
| २८५ | तिकादिभ्यः फिञ् ४ । १ । १५४ |
| ५२१ | तिङश्च ५ । ३ । ५६ |
| ३७१ | तित्तिरिवरतन्तु ४ । ३ । १०२ |
| ८० | तिरोऽन्तर्धौ १ । ४ । ७१ |
| १३३ | ति विंशतेर्डिति ६ । ४ । १४२ |
| १९ | तिष्ठद्गुप्रभृतीनि च २ । १ । १७ |
| १०५ | तिष्यपुनर्वस्वोर्न १ । २ । ६३ |
| ३३६ | तीररूप्योत्तरपदा ४ । २ । १०६ |
| ३१७ | तीर्थे ये ६ । ३ । ८७ |

| पृष्ठम् | सूत्रम् |
|---|---|
| ५०३ | तुन्दादिभ्य इलच्च ५ । २ । ११७ |
| ५०८ | तुन्दिवलिवटेर्भः ५ । २ । १३९ |
| ५२४ | तुरिष्ठेमेयःसु ६ । ४ । १५४ |
| ,, | तुश्छन्दसि ५ । ३ । ५९ |
| ३६९ | तुदीसलातुरवर्मती ४ । ३ । ९४ |
| ४५ | तृजकाभ्यां कर्तरि २ । २ । १५ |
| २२० | तृणे च जातौ ६ । ३ । १०३ |
| ३१ | तृतीया तत्कृतार्थेन २ । १ । ३० |
| ८८ | तृतीयाप्रभृतीन्यन्य २ । २ । २१ |
| ७ | तृतीयासप्तम्योर्बहु २ । ४ । ८४ |
| २८९ | ते तद्राजाः ४ । १ । १७२ |
| ४३० | तेन क्रीतम् ५ । १ । ३७ |
| ४५३ | तेन तुल्यं क्रिया ५ । १ । ११५ |
| ३९१ | तेन दीव्यति खनति ४ । ४ । २ |
| ३२२ | तेन निर्वृत्तम् ४ । २ । ६८ |
| ४४४ | तेन निर्वृत्तम् ५ । १ । ७९ |
| ४४७ | तेन परिजय्यलभ्य ५ । १ । ९३ |
| ३७१ | तेन प्रोक्तम् ४ । ३ । १०१ |
| ४५० | तेन यथाकथाच ५ । १ । ९८ |
| २९६ | तेन रक्तं रागात् ४ । २ । १ |
| ४७१ | तेन वित्तश्चुञ्चुप् ५ । २ । २६ |
| १३७ | तेन सहेति तुल्ययो २ । २ । २८ |
| ३७५ | तेमैकदिक् ४ । ३ । ११२ |
| ३३८ | त्यदादीनि च १ । १ । ७४ |
| १८२ | त्यदादीनि सर्वैर्नि १ । २ । ७२ |
| ३८२ | त्रपुजतुनोः ४ । ३ । १३८ |
| ४३९ | त्रिंशच्चत्वारिंशतो ५ । १ । ६२ |
| १५० | त्रिककुत्पर्वते ५ । ४ । १४७ |
| ४८३ | त्रेः सम्प्रसारणञ्च ५ । २ । ५५ |
| ३९४ | त्रेर्मम्नित्यम् ४ । ४ । २० |
| १०० | त्रेस्त्रयः ६ । ३ । ४८ |
| २११ | त्वे च ६ । ३ । ६४ |


द


| पृष्ठम् | सूत्रम् |
|---|---|
| [illegible] | दक्षिणादाच् ५ । ३ । ३६ |

| पृष्ठम् | सूत्रम् |
|---|---|
| ३३३ | दक्षिणापश्चात्पुरस ४ । २ । ९८ |
| १४५ | दक्षिणेर्मा लुब्ध ५ । ४ । १२६ |
| ५१६ | दक्षिणोत्तराभ्या ५ । ३ । २८ |
| ५४८ | दण्डव्यवसर्गयोश्च ५ । ४ । २ |
| ४४१ | डण्डादिभ्यः ५ । १ । ६६ |
| ३०१ | दध्नष्ठक् ४ । २ । १८ |
| ४९९ | दन्त उन्नत उरच् ५ । २ । १०६ |
| ५०१ | दन्तशिखात्संज्ञा ५ । २ । ११३ |
| २७५ | दाण्डिनायन ६ । ४ । १७४ |
| ५१३ | दानीं च ५ । ३ । १८ |
| ५४५ | दामन्यादित्रि ५ । ३ । ११६ |
| ५१५ | दिक्छब्देभ्यः सप्त ५ । ३ । २७ |
| ३४५ | दिक्पूर्वपदाट्ठञ्च ४ । ३ । ६ |
| ३३६ | दिक्पूर्वपदादसं ४ । २ । १०७ |
| ५७ | दिक्संख्ये संज्ञायां २ । १ । ५० |
| ३५९ | दिगादिभ्यो यत् ४ । ३ । ५४ |
| १३४ | दिङ्नामान्यन्तरा २ । २ । २६ |
| २३८ | दित्यदित्यादित्य ४ । १ । ८५ |
| १७६ | दिवसश्च पृथिव्याम् ६ । ३ । ३० |
| ,, | दिवो द्यावा ६ । ३ । २९ |
| ३५३ | दिशोऽमद्राणाम् ७ । ३ । १३ |
| ३७६ | दीर्घाच्च वरुणस्य ७ । ३ । २३ |
| ५६९ | दुःखात्प्रातिलोम्ये ५ । ४ । ६४ |
| २८१ | दुष्कुलाड्ढक् ४ । १ । १४२ |
| २१८ | दृग्दृशवतुषु ६ । ३ । ८९ |
| ३६० | दृतिकुक्षिकलशि ४ । ३ । ५६ |
| २९८ | दृष्टं साम ४ । २ । ७ |
| ३५८ | देयमृणे ४ । ३ । ४७ |
| ५६६ | देये त्रा च ५ । ४ । ४५ |
| १७६ | देवताद्वन्द्वे च ६ । ३ । २६ |
| ३०६ | देवताद्वन्द्वे च ७ । ३ । २१ |
| ५५६ | देवतान्तात्तादर्थ्ये ५ । ४ । २४ |
| ५४२ | देवपथादिभ्यश्च ५ । ३ । १०० |
| ५६६ | देवमनुष्यपुरुष ५ । ४ । ५६ |

| पृष्ठम् | सूत्रम् |
|---|---|
| ५५७ | देवात्तल् ५ । ४ । २७ |
| ३६१ | देविकाशिंशपा ७ । ३ । १ |
| ४९९ | देशे लुबिलचौ च ५ । २ । १०५ |
| २९४ | दैवयज्ञिशौचि ४ । १ । ८१ |
| ३०५ | द्यावापृथिवी ४ । २ । ३२ |
| ५०० | द्युद्रुभ्यां मः ५ । २ । १०८ |
| ३३४ | द्युप्रागपागुदक् ४ । २ । १०१ |
| ५४२ | द्रव्यं च भव्ये ५ । ३ । १०४ |
| २६४ | द्रोणपर्वतजीव ४ । १ । १०३ |
| ३८७ | द्रोश्च ४ । ३ । १६१ |
| ५८४ | द्वन्द्वं रहस्यमर्या ८ । १ । १५ |
| ४६१ | द्वन्द्वमनोज्ञादि ५ । १ । १३३ |
| १६२ | द्वन्द्वश्च प्राणि २ । ४ । २ |
| १७७ | द्वन्द्वाच्चुदष ५ । ४ । १०६ |
| २९७ | द्वन्द्वाच्छः ४ । २ । ६ |
| ३७८ | द्वन्द्वाद्वुन्वैरमैथु ४ । ३ । १२५ |
| १६० | द्वन्द्वे घि २ । २ । ३२ |
| ५०६ | द्वन्द्वोपतापग ५ । २ । १२८ |
| ३४७ | द्वारादीनां च ७ । ३ । ४ |
| ६० | द्विगुरेकवचनम् २ । ४ । १ |
| २७ | द्विगुश्च २ । १ । २३ |
| ४२६ | द्विगोः ष्ठंश्च ५ । १ । ५४ |
| ४४४ | द्विगोर्यप् ५ । १ । ८२ |
| २४२ | द्विगोर्लुगनपत्ये ४ । १ । ८८ |
| ४४५ | द्विगोर्वा ५ । १ । ८६ |
| ५० | द्वितीयतृतीयच २ । २ । ३ |
| २७ | द्वितीया श्रिता २ । १ । २४ |
| २१५ | द्वितीये चानुपा ६ । ३ । ८० |
| ५५४ | द्वित्रिचतुर्भ्यः ५ । ४ । १८ |
| ४२९ | द्वित्रिपूर्वादण्च ५ । १ । ३६ |
| ४२८ | द्वित्रिपूर्वान्निष्कात् ५ । १ । ३० |
| १४० | द्वित्रिभ्यां षमू० ५ । ४ । ११५ |
| ४७९ | द्वित्रिभ्यां तय ५ । २ । ४३ |
| ९६ | द्वित्रिभ्यामञ्जं ५ । ४ । १०२ |

| पृष्ठम् | सूत्रम् |
|---|---|
| ५१८ | द्वित्र्योश्च धमुञ् ५ । ३ । ४५ |
| १४६ | द्विदण्ड्यादि ५ । ४ । १२८ |
| ५२२ | द्विवचनविभ ५ । ३ । ५७ |
| १९५ | द्विस्तावा त्रिस्ता ५ । ४ । ८४ |
| ३४६ | द्विपादनुसमुद्रं ४ । ३ । १० |
| ४८३ | द्वेस्तीयः ५ । २ । ५४ |
| २९१ | द्वैपवैयाघ्रादञ् ४ । २ । १२ |
| २७१ | द्व्यचः ४ । १ । १२१ |
| ३६४ | द्व्यजृद्ब्राह्मणर्क्प्र ४ । ३ । ७२ |
| २८८ | द्व्यञ्मगधक ४ । १ । १६८ |
| १८१ | द्व्यन्तरुपसर्गेभ्यः ६ । ३ । ९७ |
| ९९ | द्व्यष्टनः संख्या ६ । ३ । ४७ |
| | **ध** |
| ४०७ | धनगणं लब्धा ४ । ४ । ८४ |
| ४८५ | धनहिरण्यात्कामे ५ । २ । ६५ |
| १४७ | धनुषश्च ५ । ४ । १३२ |
| ३४० | धन्वयोपधाद्वुञ् ४ । २ । १२१ |
| ३९९ | धर्मं चरति ४ । ४ । ४१ |
| ४१० | धर्मपथ्यर्थन्याया ४ । ४ । ९२ |
| ५०७ | धर्मशीलवर्णा ५ । २ । १३२ |
| १४४ | धर्मादनिच्केव ५ । ४ । १२४ |
| ४६३ | धान्यानां भवने ५ । २ । १ |
| ४०६ | धुरो यड्ढकौ ४ । ४ । ७७ |
| ३४१ | धूमादिभ्यश्च ४ । २ । १२७ |
| ५५ | ध्वाङ्क्षेण क्षेपे २ । १ । ४२ |
| | **न** |
| १२० | न कपि ७ । ४ । १४ |
| १२८ | न कोपधायाः ६ । ३ । ३७ |
| २१९ | नक्षत्राद्वा ८ । ३ । १०० |
| २९६ | नक्षत्रेण युक्तः ४ । २ । ३ |
| ३५६ | नक्षत्रेभ्यो बहु ४ । ३ । ३७ |
| ३४१ | नगरात्कुत्स ४ । २ । १२८ |
| २७७ | न गोपवनादि २ । ४ । ६७ |
| ७७ | नगोऽप्राणि ६ । ३ । ७७ |
| ७४ | नञ् २ । २ । ६ |
| ३६६ | नञः शुचीश्वर ७ । ३ । ३० |
| १९६ | नञस्तत्पुरु ५ । ४ । ७१ |
| १४३ | नञ्दुःसुभ्यो ५ । ४ । १२१ |
| ३२९ | नडशादाड् ४ । २ । ८८ |
| २६३ | नडादिभ्यः ४ । १ । ९९ |
| ३३० | नडादीनां कुक्च ४ । २ । ९१ |
| ४७३ | नते नासिकायाः ५ । २ । ३१ |
| २४६ | न तौल्वलिभ्यः २ । ४ । ६१ |
| ३७९ | न दण्डमाणवा ४ । ३ । १३० |
| १७१ | न दधिपयआ २ । ४ । १४ |
| २५ | नदीपौर्णमा ५ । ४ । ११० |
| २२ | नदीभिश्च २ । १ । २० |
| २०७ | नद्याः शेषस्यान्य० ६ । ३ । ४४ |
| ३३३ | नद्यादिभ्यो ढक् ४ । २ । ९७ |
| ३२८ | नद्यां मतुप् ४ । २ । ८५ |
| १२० | नद्यृतश्च । ५ । ४ । १५३ |
| ३३८ | न द्व्यचः प्राच्य ४ । २ । ११३ |
| ४५५ | न नञ्पूर्वात्तत्पु ५ । ५ । १२१ |
| ३९ | न निर्धारणे २ । २ । १० |
| १८१ | नपुंसकमनपुंसकेनै १ । २ । ६९ |
| २५ | नपुंसकादन्य ५ । ४ । १०९ |
| १९६ | न पूजनात् ५ । ४ । ६९ |
| २९१ | न प्राच्य ४ । १ । १७६ |
| ४०६ | न भकुर्छु ८ । २ । ७९ |
| ७७ | नभ्राण्नपान्न ६ । ३ । ७५ |
| २७९ | न मपूर्वोऽप ६ । ४ । १७० |
| २६१ | न य्वाभ्यां पदा ७ । ३ । ३ |
| २२६ | नरे संज्ञायाम् ६ । ३ । १२९ |
| ७४ | नलोपो नञः ६ । ३ । ७३ |
| ९४ | न संख्यादेः ५ । ४ । ८९ |
| १५३ | न संज्ञायाम् ५ । ४ । १५५ |
| ५४९ | न सामिवचने ५ । ४ । ५ |
| २५ | नस्तद्धिते ६ । ४ । १४४ |

